वेदत्रयी संदुह्यतेऽर्थमिति संदोहः

श्रीगणेशायनमः॥ॐनमोभगवतेविस्नवेनमः॥यद्विद्यावशाद्विश्वंदृश्यतेरशनाहिवत्॥यद्विद्ययाचतद्धानिस्तंवंदेपुरुषोत्तमं॥नमस्त्रय्यंतसंदोहस
रसीरुहभानवे॥गुरवेपरपक्षौघध्वांतध्वंसपटीयसे॥भगवत्पादपादाब्जद्वंद्वंद्वंद्वनिबर्हणं॥सुरेश्वरादिसद्भृंगैरवलंवितमाभजे॥३॥बृहदारण्यकेभाष्ये
शिष्योपकृतिसिद्धये॥सुरेश्वरोक्तिमाश्रित्यक्रियतेन्यायनिर्णयः॥४॥काण्वोपनिषद्विवरणव्याजेनाशेषाणामेवोपनिषदांशोधयितुकामोभगवान्भाष्य
कारोविघ्नोपशमादिसमर्थंशिष्टाचारप्रमाणकंपरापरगुरुनमस्काररूपंमंगलमाचरति॥नमोब्रह्मादिभ्यइति॥वेदोहिरण्यगर्भोवाब्रह्मतन्नमस्कारेणसर्व
देवतानमस्कृताभवंतितदर्थत्वात्तदात्मकत्वाच्च॥एषउह्येवसर्वेदेवाइतिश्रुतेः॥आदिपदेनपरमेष्ठिप्रभृतयोगृह्यंते॥यद्यपितेषामुक्तोब्रह्मांतर्भावस्तथापि

श्रीगणेशायनमः॥ॐनमःपुरुषोत्तमाय॥ओंनमोब्रह्मादिभ्योब्रह्मविद्यासंप्रदायकर्तृभ्योवंशऋषिभ्योनमोगुरुभ्यः॥उषावाअ
श्वस्येत्येवमाद्यावाजसनेयिब्राह्मणोपनिषत्तस्याइयमल्पग्रंथावृत्तिरारभ्यतेसंसारव्याविवृत्सुभ्यःसंसारहेतुनिवृत्तिसाधनब्र
ह्मात्मैकत्वविद्याप्रतिपत्तये॥

तेषनादरनिरासार्थंपृथग्ग्रहणं॥चतुर्थीनमोयोगेनमःशब्दस्त्रिविधप्रह्वीभावविषयः॥ननुब्रह्मविदांवक्तुकामे
नकिमित्येतेनमस्क्रियंतेसैवहिवक्तव्येत्यत्तआह॥ब्रह्मविद्येति॥एतेषांतत्संप्रदायकर्तृत्वेवंशब्राह्मणंप्रमाणयति॥वंशऋषिभ्यइति॥यद्यपितत्रपौतिमा
ष्यादयोब्रह्मांताःसंप्रदायकर्तारःश्रूयंतेतथापिगुरुशिष्यक्रमेणब्रह्मणःप्राथम्यमितितदादित्वमितिभावः॥संप्रत्यपरगुरून्नमस्करोति॥नमोगुरुभ्यइति॥
यद्यपिब्रह्मविद्यासंप्रदायकर्तृष्वंतर्भावादेतेप्रागेवनमस्कृतास्तथापिशिष्याणांगुरुविषयादरातिरेककार्यार्थंपृथग्गुरुनमस्करणंयस्यदेवेपराभक्तिरित्या
दिश्रुतेरिति॥यदुद्दिश्यमंगलमाचरितंतत्प्रतिज्ञातुंप्रतीकमादत्ते॥उषावाइति॥एतेनचिकीर्षितायावृत्तेर्भर्तृप्रपंचभाष्येणागतार्थत्वमुक्तं॥तद्धिहृयाहेत्या
दिमाध्यंदिनश्रुतिमधिकृत्यप्रवृत्तं॥इयंपुनरुषावाअश्वस्येत्यादिकाण्वश्रुतिमाश्रित्येति॥अथोद्देश्यंनिर्दिशति॥तस्याइति॥भर्तृप्रपंचभाष्याद्विशेषांतरमाह॥

वृ. र.
१

अल्पग्रंथेति॥ अस्याः ग्रंथतोल्पत्वेपिनार्थतस्तथात्वमितिग्रंथग्रहणं॥ वृत्तिशब्दोभाष्यविषयः सूत्रानुकारिभिर्वाक्यैः सूत्रार्थस्यस्वपदानांचोपवर्णनस्य
भाष्यलक्षणस्यात्रभावादिति॥ ननुकर्मकांडाधिकारिणोविलक्षणोधिकारीनज्ञानकांडेसंभवत्यर्थित्वादेः साधारणत्वाद्वैराग्यादेश्चदुर्वचनत्वात्॥ नचनिरधि
कारंशास्त्रमारंभमर्हतीत्यतआह॥ संसारेति॥ कर्मकांडेहिस्वर्गादिकामः संसारपरवशोनरपशुरधिकारी॥ इहतुसंसाराद्धारत्तिमिद्धवोविरक्ताः नचवैराग्यं
दुर्वचंशुद्धबुद्धेर्विवेकिनोब्रह्मलोकांतेसंसारेतत्संभवात्॥ उक्तंहि॥ शोध्यमानंतुतच्चित्तमीश्वरार्पितकर्मभिः॥ वैराग्यंब्रह्मलोकादौव्यनक्त्याशुसुनिर्मलमिति॥
अतोयथोक्तविशिष्टाधिकारिभ्योवृत्तेरारंभः संभवतीत्यर्थः॥ तथापिविषयप्रयोजनसंबंधानामभावेकथंवृत्तिरारभ्यतेतत्राह॥ संसारहेत्विति॥ प्रमातृताप्रमुखः
कर्तृत्वादिरनर्थः संसारस्तस्यहेतुरात्माः विद्यातन्निवृत्तेः साधनंब्रह्मात्मैकत्वविद्यातस्याः प्रतिपत्तिरप्रतिबद्धायाप्राप्तिस्तदर्थंवृत्तिरारभ्यतइतियोजना॥ एतदु

सेयंब्रह्मविद्योपनिषच्छब्दवाच्यातत्पराणांसहेतोः संसारस्यात्यंतावसादनादुपनिपूर्वस्यसदेस्तदर्थत्वात्तादर्थ्याद्ग्रंथोप्युपनिषदुच्यते ॥

क्तंभवतिसनिदानानर्थनिवृत्तिः शास्त्रस्यप्रयोजनं॥ ब्रह्मात्मैक्यविद्यातदुपायस्तदैक्यंविषयः संबंधोज्ञानफलयोरुपायोपेयत्वंशास्त्रतद्विषययोर्विषय
विषयित्वंतदारभ्यंशास्त्रमितिप्रयोजनादिषुप्रवृत्त्यंगलयोक्तेष्वपिसर्वव्यापाराणांप्रयोजनार्थत्वात्तस्यप्राधान्यं॥ उक्तंहि॥ सर्वस्यैवहिशास्त्रस्यकर्म
णोवापिकस्यचित्॥ यावत्प्रयोजनंनोक्तंतावत्तत्केनगृह्यतइति॥ तथाचशास्त्रारंभौपयिकंप्रयोजनमेवनामव्युत्सादनद्वारामुत्पादयति॥ सेयमिति॥
अध्यात्मशास्त्रेषुप्रसिद्धासंनिहिताचात्रब्रह्मात्मैक्यविद्यातन्निष्ठानांसर्वकर्मसंन्यासिनांसनिदानस्यसंसारस्यात्यंतनाशकत्वाद्भवत्युपनिषच्छब्दवाच्या
उपनिषदंभोब्रूहीत्याद्याचश्रुतिस्तस्मादुपनिषच्छब्दवाच्यत्वप्रसिद्धेर्विद्यायास्ततोयथोक्तफलसिद्धिरित्यर्थः॥ कथंतस्यास्तच्छब्दवाच्यत्वेप्येतावानर्थ
उपलभ्यतेतत्राह॥ उपनिपूर्वस्येति॥ अस्यार्थः॥ षद्लृविशरणगत्यवसादनेषुइतिस्मर्यतेसदेर्धातोरुपनिपूर्वस्यक्विबंतस्यसहेतुसंसारनिवर्तकब्रह्म

भा.

राम:
१

अथवा

विद्यार्थत्वादुपनिषच्छब्दवाच्यासाभवत्युक्तफलवती॥उपशब्दोहिसामीप्यमाहतच्चासतिसंकोचकेप्रतीचिपर्यवस्यतिनिशब्दश्चनिश्चयार्थस्तस्मादैका
त्म्यंनिश्चितं॥तद्विद्यासहेतुंसंसारंसादयतीत्युपनिषदुच्यते॥उक्तंहि॥अवसादनार्थस्यचावसादादितिब्रह्मविद्यैवचेदुपनिषदिष्यतेकथंतर्हिग्रंथेतच्छ
ब्दंप्रयुंजते॥नखल्वेकस्यशब्दस्यानेकार्थत्वंन्याय्यमित्याशंक्याह॥तादर्थ्यादिति॥ग्रंथस्यब्रह्मविद्याजनकत्वादुपचारात्तत्रोपनिषत्पदमित्यर्थः॥
यथोक्तविद्याजनकत्वेग्रंथस्यकिमितितदध्येतॄणांसर्वेषांविद्यानभवतीत्याशंक्यश्रवणादिपराणामेवारण्यानुवचनादिनियमाधीतास्तेभ्यस्तज्जन्मे
तिबृहदारण्यकनामनिर्वचनपूर्वकमाह॥सेयमिति॥बृहदारण्यानुवचनादिनियमाधीतवेदांतानामपिकेषांचिद्विद्यानुपलंभात्कुतोयथोक्तास्तेभ्यस्त
दुत्पत्तिरित्यतआह॥बृहत्वादिति॥उपनिषदंतरेभ्योग्रंथपरिमाणातिरेकादस्यबृहत्वंप्रसिद्धं॥अर्थतोपितस्यतदस्तिब्रह्मणोखंडैकरसस्यात्रप्रतिपाद्यत्वा

सेयंषडध्याय्यरण्येऽनूद्यमानत्वादारण्यकंबृहत्त्वात्परिमाणतो बृहदारण्यकंतस्यास्यकर्मकांडेनसंबंधोभिधीयते॥सर्वोप्ययंवेदः
प्रत्यक्षानुमानाभ्यामनवगतेष्टानिष्टप्राप्तिपरिहारोपायप्रकाशनपरः॥

तज्ज्ञानहेतूनांचांतरंगबहिरंगाणांभूयसामिहप्रतिपादनादतोबृह
त्वादारण्यकत्वाच्चबृहदारण्यकं॥नचैतदशुद्धबुद्धेरधीतमपिविद्यामादधाति॥कषायैःकर्मभिःपक्वेततोज्ञानमितिस्मृतेरित्यर्थः॥ज्ञानकांडस्यविशि
ष्टाधिकार्यादिविशिष्टस्यापिकर्मकांडेननियतपूर्वापरभावानुपपत्तिलभ्यःसंबंधोवक्तव्यःसचपरीक्षकविप्रतिपत्तेरशक्योविशेषतोज्ञातुमित्याशंक्या
हतस्येति॥प्रतिज्ञातंसंबंधंप्रकटयितुमसिद्धप्रमाणभावानांवेदांतानांसंबंधाभिधानावसराभावात्तत्प्रामाण्यंप्रतिपाद्यपश्चात्तेषांकर्मकांडेनसंबंधवि
शेषवचनमुचितमितिमन्वानस्तत्प्रामाण्यंसाधयति॥सर्वोपीति॥प्रत्यक्षानुमानाभ्यामित्यागमातिरिक्तप्रमाणोपलक्षणार्थं॥एषोर्थोध्ययनविध्युपात्तः
सर्वोपिकांडद्वयात्मकोवेदोमानांतरानधिगतंयदिष्टोपायादितज्ज्ञानपरस्तथाचाज्ञातज्ञापकत्वाविशेषात्तुल्यंप्रामाण्यंकांडयोरिति॥अथवावेदनंवेदोऽ

सू.र. भवः सचशब्देतरमानायोग्योरूपादिहीनत्वादेतदप्रमेयमितिहिश्रुतिः सचेष्टानिष्टप्राप्तिपरिहारोपायस्तस्यैवतत्तदात्मनावस्थानात्तत्त्वात्यन्ताभवदि भा.
२ त्यादिश्रुतेः सचप्रकाशनः सर्वप्रकाशकत्वात्तमेवभांतमनुभातिसर्वमितिश्रुतेः सचपरोऽविद्यातत्कार्यातीतत्वाद्दिव्यजः परआकाशादित्यादिश्रुतेरेवंरूपो
वेदः वेदनीयश्चिदेकरसः प्रत्यग्धातुरेवसर्वोपिकार्यकारणात्मकप्रपंचः आत्मैवेदंसर्वमितिश्रुतेः तथाचयथोक्तवस्तुस्वरूपंप्रकाशयंतोवेदांताविधिवा
क्यवत्प्रमाणमिति॥ अथवाप्रत्यक्षादिमानानवगतोयोसाविष्टप्राप्त्याद्युपायोब्रह्मात्मातस्यप्रकाशनपरः सर्वोप्ययंवेदस्तस्यैवाज्ञातत्वात्तत्रकर्मकांडंकर्मानु
ष्ठानप्रयुक्तबुद्धिद्वाराब्रह्माधिगतावाराद्उपकारकं विविदिषंतियज्ञेनेतिश्रुतेर्ज्ञानकांडंतुसाक्षादेवतत्रोपयुक्तं॥ परमपुरुषस्योपनिषदत्वश्रवणात्सर्वेवे
दायत्पदमामनंतीतिश्रुतेस्तद्युक्तंकर्मकांडवत्ज्ञानकांडस्यापिप्रामाण्यमिति॥ अधिकारिसौलभ्यप्रतिपादनद्वाराज्ञानकांडप्रामाण्यमेवस्फुटयति॥ सर्वपु

सर्वपुरुषाणांनिसर्गतएवतत्प्राप्तिपरिहारयोरिष्टत्वात्॥ दृष्टविषयेचेष्टानिष्टप्राप्तिपरिहारोपायज्ञानस्यप्रत्यक्षानुमानाभ्यामेवसि
द्धत्वान्नागमान्वेषणा॥

रुषाणामिति॥ अयमर्थः॥ सुखंमेस्यात्दुःखंमाभूदितिस्वभावतः शास्त्रंविनासर्वेषांपुरुषाणामनवच्छिन्नसुखादिमात्रे
भिलाषोपलंभात्तन्मात्रस्यचमोक्षत्वात्तत्कामिनोज्ञानकांडाधिकारिणः सुलभत्वात्तस्मिन्प्रमांस्वार्थविषयामादधत्कथंतदप्रामाण्यमिति॥ ननुवेदस्यकार्य
परतयाप्रामाण्यात्कर्मकांडवत्कांडांतरस्यापिकार्यपरतयाप्रामाण्यमेष्टव्यमितिनेत्याह॥ दृष्टविषयेति॥ क्रियाकारकफलेतिकर्तव्यतानामन्यतमस्मिन्कार्ये
समीहितप्राप्त्याद्युपायभूतेव्युत्पत्तिकालेप्रत्यक्षादिसिद्धेतथाविधकार्यधियोऽन्यथालब्धत्वात्तत्रनागमोनुसंधेयः॥ नहिलोकवेदयोस्तद्भिद्यते॥ अलौकिकेत
स्मिन्नव्युत्पत्तिप्रसंगात् नचाव्युत्पन्नानिपदानिबोधकानि॥ अतिप्रसंगात्॥ नचब्रह्मण्यपितुल्याव्युत्पत्त्यनुपपत्तिस्तस्मिन्ब्रह्मत्वेनात्मत्वेनचप्रसि रामः
द्धेस्तत्तत्सामान्योपाधौविज्ञानादिपदानांव्युत्पत्तेः सुकरत्वात्तानिचालौकिकमखंडंप्रत्यग्ब्रह्मनिर्लुठितसामान्यविशेषंलक्षणयाबोधयंति॥ तस्मा २

द्धैव वेदप्रमाणकं न कार्यमिति भावः॥ किंच॥ तिष्ठतु वेदांतप्रामाण्यं कर्मकांडेपि व्यतिरिक्तात्मास्तित्वादौ सिद्धेर्थे प्रामाण्यमावश्यकं तदभावे तत्प्रामाण्या
योगात्॥ नहि भविष्यद्देहसंबंध्यात्मसद्भावानधिगमे पारलौकिकप्रवृत्तिविलंभस्तस्मात्कर्मकांडप्रामाण्यसिद्ध्यर्थं सिद्धेर्थे भविष्यद्देहसंबंधिन्यात्मनि स्व
र्गादौ च तत्प्रामाण्यस्याभ्युपेयत्वात्कार्ये वेदप्रामाण्यानियमाद्वेदांतानामपि स्वार्थे मानत्वं सिध्यतीत्याह॥ नचेति॥ ननु देहांतरसंबंध्यात्मज्ञानं विनापि विधिव
शाद्दृष्टार्थक्रियासु प्रवृत्तिः स्यादिति नेत्याह॥ स्वभावेति॥ यदात्मा देहांतरसंबंधी शास्त्रान्मानांतराद्वा न प्रमितस्तदा भोक्तुरनवगमान्न प्रेक्षापूर्वकारी यागा
द्यनुतिष्ठेत॥ लोकायतस्य व्यतिरिक्तात्मास्तित्वमजानतो जन्मांतरेष्टानिष्टप्राप्तिपरिहारेच्छया वैदिकक्रियासु प्रवृत्तेरदर्शनाद्देहातिरिक्तात्मज्ञानं विना सांपरा

नचासति जन्मांतरसंबंध्यात्मास्तित्वविज्ञाने जन्मांतरेष्टानिष्टप्राप्तिपरिहारेच्छा स्यात्॥ स्वभाववादिदर्शनात्॥ तस्माज्जन्मांतरसंबंध्या
त्मास्तित्वे जन्मांतरेष्टानिष्टप्राप्तिपरिहारोपायविशेषे च शास्त्रं प्रवर्त्तते॥ येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके इत्यु
पक्रम्यास्तीत्येवोपलब्धव्य इत्येवमादिनिर्णयदर्शनात्॥ यथा च मरणं प्राप्यात्मा भवति गौतम। योनिमन्ये प्रपद्यंते शरीरत्वाय देहिनः॥ स्थाणु
मन्येनुसंयंति यथाकर्म यथाश्रुतमिति च॥

यिकप्रवृत्तिरित्यर्थः॥ ननु विधयः साधनविशेषं बोधयंतो नातिरिक्तात्मास्तित्वादौ मानं वाक्यभेदप्र
संगादित्यत आह॥ तस्मादिति॥ अतिरिक्तात्मधियं विना पारलौकिकप्रवृत्त्यनुपपत्त्या कर्मकांडप्रामाण्यायोगादिति यावत्॥ विधीनां श्रुत्यर्थाभ्यासुभया
र्थत्वमविरुद्धमित्यर्थः॥ न केवलं विधिभिरेवार्थादासिद्धमतिरिक्तात्मास्तित्वं॥ किंतु श्रुत्यापि स्वमुखेनोक्तमित्याह॥ येयमिति॥ निर्णयदर्शनाद्व्यति
रिक्तात्मास्तित्वमिति संबंधः तत्रैव प्रकृतोपयोगित्वेनोपक्रमोपसंहारांतरे दर्शयति॥ यथेति॥ पूर्ववदेव संबंधद्योतनार्थश्चकारः उपक्रमोपसंहारैक
रूप्यात्कठवल्लीनामतिरिक्तात्मास्तित्वे तात्पर्यमुक्त्वा बृहदारण्यकवाक्यस्यापि तत्र तात्पर्यमाह॥ स्वयमिति॥ नहि प्रसिद्धजडत्वस्य देहादेः स्वयंज्योति

श्वमितिज्योतिर्ब्राह्मणगतोपक्रमस्तद्विषयोदेहादिव्यतिरिक्तात्मानमधिकरोतितंप्रेतंविद्याकर्मणीपूर्वोपार्जितेफलदानायानुगच्छतः।सचगत्वाज्ञानकर्मा
नुगुणंफलमनुभवतीतिशारीरकब्राह्मणगतोपसंहारेपिजन्मांतरसंबंधविषयोनचात्रैवभस्मीभवतोदेहादेर्जन्मांतरसंबंधोयुक्तस्तेनात्मादेहादिव्यति
रिक्तोजन्मांतरसंबंधीसिद्धोब्राह्मणाभ्यामित्यर्थः॥अजातशत्रुब्राह्मणेव्येवत्वाज्ञापयिष्यामीत्युपक्रमोव्यतिरिक्तात्मास्तित्वविषयोनहिप्रत्यक्षेदेहादौ
जिज्ञासास्ति॥तत्रैवोपसंहारेयएषविज्ञानमयःपुरुषइतिविज्ञानमयविशेषणादतिरिक्तात्मास्तित्वंदर्शितं॥नहिदेहादेर्विज्ञानमयत्वमस्ति॥तस्मात्तद
प्युपक्रमोपसंहाराभ्यामतिरिक्तात्मास्तित्वंगमयतीत्याह॥ज्ञपयिष्यामीत्युपक्रम्येति॥नचोदाहृतानांवाक्यानामप्रामाण्यंतदप्रामाण्यस्योत्पत्तिकसूत्रेहेत्व

स्वयंज्योतिरित्युपक्रम्यतंविद्याकर्मणीसमन्वारभेते॥पुण्योवैपुण्येनकर्मणाभवति॥ज्ञपयिष्यामीत्युपक्रम्यविज्ञानमयइतिचव्यतिरि
क्तात्मास्तित्वं॥तत्प्रत्यक्षविषयमेवेतिचेत्॥नवादिविप्रतिपत्तिदर्शनात्॥नहिदेहांतरसंबंधिनआत्मनःप्रत्यक्षेणास्तित्वविज्ञाने
लोकायतिकाबौद्धाश्चनःप्रतिकूलाःस्युर्नास्त्यात्मेतिवदंतः॥नहिघटादौप्रत्यक्षविषयेकश्चिद्विप्रतिपद्यतेनास्तिघटइति॥ ॥

विशेषादभ्युपेयत्वादितिभावः॥यथोक्तात्मन्यहंप्रत्ययोमानंतत्रदेहाकारास्फुरणादतिरिक्तात्मास्तित्वस्यतेनैवस्फूर्त्युपपत्तेः।अतोनतत्रश्रुतिप्रामाण्य
मितिशंकते॥तत्प्रत्यक्षेति॥प्रत्यक्षस्यविषयोऽवकाशोयस्मिन्निति।अतिरिक्तात्मास्तित्वमुच्यते॥यद्यपिव्यतिरिक्तात्मास्तित्वंतदभिप्रायेणाहंधीगो
चरस्तथापिनसाव्यतिरेकमात्मनोगोचरयति॥युक्त्यागमविवेकशून्यानामहंप्रत्ययभाजांव्यतिरेकप्रत्ययप्राप्तौविपश्चितांविप्रतिपत्यभावप्रसंगा
दितिपरिहरति॥नवादीति॥वेदप्रतिकूलवादिनोनास्तिकानेवविवादमुंचतीत्याह॥नहीति॥तेषुप्रातिकूल्यसंभावनार्थंविशेषणंनेत्यादीतिवदंतः
संतोनोस्माकंप्रतिकूलानहिस्युः॥एवंवदनस्यैवासंभवादध्यक्षविरोधादितियोजना॥प्रत्यक्षेविषयेविप्रतिपत्यभावेदृष्टांतमाह॥नहीति॥ ॥ ॥

तत्रव्यभिचारं शंकते॥ स्थाण्वादाविति॥ प्रत्यक्षे धर्मिणि स्थाणुर्वा पुरुषो वेति विप्रतिपत्तेरुपलंभान्न प्रत्यक्षे विप्रतिपत्त्यभावोऽव्यभिचारादिति शंकार्थः आदि
पदेन पाषाणादौ गजादिविप्रतिपत्तिः संगृह्यते॥ किं प्रत्यक्षमात्रे विप्रतिपत्तिः किं वा तेन विविक्ते प्रतिपन्ने॥ नाद्यः अंगीकारात्॥ न चैवमात्मनि प्रत्यक्षे विप्र
तिपत्तावपि नागमान्वेषणा तेनैव तन्निरासेन तन्निर्णयादिति मन्वानो द्वितीयं दूषयति॥ नेत्यादिना॥ प्रत्यक्षतो विविक्तेऽर्थे विप्रतिपत्त्यभावं प्रपंचयति॥ नहीo
ति॥ आत्मनः स्थूलदेहव्यतिरिक्तत्वं न प्रत्यक्षमिति प्रतिपाद्य सूक्ष्मदेहव्यतिरिक्तत्वमपि नाहंप्रत्ययग्राह्यमित्याह॥ वैनाशिकास्त्विति॥ ते खल्वहमिति धियम
नुभवंति तथापि देहांतरं स्थूलदेहातिरिक्तं सूक्ष्मं तत्र प्रधानभूताया बुद्धेरतिरिक्तस्यात्मनो नास्तित्वमेव पश्यंति॥ तन्नाहंधिया सूक्ष्मदेहातिरिक्तात्मसिद्धिरि
त्यर्थः॥ किंच प्रत्यक्षस्य विषयो रूपादिस्तद्ग्राहि त्वं तद्वैलक्षण्यं तदात्मनोऽस्ति॥ अशब्दमस्पर्शमरूपमित्यादिश्रुतेः॥ न हि रूपादितदाधारं विना प्रत्यक्षं क्रमते॥ तो न

स्थाण्वादौ पुरुषादिदर्शनान्नेति चेत्॥ न निरूपितेऽभावात्॥ न हि प्रत्यक्षेण निरूपिते स्थाण्वादौ विप्रतिपत्तिर्भवति॥ वैनाशिकास्त्वहमिति
प्रत्यये जायमानेऽपि देहांतरव्यतिरिक्तस्य नास्तित्वमेव प्रतिजानते॥ तस्मात्प्रत्यक्षविषयवैलक्षण्यात्प्रत्यक्षान्नात्मास्तित्वसिद्धिस्तथानुमाना
दपि॥ श्रुत्यात्मास्तित्वे लिंगस्य दर्शितत्वात् लिंगस्य च प्रत्यक्षविषयत्वान्नेति चेत्॥

देहाद्व्यतिरिक्तात्मास्तित्वस्य प्रत्यक्षासिद्धिरित्याह॥ तस्मादिति
॥ प्रत्यक्षतो विविक्ते विप्रतिपत्त्ययोगात्स्वकृते च न तद्दर्शनादिति यावत्॥ अथेच्छादयः क्वचिदाश्रिताः गुणत्वाद्रूपवदित्यनुमानादतिरिक्तात्मसिद्धिरिति नेत्याह॥ त
थेति॥ नास्तित्वप्रसिद्धिरिति संबंधार्थस्तथाशब्दः अयं भावः इच्छादीनां स्वातंत्र्ये स्वरूपासिद्धिः॥ पारतंत्र्ये परस्पराश्रयत्वमाधारस्येदानीमेव साध्यमानत्वा
त्॥ क्वचिच्छब्देन चाश्रयमात्रवचने सिद्धसाधनत्वं मनसस्तदाश्रयस्य सिद्धत्वादात्मोक्तौ च दृष्टांतस्य साध्यविकलतेति॥ यत्प्राणेन न प्राणितीत्यादिश्रुत्या
प्राणनादिव्यापाराख्यस्य लिंगस्यात्मास्तित्वे प्रदर्शितत्वात्तस्य च व्याप्तिसापेक्षस्य प्रत्यक्षादिसिद्धात्मविषयत्वान्न तस्य शब्दैकगम्यतेति शंकते॥ श्रुत्येति॥

6

आत्मनःस्वातंत्र्येणलिंगगम्यत्वाभिप्रायेणश्रुत्यालिंगंनोपन्यस्तमितिपरिहरति॥नेति॥योऽचेतनव्यापारःसचेतनाधिष्ठानपूर्वकोयथारथादिव्या
पारःप्राणनादिव्यापारस्याप्यचेतनव्यापारत्वाच्चेतनाधिष्ठानपूर्वकत्वमितिसंभावनामात्रेणलिंगोपन्यासोनहिनिश्चायकत्वेनतदुपन्यस्यते॥
आत्मनोजन्मांतरसंबंधस्यप्रमाणांतरेणाग्रहणात्तद्व्याप्तलिंगायोगादित्याह॥जन्मांतरेति॥ननुव्यतिरिक्तात्मास्तित्वमागमैकगम्यंचेत्कथंतत्तस्य
स्वमनुमेयंचेतिवादिनोवदंतीतितत्राह॥आगमेनत्विति॥येयंप्रेतेविचिकित्सेत्यस्यामागमेनकोह्येवान्यादित्यादिवेदोक्तेश्चप्राणनादिभिर्लौकिकैर्लिंग
विशेषैरात्मास्तित्वेसिद्धेयथोक्तात्मसिद्धिमनुसरंतोवादिनोवैदिकमेवाहंप्रत्ययंप्रतिलभमानावैदिकान्येवचलिंगानिपश्यंतःस्वोत्प्रेक्षानिर्मितानिता

न॥जन्मांतरसंबंधस्याग्रहणात्॥आगमेनत्वात्मास्तित्वेऽवगतेवेदप्रदर्शितलौकिकलिंगविशेषैश्चतदनुसारिणोमीमांसकास्ता
र्किकाश्चाहंप्रत्ययंलिंगानिचवैदिकान्येवस्वमतिप्रभवानीतिकल्पयंतोवदंतिप्रत्यक्षश्चानुमेयश्चात्मेति॥सर्वथाप्यस्त्यात्मादेहां
तरसंबंधीत्येवंप्रतिपत्तुर्देहांतरगतेष्टानिष्टप्राप्तिपरिहारोपायविशेषार्थिनस्तद्विशेषज्ञापनायकर्मकांडंसमारब्धं॥नत्वात्मन
इष्टानिष्टप्राप्तिपरिहारेच्छाकारणमात्मविषयमज्ञानंकर्तृत्वभोक्तृत्वस्वरूपाभिमानलक्षणंतद्विपरीतब्रह्मात्मस्वरूपविज्ञानेनापनीतं॥

नीतिकल्पयंतोद्विधात्मानंवदंतिवस्तुतस्त्वात्मायथोक्तश्रुत्यैकसमधिगम्यइत्यर्थः॥तस्यास्येत्यादिनाकांडयोःसंबंधंप्रतिज्ञायतादर्थ्येनसिद्धेर्थेवेदांत
प्रामाण्यंसर्वोपीत्यादिनाप्रसाध्याधुनाकर्मभिःशुद्धबुद्धेर्वैराग्यादिद्वाराज्ञानोत्पत्तिरितितयोःसंबंधंकथयति॥सर्वथापीति॥आगमान्मानांतराद्वाव्य
तिरिक्तात्मास्तित्वप्रतिपत्तावपीत्यर्थः॥पुरुषार्थोपायविशेषार्थिनोज्ञापनार्थंकर्मकांडमारब्धंचेत्तर्हितत्रोक्तकर्मभिरेवविवक्षितपुमर्थसिद्धेर्वेदांतारं
भवैयर्थ्यान्नसंबंधोक्तिःसावकाशेत्याशंक्याह॥नत्विति॥आत्माज्ञानंखल्वनर्थकारणमन्वयव्यतिरेकशास्त्रगम्यंमिथ्याज्ञानकार्यंलिंगकंचतज्ज्ञा

परंपरया

कर्त्रभोक्तृब्रह्मात्मज्ञानादपनेयं॥ नहितत्कर्मकांडोक्तैरेवकर्मभिः शक्यमपनेतुंविरोधाभावात्॥ तस्मात्तद्धानार्थंज्ञानसिद्धयेवेदांतारंभसंभवादुक्तसं
बंधसिद्धिरित्यर्थः॥ यद्दिकर्मभिरज्ञानंननिवर्ततेमानिवर्तिष्टसत्येवतस्मिन्कर्मवशान्मोक्षः स्यादित्याशंक्याह॥ यावद्धीति॥ सम्यग्ज्ञानमेवसाक्षान्मो
क्षहेतुर्नकर्मतत्तुप्रनाड्यातदुपयोगि॥ नहिसत्येवाज्ञानेमुक्तिस्तस्मिन्सतिसंसारस्यदुर्वारत्वात्॥ तस्मात्कर्मकांडस्यवैराग्यद्वाराप्रवेशोमुक्ताविति
भावः॥ अयमित्यज्ञोनिर्दिश्यते॥ रागद्वेषादीत्यादिशब्देनाविद्यास्मिताभिनिवेशागृह्यंते॥ दोषाणांस्वाभाविकत्वंशास्त्रानपेक्षत्वं॥ अधिकारःसंभावना
र्थः॥ दृष्टत्वमन्वयव्यतिरेकसिद्धत्वं॥ अदृष्टत्वंशास्त्रमात्रगम्यत्वं॥ अधर्मोपचयप्राचुर्येहेतुमाह॥ स्वाभाविकेति॥ अथवैराग्यार्थंकर्मफलप्रपंचयन्नध

यावद्धितन्नापनीयतेतावदयंकर्मफलरागद्वेषादिस्वाभाविकदोषप्रयुक्तः शास्त्रविहितप्रतिषिद्धातिक्रमेणापिप्रवर्तमानोमनोवा
कायैर्दृष्टादृष्टानिष्टसाधनान्यधर्मसंज्ञकानिकर्माण्युपचिनोतिबाहुल्येन॥ स्वाभाविकदोषबलीयस्त्वात्॥ ततःस्थावरांताधोग
तिः कदाचिच्छास्त्रकृतसंस्कारबलीयस्त्वततोमनआदिभिरिष्टसाधनंबाहुल्येनोपचिनोतिधर्माख्यं॥ तद्द्विविधं॥ ज्ञानपूर्वकंकेव
लंच॥ तत्रकेवलंपितृलोकादिप्राप्तिफलंज्ञानपूर्वकंदेवादिब्रह्मलोकांतप्राप्तिफलंच॥ तथाचशास्त्रमात्मयाजीश्रेयान्देवयाजी इत्यादि॥

र्मफलमाह॥ ततइति॥ उक्तंहि॥ शारीरजैःकर्मदोषैर्यातिस्थावरतांनरइति॥ तत्किंपुण्योपचयाभावादनवकाशंस्वर्गादिफलमितिनेत्याह॥ कदाचिदिति
॥ शास्त्रीयसंस्कारस्यबलीयस्त्वेफलितमाह॥ ततइति॥ आदिशब्दोवाग्देहविषयः फलविभागंवक्तुंकर्माभिव्यनक्ति॥ तद्द्विविधमिति॥ तस्यमुक्तिफलत्वंनि
रसितुंफलंविभजते॥ तत्रेति॥ केवलमिष्टादिकर्मेतिशेषः॥ कर्मणापितृलोकइतिहिवक्ष्यति॥ तस्मिन्फलेनानात्वमभिप्रेत्यादिशब्दः॥ विद्ययादेवलोकइतिश्रु
तिमाश्रित्याह॥ ज्ञानेति॥ देवलोकोयस्यादिर्ब्रह्मलोकश्चांतोयस्यतस्यार्थस्यप्राप्तिरेवफलमस्येतिविग्रहः॥ उक्तेर्थेशातपथींश्रुतिंप्रमाणयति॥ तथाचेति॥ सर्वत्रप

कामनापुरःसरं देवान्यजमानो देवयाजी तयोर्मध्ये कतरः श्रेयानिति विचारे सत्यात्मयाजी श्रेयानिति निर्णयः कृतोऽतो ज्ञानपूर्वं कर्म देवलोकस्य कामनापूर्वं पितृलोकस्य प्रापकमित्यर्थः॥ प्रवृत्तं च निवृत्तं च द्विविधं कर्म वैदिकं॥ इह वामुत्र वा काम्यं प्रवृत्तं कर्म कीर्त्यते॥ निष्कामं ज्ञानपूर्वं तु निवृत्तमभिधीयत इत्यादि मनुस्मृतिं चात्रैवोदाहरति॥ स्मृतिश्चेति॥ धर्माधर्मयोरेकैकस्य फलमुक्त्वा मिश्रयोः फलमाह॥ साम्येति॥ उक्तं हि॥ उभाभ्यां पुण्यपापाभ्यां मानुष्यं लभतेऽवश इति॥ त्रिविधमपि कर्मफलं वैराग्यार्थं संक्षिप्योपसंहरति॥ एवमिति॥ सा चाविद्याकृतत्वादनर्थरूपेत्याह॥ स्वाभाविकेति॥ विचित्रकर्मजन्यतया तस्याः वैचित्र्यमाह॥ धर्माधर्मेति॥ तर्हि धर्माधर्माभ्यामेव तन्निर्माणसंभवात्कृतमविद्ययेत्यत आह॥ नामेति॥ तेषां सूक्ष्मावस्थाऽवि

स्मृतिश्च द्विविधं कर्म वैदिकमित्याद्या साम्ये च धर्माधर्मयोर्मनुष्यत्वप्राप्तिरेवं ब्रह्माद्या स्थावरांता स्वाभाविकाऽविद्यादिदोषवतो धर्माधर्मसाधनकृता संसारगतिर्नामरूपकर्माश्रया॥ तदेवेदं व्याकृतं साध्यसाधनरूपं जगत्प्रागुत्पत्तेरव्याकृतमासीत्स एष बीजांकुरादिवदविद्याकृतः संसार आत्मनि क्रियाकारकफलाध्यारोपलक्षणोऽनादिरनंतोऽनर्थ इत्येतस्माद्विरक्तस्याविद्यानिवृत्तये तद्विपरीतब्रह्मविद्याप्रतिपत्त्यर्थोपनिषदारभ्यते॥

द्या तदालंबनेति यावत्॥ धर्माधर्मादेरविद्यायाश्च निमित्तत्वोपादानत्वाभ्यामुपयोग इति भावः॥ ननु संसारगतेराविद्यकत्वमयुक्तं प्रत्यक्षादिप्रतिपन्नत्वात्तन्नामरूपाभ्यामेव व्याक्रियतेति श्रुतौ च नामरूपात्मनो जगतोऽभिव्यक्तिश्रवणात्॥ न च प्रामाणिकस्याविद्याकृतत्वमत आह॥ तदेवेदमिति॥ जगतः स्वरूपमात्मा तत्राध्यस्तत्वात्तस्मादात्मतत्त्वेऽनभिव्यक्ते प्रत्यक्षादिना श्रुत्या चाभिव्यक्तमिव दृश्यमानमपि जगदनभिव्यक्तमेवेति न तस्याविद्याकृतत्वक्षतिरिति भावः॥ अविद्याकृतां संसारगतिमनुभाषते॥ स एष इति॥ अविद्याकृतत्वे कथमनादित्वमित्याशंक्य तस्य प्रवाहरूपेणेत्याह॥ बीजांकुरादिवेति॥ चैतन्यवदात्मनि तस्याविद्याकृतत्वानुपपत्तिमाशंक्य नानारूपत्वेन ततो विलक्षणत्वादेकरूपे युक्तं तस्य कल्पितत्वमित्याह

अविद्यारूपेण

क्रियेति॥ तर्हि किं कदाचित्तत्तया साधनापेक्षामंतरेण नाशो भविष्यतीत्याशंक्याह॥ अनादिरिति॥ अनादेरपि संसारस्य प्रागभाववन्निवृत्तिः स्यादिति चेत्तथा
पि ब्रह्मविद्यामंतरेण नाशो नास्तीत्याह॥ अनंत इति॥ प्रयत्नतो हेयत्वं द्योतयितुमनर्थ इति विशेषणं॥ नैसर्गिक इति पाठे तु कारणरूपेण तत्त्वमुन्नेयं॥ य
स्मात्कर्मसंसारफलं न मोक्षं फलयति॥ तस्मात्तन्निदानसंसारनिवर्त्तकात्मज्ञानार्थत्वेन साधनचतुष्टयसंपन्नमधिकारिणमधिकृत्य वेदांतारंभः संभव
तीत्युपसंहरति॥ इत्येतस्मादिति॥ यथोक्तज्ञानार्थत्वेनोपनिषदारंभे ब्रह्म वा इदमग्र आसीदित्यारभ्यं॥ तस्मादारभ्य ज्ञानोपदेशादुषा वा अश्वस्येत्यारंभस्तु
न युक्तः साक्षादत्र तदनुक्तेरित्याशंक्यास्मादारभ्योपनिषदारंभे भीष्टफलमभिधित्समानः प्रथममश्वमेधोपासनफलमाह॥ अस्येति॥ राजयज्ञत्वादश्व
मेधस्य तदनधिकारिणामपि ब्राह्मणादीनां तत्फलार्थिनामस्मादेवोपासनात्तत्प्राप्तिरिति मत्वा श्रुतौ तदुपासनोक्तिरित्यर्थः॥ किमत्र नियामकमित्याशंक्य

स्वरूपं

अस्य त्वश्वमेधकर्मसंबंधिविज्ञानस्य प्रयोजनं येषामश्वमेधेनाधिकारस्तेषामस्मादेव विज्ञानात्तत्फलप्राप्तिर्विद्यया वा कर्मणा वा त
द्धैतल्लोकं जयेदित्येवमादिश्रुतिभ्यः॥ कर्मविषयत्वमेव विज्ञानस्येति चेन्न॥ योऽश्वमेधेन यजते य उ चैनमेवं वेदेति विकल्पश्रुतेर्विद्याप्रक
रणे चाम्नानात्कर्मांतरे च संपादनदर्शनाद्विज्ञानात्तत्फलप्राप्तिरस्तीत्यवगम्यते॥

विकल्पश्रवणं केवलस्यापि ज्ञानस्य साधनत्वं सूचयतीत्यर्थतो
विकल्पश्रुतिमुदाहरति॥ विद्ययेति॥ तत्फलप्राप्तिरिति पूर्वेण संबंधः॥ तत्रैव श्रुत्यंतरमाह॥ तद्धेति॥ तदेतत्प्राणदर्शनं लोकप्राप्तिसाधनमिति यावत्॥ आदिश
ब्देन केवलोपास्त्या ब्रह्मलोकाप्तिवादिन्यः श्रुतयो गृह्यंते॥ अश्वमेधे यदुपासनं तस्याप्यश्वादिवत्तच्छेषत्वेन फलवत्त्वान्न स्वातंत्र्येण तद्वत्त्वमंगेषु स्वतंत्रफलाभावादि
तिशंकते॥ कर्मविषयत्वमिति॥ ज्ञानस्य क्रत्वर्थत्वं दूषयति॥ नेति॥ पूर्वत्रार्थतो दर्शितां विकल्पश्रुतिमत्र हेतुत्वेन यथास्वरूपतोऽनुक्रामति॥ योऽश्वमेधेनेति स सर्वं पाप्मानं
तरति तरति ब्रह्महत्यामिति संबंधः ज्ञानकर्मणोस्तुल्यफलत्वस्यान्याय्यत्वादिति शेषः॥ उपास्तिफलश्रुतेरर्थवादत्वमाशंक्याश्वमेधवदुपास्तेरपि कर्मत्वाद्विहितत्वा

कर्मप्रकरणात्प्रस्थितत्वाच्चमैवमित्याह॥विद्येति॥फलश्रुतेरर्थवादत्वाभावेहेत्वंतरमाह॥कर्मांतरेचेति॥अश्वमेधातिरिक्तेकर्मण्ययंवावलोकोग्निरित्या
दावित्याग्न्यादावेतल्लोकादिसंपादनस्यस्वतंत्रफलोपासनस्यदर्शनान्नफलश्रुतेरर्थवादतेत्यर्थः॥अश्वमेधोपासनंनक्रत्वर्थंकिंतुपुरुषार्थंतत्रचाधिका
रोश्वमेधक्रत्वनधिकारिणामपीत्येतावदेवेष्टंचेदुपासनेकर्मप्रकरणस्थेपितल्लाभाद्विद्याप्रकरणेनास्याध्ययनमर्थवदित्याशंक्याह॥सर्वेषामिति॥परत्वे
हेतुःसमष्टीति॥अनुवृत्तव्यावृत्तरूपहिरण्यगर्भप्राप्तिहेतुत्वात्तस्यश्रेष्ठतेत्यर्थः॥तस्यपुण्यश्रेष्ठत्वेपिप्रकृतेकिमायातंतदाह॥तस्येति॥यदाक्रतुप्रधानस्या
श्वमेधस्योपास्तिसहितस्यापिसंसारफलत्वंतदात्वीयसामग्निहोत्रादीनांसंसारफलत्वंकिंवाच्यमित्यस्मिन्कर्मराशौबंधहेतौविरक्ताःसाधनचतुष्टयविशि
ष्टाज्ञानमपेक्षमाणास्तदुपायेश्रवणादावेवसर्वकर्मसंन्यासपूर्वकेकथंप्रवर्तेरन्नित्याशयवतीश्रुतिरुपासनंविद्यारंभेऽभिदधातीतितेनोषावाअश्वस्येत्याद्यु

सर्वेषांचकर्मणांपरंकर्माश्वमेधःसमष्टिव्यष्टिप्राप्तिफलत्वात्तस्यचेहब्रह्मविद्याप्रारंभेआम्नानंसर्वकर्मणांसंसारविष——
यत्वप्रदर्शनार्थंतथाचदर्शयिष्यतिफलमशनायामृत्युभावंननित्यानांसंसारविषयफलत्वमितिचेत्॥न॥सर्वकर्मफलोपसं
हारश्रुतेः॥

पनिषद्द्वारंभोयुक्तोस्यविशिष्टाधिकारिसमर्पकत्वादित्यर्थः॥उपासनफलस्यसंसारगोचरत्वमेवकुतःसिद्धमतआह॥तथाचेति
॥अशनायाहिमृत्युःसर्वेनैवरेमेसोऽबिभेदितिभयारत्यादिश्रवणादुपास्तियुक्तक्रतुफलस्यसूत्रस्यबंधमध्यपातित्वाद्विशिष्टोपिक्रतुर्नमुक्तयेपर्याप्तो
तीत्यर्थः॥उक्तेसर्वकर्मणांबंधफलत्वेनित्यनैमित्तिकानांनतत्फलत्वंतेषांविध्युद्देशेफलाश्रुतेर्नष्टाश्वदग्धरथन्यायेनमुक्तिफलत्वलाभादितिशंकते
॥ननित्यानामिति॥एतावान्वैकामइतिसर्वकर्मणामविशेषेणफलसंबंधश्रवणात्पश्चादेश्वकाम्यफलत्वस्यविध्युद्देशवशात्सिद्धत्वात्कर्मणापितृ
लोकइतिवाक्यस्यनित्यादिकर्मफलविषयत्वान्नमोक्षफलत्वाशंकेतिपरिहरति॥नेति॥उक्तमेवस्फुटयति॥सर्वेहीति॥पत्नीसंबंधेमानमाह॥

जायेति॥ तथापि कथं कर्मणः सर्वस्य कामोपायत्वं तत्राह॥ एतावान्वै काम इति॥ कथं तर्हि तेषां फलभेदो लभ्यते तत्राह॥ पुत्रेति॥ अथैवं फलविभागो कथं
समष्टिव्यष्टिप्राप्तिफलत्वमश्वमेधस्योक्तमत आह॥ त्र्यन्नात्मकतां चेति॥ अस्याध्यायस्यावसाने कर्मफलस्य हिरण्यगर्भरूपत्वं त्रयमित्याद्या श्रुतिरुपसंहरि
ष्यतीत्यर्थः॥ उपसंहारश्रुतेस्तात्पर्यमाह॥ सर्वकर्मणामिति॥ कर्मफलं संसारश्चेत्स्यात्तदनुष्ठानात्तदभावान्मुक्तानां पुनर्बन्धः स्यादित्याशंक्याह॥ इदमेवेति॥
तर्हि तस्यामवस्थायामिति यावत् तस्य पुनर्व्याकरणे कारणमाह॥ तदेवेति॥ व्याकृताव्याकृतात्मनः संसारस्य च प्रामाणिकत्वेन सत्यत्वमाशंक्याविद्याकृतत्वेन त
न्मिथ्यात्वमुक्तं स्मारयति॥ सोयमिति॥ स एव हि भाति विषयो न प्रामाणिकस्तत्कुतोस्य सत्यतेत्यर्थः॥ कथमस्यात्मन्यद्वये कूटस्थे प्राप्तिरित्याशंक्याह॥ क्रिये

सर्वं हि पत्नीसंबद्धं कर्म जाया मे स्यादेतावान्वै काम इति निसर्गत एव सर्वकर्मणां काम्यत्वं दर्शयित्वा पुत्रकर्मापरविद्यानां चायं लोकः पि
तृलोको देवलोक इति फलं दर्शयित्वा त्र्यन्नात्मकतां चांते उपसंहरिष्यति त्रयं वा इदं नाम रूपं कर्मेति॥ सर्वकर्मणां फलं व्याकृतं सं
सार एवेति॥ इदमेव तत्र यं प्रागुत्पत्तेस्तर्ह्यव्याकृतमासीत् तदेव पुनः सर्वप्राणिकर्मवशाद्व्याक्रियते बीजादिव वृक्षः सोयं व्याकृता
व्याकृतरूपः संसारोऽविद्याविषयः क्रियाकारकफलात्मकतयात्मरूपत्वेनाध्यारोपितोऽविद्ययैव मूर्त्तामूर्त्ततद्वासनात्मकोऽतो विल
क्षणोऽनामरूपकर्मात्मकोऽद्वयो नित्यशुद्धबुद्धमुक्तस्वभावोपि क्रियाकारकफलभेदादिविपर्ययेणावभासते॥

ति॥ समारोपे मूलकारणमा
ह॥ अविद्ययेति॥ आत्मन्यविद्यारोपितं द्वैतमित्यत्र द्वे वाव ब्रह्मणो रूपे मूर्त्तं चैवामूर्त्तं चेत्यादिवाक्यं प्रमाणयति॥ मूर्त्तेति॥ नन्वात्मन्यारोपो नोपपद्यते तस्य नि
त्यशुद्धबुद्धमुक्तस्वभावस्य द्वैतविलक्षणत्वादसति सादृश्येऽध्यासासिद्धेरत आह॥ अत इति॥ संसाराद्वैलक्षण्यमेव प्रकटयति॥ अनामेति॥ आदिपदेनान्येपि
विपर्ययभेदाः संगृह्यंते॥ आरोपे प्रमिणोमि करोमि भुंजे चेत्यनुभवं प्रमाणयति॥ अवभासत इति॥ आत्मन्यध्यासः सादृश्याद्यभावेपि नभसि मलिनत्वादिव

द्यतेऽनुभूयतेऽतः सविलासाविद्यानिवर्तकब्रह्मविद्यार्थत्वेनोपनिषदारंभः संभवतीत्युपसंहरति॥ अतइति॥ एतावदित्यनर्थोक्तिः॥ तत्त्वज्ञानादज्ञाननि
वृत्तौ दृष्टांतमाह॥ रज्ज्वामिवेति॥ एवमुपनिषदारंभेस्थिते प्राथमिकब्राह्मणयोरवांतरतात्पर्यमाह॥ तत्रतावदिति॥ आद्यस्यपुनरवांतरतात्पर्यं दर्शयति॥
तत्रेति॥ नन्वश्वमेधस्यांगबाहुल्येकस्मादश्वस्यांगविषयमेवोपासनमुच्यते तत्राह॥ प्राधान्यादिति॥ तदेवकथमितितदाह॥ प्राधान्यंचेति॥ प्रजापतिदेव

अतोऽस्मात्क्रियाकारकफलभेदस्वरूपादेतावदिदमितिसाध्यसाधनरूपाद्विरक्तस्यकामादिदोषकर्मबीजभूताऽविद्यानिवृत्तये॥ रज्ज्वामिव
सर्पविज्ञानापनयायब्रह्मविद्यारभ्यते॥ तत्रतावदश्वमेधविज्ञानायउषावाअश्वस्येत्यादितत्राश्वविषयमेवदर्शनमुच्यते प्राधान्यादश्वस्य॥ प्राधा

श्रीगणेशायनमः॥ हरिः ॐ पूर्णमदः पूर्णमिदंपूर्णात्पूर्णमुदच्यते॥ पूर्णस्यपूर्णमादायपूर्णमेवावशिष्यते॥ ॐ शांतिः शांतिः शांतिः॥

न्यंचतन्नामांकितत्वात्क्रतोः प्राजापत्यत्वाच्च॥ उषाइति ब्राह्मोमुहूर्त्तउषा वैशब्दः स्मरणार्थः प्रसिद्धंकालंस्मारयति शिरः प्राधान्याच्छिरश्चप्रधानंश
रीरावयवानामश्वस्यमेध्यस्यमेधार्हस्ययज्ञियस्यउषाः शिरइतिसंबंधः कर्मांगस्यपशोः संस्कर्तव्यत्वात्कालादिदृष्टयः शिरआदिषुक्षिप्यंते॥

त्वाकत्वाच्चाश्वस्यप्राधान्यमित्याह॥ प्राजापत्यत्वाच्चेति॥ प्रतीकमादायव्याचष्टे॥ उषाइत्यादिना॥ स्मरणार्थत्वमेवनिपातस्यस्फुटयति॥ प्रसिद्धमिति॥ शास्त्री
येलौकिकेचव्यवहारेप्रसिद्धोब्राह्मोमुहूर्तस्तंकालमितियावत्॥ उषसिशिरः शब्दप्रयोगेदिनावयवेषुतस्यप्राधान्यंहेतुमाह॥ प्राधान्यादिति॥ तथापि
कथंतत्रतच्छब्दप्रयोगस्तत्राह॥ शिरश्चेति॥ आश्वमेधिकाश्वशिरस्युषसोदृष्टिः कर्तव्येत्याह॥ अश्वस्येति॥ कालादिदृष्टिरश्वांगेषुकिमितिक्षिप्यतेश्वांग
दृष्टिरेवतेषुकिंनस्यादित्याशंक्याह॥ कर्मांगस्येति॥ अंगेष्वनंगमतिक्षेपेहेत्वंतरमाह॥ प्राजापत्यत्वंचेति॥ अश्वस्यसेत्स्यतीतिशेषः॥ अत्रहेतुः प्रजापतीति॥

ननुकालादिदृष्टयोऽश्वावयवेष्वारोप्यंतेनतस्यप्रजापतित्वंक्रियतेतत्राह॥कालेति॥कालाद्यात्मकोहिप्रजापतिस्तथाचयथाप्रतिमायांविष्णुत्वकर
णंतद्दृष्टिस्तथाकालादिदृष्टिरश्वावयवेषुतस्यप्रजापतित्वकरणमश्वमेधाधिकारीहिसत्यश्वेकर्मणोवीर्यवत्तरत्वार्थंकालादिदृष्टिरश्वावयवेषुकुर्यात्
त्तदनधिकारीतुअश्वाभावेस्वात्मानमश्वंकल्पयित्वास्वशिरःप्रभृतिषुकालादिदृष्टिकरणेनप्रजापतित्वंसंपाद्यप्रजापतिरस्मीतिज्ञानात्तद्भावंप्रतिपद्येते
तिभावः॥चक्षुषिसूर्यदृष्टौहेतुमाह॥शिरसइति॥उषसोनंतरत्वंसूर्येदृष्टंचक्षुषिचशिरसोनंतरत्वंदृश्यतेतस्मात्तत्रतद्दृष्टिर्युक्तेत्यर्थः॥तत्रैवहेत्वंतरमाह॥

प्राजापत्यत्वंचप्रजापतिदृष्ट्यध्यारोपणा कालत्वोकदेवतात्मत्वाध्यारोपणंचप्रजापतित्वकरणंपशोरेवंरूपोहिप्रजापतिर्विष्णुत्वादिक
रणमिवप्रतिमादौ सूर्यश्चक्षुःशिरसोनंतरत्वात्॥सूर्याधिदेवतत्वाच्च॥वातःप्राणोवायुस्वाभाव्यात्॥व्यात्तंविवृतंमुखमग्निर्वैश्वानरःवैश्वान

ॐहरिःॐ उषावाअश्वस्यमेध्यस्यशिरःसूर्यश्चक्षुर्वातःप्राणोव्यात्तमग्निर्वैश्वानरःसंवत्सरआत्माश्वस्यमेध्यस्यद्यौःपृष्ठमं
तरिक्षमुदरंपृथिवीपाजस्यंदिशःपार्श्वे

रइत्यग्नेर्विशेषणंवैश्वानरोनामाग्निर्विवृतंमुखमित्यर्थः॥मुखस्याग्निदेवतत्वात्संवत्सर
आत्मासंवत्सरोद्वादशमासस्त्रयोदशमासोवा॥आत्माशरीरं कालावयवानांचसंवत्सरःशरीरं शरीरंचात्मा मध्यंह्येषामंगानामात्मेतिश्रुतेः॥

सूर्येति॥आदित्यश्चक्षुर्भूत्वाऽक्षिणीप्राविशदितिश्रुतेश्चक्षुषिसूर्योऽधिष्ठात्रीदेवतातेनसामीप्यात्तत्रतद्दृष्टिरित्यर्थः॥अश्वप्राणेवायुदृष्टौचलनस्वाभाव्यंहेतुर
श्वस्यविदारितेमुखेभवत्वग्निदृष्टिःतथापिपर्यायोपादानंव्यर्थमित्याशंक्यक्रव्यादादिनिवृत्त्यर्थंविशेषणमित्याह॥वैश्वानरइत्यग्नेरिति॥अग्निर्वाग्भू
त्वामुखंप्राविशदितिश्रुतिमाश्रित्यमुखेतद्दृष्टौहेतुमाह॥मुखस्येति॥अधिकमासमनुसृत्यत्रयोदशमासोवेत्युक्तं॥शरीरेसंवत्सरदृष्टिरित्यत्रात्मत्वंहेतुम
ज्या

10

ह॥कालेति॥आत्माहस्तादीनामंगानामितिशेषः॥कालावयवानांसंवत्सरस्यात्मत्ववदंगानांशरीरस्यात्मत्वेप्रमाणमाह॥मध्यंह्येति॥पुनरुक्तेरर्थवत्वमा
ह॥अश्वस्येति॥पृष्ठेद्युलोकदृष्टौहेतुमाह॥ऊर्ध्वत्वेति॥उदरेंतरिक्षदृष्टौनिमित्तमाह॥सुषिरत्वेति॥पादाअस्यंतेअस्मिन्नितिव्युत्पत्तिमाश्रित्यविवक्षि
तमाह॥पादेति॥अश्वस्यहिखुरेपादासनत्वसामान्यात् पृथिवीदृष्टिरित्यर्थः॥पार्श्वयोर्दिक्चतुष्टयदृष्टौहेतुमाह॥पार्श्वेनेति॥द्वेपार्श्वेचतस्रश्चदिश
स्तत्रकथंतयोस्तदारोपणंद्वाभ्यामेवद्वयोःसंबंधादितिशंकते॥पार्श्वयोरिति॥यद्यपिद्वेदिशौद्वाभ्यांपार्श्वाभ्यांसंबध्येतेतथाप्यश्वस्यप्राङ्मुखत्वेप्रत्यङ्मु

अश्वस्यमेध्यस्येतिसर्वत्रानुषंगार्थंपुनर्वचनं द्यौःपृष्ठंऊर्ध्वत्वसाम्यादंतरिक्षमुदरंसुषिरत्वसामान्यात्पृथिवीपाजस्यंपादस्समितिवर्णव्य
त्ययेनपादासनस्थानमित्यर्थः॥दिशश्चतस्रोपिपार्श्वे पार्श्वेनदिशांसंबंधा त्पार्श्वयोर्दिशांचसंख्यावैषम्यादयुक्तमितिचेत्॥नसर्वमुखत्वो

अवांतरदिशःपर्शवऋतवोंगानिमासाश्चार्द्धमासाश्चपर्वाण्यहोरात्राणिप्रतिष्ठानक्षत्राण्यस्थीनिनभोमांसान्यूवध्यं९
सिकताःसिंधवोगुदा

पपत्तेरश्वस्यपार्श्वाभ्यामेवसर्वदिशांसंबंधाददोषः॥अवांतरदिशआग्नेय्याद्याःपर्शवःपार्श्वास्थीनि ऋत
वोंगानिसंवत्सरावयवत्वादंगसाधर्म्या न्मासाश्चार्धमासाश्चपर्वाणिसंधयःसंधिसामान्या दहोरात्राणिप्रतिष्ठाबहुवचनात्प्राजापत्यदैवपित्र्य
मानुषाणिप्रतिष्ठाःपादाःप्रतितिष्ठत्येतैरिति॥

खत्वेचदक्षिणोत्तरयोस्तन्मुखत्वेचप्राक्प्रतीच्योर्दिशोस्ताभ्यांसंबंधसंभवात्तत्रतदृष्टिरविरुद्धेतिपरिहर



ति॥नेत्यादिना॥तदुपपत्तौचाश्वस्यचलिष्णुत्वंहेतूकर्तव्यं॥पार्श्वास्थिष्ववांतरदिशामारोपेपार्श्वेदिक्संबंधोहेतुःऋतवःसंवत्सरस्यांगानिहस्तादीनिचदेहस्यावयवा
स्तस्मात्तदृष्टिरंगेषुकर्तव्येत्याह॥ऋतवइति॥अस्तिहिमासादीनांसंवत्सरसंधित्वमस्तिचशरीरसंधित्वंपर्वणामतस्तेषुमासादिदृष्टिरित्याह॥संधीति॥युगसहस्रा

भ्यां प्राजापत्यमेकमहोरात्रमयनाभ्यां दैवं पक्षाभ्यां पित्र्यं षष्टिघटिकाभिर्मानुषमिति भेदः॥ प्रतिष्ठाशब्दस्य पादविषयत्वं व्युत्पादयति॥ प्रतितिष्ठतीति॥ पादेष्व
होरात्रदृष्टिसिध्यर्थमुक्तमुपपादयति॥ अहोरात्रैरिति॥ अस्थिषु नक्षत्रदृष्टौ हेतुमाह॥ शुक्लत्वेति॥ नभःशब्देनांतरिक्षं किमिति न गृह्यते अस्थिष्वसत्युपचारायोगा
दित्याशंक्य पुनरुक्तिं परिहर्तुमित्याह॥ अंतरिक्षस्येति॥ उदकं सिंचंति मेघा मांसानि रुधिरं अतः सेककर्तृत्वसामान्यान्मांसेषु मेघदृष्टिरित्याह॥ उदकेति॥ अश्वज

अहोरात्रैर्हि कालात्मा प्रतितिष्ठति॥ अश्वस्य पादैः नक्षत्राणि अस्थीनि॥ शुक्लत्वसामान्यात् नभो नभस्थामेघाः अंतरिक्षस्योदरलोक्ते मांसान्युदक
रुधिरसेचनसामान्यात् ऊवध्यं उदरस्थमर्धजीर्णमशनं सिकताः विश्लिष्टावयवसामान्यात् सिंधवः स्पंदनसामान्यान्नद्यो गुदा नाड्यो बहुवचनाच्च॥ य
कृच्च क्लोमानश्च हृदयस्याधस्ताद्दक्षिणोत्तरौ मांसखंडौ क्लोमानइति नित्यं बहुवचनमेकस्मिन्नेव पर्वताः काठिन्यादुच्छ्रितत्वाच्च ओषधयश्च क्षुद्राः स्थाव

यकृच्च क्लोमानश्च पर्वता ओषधयश्च वनस्पतयश्च लोमान्युद्यन्पूर्वार्धो निम्लोचन् जघनार्धो यद्विजृंभते तद्विद्योतते यद्विधूनुते
तत्स्तनयति यन्मेहति तद्वर्षति वागेवास्य वाक्॥१॥ राः वनस्पतयश्च महांतो लोमानि केशाश्च यथासंभवं उद्यन्नुद्गच्छन् भवति सवि
ता आमध्यान्हादश्वस्य पूर्वार्धो नाभेरूर्ध्वमित्यर्थः॥ निम्लोचन्नस्तं यन्नामध्यान्हाज्जघनार्धोपरार्धः पूर्वापरत्वसाधर्म्याद्यद्विजृंभते गात्राणि
विनामयति विक्षिपति तद्विद्योतते मुखघनविदारणसामान्याद्यद्विधूनुते गात्राणि कंपयति तत्स्तनयति॥ उदरविपरिवर्तिन्यर्धजीर्णे सिकतादृष्टौ
हेतुः॥ विश्लिष्टेति॥ किमिति गुदशब्देन पायुरेव न गृह्यते शिराग्रहणे हि मुख्यार्थातिक्रमः स्यात्तत्राह॥ बहुवचनादिति॥ चकारोवधारणार्थः॥ यद्यपि बहूत्त्या
शिराभ्योर्थांतरमपि गुदशब्दमर्हति तथापि स्पंदनसादृश्यात्तास्वेव सिंधुदृष्टिरिति तासामिह ग्रहणमिति भावः॥ कृतौ मांसखंडयोर्द्वित्वमेकत्र बहुवचनाद्बहुत्व

नइति॥ तयोः पर्वतदृष्टौ हेतुद्वयमाह॥ काठिन्यादित्यादिना॥ सुदूरत्वसाधर्म्यादोषधिदृष्टिर्लोमसु महत्त्वसामान्याद्वनस्पतिदृष्टिश्चाश्वकेशेषु कर्त्तव्येत्याह॥ यथासंभवमिति॥ पूर्वत्वसामान्यान्मध्यान्हात्प्रागवस्थादित्यदृष्टिरश्वस्य नाभेरूर्ध्वभागे कर्त्तव्येत्याह॥ उद्यन्नित्यादिना॥ अपरत्वसादृश्यादश्वस्य नाभेरपरार्धभागे मध्यान्हादनंतरभाव्यादित्यदृष्टिः कार्येत्याह॥ निम्लोचन्नित्यादिना॥ विजृंभतइत्यादौ प्रत्ययार्थो न विवक्षितः विजृंभणं मुखं विदारयति॥ विद्योतनं पुनर्मेघविदारणमतो विद्योतनदृष्टिर्जृंभणे कर्त्तव्येत्याह॥ मुखेति॥ स्तनयतीति स्तनितमुच्यते तत्र दृष्टिर्गात्रकंपने कर्त्तव्येत्यत्र हेतुमाह॥ गर्जनेति॥ मूत्रकरणे वर्षणदृष्टौ कारणमाह॥ सेचनेति॥ अश्वस्य हेषितशब्दे नास्त्यारोपणमित्यतो न सादृश्यं वक्तव्यमित्याह॥ नात्रेति॥ १॥ अश्वावयवेषु कालादिदृष्टीर्विधाया

गर्जनशब्दसामान्याद्यन्मेहति मूत्रं करोत्यश्वस्तद्वर्षति वर्षणं तत्सेचनसामान्याद्वागेव शब्द एवास्याश्वस्य वागिति॥ नात्र कल्पने
त्यर्थः॥ अहर्वा इति सौवर्णो राजतौ महिमाख्यौ ग्रहावश्वस्याग्रतः पृष्ठतश्च स्थाप्येते तद्विषयमिदं दर्शनं अहः सौवर्णो ग्रहः दीप्तिसामा

अहर्वा अश्वं पुरस्तान्महिमान्वजायत

न्यात्॥ वै अहरश्वं पुरस्तान्महिमान्वजायतेति कथमश्वस्य प्रजापतित्वात्प्रजापतिर्ह्या
दित्यादिलक्षणोन्हा लक्ष्यते॥ अश्वं लक्षयित्वा जायत सौवर्णो महिमग्रहो वृक्षमनु विद्योतते विद्युत् इतियद्वत्॥ श्वं प्रजापतिरूपं विवक्षित्वा कंडि
कांतरं गृहीत्वा तात्पर्यमाह॥ अहर्वेत्यादिना॥ ग्रहो हवनीयद्रव्याधारो पात्रविशेषो अग्रतः पृष्ठतश्चेति संज्ञपनात्प्रागूर्ध्वं चेति यावत्॥ प्रसिद्धा तावदन्हि
दीप्तिः सौवर्णे च ग्रहे सास्त्यतस्तस्मिन्नहर्दृष्टिरिति दर्शनं विभजते॥ अहरिति॥ अश्वसंज्ञपनात्पूर्वं यो महिमाख्यो ग्रहः स्थाप्यते स चेदहर्दृष्ट्योपास्यते॥
कथं सोऽश्वमन्वजायतेति पश्चादश्वस्य तज्जन्मवाचो युक्तिरिति शंकते॥ अहरश्वमिति॥ नायं पश्चादर्थोऽनु शब्दः किं तु लक्षणार्थस्तथाचाश्वस्य प्रजापति

सोमादि

ग्रं

रूपत्वात्तं लक्षयित्वा ग्रहस्य यथोक्तस्य प्रवृत्तेरुपदेशादश्वमन्वजायतेत्यविरुद्धमिति परिहरति॥ अश्वस्येति॥ तदेव स्फुटयति॥ प्रजापतिरिति॥ काल लोकदेवतात्मा प्रजापतिरश्वात्मना दृश्यमानोऽत्राहर्दृष्ट्या दृष्टेन ग्रहेण लक्ष्यते॥ तथा चाश्वमन्वजायतेति श्रुतिरविरुद्धेत्यर्थः॥ अनुशब्दो न पश्चाद्वाचीत्यत्र दृष्टांतमाह॥ वृक्षमिति॥ यदा वृक्षं लक्षयित्वा तस्याग्रे विद्युद्विद्योतते तदा वृक्षमनु विद्योतते सेति प्रयुज्यते॥ तथा चात्राप्यनुशब्दो न पश्चादर्थ इत्यर्थः॥ यत्र च स्थाने ग्रहः स्थाप्यते तत्पूर्वसमुद्रदृष्ट्या ध्येयमित्याह॥ तस्येति॥ पूर्ववन्मंत्रसादृश्यं॥ कथं सप्तमी प्रथमार्थे योज्यते छंदस्यर्थानुसारेण व्यत्ययसंभवादित्याह॥ विभ

तस्य ग्रहस्य पूर्वे पूर्वः समुद्रे समुद्रो योनिर्विभक्तिव्यत्ययेन योनिरित्यासादनस्थानं॥ तथा रात्रिः राजतो ग्रहो वर्णसामान्याज्जघन्यत्वसामान्या द्वा॥ एनमश्वं पश्चात्पृष्ठतो महिमान्वजायत॥ तस्यापरे समुद्रे योनिः महिमा महत्त्वादश्वस्य हि विभूतिरेषा सौवर्णो राजतश्च ग्रहावुभयतः स्थाप्येते॥

तस्य पूर्वे समुद्रे योनी रात्रिरेनं पश्चान्महिमान्वजायत तस्यापरे समुद्रे योनिरेतौ वा अश्वं महिमानावभितः संबभूवतुर्हयो भूत्वा देवा नवह

तावेतौ वै महिमानौ महिमाख्यौ ग्रहावश्वमभितः संबभूवतुः॥ उक्तलक्षणावेव संभूतावित्यमसावश्वो महत्त्वयुक्त इति ॥

क्तीति॥ यथा सौवर्णे ग्रहे हर्दृष्टिरुपदिष्टा तथा राजते ग्रहे रात्रिदृष्टिः कर्त्तव्येत्याह॥ तथेति॥ अस्ति हि चंद्रातपवत्त्वाद्रात्रेः शौक्ल्यमस्ति च राजतस्य ग्रहस्य तद्युक्तं तत्र रात्रिदर्शनमित्याह॥ वर्णेति॥ रजतं सुवर्णाज्जघन्यमन्हश्च रात्रिरतो वा सादृश्यात्तत्र रात्रिदृष्टिरित्याह॥ जघन्येति॥ प्रजापतिरूपं प्रकृतमश्वं लक्षयित्वा तत्संशपनात्पश्चादस्य प्रवृत्तिर्दर्शयति॥ एनमिति॥ तदासादनस्थाने पश्चिमसमुद्रदृष्टिर्विधेयेत्याह॥ तस्येति॥ कथमेतौ ग्रहौ महिमाख्यावुक्तौ महत्त्वोपेतत्वादित्याह॥ महिमेति॥ अथाश्वविषयं दर्शनमादिश्य ग्रहविषयं तदादिशतो वाक्यभेदः स्यान्नेत्याह॥ अश्वस्येति॥ किमत्र नियामकमित्याशंक्य पुनरुक्तिरिति मत्वाह॥ तावि

12

त्यादिना॥वैशब्दार्थंकथयति॥एवेति॥वाक्यशेषोप्यत्रानुगुणीभवतीत्याह॥तथाचेति॥हयशब्दनिष्पत्तिपुरःसरंतदर्थमाह॥हयइति॥वाज्यादिशब्दानांजातिवि
शेषवाचित्वादत्रापितदेवग्राह्यमितिपक्षांतरमाह॥जातीति॥देवानांदेवत्वप्रापकत्वंकथमस्येत्याशंक्याह॥प्रजापतित्वादिति॥अश्वंस्तोतुमारभ्यकल्पांतरो
क्त्यातन्निंदावचनमनुचितमितिशंकते॥नन्विति॥उपक्रमविरोधोनास्तीतिपरिहरति॥नेत्यादिना॥समुत्पद्यभूतानिद्रवंत्यस्मिन्नितिव्युत्पत्त्यापरमगंभीरस्ये
श्वरस्यसमुद्रशब्दतामाह॥परमात्मेति॥तत्रयोनित्वमुत्पादकत्वंबंधुत्वंस्थापकत्वंसमुद्रत्वंविलापकत्वमितिभेदः॥अथपरमात्मयोनित्वादिवचनस्योपास्याश्वस्य

पुनर्वचनंस्तुत्यर्थंतथाचहयोभूत्वेत्यादिस्तुत्यर्थमेवहयोहिनोतेर्गतिकर्मणोविशिष्टगतिरित्यर्थः॥जातिविशेषोवादेवानवहद्देवत्वमगमयत्प्र
जापतित्वाद्देवानांवावोढाभवत्॥ननुनिंदेववाहनत्वं॥नैषदोषःवाहनत्वंस्वाभाविकमश्वस्यस्वाभाविकत्वाद्दुःखायप्राप्तिर्देवादिसंबंधोऽश्वस्ये

द्वाजीगंधर्वानर्वासुरानश्वोमनुष्यान्समुद्रएवास्यबंधुःसमुद्रोयोनिः॥२॥प्रथमंब्राह्मणं॥१॥

तिस्तुतिरेवैषातथावाज्यादयोजातिविशेषावाजीभूत्वागंधर्वानवहदित्यनुषंगःतथार्वाभूत्वाऽसुरानश्वोभूत्वामनुष्यान्समुद्रएवेति॥प
रमात्मावंधुःबंधनंबध्यतेस्मिन्नितिसमुद्रोयोनिःकारणमुत्पत्तिंप्रतिएवमसौशुद्धयोनिःशुद्धस्थितिरितिस्तूयते॥अप्सुयोनिर्वाअश्वइ
तिश्रुतेःप्रसिद्धएववासमुद्रोयोनिः॥२॥तृतीयस्यप्रथमंब्राह्मणं॥१॥अथाग्नेरश्वमेधोपयोगिकस्योत्पत्तिरुच्यते॥ क्वोपयुज्यतेतत्राह॥एवमिति॥
श्रुत्यंतरानुरोधेनसमुद्रोयोनिरित्यत्रसमुद्रशब्दस्यरूढिमनुजानाति॥अप्सुयोनिरिति॥२॥तृतीयस्यप्रथमंब्राह्मणं॥१॥ॐ॥अश्वादिदृष्टिनोक्त्वानंतरंअग्नि
दर्शनंवक्तुंब्राह्मणांतरमवतारयति॥अथेति॥नैवेहेत्यादौतद्दृष्टिर्नास्तीतिचेत्सत्यंतत्राग्नेर्जन्मवक्तुंभूमिकाक्रियतइत्याह॥अग्नेरिति॥वायोरग्निरित्या

दैप्रसिद्धंतज्जन्मेतिचेत्सत्यंतद्विशेषस्याग्रजन्मोक्तिरित्याह॥अश्वमेधेति॥दर्शनेविधित्सितेकिंजन्मोक्त्येतिचेत्तत्राह॥तद्विषयेति॥अग्निदर्शनस्य
विधातुमिष्टस्यविध्यर्थमुपास्याग्निस्तुतिफलात्तदुत्पत्तिरिष्टाशुद्धजन्मत्वादुत्कृष्टत्वेनायमुपास्योराजादिवदित्यर्थः॥तात्पर्यमुक्त्वावाक्यमादायाक्षराणि
व्याचष्टे॥नैवेत्यादिना॥नामरूपाभ्यांविभक्तोविशेषोयस्मिन्निति बहुव्रीहिः॥अत्रशून्यवादीलब्धावकाशोविमृश्यपरेष्टमुत्सवष्टंभेनस्वपक्षमाह॥कि
मित्यादिना॥कार्यस्यप्रागसत्वेहेत्वंतरमाह॥उत्पत्तेश्चेति॥विमतंप्रागसदुत्पद्यमानत्वाद्यन्नैवंनतदेवंयथापरेष्टंब्रह्मेत्यर्थः॥हेत्वसिद्धिंशंकित्वोत्तरमाह

तद्विषयदर्शनविवक्षयैवोत्पत्तिःस्तुत्यर्थानैवेहकिंचनाग्रआसीदिहसंसारमंडलेकिंचनकिंचिदपिनामरूपप्रविभक्तविशेषंनैवासीत्नबभूवा
ग्रेप्रागुत्पत्तेर्मनआदेःकिंशून्यमेवस्यान्नैवेहकिंचनेतिश्रुतेःनकार्यंकारणंवासीदुत्पत्तेश्चउत्पद्यतेहिघटःअतःप्रागुत्पत्तेर्घटस्यनास्तित्वं॥ननुका

नैवेहकिंचनाग्रआसीन्मृत्युनैवेदमावृतमासी

रणस्यनास्तित्वंमृत्पिंडादिदर्शनाद्यन्नोपलभ्यतेतस्यैवनास्तिताऽस्तुकार्यस्यनतुकारणस्योपलभ्यमानत्वान्नप्रागुत्पत्तेःसर्वानुपलंभादनुपल
ब्धिश्चेदभावहेतुःसर्वस्यजगतःप्रागुत्पत्तेःनकार्यंकारणंवोपलभ्यतेतस्मात्सर्वस्यैवाभावोस्तुनमृत्युनैवेदमावृतमासीदितिश्रुतेः॥ ॥उत्पद्यतेही

ति॥घटग्रहणंकार्यमात्रस्योपलक्षणार्थं॥उक्तमनुमानंनिगमयति॥अतइति॥तत्रतार्किकोब्रूते॥नन्विति॥यदुक्तंनकार्यंकारणंवासीदितितत्रभागेबाधोभागे
चानुमतिरित्यर्थः॥कार्यस्यापिकथंप्रागसत्वोपपत्तिरित्याशंक्याह॥यन्नेति॥एतेनानुमानस्यसिद्धसाध्यतोक्ताकार्यवत्कारणस्यापिप्रागसत्वंकिंनस्यादित्याशंक्यो
क्तहेतुत्वाभावान्नैवमित्याह॥नत्विति॥शून्यवाद्याह॥नप्रागुत्पत्तेरिति॥विमतंप्रागसद्योग्यत्वेसतितदानुपलब्धत्वात्संमतवच्चनचासिद्धोहेतुःश्रुतेरनतिशंक्यत्वा

 

यति॥अनुपलब्धिश्चेति॥कार्यवत्कारणस्यापिप्रागसत्वेप्राप्तेसिद्धांतयति॥नेत्यादिना॥नैवेत्यादिश्रुतिरव्याकृतनामरूपादिविषयानप्रागसत्वंकार्य
कारणयोराह॥अन्यथावाक्यशेषविरोधादित्यर्थः॥श्रुतिंविवृणोति॥यदिहीति॥द्वयोरसत्वेपिकावाचोयुक्तेरनुपपत्तिस्तत्राह॥नहीति॥मातर्हि
वाक्यमेवाभूदित्याशंक्याह॥ब्रवीतिचेति॥मृत्युनेत्यादिवाक्यार्थमुपसंहरति॥तस्मादिति॥श्रुतेः प्रामाण्यादिति॥तत्प्रामाण्यस्यप्रमाणलक्षणेस्थि
तत्वादितियावत्॥परकीयेनुमानेश्रुतिविरोधमभिधायानुमानविरोधमाह॥अनुमेयत्वाच्चेति॥कार्यकारणयोःसत्वस्यानुमेयतयातदसत्वमनुमातुमशक्य
मुपजीव्यविषयतयासत्वानुमानस्यबलीयस्त्वादित्यर्थः॥कार्यकारणयोःसत्वानुमानंप्रतिज्ञायप्रथमंकारणसत्वमनुमिनोति॥अनुमीयतेचेत्यादिना॥कार्य

यदिहिकिंचिदपिनासीद्येनाव्रियतेयच्चाप्याव्रियतेतदानावृस्यनमृत्युनैवेदमावृतमितिश्रुतिः॥नहिभवतिगगनकुसुमकुन्लोवंध्यापुत्रइति
ब्रवीतिचमृत्युनैवेदमावृतमासीदिति॥तस्माद्येनावृतंकारणेनयच्चावृतंकार्यंप्रागुत्पत्तेस्तदुभयमासीच्छ्रुतेःप्रामाण्यादनुमेयत्वाच्चाऽनुमीय
तेचप्रागुत्पत्तेःकार्यकारणयोरस्तित्वंकार्यस्यहिततोजायमानस्यकारणेसत्युत्पत्तिदर्शनादसतिचादर्शनात्जगतोपिप्रागुत्पत्तेःकारणा
स्तित्वमनुमीयतेघटादिकारणास्तित्ववत्॥घटादिकारणस्यापिअसत्वमेवानुपमृद्यमृत्पिंडादिकंघटाद्यनुत्पत्तेरितिचेत् नमृदादेःकारण
त्वात्॥मृत्सुवर्णादिहितत्रकारणंघटरुचकादेर्नपिंडाकारविशेषः॥ स्यहीति॥विमतंसत्पूर्वंकार्यत्वादंकुरवदित्यर्थः॥नानुपमृद्यप्रादुर्भावादितिन्या
येनदृष्टांतस्यसाध्यवैकल्यंचोदयति॥घटादीति॥नतावदसिद्धोघटःस्वकारणमुपमृद्नाति॥असतोऽकारकत्वात्सिद्धस्यतूपमर्दकत्वेनासत्पूर्वकत्वमितिकु
तःसाध्यविकलतेत्याह॥नेति॥किंचअन्वयिद्रव्यमेवसर्वत्रकारणंनपिंडादिविशेषोनन्व यादनवस्थानाच्चेतिकुतःसाध्यवैकल्यमित्याह॥मृदादेरिति॥तदेव
स्फुटयति॥मृत्सुवर्णादिति॥तत्रेतिदृष्टांतोक्तिः॥किंचअन्वयव्यतिरेकाभ्यांकारणमवधेयं॥नचपिंडाभावेघटोनभवतीतिव्यतिरेकोस्तिपिंडाभावेपिशकला

दिभ्योपिघटाद्युद्भवोपलंभादित्याह॥तदभावेति॥तदेवस्फुटयति॥असत्यपीति॥लब्धतेपिव्यतिरेकराहित्यंतुल्यमित्याशंक्याह॥असतीति॥मृदाद्येवघ
टादिकारणंचेत्किमितिपिंडादोसत्येवततोघटाद्युत्पत्तिरित्याशंक्याह॥सर्वमिति॥ब्रह्मणित्वविद्यावशादुपपत्तिरितिभावः॥अन्वयिद्रव्यंपूर्वोत्पन्नस्व
कार्यतिरोधानेनकार्यांतरंजनयतिचेत्कार्यतादात्म्येनस्वयमपिनश्येत्तत्रोत्तरकार्योत्पत्तिर्हेत्वभावादित्याशंक्याह॥नचेति॥कार्यांतरेप्यनुवृत्तिदर्शनात्सिं
डरूपकार्यात्मनाऽभावाच्चेत्यर्थः॥अन्वयिद्रव्यस्यैवकारणत्वंफलितमाह॥तस्मादिति॥अन्वयिनोमृदादेर्मानाभावेनाऽभावान्नकारणतेतिशंकते॥पिंडा

तदभावेभावादसत्यपिपिंडाकारविशेषेमृत्सुवर्णादिकारणद्रव्यमात्रादेवघटरुचकादिकार्योत्पत्तिर्दृश्यते॥तस्मान्नपिंडाकारविशे
षोघटरुचकादिकारणमसतितुमृत्सुवर्णादिद्रव्येघटरुचकादिर्नजायतइतिमृत्सुवर्णादिद्रव्यमेवकारणंनतुपिंडाकारविशेषः॥
सर्वंहिकारणंकार्यमुत्पादयत्पूर्वोत्पन्नस्यात्मकार्यस्यतिरोधानंकुर्वत्कार्यांतरमुत्पादयति एकस्मिन्कारणेयुगपदनेककार्यविरोधा
न्नचपूर्वकार्योपमर्देकारणस्यस्वात्मोपमर्दोभवति॥तस्मात्पिंडाद्युपमर्देकार्योत्पत्तिदर्शनमहेतुःप्रागुत्पत्तेःकारणासत्वेपिंडादिव्यतिरे
केणमृदादेरसत्वादयुक्तमितिचेत्पिंडादिपूर्वकार्योपमर्देमृदादिकारणंनोपमृद्यतेघटादिकार्यांतरेप्यनुवर्ततइत्येतदयुक्तं॥पिंडघटादि
व्यतिरेकेणमृदादिकारणस्यानुपलंभादितिचेत्॥न॥मृदादिकारणानांघटाद्युत्पत्तौपिंडादिनिवृत्तावनुवृत्तिदर्शनात्सादृश्यादन्वयद
र्शनंनकारणानुवृत्तिरितिचेत्॥

दीति॥तदेवचोद्यंविवृणोति॥पिंडादित्यादिना॥मृद्घटःस्वर्णकुंडलमित्यादितादात्म्यप्रत्ययस्यपिंडाद्यतिरि
कमृदाद्यभावेऽनुपपत्तेरनुगतंमृदाद्युपेयमितिपरिहरति॥नेति॥किंचयापिंडात्मनापूर्वेद्युर्मृदासीत्सैवाद्यघटाद्यभूदितिप्रत्यभिज्ञयामृदोन्वयि
न्याःसिद्धेस्तत्कारणत्वंदुरपह्नवमित्याह॥मृदादीति॥यत्सत्तत्क्षणिकंयथादीपःसंतश्चेमेभावाइत्यनुमानात्सर्वार्थानांक्षणिकत्वसिद्धेरन्वयदृष्टिःसादृ

श्याद्भ्रांतिरितिशंकते॥सादृश्यादिति॥

14

 

प्रत्यभिज्ञासिद्धस्याप्यर्थविरुद्धं क्षणिकार्थबोधिलिंगमनुष्णतानुमानवन्न मानमिति दूषयति॥ नेत्यादिना॥ सादृश्यादीत्यादिशब्देन प्रत्यभिज्ञा भ्रांतित्वादिग्रह्यते॥ प्रत्यक्षत्वात्कारणैकं गम्यते अनुमानात्तद्वे दो: तोद्वयोर्विरुद्धत्वस्याव्यभिचारित्वात्प्राध्यक्षेणानुमानबाधो वैपरीत्यसंभवादित्याशंक्याह॥ नचेति॥ प्रत्यभिज्ञामुपजीव्य क्षणिकत्वानुमानाप्रवृत्तावप्युपजीव्यजातीयत्वात्तत्प्राबल्यादुपजीवकजातीयकमुक्तानुमानं दुर्बलं तद्बाध्यमित्यर्थः॥ प्रत्यभिज्ञास्वार्थे स्वतोन मानं बुध्यंतरसंभवादेव बुद्धीनां मानत्वस्य बौद्धैरिष्टत्वान्न च बुध्यंतरं स्थायित्वसाधकमस्तीति प्रत्यभिज्ञायमानस्यापि क्षणिकत्वमित्याशंक्याह॥ सर्वत्रेति॥ प्रसंगमेव प्रकटयति॥ यदि चेति॥ क्षणिकत्वादिबुद्धेरपि स्वार्थे स्वतो मानत्वाभावात्तादृग्बुध्यंतरापेक्षायां तस्यापि तथात्वेनानव

नपिंडादिगतानां मृदाद्यवयवानामेव घटादौ प्रत्यक्षत्वे ऽनुमानाभासात्सादृश्यादिकल्पनानुपपत्तेः नच प्रत्यक्षानुमानयोर्विरुद्धाव्यभिचारिताप्रत्यक्षपूर्वकत्वादनुमानस्य सर्वत्रैवानाश्वासप्रसंगात्॥ यदि च क्षणिकं सर्वं तदेवेदमिति गम्यमानं तद्बुद्धेरपि अन्यतद्बुध्यपेक्षत्वे तस्या अप्यन्यतत्बुध्यपेक्षत्वमित्यनवस्थायां तत्सदृशमिदमित्यस्या अपि बुद्धेर्मृषात्वात्सर्वत्रानाश्वास एवं तदिदं बुध्योरपि कर्त्रभावे संबंधानुपपत्तिः॥ सादृश्यात्तत्संबंध इति चेत्॥ न तदिदं बुध्योरितरेतरविषयत्वानुपपत्तेः॥ असति चेतरेतरविषयत्वे सादृश्यग्रहणानुपपत्तिः ॥ ॥

स्थानाद्बुद्धेः स्वतःप्रामाण्यमुपेयं तथा च प्रत्यभिज्ञानं सर्वं तथैव बाधादित्यर्थः॥ किंच॥ प्रत्यभिज्ञाया भ्रांतित्वं वदतास्वरूपानपह्नवात्तदिदं बुध्योः सामानाधिकरण्येन संबंधो वाच्यः स च वक्तुं न शक्यते क्षणद्वयसंबंधिनो द्रष्टुरभावादित्याह॥ तदिदमिति॥ असति संबंधे बुध्योः सादृश्यात्तद्धीरिति शंकते॥ सादृश्यादिति॥ तयोः स्वासंवेद्यत्वाद्ग्राहकांतरस्य चाभावान्न सादृश्यसिद्धिरिति दूषयति॥ न तदिदं बुध्योरिति॥ तथापि किमिति सादृश्यासिद्धिरित्याशंक्याह॥ असतिचेति॥ सादृश्यासिद्धिमभ्युपेत्य शंकते॥ असत्येवेति॥ यत्र सत्येवार्थे धीस्तत्रैव साधकापेक्षा नान्यत्रेति भावः॥ तत्र बाह्यार्थवादिनं प्रत्याह॥ न तदिदं बुध्यो

रिति॥ विज्ञानवाद्याह॥ असदिति॥ तथासत्यनालंवनं क्षणिकं विज्ञानमित्यस्यापि ज्ञानस्याऽसद्विषयतया विज्ञानवादासिद्धिरित्याह॥ नेति॥ शून्यवाद्याह॥ तदपीति॥ सर्वा धीरसद्विषयेत्येषापि धीरसद्विषया स्यात्ततश्च सर्वबुद्धेरसद्विषयत्वासिद्धिरिति दूषयति॥ नेत्यादिना॥ परपक्षासंभवात्तत्प्रत्यभिज्ञायाः स्थायिहेतुसिद्धो दृष्टांतस्य साध्यवैकल्यं परिहृत्यावांतरप्रकृतमुपसंहरति॥ तस्मादिति॥ संप्रतिकारणसत्वानुमानं निगमयति॥ अतइति॥ कार्यकारणयोर्द्वयोरपि प्रागुत्पत्तेः सत्वमनुमेयमिति प्रतिज्ञाय कारणास्तित्वं प्रपंचितं॥ इदानीं कार्यास्तित्वानुमानं दर्शयति॥ कार्यस्येति॥ प्रागुत्पत्तेः सद्भावः प्रसिद्धइति

असत्येव सादृश्येत तद्बुद्धिरिति चेत्॥ न॥ तदिदं बुध्योरपि सादृश्यबुद्धिवदसद्विषयत्वप्रसंगादसद्विषयत्वमेव सर्वबुद्धीनामस्त्विति चेन्न बुद्धिबुद्धेरप्यसद्विषयत्वप्रसंगात्तदप्यस्त्विति चेन्न सर्वबुद्धीनां मृषात्वे सत्यबुध्यनुपपत्तेः॥ तस्मादसदेतत्सादृश्यात्तद्बुद्धिरित्यतः सिद्धः प्राक्कार्योत्पत्तेः कारणसद्भावः कार्यस्य चाभिव्यक्तिलिंगत्वात्कार्यस्य च सद्भावः प्रागुत्पत्तेः सिद्धः॥ कथमभिव्यक्तिलिंगत्वादभिव्यक्तिलिंगमस्येत्यभिव्यक्तिः साक्षाद्विज्ञानालंबनत्वप्राप्तिर्यद्धि लोके प्रावृतं तमआदिना घटादिवस्तु तदालोकादिना प्रावरणतिरस्कारेण विज्ञानविषयत्वं प्राप्नुवत्प्राक्सद्भावं न व्यभिचरति॥ तथेदमपि जगत्प्रागुत्पत्तेरित्यवगच्छामः॥

चकारार्थः॥ प्रतिज्ञाभागं विभजते॥ कार्यस्येति॥ हेतुभागमाक्षिपति॥ कथमिति॥ अभिव्यक्तिलिंगमस्येति व्युत्पत्त्या कथमभिव्यक्तिलिंगत्वादिति कार्यसत्वे हेतुरुच्यते सिद्धे हि सत्वेऽभिव्यक्तिलिंगमस्येति सिध्यति तद्बलाच्च सत्वसिद्धिरित्यन्योन्याश्रयादित्यर्थः संप्रतिपन्नयाऽभिव्यक्त्या विप्रतिपन्नं सत्वं साध्यते तत्रान्योन्याश्रयत्वमिति परिहरति॥ अभिव्यक्तिरिति॥ कथं तर्हि इहानुमानं प्रयोक्तव्यमित्याशंक्य प्रथमं व्याप्तिमाह॥ यद्धीति॥ यस्याभिव्यज्यमानं तत्प्रागभिव्यक्तेरस्ति यथा तमोंतःस्थं घटादीत्यर्थः संप्रत्यनुमिनोति॥ तथेति॥ विमतं प्रागभिव्यक्तेः सदभिव्यक्तिविषयत्वाद्यद्ध्यभिव्यज्यते तत्प्राक्सत्संप्रतिपन्नवदित्यर्थः॥ ननु तमोंतःस्थो घटोऽभिव्यंजकसामीप्यादभिव्यज्यते न तत्प्राक्कालीनं सत्वं प्रयो

जकमित्याशंक्याह॥ नहीति॥ उक्तेनुमानेकार्यस्यसदोपलब्धिप्रसंगंविपक्षेबाधकमाशंकते॥ नेत्यादिना॥ उक्तानुमाननिषेधोनञर्थः अविद्यमानत्वाभावा
दितिछेदः॥ अनुमानेबाधकोपन्यासंविवृणोति॥ नहीति॥ वर्त्तमानवदतीतमागामिघटादिसदेवचेदुपलब्धिसामग्र्यांसत्यांतद्वत्प्रागूर्ध्वंनाशाच्चोर्ध्वमुपल
भ्येतनचैवमुपलभ्यतेतस्मादयुक्तंकार्यस्यसदासत्वमित्यर्थः॥ मृत्पिंडग्रहणंविरोधिकार्यांतरोपलक्षणार्थंअसन्निहितेसतीतिछेदः॥ नतावद्विद्य
मानत्वमात्रंकार्यस्यसदोपलंभापादकंसतोपिघटादेरभिव्यक्त्यनभिव्यक्त्योरुपलब्ध्यत्वादितिसमाधत्ते॥ नेति॥ अभिव्यक्तिसामग्रीसत्वंत्वभिव्यक्तिसा

नह्यविद्यमानोघटउदितेप्यादित्येउपलभ्यते नतेऽविद्यमानत्वाभावादुपलभ्येतेवेतिचेत्॥ नहितवघटादिकार्यंकदाचिदप्यविद्यमान
मित्युदितेआदित्येउपलभ्यैतेवमृत्पिंडेऽसन्निहितेतमआद्यावरणेचासतिविद्यमानत्वादितिचेत्न॥ द्विविधत्वादावरणस्यघटादिकार्य
स्यद्विविधंह्यावरणंमृदादेरभिव्यक्तस्यतमःकुड्यादिप्राङ्मृदोभिव्यक्तेर्मृदाद्यवयवानांपिंडादिकार्यांतररूपेणसंस्थानंतस्मात्प्रागुत्पत्तेर्वि
द्यमानस्यैवघटादिकार्यस्यावृतत्वादनुपलब्धिर्नष्टोत्पन्नभावाभावशब्दप्रत्ययभेदस्त्वभिव्यक्तितिरोभावयोर्द्विविधत्वापेक्षःपिंडकपाला
देरावरणवैलक्षण्यादयुक्तमितिचेत्तमःकुड्यादिहिघटाद्यावरणंघटादिभिन्नदेशंदृष्टंनतथाघटादिभिन्नदेशेदृष्टेपिंडकपालेतस्मात्पिंडक
पालसंस्थानयोर्विद्यमानस्यैवघटस्यावृतत्वादनुपलब्धिरितितदयुक्तमावरणधर्मवैलक्षण्यादितिचेत्॥ धकंनतुसतस्तत्सामग्रीनियमोस्ती

तिअभिप्रेत्याह॥ द्विविधत्वादिति॥ उत्पन्नस्यकुड्याद्यावरणमनुत्पन्नस्यविशिष्टंकारणमितिद्वैविध्यमेवप्रतिज्ञापूर्वकंसाधयति॥ घटादीति॥ यदोपलभ्य
मानकारणावयवानांकार्यांतराकारेणस्थितिस्तदानेदंकार्यमुपलभ्यतेतत्रान्यथाचोपलभ्यतइत्यन्वयव्यतिरेकसिद्धंकारणस्यकार्यांतररूपेणास्थितस्यका
र्यावरकत्वमितिद्रष्टव्यंविशिष्टस्यकारणस्यावरकत्वसिद्धोसिद्धमर्थमाह॥ तस्मादिति॥ प्राक्कार्यास्तित्वेसदातदुपलब्धिप्रसंगबाधकंनिराकृत्यनष्टोघटो

नास्तीत्यादिप्रयोगप्रत्ययभेदानुपपत्तिं बाधकांतरमाशंक्याह॥ नष्टेति॥ कपालादिना तिरोभावे नष्टव्यवहारः पिंडाद्यावरणभंगेनाभिव्यक्तादुत्पन्नव्यवहा
रो दीपादिना तमोनिरासेनाभिव्यक्तौ भावव्यवहारः पिंडादिना तिरोभावेऽभावव्यवहारः॥ तदेवं कार्यस्य सदात्त्वेपि प्रयोगप्रत्ययभेदसिद्धिरित्यर्थः पिंडादि
नाघटाद्यावरणं तेन समानदेशत्वाद्यद्यस्यावरणं न तत्तेन समानदेशं यथा कुड्यादीति शंकते॥ पिंडेति॥ व्यतिरेक्यनुमानं विवृणोति॥ तमइत्यादिना॥ अनुमान
फलं निगमयति॥ तस्मादिति॥ किमिदं समानदेशत्वं किमेकाश्रयत्वं किं वैककारणत्वं इति विकल्प्याद्यं विरुद्धत्वेन दूषयति॥ नेत्यादिना॥ क्षीरेण संकीर्णस्योदकादे

नक्षीरोदकादेः क्षीराद्यावरेणानेकदेशत्वदर्शनाद्धटादिकार्यैकपालचूर्णाद्यवयवानामंतर्भावादनावरणत्वमिति चेत् न विभक्तानां कार्यांतरत्वादा
वरणत्वोपपत्तेः॥ आवरणाभाव एव यत्नः कर्त्तव्य इति चेत्पिंडकपालावस्थयोर्विद्यमानमेव घटादिकार्यमावृतत्वान्नोपलभ्यत इति चेद्धटादि
कार्यार्थिना तदावरणविनाश एव यत्नः कर्त्तव्यो न घटाद्युत्पत्तौ न चैतदस्ति तस्मादयुक्तं विद्यमानस्यैवावृतत्वादनुपलब्धिरिति चेन्नाऽनियमा
न्नहि विनाशमात्रप्रयत्नादेव घटाद्यभिव्यक्तिर्नियता तमआद्यावृते घटादौ प्रदीपाद्युत्पत्तौ प्रयत्नदर्शनात्सोपि तमोनाशायैवेति चेद्दीपाद्युत्प
त्तावपि यः प्रयत्नः सोपि तमस्तिरस्करणाय तस्मिन्नेव घटः स्वयमेवोपलभ्यते॥

रावृियमाणस्येति यावत्॥ द्वितीयमुत्थापयति॥ घटादीति॥ यस्येदं का
र्यं तस्मिन्मृदात्मनि तेषामवस्थानात्तद्वृत्तेषामनावरणत्वमित्यर्थः॥ घटावस्थमृन्मात्रवृत्तिकपालादेर्घटानावरणत्वमिष्टमेवेति सिद्धसाध्यताऽव्यक्तघटावस्थ
मृद्वृत्तिकपालादेरनावरणत्वसाधने हेत्वसिद्धिः घटस्य कपालादेश्चाश्रयमृदवयवभेदादिति दूषयति॥ नविभक्तानामिति॥ विद्यमानस्यैवावृतत्वादनुपलब्धिश्चे
दावरणतिरस्कारे यत्नः स्यान्न घटादेरुत्पत्तावतोऽनुभवविरोधः सत्कार्यवादिनः स्यादिति शंकते॥ आवरणेति॥ तदेव प्रपंचयति॥ पिंडेति यन्नावृतं वस्तु यज्ज्यते त
त्रावरणभंग एव यत्न इति॥ व्याप्त्यभावान्नानुभवविरोधोस्तीति दूषयति॥ नानियमादिति॥ अनियमं साधयति॥ नहीति॥ तमसावृते घटादौ दीपोत्पत्तौ यत्नोस्तीत्य

16

न्नचोदयति॥सोपीति॥अनुभवविरोधमाशंक्योक्तमेवव्यनक्ति॥दीपादीति॥दीपस्तमस्तिरयति चेत्कथं कुंभोपलब्धिरत आह॥तस्मिन्निति॥तत्र हेतुमाह॥नहीति॥अनुभवमनुसृत्य परिहरति॥नेत्यादिना॥किमिदानीमावरणभंगे प्रयत्नो नेत्येव नियमोस्तु नेत्याह॥क्वचिदिति॥अनियमं निगमयन्ननुभवविरोधाभावमुपसंहरति॥तस्मादिति॥किंच अभिव्यंजकव्यापारे सति नियमेन घटो व्यज्यते तदभावे नेत्यन्वयव्यतिरेकावधारितो घटार्थः कुलालादि

नहि घटे किंचिदाधीयत इति चेत्॥न प्रकाशवतो घटस्योपलभ्यमानत्वाद्यथा प्रकाशविशिष्टो घट उपलभ्यते प्रदीपकरणेन न तथा प्राक् प्रदीपकरणात्तस्मान्न तमस्तिरस्कारार्थैव प्रदीपकरणं किं तर्हि प्रकाशवत्त्वाय प्रकाशवत्त्वेनैवोपलभ्यमानत्वात्॥क्वचिदावरणविनाशेपि यत्नः स्याद्यथा कुड्यादिविनाशे तस्मान्न नियमोस्त्यभिव्यक्त्यर्थिनावरणविनाश एव यत्नः कार्य इति॥नियमार्थवत्त्वाच्च कारणे वर्त्तमानं कार्यं कार्यांतराणामावरणमित्यवोचाम॥तत्र यदि पूर्वाभिव्यक्तस्य कार्यस्य पिंडस्य व्यवहितस्य वा कपालस्य विनाश एव यत्नः क्रियेत तदा विदलचूर्णाद्यपि कार्यं जायेत तेनाप्यावृतो घटो नोपलभ्यत इति पुनर्यत्नांतरापेक्षैव तस्माद्घटाद्यभिव्यक्त्यर्थिनो नियत एव कारकव्यापारोर्थवांस्तस्मात्प्रागुत्पत्तेरपि सदेव कार्यं॥अतीतानागतप्रत्ययभेदाच्चातीतो घटो ऽनागतो घट इत्येतयोश्च प्रत्यययोर्वर्त्तमानघटप्रत्ययवन्न निर्विषयत्वं युक्तं अनागतार्थिप्रवृत्तेश्च न ह्यसत्यर्थितया प्रवृत्तिर्लोके दृष्टा योगिनां चातीतानागतज्ञानस्य सत्यविषयत्वाद॑संश्चेद्घु विष्णनू घटः॥

व्यापारस्तदर्थवत्त्वार्थमभिव्यक्त्यर्थ एव प्रयत्नो वक्तव्यः आवरणभंगस्त्वार्थिक इत्याह॥नियमेति॥उक्तं स्मारयन्नेतदेव विवृणोति॥कारण इत्यादिना॥आवृतिभंगार्थे यत्ने यतो घटानुपलब्धिरतस्तदुपलब्ध्यर्थत्वेन नियतः सन् यत्नः सफलः स्यादिति फलितमाह॥तस्मादिति॥प्रकृतमभिव्यक्तिलिंगकमनुमानं निर्दोषत्वादादेयं मन्वानस्तत्फलमुपसंहरति॥तस्मात्प्रागिति॥कार्यस्य सत्त्वे युक्त्यंतरमाह॥अतीतेति॥विमतं सदर्थं प्रमाणत्वात्संप्रतिपन्नवदित्यर्थः॥तदेवानुमानं विशदयति॥अतीत इति॥तत्रैवोपपत्त्यंतरमाह॥अना

स्या

गतेति॥आगामिनिघटेतदर्थित्वेनलोकेप्रवृत्तिर्दृष्टा॥नचात्यंतासतिसायुक्तातेनतस्यासद्विलक्षणत्वेत्यर्थः॥किंचयोगिनामीशस्यचातीतादिविषयंप्रत्यक्ष
ज्ञानंदृष्टंतच्चविद्यमानोपलंभनमतोघटस्यसदासत्वमित्याह॥योगिनांचेति॥ईश्वरसमुच्चयार्थश्चकारः॥भविष्यद्ग्रहणंअतीतोपलक्षणार्थंऐश्वरंयौगिकं
चेतिद्रष्टव्यं॥प्रसंगस्येष्टत्वमाशंक्याह॥नचेति॥अधिकबलंहिबाधकंनचाऽनतिशयादीशादिज्ञानादधिकबलंज्ञानंदृष्टमतोबाधकाभावान्नतन्मिथ्येत्यर्थः
॥तस्यसम्यक्त्वेपिपूर्वोत्तरकालयोरसद्घटविषयत्वंकिंनस्यादित्याशंक्याह॥घटेति॥पूर्वोत्तरयोःकालयोरितिशेषः घटस्यप्रागसत्वाभावेहेतुंतरसाह॥विप्रति
षेधादिति॥सहिकारकव्यापारदशायामसन्नितिकोर्थः किंतस्यभविष्यतातदानास्तिकिंवार्थक्रियासामर्थ्यंआद्येव्याहतिंसाधयति॥यदीति॥घटार्थंकु

ऐश्वरंभविष्यद्घटविषयंप्रत्यक्षज्ञानंमिथ्यास्यात्॥नचप्रत्यक्षमुपचर्यते॥घटसद्भावेह्यनुमानमवोचाम विप्रतिषेधाच्च॥यदिहिघटोभविष्य
तीतिकुलालादिषुव्याप्रियमाणेषुघटार्थंप्रमाणेननिश्चितंयेनचकालेनघटस्यसंबंधोभविष्यतीत्युच्यतेतस्मिन्नेवकालेघटोऽसन्निति
विप्रतिषिद्धमभिधीयतेभविष्यन्घटोऽसन्नितिनभविष्यतीत्यर्थः अयंघटोनवर्ततइतियद्वद्यप्रागुत्पत्तेर्घटोऽसन्नित्युच्येतघटार्थं
प्रवृत्तेषुकुलालादिषुतत्रयथाव्यापाररूपेणवर्त्तमानास्तावत्कुलालादयस्तथाघटोनवर्त्ततइत्यसच्छब्दस्यार्थश्चेन्नविरुध्यते॥ ॥ ॥

लालादिषुव्याप्रियमाणेषुसत्सुघटोभविष्यतीतिप्रमाणेननिश्चितंचेत्कथंतर्हिरुत्पत्तेःप्रागसत्वमुच्यतेकारकव्यापारावच्छिन्नेनहिकालेनघटस्यभ
विष्यत्वेनातीतत्वेनवाभविष्यत्वभूदितिवासंबंधोविवक्ष्यतेतथाचतस्मिन्नेवकालेघटस्यतथाविधसत्वनिषेधेव्याहतिरतिव्यक्तेत्यर्थः॥तामेवाभिन
यतिभविष्यन्निति॥योहिकारकव्यापारदशायांभविष्यत्वादिरूपेणास्तिसतदानास्तीत्युक्तेतस्यतस्यामवस्थायांतेनाकारेणासत्वमर्थोभवतितथाचघटो
यदायेनाकारेणास्तिसतदातेनाकारेणनास्तीतिव्याहतिरित्यर्थः॥द्वितीयमुत्थापयति॥अथेति॥प्रागुत्पत्तेर्घटार्थंकुलालादिषुप्रवृत्तेषुअसोअसन्नि

तुँकृत्वा

ति॥असत्कृब्दार्थंस्वयमेवविवेचयति॥तत्रेत्यादिना॥तत्रसिद्धांतीब्रूते॥नविरुध्यतइति॥कथंपुनःसत्कार्यवादिनस्तदसत्वमविरुद्धमित्याह॥कस्मादि
ति॥प्रागुत्पत्तेस्तुअसद्व्यावृत्तिरूपंसत्वंघटस्यसिषाधयिषितंतच्चेदूवानपितस्यसदातनमर्थक्रियासामर्थ्यंनिषेधन्नत्रुमन्यतेनावयोर्विप्रतिपत्तिरित्य
भिप्रेत्याह॥त्वेनहीति॥ननुत्वन्मतेसर्वस्यसन्मात्रत्वाविशेषात्पिंडादेर्वर्त्तमानताघटस्यस्यात्तस्यचातीतताभविष्यताचपिंडकपालयोःस्यादितिसांकर्यमा
शंक्याह॥नहीति॥व्यवहारदशायांयथाप्रतिभासमनिर्वाच्यसंस्थानभेदाश्रयणादित्यर्थः॥प्रागवस्थायांघटस्यार्थक्रियासामर्थ्यलक्षणसत्वनिषेधेविरोधा
भावमुपपादितमुपसंहरति॥तस्मादिति॥उक्तमेवव्यतिरेकद्वाराविवृणोति॥यदीत्यादिना॥यदाकारकाणिव्याप्रियंतेतदाघटोऽसन्नितितस्यभविष्यत्वादि

कस्मात्त्वेनहिभविष्यद्रूपेणघटोवर्त्ततेनहिपिंडस्यवर्त्तमानताकपालस्यवाघटस्यभवति॥नचतयोर्भविष्यत्ताघटस्यतस्मात्कुलालादिव्या
पारवर्त्तमानतायांप्रागुत्पत्तेर्घटोऽसन्नितिनविरुध्यते॥यदिघटस्ययत्स्वंभविष्यत्ताकार्यरूपंतत्प्रतिषिध्येतततत्प्रतिषेधेविरोधःस्यान्नतु
तद्भवान्प्रतिषेधति॥नचसर्वेषांक्रियावतांकारकाणामेकैववर्त्तमानताभविष्यत्तावाअपिचचतुर्विधानामभावानांघटस्येतरेतराभावोघटा
दन्योदृष्टोयथाघटाभावःपटादिरेव॥

रूपंतत्कालेनिषिध्यतेचेदुक्तविधव्याघातःस्यात्॥नचतस्यतस्मिन्कालेभविष्यत्वादिरूपंसत्वंनिषिध्यतेअर्थ
क्रियासामर्थ्यस्यैवनिषेधात्तन्नविरोधावकाशोस्तीत्यर्थःनहिपिंडस्येत्यादिनासांकर्यसमाधिरुक्तस्तमिदानींसर्वतंत्रसिद्धांततयास्फुटयति॥नचेति॥भविष्य
त्वमतीतत्वंचेतिशेषः कार्यस्यप्रागुत्पत्तेर्नाशानाशाच्चोर्ध्वमसत्वाभावेहेत्वंतरमाह॥अपिचेति॥तदेवानुमानतयास्पष्टयितुंदृष्टांतंसाधयति॥चतुर्विधा
नामिति॥षष्ठीनिर्धारणेघटान्योन्याभावस्यपटादन्यत्वेतत्राप्यन्योन्याभावांतरांगीकारादनवस्थेत्याशंक्याहदृष्टइति॥नयोक्तिक्रमन्यत्वंकिंतुघटोन
भवतिपटइतिप्रातीतिकं॥तथाचघटाभावःपटादिरेवेतिपटादेस्ततोन्यत्वाद्घटान्योन्याभावस्यापिघटादन्यत्वसिद्धिरित्यर्थः॥ननुघटाभावःपटादि

रित्ययुक्तं विशेषणत्वेन घटस्यापि पटादावंतर्भावप्रसंगादिति चेन्नैवं दृष्टपदेन स्वारोकृतत्वाद्घटाभावस्य पटादित्वाभावेपि न स्वातंत्र्यमभावत्ववि
रोधान्नापि तदन्योन्याभावः पटादेर्धर्मः संसर्गाभावांतर्भावापातात्॥ न च स घटस्यैव धर्मः स्वरूपं वा घटो घटो न भवतीति प्रतीत्यभावादित्यभिप्रेत्या
ह॥ न घटस्वरूपमेवेति॥ यदि प्रतीतिमाश्रित्य घटान्योन्याभावः पटादिरिष्यते॥ तदा पटादेर्भावस्याभावत्वविधानाद्व्याघात इत्याशंक्याह॥ न चेति॥ स्व
रूपपररूपाभ्यां सर्वं सदसदात्मकमिति हि वृद्धाः॥ तथा च पटादेः स्वेनात्मना भावत्वं घटतादात्म्याभावात्तदभावत्वं चेति अव्याहतिरित्यर्थः॥ सिद्धे प्रतीत्य
नुसारिणि दृष्टांते विवक्षितमनुमानमाह॥ एवमिति॥ किंच तेषामभावानां घटाद्भिन्नत्वात्पटवदेव सत्वमेष्टव्यमित्यनुमानांतरमाह॥ तथेति॥ अनुमानफ

न घटस्वरूपमेव न च घटाभावः सन्पटोऽभावात्मकः किंतर्हि भावरूप एवैवं घटस्य प्राक्प्रध्वंसात्यंताभावानामपि घटादन्यत्वं स्याद्घटे
नव्यपदिश्यमानत्वाद्घटस्येतरेतराभाववत्तथैव भावात्मकताऽभावानामेवं च सति घटस्य प्रागभाव इति न घटस्वरूपमेव प्रागुत्पत्तेर्नास्त्य
थ घटस्य प्रागभाव इति घटस्य यत्स्वरूपं तदेवोच्येत घटस्येति व्यपदेशानुपपत्तिः॥ अथ कल्पयित्वा व्यपदिश्येत शिलापुत्रकस्य शरीरमिति
यद्वत्तथापि घटस्य प्रागभाव इति कल्पितस्यैवाभावस्य घटेन व्यपदेशो न घटस्वरूपस्यैवार्थार्थांतरं घटाद्घटस्याभाव इत्युक्तोत्तरमेतत् ॥

त्वं कथयति॥ एवं चेति॥ तेषां घटादन्यत्वे तस्यानाद्यंतत्वमद्वयत्वं सर्वात्मकत्वं च प्राप्नोति॥ सत्वे च तेषामभावाभावान्न भावाभावयोर्मिथः संगतिरित्यर्थः॥ न
नु प्रसिद्धोऽभावो भाववदशक्योऽपन्होतुमिति चेत्तर्हि घटस्य स्वरूपमर्थांतरं चेति विकल्प्याद्यमनूद्य दूषयति॥ अथेत्यादिना॥ प्रागभावादेर्घटत्वेपि संबंधं क
ल्पयित्वा घटस्येत्युक्तिरिति शंकते॥ अथेति॥ संबंधस्य कल्पितत्वे संबंधिनोप्यभावस्य तथात्वं स्यादिति दूषयति॥ तथापीति॥ यत्र संबंधं कल्पयित्वा व्यपदेश
स्तत्र न वास्तवो भेदो यथा राहुशिरसोस्तथात्रापि विकल्पिते संबंधे भेदस्य तथात्वाद्वास्तवत्वं संबंधिनोरन्यतरस्यस्यान्न चाभावस्तथा सापेक्षत्वात्ततो घटस्तथै

त्यर्थः॥कल्पांतरमनुवदति॥अथेति॥अनुमानफलंवदद्द्विर्घटस्यकारणात्मनाध्रुवत्ववचनेनसमाहितमेतदित्याह॥उक्तोत्तरमिति॥असत्कार्यवादेदोषांत
रमाह॥किंचेति॥स्वहेतुसंबंधःसत्तासंबंधोवाजन्मेतितत्ताकिंकाः नचप्रागुत्पत्तेरसतःसंबंधःतस्यसतोर्वृत्तेरित्यर्थः॥युतसिद्धयोरज्जुघटयोर्मिथः सं
योगेपृथक्सिद्धिरपेक्ष्यतेअयुतसिद्धानांपरस्परपरिहारेणप्रतीत्यनर्हाणांकार्यकारणादीनांमिथोयोगेपृथक्सिद्ध्यभावेनदोषमावहतीतिशंकते॥
अयुतेति॥परिहरतिनेति॥उक्तमेवस्फोरयति॥भावेति॥व्यवहारदृष्ट्याकार्यकारणयोःसाधितांतुच्छ्यावृत्तिमुपसंहरति॥तस्मादिति॥नैवेहेत्य

किंचान्यत्प्रागुत्पत्तेःशशविषाणवदभावभूतस्यघटस्यस्वकारणसत्तासंबंधानुपपत्तिर्हिनिष्ठत्वात्संबंधस्यअयुतसिद्धानामदोषइतिचे
न्नभावाभावयोरयुतसिद्धत्वानुपपत्तेर्भावभूतयोर्हियुतसिद्धताऽयुतसिद्धतावास्यात्नतुभावाभावयोरभावयोर्वातस्मात्सदेवकार्यंप्रा

दशनाययाऽशनायाहिमृत्यु

गुत्पत्तेरितिसिद्धं॥किंलक्षणेनमृत्युनावृतमित्यतआह॥अशनाययाअशितुमिच्छाऽशनायासैवमृत्योर्लक्षणंतयालक्षितेनमृत्युनाऽश
नाययाकथमशनायामृत्युरित्युच्यते॥ त्रसर्वस्यप्रागुत्पत्तेरसत्वशंकामृत्युनेत्यादिवाक्यव्याख्यानेननिरस्तासंप्रतिमृत्युशब्दस्यार्थांतरेरू
ढत्वान्नतेनावरणंजगतःसंभवतीत्याक्षिपति॥किंलक्षणेनेति॥अनभिव्यक्तनामरूपमध्यसाद्ययोग्यमपंचीकृतमहाभूतावस्थातिरिक्तंमायारूपं
साभासंमृत्युरित्युच्यते॥नहिसर्वंकार्यमवांतरकारणादुत्पत्तुमर्हतीत्यभिप्रेत्याह॥अतआहेति॥कथंयथोक्तोमृत्युरशनाययालक्ष्यतेनहिमूलकार
णस्याशनायादिमत्वमशनायापिपासेप्राणस्येतिस्थितेरितिशंकते॥कथमिति॥मूलकारणस्यैवसूत्रत्वंप्राप्तस्यसर्वसंहर्तृत्वान्मृत्युत्वेसतिवाक्यशेषो

पपत्तिरितिपरिहरति॥उच्यतइति॥प्रसिद्धमेवप्रकटयति॥योहीति॥तथापिप्रसिद्धंसत्यंहित्वाकथंहिरण्यगर्भोपादानमतआह॥बुध्यात्मनइति॥उ
क्तंहेतुंकलाफलितमाह॥इतिसइति॥ननुनतेनजगदाव्रियतेमूलकारणेनैवतदावरणात्तत्कथंवाक्योपक्रमोपपत्तिरतआह॥तेनेति॥ननुहिरण्य
गर्भप्रकृतेकथंस्त्रीलिङ्गेर्नपुंसकप्रयोगस्तत्राह॥तदिति॥मनसइतिवाक्यार्थमधुनाकथयति॥सप्रकृतइति॥भूतसृष्ट्यतिरेकेणभौतिकस्यमनसः

अशनायाहिमृत्युरितिशब्देनप्रसिद्धंहेतुमवद्योतयतियोह्यशितुमिच्छतिसोऽशनायानंतरमेवहंतिजंतूंस्तेनासावशनाययालक्ष्यतेमृ
त्युरितिअशनायाहीत्याह॥बुध्यात्मनोऽशनायाधर्मइतिसएषबुध्यवस्थोहिरण्यगर्भोमृत्युरित्युच्यते॥तेनमृत्युनेदंकार्यमावृतमासी
त् यथापिंडावस्थायांमृदाघटादयआवृताःस्युरितितद्वत्॥तन्मनोऽकुरुततदितिमनसोनिर्देशःसप्रकृतोमृत्युर्वक्ष्यमाणकार्यसिसृक्षया

स्तन्मनोकुरुतात्मन्वीस्यामितिसोर्चन्नचरत्तस्यार्चतआपोजायंता ॥

तत्कार्यालोचनक्षमंमनःशब्दवाच्यंसंकल्पादिलक्षणमंतःकरणमकुरुतकृतवान्केनाभिप्रायेणमनोऽकरोदित्युच्यते॥आत्मन्वीआ
त्मवानितिस्यांभवेयमहमनेनात्मनामनसामनस्वीस्यामित्यभिप्रायःसप्रजापतिरभिव्यक्तेनमनसासमनस्कःसन्नर्चन्नर्चयन्पूजयन्ना
त्मानमेवकृतार्थोस्मीत्यचरच्चरणमकरोत्तस्यप्रजापतेरर्चतःपूजयतःआपोरसात्मिकाःपूजांगभूताअजायंतउत्पन्नाः॥ सृष्टिरयुक्तेतिमत्वाह
कृति॥केनेति॥अपंचीकृतानांभूतानांहिरण्यगर्भदेहभूतानांप्रागेवलब्धात्मकत्वात्तेभ्योमनोव्यक्तिरविरुद्धेतिमन्वानोब्रूते॥उच्यतइति॥स्वात्मवस्त
स्यस्वाभाविकत्वान्नतदाशंकनीयमित्याशंक्यवाक्यार्थमाह॥अहमिति॥मनसोव्यक्तस्योपयोगमाह॥सप्रजापतिरिति॥ननुतैत्तिरीयकाणामाकाशा
सं

19

दिसृष्टिरुच्यतेतत्कथमिहापामादौसृष्टिवचनंतत्राह॥अत्रेति॥सप्तम्याहिरण्यगर्भकर्तृकसर्गोक्तिः॥त्रयाणांपंचीकृतानामितियावत्॥नन्वाकाशाद्यातै
त्तिरियकेसृष्टिरिहत्वबाद्येत्युदितानुदितहोमवद्विकल्पोभविष्यतिनेत्याह॥विकल्पेति॥पुरुषतंत्रत्वात्क्रियायाःयुक्तोविकल्पःसिद्धेर्थेतुपुरुषानधी
नेनासौसंभवत्यतःसृष्टिर्विवक्षिताचेदाकाशाद्येवसायुक्ताविद्याप्रधानत्वात्तुनादरःसृष्टावितिभावः॥अपामत्रसृष्टिवचनमनुपयुक्तंनखल्वप्स्ताभिरेवपू
जासिध्यतीत्याशंक्यआश्वमेधिकाग्नेरर्कनामसिध्यर्थंतदुपयोगमुपन्यस्यति॥अर्चतइति॥कोसौहेतुरित्यपेक्षायामर्चतिपदावयवस्यार्कशब्देनसंगति

अत्राकाशप्रभृतीनांत्रयाणांउत्पत्त्यनंतरमितिवक्तव्यंश्रुत्यंतरसामर्थ्यात्॥विकल्पासंभवाच्चसृष्टिक्रमस्यअर्चतेपूजांकुर्वतेवैमेमह्यंकंउ
दकमभूदित्येवममन्यतयस्मान्मृत्युस्तदेवतस्मादेवहेतोरर्कस्याग्नेरश्वमेधक्रतूपयोगिकस्यार्कत्वमर्कत्वेहेतुरित्यर्थः॥अग्नेरर्कना

चतेवैमेकमभूदितितदेवार्कस्यार्कत्वंकऽहवाअस्मैभवतियएवमेतदर्कस्यार्कत्वंवेद॥१॥

मनिर्वचनमेतदर्चनात्सुखहेतुपूजाकरणापूसंबंधाच्चाग्नेरेतद्गौणंनामार्कइतियएवंयथोक्तमर्कस्यार्कत्वंवेदजानातिकमुदकंसुखंवा
नामसामान्यात्॥हवेइत्यवधारणार्थौभवत्येवेतिअस्मैएवंविदेएवंविदर्थंभवति॥१॥आपोवाअर्कःकःपुनरसावर्कइत्युच्यते॥

रितिमन्वानःसन्नाह॥अर्कत्वमिति॥एवंमृत्योरर्कत्वेपिकथमग्नेरर्कत्वमित्याशंक्यमृत्युसंबंधादित्याह॥अग्नेरिति॥किमर्थमग्नेरर्कनामनिर्वचनमित्या
शंक्यापूर्वक्रियायोगस्यफलांतराभावादुपासनार्थमित्याह॥अग्नेरिति॥निर्वचनमेवस्फोरयति॥अर्चनादिति॥फलवत्वाच्चयथोक्तनामवतोग्नेरुपास्तिरत्र
विवक्षितेत्याह॥यएवमिति॥१॥अपामर्कत्वश्रवणान्नाग्नेरर्कत्वमितिशंकते॥कःपुनरिति॥प्रकरणमाश्रित्यतासामर्कत्वमौपचारिकमित्युत्तरमाह॥उच्य

तइति॥ तास्वंतर्हिरण्मयमंडं संबभूवेतिश्रुतिमनुरुंधन्नुपचारे हेत्वंतरमाह॥ अप्सुचेति॥ मुख्यमर्कत्वमपां वारयति॥ नपुनरिति॥ ननुश्रुतिलिंगवाक्यप्रक रणस्थानसमाख्यानां समवायेपारदौर्बल्यमर्थविप्रकर्षात् प्रकरणादापोवाअर्कइतिवाक्यंबलवदित्याशंक्यवाक्यसहकृतंप्रकरणमेवकेवलवाक्याद् लवदित्याशयवानाह॥ वक्ष्यतिचेति॥ भूतांतरसहितास्वप्सुकारणभूतासुपृथिवीद्वारापार्थिवोग्निः प्रतिष्ठितइत्युक्तमिदानींपृथिवीसर्गंताभ्योदर्शयति॥

आपोवायाअर्चनांगभूतास्ताएवार्कोग्नेरर्कस्यहेतुत्वादप्सुचाग्निः प्रतिष्ठितइतिनपुनःसाक्षादेवार्कस्ताःतासामप्रकरणादग्नेश्चप्रकरणं॥ वक्ष्यतिचायमग्निरर्कइतितत्तत्रयदपांशरइवशरोदध्नइवमंडभूतमासीत्तत्समहन्यतसंघातमापद्यततेजसाबाह्यांतःपच्यमानंलिंगाव्य

आपोवाअर्कस्तद्यदपाᳪंशरआसीत्तत्समहन्यतसापृथिव्यभव

त्ययेनवायोःपांशरःससमहन्यतेतिसापृथिव्यभवत्ससंघातोयेयंपृथिवीसाऽभवत्ताभ्योद्भ्योंऽडमभिनिर्वृत्तमित्यर्थः॥ तस्यांपृथिव्यामु त्पादितायांसमृत्युःप्रजापतिरश्राम्यत्क्रमयुक्तोबभूव॥ सर्वोहिलोकःकार्यंकृत्वाश्राम्यतिप्रजापतेश्चतन्महत्कार्यंयत्पृथिवीसर्गःकिंतस्य श्रांतस्येत्युच्यतेतस्यश्रांतस्यसंतप्तस्यखिन्नस्यतेजोरसस्तेजएवरसस्तेजोरसःरसःसारःनिरवर्त्ततप्रजापतिशरीरान्निष्क्रांतइत्यर्थः॥

तदित्यादिना॥ अप्सुभूतांतरसहितासूत्पन्नासुसतीष्वितिसप्तम्यर्थः शरइवशरइत्युक्तमेवव्याचष्टे॥ दध्नइवेति॥ संघातेसहकारिकारणमाह॥ तेजसेति ॥ यत्तद्विति पदेननपुंसकत्वेनश्रुतेकथंतयोःशरशब्देनकारणस्योक्तूत्वचाविनापुल्लिंगेनान्वयस्तत्राह॥ लिंगव्यत्ययेनेति॥ उक्तानुपपत्तिद्योतनार्थो वाशब्दःव्यत्ययेनान्वयमेवाभिनयति॥ योपामिति॥ वाक्यतात्पर्यमाह॥ ताभ्यइति॥ स्थूलप्रपंचात्मकविराजःसूक्ष्मप्रपंचात्मकसूत्राद्दुत्पत्तिंवक्तुंपातनि

लयति॥ सर्वोहीति॥ इदानीं विराडुत्पत्तिमुपदिशति॥ किंतस्येत्यादिना॥ ॥अग्निशब्दार्थं स्फुटयति॥ सोऽहस्येति तस्य प्रथमशरीरित्वे मानमाह॥ सवाइति॥ २॥
विराजोध्यानार्थमवच्छेदभेदमाह॥ सचेति॥ कोस्यत्रेधाभावस्य कर्त्तेति वीक्षायामाह॥ स्वयमेवेति॥ कथमेकस्य त्रिधात्वमन्यथा वा कथमेकत्वमित्याह॥ कथमि
ति॥ मृदो घटशरावाद्यनेकरूपत्ववद्विराजो बहुरूपत्वं साधयति॥ आहेत्यादिना॥ कथमग्निं तृतीयमित्यश्रुतं कल्प्यते तत्राह॥ सामर्थ्यस्येति॥ वाय्वादित्ययोरि

कोसौ निष्क्रांतोग्निः॥ सोऽहस्यांत र्विराड्प्रजापतिः प्रथमजः कार्यकरणसंघातवान्जातः॥ सवैशरीरी प्रथम इति स्मरणात्॥ २॥ सचजातः
प्रजापतिस्त्रेधा त्रिप्रकारमात्मानं स्वयमेव कार्यकरणसंघातं व्यकुरुत व्यभजदित्येतत्कथं त्रेधेत्याहादित्यं तृतीयमग्निवाय्वपेक्षया त्रयाणां पूर
णमकुरुतेत्यनुवर्त्तते तथाग्न्यादित्यापेक्षया वायुं तृतीयं तथा वाय्वादित्यापेक्षयाग्निं तृतीयमिति द्रष्टव्यं॥ सामर्थ्यस्य तुल्यत्वात्त्रयाणां संख्यापू

त्तस्याश्रान्तस्य तप्तस्य तेजोरसो निरवर्त्तताग्निः॥ २॥ सत्रेधात्मानं व्यकुरुतादित्यं तृतीयं वायुं तृतीयं ९ ॥

रणत्वे॥ सएषप्राणः सर्वभूतानामात्माप्यग्निवाय्वादित्यरूपेण विशेषतः स्वेनैवमृत्य्वात्मना त्रेधा विहितो विभक्तो न विराट्स्वरूपोपमर्द
नेन तस्यास्य प्रथमजस्याग्नेरश्वमेधोपयोगिकस्यार्कस्य विराजस्त्रित्यात्मकस्याश्वस्येव दर्शनमुच्यते ॥ वाग्नेरपि संख्यापूरणत्वशक्तेरविशिष्ट

त्वादग्निं तृतीयमकुरुत इत्युपसंख्यायते सत्रेधात्मानमिति चोपक्रमादित्यर्थः॥ ननु किमयं त्रेधाभावो विराट्स्वरूपोपमर्देन क्रियते॥ नहि तस्मिन्सत्येव
युक्तो विरोधादत आह॥ सएषइति॥ यथा तंत्वत्वस्यानुपमर्देन मूलकारणात्पटो जायते तथा सर्वेषां भूतानां प्राणतया साधारणोप्ययं स्वेनैव स्वतंत्रेणानुगते
नमृत्युरूपेण त्रेधा विभागस्य कर्त्ता न चैकस्य बहुरूपत्वविरोधो मायाविवदुपपत्तेरित्यर्थः तस्य प्राचीत्यादेस्तात्पर्यमाह॥ तस्येति॥ उक्तानि विशेषणानि प्रक

रणाविच्छेदार्थमनूद्यंते॥ अग्निविषयंदर्शनमिदानीमुच्यतेचेन्नैवेहेत्यादिपूर्वोक्तमनर्थकमित्याशंक्याह॥ सर्वाहीति॥ स्तुतिमेवाभिनयति॥ इत्थमिति॥ कर्माङ्गस्याग्नेः संस्कर्तव्यत्वाच्चित्याग्निशिरसिप्राचीदृष्टिः कर्तव्येत्याह॥ तस्येति॥ आरोपसादृश्यमाह॥ विशिष्टत्वेति॥ शिरसोनंतरभावित्वात्तद्बाहूरैशान्यादिदृष्टिमाह॥ असौचेति॥ कथमीर्मशब्दोबाहुवाचीत्याशंक्यतदुपपत्तिमाह॥ ईरयतेरिति॥ गत्यर्थप्रयोगादीर्मशब्दोबाहुमधिकरोतीत्यर्थः॥ त

सर्वाहिपूर्वोक्तोत्पत्तिरस्यस्तुत्यर्थमित्यवोचामइत्थमसौशुद्धजन्मेतितस्यप्राचीदिक्शिरोविशिष्टत्वसामान्याद्सौचासौचईशान्याग्नेय्याईर्मौ बाहूईरयतेर्गतिकर्मणः॥ अथास्याग्नेःप्रतीचीदिक्पुच्छंजघन्योभागःप्राङ्मुखस्यप्रत्यक्दिक्संबंधादसौचासौचवायव्यनैर्ऋत्यौसक्थ्यौ

सएषप्राणस्त्रेधाविहितस्तस्यप्राचीदिक्शिरोसौचासौचेर्मावथास्यप्रतीचीदिक्पुच्छमसौचासौचसक्थ्यौदक्षिणाचोदीचीचपार्श्वेद्यौःपृष्ठमंतरिक्षमुदरमियमुरःसएषोप्सुप्रतिष्ठितोयत्रक्वचैतितदेवप्रतितिष्ठत्येवंविद्वान्॥३॥ सक्थिनीपृष्ठकोणत्व

सामान्याद्दक्षिणाचोदीचीचपार्श्वेउभयदिक्संबंधसामान्यात्॥ द्यौःपृष्ठमंतरिक्षमुदरमितिपूर्ववदियमुरःअधोभागसामान्यात्सएषोग्निःप्रजापतिरूपोलोकाद्यात्मकोग्निरप्सुप्रतिष्ठितःएवमिमेलोकाअप्स्वंतरितिश्रुतेःयत्रक्वचयस्मिन्कस्मिंश्चिदेतिगच्छति॥ पुच्छादिषुप्रतीच्यादिदृष्टिरध्यस्यति॥ अथेत्यादिना॥ चित्यस्याग्नेःशिरसिबाह्वोःप्राच्यादिदृष्टिकरणानंतरमित्यर्थः सक्थिपदंपृष्ठनिष्ठोन्नतास्थिद्वयविषयं॥ उभयशब्देनप्राचीप्रतीचीद्वयंगृह्यते॥ उरसिपृथिवीदृष्टिमाहद्वयमिति॥ उपास्यमुक्तमग्निमनुवदतिसएषइति॥ तस्योपासनार्थमेवाप्सुप्रतिष्ठितत्वंगुणमुपदिशति॥ अग्निरिति॥ भूतांतरसहितानामपांसर्वलोककारणत्वादशेषलोकात्मकोग्निस्तत्रप्रतिष्ठितःसंभवतीत्यत्रश्रुत्यंतरंसंवादयति॥ एवमिति॥ यथैतेषुलोके

४१

लानांभूतानांसन्निवेशविशेषागृह्यंते॥ अप्सुभूतांतरसहितासुकारणभूतास्वितियावत्॥ फलश्रुतिंव्याचष्टे॥ यत्रेति॥ अस्योपास्तिफलमपपुनर्मृत्युंजयतीत्यादिनावक्ष्यते॥ किमिदमस्थानेफलसंकीर्तनमतआह॥ गुणेति॥ उ॥ उत्तरग्रंथमवतार्यतस्यपूर्वग्रंथेनसंबंधंवक्तुंवृत्तंकीर्तयति॥ सोकामयतइत्यादिना॥ अवांतरव्यापारमंतरेणकर्तृत्वानुपपत्तिरितिमत्वापृच्छति॥ सकिंव्यापारइति॥ कामनादिरूपमवांतरव्यापारमुत्तरवाक्यावष्टंभेनदर्शयति॥ उ

तदेवतत्रैवप्रतितिष्ठतिस्थितिंलभते॥ कोसावेवंयथोक्तमप्सुप्रतिष्ठितत्वमग्नेर्विद्वान्विजानन्गुणफलमेतत्॥ उ॥ सोकामयतयोसौमृत्युःसोऽब्रादिक्रमेणात्मनात्मानमंडस्यांतःकार्यकरणसंघातवंतंविराजमग्निमसृजतत्रेधाचात्मानमकुरुतेत्युक्तं॥ सकिंव्यापारःसन्नसृजतेत्युच्यतेसमृत्युरकामयतकामितवान्किंद्वितीयोमेममात्माशरीरंयेनाहंशरीरीस्यांसजायेतोत्पद्येतेत्येवमेतदकामयतसएवंकाम

सोकामयतद्वितीयोमआत्माजायेतेतिसमनसावाचंमिथुनꣳसमभवदशनायामृत्युस्तद्यद्रेतआसीत्ससंवत्सरोभव ॥

यित्वामनसापूर्वोत्पन्नेनवाचंत्रयीलक्षणांमिथुनंद्वंद्वभावंसमभवत्संभवनंकृतवान्मनसात्रयीमालोचितवांस्त्रयीविहितंसृष्टिक्रमंमनसान्वालोचयदित्यर्थः॥ कोसावशनायालक्षितोमृत्युरशनायालक्षणोमृत्युरित्युक्तंतमेवपरामृशत्यन्यत्रप्रसंगोमाभूदिति ॥ ॥

च्यतइति॥ कामनाकार्यंमनःसंयोगमुपन्यस्यति॥ सएवमिति॥ कोयंमनसासहवाचोद्वंद्वभावस्तत्राह॥ मनसेति॥ वाक्यार्थमेवस्फुटयति॥ त्रयीविहितमिति॥ वेदोक्तसृष्टिक्रमालोचनंप्रजापतेर्नेदंप्रथमंसंसारस्यानादित्वादितिवक्तुमनुशब्दः सोकामयतेत्यादौसर्वनाम्नोऽव्यवहितविराड्विषयत्वमाशंक्यपरिहरति॥ कोसावित्यादिना॥ कथंतयामृत्युर्लक्ष्यतेतत्राह॥ अशनायेति॥ किमितितर्हिपुनरुक्तिरित्याशंक्याह॥ तमेवेति अन्यत्रानंतरप्रकृतेवि

राडात्मनीतियावत्॥अवांतरव्यापारांतरमाह॥तदित्यादिनाप्रसिद्धंरेतोव्यावर्तयति॥ज्ञानेति॥ननुप्रजापतेर्नज्ञानंकर्मवासंभवतितस्यानधिकारादि
त्याशंक्यासीत्पदस्यार्थमाह॥जन्मांतरेति॥वाक्यस्यापेक्षिकंपूरयित्वावाक्यांतरमादायव्याकरोति॥तद्भावेत्यादिना॥ननुसंवत्सरस्यप्रागेवसिद्धत्वान्नप्र
जापतेस्तन्निर्माणेनतदात्मत्वमित्याशंक्योत्तरवाक्यमुपादत्ते॥नहपुरेति॥तद्ध्याचष्टेपूर्वमिति॥प्रजापतेरादित्यात्मकत्वात्तदधीनत्वाच्चसंवत्सरव्यवहा

तत्तत्रमिथुनेयद्रेतआसीत्प्रथमशरीरिणःप्रजापतेरुत्पत्तौकारणंरेतोबीजंज्ञानकर्मरूपंत्रय्यालोचनायांयद्दृष्टवानासीज्जन्मांतरकृतं
तद्भावभावितोऽपःसृष्ट्वातेनरेतसाबीजेनाप्स्वनुप्रविश्यांडरूपेणगर्भीभूतःससंवत्सरोभवत्संवत्सरःसंवत्सरकालनिर्मातासंवत्सरःप्र

न्नहपुरातत्संवत्सरआसतमेतावंतंकालमबिभर्यावान्संवत्सरस्तमेतावतःकालस्यपरस्तादसृजततंजातमभिव्यादद्दा
त्सभाणकरोत्सैववागभवत्॥४॥ जापतिरभवत्॥नहपुरापूर्वंततस्तस्मात्संवत्सरपरिमाणंकालनिर्मातुःप्रजापतेःसंवत्सरःका
लोनामनासहनबभूवह॥तंसंवत्सरकालनिर्मातारंअंतर्गर्भंप्रजापतिं॥यावानिहप्रसिद्धःकालःएतावंतंएतावत्संवत्सरपरिमाणंका
लमबिभर्भृतवान्यावान्संवत्सरइहप्रसिद्धस्ततःपरस्तात्किंकृतवांस्तमेतावातःकालस्यसंवत्सरमात्रस्यपरस्तादूर्ध्वमसृजतसृष्ट
वानंडमभिनदित्यर्थः॥ रस्यादित्यात्पूर्वंतावत्व्यवहारोनासीदेवेत्यर्थः कियंतंकालमंडरूपेणगर्भोबभूवेत्यपेक्षायामाह॥तमित्यादिना
॥अवांतरव्यापारमनेकविधमभिधायविराडुत्पत्तिमाकांक्षाद्वारोपसंहरति॥यावानित्यादिना॥केयंपूर्वमेवगर्भतयाविद्यमानस्यविराजःसृष्टिस्तत्रा
ह॥अंडमिति॥विराडुत्पत्तिमुक्त्वाशब्दमात्रस्यसृष्टिंविवक्षुर्भूमिकांकरोति॥तमेवमिति॥अयोग्येपिपुत्रभक्षणेप्रवर्त्तकंदर्शयति॥अशनायावत्त्वा

दिति॥ विराजो भयकारणमाह॥ स्वाभाविकेति॥ इंद्रियं देवतां च व्यावर्त्तयति॥ वाक् शब्द इति॥ ४॥ इदानीमृगादिसृष्टिमुपदेष्टुं पातनिकां करोति॥ स इत्यादिना॥ ईक्षणे प्रतिबंधकसद्भावं दर्शयति॥ अशनायावानिति॥ अभिपूर्वो मन्यतिरिति रुद्रोऽस्य पशूनभिमन्येत नास्य रुद्रः पशूनभिमन्यत इत्यादि शास्त्रमत्र प्रमाणयितव्यं॥ अन्नस्य कनीयस्त्वे का हानिरित्याशंक्याह बह्विति॥ तथापि विराजो भक्षणे कास्तिस्तत्राह॥ तद्भक्षणे हीति॥ तस्यान्नाल्प

तमेवं कुमारं जातमग्निं प्रथमशरीरिणमशनायावत्त्वान्मृत्युरभिव्याददान्मुखविदारणं कृतवान् तं स च कुमारो भीतः स्वाभाविक्याविद्यायुक्तो भाणित्येवं शब्दमकरोत्सैव वागभवद्वाक् शब्दोऽभवत्॥ ४॥ स ऐक्षत स एवं भीतं कृतरवं कुमारं दृष्ट्वा मृत्युरैक्षत ईक्षितवान्॥ अशनायावानपि यदि कदाचिद्धेमं कुमारमभिमंस्येऽभिपूर्वो मन्यतिर्हिंसार्थः हिंसिष्य इत्यर्थः कनीयोऽन्नं करिष्ये कनीयोऽल्पमन्नं करि

स ऐक्षत यदि वा इममभिमꣳस्ये कनीयोऽन्नं करिष्य इति स तया वाचा तेनात्मनेदꣳ सर्वमसृजत यदिदं किंच॥

ष्य इत्येवमीक्षित्वा तद्भक्षणादुपरराम बहु ह्यन्नं कर्त्तव्यं दीर्घकालभक्षणाय न कनीयस्तद्भक्षणे हि कनीयोऽन्नं स्याद्बीजभक्षणइव सस्याभावः स एवं प्रयोजनमन्नबाहुल्यमालोच्य तयैव वाचा पूर्वोक्तया तेनैवाचात्मना मनसा मिथुनीभावमालोचनमुपगम्योपगम्येदं सर्वं स्थावरं जंगमं चासृजत यदिदं किंच यत्किंचेदं॥ कत्वात्तदुत्पादकत्वाच्चेति शेषः॥ कारणनिवृत्तौ कार्यनिवृत्तिरित्यत्र दृष्टांतमाह॥ बीजेति॥ यथोक्तेक्षणानंतरं मिथुनभावद्वारा त्रयीसृष्टिं प्रस्तौति॥ स एवमिति॥ ननु विराजः सृष्ट्या स्थावरजंगमात्मनो जगतः सृष्टेरुक्तत्वात्किं पुनरुक्त्येत्याशयेन पृष्ट्वा परिहरति॥ किं तदिति॥ गायत्र्यादीनीत्यादिपदेनोष्णिगनुष्टुब्बृहतीपंक्तित्रिष्टुप्जगतीछंदांस्युक्तानि केवलानां छंदसां सर्गासं

भवात्तदारूढानामृग्यजुःसामात्मनां मंत्राणां सृष्टिरत्र विवक्षितेत्याह॥ स्तोत्रेति॥ उद्गात्रादिना गीयमानमृग्जातं स्तोत्रं तदेव होत्रादिना शस्यमानं शस्त्रं॥
स्तुतमनुशंसतीति हि श्रुतिः यन्न गीयते न च शस्यते ऽध्वर्युप्रभृतिभिश्च प्रयुज्यते तदप्यन्यग्राह्यमित्यभिप्रेत्यादिपदं॥ अतएव त्रिविधानित्युक्तं॥ अजादयो
ग्राम्याः पशवो गवयादयस्त्वारण्या इति भेदः कर्मसाधनभूतानसृजतेति संबंधः स मनसा वाचं मिथुनं समभवदित्युक्तत्वात्प्रागेव त्रय्याः सिद्धत्वान्न तस्याः सृ
ष्टिः श्लिष्टेति शंक्यते॥ नन्विति॥ व्यक्ताव्यक्तविभागेन परिहरति॥ नेत्यादिना॥ इति मिथुनीभावसर्गयोरुपपत्तिरिति शेषः अतः सर्गश्चान्वसर्गश्चेति द्वयमुक्तं॥

किं तदृचो यजूंषि सामानि छंदांसि च सप्त गायत्र्यादीनि स्तोत्रशस्त्रादिकर्मांगभूतांस्त्रिविधान्मंत्रान् गायत्र्यादिछंदोविशिष्टान्यज्ञांश्च तत्साध्या
न्प्रजाः तत्कर्त्रीः पशूंश्च ग्राम्यानारण्यान्कर्मसाधनभूतान्॥ ननु त्रय्या मिथुनीभूतयाऽसृजतेत्युक्तं ऋगादीनिह कथमसृजतेति॥ नैष दोषो

ऋचो यजूꣳषि सामानि छंदाꣳसि यज्ञान्प्रजां पशून्

मनसस्त्वव्यक्तोऽयं मिथुनीभावस्त्रय्या बाह्यास्तु ऋगादीनां विद्यमानानामेव कर्मसु विनियोगभावेन व्यक्तीभावः सर्ग इति॥ स प्रजापतिरेवम
त्रद्धिं बुध्वा यद्यदेव क्रियां क्रियासाधनीभूतं फलं वा किंचिदसृजत तत्तदत्तुं भक्षयितुमध्रियत धृतवान्मनः सर्वं कृत्स्नं वै यस्मादत्तीति त
स्मादादितेरदितिनाम्नो मृत्योरदितित्वं प्रसिद्धं॥ इदानीमुपास्यस्य प्रजापतेर्गुणांतरं निर्दिशति॥ स प्रजापतिरित्यादिना॥ कथं मृत्योरदितिना
मत्वं सिद्धवदुच्यते तत्राह॥ तथा चेति॥ अदितेः सर्वात्मत्ववदता मंत्रेण सर्वकारणस्य मृत्योरदितिनामत्वं सूचितमिति भावः मृत्योरदितित्वविज्ञानवतो वांत
रफलमाह॥ सर्वस्येति॥ सर्वात्मनेति कुतो विशेष्यते तत्राह॥ अन्यथेति॥ सर्वरूपेणावस्थानाभावे सर्वान्नभक्षणस्याशक्यत्वादित्यर्थः॥ विरोधमेव साधय

ति॥ नहीतिफलस्योपासनाधीनत्वात्प्रजापतिमदितिनामानमात्मत्वेनध्यायन्ध्येयात्माभूत्वातत्तद्रूपत्वमापन्नःसर्वस्यान्नस्यात्तास्यादित्यर्थः॥ अन्नरूपत्वमेवा स्यसदानकदाचिन्नदस्यात्भवतीतिवक्तुमनंतरवाक्यमादत्ते॥ सर्वमिति॥ अतएवेत्युक्तंव्यक्तीकरोति॥ सर्वात्मनोहीति॥ ५॥ उपास्तिविधौसफलेसति समाप्तिरेवब्राह्मणस्योचिताकिमुत्तरग्रंथेनेत्याशंक्यप्रतीकमादायतात्पर्यमाह॥ सोकामयतेत्यादिना॥ तदेवाश्वमेधस्याश्वमेधत्वमित्येतदंतंवाक्यमिद

तथाचमंत्रोऽदितिर्द्यौरित्यादिःसर्वस्यैतस्यजगतोन्नभूतस्यात्तासर्वात्मनैवभवत्यन्यथाविरोधान्नहिकश्चित्सर्वस्यैकोत्तादृश्यतेतस्मात्स र्वात्माभवतीत्यर्थः सर्वमस्यान्नंभवतीत्यतएवसर्वात्मनोह्यत्तुःसर्वमन्नंभवतीत्युपपद्यतेयएवमेतद्यथोक्तमदितेर्मृत्योःप्रजापतेः

सयद्यदेवासृजततत्तदत्तुमध्रियतसर्वंवाअत्तीतितददितेरदितित्वꣳसर्वस्यै
तस्यात्ताभवतिसर्वमस्यान्नंभवतियएवमेतददितेरदितित्वंवेद॥ ५ ॥

सर्वस्यादनाददितित्वंवेदतस्यैतत्फलं॥ ५॥ सोकामयतेत्यश्वाश्वमेधयोर्निर्वचनार्थमिदमाह॥ भूयसामहतायज्ञेनभूयःपुनरपिय जेयेति॥ जन्मांतरकरणापेक्षयाभूयःशब्दःसप्रजापतिर्जन्मांतरेऽश्वमेधेनायजत ॥

मानिर्दिश्यते॥ भूयोदक्षिणाकत्वादश्वमेधस्यभूयस्त्व मितिशब्दःकामयतेत्यनेनसंबध्यते॥ कथंपुनस्तेनयक्ष्यमाणस्यप्रजापतेर्भूयःशब्दोक्तिर्नहिसपूर्वमश्वमेधमन्वतिष्ठत्कर्मानधिकारित्वात्तत्राह॥ जन्मांतरेति॥ तदेवस्पष्टयति॥ सप्रजापतिरिति॥ अथातीतेजन्मनियजमानोऽश्वमेधस्यकर्त्ताभूदधुनाहिरण्यगर्भोभूयोयजेयेत्याह॥ तथाचकर्तृ भेदात्भूयःशब्दासामंजस्यमतआह॥ सतद्भावेति॥ सप्रजापतिरश्वमेधवासनाविशिष्टोज्ञानकर्मफलत्वेनकल्पादौनिर्वृतोभूयोयजेयेत्याह ॥

कर्तृभोक्त्रोरैक्येन साधकफलावस्थयोर्यजमानसत्त्रयोर्भेदाभावादित्यर्थः ॥ प्रजापतिरीश्वरोन तस्य दुःखात्मकत्वनुष्ठानेच्छायुक्तेत्याशंक्य प्रकृतिवश्या दुपपत्तिमभिप्रेत्याह ॥ सोश्वमेधेति ॥ कथमेतावताविवक्षितास्तुतिः सिद्धेत्याशंक्याह ॥ एवमिति ॥ श्रमकार्यमाह ॥ सतपइति ॥ चक्षुरादीनां यशस्त्वे हेतुमाह ॥ यशोहेतुत्वादिति ॥ तदेवसाधयति ॥ तेषुहीति ॥ प्राणाएवेति तथाशब्दार्थः सत्सु हि तेषुशरीरे बलं भवतीति पूर्ववदेवहेतुरुन्नेयः ॥ उक्त

सतद्भावभावितएवकल्पादौव्यवर्त्तत सोश्वमेधक्रियाकारकफलात्मत्वेन निर्वृत्तः सन्नकामयत भूयसा यज्ञेन भूयोयजेयेत्येवंमहत्कार्यं कामयित्वालोकवदश्राम्यत्सतपोऽतप्यत तस्यश्रांतस्यतप्तस्येति पूर्ववद्यशोवीर्यमुदक्रामदिति ॥ स्वयमेवपदार्थमाह प्राणाश्चक्षुरादयःवैयशोहेतुत्वात्तेषुहि सत्सुख्यातिर्भवति तथावीर्यं बलं अस्मिन् शरीरे न ह्युत्क्रांतप्राणोयशस्वीबलवान्वाभव

सोकामयत भूयसायज्ञेन भूयोयजेयेति सोश्राम्यत्सतपोतप्यत तस्यश्रांतस्यतप्तस्ययशोवीर्यमुदक्राम त्प्राणावैयशोवीर्यं तत्प्राणेषूत्क्रांतेषुशरीरꣳश्वयितुमध्रियत तस्यशरीरएवमनआसीत् ॥ ६ ॥

ति ॥ तस्मात्प्राणाएवयशोवीर्यं चास्मिञ्छरीरे तदेवं प्राणलक्षणंयशोवीर्यमुदक्रामदुत्क्रांतवत्तदेवं यशोवीर्यभूतेषुप्राणेषूत्क्रांतेषुशरीरान्निष्क्रांतेषुनिर्गतेषुतच्छरीरं प्रजापतेःश्वयितुमुच्छूनभावंगंतुमध्रियतामेध्यंचाभवत्तस्यप्रजापतेः शरीरान्निर्गतस्यापितस्मिन्नेवशरीरेमनआसीद्यथाकस्यचित्प्रियेविषयेदूरंगतस्यापिमनोभवति तद्वत् ॥ ६ ॥ सतस्मिन्नेवशरीरे मर्थमुक्तिरेकद्वारास्फोरयति ॥ नहीतिप्राणानांयशस्त्वंवीर्यत्वंचोपसंहृत्यवाक्यार्थंनिगमयति ॥ तदेवमिति ॥ तत्प्राणेष्वित्यादिव्याचष्टे ॥ तदेवमित्यादिना ॥ शरीरान्निर्गतस्यप्रजापतेर्भक्तत्वमाशं

नपुनस्तस्मिन्प्रवेशोयुक्तः॥ परित्यक्तपरिग्रहायोगादितिशंकते॥ सतस्मिन्निति॥ अज्ञानवशात्परित्यक्तपरिग्रहोपिसंभवतीत्याह॥ उच्छूनइति॥ मेतं
देहस्यकामनायुक्तेतिशंकते॥ कथमिति॥ सामर्थ्यातिशयाद्शरीरस्यापिप्रजापतेस्तदुपपत्तिरितिमन्वानोब्रूते॥ मेध्यमिति॥ कामनाफलमाह॥ इ
तिप्रविवेशेति॥ तथापिकथंप्रकृतनिरुक्तिसिद्धिरित्याशंक्याह॥ यस्मादिति॥ यद्ब्बोयस्मादितिव्याख्यातः देहस्याश्वत्वेपिकथंप्रजापतेस्तथात्वमित्या
शंक्यतत्तादात्म्यादित्याह॥ ततइति॥ अश्वस्यप्रजापतित्वेनस्तुतत्वात्तस्योपास्यत्वंफलतीतिभावः॥ तथापिकथमश्वमेधनाम्नोनिर्वचनमित्याशंक्याह॥ य

गतमनाःसन्किमकरोदित्युच्यतेसोकामयतकथंमेध्यंमेधार्हंयज्ञियंमेममेदंशरीरंस्यात्किंचात्मन्वीआत्मवांस्तेनशरीरेणशरीरवान्स्या
मितिप्रविवेशयस्मात्तच्छरीरंतद्वियोगाद्गतयशोवीर्यंसदश्वदश्वयत्ततस्तस्मादश्वःसमभवत्॥ ततोश्वनामाप्रजापतिरेवसाक्षादन्नस्तूयतेय

सोकामयतमेध्यंमइदंस्यादात्मन्व्यनेनस्यामितिततोश्वःसमभवद्यदश्वतन्मेध्यमभूदितितदेवाश्वमेधस्याश्वमेधत्व

स्माच्चपुनस्तत्प्रवेशाद्गतयशोवीर्यत्वाद्मेध्यंसन्मेध्यमभूत्तदेवतस्मादेवाश्वमेधस्याश्वमेधनाम्नःक्रतोरश्वमेधत्वमश्वमेधनामलाभः॥ क्रिया
कारकफलात्मकोहिक्रतुःसचप्रजापतिरेवेतिस्तूयते॥ क्रतुनिर्वर्त्तकस्याश्वस्यप्रजापतित्वमुक्तमुषावाअश्वस्येत्येवमादिना ॥

स्माच्चेति॥ क्रतोस्तदात्मकस्यप्रजापतेरितियावत्॥ देहोपिप्राणवियोगादश्वयत्पुनस्तत्प्रवेशाच्चमेधार्होभूदतःसोश्वमेधस्तत्तादात्म्यात्प्रजापतिरपित
थेत्यर्थः॥ ननुप्रजापतित्वेनाश्वमेधस्यस्तुतिर्नोपयोगिनीअग्नेरुपास्यत्वेनप्रस्तुतत्वात्क्रतूपासनाभावादतआह॥ क्रियेति॥ ननुक्रत्वंगस्याश्वस्याश्वमे
धक्रतात्मनश्चाग्नेरुक्तरीत्यास्तुतत्वात्सदुपास्तेश्चप्रागेवोक्तत्वादेषहवाअश्वमेधमित्यादिवाक्यंनोपयुज्यतेतत्राह॥ क्रतुनिर्वर्तकस्येति॥ उक्तंचचित्यस्या

ग्नेस्तस्यप्राचीदिगित्यादिनाप्रजापतित्वमितिशेषः अश्वोपासनमग्न्युपासनंचैकमेवेतिवक्तुमुत्तरंवाक्यमित्याह॥तस्यैवेति॥यएवमेतददितेरदितित्वंवे
देत्यादौप्रागेवविहितमुपासनंकिंपुनरारंभेणेत्याशंक्याह॥पूर्वत्रेति॥यद्यपिविधिरदितित्वंवेदेतिश्रुतस्तथापिसःगुणोपास्तिविधिर्नप्रधानविधिरत्रतुप्र
धानविधिरुपास्तिप्रकरणत्वादपेक्ष्यतेःतोश्वमेधंवेदेतिप्रधानविधिरितिभावःतात्पर्यमुक्त्वावाक्यमादायाक्षराणिव्याकरोति॥एषइति॥यथोक्तमित्युभ

तस्यैवाश्वस्यमेध्यस्यप्रजापतिस्वरूपस्याग्नेश्चयथोक्तस्यक्रतुफलात्मकरूपतयासमस्योपासनंविधातव्यमित्यारभ्यते॥पूर्वत्रक्रिया
पदस्यविधायकस्याश्रुतत्वात्क्रियापदापेक्षितत्वाच्चप्रकरणस्यायमर्थोवगम्यतेएषहवैअश्वमेधंक्रतुंवेदयःकश्चिदेनमश्वंअग्निरूपं

मेषहवाअश्वमेधंवेदयएनमेवंवेद

अर्कंचयथोक्तमेवंवक्ष्यमाणेनसमासेनप्रदर्श्यमानेनविशेषणेनविशिष्टंवेदसएषोश्वमेधंवेदनान्यःतस्मादेवंवेदितव्यइत्यर्थः॥
कथं॥तत्रपशुविषयमेवतावद्दर्शनमाह॥तत्रप्रजापतिर्भूयसायज्ञेनभूयोयजेयेतिकामयित्वात्मानमेवपशुंमेध्यंकल्पयित्वातंप
शुमनवरुध्यैवोत्सृष्टंपशुमवरोधमकृत्वैवमुक्तप्रग्रहममन्यताचिंतयत्॥ यत्रप्रजापतित्वमनुकृष्यते तमनवरुध्येत्यादि
भिः॥प्रदर्श्यमानविशेषणं॥विधिरत्रस्पष्टोनभवतीत्याशंक्याह॥तस्मादिति॥अश्वमेधोविशेष्यत्वेनसंबध्यते॥एवंशब्दात्प्रसिद्धार्थत्वंभा
तिकुतोविधिरित्याह॥कथमिति॥एषहवाअश्वमेधंवेदेत्यादौविवक्षितस्यविधेर्भूमिकांकरोति॥तत्रेत्यादिना॥उपास्तिविधिप्रस्तावःस
प्तम्यर्थः॥कथंनुपशुविषयंदर्शनंतद्दर्शयति॥तत्रेति॥एवमनंतरवाक्येप्रवृत्तेसतीतियावत्॥अथविवक्षितविधिमभिदधाति॥यस्माच्चेति॥

१८

प्रजापतिरित्थंफलावस्थायाममन्यतेत्यत्रकिंप्रमाणमित्याशंक्यसंप्रतितत्कार्यभूतासुप्रजासुतथाविधचेष्टादृष्टिरित्याह॥अतएवेति॥प्रोक्षितंमंत्रसंस्कृ
तंपशुमितियावत्॥फलावस्थप्रजापतिवदित्येवंशब्दार्थः॥उपासनविधिरुक्तः संप्रतिप्रतीकमादायतात्पर्यमाह॥एषइतिद्विविधोहिक्रतुःकल्पि

तंसंवत्सरस्यपूर्णस्यपरस्तादूर्ध्वमात्मनेआत्मार्थमालभतप्रजापतिदेवताकत्वेनेत्येतदालभतालंभंकृतवानपशूनन्यानुग्राम्यानारण्यांश्च
यथादेवतंप्रतिप्रत्यैहत्प्रतिगमितवान्यस्माच्चैवंप्रजापतिरमन्यततस्मादेवमन्योप्युक्तेनविधिनात्मानंपशुमश्वंमेध्यंकृत्वयित्वासर्वदेवत्यो
हंप्रोक्ष्यमाणःआलभ्यमानस्त्वहंमद्देवत्यएवस्यामन्येइतरेपशवोग्राम्यारण्यायथादेवतमन्याभ्योदेवताभ्यःआलभ्यंतेमदवयवभूताभ्यए

तमनवरुध्यैवामन्यततत्संवत्सरस्यपरस्तादात्मनआलभतपशून्देवताभ्यःप्रत्यौहत्तस्मात्सर्वदेवत्यंप्रोक्षितंप्राजा
पत्यमालभंत॥एषवाअश्वमेधोयएषतपतितस्यसंवत्सरआत्मा वेतिविद्यात्॥अतएवेदानींसर्वदेवत्यंप्रोक्षितंप्राजापत्य
मालंभतेयाज्ञिकाएवंएषवाअश्वमेधोयएषतपतियस्त्वेवंपशुसाधनकःक्रतुःसएषसाक्षात्फलभूतोनिर्दिश्यतेएषवेअश्वमेधः॥को
सौयएषसवितातपतिजगदवभासयतितेजसातस्यास्यक्रतुफलात्मनःसंवत्सरःकालविशेषःआत्माशरीरंतन्निर्वर्त्यत्वात्संवत्सर
स्य॥ तपशुहेतुकोबाह्यतद्धेतुकश्चसचद्विप्रकारोपिफलरूपेणस्थितःसवितेवेतिउपास्तिफलंवक्तुंएतद्वाक्यमित्यर्थः॥विशेषोक्तिंविनाना
स्तिबुभुत्सोपशांतिरित्याह॥कोसाविति॥क्रतुफलात्मकः॥सवितामंडलंदेवतावेतिसंदेहेद्वितीयंगृहीत्वातस्येत्यादिव्याचष्टे॥तस्येति॥आदित्योदया
स्तमयाभ्यामहोरात्रिद्वारासंवत्सरव्यवस्थानात्तन्निर्मातुस्तस्ययुक्तंतत्तादात्म्यमित्यर्थः॥क्रतोरादित्यत्वमुक्त्वातदंगस्याग्नेस्तद्वत्त्वंवक्तुमयमग्निरर्कइ

तिवाक्यंतस्यार्थमाह॥तस्यैवेति॥ननुपूर्वोक्तस्यैवाग्नेरादित्यत्वंकुतोनियम्यते ऽन्यश्चित्योग्निरन्यश्चाग्निरादित्यः किंनस्यादित्याशंक्याह॥तस्यचे
ति॥तथापिकथंतस्यैवादित्यत्वंतत्राह॥तथाचेति॥तस्यप्राचीत्यादिनालोकात्मत्वंचित्याग्नेरुक्तंतदिहाप्युच्यतेतस्मात्तस्यैवात्रादित्यत्वमिष्टमित्य
र्थः॥अग्न्यादित्यभेदस्यलोकवेदसिद्धत्वान्नतयोरैक्येनक्रतुनातादात्म्यमित्याशंक्याह॥ताविति॥यथाविशेषितत्वमादित्यरूपत्वंकुतस्तस्यचा
र्कस्यक्रतुरूपत्वंसाधनत्वेनभेदादित्याशंक्योपचारादित्याह॥क्रियात्मकइति॥तथापिकथमादित्यस्यक्रतुतादात्म्योक्तिरित्याशंक्याह॥क्रतुसाध्य

तस्यैवक्रत्वात्मनोयंपार्थिवोग्निरर्कः साधनभूतः तस्यचार्कस्यक्रतोश्चित्यस्येमेलोकास्त्रयोपिआत्मानः शरीरावयवाः तथाचव्याख्यातं
तस्यप्राचीदिगित्यादिना॥तावग्न्यादित्यावेतौयथाविशेषितावर्काश्वमेधौक्रतुफलेअर्कोयः पार्थिवोग्निः सम्पाद्यःक्रतुरूपः क्रियात्म

ऽयमग्निरर्कस्तस्येमेलोकाआत्मानस्तावेतावर्काश्वमेधौसोपुनरेकैवदेवताभवति

कः क्रतोरग्निसाध्यत्वात्तद्रूपेणैवनिर्दिष्टः क्रतुसाध्यत्वाच्चफलस्यक्रतुरूपेणैवनिर्दिष्टआदित्योश्वमेधइति॥तौसाध्यसाधनौक्रतुफ
लभूतावग्न्यादित्यौसाउपुनर्भूयएकैवदेवताभवति॥कासामृत्युरेवपूर्वमप्येकैवासीत्क्रियासाधनफलभेदायविभक्ता ॥

त्वादिति॥नन्वादित्यस्यक्रतुफलत्वेनक्रतुत्वेतद्धेतोरग्नेस्तादात्म्यायोगाद्युक्तमग्नेरादित्यत्वमित्याशंक्याह॥ताविति॥क्रतुफलत्वात्तदात्मासविता
तद्धेतुश्चित्योग्निस्तावुक्तविभागावित्यादितोपासनादित्यापारोसंतावेकैवप्राणाख्यादेवतेतितयोरैक्योक्तिरित्यर्थः॥एकैवेत्युक्तेप्रकृतयोरग्न्यादित्य
योरन्यतरपरिशेषंशंकते॥कासेति॥कथंद्वयोरेकत्वमेकत्वेवाकथंद्वित्वंतत्राह॥पूर्वमपीति उक्तेर्थेवाक्योपक्रममनुकूलयति॥तथाचेति॥सापुनरि

स्वग्र पुनरित्यादेरर्थंनिगमयति॥सापुनरिति॥ननुफलकथनार्थमुपक्रम्यप्राणात्मनाग्न्यादित्ययोरेकत्वंवदताप्रक्रांतंविस्मृतमितिनेत्याह॥यःपुनरि
ति॥एकत्वमभिन्नत्वं॥१॥तृतीयेद्वितीयंब्राह्मणं॥२॥१॥ब्राह्मणांतरमवतारयंस्तस्यपूर्वेणसंबंधाप्रतीतेर्नैसोस्तीत्याक्षिपतिद्वयाहेत्यस्येति॥विवक्षितं
संबंधंवक्तुंवृत्तंकीर्तयति॥कर्मणामितिसाकाष्ठासापरागतिरितिश्रुतेरुक्तापरागतिर्मुक्तिरित्याशंक्याह॥मृत्य्वात्मभावइति॥अश्वमेधोपासनस्यस

तथाचोक्तंसत्रेधात्मानंव्यकुरुतेतिसापुनरपिक्रियानिर्वृत्त्युत्तरकालमेकैवदेवताभवतिमृत्युरेवफलरूपोयः॥पुनरेवमेनमश्वमेधंमृत्यु
मेकांदेवतांवेदअहमेवमृत्युरस्म्यश्वमेधएकादेवतासामद्रूपाश्वाग्निसाधनसाध्येतिसोपजयतिपुनर्मृत्युंपुनर्मरणंसकृन्मृत्वापुनर्म
रणायनजायतइत्यर्थः॥अपजितोपिमृत्युरेनंपुनराप्नुयादित्याशंक्याह॥नैनंमृत्युराप्नोतिकस्मान्मृत्युरस्यैवंविदआत्माभवति॥किंचमृ

मृत्युरेवापपुनर्मृत्युंजयतिनैनंमृत्युराप्नोतिमृत्युरस्यात्माभवत्येतासांदेवतानामेकोभवतियएवंवेद॥७॥द्वितीयंब्राह्मणं॥२॥१॥

त्युरेवफलरूपःसन्नेतासांदेवतानामेकोभवतितस्यैतत्फलं॥७॥तृतीयाध्यायस्यद्वितीयंब्राह्मणं॥२॥१॥द्वयाहेत्यस्यकःसंबंधःकर्मणां
ज्ञानसहितानांपरागतिरुक्तामृत्य्वात्मभावोश्वमेधगत्युक्त्याऽथेदानींमृत्य्वात्मभावसाधनभूतयोःकर्मज्ञानयोर्यतउद्भवस्तत्प्रकाश
नार्थमुद्गीथब्राह्मणमारभ्यते॥ननुमृत्य्वात्मभावःपूर्वत्रज्ञानकर्मणोःफलमुक्तं॥ श्वमेधस्यकेवलस्यवाफलमुक्तंनोपास्त्यंतराणांकर्मांत
राणांचेत्याशंक्याश्वमेधफलोक्त्योपास्त्यंतराणांकेवलानांसमुच्चितानांचफलमुपलक्षितमित्याह॥अश्वमेधेति॥वृत्तमनूद्योत्तरब्राह्मणस्यतात्पर्य
माह॥अथेति॥ज्ञानयुक्तानांकर्मणांसंसारफलत्वप्रदर्शनानंतरमितियावत्॥ज्ञानकर्मणोरुद्भावकस्यप्राणस्यस्वरूपंनिरूपयितुंब्राह्मणमित्युत्थाप्यो

मृत्युमतिक्रांतोदीप्यतइतिमृत्योरतिक्रमस्यवक्ष्यमाणज्ञानकर्मफलत्वात्पूर्वंत्रचतदंतर्भावस्यतत्फलस्योक्तत्वादुभयस्यापिफलस्यभेदात्पूर्वोत्तरयो ज्ञानकर्मणोर्विषयशब्दितोद्देश्यभेदान्नपूर्वोक्तयोस्तयोरुद्भवकारणप्रकाशनार्थंब्राह्मणमित्यर्थः पूर्वोत्तरज्ञानकर्मफलभेदाभावादेकविषयत्वा दुद्भावकप्रकाशनार्थंब्राह्मणंयुक्तमितिपरिहरति॥नायमिति॥वाक्यशेषविरोधंशंकित्वादूषयति॥नन्वित्यादिना॥स्वाभाविकःशास्त्रानाधेयोयंपा

उद्गीथज्ञानकर्मणोस्तुमृत्य्वात्मभावातिक्रमणंफलंवक्ष्यत्यतोभिन्नविषयत्वात्फलस्यनपूर्वकर्मज्ञानोद्भवप्रकाशनार्थमितिचेन्नायंदोषो ग्न्यादित्यात्मभावत्वादुद्गीथफलस्यपूर्वत्राप्येतदेवफलमुक्तमेतासांदेवतानामेकोभवतीति॥ननुमृत्युमतिक्रांतइत्यादिविरुद्धंनस्वाभा विकपाप्मासंगविषयत्वादतिक्रमणस्य॥कोसौस्वाभाविकःपाप्मासंगोमृत्युःकुतोवातस्योद्भवःकेनवातस्यातिक्रमणंकथंवेत्येतस्यार्थ

द्वयाहप्राजापत्या

स्यप्रकाशनायाख्यायिकारभ्यते॥कथं॥द्वयाः द्विप्रकाराः॥हइतिपूर्ववृत्तावद्योतकोनिपातोवर्त्तमानप्रजापतेःपूर्वजन्मनियद्वृत्तंतदेव द्योतयतिहशब्देनप्राजापत्याःप्रजापतेर्वृत्तजन्मावस्थस्यापत्यानिप्राजापत्याःकेतेदेवाश्चासुराश्चतस्यैवप्रजापतेःप्राणावागादयः ॥

प्पाविषयासंगरूपोमृत्युस्तस्यातिक्रमणंवाक्यशेषेकथ्यतेनहिरण्यगर्भाख्यस्यमृत्योरतः पूर्वोक्तज्ञानकर्मभ्यांतुल्यविषयत्वमेवोत्तरज्ञानकर्मणोरित्यर्थः ज्ञानकर्मणोरुद्भावकंवक्तुंब्राह्मणमारभ्यतामाख्यायिकातुकिमर्थेत्याशंक्यतस्यास्तात्पर्यमाह॥कोसावितिः॥कथंयथोक्तोब्राह्मणाख्यायिकयोरर्थःशक्यो ज्ञातुमित्याकांक्षांनिक्षिप्याक्षराणिव्याकरोति॥कथमित्यादिना॥निपातार्थमेवस्फुटयति॥वर्त्तमानेति॥प्रजापतिशब्दोभविष्यद्वृत्यायजमानंगोचरयतीत्या

शंकां वारयति॥ तस्यैवेति॥ यजमानेषु प्राणेषु देवत्वमसुरत्वं च विरुद्धं न सिध्यतीति शंकते॥ कथमिति॥ तेषु तदुभयमौपाधिकं साधयति॥ उच्यत इति॥ शा स्त्रानपेक्षयोर्ज्ञानकर्मणोरुत्पादकमाह॥ प्रत्यक्षेति॥ सन्निधानासन्निधानाभ्यां प्रमाणद्वयोक्तिः स्वेष्वेवासुषु रमणं नामात्मंभरित्वं॥ तत इत्यादिवाक्यद्वयं प्र कृत्य व्याचष्टे॥ यस्माच्चेति॥ देवानामल्पत्वं प्रपंचयति॥ स्वाभाविकीति॥ महत्तरत्वे हेतुः दृष्टप्रयोजनत्वादिति असुराणां बहुत्वं प्रपंचयति॥ शास्त्रजनितेति

कथं पुनस्तेषां देवासुरत्वं उच्यते शास्त्रजनितज्ञानकर्मभाविताः द्योतनाद्देवा भवंति त एव स्वाभाविकप्रत्यक्षानुमानजनितदृष्टप्रयोजनक र्मज्ञानभाविता असुराः स्वेष्वेवासुषु रमणात्सुरेभ्यो वा देवेभ्योन्यत्वात्॥ यस्माच्च दृष्टप्रयोजनज्ञानकर्मभाविता असुरास्तस्मात्कानीय साः कनीयांस एव कानीयसाः स्वार्थे णिवृद्धिः कनीयांसोऽल्पा एव देवाः ज्यायसा असुरा ज्यायांसोऽसुराः॥ स्वाभाविकी हि कर्मज्ञानप्रवृत्तिर्मह

देवाश्चासुराश्च ततः कानीयसा एव देवा ज्यायसा असुरास्त एषु लोकेष्वस्पर्धंत

तरा प्राणानामशास्त्रजनिताया: कर्मज्ञानप्रवृत्तेः दृष्टप्रयोजनत्वात्तत एव कनीयस्त्वं देवानां शास्त्रजनितप्रवृत्तेरल्पत्वाद्त्यंतयत्नसा ध्या हि सा ते देवाश्चासुराश्च प्रजापतिशरीरस्था एषु लोकेषु निमित्तभूतेषु स्वाभाविकेतरकर्मज्ञानसाध्येष्वस्पर्धंत स्पर्धां कृतवंतः॥ देवानां चासुराणां चेतरेतरविषयापहाराभिभवोद्भवाभिप्रायेण प्रवृत्तिः स्पर्धा॥ तद्वृत्त्युद्भवाभिभवो स्पर्द्धा

असुराणां बाहुल्यमिति शेषः तदेव साधयति॥ अत्यंतेति॥ उभयेषां देवासुराणां मिथः संघर्षं दर्शयति॥ ते देवाश्चेति॥ कथं ब्रह्मादीनां स्थानरांतराणां भोगस्थानानां स्पर्द्धा निमित्तत्वमित्याशंक्य तेषां शास्त्रीयेतरज्ञानकर्मसाध्यत्वात्तयोश्च देवासुरजयाधीनत्वात्तस्य च स्पर्धापूर्व कत्वात्सर्वपर्यालोकानां तन्निमित्तत्वमित्यभिप्रेत्य विशिनष्टि॥ स्वाभाविकेति॥ का पुनरेषां स्पर्धा नामेत्याशंक्याह॥ देवानां चेति॥ तामेव सफलां विवृणोति॥

कदाचिदित्यादिना॥अधिकृतैरसुरपराजयेदेवजयेचप्रयतितव्यमित्यनुग्रहबुध्द्याजयफलमाह॥एवमिति॥आकांक्षापूर्वकमनंतरवाक्यमादाय
व्याकरोति॥तएवमित्यादिना॥योयमुद्गीथोनामकर्मांगभूतःपदार्थस्तत्कर्तृप्राणस्यस्वरूपाश्रयणमेवकथंसिध्यतीत्याशंक्याह॥उद्गीथेति॥किंतत्क

कदाचिच्छास्त्रजनितकर्मज्ञानभावनारूपावृत्तिःप्राणानामुद्भवतियदाचोद्भवतितदादृष्टप्रयोजनाप्रत्यक्षानुमानजनितकर्मज्ञानभावनारू
पातेषामेवप्राणानांवृत्तिरासुर्यभिभूयतेसदेवानांजयोऽसुराणांपराजयःकदाचित्तद्विपर्ययेणदेवानांवृत्तिरभिभूयतेआसुर्याउद्भवःसोऽ
सुराणांजयोदेवानांपराजयःएवंदेवानांजयेधर्मभूयस्त्वादुत्कर्षःआप्रजापतित्वप्राप्तेरसुरजयेऽधर्मभूयस्त्वादपकर्षआस्थावरत्वप्रा
प्तेरुभयसाम्येमनुष्यत्वप्राप्तिस्तएवंकनीयस्त्वादभिभूयमानाःअसुरैर्देवाबाहुल्यादसुराणांकिंकृतवंतइत्युच्यते॥तेदेवाअसुरैरभिभूय

तेहदेवाऊचुर्हन्तासुरान्यज्ञउद्गीथेनात्ययामेति॥ १॥

मानाहकिलऊचुरुक्तवंतःकथंहंतेदानीमस्मिन्यज्ञेज्योतिष्टोमेउद्गीथेनउद्गीथकर्मपदार्थकर्तृस्वरूपाश्रयणेनात्ययामातिगच्छाम॥असु
रानभिभूयस्वंदेवभावंशास्त्रप्रकाशितंप्रतिपद्यामहइत्युक्तवंतोऽन्योन्यंउद्गीथकर्मपदार्थकर्तृस्वरूपाश्रयणंचज्ञानकर्मभ्यां॥कर्मवक्ष्यमाणं
मंत्रजपलक्षणंविधित्स्यमानंतदेतानिजपेदितिज्ञानंत्विदमेवनिरूप्यमाणं॥नन्विदमभ्यारोहजपविधिशेषोऽर्थवादोनज्ञाननिरूपणपरं॥

र्मकिंवाज्ञानंतदाह॥कर्मेति॥तान्येतान्यसतोमासद्गमयेत्यादीनियजूंषिजपेदितिविधित्स्यमानमितियोजना॥द्वयाहेत्यादिनाज्ञाननिरूपणपरंजपविधि
शेषत्वेनार्थवादत्वात्तत्कुतोऽत्रज्ञानस्यनिरूप्यमाणत्वमित्याक्षिपति॥नन्विति॥आभिमुख्येनारोहतिदेवभावमनेनेत्यभ्यारोहोमंत्रजपःतद्विधिशेषोऽर्थवादो

२१

दूयाहेति

दूयाहेत्यादिवाक्यमित्यर्थः॥ उपास्तिविधिश्रवणात्तत्परं वाक्यं न जपविधिशेष इति दूषयति॥ नेति॥ माभूज्जपविधिशेषः तथाप्युद्गायेत्यौद्गात्रस्य कर्मणः संनिधाने पुरातनकल्पनाप्रकारस्य दूयाहेत्यादिनाश्रवणात्तद्विधिशेषोऽर्थवादोऽयमिति शंकते॥ उद्गीथेति॥ नेदं वाक्यं ज्ञानं चोद्गीथविधिशेषस्तत्प्रकरणस्यत्वाभावेन सन्निध्यभावादिति दूषयति नाप्रकरणादिति॥ उद्गीथस्तर्हि किं विधीयते न खल्वविहितमंगं भवति तत्राह॥ उद्गीथस्य चेति॥ अन्यत्रेति कर्मकांडोक्तिः अथो द्गायेत्युद्गीथविधिरपीह प्रतीयते तत्कथं संनिधिरपोद्यते तत्राह॥ विद्येति॥ उद्गीथविधिरिह प्रतीयमानः प्राणस्योद्गातृदृष्ट्योपासनविधिरन्यथा प्रकरणविरोधादित्यर्थः॥ जपविधिशेषत्वमुद्गीथविधिशेषत्वं वा ज्ञानस्य नास्तीत्युक्तमिदानीं जपविधिशेषत्वाभावे युक्त्यंतरमाह॥ अन॥ य एवं वेदेति वचनात्॥ उद्गीथप्रस्तावे पुराकल्पश्रवणादुद्गीथविधिपरमिति चेन्नाप्रकरणादुद्गीथस्य चान्यत्र विहितत्वाद्विद्याप्रकरणत्वाच्चाभ्यारोहजपस्यानित्यत्वादेवं वित्प्रयोज्यत्वाद्विज्ञानस्य च नित्यवत्कुर्वणात्तद्धैतल्लोकजिदेवेति च श्रुतेः॥ प्राणस्य वागादीनां चाशुद्धिवचनान्नह्यनुपास्यत्वे प्राणस्य शुद्धिवचनं॥ वागादीनां च सहोपन्यस्तानामशुद्धिवचनं वागादिनिंदया मुख्यप्राणस्तुतिश्चेत्याभिप्रेतोपपद्यते॥

भ्यारोहेति॥ अनित्यत्वं साधयति॥ एवंविदिति॥ प्राणविज्ञानवतानुष्ठेयो जपो न तद्विज्ञानात्प्रागस्ति तन्नासौ पश्चाद्भावी प्रागेव सिद्धं विज्ञानं प्रयोजयतीत्यर्थः॥ तस्यापि प्राचीनत्वं कथमित्याशंक्याह॥ विज्ञानस्य चेति॥ य एवं विद्वान्पौर्णमासीं यजत इति वद्य एवं वेदेति विज्ञानं श्रुतं न हि प्रयाजादि पौर्णमासीप्रयोजकं तस्या एव तत्प्रयोजकत्वात्तथा प्राणवित्प्रयोज्यो जपो न विज्ञानप्रयोजकस्तस्य स्वप्रयोजकत्वेन प्रागेव सिद्धेरावश्यकत्वादित्यर्थः॥ फलवत्वाच्च प्राणविज्ञानं स्वतंत्रं विधित्सितमित्याह॥ तद्धेति॥ प्राणोपास्तेर्विवक्षितत्वे हेत्वंतरमाह॥ प्राणस्येति॥ यद्धि स्तूयते तद्धि धीयत इति न्यायमाश्रित्योक्तमेव प्रपंचयति॥ नहीति॥ अतश्च प्राणोपास्तिरत्र विधित्सितेत्याह॥

मृत्युमिति॥ फलवचनं प्राणस्यानुपास्यत्वेनोपपद्यत इति संबंधः॥ उक्तमेव व्यनक्ति॥ प्राणेति॥ मृत्युमोक्षणानंतरं वागादीनां यदग्न्यादित्वं फलं तदध्या
त्मपरिच्छेदं हित्वोपासितुराधिदैविकप्राणस्वरूपापत्तेरुपपद्यते। तस्माद्विधित्सितैवात्र प्राणोपास्तिरित्यर्थः॥ उक्तन्यायेन प्राणोपास्तिमुपेत्य प्राणदे
वतां शुध्यादिगुणवतीमाक्षिपति॥ भवत्विति॥ यथा प्राणस्योपास्तिः शास्त्रदृष्टत्वादिष्टा तथास्य गुणसंबंधः श्रुतत्वादेष्टव्य उपास्त्वानुपास्ये च गुणवृत्ति प्राणे
प्रामाणिकप्राप्तेरविशेषादिति सिद्धांती ब्रूते॥ नन्विति॥ प्राणस्योपास्यत्वे विशुध्यादिगुणवादस्य स्तुत्यर्थत्वेनार्थवादत्वसंभवान्न यथोक्तादेवतासा
दिति पूर्ववाद्याह॥ न स्यादिति॥ विशुध्यादिगुणवादस्यार्थवादत्वेपि नाभूतार्थवादत्वमिति परिहरति॥ नेति॥ विशुध्यादिगुणविशिष्टप्राणदृष्टेरत्र

मृत्युमतिक्रांतो दीप्यत इत्यादि फलवचनं च। प्राणस्वरूपापत्तिर्हि फलं तद्द्वारा वागाद्यग्न्यादिभावः॥ भवतु नाम प्राणस्योपासनं न तु विशुध्या
दिगुणवत्तेति॥ ननु स्यात्कुतत्वान्न स्यादुपास्यत्वेस्तुत्यर्थत्वोपपत्तेः॥ न॥ अविपरीतार्थप्रतिपत्तेः श्रेयः प्राप्त्युपपत्तेर्लोकवत्॥ यो ह्यविप
रीतमर्थं प्रतिपद्यते लोके स इष्टं प्राप्नोति अनिष्टाद्वा निवर्त्तते न विपरीतार्थप्रतिपत्त्या तथेहापि श्रौतशब्दजनितार्थप्रतिपत्तौ श्रेयःप्रा
प्तिरुपपन्ना न विपर्ययेन चोपासनार्थश्रुतशब्दोत्थविज्ञानविषयस्यायथार्थत्वे प्रमाणमस्ति॥ न च तद्विज्ञानस्यापवादः श्रूयते

फलप्राप्तिः श्रुतानसाज्ञानस्य मिथ्यार्थत्वे युक्ता सम्यग्ज्ञानादेव पुमर्थाप्तेः संभवादतः स्तुतिरपि यथार्थैवेत्यर्थः॥ लोकदृष्टांतं व्याचष्टे॥ यो हीति॥ इ
हेति वेदाख्यदार्ष्टांतिकोक्तिः॥ ननु विशुध्यादिगुणवतीं देवतां वदंति वाक्यान्युपासनाविध्यर्थत्वान्न स्वार्थे प्रामाण्यं प्रतिपद्यंते तत्राह॥ न चेति॥ अन्यपरा
णामपि वाक्यानां मानांतरसंवादविसंवादयोरसतोः स्वार्थे प्रामाण्यमत्रभवानुसारिभिरेष्टव्यमित्यर्थः॥ ननु प्राणस्य विशुध्यादिवादो न स्वार्थे मानमन्यपरत्वा
दादित्ययूपादिवाक्यवदत आह॥ न चेति॥ आदित्ययूपादिवाक्यार्थज्ञानस्य प्रत्यक्षादिनापवादवद्विशुध्यादिगुणविज्ञानस्यनापवादः श्रुतस्तस्माद्विशुध्यादित्वा

२१

दस्यस्वार्थमानत्वमप्रत्यूहमित्यर्थः॥विशुध्यादिगुणकश्राणविज्ञानात्फलश्रवणात्तद्वादस्ययथार्थत्वमेवेत्युपसंहरति॥ततइति॥लोकवद्वेदेपिसम्यग्ज्ञाना दिष्टप्राप्तिरनिष्टपरिहारश्चेत्यन्वयमुखेनोक्तमर्थंव्यतिरेकमुखेनापिसमर्थयते॥विपर्ययेचेत्यादिना॥शास्त्रस्यानर्थार्थत्वमिष्टमितिशंकांनिराचष्टे॥न चेतिअपौरुषेयस्यासंभावितसर्वदोषस्याशेषपुरुषार्थहेतोः शास्त्रस्यानर्थार्थत्वमेष्टमशक्यमित्यर्थः॥शास्त्रस्ययथाभूतार्थत्वंनिगमयतितस्मादिति॥उ पासनार्थंज्ञानार्थंचेतिशेषः॥शास्त्राद्यथार्थप्रतिपत्तेःश्रेयःप्राप्तिरित्यत्रव्यभिचारंचोदयति॥नामादाविति॥तदेवस्फुटयति॥स्फुटमिति॥अब्रह्मणिब्रह्म

ततःश्रेयःप्राप्तिदर्शनाद्यथार्थतांप्रतिपद्यामहेविपर्ययेचानर्थप्राप्तिदर्शनाद्योहिविपर्ययेणार्थंप्रतिपद्यतेलोकेपुरुषंस्थाणुरित्यमित्रंमि त्रमितिवासोऽनर्थंप्राप्नुवन्दृश्यतेआत्मेश्वरदेवतादीनामप्ययथार्थानामेवचेद्ग्रहणंश्रुतितोऽनर्थप्राप्त्यर्थंशास्त्रमितिध्रुवंप्राप्नुयाल्लोक वदेवनचैतदिष्टं तस्माद्यथाभूतानेवात्मेश्वरदेवतादीन्ग्राहयत्युपासनार्थंशास्त्रं॥नामादौब्रह्मदृष्टिदर्शनादयुक्तमितिचेत्स्फुटंना मादेरब्रह्मत्वंतत्रब्रह्मदृष्टिंस्थाण्वादाविवपुरुषदृष्टिंविपरीतांग्राहयत्शास्त्रंदृश्यतेतस्माद्यथार्थमेवशास्त्रात्तःप्रतिपत्तेःश्रेयइत्ययुक्त मितिचेत्॥न॥प्रतिमावद्भेदप्रतिपत्तेःनामादावब्रह्मणिब्रह्मदृष्टिंविपरीतांग्राहयतिशास्त्रंस्थाण्वादाविवपुरुषदृष्टिमितिनैतत्साध्ववो चःकस्माद्भेदेनहिब्रह्मणोनामादिवस्तुप्रतिपन्नस्यनामादौविधीयतेब्रह्मदृष्टिःप्रतिमादाविवविष्णुदृष्टिरालंबनत्वेनहिनामादिप्रतिपत्तिःप्र तिमावदेवनतुनामाद्येवब्रह्मेति॥

दृष्टिरतस्मिंस्तद्बुद्धित्वान्मिथ्याधीःसाचयावन्नाम्नोगतमित्यादिश्रुत्याफलवतीततःशास्त्राद्यथार्थप्रतिपत्तिरेव फलमित्ययुक्तमित्यर्थः॥भेदाग्रहपूर्वकोन्यस्यान्यात्मनावभासोमिथ्याज्ञानमत्रतुभेदेभासमानेन्यत्रान्यदृष्टिर्विधीयते॥यथाविष्णोर्भेदेप्रतिमायांगृह्य माणेतत्रविष्णुदृष्टिःक्रियतेतन्नेदंमिथ्याज्ञानमित्याह॥नेति॥नञर्थंस्पष्टयति॥नामादाविति॥प्रश्नपूर्वकंहेतुंव्याचष्टे॥कस्मादिति॥प्रतिमायांविष्णुदृष्टिं

प्रत्यालंबनत्वमेवनविष्णुतादात्म्यंनामादेस्तुब्रह्मतादात्म्यंश्रुतमितिवैषम्यमाशंक्याह॥आलंबनत्वेनेति॥उक्तमर्थंवैधर्म्यदृष्टांतेनस्पष्टयति॥यथेति॥
कर्ममीमांसकोब्रह्मविद्वेषंप्रकटयन्प्रत्यवतिष्ठते॥ब्रह्मेति॥केवलातदृष्टिरेवनाम्निचोद्यतेचोदनावशाच्चफलंसेत्स्यति॥ब्रह्मतुनास्तिमानाभावादि
त्यर्थः॥अथयथादेवानांप्रतिमादिषुउपास्यमानानामन्यत्रसत्वंयथाचवस्वाद्यानांपितॄणांब्राह्मणादिदेहेतर्प्यमाणानामन्यत्रसत्वंतथाब्रह्मणोपिनामा
दावुपास्यत्वादन्यत्रसत्वंभविष्यतीत्याशंक्याह॥एतेनेति॥नामादौब्रह्मदर्शनेनेतियावत्॥दृष्टांतासिद्धेर्नक्वापिब्रह्मास्तीतिभावः॥सत्यज्ञानादिलक्षणं
ब्रह्मनास्तीत्ययुक्तंसदेवसोम्येदमित्यादिश्रुतेरित्याह॥नेति॥किंचब्रह्मदृष्टिःसत्यार्थाशास्त्रीयदृष्टित्वादियमेवर्गाग्निःसामेतिदृष्टिवदित्याह ऋगादिष्वि

यथास्थाणावनिर्ज्ञातेनस्थाणुरितिपुरुषएवायमितिप्रतिपद्यतेविपरीतंनतुतथानामादौब्रह्मदृष्टिर्विपरीताब्रह्मदृष्टिरेवकेवलानास्ति
ब्रह्मेतिचेदेतेनप्रतिमाब्राह्मणादिषुविष्ण्वादिदेवपित्रादिदृष्टीनांतुल्यता॥नर्गादिषुपृथिव्यादिदृष्टिदर्शनाद्विद्यमानपृथिव्यादिवस्तुद
ष्टीनामेवर्गादिविषयेप्रक्षेपदर्शनात्तस्मात्तत्सामान्यान्नामादिषुब्रह्मादिदृष्टीनांविद्यमानब्रह्मादिविषयत्वसिद्धिः॥एतेनप्रतिमाब्राह्मणा
दिषुविष्ण्वादिदेवपित्रादिबुद्धीनांचसत्यवस्तुविषयत्वसिद्धिःमुख्यापेक्षत्वाच्चगौणत्वस्यपंचाग्न्यादिषुचाग्नित्वादेर्गौणत्वान्मुख्याग्न्या
दिसद्भाववन्नामादिषुब्रह्मत्वस्यगौणत्वान्मुख्यब्रह्मसद्भावोपपत्तिःक्रियार्थैश्चाविशेषाद्विद्यार्थानां॥ ति॥तदेवस्पष्टयति॥विद्यमानेति॥ता
भिर्दृष्टिभिःसामान्यंदृष्टित्वंतस्मादितियावत्॥यत्तुदृष्टांतासिद्धिरितितत्राह॥एतेनेति॥ब्रह्मदृष्टेःसत्यार्थत्ववचनेनेतियावत्॥ब्रह्मास्तित्वेहेत्वंतरमाह॥
मुख्यापेक्षत्वादिति उक्तमेवविवृणोतिपंचेति॥पंचाग्नयोद्युपर्जन्यपृथिवीपुरुषयोषितः॥आदिपदंवाग्धेन्वादिग्रहार्थं॥ननुवेदांतवेद्यंब्रह्मेष्यतेनचते
भ्यस्तद्धीःसिध्यतितेषांविधिवैधुर्येणाप्रामाण्यात्तत्कुतोब्रह्मसिद्धिरतआह॥क्रियार्थैश्चेति॥विमतंस्वार्थेप्रमाणंअज्ञातज्ञापकत्वात्संमतवदतोवेदांत

शास्त्रादेवब्रह्मसिद्धिरित्यर्थः॥सिद्धसाध्यार्थभेदेनवैषम्यादविशिष्टत्वमनिष्टमित्याशंक्योक्तं विवृणोति॥यथाचेतिविशिष्टत्वं स्वरूपोप
कारित्वंफलोपकारित्वंचप्रोक्तंप्रकारं परामृष्टमेवमित्यादिष्टं॥अलौकिकत्वंसाधयति॥प्रत्यक्षादीति॥किंचवेदांतानामप्रामाण्यंबुध्यनुत्पत्तेर्वा
संशयाद्युत्पत्तेर्वानाद्यइत्याह॥नचेति॥नद्वितीयइत्याह॥नचानिश्चितेति॥कोटिद्वयास्पर्शित्वादबाधाच्चेत्यर्थः॥क्रियार्थैर्वाक्यैर्विद्यार्थानांवाक्या
नांसाधर्म्यमुक्तमाक्षिपति॥अनुष्ठेयेति॥साधर्म्यस्यायुक्तत्वमेवव्यनक्ति॥क्रियार्थैरितिवाक्योत्थबुद्धेर्यथार्थत्वाद्विध्यभावेपिवाक्यप्रामाण्यमज्ञात

यथाचदर्शपूर्णमासादिक्रियेदंफलाविशिष्टेतिकर्तव्यताकारएवंक्रमप्रयुक्तांगाचेत्येतदलौकिकंवस्तुप्रत्यक्षाद्यविषयंतथाभूतंचवेदवा
क्यैरेवज्ञाप्यते॥तथापरमात्मेश्वरदेवतादिवस्त्वस्थूलादिधर्मकमशनायाद्यतीतंचेत्येवमादिविशिष्टमितिवेदवाक्यैरेवज्ञाप्यतइत्यलौ
किकत्वात्तथाभूतमेवभवितुमर्हतीति॥नचक्रियार्थैर्वाक्यैर्ज्ञानवाक्यानांबुध्युत्पादकत्वेविशेषोस्ति॥नचानिश्चिताविपर्यस्तावापरमात्मा
दिवस्तुविषयाबुद्धिरुत्पद्यते॥अनुष्ठेयाभावादयुक्तमितिचेत्‌क्रियार्थैर्वाक्यैस्त्वंशाभावनाऽनुष्ठेयाज्ञाप्यतेऽलौकिक्यपिनतथापरमा
त्मेश्वरादिविज्ञानेऽनुष्ठेयंकिंचिदस्त्यतः क्रियार्थैःसाधर्म्यमित्ययुक्तमितिचेन्न ज्ञानस्यतथाभूतार्थविषयत्वात्‌॥नह्यनुष्ठेयस्यत्र्यंश
स्यभावनाख्यस्यानुष्ठेयत्वात्तथात्वंकिंतर्हिप्रमाणसमधिगतत्वात्‌॥ ज्ञापकत्वेनाविरुद्धमितिपरिहरति॥नज्ञानस्येति॥अनुष्ठेयनिष्ठत्वमं
तरेणकुतोवस्तुनिप्रयोगप्रत्यययोस्तथार्थत्वमित्याशंक्यतयोर्विषयतथार्थत्वंतदपेक्षास्वप्रामाण्यार्थंवेतिविकल्प्याद्यंदूषयति॥नहीति॥तदुभयविष
यस्यकर्त्तव्यार्थस्यतथात्वंनकर्त्तव्यत्वापेक्षंकिंतुमानगम्यत्वादन्यथाविप्रलंभकविधिवाक्येपितथात्वापत्तेरित्यर्थः॥द्वितीयंप्रत्याह॥नचेति॥बुद्धिग्र
हणंप्रयोगोपलक्षणार्थं॥कर्त्तव्यतार्थविषयप्रयोगादेर्नानुष्ठेयविषयत्वान्मानत्वंकिंतुप्रमाकरणत्वात्तज्जन्यत्वाच्चान्यथोक्तातिप्रसक्तितादवस्थ्यादतो

विषयेणतथार्थत्वं ३ अनुष्ठेयनिष्ठापेक्षा ३ तयोः प्रयोगप्रत्यययोः अनुष्ठेयत्वान्मानत्वमनुष्ठेयनिष्ठतयावामानत्वं = ३

नुष्टेयनिष्ठत्वंमानत्वेऽनुपयुक्तमित्यर्थः॥कुतस्तर्हिकार्याकार्यधियाविस्याशंक्याह॥वेदेति॥वैदिकस्यार्थस्याबाधेनतथार्थत्वेसिद्धेसमीहितसाधन
त्वविशिष्टंचेद्वस्तुतदाकर्त्तव्यमितिधियानुतिष्टति॥तच्चेदनिष्टसाधनत्वविशिष्टंतदानकार्यमितिधियानानुतिष्टत्यतोमानस्यैअनुष्टानानुष्ट
नहेतूकार्याकार्यधियाविस्यर्थः॥तथापिब्रह्मणोवाक्यार्थत्वंपदार्थत्वंवानाद्यइत्याह॥अननुष्टेयत्वइति॥तस्याकार्यत्वेपिवाक्यार्थत्वंकिंनस्या

नचतद्विषयायाबुद्धेरनुष्ठेयविषयत्वात्तथार्थत्वंकिंतर्हिवेदवाक्यजनितत्वादेववेदवाक्याधिगतस्यवस्तुनस्तथात्वेसत्यनुष्ठे
यविशिष्टत्वंचेदनुतिष्ठतिनचेदनुष्ठेयविशिष्टंनानुतिष्ठति॥अननुष्ठेयत्वेवाक्यप्रमाणत्वानुपपत्तिरितिचेत्॥नह्यनुष्ठेयेऽसति
पदानांसंहतिरुपपद्यते॥अनुष्ठेयत्वेतुसतितादर्थ्येनपदानिसंहन्यंते॥तत्रानुष्ठेयनिष्ठंवाक्यंप्रमाणंभवतीदमनेनेवंकर्त्तव्य
मितिनत्विदमनेनैवमित्येवंप्रकाराणांपदशतानामपिवाक्यत्वमस्तिकुर्यात्क्रियेतकर्त्तव्यंभवेत्स्यादितिपंचममित्येवमादीनामन्य
तमेऽसत्यतःपरमात्मेश्वरादीनामवाक्यप्रमाणत्वं॥पदार्थत्वेचप्रमाणांतरविषयत्वंअतोऽसदेतदितिचेत् नास्तिमेरुर्वर्णचतुष्ट
योपेतइत्येवमाद्यनुष्ठेयेपिवाक्यदर्शनात्॥नचमेरुर्वर्णचतुष्टयोपेतइत्येवमादिवाक्यश्रवणेमेर्वादावनुष्ठेयत्वबुद्धिरुत्पद्यते

दित्याशंक्याह॥नहीति॥उभयत्रासतीतिच्छेदः॥द्वितीयंदूषयति॥पदार्थत्वेचेति॥ब्रह्मणः शास्त्रार्थत्वमेतदित्युच्यते॥कार्यास्पृष्टेर्थेवाक्यप्रा
माण्यंदृष्टांतेनसाधयति॥नेत्यादिना॥शुक्लकृष्णलोहितमिश्रितलक्षणंवर्णचतुष्टयंतद्विशिष्टोमेरुरस्तीत्यादिप्रयोगेमेर्वादावकार्येपिस
म्यग्धीदर्शनात्तत्वमसिवाक्यादपिकार्यास्पृष्टेब्रह्मणिसम्यग्ज्ञानसिद्धिरित्यर्थः दृष्टांतेपिकार्यधीरेववाक्यादुदेतीत्याशंक्याह॥नचेति॥ननु
तत्रक्रियापदाधीनापदसंगतिर्युक्तावेदांतेषुपुनस्तदभावात्पदसंहत्ययोगात्कुतोवाक्यप्रमाणकत्वंब्रह्मणःसंभवतीतत्राह ॥

तथेति॥विमतमफलंसिद्धार्थज्ञानत्वात्संमतवदितिअनुमानात्तत्वमादेःसिद्धार्थस्यायुक्तंमानत्वमितिशंकते॥मेवंदीति॥श्रुतिविरोधेनानुमानंधुनी
ते॥नेत्यादिना॥विद्वदनुभवविरोधाच्चनैवमित्याह॥संसारेति॥फलश्रुतेरर्थवादत्वेनामानत्वादनुमानाबाधकतेत्याशंक्याह॥अनन्येति॥पुणम
यीत्वाधिकरणन्यायेनजुहूंफलश्रुतेरर्थवादत्वंयुक्तं॥ब्रह्मधियोन्यशेषत्वप्रापकाभावात्तत्फलश्रुतेरर्थवादत्वासिद्धिरित्यन्यथाशारीरकानारंभः
स्यादित्यर्थः॥श्रुत्यनुभवाभ्यांवाक्योत्थज्ञानस्यफलवत्त्वदृष्टेर्युक्ताकार्यास्पृष्टेर्थेतत्वमस्यादेर्मानतेत्युक्तं॥संप्रतिशास्त्रस्यकार्यपरत्वानियमेहेत्वंत
रमाह॥प्रतिषिद्धेति॥यद्यपिकलंजभक्षणादेरधःपातस्यचसंबंधोनकलंजंभक्षयेदित्यादिवाक्यात्प्रतीयते॥तथापितस्यानुष्टेयत्वाद्वाक्यस्यानुष्टेय

तथास्तिपदसहितानांपरमात्मेश्वरादिप्रतिपादकवाक्यपदानांविशेषणविशेष्यभावेनसंहतिःकेनवार्यतेमैवंदिज्ञानवत्परमा
त्मज्ञानेप्रयोजनाभावादयुक्तमितिचेत्॥नब्रह्मविदाप्नोतिपरं॥भिद्यतेहृदयग्रंथिरितिफलश्रवणात्॥संसारबीजाविद्यादिदोष
निवृत्तिदर्शनाच्चानन्यशेषत्वाच्चतत्वानस्यजुहूामिवफलश्रुतेरर्थवादत्वानुपपत्तिःप्रतिषिद्धानिष्टफलसंबंधश्चवेदादेवविज्ञायते
॥नचानुष्ठेयःसः॥नचप्रतिषिद्धविषयेप्रवृत्तक्रियस्याकरणादन्यदनुष्ठेयमस्त्यकर्त्तव्यताज्ञाननिष्ठतैवहिपरमार्थतःप्रतिषेधविधीनां
स्यात्॥

निष्टत्वसिद्धिरित्याशंक्याह॥नचेति॥संबंधस्याभावोर्थत्वान्नानुष्टेयतेत्यर्थः॥अभक्षणादिकार्यमितिविधिपरत्वमेवनिषेधवाक्यस्य
किन्नस्यादित्याशंक्याह॥नचेति॥तस्यापिकार्यार्थत्वेविधिनिषेधभेदभंगान्नञश्चस्वसंबंध्यभावबोधेनमुख्यस्यार्थांतरेवृत्तौलक्षणापातान्निषिद्धवि
षयेरागादिनाप्रवृत्तक्रियावतोनिषेधशास्त्रार्थधीसंस्कृतस्यनिषेधश्रुतेरकरणात्प्रसक्तक्रियानिवृत्त्युपलक्षितादौदासीन्यादन्यदनुष्टेयंनप्रतिभाती
त्यर्थः॥भावविषयंकर्त्तव्यत्वंविधीनामर्थोऽभावविषयंतुनिषेधानामितिविशेषमाशंक्याह॥अकर्त्तव्यतेति॥अभावस्यभावार्थत्वाभावात्कर्त्तव्यताविषयत्वा

इदंवाक्यंममकलंजभक्षणाभावंद्योतयति=४

सिद्धिरितिहिशब्दार्थः॥

प्रतिषेधज्ञानवतोपि कलंजभक्षणादिज्ञानंदर्शनात्तन्निवृत्तेर्नियोगाधीनत्वात्तन्निष्ठमेव वाक्यमेष्टव्यमिति चेन्नेत्याह॥ क्षुधार्त्तस्येति॥ विषलिप्तबा
णहतस्य पशोर्मांसं कलंजं ब्रह्मवधाद्यभिशापयुक्तस्यान्नपानादि तस्मिन्नभक्ष्येऽभोज्ये च प्राप्ते यद्भ्रमज्ञानं क्षुत्क्षामस्योत्पन्नं तन्निषेधधीसंस्कृत
स्य तद्धीस्मृत्या बाध्यमित्यत्र लौकिकदृष्टांतमाह॥ मृगतृष्णिकायामिति॥ तथापि प्रवृत्त्यभावसिद्धये विधिरर्थ्यतामिति चेन्नेत्याह॥ तस्मिन्नि
ति॥ तदभावः प्रवृत्त्यभावो न विधिजन्यप्रयत्नसाध्यो निमित्ताभावेनैव सिद्धेरित्यर्थः॥ दृष्टांतमुपसंहरति॥ तस्मादिति॥ दार्ष्टांतिकमाह॥ त

क्षुधार्त्तस्य प्रतिषेधज्ञानसंस्कृतस्याभक्ष्येऽभोज्ये वा प्रत्युपस्थिते कलंजाभिशस्तान्नादाविदं भक्ष्यमदो भोज्यमिति वा ज्ञानमुत्पन्नं
तद्विषययाप्रतिषेधज्ञानस्मृत्या बाध्यते मृगतृष्णिकायामिव पेयज्ञानं तद्विषययाथात्म्यज्ञानेन तस्मिन्बाधिते स्वाभाविकविपरी
तज्ञानेऽनर्थकरी तद्भक्षणभोजनप्रवृत्तिर्न भवति विपरीतज्ञाननिमित्तप्रवृत्तेर्निवृत्तिरेव न पुनर्यत्नः कार्यः तदभावे तस्मात्प्र
तिषेधविधीनां वस्तुयाथात्म्यज्ञाननिष्ठतैव न पुरुषव्यापारनिष्ठतागंधोप्यस्ति तथेहापि परमात्मादियाथात्म्यज्ञानविधीनां ता
वन्मात्रपर्यवसानतैव स्यात्॥ तथा तद्विज्ञानसंस्कृतस्य तद्विपरीतार्थज्ञाननिमित्तानां प्रवृत्तीनामनर्थार्थत्वेन ज्ञायमानत्वात्परमात्मा
दियाथात्म्यज्ञानस्मृत्या स्वाभाविके तन्निमित्तविज्ञाने बाधितेऽभावः स्यात्॥ थेति॥ न केवलं तत्त्वमस्यादिवाक्यानां सिद्धवस्तुमात्रपर्यवसा
नता किंतु सर्वकर्मनिवर्त्तकत्वमपि सिध्यतीत्याह॥ तथेति॥ अकर्त्रभोक्तृब्रह्माहमिति ज्ञानसंस्कृतस्य प्रवृत्तीनामभावः स्यादिति संबंधः तस्माद्ब्र
ह्मभावाद्विपरीतोऽर्थो यस्य कर्तृत्वादिज्ञानस्य तन्निमित्तानामनर्थार्थत्वेन ज्ञायमानत्वादिति हेतुः॥ कदा पुनस्तासामभावः स्यादत आह॥ परमात्मा
दीति॥ भ्रांतिप्राप्तभक्षणादिनिरासेन निवृत्तिनिष्ठतया निषेधवाक्यस्य मानत्ववत्तत्त्वमादेरपि प्रत्यगज्ञानोत्थकर्तृत्वादिनिवर्त्तकत्वेन मानत्वोपप

दृष्टांतदार्ष्टांतिकयोर्वैषम्यमाशंकते नन्विति॥ तस्य निषिद्धत्वादनर्थार्थत्वमेव यद्वस्तुयाथात्म्यं तज्ज्ञानेन निषेधे कृते तत्संस्कारद्वारा संपादित
स्मृत्या शास्त्रीयज्ञानेन विपरीतज्ञाने बाधिते तत्कार्यप्रवृत्त्यभावो निमित्ताभावे नैमित्तिकाभावन्यायेन युक्तो न तथाग्निहोत्रादिप्रवृत्त्यभावो युक्तो
ब्रह्मविदाग्निहोत्रादि न कर्तव्यमिति निषेधानुपलंभादित्यर्थः॥ तत्त्वमस्यादिवाक्येनार्थान्निषिद्धमग्निहोत्रादीति मन्वानः साम्यमाह॥ नेत्यादिना
शास्त्रीयप्रवृत्तीनां गर्भवासादिहेतुत्वादनर्थार्थत्वमहं कर्तेत्याद्यभिमानकृतत्वेन विपरीतज्ञाननिमित्तत्वमेतदेव दृष्टांतावष्टंभेन स्पष्टयति॥ कलंजे

ननु कलंजादिभक्षणादेरनर्थार्थत्वेन वस्तुयाथात्म्यज्ञानस्य स्वाभाविके तद्भक्षणत्वादिविपरीतज्ञाने निवर्तिते तद्भक्षणाद्यनर्थप्रवृत्त्य
भाववत् प्रतिषेधविषयत्वाच्छास्त्रविहितप्रवृत्त्यभावो न युक्त इति चेत्॥ न विपरीतज्ञाननिमित्तत्वानर्थार्थत्वाभ्यां तुल्यत्वात्कलंजभक्षणा
दिप्रवृत्तेर्मिथ्याज्ञाननिमित्तत्वमनर्थार्थत्वं च यथा तथा शास्त्रविहितप्रवृत्तीनामपि॥ तस्मात्परमात्मयाथात्म्यविज्ञानवतः शास्त्रविहित
प्रवृत्तीनामपि मिथ्याज्ञाननिमित्तत्वेनानर्थार्थत्वेन च तुल्यत्वात्परमात्मज्ञानेन विपरीतज्ञाने निवर्तिते युक्त एवाभावो ननु तत्र युक्तो नित्या
नां तु केवलशास्त्रनिमित्तत्वादनर्थार्थत्वाभावाच्चाभावो न युक्त इति चेन्नाविद्यारागद्वेषादिदोषवतो विहितत्वात्॥ यथा स्वर्गका
मादिदोषवतो दर्शपूर्णमासादीनि काम्यानि कर्माणि विहितानि तथा सर्वानर्थबीजाविद्यादिदोषवतः तज्जनितेष्टानिष्टप्राप्तिपरि
हाररागद्वेषादिदोषवतश्च

ति॥ काम्यानामज्ञानहेतुत्वानर्थार्थत्वाभ्यां विदुषस्तेषु प्रवृत्त्यभावो युक्तो नित्यानां तु शास्त्रमात्रप्रयुक्तानुष्ठान
त्वान्नाज्ञानकृतत्वं प्रत्यवायाख्यानर्थध्वंसित्वाच्च नानर्थकत्वं अतस्तेषु प्रवृत्त्यभावो युक्तो न भवतीति शंकते॥ नन्विति॥ नित्यानां शास्त्रमात्रकृता
नुष्ठानत्वमसिद्धमिति परिहरति नेत्यादिना तदेव प्रपंचयति॥ यथेति॥ अविद्यादीत्यादिशब्देनास्मितादिचतुष्टयोक्तिः॥

कर्मस्वरूपमात्रबोधकोविधिरुत्पत्तिविधिर्यथाग्नेयोष्टाकपालोभवति॥अंगसंबंधबोधकोविधिर्नियोगविधिः॥यथादध्नाजुहोतीतिप्रयोगप्राशुभवबोधकोविधिः॥प्रयोगविधिःअविलंबापरपर्यायंप्रयोगप्राशुभावंविधत्ते॥सचांगवाक्यैकवाक्यतामापन्नःप्रधानविधिरेव॥सचसांगंप्रधानमनुष्ठापयत्॥विलंबेप्रमाणाभावात्॥अविलंबापरपर्यायंप्राशुभावंविधत्ते॥यथावेदंकृत्वावेदिंकरोतीत्यादि॥फलविशेषसंबंधबोधकोविधिरधिकारविधिः॥यथादर्शपौर्णमासाभ्यांस्वर्गकामोयजेतेति॥तथाहिफलस्वाम्यबोधकोविधिरधिकारविधिः॥फलस्वाम्यंचकर्मजन्यफलभोक्तृत्वंसचयजेतस्वर्गकामइत्येवंरूपः = ३

निमित्त

तैरविद्यादिभिर्जनितेष्टप्राप्तौतादृगनिष्टाप्राप्तौचक्रमेणरागद्वेषवतःपुरुषस्येष्टप्राप्तिमनिष्टपरिहारंचवांछतस्ताभ्यामेवरागद्वेषाभ्यामिष्टंमेभूयादनिष्टंमाभूदित्यविशेषकामनाभिप्रेरिताविशेषप्रवृत्तियुक्तस्यनित्यानिविधीयंतेस्वर्गकामःपशुकामइतिविशेषार्थिनःकाम्यानितुत्यंतूभयेषांकेवलशास्त्रनिमित्तत्वमित्यर्थः॥किंच॥काम्यानांदुष्टत्वंब्रुवतानित्यानामपितद्दिष्टमुत्पत्तिविनियोगप्रयोगाधिकारविधिरूपेविशेषाभावादित्याह॥नचेति॥

तत्प्रेरिताविशेषप्रवृत्तेरिष्टानिष्टप्राप्तिपरिहारार्थिनोनित्यानिकर्माणिविधीयंतेनकेवलंशास्त्रविहितान्येव॥नचाग्निहोत्रदर्शपूर्णमासचातुर्मास्यपशुबंधसोमानांकर्मणांस्वतःकाम्यनित्यत्वविवेकोस्तिकर्तृगतेनहिस्वर्गादिकामदोषेणकामार्थतातथाऽविद्यादिदोषवतःस्वभावप्राप्तेष्टानिष्टप्राप्तिपरिहारार्थिनस्तदर्थान्येवनित्यानीतियुक्तंतंप्रतिविहितत्वात्॥नपरमात्मयाथात्म्यविज्ञानवतःशमोपायव्यतिरेकेणकिंचित्कर्मविहितमुपलभ्यते

कथंतर्हिकाम्यनित्यविभागस्तत्राह॥कर्तृगतेनेति॥स्वर्गकामःपशुकामइतिविशेषार्थिनःकाम्यविधिरिष्टंमेस्यादनिष्टंमाभूदित्यविशेषकामप्रेरिताविशेषितप्रवृत्तिमतोनित्यविधिरित्युक्तमित्यर्थः॥नन्वविद्यादिदोषवतोनित्यानिकर्माणीत्ययुक्तंपरमात्मज्ञानवतोपियावज्जीवश्रुतेस्तेषामनुष्ठेयत्वादित्याशंक्यश्रुतेरविरक्तविषयत्वान्नैवमित्याह॥नपरमात्मेतियोगारूढस्यतस्यैवशमःकारणमुच्यतइतिस्मृतेःज्ञानपरिपाकेकारणंकर्मोपशमस्वप्रतीयतेनतथाकर्मविधिरित्यर्थः॥नकेवलंविहितंनोपलभ्यतेनसंभवति

कर्मनिमित्तेति॥ यदा नासित्वं संसारी किं त्वकर्त्रभोक्तृ ब्रह्मासीति श्रुत्या ज्ञाप्यते तदा देवतायाः संप्रदानत्वं करणत्वं व्रीह्यादेरित्येतत्सर्वमुपमृदि
तं भवति॥ तत्कथमकर्त्रादिज्ञानवतः संभवति कर्मविधिरित्यर्थः उपमृदितमपि वासनावशादुद्भविष्यतीति ततश्च विदुषोपि कर्मविधिः स्यादित्या
शंक्याह॥ नचेति॥ वासनावशादुद्भूतस्याभासत्वादात्मस्मृत्या पुनः पुनर्बाधाच्च विदुषो न कर्मप्रवृत्तिरित्यर्थः॥ किंच अनवच्छिन्नं ब्रह्मास्मीति स्म
रतस्तदात्मकस्य देशादिसापेक्षं कर्म निरवकाशमित्याह॥ नहीति॥ विदुषोभिक्षाटनादिवत्कर्मावसरः स्यादिति शंकते॥ भोजनादीति॥ अपरोक्षज्ञा

कर्मनिमित्तदेवतादिसर्वसाधनविज्ञानोपमर्देन ह्यात्मज्ञानं विधीयते॥ नचोपमर्दितक्रियाकारकादिविज्ञानस्य कर्मप्रवृत्तिरुपपद्य
ते विशिष्टक्रियासाधनादिज्ञानपूर्वकत्वात्क्रियाप्रवृत्तेर्नहि देशकालाद्यनवच्छिन्नास्थूलाद्वयादि ब्रह्मप्रत्ययधारिणः कर्मावसरोस्ति॥
भोजनादिप्रवृत्त्यवसरवत्स्यादिति चेत् न अविद्यादिकेवलदोषनिमित्तत्वाद्भोजनादिप्रवृत्तेरावश्यकत्वानुपपत्तेः॥ नतु तथाऽनियतंक
दाचित्क्रियते कदाचिन्न क्रियते चेति नित्यं कर्मोपपद्यते केवलदोषनिमित्तत्वाच्च भोजनादिकर्मणोऽनियतत्वं स्याद्दोषोद्भवाभिभवयोरनि
यतत्वात्कामानामिव काम्येषु॥ शास्त्रनिमित्तकालाद्यपेक्षत्वाच्च नित्यानामनियतत्वानुपपत्तिर्दोषनिमित्तत्वे सत्यपि यथा काम्याग्निहोत्रस्य
शास्त्रविहितत्वात्सायंप्रातःकालाद्यपेक्षत्वमेवं॥

नवतो वापरोक्षज्ञानवतो वा भोजनादिप्रवृत्तिर्नाद्योनभ्युपगमात्तत्प्रवृत्तेर्बाधितानुवृत्तिमात्रत्वादग्नि
होत्रादेरबाधिताभिमाननिमित्तस्य तथात्वानुपपत्तेरित्यभिप्रेत्याह॥ नेति॥ न द्वितीयः॥ परोक्षज्ञानिनः शास्त्रानपेक्षक्षुत्पिपासादिदोषकृतत्वात्तत्प्रवृत्तेरि
ष्टत्वादित्याह॥ अविद्यादीति॥ अग्निहोत्राद्यपि तथा स्यादिति चेन्नेत्याह॥ नत्विति॥ भोजनादिप्रवृत्तेरावश्यकत्वानुपपत्तिं विवृणोति॥ केवलेति॥ ननु तथे
त्यादि प्रपंचयति॥ शास्त्रनिमित्तेति॥ तर्हि शास्त्रविहितकालाद्यपेक्षत्वान्नित्यानामदोषप्रभवत्वं भवेदित्याशंक्याह॥ दोषेति॥ एवं दोषकृतत्वेपि नित्यानां श

एवमिति॥भोजनादेर्दोषकृतत्वेपिचातुर्वर्ण्यंचरेद्भैक्ष्यंयतीनांतुचतुर्गुणमित्यादिनियमवद्विदुषोग्निहोत्रादिनियमोपिस्यादितिशंकते॥तद्भोजना
दीति॥विदुषोनास्तिभोजनादिनियमोतिक्रांतविधित्वात्॥नचैतावतायथेष्टचेष्टापत्तिरधर्माधीनाऽविवेककृताहिसानतौविदुषोविद्येतेऽतोऽ
विद्यावस्थायामप्यसतीयथेष्टचेष्टाविद्यादशायांकुतःस्यात्संस्कारस्याप्यभावाद्बाधितानुवृत्तेश्चाग्निहोत्रादेस्तन्नाभासत्वान्नबाधितानुवृत्तिरि
त्याह॥नेति॥किंच॥अविदुषांविविदिषूणामेवनियमस्तेषांविधिनिषेधगोचरत्वान्नचतेषामप्येषज्ञानोदयपरिपंथीतस्यान्यनिवृत्तिरूपस्य
स्वयंक्रियात्वाभावान्नापिसक्रियामाक्षिपतेब्रह्मविद्यांप्रतिक्षिपति॥अन्यनिवृत्त्यात्मनस्तदाक्षेपकत्वासिद्धेरित्याह॥नियमस्येति॥कर्मसुरागादि

तद्भोजनादिप्रवृत्तौनियमवत्स्यादितिचेन्न॥नियमस्याक्रियात्वात् क्रियायाश्चाप्रयोजकत्वात्॥नासौज्ञानस्यापवादकरःत
स्मात्परमात्मयाथात्म्यज्ञानविधेरपितद्विपरीतस्थूलदेहादिज्ञाननिवर्तकत्वात्सामर्थ्यात्सर्वकर्मप्रतिषेधविध्यर्थत्वंसंप
द्यते कर्मप्रवृत्त्यभावस्यतुल्यत्वात् यथाप्रतिषेधविषये

मतोधिकाराद्बहिरक्तस्यज्ञानाधिकाराज्ज्ञानिनोदेहत्वभावादेवकर्माभावात्तस्य
भोजनाद्यतुल्यत्वात्तत्वमादेःसर्वव्यापारोपरमात्मकज्ञानहेतोर्निवर्तकत्वेनप्रामाण्यंप्रतिपादितमुपसंहरति॥तस्मादिति॥तस्यविधिरूपपादकं
वाक्यंतस्यनिषेधवाक्यवत्तत्वज्ञानहेतोस्तद्विरोधिमिथ्याज्ञानध्वंसित्वादशेषव्यापारनिवर्तकत्वेनकूटस्थवस्तुनिष्ठस्ययुक्तंप्रामाण्यंमिथ्याज्ञान
ध्वंसेदेहत्वभावेफलाभावन्यायेनसर्वकर्मनिवृत्तेरित्यर्थः॥तत्सदोपात्तंहेतुमेवस्पष्टयति॥कर्मप्रवृत्तीति॥यथाप्रतिषेध्येभक्षणादौप्रतिषेधशास्त्र
वशात्प्रवृत्त्यभावस्तथातत्त्वमस्यादिवाक्यसामर्थ्यात्कर्मस्वपिप्रवृत्त्यभावस्यतुल्यत्वात्प्रामाण्यमपितुल्यमित्यर्थः प्रतिषेधशास्त्रसाम्येतत्वमस्यादि
शास्त्रस्योच्यमानेतथैवनिवृत्तिनिष्ठत्वंस्यान्नवस्तुप्रतिपादकत्वमित्याशंक्याह॥

तस्मादिति॥ प्रतिषेधोहिप्रसक्तक्रियांनिवर्त्तयंस्तदुपलक्षितौदासीन्यात्मकेवस्तुनिपर्यवस्यतितथातत्त्वमस्यादिवाक्यस्यापिवस्तुप्रतिपाद
कत्वमविरुद्धमित्यर्थः वेदांतानांसिद्धेप्रामाण्यवदर्थवादादीनामन्यपराणामपिसंवादविसंवादयोरभावेस्वार्थेमानत्वसिद्धौसिद्धाविशुध्या
दिगुणवतीप्राणदेवतेतिचकारार्थः॥१॥ज्ञानमिहपरीक्ष्यमाणमित्येतत्प्रसंगागतंविचारंपरिसमाप्यतेहवाचमित्यादिव्याचष्टे॥तेदेवाइति॥अचे
तनायावाचोनियोज्यत्वंवारयति वागभिमानिनीमिति॥नियोक्तॄणांदेवानामभिप्रायमाह॥वाग्देवतेति॥नन्वौद्गात्रंकर्मजपमंत्रप्रकाश्यादेवतानि
र्वर्त्तयिष्यतिनतुवाग्देवतेतितत्राह॥तामेवेति॥असतोमासद्गमयेतिजपमंत्राभिधेयांदृष्ट्वेतद्इतिपूर्वेणसंबंधः॥वागाद्याश्रयंकर्त्तृत्वादिदर्शय

तस्मात्प्रतिषेधविधिवच्चवस्तुप्रतिपादनंतत्परत्वंचसिद्धंशास्त्रस्य॥१॥तेदेवाःहएवंविनिश्चित्यवाचंवागभिमानिनींदेवतामूचुरु
क्तवंतः त्वंनोऽस्मभ्यमुद्गायऔद्गात्रंकर्मकुरुष्वदाग्देवतानिर्वर्त्यमौद्गात्रंकर्मदृष्टवंतस्तामेवचदेवतांजपमंत्राभिधेयांअसतोमास
द्गमयेति अत्रचोपासनायाःकर्मणश्चकर्त्तृत्वेनवागादयएवविवक्ष्यंते॥कस्मात्॥यस्मात्परमार्थतस्तत्कर्तृकस्तद्विषयएवचसर्वोज्ञान
कर्मसंव्यवहारोवक्ष्यतिहिध्यायतीवलेलायतीवेत्यात्मकर्त्तृकत्वाभावंविस्तरतः षष्ठे

तोऽर्थवादस्यप्रासंगिकंतात्पर्यमाह॥अत्रचेति॥आ
त्माश्रयकर्त्तृत्वादाववभासनेतस्यवागाद्याश्रयत्वभासनमयुक्तमित्याह॥कस्मादिति॥परस्यजीवस्यवाकर्त्तृत्वादिविवक्षितमितिविकल्प्याद्यंदूषयति
॥यस्मादिति॥विचारदशायांवागादिसंघातस्यक्रियादिशक्तिमत्वात्कर्त्तृत्वादिस्तदाश्रयोयस्मात्प्रतीतस्तस्मात् परस्यात्मनःस्वतस्तच्छक्तिशून्यस्य
नतदाश्रयत्वमित्यर्थः किंचाविद्याश्रयःसर्वोव्यवहारोनतद्धीनेपरस्मिन्नवतरतीत्याह॥तद्विषयेति॥कर्त्ताशास्त्रार्थवत्वादितिन्यायेनकर्तृत्वमात्म
नोंगीकर्त्तव्यमित्याशंक्ययथाचतक्षोभयथेतिन्यायादौपाधिकंतस्मिन्कर्त्तृत्वमभिप्रेत्याह॥वक्ष्यतिहीति॥यदुक्तमविद्याविषयःसर्वोव्यवहारइतितत्र

इहापीति॥इतश्चपरस्मिन्नात्मनिकर्त्तृत्वादिव्यवहारोनास्तीत्याह॥अव्याकृतात्विति॥अनामरूपकर्मात्मकमित्यस्मादुपरिष्टात्तत्पदमध्याहर्त्तव्यंपृथ
गविद्याविषयत्वात्क्रियाकारकफलजातादितिशेषः॥माभूत्परमात्माकर्तृत्वाद्याश्रयोजीवस्तुस्यादितिद्वितीयमाशंक्याह॥यस्त्विति॥जीवश
ब्दवाच्यस्यविशिष्टस्यकल्पितत्वान्नतात्विकंकर्तृत्वादिकंकिंतुतद्द्वारास्वरूपेसमारोपितमितिभावः॥आत्मनितात्विककर्त्तृत्वाद्यभावेफलितम

इहापिचाध्यायांतेउपसंहरिष्यत्यव्याकृतादिक्रियाकारकफलजातंत्रयंवाइदंनामरूपंकर्मेत्यविद्याविषयमव्याकृतात्तुयत्परंपरमा
त्माख्यंविद्याविषयंअनामरूपकर्मात्मकंनेतिनेतीतरप्रत्याख्यानेनोपसंहरिष्यतिपृथक्॥यस्तुवागादिसमाहारोपाधिपरिकल्पितः
संसार्यात्मातंचवागादिसमाहारपक्षपातिनमेवदर्शयिष्यतिएतेभ्योभूतेभ्यःसमुत्थायतान्येवानुविनश्यतीति॥तस्मात्प्रयुक्तावागादीनामे

तेहवाचमूचुस्त्वंनउद्गायेतितथेतितेभ्योवागुदगायद्योवाचिभोग

वद्ध्यानकर्मकर्तृत्वफलप्राप्तिविवक्षा॥तथेति॥तथास्त्वितिदेवैरुक्तावाक्तेभ्योऽर्थिभ्योर्थायोदगायत्॥उद्गानंकृतवतीकः पुनरसौदेवेभ्योर्था
यउद्गानकर्मणावाचानिर्वर्त्तितःकार्यविशेषइत्युच्यतेयोवाचिनिमित्तभूतायांवागादिसमुदायस्ययउपकारोनिष्पद्यतेवदनादिव्यापारेणस
एव

र्थवादस्तात्पर्यमुपसंहरति॥तस्मादिति॥तात्पर्यमर्थवादस्योक्तानियुक्तयावाग्देवतयायत्कृतंतदुपन्यस्यति॥तथेत्यादिना॥उद्गातृत्वंजपमंत्र
प्रकाश्यत्वंचात्मनोंगीकृत्यवागुद्गानेप्रवृत्ताचेत्तयाकश्चिदुपकारोदेवानामुद्गानेननिर्वर्त्तनीयःसचनास्तीतिशंकते॥कःपुनरिति॥वदनादिव्यापारेसतियः
सुखविशेषःसंघातस्यनिष्पद्यतेसएवकार्यविशेषइत्याह॥उच्यतइति॥योवाचीतिप्रतीकमादायव्याख्यायते॥कथंपुनर्वाचोवचनंचक्षुषोदर्शनमित्यादि

सर्वेषामिति॥किंच॥देवार्थमुद्गायंस्यावाचः स्वार्थमपिकिंचिदुद्गानमस्तितथाचज्योतिष्टोमेद्वादशस्तोत्राणितत्रत्रिषुपवमानाख्येषुस्तोत्रेषुयाजमानंफल
मुद्गानेनकृत्वावशिष्टेषुनवसुस्तोत्रेषुयत्कल्याणवदनसामर्थ्यंतदात्मनेस्वार्थमेवाऽगायदित्याह॥तंभोगमिति॥ऋत्विजांकीतत्वान्नफलसंबंधःसंभ
वतीत्याशंक्याह॥वाचनिकमिति॥अथात्मनेऽन्नाद्यमागायेदितिश्रुतमित्यर्थः॥कल्याणवदनसामर्थ्यस्यस्वार्थत्वंसमर्थयते॥तद्धीति कल्या

सर्वेषांह्यसौवाग्वदनाभिनिर्वृत्तोभोगःफलं॥तंभोगंसात्रिषुपवमानेषुकृत्वावशिष्टेषुनवसुस्तोत्रेषुवाचनिकमार्त्विज्यंफलं
यत्कल्याणंशोभनंवदतिवर्णानभिनिर्वर्त्तयतितदात्मनेमह्यमेवतत्ध्यसाधारणंवाग्देवतायाःकर्मयत्सम्यग्वर्णानामुच्चारण
मतस्तदेवविशेष्यतेयत्कल्याणंवदतीति॥यत्तुवदनकार्यंसर्वसंघातोपकारात्मकंतद्याजमानिकमेवतत्रकल्याणवदनात्मसंबं

तेहदेवेभ्यआगायद्यत्कल्याणंवदतितदात्मनेतेविदुरनेनवैनउद्गात्रात्येष्यंतीतितमभिद्रुत्यपाप्मनाविध्य

धात्संगावसरंदेवतायारंध्रमेवप्रतिलभ्यतेविदुरसुराःकथमनेनोद्गात्रानोऽस्मान्स्वाभाविकंज्ञानंकर्मचाभिभूयातीत्यशास्त्रजनित
कर्मज्ञानरूपेणज्योतिषोद्गात्रात्मनाऽत्येष्यंतिअतिगमिष्यंतीत्येवंविज्ञायतमुद्गातारमभिद्रुत्याभिगम्यस्वेनासंगलक्षणेनपाप्मनाऽ
अभिनिवेशेन
विध्यंस्ताडितवंतःसंयोजितवंतइत्यर्थः॥ णवदनंवाचोऽसाधारणंचेत्कस्तर्हियोवाचीत्यादेर्विषयस्तत्राह॥यत्त्विति॥वाग्देवतायामसुराणामव
काशंदर्शयति॥तन्नेति॥स्वार्थेपरार्थेचोद्गानेसतीतियावत्॥कल्याणवदनस्यात्मनावाचैवसंबंधेयोयमासंगोभिनिवेशःसएवावसरोदेवतायास्तमव
सरंप्राप्येत्यर्थः॥अवसरमेवव्याकरोति॥रंध्रमेवेति॥अत्यानतीत्येतिसंबंधः॥कोसावसुरात्ययस्तंव्याचष्टे॥स्वाभाविकमिति॥तत्रोपायमुपन्यस्यति॥शास्त्रेति॥

असुरानभिभूयकेनात्मनादेवाः स्यास्यंतीति विवक्षयायामाह॥ ज्योतिषेति॥ प्रजापतेर्वाचिपाप्मासिप्तोसुरैरितिकुतोवगम्यतेतत्राह॥ सयःस
पाप्मेति॥ प्रतिषिद्धवदनमेवपाप्मेत्ययुक्तमदृष्टस्यक्रियातिरिक्तत्वांगीकारादित्याशंक्याह॥ येनेति॥ असभ्यंसभानर्हंस्त्रीवर्णनादि॥ बी
भत्संभयानकंप्रेतादिवर्णनं॥ अनृतमयथादृष्टवचनं॥ आदिशब्दात्पिशुनत्वंगृह्यते॥ किमत्रप्रजापतेर्वाचिपाप्मसत्वेमानमुक्तंभवतीत्याशं
क्यसएवसपाप्मेतिव्याकरोति॥ अनेनेति॥ प्राजापत्यासुप्रजासुप्रतिपन्नेनासत्यवदनादिनालिंगेनतद्वाचिपाप्मानुमीयते॥ विमतंपाप्मपूर्वं

सयःसपाप्माप्रजापतेःपूर्वजन्मावस्थस्यवाचिसिप्तःसएवप्रत्यक्षीक्रियते॥ कोसौयदेवेदमप्रतिरूपमननुरूपंशास्त्रप्रतिषि
द्धंवदतियेनप्रयुक्तोऽसभ्यबीभत्सानृतान्यनिच्छन्नपिवदति॥ अनेनकार्येणाप्रतिरूपवदनेनानुगम्यमानःप्रजापतेःकार्य

न्स्सयःसपाप्मायदेवेदमप्रतिरूपंवदतिसएवसपाप्मा॥ २॥

भूतासुप्रजासुवाचिवर्ततेसएवाप्रतिरूपवदनेनानुमितःसःप्रजापतेर्वाचिगतःपाप्माकारणानुविधायिहिकार्यमिति॥ २॥

कंप्रतिकूलधीविषयत्वाद्दुःखवद्यःसपाप्माप्रजावाच्यनुमितःसएवप्रजापतिवाचिपाप्मानंगमयतिविमतंकारणपूर्वकंकार्यत्वाद्घटवत्॥ न
चप्रजागतंदुरितंप्राजापत्यंतद्धिनाहेतुत्वंतरादेवस्यात्कारणानुविधायित्वात्कार्यस्य॥ नचतत्कारणेपिपरस्मिन्नसंगोऽपापविद्धमितिश्रुतेः॥ नच
नहवैदेवान्पापंगच्छतीतिश्रुतेर्नसूत्रेपिपापवेधस्तस्यफलावस्थस्यापापत्वेपियजमानावस्थस्यतद्भावादित्यर्थः आद्यसकाराभ्यांकारणस्थंपाप्मानमनू
द्यतस्यैवकार्यस्थत्वमुच्यते॥ उत्तराभ्यांतुकार्यस्थंपाप्मानमनूद्यतस्यैवकारणस्थत्वमितिविभागः ॥ २ ॥

७८

वाग्देवताया जपमंत्रप्रकाश्यत्वमुपास्यत्वंचनेतिनिर्धार्यावशिष्टपर्यायचतुष्टयस्यतात्पर्यमाह॥तथैवेति॥परीक्षाफलनिर्णयमाह॥देवानांचेति॥अनु
पास्यत्वेहेत्वंतरमाह॥इतरेति॥इतरःकार्यकारणसंघातस्तस्मिन्नव्यापकत्वंपरिच्छिन्नत्वमतश्चानुपास्यत्वंजपमंत्राप्रकाश्यत्वंचेत्यर्थः॥उक्तैरिंद्रियै

तथैवघ्राणादिदेवताउद्गीथनिर्वर्तकत्वाज्जपमंत्रप्रकाश्याउपास्याश्चेतिक्रमेणपरीक्षितवंतोदेवानांचैतन्निश्चितमासीद्घ्राणादिदेव
ताःक्रमेणपरीक्ष्यमाणाःकल्याणविषयविशेषात्मसंबंधासंगहेतोरासुरपाप्मसंसर्गादुद्गीथनिर्वर्तनासमर्थाः॥अतोनभिधेयाःअसतो

अथहप्राणमूचुस्त्वंनउद्गायेतितथेतितेभ्यःप्राणउदगायद्यःप्राणेभोगस्तंदेवेभ्यआगायद्यत्कल्याणंजिघ्रतितदात्मने
तेविदुरनेनवैनउद्गात्रात्येष्यंतीतितमभिद्रुत्यपाप्मनाविध्यन्सयःसपाप्मायदेवेदमप्रतिरूपंजिघ्रतिसएवसपाप्मा॥३॥
अथहचक्षुरूचुस्त्वंनउद्गायेतितथेतितेभ्यश्चक्षुरुदगायद्यश्चक्षुषिभोगस्तंदेवेभ्यआगायद्यत्कल्याणंपश्यतितदात्मनेतेवि
दुरनेनवैनउद्गात्रात्येष्यंतीतितमभिद्रुत्यपाप्मनाविध्यन्सयःसपाप्मायदेवेदमप्रतिरूपंपश्यतिसएवसपाप्मा॥४॥अथ
हश्रोत्रमूचुस्त्वंनउद्गायेतितथेतितेभ्यःश्रोत्रमुदगायद्यःश्रोत्रेभोगस्तंदेवेभ्यआगायद्यत्कल्याणꣳशृणोतितदात्मनेतेविदुरने
नवैनउद्गात्रात्येष्यंतीतितमभिद्रुत्यपाप्मनाविध्यन्सयःसपाप्मायदेवेदमप्रतिरूपꣳशृणोतिसएवसपाप्मा ॥ ५ ॥

मासद्गमयेतिअनुपास्याश्चाशुद्धत्वादितराव्यापकत्वाच्चेति॥एवमुक्तत्वङ्मुक्ताअपिएतास्त्वगादिदेवताःक्रमेणपरीक्ष्यमाणाः
रनुक्तेंद्रियाण्युपलक्षणीयानीतिविवक्षित्वोपसंहरति॥एवमिति॥वागादिवत्त्वगादिषुकल्पकाभावान्नपाप्मवेधोस्तीत्याशंक्याह ॥ ॥

कल्याणेति॥ पाप्मभिरुपासृजन्पाप्मनाविध्यन्नित्यनयोरस्ति पौनरुक्त्यमित्याशंक्याख्यानव्याख्येयभावान्नैवमित्याह॥ इति यदुक्तमिति॥ ६॥
संप्रति मुख्यप्राणस्य मंत्रप्रकाश्यत्वमुपास्यत्वं च वक्तुमुत्तरवाक्यमुपादाय व्याकरोति॥ वागादीति॥ क्रमेणोपासीना इति संबंधः॥ वागादिष्वनेन

कल्याणाकल्याणकार्यदर्शनादेवं वागादिवदेवेनाः पाप्मनाविध्यन्पाप्मनाविद्धवंत इति यदुक्तं तत्पाप्मभिरुपासृजन्पाप्म
भिः संसर्गं कृतवंत इत्येतत्॥ ६॥ वागादिदेवताः उपासीना अपि मृत्यतिगमनायाशरणाः संतो देवाः क्रमेण॥ अथानंत
रं ह इममित्यभिनयप्रदर्शनमासन्यं आस्ये भव मासन्यं मुखांतर्बिलस्थं प्राणमूचुस्त्वं न उद्गायेति तथेत्येवं शरणमुपगतेभ्यः

अथ ह मन ऊचुस्त्वं न उद्गायेति तथेति तेभ्यो मन उदगायद्यो मनसि भोगस्तं देवेभ्य आगायद्यत्कल्याणꣳ संक
ल्पयति तदात्मने ते विदुरनेन वै न उद्गात्रात्येष्यंतीति तमभिद्रुत्य पाप्मनाविध्यन्स यः स पाप्मा यदेवेदमप्रति
रूपꣳ संकल्पयति स एव स पाप्मैवमु खल्वेता देवताः पाप्म भिरुपासृजन्नेवमेनाः पाप्मनाविध्यन्॥ ६॥

स एष प्राणो मुख्य उदगायदित्यादि पूर्ववत्पाप्मनाविव्यत्सन्वेधनं कर्तुमिष्टवंतस्ते च दोषासंसर्गिणं संतं मुख्यं प्राणं स्वेनासंग
दोषेण वागादिषु लब्धावसराः तदभ्यासानुवृत्त्या संश्लिस्यमाणा विनेशुः विनष्टाः विध्वस्ताः कथमिवेति दृष्टांत उच्यते ॥

श्यानंतर्यमथशब्दार्थः॥ विवक्षितार्थज्ञापको साधारणो देहतदवयवव्यापारोऽभिनयः॥ दोषासंसर्गिणं दोषेण संसृष्टं कर्तुमिच्छा कुतो जातेत्याशं
क्याह॥ स्वेनेति॥ तदभ्यासानुवृत्त्या तस्य पाप्मसंसर्गकरणस्याभ्यासवशादिति यावत्॥ उक्तमर्थं दृष्टांतेन स्पष्टयति॥ कथमित्यादिना ॥

———— असुरनाशेनासंगजनितपाप्मवियोगेहेतुमाह॥असंसर्गेति॥वक्ष्यमाणंसोऽग्निरभवदित्यादिनेतिशेषः॥वागादीनांस्थितानांनष्टानांचकु
तोऽग्न्यादिरूपत्वमित्याशंक्याह॥पूर्वमपीति॥नतर्हितेषांपरिच्छेदाभिमानःस्यादित्याशंक्याह॥स्वाभाविकेनेति॥परिच्छेदाभिमानादग्न्याद्यात्माभिमान

सयथासदृष्टांतोयथालोकेऽश्मानंपाषाणमृत्वाप्राप्यलोष्टःपांसुपिंडःपाषाणचूर्णनायाश्मनिनिक्षिप्तःस्वयंविध्वंसेतविस्रंसेतविचूर्णीभ
वेदेवंहैवयथायंदृष्टांतएवमेवविध्वंसमानाविशेषेणध्वंसमानाविष्वंचोनानागतयोविनेशुःविनष्टायतस्ततस्तस्मादसुरविनाशाद्दे
वत्वप्रतिबंधभूतेभ्यःस्वाभाविकासंगजनितपाप्मभ्योवियोगात्॥असंसर्गधर्मिमुख्यप्राणाश्रयबलाद्वावागादयःप्रकृताअभवन्

अथहेममासन्यंप्राणमूचुस्त्वंनउद्गायेतितथेतितेभ्यएषप्राणउद्गायत्तेविदुरनेनवैनउद्गात्राऽत्येष्यंतीतितमभिद्रुत्यपा
प्मनाविव्यत्सन्त्सयथाश्मानमृत्वालोष्टोविध्वꣳसेतैवꣳहैवविध्वꣳसमानाविष्वंचोविनेशुस्ततोदेवाअभवन्॥

किमभवन्स्वंदेवतारूपमग्न्याद्यात्मकंवक्ष्यमाणंपूर्वमप्यग्न्याद्यात्मानएवसंतःस्वाभाविकेनपाप्मनातिरस्कृतविज्ञानाःपिंडमात्राभिमा
नाआसन्तेतत्पाप्मवियोगादुज्झित्वापिंडमात्राभिमानंशास्त्रसमर्पितवागाद्यग्न्याद्यात्माभिमानाबभूवुरित्यर्थः॥किंच॥तेप्रतिपक्षभूता
असुराःपराभवन्तीत्यनुवर्तते॥पराभूताविनष्टाइत्यर्थः॥ स्यबलवत्त्वंसूचयति॥शास्त्रेति॥नकेवलमत्रोक्तानामेवासुराणामसंसर्गधर्मिप्राणाश्र
याद्विनाशःकिंतुतत्तुल्यजातीयानामपीत्यभिप्रेत्याह॥किंचेति॥वागादीनामग्न्यादिभावापत्तिवचनेनतत्संहतस्ययजमानस्यदेवताप्राप्तिरासुरपाप्मध्वं
सश्चफलमित्युक्तं॥तत्रपूर्वकल्पीययजमानस्यातिशयशालित्वाद्यथोक्तफलवत्त्वेऽपिनेदानींतनस्यैवमित्याशंक्यपरास्यभवतीत्यादिश्रुतिमवतारयति॥

यथेति॥पूर्वकल्पनाप्रकारेणपूर्वजन्मस्थोयजमानःशास्त्रप्रकाशितंवर्त्तमानप्रजापतित्वंप्रतिपन्नोयथेतिसंबंधः॥पूर्वयजमानइत्यस्यव्याख्याअति
क्रांतकालिकइति॥पुराकल्पमेवदर्शयति॥एतामिति॥तेनेतिश्रुत्युक्तेनेत्येतत्॥तेनैवविधिनाश्रुतिप्रकाशितेनक्रमेणमुख्यंप्राणंपरमात्मत्वेनोप
गम्येतिशेषः॥सपत्नोभ्रातृव्यस्तस्यद्विषन्निनितिकुतोविशेषणमर्थसिद्धत्वाद्द्वेषस्येत्याशंक्याह यतइति॥तस्यद्वेष्टृत्वनियमेहेतुमाह॥पारमार्थिके

यथापुराकल्पेनवर्णितःपूर्वयजमानोऽतिक्रांतकालिकःएतामेवाख्यायिकारूपांश्रुतिंदृष्ट्वातेनैवक्रमेणवागादिदेवताःपरीक्ष्यता
श्चापोह्यासंगपाप्मास्पददोषवत्त्वेनादोषास्पदंमुख्यप्राणमात्मत्वेनोपगम्यवागाद्याध्यात्मिकपिंडमात्रपरिच्छिन्नात्माभिमानंहित्वावै
राजपिंडाभिमानंवागाद्यग्न्याद्यात्मविषयंवर्त्तमानप्रजापतित्वंशास्त्रप्रकाशितंप्रतिपन्नःतथैवायंयजमानस्तेनैवविधिनाभवति

परासुराभवत्यात्मनापरास्यद्विषन्भ्रातृव्योभवतियएवंवेद॥७॥

प्रजापतिस्वरूपेणात्मनापराचास्यप्रजापतित्वप्रतिपक्षभूतःपाप्माभ्रातृव्योभवति यतोद्वेष्टापिभवतिकश्चिद्भ्रातृव्योभरतादित्
त्योयस्त्विंद्रियविषयासंगजनितःपाप्माभ्रातृव्योद्वेष्टाचपारमार्थिकात्मस्वरूपतिरस्करणहेतुत्वात्सचपराभवतिविशीर्यतेलोष्टव
त्प्राणपरिष्वंगात्॥कस्यैतत्फलमित्याह यएवंवेद यथोक्तंप्राणमात्मत्वेनप्रतिपद्यतेपूर्वयजमानवदित्यर्थः॥७॥ ति॥अपरिच्छिन्नदे
वतात्वमत्रपारमार्थिकमात्मस्वरूपंविवक्षितंतत्तिरस्करणकारणत्वादुक्तपाप्मनोविशेषणमर्थवदितिशेषः॥यदाग्नेयोष्टाकपालइतिवद्यएवंवेदेतिप्र
सिद्धार्थोपबंधेपिविधिपरंवाक्यमतश्चैवंविद्यादितिविवक्षितमित्यभिप्रेत्याह॥यथोक्तमिति॥७॥फलवत्प्रधानोपास्तेरुक्तत्वात्तेहोचुरित्याद्युत्तरवाक्यं

फलवंतंप्रधानविधिमुक्त्वासंप्रत्याख्यायिकामेवाश्रित्यगुणविशिष्टप्राणोपासनमाहानंतरश्रुतिरित्यर्थः॥शंकोत्तरत्वेनचोत्तरग्रंथमवतारयतिकस्मा
च्चेति॥विशुद्धत्वस्योक्तत्वाद्वेत्वंतरंजिज्ञास्यमितिद्योतयितुंचशब्दः॥करणानांकार्यस्यतदवयवानांचप्राणोयस्मादात्माव्यापकस्तस्मात्सएवाश्रयि
तव्यइत्युपपत्तिनिरूपणार्थंतस्यव्यापकत्वमित्येतदर्थमाख्यायिकयादर्शयंतीश्रुतिर्हेत्वंतरमाहेतियोजना॥तद्धब्दस्तस्मादर्थे॥प्राणस्यात्मत्वादि

फलमुपसंहृत्याधुनाख्यायिकारूपमेवाश्रित्याह॥कस्माच्चहेतोर्वागादीन्मुक्त्वामुख्यएवप्राणआत्मत्वेनाश्रयितव्यइतितदुपपत्तिनि
रूपणाययस्मादयंवागादीनांपिंडादीनांचसाधारणआत्मेत्येतमर्थमाख्यायिकयादर्शयंत्याहश्रुतिः॥तेप्रजापतिप्राणामुख्येनप्रा
णेनपरिप्रापितदेवस्वरूपाहऊचुरुक्तवंतःफलावस्थाःकिमित्याहश्रुतिःक्वन्विति वितर्केक्वनुकस्मिन्नुसोऽभूत्कःयोनोऽस्मानि

तेहोचुःक्वनुसोभूद्योनइत्थमसक्तेत्यय

त्थमेवमसक्तसंजितवान्देवभावायात्मत्वेनोपगमितवान्॥स्मरंतिहिलोकेकेनचिदुपकृताउपकारिणंलोकवदेवस्मरंतोविचारयमा
णाःकार्यकरणसंघातेआत्मन्येवोपलब्धवंतः॥कथमयमास्येंतरितिआस्येमुखेयआकाशस्तस्मिन्नंतरयंप्रत्यक्षोवर्त्ततइतिसर्वोहि
लोकोविचार्याध्यवस्यतितथादेवाः व्यक्तीकर्त्तुमाख्यायिकाश्रुतिंविभजते॥तेप्रजापतीति॥वागादयश्चेत्प्राणमाश्रित्यफलावस्थास्तर्हिकि
मितिप्राणंस्मरंतिप्राप्तफलत्वादित्याशंक्याह॥स्मरंतिहीति॥विचारफलंउपलब्धिंकथयति॥लोकवदिति॥तामेवोपलब्धिमाकाशद्वारेणवि
वृणोति॥कथमिति॥दृष्टांतंस्पष्टयति॥सर्वोहीति॥तथादेवाविचार्यप्राणमास्यांतराकाशस्थंनिर्धारितवंतइत्याह॥तथेति॥किमनयाकथयासिद्धमि

यस्मादिति॥उपलब्धिसिद्धेर्थे युक्तिं समुच्चिनोति॥विशेषेति॥सर्वानेव वागादीन्न विशेषेणाग्न्यादिभावेन प्राणः संजितवान्नचामध्यस्थः
साधारणं कार्यं निर्वर्तयत्यतो युक्तितोप्ययमास्यांतराकाशे वर्त्तमानः सिद्ध इत्यर्थः अयास्यत्ववदांगिरसत्वं गुणांतरं दर्शयति॥अत एवेति
॥सर्वसाधारणत्वादेवेति यावत्॥तथापि कुतोस्यांगिरसत्वं साधारणेपि न भसितद्नुपलब्धेरित्याशंक्य परिहरति॥कथमित्यादिना॥अंगेभ्य

यस्मादयमंतराकाशे वागाद्यात्मत्वेन विशेषमनाश्रित्य वर्त्तमान उपलब्धो दैवैस्तस्मात्स प्राणः अयास्यो विशेषानाश्रयात्त्वासक्त सं
जितवान्वागादीनत एवांगिरसः॥आत्मा कार्यकरणानां॥कथमांगिरसः प्रसिद्धं ह्येतदंगानां कार्यकरणलक्षणानां रसः सार आत्मे
त्यर्थः॥कथं पुनरंगरसत्वं तदपाये शोषप्राप्तेरिति वक्ष्यामः यस्माच्चायमंगरसत्वाद्विशेषानाश्रितत्वाच्च कार्यकरणानां साधारण आ

मास्येंतरितिसोयास्य आंगिरसोंगानां हि रसः॥८॥

त्माविशुद्धश्च तस्माद्वागादीनपास्य प्राण एवात्मत्वेनाश्रयितव्य इति वाक्यार्थः॥आत्मा ह्यात्मत्वेनोपगंतव्यो विपरीतबोधाच्छ्रेयः प्रा
प्तेर्विपर्यये चानिष्टप्राप्तिदर्शनात्॥स्यान्मतं प्राणस्य विशुद्धिरसिद्धेति॥ननु परिहृतमेतद्वागादीनां कल्याणवदनाद्यासंगवत्प्राण
स्यासंगास्पदत्वाभावेन॥ चरमधातोः सारत्वप्रसिद्धेर्न प्राणस्य तथात्वमिति शंकित्वा समाधत्ते कथं पुनरित्यादिना॥कस्माच्च हेतोरित्यादिचो
द्यपरिहारमुपसंहरति॥यस्माच्चेति॥वाक्यार्थं प्रपंचयति॥आत्मा हीति॥८॥प्राणस्य शुद्धत्वाद्व्यापकत्वाच्चोपास्यत्वमुक्तं तस्य शुद्धत्वं वागादिवदसि
द्धमित्याशंकते॥स्यान्मतमिति॥शंकामाक्षिप्य समाधत्ते नन्वित्यादिना शवेन स्पृष्टिर्यस्यास्ति तेन स्पृष्टाः परस्पराः शुद्धता वदशुद्धत्वं वागादिसंबंधार

39

तात्पर्यं दर्शयन्नुत्तरवाक्यमुत्तरत्वेनावतारयति॥ आहेति॥ नन्वत्र प्राणो नोच्यते स्त्रीलिंगेनार्थान्तरोक्तिप्रतीतेरित्याशंक्याह॥ यं प्राणमिति॥ त स्यामूर्तस्य परोक्षत्वादपरोक्षवाची च कथमेतच्छब्दो युज्यते तत्राह॥ सैवेति॥ कथं प्राणे देवताशब्दो न हि तस्य तच्छब्दत्वं प्रसिद्धमित्याशंक्याह॥ देवता चेति॥ यागे हि देवताकारकत्वेन गुणभूता प्रसिद्धा॥ तथा प्राणोपि द्रव्याद्यन्यत्वे सति विहितक्रियागुणत्वाद्देवतेत्यर्थः॥ प्राणोपास्तेर्द्धि विधं फ

वादं॥ किं त्वांगिरसत्वेन वागादीनामात्मत्वोक्त्या वागादिद्वारेण शवस्पृष्टितत्स्पृष्टेरिवाशुद्धताशंक्यते इत्याह॥ शुद्ध एव प्राणः कुतः सा वा एषा देवता दूर्नाम यं प्राणं प्राप्याश्मानमिव लोष्टवद्विध्वस्ता असुराः तं परामृशति सैवैषा येयं वर्त्तमानयजमानशरीरस्था देवैर्निर्धारिताः यमास्येंतरिति देवता च सा स्यात् उपासनाक्रियायाः कर्मभावेन गुणभूतत्वात्॥ यस्मात्साद्दूर्नाम दूरित्येवं ख्याता नामशब्दः ख्यापनपर्यो

सा वा एषा देवता दूर्नाम

यः तस्मात्प्रसिद्धास्याः विशुद्धिः दूर्नामत्वात्॥ कुतः पुनर्दूर्नामत्वमित्याह दूरं दूरे हि यस्मादस्याः प्राणदेवतायाः मृत्युरासंगलक्षणः पाप्माऽसंश्ले षधर्मित्वात्प्राणस्य समीपस्थस्यापि दूरता मृत्योस्तस्मात् दूरित्येवं ख्यातिरेवं प्राणस्य विशुद्धिज्ञापिका ख्यायिका विदुषः फलमुच्यते दूरं ह वा अस्मान्मृत्युर्भवति अस्मादेवं विदः य एवं वेद तस्मादेवमिति प्रकृतं विशुद्धिगुणोपेतं प्राणमुपास्त इत्यर्थः॥ लेपापहानिर्देवताभावश्चात्र पाप हानेरेव प्रधानफलस्यात्र श्रवणाद्गुणविशिष्टप्राणोपास्तिरिह विवक्षितेति वाक्यार्थमाह यस्मादिति न तावत्प्राणदेवताया दूर्नामत्वं निरूढं तत्र तच्छब्दप्र सिद्धेरदर्शनान्नापि यौगिकं प्राणस्य प्रत्यग्वृत्तेर्दूरत्वाभावादित्याक्षिपति॥ कुतः पुनरिति॥ परिहरति॥ आहेति॥ कथं पाप्मसंन्निधौ वर्त्तमानस्य ततो दूरत्व

उपास्ते सदा भावयतीति यावत्॥ ब्रह्मज्ञानादिवत्प्राणतत्त्वज्ञानात्फलसिद्धिसंभवे किं सदा तद्भावनयेत्याशंक्य भावनापर्यायोपासनशब्दार्थमाह॥ उपासनं नामेति॥ दीर्घकालादरनैरंतर्यरूपविशेषणत्रयं विवक्षित्वाह॥ लौकिकेति॥ तस्य मर्यादां दर्शयति॥ यावदिति॥ मनुष्योहमितिवद्देवो हमिति यस्य जीवत एवाभिमानाभिव्यक्तिस्तस्यैव देहपातादूर्ध्वं तद्भावः फलतीत्यत्र प्रमाणमाह॥ देवो भूत्वेति॥ का देवता रूपं तवेति किं देवतो सीति तद्भावो भातीत्यर्थः॥ १॥ कंडिकांतरमवतार्य वृत्तं कीर्त्तयति॥ सा वा इति॥ नित्यानुष्ठानात्पापहानिर्धर्मात्पापस्य यच्छ्रुतेर्न चेदमुपासनं नित्यं नै

उपासनं नामोपास्यार्थवादे यथा देवतादिस्वरूपं श्रुत्या ज्ञाप्यते तथा मनसोपगम्यासनं चिंतनं लौकिकप्रत्ययाव्यवधानेन यावत्तद्देव तादिस्वरूपात्माभिमानाभिव्यक्तिरिति लौकिकात्माभिमानवत्॥ देवो भूत्वा देवानप्येति किं देवतोऽस्यां प्राच्यां दिश्यसीत्येवमादिश्रु

दूरꣳह्यस्या मृत्युर्दूरꣳह वा अस्मान्मृत्युर्भवति य एवं वेद॥ १॥

तिभ्यः॥ १॥ सा वा एषा देवता दूरं ह वा अस्मान्मृत्युर्भवतीत्युक्तं कथं पुनरेवंविदो दूरं मृत्युर्भवतीत्युच्यते एवंवित्त्वविरोधादिंद्रियवि षयसंसर्गासंगजो हि पाप्मा प्राणात्माभिमानिनो हि विरुध्यते॥ वागादिविशेषात्माभिमानहेतुत्वात्स्वाभाविकाज्ञानहेतुत्वाच्च ॥

मित्ति कं वा देवतात्मत्वकामिनो विधानात्तत्कथं पापमेवंविदो दूरे भवतीत्याक्षिपति॥ कथं पुनरिति॥ विरोधसंनिपाते पूर्वध्वंसमावश्यकं मन्वानः समा धत्ते उच्यत इति उक्तमेव व्यनक्ति॥ इंद्रियेति॥ इंद्रियाणां विषयेषु संसर्गे योऽभिनिवेशस्तेन जनितः पाप्मा परिच्छेदाभिमानोऽपरिच्छिन्ने प्राणात्मन्या त्माभिमानवतो विरुध्यते परिच्छेदापरिच्छेदयोर्विरोधस्य प्रसिद्धत्वादित्यर्थः विरोधं साधयति॥ वागादीति॥ पाप्मनो वागादिविशेषवत्यात्मनि विशिष्टेऽभिमा

३.२. ३८

दृश्यते हि चांडालभांडावलंबिनो जलस्य गंगाद्यविशेषभावापत्तावपेयत्वनिवृत्तिरशुच्यपि पयः प्राप्य गंगां याति पवित्रतामिति न्यायादित्य
र्थः॥ यन्नैसर्गिकाज्ञानजन्यं तदागंतुकप्रमाज्ञानेन निवर्तते॥ यथा रज्जुसर्पादिज्ञानं नैसर्गिकाज्ञानजन्यश्च पाप्मा तेन प्रामाणिकप्राणविज्ञाने
न तद्बुद्धिरित्याह॥ स्वाभाविकेति॥ नन्वभिमानयोर्विरोधाविशेषाद्बाध्यबाधकत्वव्यवस्थायोगाद्द्वयोरपि मिथ्यो बाधः स्यात्तत्राह॥ शास्त्रजनितो हि

शास्त्रजनितो हि प्राणात्माभिमानस्तस्मादेवंविदः पाप्मा दूरं भवतीति युक्तं विरोधात्तदेतत्प्रदर्शयति॥ सा वा एषा देवतेत्युक्तार्थमेता
सां वागादीनां देवतानां पाप्मानं मृत्युं स्वाभाविकाज्ञानप्रयुक्तेंद्रियविषयसंसर्गासंगजनितेन हि पाप्मना सर्वो म्रियते स ह्यतो मृत्यु
स्तं प्राणात्माभिमानरूपाभ्यो देवताभ्योऽपच्छिद्यापहत्य प्राणात्माभिमानमात्रतयैव प्राणोपहंतेत्युच्यते॥ विरोधादेव तु पाप्मैवंविदो

सा वा एषा देवतैतासां देवतानां पाप्मानं मृत्युमपहत्य यत्रासां दिशामंतस्तद्गमयांचकार तदासां पाप्मनो विन्यदधात्

दूरंगमो भवति॥ किं पुनश्चकार देवतानां पाप्मानं मृत्युमपहत्येत्युच्यते॥ यत्र यस्मिन्नासां प्राच्यादीनां दिशामंतोऽवसानं तत्तत्र ग
मयांचकार गमनं कृतवानित्येतत्॥ ननु नास्ति दिशामंतः कथमंतं गमितवानित्युच्यते॥ ति॥ उक्तमेव पापध्वंसरूपं विद्याफलं प्रपंच
यितुमुत्तरवाक्यमित्याह तदेतदिति॥ मृत्युमपहत्य यत्रासां दिशामंतस्तद्गमयांचकारेति संबंधः॥ कथं पाप्मा मृत्युरुच्यते तत्राह॥ स्वाभाविकेति॥ अ
पहत्येत्यत्र पूर्ववदन्वयः॥ प्राणदेवता चेत्पाप्मानं हंति स देव किं न हन्यादित्याशंक्याह॥ प्राणात्मेति॥ भवतु प्राणो वागादीनां पाप्मनोपहंता विदुषस्तु
किमायातमित्याशंक्याह॥ विरोधादेवेति॥ अनंताकाशदेशत्वाद्दिशामंताभावाद्यत्रासामित्याद्ययुक्तमिति शंकते॥ नन्विति ॥

तै॰५

भा॰

एमः ३८

मध्यदेशस्येतिशेषः२
शास्त्रीयज्ञानकर्मसंस्कृतजनाधिष्ठितमध्यदेशातिरिक्तोदेशोदिशामंत इतिभावः१

शास्त्रीयज्ञानकर्मसंस्कृतजनोमध्यदेशः प्रसिद्धस्यापितदधिष्ठितत्वेन मध्यदेशत्वात्तत्रापिअंत्यजाधिष्ठितदेशस्यपापीयस्त्वस्वीकारादतस्तंजनंतद धिष्ठितंचदेशमवधिंकृत्वातेनैवनिमित्तेनदिशांकल्पितत्वादानंत्याभावात्पूर्वोक्तजनातिरिक्तजनस्यतदधिष्ठितदेशस्यचांतत्वोक्तेर्मध्यदेशा दन्योदेशोदिशामंतइत्युक्तेनकाचिदनुपपत्तिरितिपरिहरति॥उच्यतइति॥किमित्यंत्यजनेष्वित्यधिकावापःक्रियतेतत्राह॥इतिसामर्थ्यादिति॥दे

श्रोतविज्ञानवज्जनावधिनिमित्तकल्पितत्वाद्दिशांतद्विरोधिजनाध्युषितएवदेशोदिशामंतोदेशांतोरण्यमितियद्वदित्यदोषःतत्त त्रगमयित्वाःसांदेवतानांपाप्मनइतिद्वितीयाबहुवचनंविन्यदधाद्विविधन्यग्भावेनादधात्स्थापितवती॥प्राणदेवताप्राणात्माभिमान शून्येष्वंत्यजनेष्वितिसामर्थ्यादिंद्रियसंसर्गजोहिसइतिप्राण्याश्रयतावगम्यते तस्मात्तमंत्यजनंनेयान्नगच्छेत्संभाषणदर्शनादिभि

तस्मान्नजनमियान्नांतमियान्नेत्पाप्मानंमृत्युमन्ववायानीति॥१०॥

र्नसंसृजेत्तत्संसर्गेपाप्मनःसंसर्गःकृतःस्यात्पाप्माश्रयोहिसःतज्जननिवासंचांतंदिगंतशब्दवाच्यंनेयाज्जनशून्यमपिजनमपितद्दे शवियुक्तमित्यभिप्रायःनेदितिपरिभयार्थेनिपातःइत्थंजनसंसर्गेपाप्मानंमृत्युमन्ववायानीतिअनुअवअयानीतिअनुगच्छेयमित्येवंभी तोनजनमंतंचेयादितिपूर्वेणसंबंधः॥१०॥ शामात्रेपाप्मावस्थानानुपपत्तिरित्यर्थः॥तामेवानुपपत्तिंसाधयतिइंद्रियेतिभवतुयथोक्तोदिशामं तस्तथाचपाप्मसंसर्गोस्तुतथापिकिमायातमित्याशंक्यतस्यशिष्टैस्त्याज्यत्वमित्याह॥तस्मादिति॥निषेधद्वयस्यतात्पर्यमाह॥जनशून्यमपीति॥प्रा णोपास्तिप्रकरणेनिषेधश्रुतेस्तदुपासकेनैवायंनिषेधोनुष्ठेयोनसर्वैरित्याशंक्याहनेदित्यादिना॥इत्थंश्रुत्युक्तंनिषेधंनचेदहंकुर्यांततःपाप्मानमनुगच्छे

नप्राणोपासकस्यैवातःसर्वोपिपापाद्भीतोनोभयंगच्छेद्वाक्यंहिप्रकरणाद्बलवदित्यर्थः॥१०॥द्विविधमुपास्तिफलंपाप्महानिर्देवताभावश्च॥तत्रपाप
हानिमुपदिशताप्रासंगिकःसाधारणोनिषेधोदर्शितःसंप्रतिदेवताभावंवक्तुमुत्तरवाक्यमितिप्रतीकोपादानपूर्वकमाह॥सावाएषेति॥अथश
ब्दावद्योतितमर्थंकथयति॥यस्मादिति॥पाप्मापहंतृत्वमनूद्यावशिष्टंभागंव्याचष्टे॥तस्मात्सएवेति॥११॥साम्यानोक्तमर्थंविशेषेणप्रपंचयतिसैवे

सावाएषादेवतातदेतस्याःप्राणात्मज्ञानकर्मफलंवागादीनामग्न्याद्यात्मत्वमुच्यते॥अथैनामृत्युमत्यवहत्॥यस्मादाध्यात्मिकपरिच्छेदकरःपा
प्मामृत्युःप्राणात्मविज्ञानेनापहतस्तस्मात्प्राणोपहंतापाप्मनोमृत्योःतस्मात्सएवप्राणएनाःवागादिदेवताःप्रकृतंपाप्मानंमृत्युमती
त्यावहत्प्रापयत्स्वंस्वमपरिच्छिन्नमग्न्यादिदेवतात्मरूपं॥११॥सवैवाचमेवप्रथमामत्यवहत्सप्राणोवाचमेवप्रथमांप्रधानामित्य

सावाएषादेवतैतासांदेवतानांपाप्मानंमृत्युमपहत्याथैनामृत्युमत्यवहत्॥११॥सवैवाचमेवप्रथमा
मत्यवहत्सायदामृत्युमत्यमुच्यतसोग्निरभवत्सोयमग्निःपरेणमृत्युमतिक्रांतोदीप्यते॥ १२ ॥

तदुद्गीथकर्मणीतरकरणापेक्षयासाधकतमत्वंप्राधान्यंतस्याःतांप्रथमामत्यवहनंकृतवान्तस्याःपुनर्मृत्युमतीत्योढायाःकिंरू
पमित्युच्यतेसावाग्यदायस्मिन्कालेपाप्मानंमृत्युमत्यमुच्यतअतीत्यामुच्यतमोचितास्वयमेवतदासोग्निरभवत्सावाक्पूर्वमप्यग्नि
रेवसतीमृत्युवियोगेप्यग्निरेवाभवदेतावांस्तुविशेषोमृत्युवियोगेसोयमतिक्रांतोग्निःपरेणमृत्युंपरस्तान्मृत्योर्दीप्यते वाचमित्यादिना॥क
र्थवाचःप्राथम्यंतदाह॥उद्गीथेति॥वाचोमृत्युमतिक्रांतायारूपंप्रश्नपूर्वकंप्रदर्शयति॥तस्याइति॥अनग्नेरग्नित्वविरोधंधुनीते॥सावागिति॥पूर्वमपि

एतावानिति॥ उक्तं विशेषं विशदयति॥ प्राणिति॥१२॥ वागादीनामग्न्यादिदेवतात्वप्राप्तावप्युपासकस्य किमायातं न हि तद्देवतस्य फलमित्या
शंक्याह॥ यथेति॥ देवतात्वप्रतिबंधकान्पाप्मनः सर्वान्पोह्योक्तवर्त्मना वागादीनामुपासकोपाधिभूतानामग्न्यादिदेवतात्वेन सोपि सदा प्रा

प्राङ् मोक्षान्मृत्युप्रतिबद्धोध्यात्मवागात्मनानेदानीमिव दीप्तिमानासीदिदानीं तु मृत्युं परेण दीप्यते मृत्युवियोगात्॥१२॥ त
था घ्राणः प्राणो वायुरभवत्स तु पवते मृत्युं परेणातिक्रांतः सर्वमन्यदुक्तार्थं॥१३॥ तथा चक्षुरादित्योभवत्स तु तपति॥ १४॥

अथ प्राणमत्यवहत्स यदा मृत्युमत्यमुच्यत स वायुरभवत्सोयं वायुः परेण मृत्युमतिक्रांतः पवते॥१३॥ अथ
चक्षुरत्यवहत्तद्यदा मृत्युमत्यमुच्यत स आदित्योभवत्सोसावादित्यः परेण मृत्युमतिक्रांतस्तपति॥१४॥ अथ श्रो
त्रमत्यवहत्तद्यदा मृत्युमत्यमुच्यत ता दिशोभवꣳस्ता इमा दिशः परेण मृत्युमतिक्रांताः॥१५॥ अथ मनोत्यवहत्तद्य
दा मृत्युमत्यमुच्यत स चंद्रमा अभवत्सोसौ चंद्रः परेण मृत्युमतिक्रांतो भात्येवꣳ ह वा एनमेषा देवता मृत्युमतिवहति य
एवं वेद॥१६॥

तथा श्रोत्रं दिशोभवन् दिशः प्राच्यादिविभागेनावस्थिताः॥१५॥ मनश्चंद्रमा भाति॥ यथा पूर्वं यजमानं वागा
द्यग्न्यादिभावेन मृत्युमत्यवहत् एवमेनं वर्तमानयजमानमपि ह वै एषा प्राणदेवता अतिवहति॥ वागाद्यग्न्यादिभावेनैव यो वा
गादिपंचकविशिष्टं प्राणं वेद तं यथा यथोपासते तदेव भवतीति श्रुतेः ॥ १६ ॥ णमात्मत्वेन ध्यायन्भावनाबलाद्वैराजं पदं पूर्व
यजमानवदाप्नोतीति भावः॥ कस्येदं फलमित्याकांक्षायां उपासकं विशिनष्टि॥ यो वागादीति॥ उक्तोपासनस्य प्रागुक्तं फलमनुगुणमित्यत्रमान

भा॰ टी॰ की॰ ॥४६॥

42

उपास्यस्य प्राणस्य कार्यकरणसंघातस्य विधारकत्वं नाम गुणांतरं वक्तुमुत्तरवाक्यं तदादाय व्याकरोति॥ अथेत्यादिना॥ कथमुद्गातुर्विक्रीतस्य फलसंबंधस्तत्राह॥ कर्तुरिति॥ अन्नागानमार्त्विज्यमित्यत्र प्रश्नपूर्वकं वाक्यशेषमनुकूलयति॥ कथमित्यादिना॥ तमेव हेतुमाह॥ यस्मादिति॥ प्राणेनैव तदद्यत इति संबंधः॥ यस्मादित्यस्य तस्मादित्यादिभाष्येणान्वयः॥ अनितेर्धातोरनशब्दश्चेत्प्राणपर्यायस्तर्हि कथं शकटे तच्छब्दप्रयोगस्तत्रा

अथात्मने यथा वागादिभिरात्मार्थमागानं कृतं तथा मुख्योपि प्राणः सर्वप्राणसाधारणं प्राजापत्यफलमागानं कृत्वा त्रिषु पवमानेषु स्थानंतरं शिष्टेषु नवसु स्तोत्रेष्वात्मने आत्मार्थमन्नाद्यमन्नं च तदाद्यं चान्नाद्यमागायत्॥ कर्तुः कामसंयोगो वाचनिक इत्युक्तं कथं पुनस्तदन्नाद्यं प्राणेनात्मार्थमागीतमिति गम्यत इत्यत्र हेतुमाह॥ यत्किंचेति॥ सामान्यान्नमात्रपरामर्शार्थो हीति हेतौ यस्माल्लोके प्रा

अथात्मनेन्नाद्यमागायद्यद्धि किंचान्नमद्यतेऽनेनैव तदद्यत इह प्रतितिष्ठति॥१७॥

णिभिर्यत्किंचिदन्नमद्यते भक्ष्यते तदनेनैव प्राणेनैवान इति प्राणस्याख्याप्रसिद्धाऽनः शब्दः सांतः शकटवाची यस्त्वन्यः स्वरांतः स प्राणपर्यायः प्राणेनैव तदद्यत इत्यर्थः॥ किंच॥ न केवलं प्राणेनाद्यत एवान्नाद्यं तस्मिन्छरीराकारपरिणतेन्नाद्ये इह प्रतितिष्ठति प्राणस्तस्मात्प्राणेनात्मनः प्रतिष्ठार्थमागीतमन्नाद्यं यदपि प्राणेनान्नादनं तदपि प्राणस्य प्रतिष्ठार्थमेवेति न वागादिष्विव कल्याणासंगज पाप्मसंभवः प्राणेस्ति॥१७॥

ह॥ अनः शब्द इति॥ इतश्च प्राणस्य स्वार्थमन्नागानं युक्तमित्याह॥ किंचेति॥ प्राणेन वागादिवदात्मार्थमन्नमागीतं चे तर्हि तस्यापि पाप्मवेधः स्यादित्याशंक्याह॥ यदपीति॥ इहान्ने देहाकारपरिणते प्राणस्तिष्ठति तदनुसारिणश्च वागादयः स्थितिभाजोऽतः स्थित्यर्थं प्राणस्या

भक्तीश्रेष्ठः पुरोगं तेत्यादि गुणविधानार्थं वाक्यांतरमादत्ते॥ तेदेवा इति॥ तस्य विवक्षितमर्थं वक्तुमादावाक्षिपति॥ नन्विति॥ अयुक्तत्वे हेतुमाह॥ वागा
दीनामिति॥ अवधारणानुपपत्तिं दूषयति॥ नैष दोष इति॥ यथा प्राणस्योपकारो न कृतो न वागादिद्वारकस्तथा तेषामपि नासौ प्राणद्वारको विशेषा
भावादिति शंकते॥ कथमिति वाक्येन परिहरति॥ एतमर्थमिति॥ आह विशेषमिति शेषः॥ तेषां देवत्वं साधयति॥ स्वविषयेति॥ तत्र प्रसिद्धिं प्रमा

तेदेवाः॥ नन्ववधारणमयुक्तं प्राणेनैव तदद्यत इति वागादीनामप्यन्ननिमित्तोपकारदर्शनात्॥ नैष दोषः॥ प्राणद्वारत्वादुपकारस्य क
थं प्राणद्वारकोन्नकृतो वागादीनामुपकार इत्येतमर्थं प्रदर्शयन्नाह॥ ते वागादयो देवाः स्वविषयद्योतनाद्देवा अब्रुवन्नुक्तवंतो मुख्यं प्रा
णमिदमेतावन्नातोधिकमस्ति वै इति स्मरणार्थः॥ इदं तत्सर्वमेतावदेव किं यदन्नं प्राणस्थितिकरम द्यते लोके तत्सर्वमात्मने आत्मा

तेदेवा अब्रुवन्नेतावद्वा इदꣳ सर्वं यदन्नं तदात्मन आगासीरनु नोस्मिन्नन्न आभजस्वेति

र्थमागासीरागीतवानस्यागानेनात्मसात्कृतमित्यर्थः॥ वयं चान्नमंतरेण स्थातुं नोत्सहामहेऽतोऽनु पश्चान्नोस्मानस्मिन्नन्ने आत्मार्थं तवा
न्ने आभजस्वाभाजय स्वणिचोः श्रवणं छांदसं अस्मांश्चान्नभागिनः कुरु॥ इतर आह॥ ते यूयं यद्यन्नार्थिनः णपितुवेशब्दमाह॥ वा इति स्मर
णार्थ इति तत्प्रसिद्धस्यार्थस्येति शेषः॥ वाक्यार्थमाह॥ इदं तदिति॥ एतावत्त्वमेव व्याचष्टे॥ तत्सर्वमिति किमिदं प्राणार्थमन्नागानं नाम तदाह॥ आगाने
ति॥ का पुनरेतावता भवतां क्षतिस्तत्राह॥ वयं चेति॥ अन्नमंतरेण ममापि स्थातुमशक्तेर्मदर्थं तदागीतमिति चेत्तत्राह॥ अत इति॥ आभजस्वेति श्रूयमा
णे कथमन्यथा व्याख्यायते तत्राह॥ णिच इति॥ तवैवान्नस्वामित्वमस्माकमपि तत्र प्रवेशमात्रं स्थित्यर्थमपेक्षितमिति वाक्यार्थमाह॥ अस्मांश्चेति ॥

43

वैशब्दोयद्यर्थप्रयुक्तः प्राणंपरिवेष्ट्यतदनुज्ञयावागादीनामन्नार्थिनामवस्थानंचेत्तेषामपिप्राणवदन्नसंबंधःस्यादित्याशंक्याह॥तथेति॥यत्त
प्राणस्यान्नबलाद्वागादीनांस्थित्यनुपलब्धेरित्यर्थः॥वागादीनामन्नजन्योपकारस्यप्राणद्वारत्वेसिद्धेफलितमाह॥तस्मादिति॥तेषामन्नकृ

तैनामभिसंविशतसमंततोमामाभिमुख्येननिविशतेत्येवमुक्तवतिप्राणेतथेत्येवमितितंप्राणंपरिसमंतंपरिसमंतान्यविशंत
निश्चयेनाविशंततंप्राणंपरिवेष्ट्यनिविष्टवंतइत्यर्थः॥तथानिविष्टानांप्राणानुज्ञयातेषांप्राणेनैवाद्यमानंप्राणस्थितिकरंसदन्नं
तृप्तिकरंभवतिनस्वातंत्र्येणान्नसंबंधोवागादीनांतस्मादुक्तमेवावधारणमनेनैवतदद्यतइति॥तदेवचाह॥तस्माद्यस्मात्प्राणा
श्रयतयैवप्राणानुज्ञयाभिसंनिविष्टावागादिदेवतास्तस्माद्यदन्नमनेनप्राणेनात्तिलोकःतेनान्नेनैतावागाद्यास्तृप्यंतिवागाद्याश्रयं

तेवैमाभिसंविशतेतितथेतितꣳसमंतंपरिण्यविशंततस्माद्यदनेनान्नमत्तितेनैतास्तृप्यंत्येवꣳहवाएनꣳ
स्वाअभिसंविशंतिभर्तास्वानाꣳश्रेष्ठःपुरएताभवत्यन्नादोधिपतिर्यएवंवेद॥

प्राणंयोवेदवागादयश्चपंचप्राणाश्रया
इतितमप्येवमेवहवैस्वाज्ञातयअभिसंविशंतिवागादयइवप्राणंज्ञातीनामाश्रयणीयोभवतीत्यभिप्रायः अभिसंनिविष्टानांचस्वानांप्रा
णवदेववागादीनांस्वान्नेनभर्ताभवतितथाश्रेष्ठःपुरोग्रतएतागंताभवति॥वागादीनामिवप्राणस्तथान्नादोऽनामयावीत्यर्थः अधिप
तिरधिष्ठायचपालयितास्वतंत्रःपतिःप्राणवदेववागादीनांयएवंप्राणंवेदतस्यैतद्यथोक्तंफलंभवति॥

तोपकारस्यप्राणद्वारकत्वेवाक्यशेषं
संवादयति॥तदेवेति॥विद्याफलंदर्शयन्गुणजातमुपदिशति॥वागादीति॥वेदनमेवव्याचष्टे॥वागादयश्चेति॥सचप्राणोहमस्मीतिवेदेतिचकारा

संप्रतिप्राणविद्यांस्तोतुंतद्विद्यावद्विद्वेषिणोदोषमाह॥ किंचेति॥ इदानींप्राणविदंप्रतिअनुरागेलाभंदर्शयति॥ अथेत्यादिना॥१८॥ तेदेवाअब्रु
वन्नित्यादौगुणविधिर्विवक्षितोनविशिष्टविधिर्गुणफलस्यैवात्रश्रवणादित्याह॥ सर्वमेतदिति उत्तरग्रंथस्यव्यवहितेनसंबंधंवक्तुंव्यवहित

किंच॥ यउहएवंविदंप्राणविदंप्रतिस्वेषुज्ञातीनांमध्येप्रतिःप्रतिकूलोबुभूषतिप्रतिस्पर्धीभवतुमिच्छतिसोसुराइवप्राणप्रतिस्प
र्धिनोनहैवालंपर्याप्तोभार्येभ्योभरणीयेभ्योभवतिभर्तुमित्यर्थः अथपुनर्यएवज्ञातीनांमध्येएतमेवंविदंवागादयइवप्राणमन्व
नुगतोभवति॥ योवाएतमेवंविदमन्वेवानुवर्त्तयन्नेवात्मीयान्भार्यान्बुभूषतिभर्तुमिच्छतियथैववागादयः प्राणानुवृत्त्याआत्म

यउहैवंविदंस्वेषुप्रतिप्रतिर्बुभूषतिनहैवालंभार्येभ्योभवत्यथययएवैतमनुभवतियोवैतमनुभार्यान्बुभूर्षतिस
हैवालंभार्येभ्योभवति॥१८॥ सोयास्यआंगिरसोंगानांहिरसःप्राणोवाअंगानांरसः बुभूर्षवआसन्॥ सहैवालंप
र्याप्तोभार्येभ्योभरणीयेभ्योभवतिभर्तुंनेतरःस्वतंत्रः॥१८॥ सर्वमेतत्प्राणगुणविज्ञानफलमुक्तंकार्यकरणानामात्मत्वप्रतिपा
दनायप्राणस्यांगिरसत्वमुपन्यस्तंसोयास्यआंगिरसइतिअस्माद्धेतोरयमांगिरसइत्यांगिरसत्वेहेतुर्नोक्तस्तद्धेतुसिध्यर्थमारभ्य
तेतद्धेतुसिध्यायत्तंहिकार्यकरणात्मत्वंप्राणस्यानंतरंचवागादीनांप्राणाधीनतोक्तासाचकथमुपपादनीयेत्याह॥

मनुवदति॥ कार्यकरणानामिति॥ अनंतरग्रंथमवतारयति॥ अस्मादिति॥ किमित्यांगिरसत्वसाधकोहेतुःसाधनीयस्तत्राह॥ तद्धेत्वेतिसंप्रस्
व्यवहितंसंबंधंदर्शयति॥ अनंतरंचेति॥ प्रकारांतरंबुभुत्स्यमानमितिसूचयितुंचशब्दः॥ तर्हियदुपपादनीयंतदुच्यतांकिमित्युक्तस्यपुनरुक्तिरि

44

उत्तरार्थमितिप्रतिज्ञानुवादोवक्ष्यमाणहेतोरुपयोगीत्यर्थः॥यथोपन्यस्तमेवेत्यादिप्रपंचयति॥प्राणोवाइति॥उक्तार्थनिर्णयेहेतुंपृच्छति॥कथमि
ति॥तत्रप्रसिद्धिंहेतुंकुर्वन्परिहरति॥प्राणोहीति॥प्रसिद्धिमेवप्रकटयति॥प्रसिद्धमिति॥स्मारणंप्रसिद्धस्यांगिरसत्वस्येतिशेषः॥प्रसिद्धिर
सिद्धेतिशंकते॥कथमिति॥तामन्वयव्यतिरेकाभ्यांसाधयति॥अतआहेति॥पदार्थमुक्त्वावाक्यार्थमाह॥यस्मात्कस्मादिति॥उक्तेनव्यतिरेकेणानु

सोयास्यआंगिरसइत्यादियथोपन्यस्तमेवोपादीयतेउत्तरार्थंप्राणोवाअंगानांरसइत्येवमंतंवाक्यंयथाव्याख्यातार्थमेवपुनःस्मारय
ति॥कथंप्राणोवाअंगानांरसइति॥प्राणोहिहिशब्दःप्रसिद्धोअंगानांरसःप्रसिद्धमेतत्प्राणस्यांगरसत्वंनवागादीनांतस्माद्युक्तंप्रा
णोवाइतिस्मारणं॥कथंपुनःप्रसिद्धत्वमित्यतआह॥तस्माच्छब्दउपसंहारार्थउपरिहेतुत्वेनसंबध्यते॥यस्माद्यतोऽवयवात्कस्मा
दनुक्तविशेषाद्यस्मात्कस्माद्यतःकुतश्चिच्चांगाच्छरीरावयवाद्विशेषितात्प्राणउत्क्रामत्यपसर्पतितदेवतत्रैवतदंगंशुष्यतिनीर

प्राणोहिवाअंगानाᳪं रसस्तस्माद्यस्मात्कस्माच्चांगात्प्राणउत्क्रामतितदेवतच्छुष्यत्येषहिवाअंगानाᳪं रसः॥१९॥

संभवतिशोषमुपैतितस्मादेषहिवाअंगानांरसइत्युपसंहारः॥अतःकार्यकरणानामात्माप्राणइत्येतत्सिद्धमात्मापायेहिशोषोमरणंस्या
त्तस्मात्तेनजीवंतिप्राणिनःसर्वेतस्मादपास्यवागादीन्प्राणएवोपास्यइतिसमुदायार्थः॥१९॥ क्रमन्वयंसमुच्चेतुंचशब्दः तस्माच्छब्दस्योपरि

भावेनसंबंधमुक्तंस्फुटयति॥तस्मादिति॥अन्वयव्यतिरेकाभ्यामंगिरसत्वेप्राणस्यसिद्धेफलितमाह॥अतइति॥उक्तन्यायादंगरसत्वेसिद्धेपिकथ
मात्मत्वंसिद्ध्येदित्याशंक्याह॥आत्मेति॥अस्तुप्राणःसंघातस्यात्मातथापिकिंस्यात्तदाह॥तस्मादिति॥भवतुप्राणाधीनंसंघातस्यजीवनंतथापिकथं

बृहस्पत्यादिधर्मकं प्राणोपासनं वक्तुं वाक्यांतरमवतारयति॥ एषइति॥ तस्य विधांतरेण तात्पर्यमाह॥ नकेवलमिति॥ कार्यं स्थूलशरीरं प्रत्यस्तोरूप्यमाणं रूपात्मकं करणं च ज्ञानक्रियाशक्तिमत्कर्मभूतं तयोरात्मा प्राण इत्युक्ता॥ नामराशेरपि तथेति वक्तुं कंडिकाचतुष्टयमित्यर्थः किमिति प्राणस्य आत्मत्वेन सर्वात्मत्वोक्त्या स्तुतिरित्याशंक्याह उपास्यत्वायेति॥ उशब्दोप्यर्थो बृहस्पतिशब्दादुपरि संबध्यते॥ बृहस्पतिर्देवानां पुरोहित आसीदिति श्रुतेर्देवपुरोहितो बृहस्पतिरुच्यते तत्कथं प्राणस्य बृहस्पतित्वमिति शंकते कथमिति॥ देवपुरोहि

एषउ॥ नकेवलं कार्यकरणयोरेवात्मा प्राणः रूपकर्मभूतयोः किंतर्हि ऋग्यजुःसाम्नां नामभूतानामात्मेति सर्वात्मकतया प्राणं स्तुवन्महीकरोत्युपास्यत्वाय एषउ एव प्रकृत आंगिरसो बृहस्पतिः कथं बृहस्पतिरित्युच्यते वाग्वै बृहती बृहती छंदः षट्त्रिं

एषउएवबृहस्पति

शदक्षरानुष्टुप्च वाक् कथं वाग्वा अनुष्टुविति श्रुतेः॥ साच वागनुष्टुब्बृहत्यां छंदस्यंतर्भवत्यतो युक्तं वाग्वै बृहतीति प्रसिद्धवदुक्तुं॥

तं व्यावर्तयितुमुत्तरवाक्येनोत्तरमाह॥ उच्यतइति॥ प्रसिद्धवचनं कथमित्याशंक्याह॥ बृहतीति॥ छंदइति सप्त हि गायत्र्यादीनि प्रधानानि छंदांसि तेषां मध्यमं छंदो बृहतीत्युच्यते॥ साच बृहती षट्त्रिंशदक्षरा प्रसिद्धेत्यर्थः॥ भवतु यथोक्ता बृहती तथापि कथं वाग्वै बृहतीत्युक्तं तत्राह॥ अनुष्टुप्चेति हि द्वात्रिंशदक्षरा तावदनुष्टुविष्टा साचाष्टाक्षरैश्चतुर्भिः पादैः षट्त्रिंशदक्षरायां बृहत्यामंतर्भवत्यवांतरसंख्यायां महासंख्यायामंतर्भावादित्याह॥ साचेति॥ वागनुष्टुभोरनुष्टुब्बृहत्योश्चोक्तमैक्यमुपजीव्य फलितमाह॥ अतइति॥ भवतु वागात्मिका बृहती तथापि तत्पतित्वेन प्राणस्य

अनुष्टुभो वाक्त्वं साधयति प्रश्नपूर्वकं॥ कथमिति॥ =५

45

प्राणस्यऋगात्मत्वे॰ २



बृहत्यांचेति॥ सर्वात्मकप्राणरूपेणबृहत्याःस्तुतत्वात्तत्रसर्वासामृचामंतर्भावःसंभवतितस्मात्प्राणस्यबृहस्पतित्वेसिद्धमृक्पतित्वमित्यर्थः॥ प्राण



रूपेणस्तुताबृहस्पतीत्यत्रप्रमाणमाह प्राणोबृहतीतितथापिप्राणस्यविवक्षितमृगात्मत्वंकथंसिध्यतीत्याशंक्याह॥ प्राणइति॥ तस्यतदात्मत्वेहेत्वं तरमाह॥ वागात्मत्वादिति॥ तासांतदात्मत्वेपिकथंप्राणेंतर्भावोनहिघटोमृदात्मापरेंतर्भवतीतिशंकते॥ तत्कथमिति॥ प्राणस्यवाङ्निष्पादकत्वात्तद्भूतानामृचांप्राणकारणेयुक्तोंतर्भावइत्याह ॥ आहेत्यादिना॥ प्राणस्यतन्निर्वर्त्तकत्वेपिनतस्मिन्वाचोंतर्भावोनहिघटस्यकुलालेंतर्भावइत्याशंक्याह ॥

बृहत्यांचसर्वाऋचोंतर्भवंतिप्राणसंस्तुतत्वात्प्राणोबृहतीप्राणऋचइत्येवविद्यादितिश्रुत्यंतरान्द्वागात्मत्वाच्चर्चांप्राणेंतर्भावः॥ तत्कथ मित्याह॥ तस्यावाचोबृहत्याऋचएषःप्राणःपतिस्तस्यानिर्वर्त्तकत्वात्कोष्ठ्याग्निप्रेरितमारुतनिर्वर्त्याहिऋक्पालनाद्वावाचःपतिःप्राणे

वाग्वैबृहतीतस्याएषपतिस्तस्मादुबृहस्पतिः ॥२०॥

नहिपाल्यतेवाक्अप्राणस्यशब्दोच्चारणसामर्थ्याभावात्तस्मादुबृहस्पतिःऋचांप्राणआत्मेत्यर्थः॥२०॥ तथायजुषांकथमेषउएवब्रह्म णस्पति कोष्ठ्येति॥ कोष्ठनिष्ठेनाग्निनाप्रेरितस्तद्गतोवायुरूर्ध्वंगच्छन्कंठादिभिरभिहन्यमानोवर्णतयाभिव्यज्यतेतदात्मिकाचवाङ्निर्णीत देवताधिकरणेऋक्चवागात्मिकोक्तातद्युक्तंतस्याःप्राणेंतर्भूतत्वमित्यर्थः॥ ऋगात्मत्वंप्राणस्यप्रकारांतरेणसाधयति॥ पालनाद्वेतिसत्ताप्रदत्वेसति स्यापकत्वंतादात्म्यव्याप्तमित्यभिप्रेत्योपसंहरति॥ तस्मादिति॥ २०॥ यजुषामात्मेतिपूर्वेणसंबंधः॥ नियतपादाक्षराणामृचांप्राणत्वेकुतस्तद्वि परीतानांयजुषांतत्वमितिशंकित्वापरिहरति॥ कथमिति॥ तथापिकथंप्राणोयजुषामात्मेत्याशंक्याह ॥

वाग्वैब्रह्मेति॥ निर्वर्त्तकत्वंपालयितृत्वंचान्नापितुल्यमित्याह॥ पूर्ववदिति॥ रूढिमाश्रित्यशंकते॥ कथंपुनरिति॥ वाक्यशेषविरोधान्नात्ररूढिः सं
भवतीतिपरिहरति॥ उच्यतइतिवाचींतेवाक्वैसामेत्यंतेवाचः साम्नसामानाधिकरण्येननिर्देशाद्देदाधिकारोयमितियोजना॥ तथापिकथमृक्त्वंयज्ञ
ष्ट्वंवाबृहतीब्रह्मणोरितितत्राह॥ तथाचेति॥ परिशेषमेवदर्शयति॥ सामनीति॥ इतश्चवाक्समानाधिकृतयोर्बृहतीब्रह्मणोर्ऋग्यजुष्ट्वमेष्टव्यमित्या

वाग्वैब्रह्मब्रह्मयजुस्तच्चवाग्विशेषएवतस्यावाचोयजुषोब्रह्मणएषपतिस्तस्मादुब्रह्मणस्पतिः पूर्ववत्कथंपुनरेतदवगम्यते
बृहतीब्रह्मणोर्ऋग्यजुष्ट्वंनपुनरन्यार्थत्वमित्युच्यते॥ वाचींतेसामसामानाधिकरण्यनिर्देशाद्वाग्वैसामेतितथाचवाग्वैबृहतीवाग्वै
ब्रह्मेतिचवाक्समानाधिकरणयोर्ऋग्यजुष्ट्वंयुक्तंपरिशेषाच्च॥ साम्न्यभिहितेऋग्यजुषीएवपरिशिष्टेवाग्विशेषत्वाच्चवाग्विशेषो

एषउएवब्रह्मणस्पतिर्वाग्वैब्रह्मतस्याएषपतिस्तस्मादुब्रह्मणस्पतिः॥ २१॥

हिऋग्यजुषीतस्मात्तयोर्वाचासमानाधिकरणतायुक्ताऽविशेषप्रसंगाच्चसामोद्गीथइतिचस्पष्टंविशेषाभिधानत्वंतथाबृहतीब्रह्म
शब्दयोरपिविशेषाभिधानत्वंयुक्तंअन्यथाअनिर्धारितविशेषयोरानर्थक्यापत्तेश्चविशेषाभिधानस्यवाङ्मात्रत्वेचोभयत्रपौनरुक्त्याद
ग्यजुःसामोद्गीथशब्दानांचश्रुतिषुवक्रमदर्शनात्॥ २१॥ ह॥ वाग्विशेषत्वाच्चेति॥ तत्रैवहेत्वंतरमाह॥ अविशेषेति॥ प्रसंगमेवव्यतिरेकमुखेन
विवृणोति॥ सामेति॥ द्वितीयश्चकारोवधारणार्थः॥ किंचवाग्वैबृहतीवाग्वैब्रह्मेतिवाक्याभ्यांबृहतीब्रह्मणोर्वागात्मत्वंसिद्धं॥ नचतयोर्वाङ्मात्रत्वंवाक्य
द्वयेपिवाग्वैवागितिपौनरुक्त्यप्रसंगात्तस्माद्बृहतीब्रह्मणोरेष्टव्यमृग्यजुष्ट्वमित्याह॥ वाङ्मात्रत्वेचेति॥ तत्रैवस्थानमाश्रित्यहेत्वंतरमाह॥ ऋगिति॥ २१॥
वाक्वैसाअमश्चषःतत्साम उत्प्राणःगीथःवाक्उत्थोद्गीथः इतिविशेषाभिधानंसामोद्गीथयोः तथाबृहतीब्रह्मणोः वाग्वैबृहतीवाग्वैब्रह्मविशेषाभिधानं तच्चतयोर्वेदत्वेएवसंभवतिय
थासामोद्गीथयोरन्यथाकोर्थः वेदत्वेसतितयोर्बृहतीब्रह्मणोर्वाक्पर्यायत्वेचसतिविशेषाभिधानस्यानर्थक्यप्रसंगात् = ५

ऋग्यजुष्टं प्राणस्य प्रतिपाद्यतस्यैव सामत्वं साधयति॥ एषइत्यादिना॥ तदेव स्पष्टयति॥ सर्वेति॥ साशब्दो हि सर्वनामतथा च स्त्रीलिंगः सर्वशब्दस्तेनाभिधेयं वस्तु वागित्यर्थः॥ अमप्राण इत्युक्तमुपपादयति॥ सर्वपुंशब्देति॥ पुल्लिंगेन सर्वेण शब्देनाभिधेयं वस्तु प्राण इत्यर्थः तत्र श्रुत्यंतरं प्रमाणयति॥ केनेति॥ आचार्यस्य शिष्यं प्रत्येतद्वाक्यं पौंस्यानि पुंसो वाचकानि॥ तथापि कस्य सामशब्दवाच्यत्वमित्याशंक्य फलितमाह॥ वागिति॥ वागुपसर्जनः प्राणः सामशब्दा

एषउएवसामकथमित्याहवाग्वैसायत्किंचित्स्त्रीशब्दाभिधेयंसावाक्सर्वस्त्रीशब्दाभिधेयवस्तुविषयोहिसर्वनामसाशब्दः तथाऽमएष प्राणःसर्वपुंशब्दाभिधेयवस्तुविषयोऽमशब्दः केनमेपौंस्यानिनामान्याप्रोषीतिप्राणेनेतिब्रूयात्केनमेस्त्रीनामानीतिवाचेतिश्रुत्यंतरात्॥ वाक्प्राणाभिधानभूतोसामशब्दोतथाप्राणनिर्वर्त्यस्वरादिसमुदायमात्रंगीतिःसामशब्देनाभिधीयतेऽतोनप्राणवाग्व्यतिरेकेणसामनामास्ति

एषउएवसामवाग्वैसामैषसाचामश्चेति

किंचित्स्वरवर्णादेश्चप्राणनिर्वर्त्यत्वात्प्राणतंत्रत्वाच्चएषउएवप्राणःसामयस्मात्सामसामेतिवाक्प्राणात्मकंसाचामश्चेतितत्तस्मात्साम्नोगीतिरूपस्यस्वरादिसमुदायस्यसामत्वंतत्प्रथितंविख्यातंभुवि

भिधेय एकवचननिर्देशादित्यर्थः॥ ननु गीतिषु सामाख्येति न्यायाद्धि शिष्टका चिद्गीतिः सामेत्युच्यते तत्कुतो वागुपसर्जनस्य प्राणस्य सामत्वमत आह॥ तथेति प्राणस्य सामत्वे सतीति यावत्॥ प्रगीते मंत्रवाक्ये सामशब्दस्य वृद्धैरिष्टत्वादस्ति प्राणादिव्यतिरेकेण सामेत्याशंक्याह॥ स्वरेति॥ आदिपदेन पदवाक्यादिग्रहः॥ वागुपसर्जने प्राणे मुख्यः सामशब्दस्तत्संबंधादितरत्र गौणो मंचादिशब्दवदित्यर्थः॥ उक्तेर्थे तत्साम्नः सामत्वमिति वाक्यं योजयति॥ यस्मादिति॥ इदं सामेदं सामेति यद्व्यवह्रियते तद्वाक्प्राणात्मकमेवोच्यते साचामश्चेति व्युत्पत्तेर्यस्मादेवं तस्मा

त्प्रसिद्धस्यसाम्नोयत्सामत्वंतन्मुख्यसामनिर्वर्त्यत्वाद्गौणमेवसद्ध्येतृव्यवहारेप्रसिद्धमितियोजना॥प्रकारांतरेणप्राणस्यसामत्वमुपासनार्थमुपन्य
स्यति॥यद्वित्यादिना॥प्रकारांतरावद्योतीवाशब्दोत्रनश्रूयतइत्याशंक्याह॥वाशब्दइति॥निमित्तेप्रकारांतरमेवप्रश्नपूर्वकंप्रकटयति॥केनेत्यादिना
॥नन्वप्राणस्यतत्तच्छरीरपरिमाणत्वेपरिच्छिन्नत्वादानंत्यानुपपत्तिस्तत्कथमस्यविरुद्धेषुशरीरेषुसमत्वमित्याशंक्याह॥प्लुषिकादीति॥समशब्दस्य

यतउएवसमस्तुल्यःसर्वेणवक्ष्यमाणेनप्रकारेणतस्माद्वासामेत्यनेनसंबंधः॥वाशब्दःसामशब्दलाभनिमित्तप्रकारांतरनिर्देशसाम
र्थ्यलभ्यःकेनपुनःप्रकारेणप्राणस्यतुल्यत्वमित्युच्यते॥समःप्लुषिणापुत्तिकाशरीरेणसमोमशकेनमशकशरीरेणसमोनागेनहस्ति
शरीरेणसमएभिस्त्रिभिर्लोकैस्त्रैलोक्यशरीरेणप्राजापत्येनसमोनेनजगद्रूपेणहैरण्यगर्भेणपुत्तिकादिशरीरेषुगोत्वादिवत्कार्त्स्न्येन

तत्साम्नःसामत्वंयद्वेवसमःप्लुषिणासमोमशकेनसमोनागेनसमएभिस्त्रिभिर्लोकैःसमोनेनसर्वेण

परिसमाप्तइतिसमत्वंप्राणस्य॥नपुनःशरीरमात्रपरिमाणेनैवामूर्त्तत्वात्सर्वगतत्वाच्च॥नचघटप्रासादादिप्रदीपवत्संकोचविका
सितयाशरीरेषुतावन्मात्रसमत्वं॥तएतेसर्वएवसमाःसर्वेनंताइतिश्रुतेः॥सर्वगतस्यतुशरीरेषुशरीरपरिमाणवृत्तिलाभोनविरुध्यते

यथाश्रुतार्थत्वंकिंनस्यादित्याशंक्याह॥नपुनरिति॥आधिदैविकेनरूपेणामूर्त्तत्वंसर्वगतत्वंचद्रष्टव्यं॥ननुप्रदीपोघटेसंकुचतिप्रासादेचविकस
तितथाप्राणोपिमशकादिशरीरेषुसंकोचमिभादिदेहेषुविकासंचापद्यतामितिसमत्वासिद्धिरित्याशंक्याह नचेति॥प्राणस्यसर्वगतत्वेसमत्वश्रुति
विरोधमाशंक्याह॥सर्वगतस्येति॥खंडादिषुगोत्ववच्छरीरेषुसर्वत्रस्थितस्यप्राणस्यतत्तच्छरीरेपरिमाणायावृत्तेर्लाभःसंभवतिसर्वगतस्यैवनभसस्त

फलश्रुतिमवतार्यव्याकरोति॥ एवमिति॥ फलविकल्पेहेतुमाह॥ भावनेति॥ वेदंव्याकरोति॥ आप्राणेति॥ इदंचफलंमध्यप्रदीपन्यायेनोभयतःसंबं धमवधेयं॥२१॥ प्रस्तावादिशब्दवदुद्गीथशब्दस्यापिभक्तिविशेषेरूढत्वादुद्गीथेनात्ययामेत्यत्रचोद्गात्रेकर्मणिप्रयुक्तत्वात्कथमुद्गीथःप्राणइत्याशं क्याह॥ उद्गीथोनामेति॥ नञ्पदस्योभयतःसंबंधःसामशब्दितस्यप्राणस्यप्रकृतत्वादितिहेतुमाह॥ सामाधिकारादिति॥ नतावदुद्गीथशब्दस्यप्रा

एवंसमत्वात्सामाख्यंप्राणंवेदयःश्रुतिप्रसारितमहत्त्वं॥ तस्यैतत्फलमश्नुतेआप्नोतिसाम्नःप्राणस्यसायुज्यंसयुग्भावंसमानदेहेंद्रिया भिमानत्वंसालोक्यंसमानलोकतांवाभावनाविशेषतोयएवमेतद्यथोक्तंसामप्राणंवेदआप्राणात्माभिमानाभिव्यक्तेरुपास्तइत्यर्थः॥२२॥ एषउवाउद्गीथः उद्गीथोनामसामावयवोभक्तिविशेषोनोद्गानंसामाधिकारात्कथमुद्गीथःप्राणः प्राणोवाउत्॥ प्राणेनहियस्मादिदंसर्वंजग

तस्माद्धैवसाम्नाश्नुतेसाम्नःसायुज्यꣳसलोकतांयएवमेतत्सामवेद॥२२॥ एषउवाउद्गीथःप्राणोवाउत्प्राणेनहीदꣳसर्वमु त्तब्धंवागेवगीथोच्चगीथाचेतिसउद्गीथः॥२३॥ दुत्तब्धमूर्ध्वंस्तब्धंउत्तंभितंविधृतमित्यर्थःउत्तब्धार्थीवद्योतकोयमुच्छब्दःप्राणगुणा भिधायकःतस्मादुत्प्राणःवागेवगीथाशब्दविशेषत्वादुद्गीथभक्तेःगायतेःशब्दार्थत्वात्सावागेवनह्युद्गीथभक्तेःशब्दव्यतिरेकेणकिंचिद्रूप मुत्प्रेक्ष्यतेतस्माद्युक्तमवधारणं॥ णेरूढिःतस्यतस्मिन्रूढप्रयोगादर्शनान्नापियोगोऽवयववृत्तेरदृष्टेरितिशंकते॥ कथमिति॥ योगवृत्तिमुपे त्यपरिहरति॥ प्राणइतिउत्शब्दोनास्यार्थस्यवाचकोनिपातत्वादित्याशंक्याह॥ उत्तब्धेति॥ तथापिकथंप्राणोवाउदित्युक्तंतत्राह॥ प्राणेति॥ वायु र्वैगौतमतत्सूत्रमित्यादिश्रुतेरित्यर्थः॥ उद्गीथभक्तेःशब्दविशेषत्वेपिगीथावागितिकथमुच्यतेतत्राह॥ गायतेरिति॥ अथावधारणंसाधयति॥ नहीति॥

तथापिकथंप्राणस्योद्गीथत्वमित्याशंक्यवागुपसर्जनस्यतस्यतथात्वंकथयति॥उच्चेति॥२३॥तद्धापीत्यादिवाक्यस्यप्रकृतानुपयोगमाशंक्याह
॥उक्तार्थेति॥उद्गीथदेवताप्राणेनवागादिरित्युक्तोर्थः॥जीवतितुवंश्येयुवेतिस्मरणात्पित्रादौवंश्येजीवतिपौत्रप्रभृतियदपत्यंतद्युवसंज्ञ
कमितिद्रष्टव्यं॥क्रियापदनिष्पत्तिप्रकारंसूचयति॥तोरितितुप्रत्ययस्यायमाशिषिविषयेतातङादेशस्तुह्योस्तातङाशिष्यन्यतरस्यामिति

वागेवगीथेत्युच्चप्राणोगीथाचप्राणतंत्रावागित्युभयमेकेनशब्देनाभिधीयतेसउद्गीथः॥२३॥उक्तार्थदार्ढ्यायारव्यायिकारभ्यते॥त
द्धापितत्तत्रैतस्मिन्नुक्तेर्थेह अपिआख्यायिकापिश्रूयतेहस्मब्रह्मदत्तोनामतः चिकितानस्यापत्यंचैकितानःतदपत्यंयुवाचैकिताय
नेयोराजानंयज्ञेसोमंभक्षयन्नुवाचकिमयंचमसस्थोमयाभक्ष्यमाणोराजात्यस्यतस्यममानृतवादिनोमूर्धानंशिरोविपातयताद्विपात

तद्धापिब्रह्मदत्तश्चैकितानेयोराजानंभक्षयन्नुवाचायंत्यस्यराजामूर्द्धानंविपातयताद्यदितोयास्य

यतुविस्पष्टंपातयतुतोरयंतातङादेशआशिषिलोट्विपातयतादिति॥यद्यहमनृतवादीस्यामित्यर्थः॥कथंपुनरनृतवादित्वप्राप्तिरित्युच्य
तेयद्यदीतोस्मात्प्रकृतात्प्राणाद्वाक्संयुक्तादयास्यः॥मुख्यप्राणाभिधायकेनायास्यांगिरसशब्देनाभिधीयतेविश्वसृजांपूर्वेषांसत्रेउद्गाता
सोन्येनदेवतांतरेणवाक्प्राणव्यतिरिक्तेनोदगायदुद्गानंकृतवांस्ततोहमनृतवादीस्यांतस्यममदेवताविपरीतप्रतिपत्तुर्मूर्धानंविपातयत्विति
वंशपर्यंचकारे

स्मरणादित्यर्थः॥मूर्धपातेप्रापकंदर्शयति॥यदिति॥अनृतवादित्वस्यप्रापकाभावादप्राप्तिरितिशंकते॥कथंपुनरिति॥उद्गानसंबध्या
दिसंनिधानात्तद्देवताप्राजापत्यादिलक्षणाकिंतस्मिन्देवताकिंवावर्णस्वरादिसंनिधानात्तद्देवतैवतत्रतद्देवतेतिविप्रतिपत्तेरनृतवादित्वंशंकितेब्रह्मदत्तः

अँग्राग्यँस्यशब्देनोद्गाताऽभिधीयते=१

प्राणाद्वाक्संयुक्तादन्येनायाँस्योँपद्युदगायदितिसंबंधः॥नन्वयास्यांगिरसशब्दवाच्योमुख्यप्राणोदेवतातन्नोद्गाताभवितुमुत्सहतेतत्राह॥मुख्येति॥
उक्तार्थदार्ढ्यायेत्युक्तमुपसंहरति॥इतिविज्ञानइति उक्तरीत्याशपथक्रिययाप्राणएवोद्गीथदेवतेत्यस्मिन्विज्ञानेप्रत्ययोविश्वासस्तस्ययद्दार्ढ्यंत
स्यकर्त्तव्यतामाख्यायिकयादर्शयतिश्रुतिरितियावत्॥आख्यायिकार्थस्यैववाचेत्यादिनोक्तेःपौनरुक्त्यमित्याशंक्याह॥तमिति॥शपथस्यस्वातंत्र्येण

तिविज्ञानेप्रत्ययदार्ढ्यंकर्त्तव्यतांदर्शयति॥तमिमंआख्यायिकानिर्धारितमर्थंस्वेनवचसोपसंहरतिश्रुतिःवाचाचप्राणप्रधानयाप्राणे
नचस्वस्यात्मभूतेनसोयास्यआंगिरसउद्गाताउदगायदित्येषोर्थोनिर्धारितःशपथेन॥२४॥तस्यहैतस्य॥तस्येतिप्रकृतंप्राणमभिसंब
ध्नातिहएतस्येतिमुखंव्यपदिशत्यभिनयेनसाम्नःसामशब्दवाच्यस्यप्राणस्ययःस्वंधनंवेदतस्यहकिंस्याद्भवतिहास्यस्वंफलेनप्रलो

आंगिरसोन्येनोदगायदितिवाचाचह्येवसप्राणेनचोदगायदिति ॥२४॥

भ्याभिमुखीकृत्यशुश्रूषवेआह॥तस्यवैसाम्नःस्वरएवस्वंस्वरइतिकंठगतंमाधुर्यंतदेवास्यस्वंविभूषणंतेनहिभूषितमृद्धिमल्लस्य
तेउद्गानं॥यस्मादेवंतस्मादार्त्विज्यंकरिष्यन्नृत्विक्कर्मोद्गानंकरिष्यन्वाचिविषयेवाचिवागाश्रितंस्वरमिच्छेतसाम्नोधनवत्तांस्वरेणचिकीर्षुरुद्गा
ता ॥ प्रामाण्येपिश्रुतिमूलतयाप्रामाण्यंसिध्यतीतिभावः॥२४॥उद्गीथदेवताप्राणएवेतिनिर्धार्यस्वसुवर्णप्रतिष्ठागुणविधानार्थमुत्तरंकंडिका
त्रयमवतारयति॥तस्येत्यादिना॥किमित्यादौफलमभिलष्यतेतत्राह॥फलेनेति॥सौस्वर्यंसाम्नोभूषणमित्यत्रानुभवमनुकूलयति॥तेनहीति॥कथं
तर्हिकंठगतंमाधुर्यंसंपादनीयमित्याशंक्याह॥यस्मादिति॥प्राणोहंममैवगीतिभावमापन्नस्यसौस्वर्यंधनमितिप्रकृतेप्राणविज्ञानेगुणविधिर्विवक्षित

श्रेत्किमित्युद्गातुरन्यकर्त्तव्यमुपदिश्यतइत्याशंक्यदृष्टफलतयेत्याह॥इदंत्विति॥अथेच्छायांकर्त्तव्यत्वेनविहितायांतावन्मात्रेसिद्धेपिकथंसौ
स्वर्यंसिध्येन्नहिस्वर्गकामनामात्रेणस्वर्गःसिध्यत्यतआह॥साम्नइति॥तस्यसुस्वरत्वेनतच्छब्दितस्यप्राणस्योपासकात्मकस्यस्वरवत्वप्रत्ययेका
र्येसतिविहितेच्छामात्रेणसाम्नःसौस्वर्यंनभवतीत्यस्मात्सामर्थ्यादंतधावनादिकर्त्तव्यमित्येतदत्रविधित्सितमितियोजना॥सौस्वर्यस्यसामभूषण

इदंतुप्रासंगिकंविधीयतेसाम्नःसौस्वर्येणस्वरवत्वप्रत्ययेकर्त्तव्येइच्छामात्रेणसौस्वर्यंनभवतीतिदंतधावनतैलपानादिसामर्थ्यात्कर्त
व्यमित्यर्थःतयेवसंस्कृतयावाचास्वरसंपन्नयार्त्विज्यंकुर्यात्तस्माद्यस्माद्यत्साम्नःस्वभूतःस्वरस्तेनस्वेनभूषितंसामातोयज्ञेस्वरवंतमु
द्गातारंदिदृक्षंतएवद्रष्टुमिच्छंतएवधनिनमिवलौकिकाःप्रसिद्धंहिलोकेऽयोऽपियस्यस्वंधनंभवतितंधनिनंदिदृक्षंतइतिसिद्धस्यगुण

तस्यहैतस्यसाम्नोयःस्वंवेदभवतिहास्यस्वंतस्यवैस्वरएवस्वंतस्मादार्त्विज्यंकरिष्यन्वाचिस्वरमिच्छेततयावाचास्वरसंप
न्नयार्त्विज्यंकुर्यात्॥तस्माद्यज्ञेस्वरवंतंदिदृक्षंतएवाथोयस्यस्वंभवतिभवतिहास्यस्वंयएवमेतत्साम्नःस्वंवेद॥ २५ ॥

विज्ञानफलसंबंधस्योपसंहारःक्रियते॥भवतिहास्यस्वंयएवमेतत्साम्नःस्वंवेदेति॥२५॥अथान्योगुणःसुवर्णवत्तालक्षणोविधीयते
असावपिसौस्वर्यमेवएतावान्विशेषःपूर्वंकंठगतंमाधुर्यमिदंतुलाक्षणिकंसुवर्णं लेगमकमाह॥तस्मादिति॥दृष्टांतमनंतरवाक्यावष्टंभे
नस्पष्टयति॥प्रसिद्धंहीति॥भवतिहास्यस्वमितिप्रागेवोक्तत्वादनर्थिकापुनरुक्तिरित्याशंक्याह॥सिद्धस्येति॥२५॥साम्नोगुणांतरमवतारयति॥
अथेति॥तर्हिपुनरुक्तिःस्यात्तत्राह॥एतावानिति॥लाक्षणिकंकंठ्योयंवर्णोदंत्योयमितिलक्षणज्ञानपूर्वकंसुष्टुवर्णोच्चारणंममैवसामशब्दितप्राण



८७

लाक्षणिकसोऽस्वर्यगुणवत्प्राणविज्ञानवतोयथोक्तफललाभेहेतुमाह॥शब्देति॥वाक्यार्थमाह॥लौकिकमेवेति॥फलेनप्रलोभ्यअभिमुखीकृत्यकिं तत्सुवर्णमितिशुश्रूषवेब्रूते॥तस्येति॥गुणविज्ञानफलमुपसंहरति॥भवतीति॥२६॥सामस्वच्छब्दवाच्यस्यस्वरूपभूतस्येतियावत्॥उपास्यस्यप्रति

शब्दवाच्यंतस्यहैतस्यसाम्नोयःसुवर्णंवेदभवतिहास्यसुवर्णंसुवर्णशब्दसामान्यात्स्वरसुवर्णयोर्लौकिकमेवसुवर्णंगुणविज्ञानफलं भवतीत्यर्थः तस्यवैस्वरएवसुवर्णंभवतिहास्यसुवर्णंयएवमेतत्साम्नःसुवर्णंवेदेतिपूर्ववत्सर्वं॥२६॥तथाप्रतिष्ठागुणंविधित्सन्नाह ॥तस्यहैतस्यसाम्नोयःप्रतिष्ठांवेदप्रतितिष्ठत्यस्यामितिप्रतिष्ठावाकृतांप्रतिष्ठांसाम्नोगुणंयोवेदसप्रतितिष्ठतिह॥तंयथायथोपासत

तस्यहैतस्यसाम्नोयःसुवर्णंवेदभवतिहास्यसुवर्णंतस्यवैस्वरएवसुवर्णंभवतिहास्यसुवर्णंयएवमेतत्साम्नःसुवर्णंवेद ॥२६॥तस्यहैतस्यसाम्नोयःप्रतिष्ठांवेदप्रतिहतिष्ठतितस्यवैवागेवप्रतिष्ठावाचिहिखल्वेषएतत्प्राणःप्रतिष्ठितोगीयतेन्न इत्युहैकआहुः॥२७॥

इतिश्रुतेःतद्गुणवत्वंयुक्तं॥पूर्ववत्फलेनप्रतिलोभितायकाप्रतिष्ठेतिशुश्रूषवेआह॥तस्यवैसाम्नोवा गेववागितिजिह्वामूलीयादीनांस्थानानांमारव्यासैवप्रतिष्ठातदाहवाचिहिजिह्वामूलीयादिषुहियस्मात्प्रतिष्ठितःसन्नेषःप्राणः एतत्गानंगीयतेगीतिभावमापद्यतेतत्साम्नःप्रतिष्ठावागन्नेप्रतिष्ठितोगीयतइत्युहएकेअन्येआहुरिहप्रतितिष्ठतीतियुक्तमनि दितत्वोदकीयपक्षस्यविकल्पेनप्रतिष्ठागुणविज्ञानंकुर्याद्वाग्वाप्रतिष्ठान्नंवेति॥२७॥ ष्ठागुणत्वेपिकथमुपासकस्यतद्गुणत्वंतत्राह॥तंयथे ति॥आदिपदादुरःशिरःकंठदंतोष्ठनासिकातालूनिगृह्यंते॥किमित्यष्टौस्थानानिवागित्युच्यतेतत्राह॥वाचिहीति॥पक्षांतरमाह॥अन्नइति॥अन्न

एकीयपक्षेयुक्तिमाह॥इहेति॥कथंतर्हिप्रतिष्ठागुणस्यप्राणस्यविज्ञानंकर्त्तव्यमतआह॥अनिंदितत्वादिति॥२७॥अथातःपवमानानामित्यादिवा
क्यमवतारयति॥एवमिति॥तत्राथशब्दंव्याचष्टे॥यद्विज्ञानवतइति॥अतःशब्दार्थमाह यस्माच्चेति॥इहेतिप्राणविदुक्तिः॥कदातर्हिजपकर्मक
र्तव्यंतत्राह॥तस्येति॥उद्गीथेनास्ययामःखंनउद्गायेतिचप्रकरणादुद्गीथेनसंबंधाज्जपस्यसर्वत्रोद्गानकालेप्राप्तौपवमानानामेवेतिवचनात्काल

एवंप्राणविज्ञानवतोजपकर्मविधित्स्यते॥यद्विज्ञानवतोजपकर्मण्यधिकारस्तद्विज्ञानमुक्तं॥अथानंतरंयस्माच्चैवंविदुषाप्रय
ज्यमानंदेवभावायाभ्यारोहफलंजपकर्मअतस्तस्मात्तद्विधीयते॥इहतस्यचोद्गीथसंबंधात्सर्वत्रप्राप्तौपवमानानामितिवचना
त्पवमानेषुत्रिष्वपिकर्तव्यतायांप्राप्तायांपुनःकालसंकोचंकरोति॥सवैखलुप्रस्तोतासामप्रस्तौति॥सप्रस्तोतायत्रयस्मिन्कालेसा

अथातःपवमानानामेवाभ्यारोहःसवैखलुप्रस्तोतासामप्रस्तौतिसयत्रप्रस्तुयात्तदेतानिजपे

मप्रस्तुयात्प्रारभेततत्तस्मिन्कालेएतानिजपेदस्यचजपकर्मणआख्याऽभ्यारोहःआभिमुख्येनारोहत्यनेनजपकर्मणाएवंविद्देवभावमा
त्मानमित्यभ्यारोहःएतानीतिबहुवचनात्त्रीणियजूंषिद्वितीयानिर्देशाद्ब्राह्मणोत्पन्नत्वाच्चयथापठितएवस्वरःप्रयोक्तव्योनमांत्रःयाजमा
नंजपकर्म नियमसिद्धिरित्यर्थः॥सवैखल्वित्यादिवाक्यतात्पर्यमाह॥पवमानेष्विति॥ननुकर्तव्यत्वेनाभ्यारोहःश्रूयतेजपकर्मविधित्सि
तमितिचोच्यतेकिंकेनसंगतमित्याशंक्याह॥अस्यचेति॥अभ्यारोहशब्दस्यन तत्ररूढिर्वृद्धप्रयोगाभावादित्याशंक्याह॥आभिमुख्येनेति
॥यजुर्मंत्राक्षराणामनियतपादाक्षरत्वादसतोमासद्गमयेत्यारभ्यैकोवाद्वौवामंत्रावित्याशंक्याह ॥

50

एतानीति॥ यद्यमी याजुषा मंत्राः तर्हि मान्त्रेण स्वरेण वै भाषिकग्रंथोक्तेन भाव्यमित्याशंक्याह॥ द्वितीयेति॥ यत्र स्वरो विवक्षितस्तत्र तृतीयानिर्देशो दृश्यते॥ उच्चैर्ऋचा क्रियत उच्चैः साम्नोपांशु यजुषेति प्रकृते तु द्वितीयानिर्देशाज्जपकर्ममात्रं प्रतीयते मान्त्रस्तु स्वरो न प्रतिभातीत्यर्थः केन तर्हि स्वरेण



एतानि तानि यजूंषि असतो मा सद्गमय तमसो मा ज्योतिर्गमय मृत्योर्मामृतं गमयेति मंत्राणामर्थस्तिरोहितो भवतीति स्वयमेव व्याचष्टे ब्राह्मणं मंत्रार्थः स मंत्रो यदाह यदुक्तवान्कोऽस्यार्थ इत्युच्यते॥ असतो मा सद्गमयेति॥ मृत्युर्वा असत्स्वाभाविककर्मविज्ञाने मृत्युरित्युच्यते॥ असदत्यंताधोभावहेतुत्वात् सदमृतं॥ सच्छास्त्रीयकर्मविज्ञानेऽमरणहेतुत्वादमृतं॥ तस्मादसतो मा मां कर्मणोऽज्ञानाच्च

दसतो मा सद्गमय तमसो मा ज्योतिर्गमय मृत्योर्मामृतं गमयेति स यदाहासतो मा सद्गमयेति मृत्युर्वा असत्सदमृतं मृत्योर्मामृतं गमयामृतं माकुर्वित्येवैतदाह तमसो मा ज्योतिर्गमयेति मृत्युर्वै तमो

सच्छास्त्रीयकर्मविज्ञाने गमय देवभावसाधनात्मभावमापादयेत्यर्थः॥ तत्र वाक्यार्थमाह॥ अमृतं मा मां कुर्वित्येवैतदाहेति॥ तथा तमसो मा ज्योतिर्गमयेति मृत्युर्वै तमः सर्वं ह्यज्ञानमावरणात्मकत्वात्तमस्तदेव च मरणहेतुत्वान्मृत्युः॥ ज्योतिरमृतं पूर्वोक्तविपरीतं दैवं स्वरूपं प्रकाशात्मकत्वाज्ज्ञानं ज्योतिस्तदेवामृतमविनाशात्मकत्वात्तस्मात्तमसो मा ज्योतिर्गमयेति

प्रयोगो मंत्राणामिति चेत्तत्राह ब्राह्मणेति॥ भवतु शातपथेन स्वरेण मंत्राणां प्रयोगस्तथापि किमार्त्विज्यं किं वा याजमानं जपकर्मेति वीक्षायामाह॥ याजमानमिति॥ व्याचिख्यासितयजुषां स्वरूपं दर्शयति॥ एतानीति॥ मंत्रार्थशब्देन पदार्थो वाक्यार्थस्तत्फलं चेति त्रयमुच्यते॥ लौकिकं तमो व्यावर्त्तयति॥ सर्वं हीति॥ पूर्वोक्तपदेन व्याख्यातं तमो गृह्यते॥ वैपरीत्ये हेतुमाह प्रकाशात्मकत्वा

ज्ञानंतेनसाध्यमितियावत् पदार्थोक्तिसमाप्ताविति शब्दः॥उत्तरवाक्याभ्यांवाक्यार्थंतत्फलंचेतिद्वयंक्रमेणोच्यतइत्याह॥पूर्ववदिति॥फलवाक्य
मादायपूर्वस्माद्विशेषंदर्शयति॥अमृतमिति॥प्रथमद्वितीयमंत्रयोरर्थभेदाप्रतीतेःपुनरुक्तिमाशंक्यावांतरभेदमाह॥पूर्वमंत्रइति॥तथापितृतीये
मंत्रेपुनरुक्तिस्तदवस्थेत्याशंक्याह॥पूर्वयोरिति॥वृत्तमनूद्योत्तरवाक्यमवतार्यव्याचष्टेयाजमानमिति॥यथाप्राणस्त्रिषुपवमानेषुसाधारणमागा

पूर्ववन्मृत्योर्मामृतंगमयेत्यादिअमृतंमाकुर्वित्येवैतदाहदेवंप्राजापत्यंफलभावमापादयेत्यर्थः ॥ ॥ पूर्वमंत्रोऽसाधन
स्वभावात्साधनभावमापादयेति॥द्वितीयस्तुसाधनभावादप्यज्ञानरूपात्साध्यभावमापादयेति॥मृत्योर्मामृतंगमयेतिपूर्वयोरेवमं
त्रयोःसमुच्चितोर्थस्तृतीयेनमंत्रेणोच्यतइतिप्रसिद्धार्थतैवनात्रतृतीयेमंत्रेतिरोहितमंतर्हितमिवार्थरूपंपूर्वयोरिवमंत्रयोरस्तियथा

ज्योतिरमृतंमृत्योर्मामृतंगमयामृतंमाकुर्वित्येवैतदाहमृत्योर्मामृतंगमयेतिनात्रतिरोहितमिवास्त्यथ
यानीतराणिस्तोत्राणितेष्वात्मनेन्नाद्यमागायेत्तस्मादुतेषुवरंवृणीतयंकामंकामयेततꣳसएषएवंविदुद्गाता

श्रुतएवार्थोयाजमानमुद्गानंकृत्वापवमानेषुत्रिषुअथानंतरंयानीतराणिशिष्टानिस्तोत्राणितेष्वात्मनेन्नाद्यमागायेत्॥प्राणविदुद्गाताप्रा
णभूतःप्राणवदेव॥यस्मात्सएषउद्गाताएवंप्राणंयथोक्तंवेत्त्यतःप्राणवदेवतंकामंसाधयितुंसमर्थः॥तस्माद्यजमानस्तेषुस्तोत्रेषुप्र
युज्यमानेषुवरंवृणीतयंकामंकामयेततंकामंवरंवृणीतप्रार्थयेत्॥ नंकृत्वाशिष्टेषुस्तोत्रेषुस्वार्थमागानमकरोत्तथेत्याह॥प्राणविदिति॥तद्धि
दोतद्द्वागानेयोग्यतामाह॥प्राणभूतइति॥हेतुवाक्यमादायोजयति॥यस्मादिति॥प्रतिज्ञावाक्यंव्याचष्टे॥तस्मादिति॥किमितिमत्यासेरंवाक्यद्वयंव्याख्यानमि

यस्मादित्यादिनासएषएवंविदुद्गातात्मनेयजमानायवायंकामंकामयतेतमागानेनसाधयतियस्मादितिहेतुग्रंथस्तस्मादितिप्रतिज्ञाग्रंथा
त्प्रागेवसंबध्यतइतियोजना॥वृत्तंकीर्त्तयति॥एवंतावदिति॥तत्रकर्मसमुच्चितेज्ञानेदेवताप्राप्तौशंकासंभवोनास्तिमिथःसहकृतयोर्ज्ञानकर्म
णोस्तदाप्तिहेतुत्वादित्याह॥तत्रेति॥समनंतरवाक्यमवतारयति॥अतइति॥समुच्चयात्फलाप्तेर्दृष्टत्वादितियावत्॥नहेत्यादिनापदानिछिंद्

यस्मात्सएषएवंविदुद्गातेतितस्मात्कुद्वात्प्रागेवसंबध्यते॥आत्मनेवायजमानायवायंकामंकामयतेइत्युद्गातातमागानेनसाध
यत्येवंतावत्ज्ञानकर्मभ्यांप्राणात्मापत्तिरित्युक्तंतत्रनास्त्याशंकासंभवोऽतःकर्मापायेप्राणापत्तिर्भवतिवानवेत्याशंक्यतेतदाशंकानि
वृत्त्यर्थमाह॥तद्धैतल्लोकजिदेवेति॥तत्तुहतदेतत्प्राणदर्शनंकर्मवियुक्तंकेवलमपिलोकजिदेवेतिलोकसाधनमेव॥नहएवालो

त्मनेवायजमानायवायंकामंकामयतेतमागायतितद्धैतल्लोकजिदेवनहैवालोक्यतायाआशास्तियएवमेतत्साम
वेद॥२८॥तृतीयंब्राह्मणं॥३॥

क्यतायैअलोकार्हत्वायाआशंसनंप्रार्थनंनैवास्तिह॥नहिप्राणात्मन्युत्पन्नात्माभिमान
स्यतत्प्राप्त्याशंसनंसंभवति नहिग्रामस्थःकदाग्रामंप्राप्नुयामित्यरण्यस्थइवाशास्ते॥असन्निकृष्टविषयेह्यनात्मन्याशंसनंन
तत्स्वात्मनिसंभवतितस्मान्नाशास्तिकदाचित्प्राणात्मभावंनप्रतिपद्येयमिति॥

न्वाक्यमादायव्याकरोति॥अलोकार्हत्वायेति॥तदेव
स्फुटयति॥नहीति॥तत्रदृष्टांतमाह॥नहीति॥दृश्यमानमाशंसनंतर्हिकस्मिन्विषयेस्यादित्याशंक्याह॥असंनिकृष्टेति॥प्राणात्मनाऽवस्थितस्यावि
दुषस्तदात्मभावंकदाचिदहंनप्रतिपद्येयमित्याशंसनंनास्तीतिनिगमयति॥तस्मादिति ॥

कर्मसमुच्चितादुपासनात्केवलाच्चप्राणात्मत्वंफलमुक्तंतत्रसमुच्चितादुद्गातुर्यजमानस्यवाफलंकेवलाच्चोपासनात्तयोरन्यतरस्यान्यस्यवाकस्य
चिदितिजिज्ञासमानःशंकते॥कस्येति॥ज्ञानकर्मणोरुभयत्रसमभावादुभयोरपिवचनात्फलसिद्धिराश्रमांतरविषयंतुकेवलज्ञानस्यलो
कजयहेतुत्वंइत्यभिप्रेत्याह॥यएवमिति॥एवंशब्दस्यप्रकृतपरामर्शित्वात्पूर्वोक्तंसर्ववेद्यस्वरूपंसंक्षिपति॥अहमस्मीत्यादिनातस्यवागादि
भ्योविशेषंदर्शयति॥इंद्रियेति॥किमिदानींप्राणस्यैवोपास्यतयावागादिपंचकमुपेक्षितमितिनेत्याह॥वागादीति॥तस्यप्राणाश्रयत्वेपिकृतो

कस्यैतद्यएवमेतत्सामप्राणंयथोक्तंनिर्धारितमहिमानंवेदाहमस्मिप्राणःइंद्रियविषयासंगैरासुरैःपाप्मभिरधर्षणीयोविशुद्धोवा
गादिपंचकंचमदाश्रयत्वादन्याध्यात्मरूपंस्वाभाविकविज्ञानोत्थेंद्रियविषयासंगजनितासुरपाप्मदोषवियुक्तंसर्वभूतेषुचमदाश्र
याऽन्नाद्योपभोगबंधनमात्माचाहंसर्वभूतानामांगिरसत्वादृग्यजुःसामोद्गीथभूतायाश्चवाचआत्मातद्व्याप्तेस्तन्निर्वर्तकत्वाच्चमम
साम्नोगीतिभावमापद्यमानस्यबाह्यंधनंभूषणंसौस्वर्यंततोप्यांतरंसौवर्णलाक्षणिकंसौस्वर्यंगीतिभावमापद्यमानस्यममकंठादि
स्थानानिप्रतिष्ठैवंगुणोहंपुत्तिकादिशरीरेषुकार्त्स्न्येनपरिसमाप्तोऽमूर्तत्वात्सर्वगतत्वाच्चेति॥आएवमभिमानाभिव्यक्तेर्वेदोपास्तइ
त्यर्थः॥इतिबृहदारण्यकेतृतीयाध्यायेतृतीयंब्राह्मणं॥३॥

देवतात्वमासंगपाप्मविद्धत्वादित्याशंक्याह॥स्वाभाविकेति॥अन्नकृतोपकारंप्रा
णद्वारावागादौस्मारयति॥सर्वेति॥रूपात्मकेजगतिप्राणस्वरूपमनुसंधत्तेआत्माचेतिनामात्मकेजगतिप्राणस्यात्मत्वमुक्तंस्मारयति॥ऋगिति॥
सतिसामत्वेगीतिभावावस्थायांप्राणस्योक्तंबाह्यमांतरंचसौस्वर्यंसौवर्णमितिगुणद्वयमनुवदति॥ममेति॥तस्यैववैकल्पिकींप्रतिष्ठामुक्तामनु
स्मारयति॥गीतीति॥यद्वेवेत्यादिनोक्तंपरामृशति॥एवंगुणोहमिति॥इत्येवमभिमानाभिव्यक्तिपर्यंतंयोध्यायतितस्येदंफलमित्युपसंहरति॥



82

ब्राह्मणांतरस्यावतारार्थं संबंधं वक्तुं वृत्तं कीर्त्तयति॥ आत्मैवेत्यादिना केवलप्राणदर्शनेन च प्रजापतित्वप्राप्तिर्व्याख्यातेति संबंधः॥ इदानीमात्मेत्या
देस्तु हेदमित्यतः प्राक्तनग्रंथस्यापाततस्तात्पर्यमाह॥ प्रजापतेरिति॥ आदिपदेन सर्वात्मत्वादिग्रह्यते फलोत्कर्षोपवर्णनं कुत्रोपयुज्यते तत्राह
॥ तेन चेति॥ कर्मकांडपदेन पूर्वग्रंथोपि संगृहीतः फलातिशयो हेत्वतिशयापेक्षोऽन्यथाकस्मिकत्वापातादतो ज्ञानकर्मफलभूतसूत्रविभूतिरुच्य
माना ज्ञानकर्मणोर्महत्त्वं दर्शयतीत्याह॥ सामर्थ्यादिति॥ आपातिकतात्पर्यमुक्त्वा परमतात्पर्यमाह॥ विवक्षितं त्विति॥ किंच॥ विमतं संसारांतर्भूतं

आत्मैवेदमग्र आसीत्॥ ज्ञानकर्मभ्यां समुच्चिताभ्यां प्रजापतित्वप्राप्तिर्व्याख्याता केवलप्राणदर्शनेन च तद्धैतल्लोकजिदेवेत्यादिना प्रजा
पतेः फलभूतस्य सृष्टिस्थितिसंहारेषु जगतः स्वातंत्र्यादिविभूत्युपवर्णनेन ज्ञानकर्मणोर्वैदिकयोः फलोत्कर्षो वर्णयितव्य इत्येवमर्थ
मारभ्यते तेन च कर्मकांडविहितज्ञानकर्मस्तुतिः कृता भवेत्सामर्थ्याद्विवक्षितं त्वेतत्सर्वमप्येतत् ज्ञानकर्मफलं संसार एव॥ भयारत्या
दियुक्तत्वश्रवणात्कार्यकारणलक्षणत्वाच्च स्थूलव्यक्तानित्यविषयत्वाच्चेति॥ ब्रह्मविद्यायाः केवलायाः वक्ष्यमाणाया मोक्षहेतुत्वमित्युत्त
रार्थं चेति॥ नहि संसारविषयात्साध्यसाधनादिभेदलक्षणाद्विरक्तस्यात्मैकत्वज्ञानविषयेऽधिकारोऽतृषितस्येव पाने कार्यकारणात्मत्वा

दस्मदादिकार्यकारणवदित्याह॥ कार्येति॥ प्राजापत्यपदस्य संसारांतर्भूतत्वे हेत्वंतरमाह॥ स्थूलेति॥ स्थूलत्वं साधयति व्यक्तेति अनित्यत्वाद्दृश्यत्वाच्च प्र
जापतित्वं संसारांतर्गतमित्याह॥ अनित्येति॥ इतिशब्दो विवक्षितार्थसमाप्त्यर्थः॥ किमित्येतद्विवक्षितमुपवर्ण्यते तत्राह॥ ब्रह्मविद्याया इति॥ तच्चेदं विव
क्षितार्थवचनमेकाकिन्या विद्याया वक्ष्यमाणायाः मुक्तिहेतुत्वमित्युत्तरार्थमिति द्रष्टव्यं॥ यदा हि कर्मज्ञानफलं प्रजापतित्वं संसार इत्युच्यते तदा तत्पर्यंता
त्सर्वस्मात्तस्माद्विरक्तस्य वक्ष्यमाणविद्यायामधिकारः सेत्स्यतीत्यर्थः॥ अथ यस्य कस्यचिदर्थितामात्रेण तत्राधिकारसंभवाद्वैराग्यं न मृग्यमित्याशंक्याह

संसार एव विषयः संसारविषयः ज्ञानमेव विषयः ज्ञानविषयः = १

उभयत्रापि विषयशब्दः पूर्वेण समानाधिकरणः॥ विवक्षितमर्थमुपसंहरति॥ तस्मादिति॥ वैराग्यमंतरेण ज्ञानानधिकारात् ज्ञानादिफलस्य प्रजापतित्व-
स्योत्कर्षवतः संसारत्ववचनं ततो विरक्तस्य वक्ष्यमाणविद्यायामधिकारार्थं विरक्तस्य विद्याधिकारे मोक्षादपि वैराग्यं स्यादित्याशंक्याह॥ तथा
चेति॥ ननु मोक्षार्थं विद्यायां प्रवर्तितव्यं मोक्षस्यापुरुषार्थत्वान्न प्रेक्षावता प्रार्थ्यं तेतत्राह॥ तदेतदिति॥ आपातिकमनापातिकं च तात्पर्यमुक्त्वा
प्रतीकमादायाक्षराणि व्याकरोति॥ आत्मैवेति॥ तस्याश्वमेधाधिकारे प्रकृतत्वं सूचयति॥ अंडज इति॥ पूर्वस्मिन्नपि ब्राह्मणे तस्य प्रस्तुतत्वम

तस्मात् ज्ञानकर्मफलोत्कर्षोपवर्णनमुत्तरार्थं॥ तथा च वक्ष्यति तदेतत्पदनीयमस्य तदेतत्प्रेयः पुत्रादित्यादि आत्मैव आत्मेति
प्रजापतिः प्रथमजोंडजः शरीर्यभिधीयते वैदिकज्ञानकर्मफलभूतः स एव किं तद् इदं शरीरभेदजातं॥ तेन प्रजापतिशरीरेणावि

हरिः ॐम्॥ आत्मैवेदमग्र

भक्तमात्मैवासीदग्रे प्राक्शरीरांतरोत्पत्तेः स च पुरुषविधः पुरुषप्रकारः शिरःपाण्यादिलक्षणो विराट् स एव प्रथमः संभूतः अनुवीक्ष्या
न्वालोचनं कृत्वा कोऽहं किंलक्षणो वास्मीति नान्यद्वस्त्वंतरमात्मनः प्राणपिंडात्मकात्कार्यकारणरूपान्नापश्यन्न ददर्श  स्तीत्याह॥ वैदिकेति॥

स एवासीदिति संबंधः॥ स्थित्यवस्थायामपि प्रजापतिरेव समष्टिदेहस्तत्तद्व्यष्ट्यात्मना तिष्ठतीति विशेषासिद्धिरित्याशंक्याह॥ तेनेति॥ आत्मशब्देन प
रस्यापि ग्रहसंभवे किमिति विराडेवोपादीयत इत्याशंक्य वाक्यशेषादित्याह॥ स चेति॥ वक्ष्यमाणमन्वालोचनादि विराडात्मकर्तृकमेवेत्याह॥ स एवेति
स्वरूपधर्मविषयौ द्वौ विमर्शौ नान्यदिति वाक्यमादायाक्षराणि व्याचष्टे॥ वस्त्वंतरमिति॥ दर्शनशक्त्यभावादेव वस्त्वंतरं प्रजापतिर्न दृष्टवानित्याशंक्याह॥

केवलंत्वेति॥सोहमित्यादिव्याचष्टे॥तथेति॥यथासर्वात्मा प्रजापतिरहमिति पूर्वस्मिन्जन्मनिश्रौतेन विज्ञानेनसंस्कृतो विराडात्मातथेदानीमपिफ
लावस्थःसोहंप्रजापतिरस्मीति प्रथमंव्याहृतवानितियोजनाव्याहरणफलमाह॥ततइति॥किमिति प्रजापतेरहमितिनामोच्यतेसाधारणंहीदंसर्वे
षामित्याशंक्योपासनार्थमित्याह॥तस्येति॥आध्यात्मिकस्यचास्मुष्यस्य पुरुषस्याहमितिरहस्यंनामेतियतोवक्ष्यत्यतःश्रुतिसिद्धमेवैतन्नामास्यध्या

केवलंत्वात्मानमेवसर्वात्मानमपश्यत्तथापूर्वजन्मश्रौतविज्ञानसंस्कृतःसोहंप्रजापतिःसर्वात्माहमस्मीत्यग्रेव्याहरद्व्याहृतवानतत
स्तस्माद्यतःपूर्वज्ञानसंस्कारादात्मानमेवाहमित्यभ्यधादग्रेतस्मादहंनामाभवत्तस्योपनिषदहमितिश्रुतिप्रदर्शितमेवनामवक्ष्य
ति॥तस्माद्यस्मात्कारणेप्रजापतावेवंवृत्तंतस्मात्तत्कार्यभूतेषुप्राणिष्वेतर्ह्येतस्मिन्नपिकालेआमंत्रितःकस्त्वमित्युक्तःसन्नहमयमि

आसीत्पुरुषविधःसोनुवीक्ष्यनान्यदात्मनोपश्यत्सोहमस्मीत्यग्रेव्याहरत्ततोहंनामाभवत्

त्येवाग्रउक्त्वाकारणात्माभिधानेनात्मानमभिधायाग्रेपुनर्विशेषनामजिज्ञासवेऽथानंतरंविशेषपिंडाभिधानंदेवदत्तोयज्ञदत्तोवे
तिप्रब्रूतेकथयतियन्नामास्यविशेषपिंडस्यमातापितृकृतंभवतितत्कथयति सचप्रजापतिरतिक्रांतजन्मनिसम्यक्कर्मज्ञानभा
वनानुष्ठानैःसाधकावस्थायांयद्यस्मात्कर्मज्ञानभावनानुष्ठानैःप्रजापत्यप्रतिपित्सूनांपूर्वः नार्थमिहोक्तमित्यर्थः॥प्रजापतेरहंनामत्वेलो
कसिद्धिंप्रमाणयितुमुत्तरंवाक्यमित्याह॥तस्मादिति॥उपासनार्थंप्रजापतेरहंनामोक्त्वापुरुषनामनिर्वचनंकरोति॥सचेत्यादिना॥पूर्वस्मिन्जन्मनि
साधकावस्थायांकर्माद्यनुष्ठानैरहमहमिकयाप्रजापतित्वप्रेप्सूनांमध्येपूर्वोयःसम्यक्कर्मज्ञानाद्यनुष्ठानैःसर्वंप्रतिबंधकंयस्माददहत्तस्मात्सप्रजापतिः

प्रथमः सन्निति॥ सर्वस्मादस्मात्प्रजापतित्वप्रतिपित्सुसमुदायात्प्रथमः सन्नौषदितिसंबंधः॥ आकांक्षापूर्वकं दाह्यं दर्शयति॥ किमित्यादिना॥ पूर्वं प्रजा
पतित्वप्रतिबंधकप्रध्वंसित्वे सिद्धमर्थमाह॥ यस्मादिति॥ पुरुषगुणोपासकस्य फलमाह॥ यथेति अयं प्रजापतिरिति भविष्यद्वृत्त्या साधकोक्तिः पुरुषः प्र
जापतिरितिफलावस्थः सकथ्यते॥ कोसावोषतीत्यपेक्षायामाह॥ तं दर्शयतीति॥ पुरुषगुणप्रजापतिरहमस्मीति यो विद्यात्सोन्यानोषतीत्यर्थः॥ वि

प्रथमः सन्नस्मात्प्रजापतित्वप्रतिपित्सुसमुदायात्सर्वस्मादादावौषत् अदहत्किमासंगाज्ञानलक्षणान्सर्वान्पाप्मनः प्रजापतित्वप्रति
बंधकारणभूतान्यस्मादेवं तस्मात्पुरुषः पूर्वः औषदिति पुरुषो य श्चायं प्रजापतिरोषित्वा प्रतिबंधकान्पाप्मनः सर्वान्पुरुषः प्रजाप
तिरभवदेवमन्योपि ज्ञानकर्मभावनानुष्ठानवन्हिना केवलज्ञानबलाद्वोषति भस्मीकरोति ह वै स तं कं यः अस्माद्विदुषः पूर्वः प्रथमः प्र

तस्मादप्येतर्ह्यामंत्रितोहमयमित्येवाग्र उक्त्वाथान्यन्नाम प्रब्रूते यदस्य भवति स यत्पूर्वोस्मात्सर्वस्मात्सर्वान्पाप्मन औषत्त
स्मात्पुरुष ओषति ह वै स तं योस्मात्पूर्वो बुभूषति य एवं वेद॥१॥ जापतित्वं बुभूषति भवितुमिच्छति तमित्यर्थः॥ तं दर्शयति य

एवं वेदेति॥ सामर्थ्याज्ज्ञानभावनाप्रकर्षवान्॥ नन्वनर्थाय प्राजापत्यप्रतिपित्सैवं विदा चेद्दह्यते॥ नैष दोषः ज्ञानभावनोत्कर्षाभावा
त्प्रथमं प्रजापतित्वप्रतिपत्यभावमात्रत्वाद्दाहस्योत्कृष्टसाधनः प्रथमं प्रजापतित्वं प्राप्नुवन् न्यूनसाधनो न प्राप्नोतीति स तं दहतीत्युच्य
ते न पुनः प्रत्यक्षमुत्कृष्टसाधनेनेतरो दह्यते ह्यासाम्ये कथमेषा व्यवस्थेत्याशंक्याह॥ सामर्थ्यादिति॥ हेतुसाम्ये दाहकत्वानुपपत्तेः सत्प्रकर्षवानित
रान्दहतीत्यर्थः॥ प्रसिद्धं दाहमादाय चोदयति॥ नन्विति॥ तथा च तत्से प्सायोगात्तदुपास्त्यसिद्धिरित्यर्थः॥ विवक्षितं दाहं दर्शयन्नुत्तरमाह॥ नैष इति॥ तदेव

स्पष्टयति॥ उक्त इति॥ प्राप्नुवन्नभवतीतिशेषः॥

वृत्तं

औपचारिकंदाहंदृष्टांतेनसाधयति॥यथेति॥आजिर्मर्यादांतांसरंतिधावंतीत्याजिसृतस्तेषामितियावत्॥१॥ज्ञानकर्मफलंसोत्रंपदमुत्कृष्टत्वा
न्मुक्तिस्तदन्यमुक्त्यभावात्तद्धेतुसम्यग्धीसिद्धयेप्रवृत्तिरनर्थिकेत्याशंक्यसोविभेदित्यस्यतात्पर्यमाह॥यदिदमिति॥तुष्टूषितंस्तोतुमभिप्रेत
मितियावत्॥आहविवक्षितार्थसिध्यर्थंहेतुंभयभाक्त्वमितिशेषः॥ज्ञानकर्मफलंत्रैलोक्यात्मकसूत्रत्वमुत्कृष्टमपिसंसारांतर्भूतमेवनकेव

यथालोकेआजिसृतांयःप्रथममाजिमुपसर्पतितेनेतरेदग्धाइवापहृतसामर्थ्याभवंतितद्वत्॥१॥यदिदंतुष्टूषितंकर्मकांडविहि
तज्ञानकर्मफलंप्राजापत्यलक्षणंनैवतत्संसारविषयमत्यक्रामदितीममर्थंप्रदर्शयिष्यन्नाह॥सोविभेत्॥सप्रजापतिः॥योयंप्रथ

सोबिभेत्तस्मादेकाकीविभेतिसहायमीक्षांचक्रेयन्मदन्यन्नास्तिकस्मान्नुबिभेमीतिततएवास्यभयंवीयाय

मःशरीरीपुरुषविधोव्याख्यातःसःअविभेत्॥भीतवानस्मदादिवदेवेत्याह॥यस्मादयंपुरुषविधःशरीरकरणवानात्मनाशवि
परीतदर्शनवत्वादबिभेत्तस्मात्तत्सामान्याद्द्यत्वेप्येकाकीविभेति॥किंच॥अस्मदादिवदेवभयहेतुविपरीतदर्शनापनोदकारणं
यथाभूतार्थदर्शनं॥सोयंप्रजापतिरीक्षामीक्षणंचक्रेकृतवान्स्महकथमित्याह॥ ल्यमितिवक्तुमुत्तरवाक्यमित्यर्थः॥अहमेकाकीकोपिमां

हनिष्यतीत्यात्मनाशविषयविपरीतज्ञानवत्वात्प्रजापतिर्भीतवानित्यत्रकिंप्रमाणमित्याशंक्यकार्यगतेनलिंगेनकारणेप्रजापतौतदनुमेयमि
त्याह॥यस्मादिति॥तत्सामान्यादेकाकित्वाविशेषादितियावत्॥प्रजापतेःसंसारांतर्भूतत्वेहेत्वंतरमाह॥किंचेति॥यथास्मदादिभीरज्जुस्थाण्वादौ
सर्पपुरुषादिभ्रमजनितभयनिवृत्तयेविचारेणतत्वज्ञानंसंपाद्यते॥तथाप्रजापतिरपिभयस्यतद्धेतोश्चविपरीतधियोध्वस्तिहेतुंतत्वज्ञानंविचार्यसंपादि

त्वे४

परमार्थदर्शनमेव प्रश्नपूर्वकं विशदयति॥ कथमित्यादिना॥ तस्मिन्नित्यत्र तस्मादित्यादौ पठितव्यं मच्छब्दोपलक्षितं प्रत्यञ्चं तन्मयमद्वितीयब्रह्मरूपेण ज्ञात्वा सहेतुभीतिं प्रजापतिरपासिपतीत्युक्तं॥ इदानीं तत्त्वज्ञानफलमाह॥ तत इति॥ कस्माद्धीत्यादेरुत्तरस्य पूर्वेण पौनरुक्त्यमित्याशंक्य विदुषो हेत्वभावान्न भयमित्युक्तसमर्थनार्थत्वादुत्तरस्य नैवमित्याह॥ तस्येत्यादिना॥ अनुपपत्तौ हेतुमाह॥ यस्मादिति॥ परमार्थदर्शनेपि वस्त्वन्तरात्किमिति भयं न भवतीत्याशंक्याह॥ द्वितीयं चेति॥ अन्वयव्यतिरेकाभ्यां द्वैतस्याविद्याप्रत्युपस्थापितत्वेपि कुतस्तदुत्थद्वैतदर्शनं भयकारणं न भवतीत्याशंक्याह॥

यद्यस्मान्मत्तोऽन्यदात्मव्यतिरेकेण वस्त्वंतरं प्रतिद्वंद्वीभूतं नास्ति तस्मिन्नात्मविनाशहेत्वभावे कस्मान्नु बिभेमीति तत एव यथाभूतात्मदर्शनादस्य प्रजापतेर्भयं वीयाय विस्पष्टमपगतवत्॥ तस्य प्रजापतेर्यद्भयं तत्केवलाविद्यानिमित्तमेव परमार्थदर्शनेऽनुपपन्नमित्याह॥ क

कस्माद्ध्यभेष्यद्द्वितीयाद्वै भयं भवति॥२॥

स्मात्ह्यभेष्यत्किमित्यसौ भीतवान्परमार्थनिरूपणायां भयमनुपपन्नमेवेत्यभिप्रायः॥ यस्मात् द्वितीयाद्वस्त्वंतराद्वै भयं भवति द्वितीयं च वस्त्वंतरमविद्याप्रत्युपस्थापितमेव॥ न ह्यदृश्यमानं द्वितीयं भयजन्महेतुः॥ तत्र को मोहः कः शोक एकत्वमनुपश्यत इति मंत्रवर्णाद्यच्च एकत्वदर्शनेन भयमपनुनोदापनोदितं तद्युक्तं॥ कस्माद्द्वितीयाद्वस्त्वंतराद्भयं भवति तदेकत्वदर्शनेन द्वितीयदर्शनमपनीतमिति नास्तिय

नहीति॥ तत्त्वज्ञाने सत्यज्ञानायोगात्तदुत्थं द्वैतं तद्दर्शनं चायुक्तमित्यतो हेत्वभावाद्भयानुपपत्तिरित्यर्थः॥ अद्वैतज्ञाने भयनिवृत्तिरित्यत्र मंत्रं संवादयति॥ तत्रेति॥ विराडैक्यदर्शनेनैव प्रजापतेर्भयमपनीतं नाद्वैतदर्शनेनेत्यस्मिन्नर्थेपि यन्मदन्यन्नास्तीत्यादिशंक्यं व्याख्यातमित्याशंक्यांगीकुर्वन्नाह॥ यच्चेति॥ तदेव प्रश्नद्वा

यपकर्षयति॥ कस्मादित्यादिना॥

प्रथमव्याख्यानानुसारेण चोद्यमुत्थापयति॥ अत्रेति॥ प्रजापतेर्ब्रह्मात्मैक्यज्ञानाद्ब्रीतिध्वस्तिरुक्ता न च तस्य तज्ज्ञानं युक्तं हेत्वभावादित्याह॥ कुत इति य
स्मादस्माकमैक्यधीस्तस्मादेव तस्यापि स्यादित्याशंक्याह॥ को वेति॥ नहि तस्य शास्त्रश्रवणमाचार्याभावान्नापि संन्यासस्तस्यत्रैवर्णिकविषयत्वान्नापि
शमादेरैश्वर्यासक्तत्वादतोऽस्मास्विव प्रसिद्धश्रवणादिविद्याहेत्वभावान्न प्रजापतेरैक्यधीर्युक्तेत्यर्थः॥ उपदेशानपेक्षमेव प्रजापतेरैक्यज्ञानं प्रादुर्भूतमि
तिशंकते॥ अथेति॥ अतिप्रसक्त्या प्रत्याह॥ अस्मदादेरिति॥ प्रजापतेर्यजमानावस्थायामाचार्यस्य सत्वाच्छ्रवणाद्यावृत्तैरैक्यज्ञानोदयात्तत्संस्कारोत्थं तथा
विधमेव तज्ज्ञानं फलावस्थायामपि स्यादिति चोदयति॥ अथेति॥ दूषयति॥ एकत्वेति॥ अज्ञानध्वंसित्वेनार्थवत्त्वमित्याशंक्याह॥ यथेति॥ तत्त्वगमकमा

– अत्र चोदयंति कुतः प्रजापतेरेकत्वदर्शनं जातं को वा अस्माउपदिदेश अथानुपदिष्टमेव प्रादुरभूदस्मदादेरपि तथा प्रसंगोऽथ जन्मांतर
कृतसंस्कारहेतुकमेकत्वदर्शनानर्थक्यप्रसंगो यथा प्रजापतेरतिक्रांतजन्मावस्थस्यैकत्वदर्शनं विद्यमानमप्यविद्याबंधकारणं नाप
निन्येयतोऽविद्यासंयुक्त एवायं जातोऽबिभेत्॥ एवं सर्वेषामेकत्वदर्शनानर्थक्यं प्राप्नोति अंत्यमेव निवर्तकमिति चेन्न॥

ह॥ यत इति॥ दार्ष्टा
तिकमाह॥ एवमिति॥ नन्वस्मिन्नेव जन्मनि प्रजापतेरैक्यधीरनपेक्षा जायते॥ ज्ञानमप्रतिघं यस्येति स्मृतेर्न च तदुत्पत्त्यनंतरमेव सहेतुं बंधं निरुणद्धि भया
रत्यादिफलेन प्रारब्धकर्मणा प्रतिबंधादतो मरणकालीनं तद्ज्ञानं ध्वंसीति शंकते॥ अंत्यमेवेति॥ प्रवृत्तफलस्य कर्मणः सोपपात्काज्ञानलेशाद्धि ज्ञानं
शक्तिप्रतिबंधकत्वेपि जन्मांतरादिसर्वसंसारहेत्वज्ञानध्वंसि ज्ञाने सामर्थ्यप्रतिबंधकत्वे मानाभावान्मध्ये जातं ज्ञानमनिवर्तकमित्यशक्यं वक्तुमंत्यस्य
च ज्ञानस्य निवर्तकत्वे नांत्यत्वं हेतुर्यजमानांतरस्यांत्ये ज्ञाने तद्ध्वंसित्वादृष्टेरंत्यत्वस्याज्ञानध्वंसित्वेनानियमान्न च यजमानांतरे प्रजापतौ चांत्यं ज्ञानं ज्ञा
नत्वादज्ञानध्वंसि सर्वज्ञानेषु बंधहेत्वज्ञानध्वंसित्वादृष्टेर्ज्ञानत्वहेतोरनैकांत्यान्न चांत्यमैक्यज्ञानमैक्यज्ञानत्वादज्ञानध्वंसीति युक्तमुपांत्यतादृग्ज्ञान

पू १ — परोक्षज्ञानं ३ — अपरोक्षज्ञानं ४

सर्वेषामुपदेशंविनापूर्वसंस्कारात्ज्ञानोत्पत्तेरविशेषात्=२ प्रजापतेर्ज्ञानोत्पत्तौसमर्थकारणाभावात् १

वद्दंत्वेपितद्योगादुपात्येहेतोरनैकांत्यादित्यभिप्रेत्यदूषयति नेत्यादिना॥कुप्रकारणाभावेत्तदंतरेणचोत्पत्तावतिप्रसंगात्संस्काराधीनत्वेपिवि
शेषाऽभावादंत्यस्यचज्ञानस्यचाज्ञानध्वंसित्वासिद्धेरयुक्तंप्रजापतेरेकत्वदर्शनमित्युपसंहरति॥तस्मादिति॥प्रजापतेःसुप्तप्रतिबुद्धवत्प्रकृष्टा
दृष्टोत्थकार्यकरणवत्त्वात्पूर्वकल्पीयपदपदार्थवाक्यस्मरणवतःस्मृतिविपरिवर्त्तिनोवाक्यादिविचार्यमाणाद्दृष्टसहकृतात्तत्वज्ञानंस्याल्लोकेविशि
ष्टादृष्टोत्थकार्यकरणानांप्रज्ञाद्यतिशयदर्शनात्तेनचज्ञानेनजन्मांतरहेतुत्वविद्याक्षयेप्यारब्धकर्मतज्जंचभयारत्याद्यविद्यालेशतोभविष्यतीतिपरि
हरति॥नैषदोषइति॥संगृहीतमर्थंसमर्थयते॥यथेत्यादिना॥धर्मादिचतुष्टयाद्विपरीतमधर्मादिचतुष्टयंतत्रहेतोःसर्वस्यपाप्मनोज्ञानाद्यतिशये

पूर्ववत्पुनःप्रसंगेनानैकांत्यात्तस्मादनर्थकमेवैकत्वदर्शनमितिचेत् नैषदोषः उत्कृष्टहेतूद्भवत्वाल्लोकवदद्यापुण्यकर्मो
द्भवैर्विविक्तैःकार्यकरणैःसंयुक्तेजन्मनिसतिप्रज्ञामेधास्मृतिवैशारद्यंदृष्टंतथाप्रजापतेर्धर्मज्ञानवैराग्यैश्वर्यविपरीतहेतुसर्व
पाप्मदाहाद्विशुद्धैःकार्यकरणैःसंयुक्तमुत्कृष्टंजन्मतदुद्भवंचानुपदिष्टमेवयुक्तमेकत्वदर्शनंप्रजापतेस्तथाचस्मृतिः॥ज्ञानमप्र
तिघंयस्यवैराग्यंचप्रजापतेः॥ऐश्वर्यंचैवधर्मश्चसहसिद्धंचतुष्टयमिति॥सहसिद्धत्वेभयानुपपत्तिरितिचेत्॥नह्यादित्येनस
हतमउदेति ॥ ननाशादित्यावत्॥उत्कृष्टत्वंप्रकृष्टज्ञानादिशालित्वं॥उक्तजन्मफलमाह॥तदुद्भवंचेति॥तस्यज्ञानादिवैशारद्येपोरा
णिकींस्मृतिमुदाहरति॥तथाचेति॥अप्रतिघमप्रतिवद्धंनिरंकुशमित्येतत्॥प्रत्येकंसंबध्यते॥तस्यैतच्चतुष्टयंसहसिद्धंसहनिर्वर्त्ततेतिसंबंधः
॥सहसिद्धत्वस्मृतेःसोऽबिभेदितिश्रुतिविरुद्धत्वादप्रामाण्यमितिविरोधाधिकरणन्यायेनशंकते॥सहसिद्धत्वइति॥सत्येवसहजेज्ञानेस्वहेतोर्भ
यमपिस्यादितिचेन्नेत्याह॥नहीति॥अन्येनाचार्येणानुपदिष्टमेवप्रजापतेर्ज्ञानमुदेतीत्येवमर्थपरत्वात्सहसिद्धवाक्यस्यतज्ज्ञानात्प्राक्तस्यभयमविरुद्धमूर्ध्वं
विलक्षणैः७

56

 

ज्ञानोत्पत्तेराचार्याद्यनपेक्षत्वे श्रद्धादिविधानानर्थक्यादनेकश्रुतिस्मृतिविरोधः स्यादिति शंकते॥ श्रद्धेति॥ आदिपदेन शमादिग्रहः॥ अस्मदादि-
षु तेषां हेतुत्वमिति चेन्नेत्याह॥ प्रजापतेरिवेति॥ चोदितं विरोधं निराकरोति॥ नेत्यादिना॥ निमित्तानां विकल्पः समुच्चयो गुणवत्त्वमगुणवत्त्वमि-
त्यनेन प्रकारेण कार्योत्पत्तौ विशेषसंभवान्न श्रद्धादिविधानानर्थक्यमित्यर्थः॥ संग्रहवाक्यं विवृणोति॥ लोके हीति॥ तद्धि सर्वं विकल्प्यादि यथा

नान्यानुपदिष्टार्थत्वात्स्वतःसिद्धवाक्यस्य श्रद्धातात्पर्यप्रणिपातादीनामहेतुत्वमिति चेत्॥ स्यान्मतं श्रद्धावांल्लभते ज्ञानं तत्परः संय-
तेंद्रियः॥ तद्विद्धि प्रणिपातेन परिप्रश्नेनेत्येवमादीनां श्रुतिस्मृतिविहितानां ज्ञानहेतूनामहेतुत्वं प्रजापतेरिव जन्मांतरकृतधर्महे-
तुत्वे ज्ञानस्येति चेत्॥ न॥ निमित्तविकल्पसमुच्चयगुणवदगुणवत्त्वभेदोपपत्तेः॥ लोके हि नैमित्तिकानां कार्याणां निमित्तभेदोऽनेकधा वि-
कल्प्यते तथा च निमित्तसमुच्चयस्तेषां च विकल्पितानां समुच्चितानां च पुनर्गुणवदगुणवत्त्वकृतो भेदो भवति॥ तद्यथा रूपज्ञान एव ताव-
न्नैमित्तिके कार्ये तमसि विना लोकेन चक्षुरूपसंनिकर्षो नक्तंचराणां रूपज्ञाने निमित्तं भवति मनस एव केवलं रूपज्ञाननिमित्तं योगि-
नां॥ अस्माकं तु संनिकर्षालोकाभ्यां सह तथादित्यचंद्राद्यालोकभेदैः समुच्चिता निमित्तभेदा भवति॥ तथा आलोकविशेषगुणवदगुण-
वत्त्वेन भेदाः स्युरेवमेवात्मैकत्वज्ञानेऽपि क्वचिज्जन्मांतरकृतं कर्म निमित्तं भवति यथा प्रजापतेः॥

ज्ञातुमशक्यं॥ तथैकस्मिन्नेव नैमित्तिके रूप-
ज्ञानाख्यकार्ये दर्शयामीत्याह॥ तद्यथेति॥ तत्र विकल्पमुदाहरति॥ तमसीत्यादिना॥ समुच्चयं दर्शयति॥ अस्माकं त्विति॥ विकल्पितानां समुच्चितानां च नि-
मित्तानां गुणवदगुणवत्त्वप्रयुक्तं भेदं कथयति॥ तथेति॥ आलोकविशेषस्य गुणवत्त्वं बहुलत्वमगुणवत्त्वं मंदप्रभत्वं चक्षुरादेर्गुणवत्त्वं निर्मलत्वादि तिमि-
रोपहतत्वादि वाऽगुणवत्त्वमिति भेदः॥ दृष्टांतं प्रतिपाद्य दार्ष्टांतिकमाह॥ एवमिति॥ तथान्यस्यापि प्रजापतितुल्यस्य वामदेवादेर्जन्मांतरीयसाधनवशादीश्वरानु

ग्रहादस्मिन्जन्मनिस्मृतवाक्यादैक्यज्ञानमुदेतीतिशेषः॥भृगुस्तत्तुल्योवाधिकारीक्वचिदित्युच्यते॥तपोन्वयव्यतिरेकाख्यमालोचनंश्वेतकेतुप्रभृ
तीषुज्ञाननिमित्तानांसमुच्चयंदर्शयति॥क्वचिदित्यादिना॥एकांतंनियतमावश्यकंज्ञानोदयलाभेनिमित्तत्वमितियावत्॥अथप्रणिपातादिव्य
तिरेकेणनप्रजापतेरपिज्ञानंसंभवतिसामग्र्यभावादतआह अधर्मादीति॥प्रणिपातादेर्ज्ञानोदयप्रतिबंधकनिवर्त्तकत्वात्प्रजापतेश्चतन्निवृत्ते
र्जन्मांतरीयसाधनायत्तत्वादाधुनिकप्रणिपातादिविनास्मृतवाक्यादैवैक्यधीःसंभवतीत्यर्थः॥तर्हिश्रवणादिव्यतिरेकेणापिप्रजापतेर्ज्ञानंस्यादि
त्याशंक्याह॥वेदांतेति॥नतैर्विनाज्ञानंकस्यचिदपिस्यात्प्रजापतेस्तुजन्मांतरीयश्रवणवशादिदानीमत्रस्मृतवाक्यात्तदुत्पत्तिरितिशेषः॥तर्हिश्रद्धा

क्वचित्तपोनिमित्तंतपसाब्रह्मविजिज्ञासस्वेतिश्रुतेः॥क्वचिदाचार्यवान्पुरुषोवेदश्रद्धावांल्लभतेज्ञानंतद्विद्धिप्रणिपातेन॥आचार्या
द्धैवविद्याविदितासाधिष्ठंप्रापदितिश्रुतेः॥क्वचिदात्मावारेद्रष्टव्यःश्रोतव्यइतिश्रुतिस्मृतिभ्यः॥एकांतज्ञानलाभनिमित्तत्वंश्रद्धाप्रभृतीनां॥अधर्मादिनिमित्तवियोगहेतुत्वाद्वेदांतश्रवण
मनननिदिध्यासनानांचसाक्षाज्ज्ञेयविषयत्वात्पापादिप्रतिबंधक्षयेचात्ममनसोर्भूतार्थज्ञाननिमित्तस्वाभाव्यात्तस्मादहेतुत्वंनजा
तुज्ञानस्यश्रद्धाप्रणिपातादीनामिति॥२॥ दिकमपिप्रतिबंधनिवर्त्तकत्वेनप्रजापतेरादरणीयंतन्निवृत्तिमंतरेणज्ञानोत्पत्त्यनुपपत्तेरित्या

शंक्याह॥पापादीति॥आत्ममनसोर्मिथःसंयुक्तयोःसंबंधियत्पापंतत्कार्यंचरागादितेनज्ञानोत्पत्तौप्रतिबंधस्यपूर्वोक्तेनन्यायेनक्षयेसतिप्रजाप
तेरीश्वरानुग्रहात्स्मृतवाक्यस्यपरमार्थज्ञानोत्पत्तौकेवलस्यनिमित्तत्वात्तस्याधुनिकश्रद्धाद्यतिरेकेणज्ञानोदयेपिनतद्विधिवैयर्थ्यमस्माकंतद्दृशा
देवतदुत्पत्तेर्वाक्यतात्पर्यादिज्ञानंसर्वेषामेवज्ञानसाधनमाचार्यादिषुपुनर्विकल्पसमुच्चयावित्यर्थः॥अधिकारिभेदेनज्ञानहेतुषुविकल्पेपितेषा
मस्मासुसमुच्चयान्नश्रुतिस्मृतिविरोधोस्तीत्युपसंहरति॥तस्मादिति॥२॥प्रजापतेर्भयाविष्टत्वेनसंसारांतर्भूतत्वमुक्तमिदानींतन्नैवहेत्वंतरमाह॥

57

इतश्चेति॥अरत्याविष्टत्वेप्रजापतेरेकाकित्वंहेतूकरोति॥यतइति॥कार्यस्याऽरतिःकारणस्याऽरतेर्लिंगमित्यनुमानंसूचयति॥इदानीमपीति॥आदि
पदेनभयाविष्टत्वादिग्रहः॥अरतिंप्रतियोगिनिरुक्तिद्वारानिर्वक्ति॥रतिर्नामेति॥कथंतर्हियथोक्ताऽरतिनिरसनमित्याशंक्यसद्वितीयमैच्छदित्येत
द्व्याचष्टे॥सतस्याइतिसहेत्यस्यवाक्यस्यपातनिकांकरोति॥तस्येति॥तेनभावेनेतियावत्॥कथमभिमानमात्रेणयथोक्तपरिमाणत्वंतत्राह॥सत्येति॥

इतश्चसंसारविषयएवप्रजापतित्वंयतःसप्रजापतिर्वैनैवरेमेरतिंनान्वभवदरत्याविष्टोभूदित्यर्थोस्मादाद्यिवदेवयतःइदानीमपित
स्मादेकाकित्वादिधर्मवत्त्वादेकाकीनरमतेरतिंनानुभवतिरतिर्नामेष्टार्थसंयोगजाक्रीडातत्प्रसंगिनइष्टवियोगान्मनस्याकुलीभावोऽर
तिरित्युच्यते॥सतस्याअरतेरपनोदायद्वितीयमरत्युपघातसमर्थंस्त्रीवस्त्वैच्छत्गृद्धिमकरोत्॥तस्यचैवंस्त्रीविषयंगृध्यतःस्त्रियाप

सवैनैवरेमेतस्मादेकाकीनरमतेसद्वितीयमैच्छत्सहैतावानासयथास्त्रीपुमांसौसंपरिष्वक्तौ

रिष्वक्तस्येवात्मनोभावोबभूवसतेनसत्येप्सुत्वात्हएतावानेतत्परिमाणआसबभूवहकिंपरिमाणइत्याह॥यथालोकेस्त्रीपुमांसा
वरत्यपनोदायसंपरिष्वक्तौयत्परिमाणौस्यातांतथातत्परिमाणोबभूवेत्यर्थः॥सतथातत्परिमाणमेवेममात्मानंद्वेधाद्विःप्रकारमपा
तयत्पातितवानिममेवेत्यवधारणंमूलकारणाद्विराजोविशेषणार्थं॥ निपातोअवधारणे॥तस्यैवपुनरनुवादोऽन्वयार्थः॥परिमाणमेवप्रश्न
पूर्वकंविवृणोति॥किमित्यादिना॥संप्रतिस्त्रीपुंसयोरुत्पत्तिमाह॥सतथेति॥ननुद्वेधाभावोविराजोवासंसक्तस्त्रीपुमानस्यपिंडस्यवानाद्यःसशब्देन
विराड्ग्रहायोगात्तस्यकर्मत्वाद्द्वितीयेत्वात्मशब्दानुपपत्तिस्तत्राह॥इममिति॥तथाचसशब्देनकर्तृतयाविराड्ग्रहणमविरुद्धमित्यर्थः॥तदेवस्फुटयति॥

नेत्यादिना॥कस्यतर्हिद्विधाकरणमित्याह॥किंतर्हीति॥तच्चद्विधाकरणंकर्मेतिशेषः॥कथंतर्हितत्रात्मशब्दःसंभवतीत्याशंक्याह॥सएवचेति॥त
थाभूतःसंसक्तजायापुंपरिमाणोभूदितियावत्॥नकेवलंमनुःशतरूपेत्यनयोरेवदंपत्योरिदंनिर्वचनं॥किंतुलोकप्रसिद्धयोःसर्वयोरेवत
योरेतद्द्रष्टव्यं॥सर्वत्रास्यसंभवादित्याह॥लौकिकयोरिति॥उक्तेनिर्वचनेलोकानुभवमनुकूलयति॥तस्मादिति॥प्रागितिसहधर्मचारिणीसं

नक्षीरस्यसर्वोपमर्देनदधिभावापत्तिवद्विराड्सर्वोपमर्देनैतावानासकिंतर्हिआत्मनाव्यवस्थितस्यैवविराजःसत्यसंकल्पत्वाद
त्मव्यतिरिक्तंस्त्रीपुंसंपरिष्वक्तपरिमाणंशरीरांतरंबभूवसएवचविराड्तथाभूतःसहैतावानासेतिसामानाधिकरण्यात्ततस्त
स्मात्पातनात्पतिश्चपत्नीचाभवतामितिदंपत्योर्निर्वचनं॥लौकिकयोरतएवतस्माद्यस्मादात्मनएवार्धःपृथग्भूतोयेयंस्त्रीतस्मा

सइममेवात्मानंद्वेधापातयत्ततःपतिश्चपत्नीचाभवतांतस्मादिदमर्धबृगलमिवस्वइतिहस्माहयाज्ञवल्क्यस्तस्मा
दयमाकाशस्त्रियापूर्यतएवतांसमभवत्ततोमनुष्याअजायंत॥३॥

दिदंशरीरमात्मनोर्धबृगलमर्धंचतद्बृगलंचतदर्धबृ
गलंविदलमर्धविदलमिवेत्यर्थः॥प्राक्स्त्र्युद्वहनात्कस्यार्धबृगलमित्युच्यते॥स्वआत्मनइतिएवमाहस्मउक्तवान्किलयाज्ञवल्क्यः य
ज्ञस्यवल्कोवक्तायज्ञवल्कःतस्यापत्यंयाज्ञवल्क्योदेवरातिरित्यर्थः॥ब्रह्मणोवाऽपत्यंयस्मादयंपुरुषार्धआकाशःस्त्र्यर्धशून्यःपुनरुद्व
हनात्तस्मात्पूर्यतेस्त्र्यर्धेनपुनः बंधात्पूर्वमित्यर्थः॥आकाशाद्वाराषष्ठीमादायानुभवमवलंब्याचष्टे॥कस्येत्यादिना॥अनुभवसिद्धेर्थेप्रामा
णिकसंमतिमाह॥एवमिति॥वल्कशब्दोविकारार्थःद्विधापातनेसत्येकोभागःपुरुषोऽपरस्तुस्त्रीत्यत्रैवहेत्वंतरमाह॥यस्मादिति॥

58

उद्वहनात्प्रागवस्थायामाकाशः पुरुषार्धः स्त्र्यर्धशून्यो यस्मादसंपूर्णो वर्त्ततेतस्मादुद्वहनेन प्राप्तस्त्र्यर्धेन पुनरितरो भागः पूर्यते॥ यथाविदला र्धोऽसंपूर्णः संपुटीकरणेन पुनः संपूर्णः क्रियते तद्वदिति योजना॥ पूर्वमपित्वाभाविकयोग्यतावशेन संसर्गोभूदनादित्वात्संसारस्येति सूच यितुं पुनरित्युक्तं॥ पुरुषार्धस्येतरार्धस्य च मिथः संबंधान्मनुष्यादिसृष्टिरित्याह तामित्यादिना॥ ३॥ स्मार्त्तप्रतिषेधमिति॥ नसगोत्रांसमानप्रव



संपुटीकरणेनेव विदलार्धः तां स प्रजापतिर्मन्वाख्यः शतरूपाख्यामात्मनो दुहितरं पत्नीत्वेन कल्पितां समभवन्मैथुनमुपगत वांस्ततस्तस्मात्तदुपगमनान्मनुष्या अजायंत॥ सन्ना:॥ ३॥ सा शतरूपा उ हेयमीक्षां चक्रे कथंन्विदमकृत्यं यन्मामात्मन एव जनयित्वोत्पाद्य संभवत्युपगच्छति यद्यप्ययं निर्घृणः अहं हंतेदानीं तिरोसानि जात्यंतरे

सोहेयमीक्षांचक्रे कथंनुमात्मन एव जनयित्वा संभवति हंत तिरोसानीति सा गौरभवदृषभ इतरस्तां समेवाभवत्ततो गावोजायंत वडवेतराभवदश्ववृष इतरो गर्दभीतरा गर्दभ इतरस्तां समेवाभवत्तत एकशफमजायताजेतराभवद्बस्त इतरोऽविरितरा मेष इतरस्तां समेवाभवत॥ णतिरस्कृता भवानीत्येवमीक्षित्वा सा गौरभवदुत्पाद्य प्राणिकर्मभिश्चोद्यमाना याः पुनः पुनः सैव मतिः शतरूपायाः मनोश्चाभवत्ततश्च ऋषभ इतरस्तां समेवाभवदित्यादि पूर्ववं रांभार्यां विंदेदित्यादिकमिति यावत॥ अकृत्यं हीदं यद्दुहितृगमनं मातृतश्चापंचमात्पुरुषात्पितृतश्चासप्तमादिति स्मृतेरिति मत्वाह॥ कथमिति॥ तयोर्जात्यंतरगमनं कथमित्याशंक्याह॥ यद्यपीति॥ शतरूपायां गोभावमापन्नायामृषभादिभावो भवतु तावता यथोक्तदोषपरिहारस्तयोर्वडवादिभावे तु न कारणमस्तीत्याशंक्याह॥

उत्पाद्येतिततस्तस्यायोगोभावादनंतरमितियावत्॥गवांजन्मार्थंमिथःसंभवनंततःशब्दार्थः॥तत्रतेषामुत्पत्तौसत्यामितियावत्॥वाक्यद्वये वीप्साविवक्षितेत्याह॥तामिति॥तामेवाभिनयति॥तामजामिति॥तांवडवांतांगर्दभींचेत्यपिद्रष्टव्यं॥ततोमिथःसंभवनाद्ययोक्तादितियावत्॥ विशेषाणमानंत्यात्प्रत्येकमुपदेशासंभवंमन्वानःसंक्षिप्योपसंहरति॥एवमेवेति॥तद्विभजते॥इदंमिथुनमिति॥पशुकर्मप्रयोगोन्यायः॥४॥य

ततोगावोजायंततथावडवेतराभवदश्ववृषइतरस्तथागर्दभीतरागर्दभइतरस्तत्रवडवाश्ववृषादीनांसंगमात्ततएकशफंएकखु रमश्वाश्वतरगर्दभाख्यंत्रयमजायततथाऽजेतराभवद्बस्तःछागइतरस्तथाऽविरितरामेषइतरःसतांसमेवाभवत्॥तामितिवीप्सा तामजांतामविंचेतिसमभवदेवेत्यर्थः ततःअजाश्चावयश्चाजावयोऽजायंतएवमेवयदिदंकिंचयत्किंचेदंमिथुनंस्त्रीपुंलक्षणंद्वंद्वमा

ततोजावयोजायंतैवमेवयदिदंकिंचमिथुनमापिपीलिकाभ्यस्तत्सर्वमसृजत॥४॥सोवेदहंवावसृष्टिरस्म्यहंहीदंसर्वमसृक्षीतिततःसृष्टिरभवत्सृष्ट्यांहास्यैतस्यांभवतियएवंवेद॥५॥ पिपीलिकाभ्यः पिपीलिकाभिःसहानेनैवन्यायेनतत्सर्वम सृजतजगत्सृष्टवान्॥४॥सप्रजापतिःसर्वमिदंजगत्सृष्ट्वाऽवेत्कथमहंवावअहमेवसृष्टिःसृज्यतइतिसृष्टंजगदुच्यतेसृष्टिरितियन्मया सृष्टंजगन्मदभेदत्वादहमेवास्मिनमत्तोव्यतिरिच्यते॥ यद्यपिमन्वादिसृष्टिरेवोक्तातथापिसर्वासृष्टिरुक्तैवेतिसिद्धवत्कृत्याह॥सप्रजापति रितिअवगतिंप्रश्नपूर्वकंविशदयति॥कथमित्यादिना॥कथंसृष्टिरस्मीत्यवधार्यतेकर्तृक्रिययोरेकत्वायोगादित्याशंक्याह॥सृज्यतइतीति॥पदा र्थमुक्त्वावाक्यार्थमाह॥यन्मयेति॥जगच्छब्दादुपरितच्छब्दमध्याहृत्याहमेवतदस्मीतिसंबंधः॥तत्रहेतुमाह॥मदभेदत्वादितिएतकारार्थमाह॥नेति

उँऋवानॆ३

कृतइत्यादिना॥नहिसृष्टंस्रष्टुरर्थांतरंतस्यैवतेनमायाविवदवस्थानादित्यर्थः॥ततःसृष्टिरित्यादिव्याचष्टे॥यस्मादितिकिमर्थंस्रष्टुरेषाविभूतिरुपदिष्टेत्याशंक्याह॥सृष्ट्यामिति॥जगतिभवतीतिसंबंधः॥वाक्यार्थमाह॥प्रजापतिवदिति॥५॥ननुसर्वासृष्टिरुक्ताउक्तंचप्रजापतेर्विभूतिसंकी

कृतएतदहंहियस्मादिदंसर्वंजगदसृक्षिसृष्टवानस्मितस्मादित्यर्थः॥यस्मात्सृष्टिशब्देनात्मानमेवाभ्यधात्प्रजापतिस्ततस्तस्मात्सृष्टिरभवत्सृष्टिनामाभवत्सृष्ट्यांजगतिहअस्यप्रजापतेरेतस्यामेतस्मिन्जगतिप्रजापतिवत्स्रष्टाभवतिस्वात्मनोऽनन्यभूतस्यजगतःकः॥यएवंप्रजापतिवद्यथोक्तंस्वात्मनोऽनन्यभूतंजगत्साध्यात्माधिभूताधिदैवंजगदहमस्मीतिवेद॥५॥एवंसप्रजापतिर्जगदिदंमिथुनात्मकंसृष्ट्वाब्राह्मणादिवर्णनियंत्रीर्देवताःसिसृक्षुरादावथेतिशब्दद्वयमभिनयप्रदर्शनार्थमनेनप्रकारेणमुखेहस्तौप्रक्षिप्याभ्यमं

अथेत्यभ्यमंथत्समुखाच्चयोनेर्हस्ताभ्यांचाग्निमसृजततस्मादेतदुभयमलोमकमंतरतोऽलोमकाहियोनिरंतरत

थदाभिमुख्येनमंथनमकरोत्समुखंहस्ताभ्यांमथित्वासमुखाच्चयोनेर्हस्ताभ्यांचयोनिभ्यामग्निंब्राह्मणजातेरनुग्रहकर्त्तारमसृजतसृष्टवान्॥यस्माद्दाहकस्याग्नेर्योनिरेतदुभयंहस्तौमुखंचतस्मादुभयमप्येतदलोमकंलोमविवर्जितंकिंसर्वमेवनअंतरतोअभ्यंतरतोस्तिहियोन्यासामान्यमुभयस्यकिमलोमकाहियोनिरंतरतःस्त्रीणां

र्तेनफलंकिमवशिष्यतेयदर्थमुत्तरंवाक्यमित्याशंक्याह॥एवमिति आदावभ्यमंथदितिसंबंधःअभिनयप्रदर्शनमेवविशदयति॥अनेनेति॥मुखादेरग्निंप्रतियोनित्वेगमकमाह॥यस्मादिति॥प्रत्यक्षविरोधंशंकित्वादूषयति॥किमित्यादिना॥हस्तयोर्मुखेचयोनिशब्दप्रयोगेनिमित्तमाह॥अस्तिहीति॥प्रजापतेर्मुखादियमग्निःसृष्टो

तथेति॥उक्तेर्थेश्रुतिस्मृतिसंवादं दर्शयति॥तस्मादिति॥आग्नेयोवैब्राह्मणइत्याद्याश्रुतिस्तदनुसारिणीचस्मृतिर्द्रष्टव्या॥अग्निमसृजतेत्येतदु
पलक्षणार्थमित्यभिप्रेत्यस्पष्टंतरमाह॥तथेति॥बलभिदिंद्रः आदिशब्देनवरुणादिर्गृह्यतेक्षत्रियंचासृजतेत्यनुवर्त्तते॥उक्तमर्थंप्रमाणेनद्र
ढयति॥तस्मादिति॥ऐंद्रोराजन्यइत्याद्याश्रुतिस्तदनुसारिणीचस्मृतिरवधेया॥विशंचासृजेतिपूर्ववत्॥ईहाश्रयादूरुतोजातत्वंवस्वादेर्ज्येष्ठ
त्वंचतच्छब्दार्थः॥पद्भ्यांशूद्रोअजायतेत्याद्याश्रुतिस्तथाविधाचस्मृतिरनुसर्त्तव्या॥अग्निसर्गस्यवक्ष्यमाणेंद्रसर्गोपलक्षणत्वेसतिसृष्टिसाकल्यादे

तथाब्राह्मणोपिमुखादेवजज्ञेप्रजापतेस्तस्मादेकयोनित्वाज्ज्येष्ठेनेवानुजोनुगृह्यतेग्निनाब्राह्मणस्तस्माद्ब्राह्मणोग्निदेवत्योमुख
वीर्यश्चेतिश्रुतिप्रसिद्धं॥तथाबलाश्रयाभ्यांबाहुभ्यांबलभिदादिकंक्षत्रियजातिनियंतारंक्षत्रियंचतस्मादैंद्रंक्षत्रंबाहुवीर्यंचेति
श्रुतौस्मृतौचावगतंतथोरुतईहाचेष्टातदाश्रयादूरुस्वादिलक्षणंविशोनियंतारंविशंचतस्मात्कृष्यादिपरोवस्वादिदेवत्यश्चवैश्य
स्तथापूषणंपृथ्वीदेवतंशूद्रंचपद्भ्यांपरिचरणक्षममसृजतेतिश्रुतिस्मृतिप्रसिद्धं॥अत्रक्षत्रादिदेवतासर्गमिहानुक्तंवक्ष्यमाणम
प्युक्तवदुपसंहरतिसृष्टिसाकल्यानुकीर्त्यै॥यथेयंश्रुतिर्व्यवस्थितातथाप्रजापतिरेवसर्वेदेवाइतिनिश्चितोर्थः॥स्रष्टुरनन्यत्वात्स्रष्टा
नांप्रजापतिनैवतुसृष्टत्वाद्देवानामथैवंप्रकरणार्थेव्यवस्थितेतत्स्तुत्यभिप्रायेणाऽविद्वन्मतांतरनिंदोपन्यासोनअन्यनिंदार्थएव॥

षउएवसर्वेदेवाइत्युपसंहारसिद्धिरितिफलितमाह॥अत्रेति॥उक्तेनवक्ष्यमाणोपलक्षणंसर्वशब्दःसूचयतीतिभावः॥किंचसृष्टिरत्रनविव
क्षिताकिंतुयेनप्रकारेणसृष्टिश्रुतिःस्थितातेनप्रकारेणदेवतादिसर्वंप्रजापतिरेवेतिविवक्षितमित्याह॥यथेति॥तत्रहेतुमाह॥स्रष्टुरिति॥त
थापिकथंदेवतादिसर्वंप्रजापतिमात्रमित्याशंक्याह॥प्रजापतिनेति॥यद्यदिदमित्यादिवाक्यस्यतात्पर्यमाह॥अथेति ॥

60

स्रष्टा प्रजापतिरेव सृष्टं सर्वं कार्यमिति प्रकरणार्थं पूर्वोक्तप्रकारेणाव्यवस्थिते सत्यनंतरं तस्यैव स्तुतिविवक्षया तद्यदिदमित्याद्यविद्वन्मतांतरस्य निंदार्थं वचनमित्यर्थः॥ मतांतरे निंदितेपि कथं प्रकरणार्थः स्तुतो भवतीत्याशंक्याह॥ अन्येति॥ एकैकं देवमित्यस्य तात्पर्यमाह॥ नामेति॥ काठकं कालापकमितिवन्नामभेदात्क्रतुषु तत्तद्देवतास्तुतिभेदाद्बृहद्रथंतरादिवदर्थक्रियाभेदाच्च प्रत्येकं देवानां भिन्नत्वात्कर्मिणामेतद्वचनमित्यर्थः॥ आदिशब्देन रूपादिभेदात्तद्भेदत्वं संगृह्णाति॥ नन्वत्र कर्मिणां निंदा न प्रतिभाति तन्मतोपन्यासस्यैव प्रतीतेरित्याशंक्याह॥ तन्नेति॥ एकस्यैव

किंत्वन्यस्तुतये तत्तत्कर्मप्रकरणे केवलेयाज्ञिकाः यागकाले यदिदं वच आहुरमुमग्निं यजामुमिंद्रं यजेत्यादिनाम शस्त्रस्तोत्रकर्मादिभिन्नत्वाद्भिन्नमेवाग्न्यादिदेवमेकैकं मन्यमाना आहुरित्यभिप्रायः॥ तन्न तथा विद्याद्यस्मादेतस्यैव प्रजापतेः सा विसृष्टिर्देवभेदः सर्व एष उ

स्तद्यदिदमाहुरमुं यजामुं यजेत्येकैकं देवमेतस्यैव सा विसृष्टिरेष उ ह्येव सर्वे देवाः ॥

हि एव प्रजापतिरेव प्राणः सर्वे देवाः॥ अत्र विप्रतिपद्यंते॥ पर एव हिरण्यगर्भ इत्येके संसारीत्यपरे पर एव तु मंत्रवर्णात्॥ इंद्रं मित्रं वरुणमग्निमाहुरिति श्रुतेः॥ एष ब्रह्मैष इंद्र एष प्रजापतिरेते सर्वे देवा इति श्रुतेः स्मृतेश्च॥ प्राणस्यानेकविधो देवताप्रभेदः शाल्यब्राह्मणे वक्ष्यत इति विवक्षित्वा विशिनष्टि॥ प्राण इति॥ अग्न्यादयो देवाः सर्वे प्रजापतिरेवेत्युक्तं संप्रति तत्स्वरूपनिर्दिधारयिषया तत्र विप्रतिपत्तिं दर्शयति॥ अत्रेति॥ हिरण्यगर्भस्य परत्वमाद्ये द्वितीये कल्पे संसारित्वं विधेयमिति विभागः॥ तत्र पूर्वपक्षं गृह्णाति॥ पर एवेति॥ नन्वेकस्यानेकात्मकत्वं मंत्रवर्णाद्वगम्यते न तु परमात्मत्वं प्रजापतेरित्याशंक्य ब्राह्मणवाक्यमुदाहरति॥ एष इति॥ ब्रह्म प्रजापतीसूत्रविराजौ॥ एषशब्दः परमात्मविषयः॥ स्मृतेश्च

तत्रैववाक्यांतरंपठति॥योसाविति॥कर्मेंद्रियाविषयत्वमतींद्रियत्वं॥अग्राह्यत्वंज्ञानेंद्रियाविषयत्वं॥तत्रहेतुमाह॥सूक्ष्मोव्यक्तइति॥नच
तस्यासत्वंप्रमात्रादिभावाभावसाक्षित्वेनसदासत्वादित्याहसनातनइति॥इतश्चतस्यनासत्वंसर्वेषामात्मत्वादित्याह॥सर्वेति॥अंतःकर
णाविषयत्वमाह॥अचिंत्यइति॥योसौपरमात्मायथोक्तविशेषणःसएवस्वयंविराडात्मनाभूतवानित्याह॥सएवेति॥मंत्रब्राह्मणस्मृतिषुप
रस्यदेवतात्मत्वदृष्टेरत्रचसूत्रेस्यतस्मृतीतेस्तस्यपरत्वमित्युक्तं॥इदानींपूर्वपक्षांतरमाह॥संसार्येवेति॥सर्वपाप्मदाहश्रवणमात्रेणकथंप्रजाप
तेःसंसारित्वंतत्राह॥नहीति॥अंतस्तद्धर्मोपदेशादित्यत्रपरस्यापिसर्वपाप्मोदयांगीकारान्नेदंसंसारित्वेलिंगमित्याशंक्याह॥भयेति॥असृजतेतिश्रव

एतमेकेवदंत्यग्निंमनुमन्येप्रजापतिमिति॥योसावतींद्रियोग्राह्यःसूक्ष्मोव्यक्तःसनातनः॥सर्वभूतमयोऽचिंत्यःसएवस्वयमु
द्भाविितिचसंसार्येववास्यात्॥सर्वान्पाप्मनऔषदितिश्रुतेः॥नह्यसंसारिणःपाप्मदाहप्रसंगोस्ति॥भयारतिसंयोगश्रवणा
च्च॥अथयन्मर्त्यःसन्नमृतानसृजतेतिच॥हिरण्यगर्भंपश्यतजायमानमितिचमंत्रवर्णात्॥स्मृतेश्चकर्मविपाकप्रक्रियायां॥
ब्रह्माविश्वसृजोधर्मोमहानव्यक्तमेवच॥उत्तमांसात्विकीमेतांगतिमाहुर्मनीषिणइति॥अथैवंविरुद्धार्थानुपपत्तेःप्रामाण्यव्या
घातइतिचेत्॥ णादितिसंबंधः॥नकेवलंमर्त्यत्वश्रुतेरेवसंसारित्वंकिंतुजन्मश्रुतेश्चेत्याह॥हिरण्यगर्भमिति॥यथोक्तहेतूनांसंसार्येवस्या
दितिप्रतिज्ञयान्वयःकर्मफलदर्शनाधिकारेब्रह्मेत्याद्यायाःस्मृतेश्चतत्फलभूतस्यप्रजापतेःसंसारित्वमेवेत्याह॥स्मृतेश्चेति॥विराड्ब्रह्मेत्युच्यते॥
विश्वसृजोमन्वादयः॥धर्मस्तदभिमानिनीदेवतायमःमहान्प्रकृतेराद्योविकारः॥सूत्रंअव्यक्तंप्रकृतिरितिभेदः॥अस्तुतर्हिद्विविधवाक्यवशात्प्रजा
पतेःसंसारित्वमसंसारित्वंचेत्याशंक्याह॥अथेति॥तत्द्विविधवाक्यश्रवणानंतर्यमथशब्दार्थः॥एवंशब्दःसंसारित्वासंसारित्वप्रकारपरामर्शार्थः॥वि



61

आसीनेइत्यादिश्रुतिभिःस्वतोऽसंसारीत्यर्थः ५

नेत्यादिना॥स्वतोऽसंसारित्वंकल्पनयाचसंसारित्वमितिकल्पनांतरसंभवात्द्विविधश्रुतीनामविरोधात्प्रामाण्यसिद्धिरित्यर्थःकल्पनयासंसा रित्वमित्येतद्विशदयति॥उपाधीति॥औपाधिकीपरस्यविशेषकल्पनेत्यत्रप्रमाणमाह॥आसीनइतिस्थास्नेनकूटस्थोप्यात्मामनसःशीघ्रंदूरगमनदर्शनात्तदुपाधिकोदूरंव्रजति॥यथास्वप्नेशयानोपिमनसोगतिभ्रांत्यासर्वत्रयातीवभातितथाजागरेपीत्यर्थः॥कल्पितेनहर्षादिविकारेणस्वाभाविकेनतदभावेनचयुक्तमात्मानंनकश्चिदपिनिश्चेतुंशक्नोतीत्याह॥कस्तमिति॥आदिपदेनध्यायतीवेत्यादिश्रुतयोगृह्यंते॥उदाहृतश्रुतीनांतात्पर्यमाह॥उपाधीतिकिंतर्हिपारमार्थिकंतदाह॥स्वतइति॥पूर्वेणसंबंधः॥हिरण्यगर्भस्यवास्तवमवास्तवंचरूपंनिरूपितमुपसंहरति॥स

नकल्पनांतरोपपत्तेःअविरोधादुपाधिविशेषसंबंधाद्विशेषकल्पनांतरमुपपद्यते॥आसीनोदूरंव्रजतिशयानोयातिसर्वतः॥कस्तंमदामदंदेवंमदन्योज्ञातुमर्हतीत्येवमादिश्रुतिभ्यः॥उपाधिवशात्संसारित्वंनपरमार्थतःस्वतोऽसंसार्येवमेकत्वंनानात्वंचहिरण्यगर्भस्य॥तथासर्वजीवानांतत्त्वमसीतिश्रुतेर्हिरण्यगर्भेतुउपाधिशुध्यतिशयापेक्षयाप्रायशःपरएवेतिश्रुतिस्मृतिवादाःप्रवृत्ताःसंसारित्वंतुक्वचिदेवदर्शयंतिजीवानांतुउपाधिगताशुद्धिबाहुल्यात्संसारित्वमेवप्रायशोभिलप्यते॥व्यावृत्तकृत्स्नोपाधिभेदापेक्षयातुसर्वःपरत्वेनैवाभिधीयतेश्रुतिस्मृतिवादैः

वमिति॥तस्याप्यस्मदादिवन्नस्वतोब्रह्मत्वंकिंतुसंसारित्वमेवस्वाभाविकमित्याशंक्यदृष्टांतस्यसाध्यविकलतामाह॥तथेति॥सर्वजीवानामेकत्वंनानात्वंचेतिपूर्वेणसंबंधः॥तेषांस्वतोब्रह्मत्वेप्रमाणमाह॥तत्त्वमिति॥कस्तर्हिहिरण्यगर्भेविशेषोयेनासावस्मदादिभिरुपास्यतेतत्राह॥हिरण्यगर्भेत्विति॥ननुश्रुतिस्मृतिवादेषुक्वचित्तस्यसंसारित्वमपिप्रदर्श्यतेसत्यंतत्तुकल्पितमित्यभिप्रेत्याह॥संसारित्वंत्विति॥अस्मदादिषुतुल्यमेतदित्याशंक्याह॥जीवानांत्विति॥कथंतर्हितत्त्वमसिसेत्रज्ञंचापिमांविद्धीत्यादिश्रुतिस्मृ

स्वमतेतत्वनिश्चयमुक्त्वापरमतेतदभावमाह॥तार्किकैस्त्विति॥नन्वेकजीववादेपिसर्वव्यवस्थानुपपत्तेस्तत्वनिश्चयदौर्लभ्यंतुल्यमितिचेन्नेत्याह॥
येत्विति॥स्वप्नवत्प्रबोधात्प्रागशेषव्यवस्था॥संभवादूर्ध्वंचतदभावस्येष्टत्वादेकमेवब्रह्माज्ञानाद्यविद्यावशादेवव्यवहारास्पदमितिपक्षेनकाचनदोष
कलेतिभावः॥सर्वदेवतात्मकस्यप्रजापतेःस्वतोसंसारित्वंकल्पनयावैपरीत्यमितिस्थितेसत्ययेत्याद्युत्तरग्रंथस्यतात्पर्यमाह॥तत्रेति॥विवक्षितइ

तार्किकैस्तुपरित्यक्तागमबलैरस्तिनास्तिकर्ताकर्तेत्यादिविरुद्धंबहुतर्कयद्भिराकुलीकृतःशास्त्रार्थस्तेनार्थनिश्चयोदुर्लभः॥ये
तुकेवलशास्त्रार्थानुसारिणःशांतदर्पास्तेषांप्रत्यक्षविषयइवनिश्चितःशास्त्रार्थोदेवतादिविषयस्तत्रप्रजापतेरेकस्यदेवस्यात्राद्य
लक्षणोभेदोविवक्षितइति॥तत्राग्निरुक्तोत्ताद्यःसोमइदानीमुच्यते॥एकस्यैवप्रजापतेर्द्विधोपास्यत्वायाग्निसर्गमुक्त्वाऽन्नसर्गमाह॥

अथयत्किंचेदमार्द्रंतद्रेतसोसृजततदुसोमएतावद्वाइदꣳसर्वमन्नंचैवान्नादश्चसोमएवान्नमग्निरन्नादः ॥

अथयत्किंचइदंलोकेआर्द्रंद्रवात्मकंतद्रेतसःआत्मनोबीजादसृजतरेतसआपइतिश्रुतेः॥अबात्मकश्चसोमस्तस्माद्यदार्द्रंप्रजापति
नारेतसःसृष्टंतदुसोमएवएतावद्वैएतावदेवनातोधिकमिदंसर्वंकिंतदन्नंचैवसोमो ॥ त्युत्तरग्रंथप्रवृत्तिरितिशेषः॥तस्यविषयंपरिशिनष्टि
॥तत्राग्निरिति॥अत्राद्ययोर्निर्धारणार्थासप्तमी॥संप्रतिप्रतीकमादायाक्षराणिव्याकरोति॥अथेति॥अतःसर्गानंतर्यमथशब्दार्थः॥रेतसःसकाशादपां
सर्गेपिसोमशब्देकिमायातमित्याशंक्याह॥अबात्मकश्चेति॥श्रद्धाख्याहुतेःसोमोत्पत्तिश्रवणात्तत्रशेत्योपलब्धेश्चेतिभावः॥सोमस्यद्रवात्मकत्वेफलि
तमाह॥तस्मादिति॥अग्नीषोमयोरन्नाद्ययोःसृष्टावपिजगतिस्रष्टव्यांतरमवशिष्टमस्तीत्याशंक्याह॥एतावदिति॥आप्यायकःसोमोद्रवात्मकत्वादन्नंचापां

द्रवात्मकत्वादितिसोमएवान्नमग्निरन्नादइत्यवधारणस्यविवक्षितमर्थमाह॥तत्रेति॥यथोक्तंवाक्यंसप्तम्यर्थः यथाश्रुतमवधारणमवधार्यकुतोवि
धांतरेणतद्व्याख्यानमित्याशंक्याह॥अर्थबलाद्धीति अन्नादस्यसंहर्तृत्वादग्नित्वमन्नस्यचसंहरणीयतयासोमत्वमवधारयितुंयुक्तमित्यर्थः॥न
न्वन्नस्यसोमत्वेननियमोग्नेरपिजलादिनासंहारान्नचात्तुरग्नित्वेननियमःसोमस्यापिकदाचिदिज्यमानत्वेनात्तत्वात्कुतोर्थबलमित्याशंक्याह॥अ
ग्निरपीति॥सोपिसंहार्यश्चेत्सोमएवसचसंहर्त्ताचेदग्निरेवेत्यवधारणसिद्धिरित्यर्थः॥प्रजापतेःसर्वात्मत्वमुपक्रम्यजगतोद्वेधाविभक्तत्वाभिधानं

द्रवात्मकत्वादाप्यायकमन्नादश्चाग्निरौष्ण्याद्रूक्षत्वाच्चतत्रैवमवध्रियतेसोमएवान्नंयदद्यतेतदेवसोमइत्यर्थोयएवचात्तासएवाग्निरर्थ
बलाद्ध्यवधारणं॥अग्निरपिक्वचिद्धूयमानःसोमपक्षस्यैवसोमोपीज्यमानोग्निरेवात्तत्वादेवमग्नीषोमात्मकंजगदात्मत्वेनपश्यन्न

सैषाब्रह्मणोतिसृष्टिर्यच्छ्रेयसोदेवानसृजताथयन्मर्त्यःसन्नमृतानसृजततस्मादतिसृष्टिरतिसृष्ट्यांहास्यैतस्यांभव
तियएवंवेद॥६॥ केनचनदोषेणलिप्यतेप्रजापतिश्चभवति॥सैषाब्रह्मणःप्रजापतेरतिसृष्टिरात्मनोप्यतिशयाकासेत्याह
यच्छ्रेयसःप्रशस्यतरान्आत्मनःसकाशाद्यस्मादसृजतदेवान्सैषातस्माद्देवसृष्टिरतिसृष्टिःकथंपुनरात्मनोतिशयासृष्टिरित्य
तआह॥ कुत्रोपयुक्तमित्याशंक्यतस्यसूत्रेपर्यवसानात्तस्मिन्नात्मबुध्योपासकस्यसर्वदोषराहित्यंफलमत्रविवक्षितमित्याह॥एव
मिति॥अनुग्राहकदेवसृष्टिंशिष्ट्वातदुपासकस्यफलोक्त्यर्थमादौदेवसृष्टिंस्तौति॥सैषेति॥अग्निर्मूर्द्धेत्यादिश्रुतेरग्न्यादयोस्यावयवास्तत्कथं
ततसृष्टिस्ततोतिशयवतीत्याशंकते॥कथमिति॥प्रजापतेर्यजमानावस्थापेक्षयादेवसृष्टेरुत्कृष्टत्ववचनमविरुद्धमितिपरिहरति॥अतआ

देवसृष्टेरतिसृष्टित्वाभावशंकानुवादार्थोयंशब्दः ज्ञानस्येत्युपलक्षणंकर्मणोपीतिद्रष्टव्यं॥अतिसृष्ट्यामित्यादिव्याचष्टे॥तस्मादिति देवतादिस्रष्टातदात्माप्रजापतिरहमेवेत्युपासितुस्तद्भावापत्यातत्स्रष्टृत्वंफलतीत्यर्थः॥६॥पूर्वोत्तरग्रंथयोःसंबंधंवक्तुंप्रतीकमादायवृत्तंकीर्तयति॥तद्धेत्यादिनातस्यादेयत्वार्थंवैदिकमित्युक्तं॥साधनमित्युक्तेमुक्तिसाधनंपुरःस्फुरतितंनिरस्यति॥ज्ञानेतिएकरूपस्यमोक्षस्यानेकरूपं

अथयद्यस्मान्मर्त्यःसन्मरणधर्मासन्नमृतानमरणधर्मिणोदेवान्कर्मज्ञानवह्निनासर्वानात्मनःपाप्मनःउषित्वाऽसृजततस्मादियमतिसृष्टिरुत्कृष्टज्ञानस्यफलमित्यर्थः॥तस्मादेनामतिसृष्टिंप्रजापतेरात्मभूतांयोवेदसएतस्यामतिसृष्ट्यांप्रजापतिरिवभवतिप्रजापतिवदेवस्रष्टाभवति ॥ ६ ॥ ॥ ॥ तद्धेदंतर्ह्यव्याकृतमासीत्॥सर्ववैदिकंसाधनंज्ञानकर्मलक्षणं॥कर्त्राद्यनेककारका

तद्धेदंतर्ह्यव्याकृतमासीत्

पेक्षंप्रजापतित्वफलावसानंसाध्यमेतावदेवयदेतद्व्याकृतंजगत्संसारोऽथैतस्यैवसाध्यसाधनलक्षणस्यव्याकृतस्यजगतोव्याकरणात्प्रागवीजावस्थायातांनिर्दिदिक्षत्यंकुरादिकार्यानुमितामिवरक्षस्यकर्मबीजोऽविद्याक्षेत्रोह्यसौसंसारवृक्षःसमूलउद्धर्तव्य इति॥ नसाधनंभवतीतिभावः॥मुक्तिसाधनंमानवस्तुतंत्रंतत्वज्ञानं॥इदंतुकारकसाध्यमतोपिनतद्धेतुरित्याह॥कर्त्रादीति॥किंच॥इदंप्रजापतित्वफलावसानंमृत्युरस्यात्माभवतीतिश्रुतेःनचतदेवकैवल्यंभयारत्यादिश्रवणादतोपिनेदंमुक्त्यर्थमित्याह॥प्रजापतित्वेति॥किंच॥नित्यसिद्धामुक्तिरिदंतुसाध्यफलमतोपिनमुक्तिहेतुरित्याह॥साध्यमिति॥किंच॥मुक्तिर्व्याकृतादर्थांतरमन्यदेवतद्विदितादित्यादिश्रुतेरिदंतुनामरूपंव्या

कृतमतोपिनतद्धेतुरित्याह॥सर्वावस्थेति॥

संप्रत्यव्याकृतकंडिकामवतारयन्प्रवेशवाक्यप्राक्तनस्य तद्धेदमित्यादेर्वाक्यस्य तात्पर्यमाह॥ अथेति॥ ज्ञानकर्मफलोक्त्यानंतर्यमथशब्दार्थः॥
बीजावस्थासाभासप्रत्यगविद्या तस्या निर्देष्टुमिष्टत्वमेव न साक्षान्निर्देश्यत्वमनिर्वाच्यत्वादिति वक्तुं निर्दिदिक्षतीत्युक्तं॥ वृक्षस्य बीजावस्थां लोके नि
र्दिशतीति संबंधः॥ यत्ज्ञाने पुमर्थाप्तिस्तदेव वाच्यं किमिति प्रत्यगविद्योच्यते तत्राह॥ कर्मेति॥ उद्धर्त्तव्य इति तन्मूलनिरूपणमर्थवदिति शेषः॥ अ
यं पुरुषार्थमर्थयमानस्य तदुद्धारोपि क्वोपयुज्यते तत्राह॥ तदुद्धरणे हीति॥ ननु संसारस्य मूलमेव नास्ति स्वभाववादात्प्रधानाद्येव वा तन्मूलं नाज्ञानं

तदुद्धरणे हि पुरुषार्थपरिसमाप्तिः॥ तथा चोक्तं ऊर्ध्वमूलोऽवाक्शाख इति काठके॥ गीतासु च ऊर्ध्वमूलमधःशाखमिति॥ पुराणे च ब्र
ह्मवृक्षः सनातन इति॥ तद्धेतदिति बीजावस्थं जगत्प्रागुत्पत्तेस्तर्हि तस्मिन्काले परोक्षत्वात्सर्वनाम्नाऽप्रत्यक्षाभिधानेनाभिधीयते॥
भूतकालसंबंधित्वादव्याकृतभाविनो जगतः सुखग्रहणार्थमैतिह्यप्रयोगो हशब्दः एवं ह तदासीदित्युच्यमाने सुखं तां परोक्षामपि
जगतोऽवस्थां प्रतिपद्यते युधिष्ठिरो ह किल राजासीदित्युक्ते यद्वदिदमिति व्याकृतनामरूपात्मकं साध्यसाधनलक्षणं यथावर्णितमभि
धीयते॥ ब्रह्मेत्याशंक्य श्रुतिस्मृतिभ्यां परिहरति॥ तथा चेति॥ ऊर्ध्वमुत्कृष्टं कारणं कार्यापेक्षया परमव्याकृतं मूलमस्येत्यूर्ध्वमूलो हिरण्य
गर्भादयो मूलापेक्षया अर्वाच्यः शाखा इवावाक्शाखः एवमूर्ध्वमूलमधःशाखमित्यादि गीतापि नेतव्या॥ अस्ति हि संसारस्य मूलं नेदममूलं भविष्य
तीति श्रुतेः॥ तच्चाज्ञातं ब्रह्मैवेति श्रुतिस्मृतिप्रसिद्धमिति भावः॥ संप्रति प्रतीकमादाय पदानि व्याचष्टे॥ तद्धेत्यादिना॥ अप्रत्यक्षाभिधानेन तदिति
सर्वनाम्ना बीजावस्थं जगदभिधीयते परोक्षत्वादिति संबंधः॥ कथं जगतो बीजावस्थत्वमित्याशंक्य तर्हीत्यस्यार्थमाह॥ प्रागिति॥ कथं तस्य परोक्षत्वं
तत्राह॥ भूतेति॥ निपातार्थमाह॥ सुखेति॥ हशब्दार्थमभिनयति॥ किलेति॥ यथावर्णितमित्यनर्थत्वेन संसारेऽसारत्वोक्तिः पदद्वयसामानाधिकर

तदिदमिति॥एकत्वमभिनयेनोदाहरति॥तदेवेति॥एकत्वावगतिफलंकथयति॥अथेति॥सामानाधिकरण्यवशादेकत्वेनिश्चितेसत्यनंतरंनास
तोविद्यतेभावोनाभावोविद्यतेसतइतिस्मृतिरनुसृताभवतीतिभावः॥अज्ञातंब्रह्मजगतोमूलमित्युक्त्वातद्विवर्तोजगदितिनिरूपयति॥तदेवंभू
तमिति॥तृतीयामित्थंभावार्थत्वेनव्याचष्टे॥नाम्नेति॥क्रियापदप्रयोगाभिप्रायंतदनुवादपूर्वकमाह॥व्याक्रियतेति॥तत्रपदच्छेदपूर्वकंतद्व्याच्य
मर्थमाह॥व्याक्रियतेत्यादिनास्वयमेवेतिकुतोविशेष्यतेकारणमंतरेणकार्योत्पत्तिरयुक्तेत्याशंक्याह॥सामर्थ्यादिति॥निर्हेतुकार्यसिद्ध्यनुपपत्त्या

तदिदंशब्दयोःपरोक्षप्रत्यक्षावस्थजगद्वाचकयोःसामानाधिकरण्यादेकत्वमेवपरोक्षप्रत्यक्षावस्थस्यजगतोवगम्यते॥तदेवेदमि
दमेवचतदव्याकृतमासीदित्यथैवंसति॥नासतउत्पत्तिर्नसतोविनाशःकार्यस्येत्यवधृतंभवति॥तदेवंभूतंजगदव्याकृतंसन्नाम

तन्नामरूपाभ्यामेवव्याक्रियतासौनामायमिदंरूपइति

रूपाभ्यामेवनाम्नारूपेणैवचव्याक्रियतव्याक्रियतेतिकर्मकर्तृप्रयोगात्तत्स्वयमेवात्मैवव्याक्रियतविआअक्रियतविस्पष्टंनामरू
पविशेषावधारणमर्यादंव्यक्तीभावमापद्यत॥सामर्थ्यादाक्षिप्तनियंतृकर्तृसाधनक्रियानिमित्तंअसौनामेतिसर्वनाम्नाऽविशेषाऽभिधा
नेननाममात्रंव्यपदिशतिदेवदत्तोयज्ञदत्तइतिवानामास्येत्यसौनामायं क्षिप्तोनियंताजनयिताकर्ताचोत्पत्तौसाधनक्रियाकरणव्यापारस्त

न्निमित्तंतदपेक्ष्यव्यक्तीभावमापद्यतइतियोजनानामसामान्यंदेवदत्तादिनाविशेषनाम्नासंयोज्यसामान्यविशेषवानर्थोनामव्याकरणवाक्येविवक्षि
तइत्याह॥असावित्यादिना॥असौशब्दःश्रोतोव्यत्ययत्वेननेयोरूपसामान्यशुक्लकृष्णादिविशेषेणसंयोज्योच्यतेरूपव्याकरणवाक्येनेत्याह ॥

तथेत्यादिना॥अव्याकृतमेवव्याकृतात्मनाव्यक्तमित्येतत्सुप्तप्रबुद्धदृष्टांतेनस्पष्टयति॥तदिदमिति॥तद्धेत्यत्रमूलकारणमुक्त्वातन्नामरू
पाभ्यामित्यादिनातत्कार्यमुक्तमिदानींप्रवेशवाक्यस्यसशब्दापेक्षितमर्थमाह॥यदर्थइति कांडद्वयात्मनोवेदस्यारंभोयस्यपरस्यप्रतिपत्त्य
र्थोविज्ञायते॥कर्मकांडंहिस्वार्थानुष्ठानाहितचित्तशुद्धिद्वारातत्त्वज्ञानोपयोगीष्यतेज्ञानकांडंतुसाक्षादेवतत्रोपयुज्यतेसर्वेवेदायत्पदमाम
नंतीतिचश्रूयतेसपरोत्रप्रविष्टोदेहादावितियोजना॥सर्वस्याम्नायस्यब्रह्मात्मनिसमन्वयमुक्त्वातत्रविरोधसमाधानार्थमाह॥यस्मिन्निति॥अ
ध्यासस्यचतुर्विधस्यातीनामन्यतमलंवारयति॥अविद्ययेति॥तस्यामिथ्याज्ञानत्वेनसादित्वादनाद्यध्यासहेतुत्वासिद्धिरित्याशंक्याह॥स्वाभावि

तथेदमितिशुक्लकृष्णादीनामविशेषः इदंशुक्लमिदंकृष्णंवारूपमस्येतीदंरूपः॥तदिदमव्याकृतंवस्त्वेतर्ह्येतस्मिन्नपिकालेना
मरूपाभ्यामेवव्याक्रियतेअसौनामायमिदंरूपइति॥यदर्थःसर्वशास्त्रारंभोयस्मिन्नविद्ययास्वाभाविक्याकर्तृक्रियाफलाध्यारोप
णाकृतायःकारणंसर्वस्यजगतोयदात्मकेनामरूपे॥सलिलादिवस्वच्छान्मलमिवफेनमव्याकृतेव्याक्रियेते

क्येति॥विद्याप्रागभावत्वम
विद्यायाव्यावर्त्तयति॥कर्त्रिति॥नहितदुपादानत्वमभावत्वेसंभवतिनचोपादानांतरमस्तीतिभावः॥अन्वयस्तुसर्वत्रयच्छब्दस्यपूर्ववद्द्रष्टव्यः॥आत्म
निकर्तृत्वाध्यासस्याविद्याकृतत्वोक्त्यासमन्वयेविरोधःसमाहितःसंप्रत्यध्यासकारणस्योक्तत्वेपिनिमित्तोपादानभेदंसांख्यवादमाशंक्योक्तमेवकार
णंतद्भेदनिराकरणार्थंकथयति॥यःकारणमिति श्रुतिस्मृतिवादेषुपरस्यतत्कारणत्वंप्रसिद्धमितिभावः॥नामरूपात्मकस्यद्वैतस्याविद्याविद्यमा
नदेहत्वाद्विद्यापनोद्यत्वंसिध्यतीत्याह॥यदात्मकेति॥व्याकर्त्तुरात्मनःस्वभावतःशुद्धत्वेदृष्टांतमाह॥सलिलादिति॥व्याक्रियमाणयोर्नामरू
पयोःस्वतोऽशुद्धत्वेदृष्टांतमाह॥मलमिवेतियथाफेनादिजलोत्थंतन्मात्रमेवतथाऽज्ञातब्रह्मोत्थंजगद्ब्रह्ममात्रंतज्ज्ञानवाध्यंचेतिभावः ॥

नै १

नित्यशुद्धत्वादिलक्षणमपिवस्तुनस्ततोऽज्ञाननिवर्त्तकंकेवलस्यातत्साधकत्वाद्वाक्योत्थबुद्धिवृत्त्यारूढंतुतथेतिमन्वानोब्रूते यश्चेति॥आकाशो वैनामनामरूपयोर्निर्वहितातेयदंतरातद्ब्रह्मेतिश्रुतिमाश्रित्याह॥ताभ्यामिति॥नामरूपात्मकद्वैतासंस्पर्शित्वादेवनित्यशुद्धत्वंअशुद्धेद्वैतसं बंधाधीनत्वात्तत्राविद्याप्रयोजिकेत्यभिप्रेत्यतत्संबंधंनिषेधति बुद्धेति॥तस्मादेवदुःखाद्यनर्थासंस्पर्शित्वमाह॥मुक्तेति॥विद्यादशायांशुध्यादि सद्भावेपिबंधावस्थायांनैवमितिचेन्नेत्याह॥स्वभावइति॥अव्याकृतवाक्योक्तमज्ञातंपरमात्मानंपरामृश्यति॥सइति॥तमेवकार्यस्थंप्रसंचंनि

यश्चताभ्यांनामरूपाभ्यांविलक्षणःस्वतोनित्यशुद्धबुद्धमुक्तस्वभावःसएषोऽव्याकृतेआत्मभूतेनामरूपेव्याकुर्वन्ब्रह्मादिस्तंबप र्यंतेषुदेहेष्विहकर्मफलाश्रयेष्वशनायादिमत्सुप्रविष्टः॥नन्वव्याकृतंस्वयमेवव्याक्रियतेत्युक्तंकथमिदानीमुच्यतेपरएवात्मा

तदिदमप्येतर्हिनामरूपाभ्यामेवव्याक्रियतेसौनामायमिदंरूपइतिसएषइहप्रविष्ट

व्याकृतंव्याकुर्वन्निहप्रविष्टइति॥नैषदोषःपरस्यात्मनोऽव्याकृतजगदात्मत्वेनविवक्षितत्वादाक्षिप्तनियंतृकर्त्तृक्रियानिमित्तंहि जगदव्याकृतंव्याक्रियतेत्यवोचाम दिशति॥एषइति॥आत्माहिस्वतोनित्यशुद्धत्वादिरूपोपिस्वाविद्यावष्टंभान्नामरूपेव्याकरोतीतित त्सर्जनस्याविद्यामयत्वंविवक्षित्वाह॥अव्याकृतेइति॥तयोरात्मनाव्याकृतत्वेतदतिरेकेणाभावःफलतीतिमत्वाविशिनष्टि॥आत्मेति॥जनिम न्मात्रमिहशब्दार्थंकथयति ब्रह्मादीति॥तत्रैवदुःखादिसंबंधोनात्मनीतिमन्वानोविशिनष्टि॥कर्मेति॥ब्रह्मात्मैक्यंपदद्वयसामानाधिकरण्यादधि गतेहेतुमाह॥प्रविष्टइति॥परमात्मास्रष्टासृष्टेप्रविष्टोजगतीत्यादिष्टमाक्षिपति॥नन्विति॥पूर्वापरविरोधंसमाधत्ते नेत्यादिना॥व्याक्रियतेतिकर्मकर्त्त

65

आस्मिन्नेति॥मुच्यतेवत्सःस्वयमेवेतिवत्कर्मकर्त्तरिलकारोव्याकरणसौकर्यापेक्षयासत्येव कर्त्तरिनिर्वहतीतिभावः॥अव्याकृतशब्दस्यनियंत्रादियु
क्तजगद्वाचित्वेहेत्वंतरमाह॥इदंशब्देति॥कथमुक्तसामानाधिकरण्यमात्राद्व्याकृतस्यजगतोनियंत्रादियुक्तत्वंतत्राह॥यथेति॥नियंत्रादीत्यादिश
ब्देनकर्तृकरणादिग्रहणं॥निमित्तादीत्यादिपदेनोपादानमुच्यते॥विमतंनियंत्रादिसापेक्षंकार्यत्वात्संप्रतिपन्नवदित्यर्थः॥कस्तर्हिप्रागवस्थेसंप्र
तितनेचजगतिविशेषस्तत्राह॥व्याकृतेति॥कथंपुनरव्याकृतेनजगद्वाचिनापरोगृह्यतेएकस्यशब्दस्यानेकार्थत्वायोगादतआह॥दृष्टश्चेति॥उक्त

इदंशब्दसामानाधिकरण्याच्चाव्याकृतशब्दस्ययथेदंजगन्नियंत्राद्यनेककारकनिमित्तादिविशेषवद्व्याकृतंतथाऽपरित्यक्ताव्या
तमविशेषवदेवतदव्याकृतंव्याकृताव्याकृतमात्रंतुविशेषोदृष्टश्चलोकेविवक्षातःशब्दप्रयोगोग्रामआगतोग्रामःशून्यइतिकदा
चिद्ग्रामशब्देननिवासमात्रविवक्षायांग्रामःशून्यइतिशब्दप्रयोगोभवति॥कदाचिन्निवासिजनविवक्षायांग्रामआगतइतिकदाचि
दुभयविवक्षायामपिग्रामशब्दप्रयोगोभवतिग्रामंचनप्रविशेदितियथातद्वदिहापिजगदिदमव्याकृतंव्याकृतंचेत्यभेदविवक्षाया
मात्मानात्मनोर्भवतिव्यपदेशःतथेदंजगदुत्पत्तिविनाशात्मकमितिकेवलजगद्व्यपदेशस्तथामहानजआत्माऽस्थूलोऽनणुःसएषने
तिनेतीत्यादिकेवलआत्मव्यपदेशःननुपरेणव्याकर्त्राव्याकृतंसर्वतोव्याप्तंसर्वदाजगत्सकथमिहप्रविष्टःपरिकल्प्यतेऽप्रविष्टोहिदेशःप
रिच्छिन्नेनप्रवेष्टुंशक्यतेयथापुरुषेणग्रामादिः॥

मेवस्फुटयति॥कदाचिदिति॥उभयविवक्षयाग्रामशब्दप्रयोगस्यदार्ष्टांतिकमाह॥तद्वदिति
इहेत्यव्याकृतवाक्योक्तिः॥निवासमात्रविवक्षयाग्रामशब्दप्रयोगस्यदार्ष्टांतिकमाह॥तथेति॥निवासिजनविवक्षयातत्प्रयोगस्यापिदार्ष्टांतिकंक
थयति॥तथामहानिति॥अव्याकृतवाक्येपरस्यप्रकृतत्वात्तस्यप्रवेशवाक्येसशब्देनपरामृष्टस्यसृष्टेकार्येप्रवेशउक्तस्तंचप्रकारांतरेणाक्षिपति॥

कथमितिसूचितामनुपपत्तिमेवस्पष्टयति॥अप्रविष्टोहीति॥दृष्टांतावष्टंभेनप्रवेशवादीशंकते॥पाषाणेति॥तदेवविवृणोति॥अथापीत्यादिना
॥परस्यपरिपूर्णस्यक्वचित्प्रवेशाभावेपीतियावत्॥तद्रुद्धः स्रष्टकार्यविषयः॥धर्मांतरंजीवाख्यं॥दृष्टांतंव्याचष्टे॥यथेतिपाषाणाद्बाह्यः
सर्पादिस्तत्रप्रविष्टइतिशंकापोहार्थंसहजंविशेषणं॥सर्पादेरश्मादिरूपेणस्थितभूतपंचकपरिणामत्वात्तत्रसहजत्वंपाषाणादीया
निभूतानिस्थितानितेषांपरिणामःसर्पादिस्तद्रूपेणतत्रभूतानामनुप्रवेशवद्परिच्छिन्नस्यापिपरस्यजीवाकारेणबुध्यादौप्रवेशसिद्धिरित्य

नाकाशेनकिंचित्नित्यप्रविष्टत्वात्पाषाणेसर्पादिवद्धर्मांतरेणेतिचेद्यद्यपिस्यान्नपरआत्मास्वेनैवरूपेणप्रविवेशकिंतर्हितत्स्य
एवधर्मांतरेणोपजायतेतेनप्रविष्टइत्युपचर्यते॥यथापाषाणेसहजोंतस्थःसर्पोनारिकेलेवातोयंन॥तत्सृष्ट्वातदेवानुप्राविशा
दितिश्रुतेः॥यःस्रष्टासभावांतरमनापन्नएवकार्यंसृष्ट्वापश्चात्तत्राविशदितिहिश्रूयतेयथाभुक्त्वागच्छतीतिभुजिगमिक्रिययोः
पूर्वापरकालयोरितरेतरविच्छेदोऽविशिष्टश्चकर्त्तातद्वदिहापिस्यात्ननुतत्स्यसैवभावांतरोपजननंसंततंभवति॥नचस्या
नांतरेणवियुज्यस्थानांतरसंयोगलक्षणःप्रवेशोनिरवयवस्यापरिच्छिन्नस्यदृष्टः॥सावयवएवप्रवेशश्रवणादितिचेत्॥ ॥

र्थः॥आक्षेप्ताब्रूते॥नेति॥तदेवस्पष्टयति॥यःस्रष्टेति॥ननुतक्ष्णानिर्मितेवेश्मनिततोन्यस्यापिप्रवेशोदृश्यते॥तथापरेणास्रष्टेजगत्यन्यस्यप्रवे
शोभविष्यतिनेत्याह॥यथेति॥पाषाणसर्पन्यायेनकार्यस्यसैवपरस्यजीवाख्यपरिणामेतत्सृष्ट्वेत्यादिश्रवणमनुपपन्नमितिव्यतिरेकंदर्शयति॥
नन्विति॥अस्तुतर्हिपरस्यमार्जारादिवत्पूर्वावस्थानत्यागेनावस्थानांतरसंयोगात्माप्रवेशोनेत्याह॥नचेति॥निरवयवोऽपरिच्छिन्नश्चात्मातस्यस्थानां
तरेणवियोगंप्राप्यस्थानांतरेणसहसंयोगलक्षणोयःप्रवेशःससावयवेपरिच्छिन्नेचमार्जारादौदृष्टप्रवेशसदृशोनभवतीतियोजना वियुज्येतिपाठेतु
नचस्थानांतरसंयोगलक्षणःप्रवेशोनिरवयवस्यापरिच्छिन्नस्यदृष्टइतिपाठः ६

66

सावयववइति॥प्रवेशश्रुतेरन्यथोपपत्तेर्वक्ष्यमाणत्वान्नैवमितिपरिहरति॥नेत्यादिना॥अमूर्त्तत्वंनिरवयवत्वं॥पुरुषत्वंपूर्णत्वं॥प्रकारांतरेण
प्रवेशोपपत्तिंशंकते॥प्रतिबिंबेति॥आदित्यादेर्जलादिनासंनिकर्षादिसंभवात्प्रतिबिंबाख्यप्रवेशोपपत्तिरात्मनितुपरस्मिन्नसंगेऽनवच्छि
न्नेकेनचिदपितदभावान्नयथोक्तप्रवेशसिद्धिरित्याह॥नवस्त्वंतरेणेति॥प्रकारांतरेणचोदयति॥द्रव्यइति॥परस्यापिकार्येप्रवेशइतिशेषः
॥गुणापेक्षयापरस्यवैलक्षण्यंदर्शयन्परिहरति॥नेत्यादिना॥स्वातंत्र्यश्रवणमेषसर्वेश्वरइत्यादि॥पनसादिफलेबीजस्यप्रवेशवत्कार्येपर

न॥दिव्योह्यमूर्त्तःपुरुषोनिष्कलंनिष्क्रियमित्यादिश्रुतिभ्यःसर्वव्यपदेश्यधर्मविशेषप्रतिषेधश्रुतिभ्यश्च॥प्रतिबिंबप्रवेशवत्
इतिचेत्॥न॥वस्त्वंतरेणविप्रकर्षानुपपत्तेः॥द्रव्येगुणप्रवेशवदितिचेत्॥न॥अनाश्रितत्वान्नित्यपरतंत्रस्यैवाश्रितस्यगुणस्यद्र
व्येप्रवेशउपचर्यते॥नतुब्रह्मणःस्वातंत्र्यश्रवणात्तथाप्रवेशउपपद्यते॥फलेबीजवदितिचेत्नसावयवत्ववृद्धिक्षयोत्पत्ति
विनाशादिधर्मवत्वप्रसंगात्॥नचैवंधर्मवत्वंब्रह्मणोऽजोऽजरइत्यादिश्रुतिन्यायविरोधादन्यएवसंसारीपरिच्छिन्नइहप्रवि
ष्टइतिचेन्नसेयंदेवतेक्षततेत्यारभ्यनामरूपेव्याकरवाणीतितस्याएवप्रवेशव्याकरणकर्त्तृत्वश्रुतेस्तथातत्सृष्ट्वातदेवानुप्रावि
शत्॥ स्यप्रवेशःस्यादितिशंकित्वादूषयति॥फलइत्यादिना॥विनाशादीत्यादिशब्देनाऽनात्मत्वानीश्वरत्वादिगृह्यते॥प्रसंगस्येष्टत्वमा
शंक्यनिराचष्टे॥नचेति॥जन्मादीनांधर्माणांधर्मिणोभिन्नत्वासंभवादित्यायः॥बीजफलयोरवयवावयवित्वंपाषाणसर्पयोराधाराधेयतेत्य
पुनरुक्तिः॥परस्यसर्वप्रकारप्रवेशासंभवेश्रुतेरालंवनंवाच्यमित्याशंक्यपूर्वपक्षमुपसंहरति॥अन्यएवेति॥जगतोहिपरःस्रष्टेतिवेदांतमर्या
दास्रष्टैवचप्रवेष्टाप्रविश्यव्याकरवाणीतिप्रवेशव्याकरणयोरेककर्तृत्वश्रुतेस्तस्मात्परस्मादन्यस्यप्रवेशोनयुक्तिमानितिसिद्धांतयति नेत्यादिना॥

ऐतरेयश्रुतिरपियथोक्तमर्थमुपोद्बलयतीत्याह॥ सएतमेवेति॥ श्रीनारायणाख्यमंत्रमपिअत्रानुकूलयति॥ सर्वाणीति॥ वाक्यांतरमुदाहरति॥ त्वंकु
मारइति॥ अत्रैववाक्यशेषस्यानुगुण्यंदर्शयति॥ पुरइति॥ उदाहृतश्रुतीनांतात्पर्यमाह॥ नपरादिति॥ परस्यप्रवेशेप्रविष्टानामिथोभेदात्तदभिन्न
स्यतस्यापिनानात्वप्रसक्तिरितिशंकतेप्रविष्टानामिति॥ नपरस्यानेकत्वमेकत्वश्रुतिविरोधादितिपरिहरति॥ नेत्यादिनाविचारविचरतीतियावत्
परस्यप्रवेशेनानात्वप्रसंगंप्रत्याख्यायदोषांतरंचोदयति॥ प्रवेशइति॥ तेषांसंसारित्वेपिपरस्यकिमायाततदाह॥ तदनन्यत्वादिति॥ श्रुत्यवष्टंभेनदू

सएतमेवसीमानंविदार्यैतयाद्वाराप्रापद्यत सर्वाणिरूपाणिविचित्यधीरोनामानिकृत्वाभिवदन्यदास्ते॥ त्वंकुमारउतवाकुमारीत्वं
जीर्णोदंडेनवंचसि॥ पुरश्चक्रे॥ रूपंरूपमितिचमंत्रवर्णात्॥ नपरादन्यस्यप्रवेशः॥ प्रविष्टानामितरेतरभेदात्परानेकत्वमितिचेत्
॥न॥ एकोदेवोबहुधासंनिविष्टः एकःसन्बहुधाविचारत्वमेकोसिबहूननुप्रविष्टः एकोदेवःसर्वभूतेषुगूढःसर्वव्यापीसर्वभूतांतरा
त्मेत्यादिश्रुतिभ्यःप्रवेशउपपद्यतेनोपपद्यतइतितिष्ठतुतावत्प्रविष्टानांसंसारित्वात्तदनन्यत्वाच्चपरस्यसंसारित्वमितिचेत्॥ न॥ अश्ना
नायाद्यत्ययश्रुतेः॥ सुखित्वदुःखित्वादिदर्शनान्नेतिचेत्॥ न॥ नलिप्यतेलोकदुःखेनबाह्यइतिश्रुतेः॥ प्रत्यक्षादिविरोधादयुक्तमितिचे
त्॥ नोपाध्याश्रयज नितविशेषविषयत्वात्प्रत्यक्षादेः॥ षयति॥ नेति॥ अनुभवमनुसृत्यशंकते॥ सुखीति॥ नासंसारित्वमितिशेषः॥ गूढाभि
संधिरुत्तरमाह॥ नेति॥ आगमोहिपरस्यासंसारित्वेमानंत्वयोच्यते॥ सचाध्यक्षविरुद्धः॥ स्वार्थेनमानंनचवैपरीत्यंज्येष्ठत्वेनबलवत्वादितिशंकते॥
प्रत्यक्षादीतिशंकितेपूर्ववादिनिस्वाशयमाविष्कृतवतिसिद्धांतीस्वाभिसंधिमाह॥ नोपाधीति॥ उपाधिरंतःकरणंतदाश्रयत्वेनजनितोविशेषस्त
दाभासस्तद्रूपत्वदुःखादिविषयत्वात्प्रत्यक्षादेराभासत्वात्तेनात्मन्यसंसारित्वागमस्यनविरोधोस्तीत्यर्थः॥ किंच॥

67

प्रत्यक्षादीनामनात्मविषयत्वादात्मविषयत्वाच्चागमस्यभिन्नविषयतयानानयोर्मिथोविरोधोस्तीत्यभिप्रेत्यात्मनोध्यक्षाद्यविषयत्वेश्रुतीरु
दाहरति॥नदृष्टेरिति॥सुख्यहमित्यादिप्रतिभासस्यतर्हिकागतिरित्याशंक्यपूर्वोक्तमेवस्मारयति॥किंतर्हीति॥बुध्यादिरुपाधिस्तत्राल
प्रतिच्छायातत्प्रतिबिंबस्तद्विषयमेवसुख्यहमित्यादिविज्ञानमितियोजना॥आत्मनोदुःखित्वाभावेहेत्वंतरमाह॥अयमिति॥अयंदेहोहमि
तिदृश्येनद्रष्टुस्तादात्म्याध्यासदर्शनाद्दृश्यविशिष्टस्यैवप्रत्यक्षविषयत्वान्नकेवलस्यात्मनोदुःखादिसंसारोस्तीत्यर्थः॥किंचअस्थूलादिविशे
षणमक्षरंप्रक्रम्यतस्यैवप्रत्यगात्मत्वंदर्शयंतीश्रुतिरात्मनःसंसारित्वंवारयतीत्याह॥नान्यदिति॥किंच॥पादयोर्दुःखंशिरसिदुःखमिति

नदृष्टेर्द्रष्टारंपश्येर्विज्ञातारमरेकेनविजानीयाद्विज्ञातंविज्ञान्नित्यादिश्रुतिभ्योनात्मविषयंविज्ञानं॥किंतर्हिबुध्याद्युपाध्या
त्मप्रतिच्छायाविषयमेवसुखितोहंदुःखितोहमित्येवमादिप्रत्यक्षविज्ञानमयमहमितिविषयेणविषयिणःसामानाधिकरण्यो
पचारात्॥नान्यदतोस्तिद्रष्टृइत्यन्यात्मप्रतिषेधाच्च॥देहावयवविशेष्यत्वाच्चसुखदुःखयोर्विषयधर्मत्वमात्मनस्तुकामायेत्यात्मा
र्थत्वश्रुतेरयुक्तमितिचेत्॥

देहावयवावच्छिन्नत्वेनतत्प्रतीतेस्तद्धर्मत्वनिश्चयान्नात्मनिसंसारित्वंप्रामाणिकमित्याह॥देहेति॥श्रुतिव
शादात्मनःसंसारित्वंशंकते॥आत्मनस्त्विति॥सुखंतावदात्माश्रयमात्मनस्तुकामायेतिसुखसाधनस्यात्मार्थत्वश्रुतेरतस्तदविनाभूतंदुः
खमपितत्रेत्यात्मन्यसंसारित्वमयुक्तमित्यर्थः॥आविद्यकसंसारित्वानुवादेनात्मनोऽनतिशयानंदत्वप्रतिपादकमात्मनस्तुकामायेत्यादि
वाक्यमितिमत्वाह॥नेति॥तदाविद्यकसंसारानुवादीत्यत्रगमकमाह॥यत्रेति॥अनेनहिवाक्येनाविद्यावस्थायामेवात्मार्थत्वंसुखादेरभ्यु
पगम्यतेऽतोनतस्यात्मधर्मत्वमित्यर्थः॥आत्मनिसंसारित्वस्याप्रतिपाद्यत्वेपिगमकमाह॥तत्केनेति॥

आत्मनोऽसंसारित्वेविद्वदनुभवमनुकूलयितुंचशब्दः तर्कशास्त्रप्रामाण्यादात्मनःसंसारित्वमितिशंकते॥तार्किकेति॥बुध्यादिचतुर्दशगुणवा
नात्मेतितार्किकसमयस्तेनविरोधात्तस्यासंसारित्वमयुक्तं॥तर्काविरुद्धोहिसिद्धांतोभवतीत्यर्थः॥सर्वतर्काविरोधीवाकतिपयतर्काविरोधी
वासिद्धांतः॥नाद्यः॥तार्किकादिसिद्धांतस्यापिमिथोवैदिकतर्कैश्चविरोधादसिद्धिप्रसंगात्॥द्वितीयेतुश्रौततर्काविरोधादात्मासंसारित्वसिद्धां
तोपिसिध्येदित्यभिसंधायाह॥नयुक्त्यापीति॥किंच॥दुःखादिरात्मधर्मोनभवतिवेद्यत्वाद्रूपादिवदित्याह॥नहीति॥प्रत्यक्षाविषयत्वोक्त्याप्र
तीचस्तद्विषयदुःखाविशेष्यत्वमयुक्तं॥प्रत्यक्षाप्रत्यक्षयोःशब्दाकाशयोरिवदुःखात्मनोरपिगुणगुणित्वसंभवादितिशंकतेआकाशस्येति॥यत्रध

न॥यत्रवाअन्यदिवस्यादित्यविद्याविषयात्मार्थत्वाभ्युपगमात्तत्केनकंपश्येन्नेहनानातत्रकोमोहःकःशोकइत्यादिनाविद्याविषये
तत्प्रतिषेधाच्च॥नात्मधर्मत्वंतार्किकसमयविरोधादयुक्तमितिचेत्नयुक्त्याप्यात्मनोदुःखित्वानुपपत्तेः॥नहिदुःखेनप्रत्यक्षविषये
णात्मनोविशेष्यत्वंप्रत्यक्षाविषयत्वादाकाशस्यशब्दगुणवत्ववदात्मनोदुःखित्वमितिचेन्नैकप्रत्ययविषयत्वानुपपत्तेःनहिसुखग्राह
केणप्रत्यक्षविषयेणाप्रत्ययेननित्यानुमेयस्यात्मनोविषयीकरणमुपपद्यते॥तस्यचविषयीकरणेआत्मनएकत्वाद्विषय्यभावप्रसंग

र्मधर्मिभावस्तत्रैकज्ञानगम्यत्वंदृष्टंयथाशुक्लोघटइतितद्व्यापकंव्यावर्त्तमानंदुःखात्मनोर्धर्मधर्मित्वंव्यावर्त्तयति॥शब्दाकाशयोरपिगुणगुणिभावोना
स्माकंसंमतःशब्दतन्मात्रमाकाशमितिस्थितेरित्याशयेनाहनैकेति॥कथंतदनुपपत्तिस्तत्राह॥नहीति॥नित्यानुमेयस्येतिजरत्तार्किकमतानुसारेण
सांख्यसमयानुसारेणचोक्तं॥आधुनिकंतार्किकंप्रत्याह॥तस्येति॥सुखादिवदात्मनोपिप्रत्यक्षेणविषयीकारेसत्येकस्मिन्देहेतदैक्यंसंमतेरात्मां
तरस्यतत्रायोगादेकत्रभोक्तृद्वयानिष्टेःपुरुषांतरस्यान्यप्रत्यक्षत्वादृष्टभावादात्मदृश्यत्वासिद्धिरित्यर्थः॥दीपस्यसव्यवहारहेतुत्वेनविषयविषयित्ववदेक

ऐकज्ञानगम्यत्वं ४ अहंप्रत्ययेन २

एकस्यैवेति॥आत्मनोविषयविषयित्वंकात्स्न्येनांशाभ्यांवाआद्येपियुगपत्क्रमेणवानाद्यइत्याह नयुगपदिति॥क्रियायांगुणत्वंकर्तृत्वंतत्प्राधा
न्यंकर्मत्वमतोयुगपदेकक्रियांप्रत्येकस्यसाकल्येनगुणप्रधानत्वायोगान्नैवमित्यर्थः॥नद्वितीयः॥एकभावेन्याभावादितिमत्वाकल्पांतरंप्र
त्याह॥आत्मनीति॥एतेनप्रदीपदृष्टांतोपिप्रतिनीतस्तस्यांशाभ्यांतद्भावेप्रकृताननुकूलत्वात्॥ननुविज्ञानवादिनोयुगपदेकस्यविज्ञानस्यसा
कल्येनग्राह्यग्राहकत्वमुपयंतितथात्वदात्मनोपिस्यात्तत्राह॥एतेनेति॥एकस्योभयत्वनिरासेनेत्यर्थः॥माभूत्प्रत्यक्षमागमिकंपारिभाषिकंचात्म
नःसंसारित्वमानुमानिकंतुभविष्यतिदुःखादिकंचिदाश्रितंगुणत्वाद्रूपवदित्याश्रयेसिद्धेपरिशेषादात्मनस्तदाश्रयत्वादित्याशंक्याह॥प्रत्यक्षे

एकस्यैवविषयविषयित्वंदीपवदितिचेन्नयुगपदसंभवादात्मन्यंशानुपपत्तेश्च॥एतेनविज्ञानस्यग्राह्यग्राहकत्वंप्रत्युक्तं॥प्रत्य
क्षानुमानविषययोश्चदुःखात्मनोर्गुणगुणित्वेनानुमानं॥दुःखस्यनित्यमेवप्रत्यक्षविषयत्वाद्रूपादिसामानाधिकरण्याच्च॥
मनःसंयोगजत्वेप्यात्मनिदुःखस्यसावयवत्वविक्रियावत्त्वानित्यत्वप्रसंगान्नह्यविकृत्यसंयोगिद्रव्यंगुणःकश्चिदुपयन्नपयन्वाह
ष्टःक्वचित्

ति॥नहिमिथोविरुद्धयोर्गुणगुणित्वमनुमेयंदुःखादेश्चसाभासबुद्धिस्थत्वात्पारिशेष्यासिद्धिरित्यर्थः॥साभासांतःकरणनिष्ठंदुः
खादीत्यत्रप्रमाणाभावात्कथंसिद्धसाधनत्वमित्याशंक्यदुःख्यहमित्यादिप्रत्यक्षस्यतत्रप्रमाणत्वादुक्तानुमानस्यसिद्धसाध्यतयापरिशेषासिद्धि
रित्याह॥दुःखस्येति॥यत्ररूपादिमतिदेहेदाहच्छेदादिदृष्टंतत्रैवतत्कृतदुःखाद्युपलंभान्नात्मनस्तद्वत्त्वमितिहेत्वंतरमाह॥रूपादीति॥यत्त्वात्म
मनःसंयोगादात्मनिबुध्यादयोनववैशेषिकागुणाभवंतीतितद्दूषयति॥संयोगेति॥दुःखस्यात्मनिमनःसंयोगजत्वेभ्युपगतेपिमनोवदात्मनःसं
योगित्वात्सावयवत्वादिप्रसंगादात्मत्वमेवनस्यादित्यर्थः॥तत्रसंयोगित्वेनसक्रियत्वंसाधयति॥नहीति॥संप्रतिसक्रियत्वेनसावयवत्वंप्रतिपाद

यद्वादुःखाद्यात्मनोविक्रियेतिकेश्चिद्दिष्टत्वात्तस्यसक्रियत्वमविरुद्धमित्याशंक्याह॥नचेति॥आत्मानपरिणामीनिरवयवत्वान्नभोवदिति
भावः॥किंच॥आत्मानगुणीनित्यत्वात्सामान्यवदित्याह॥अनित्येतिनित्यंपश्यामइतिशेषः॥वाशब्दोनअनुकर्षार्थः॥आकाशेव्यभिचारमाशं
क्याह॥नचेति॥आकाशस्यनित्यत्वंचेदात्मनआकाशःसंभूतइत्यादिश्रुतिविरोधःस्यादितिसूचयितुमागमवादिभिरित्युक्तं॥परमाण्वादौव्यभि
चारमाशंक्याह॥नचान्यइतिनतावदणवःसंतित्र्यणुकेतरसत्वेमानाभावाद्दिशश्चाकाशंतर्भवतिकालस्तुसर्वेनिमेषाजज्ञिरइत्यादिश्रुतेरुत्प
त्तिमान्मनोप्यन्नमयंश्रुतिप्रसिद्धमतोनक्वचिद्व्यभिचारइतिभावः॥यस्मिन्विक्रियमाणेतदेवेदमितिबुद्धिर्नविहन्यतेतदपिनित्यमितिन्याये

नचनिरवयवंविक्रियमाणंदृष्टंक्वचिदनित्यगुणाश्रयंवानित्यंनचाकाशआगमवादिभिर्नित्यतयाभ्युपगम्यतेनचान्योदृष्टांतोस्ति
विक्रियमाणमपितत्प्रत्ययानिवृत्तेर्नित्यमेवेतिचेन्न द्रव्यस्यावयवान्यथात्वव्यतिरेकेणविक्रियानुपपत्तेः॥सावयवत्वेपिनित्य
त्वमितिचेन्नसावयवस्यावयवसंयोगपूर्वकत्वेसतिविभागोपपत्तेः॥वज्रादिष्वदर्शनान्नेतिचेन्नानुमेयत्वात्संयोगपूर्वत्वस्यविभाग

नपरिणामवादीशंकते॥विक्रियमाणमिति॥तत्प्रत्ययःतदेवेदमितिप्रत्ययः॥विक्रियांवदताद्रव्यस्यावयवान्यथात्वंवाच्यंतदेवतस्यानित्यत्वंअत्यं
ताभावस्यप्रामाणिकत्वेदुर्वचत्वादितिपरिहरति॥नद्रव्यस्येति॥आत्मनःसक्रियत्वंसावयवत्वंवास्तुतथापिनानित्यत्वमितिस्याद्वादीशंकते॥
सावयवत्वेपीति॥यत्सावयवंतदवयवसंयोगकृतंयथापटादितथासतिसंयोगस्यविभागावसानत्वादवयवविभागेद्रव्यनाशोवश्यंभावी
तिदूषयति॥नसावयवस्येति॥यत्सावयवंतदवयवसंयोगपूर्वकमितिनव्याप्तिःसावयवेष्वेववज्रादिष्ववयवसंयोगपूर्वकत्वेप्रमाणाभावादितिशं
कते॥वज्रादिष्विति॥विमतमवयवसंयोगपूर्वकंसावयवत्वात्पटवदित्यनुमानेनपरिहरति॥नानुमेयत्वादिति॥आत्मनोमनःसंयोगजन्यदुःखादिगुणवत्वेस

69

 

तस्मादिति॥आत्मनोनर्थध्वंसार्थशास्त्रारंभान्यथानुपपत्त्यासंसारित्वेत्यर्थापत्त्याशंकते॥परस्येति॥अविद्याविद्यमानमात्मस्थमनर्थभ्रमंनिराकर्तुंतदारंभः
संभवतीत्यन्यथोपपत्त्यासमाधत्ते॥नाविद्येति॥परस्यैवाविद्याकृतसंसारित्वभ्रांतिध्वंसार्थंशास्त्रमित्येतदृष्टांतेनस्पष्टयति॥आत्मनीति॥यत्तुपरस्या
दुःखित्वमन्यस्यदुःखिनोऽसत्त्वंतत्राह॥कल्पितेति॥नतावत्परस्मादन्योदुःखीनान्योतोस्तिद्रष्टेत्यादिश्रुतेः॥नपुनरनाद्यनिर्वाच्याज्ञानसंबंधात्तज्ज
न्यैर्बुद्ध्यादिभिरैक्याध्यासमापन्नःसं—क्षतितथाचकल्पिताकारद्वारादुःखिनःपरस्यात्मनोंगीकारात्नार्थापत्तेरुत्थानमित्यर्थः॥परस्यप्रवेशेप्राप्ते

तस्मान्नात्मनोदुःखाद्यनित्यगुणाश्रयोपपत्तिः॥परस्यादुःखित्वेऽन्यस्यचदुःखिनोऽभावेदुःखोपशमनायशास्त्रारंभानर्थक्यमिति
चेन्नाविद्याध्यारोपितदुःखित्वभ्रमापोहार्थत्वादात्मनिप्रकृतसंख्यापूरणभ्रमापोहवत्॥कल्पितदुःखात्माभ्युपगमाच्च॥जलसूर्या
दिप्रतिबिंबवदात्मप्रवेशश्चप्रतिबिंबवद्व्याकृतेकार्यउपलभ्यत्वं॥प्रागुत्पत्तेरनुपलब्धआत्मापश्चात्कार्येचसृष्टेव्याकृतेबुद्धेरंतरुप
लभ्यमानःसूर्यादिप्रतिबिंबवज्जलादौकार्यंसृष्ट्वाप्रविष्टइवलक्ष्यमाणोनिर्दिश्यते॥सएषइहप्रविष्टः॥तत्सृष्ट्वातदेवानुप्राविशत्स
एतमेवसीमानंविदार्यैतयाद्वाराप्रापद्यत॥सेयंदेवतैक्षतहंताहमिमास्तिस्रोदेवताअनेनजीवेनात्मनानुप्रविश्येत्येवमादिभिः

दोषपरंपरांपराकृत्यतत्प्रवेशस्वरूपंनिरूपयति॥जलेति॥यथाजलेसूर्यादेःप्रतिबिंबलक्षणःप्रवेशोदृश्यतेतथात्मनोपिसृष्टेकार्येकाल्पनिकः
प्रवेशइत्यर्थः॥अनवच्छिन्नाद्वयचिद्धातोनास्त्यंतरेणसंनिकर्षासंभवान्नप्रतिबिंबाख्यप्रवेशःसंभवतीत्याशंक्यवस्त्वंतरकल्पनयाकल्पित
संनिकर्षाद्यादायप्रतिबिंबपक्षंसाधयति॥आत्मेति॥तदेवप्रपंचयति॥प्रागुत्पत्तेरित्यादिना॥स्वाभिप्रेतंप्रवेशंप्रतिपाद्यपरेष्टंपराच
ष्टे॥नत्विति॥कुतश्चिद्दिशोदेशात्कालाद्वापक्रमणेनदिगंतरेदेशांतरेकालांतरेचप्राप्तिलक्षणइतियावत् ॥

यत्तु परस्मादन्यस्य प्रवेष्टृत्वमिति तत्राह ॥ न चेति ॥ अथेदं प्रवेशादि वस्तुतो विद्यमानमस्तु किमित्याविद्यं कल्प्यते तत्राह ॥ उपलब्धीति ॥ आत्मज्ञा
नार्थत्वेन प्रवेशादीनां कल्पितत्वात्तद्वाक्यानां न स्वार्थे पर्यवसानमित्यर्थः ॥ फलवत्संनिधावफलं तदङ्गमिति न्यायमाश्रित्योक्तमेव प्रपंचय
ति ॥ उपलब्धेरित्यादिना ॥ ततः शब्दो भक्तियोगपरामर्शी ॥ तदित्यात्मज्ञानमुच्यते ॥ तस्याग्र्यत्वं साधयति ॥ प्राप्यते हीति ॥ सृष्ट्यादिवाक्यानामे

न तु सर्वगतस्य निरवयवस्य दिग्देशकालांतरापक्रमणप्राप्तिलक्षणः प्रवेशः कदाचिदप्युपपद्यते न च परादात्मनोऽन्योऽस्ति द्रष्टा
नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ इत्यादिश्रुतेरित्यवोचाम ॥ उपलब्ध्यर्थत्वाच्च सृष्टिप्रवेशस्थित्यप्ययवाक्यानामुपलब्धेः
पुरुषार्थश्रवणादात्मानमेवावेत् तस्मात्तत्सर्वमभवत् । ब्रह्मविदाप्नोति परं ॥ स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति ॥ आचा

आनखाग्रेभ्यो यथा क्षुरः क्षुरधाने ऽवहितः स्या

र्यवान्पुरुषो वेद ॥ तस्य तावदेव चिरमित्यादिश्रुतिभ्यः ततो मां तत्त्वतो ज्ञात्वा विशते तदनंतरं ॥ तत्स्वग्र्यं सर्वविद्यानां प्राप्यते ह्यमृ
तं ततः इत्यादिस्मृतिभ्यश्च भेददर्शनापवादाच्च सृष्ट्यादिवाक्यानामात्मैकत्वदर्शनार्थपरत्वोपपत्तिस्तस्मात्कार्यस्थस्योपलभ्यत्वमेव
प्रवेश उपचर्यते ॥ आनखाग्रेभ्यो नखाग्रमर्याद मात्मनश्चेतन्यमुपलभ्यते तत्र कथमिव प्रविष्ट इत्याह ॥ कथ ज्ञानार्थत्वे हेत्वंतर

माह ॥ भेदेति ॥ कल्पितप्रवेशं प्रतिपादितमुपसंहरति ॥ तस्मादिति ॥ का पुनरस्य प्रवेशस्य मर्यादेत्याशंक्याह ॥ आनखाग्रेभ्य इति ॥ संभवति
मर्यादांतरे किमिति प्रवेशस्येयमेव मर्यादेत्याशंक्याह ॥ नखाग्रेति ॥ दृष्टांतद्वयमाकांक्षापूर्वकमुत्थापयति ॥ तत्रेति ॥ प्रवेशाधारो देहादिः सप्त

यथेति॥तद्व्याचष्टे॥लोकइति॥तत्रप्रवेशितत्वंक्षुरस्यकथंसिद्धमतआह॥अंतस्थउपलभ्यतेइति॥विश्वंभरस्याग्निविषयत्वंव्युत्पादयतिविश्व
स्येति॥तस्यतद्वृत्तित्वंमहाभूतत्वाज्जाठरत्वाद्वाद्रष्टव्यं॥काष्ठादावग्नेरवहितत्वेयुक्तिमाह॥तत्रेति॥दृष्टांतद्वयेविवक्षितमंशमनूद्यदार्ष्टांति
कमाह॥यथेत्यादिनाआत्मनोजाग्रत्स्वप्नयोर्देहेद्वयीवृत्तिःस्वापेतुसामान्यवृत्तिरेवेत्यवांतरविभागमाह तत्रहीति॥अवस्थाद्वयंसप्तम्यर्थः॥

यथालोकेक्षुरःक्षुरधानेक्षुरोधीयतेस्मिन्निति क्षुरधानंतस्मिन्नापितोपस्कराधानेक्षुरःअंतस्थोयथोपलभ्यतेऽवहितःप्रवेशितःस्या
द्यथावाविश्वंभरोऽग्निर्विश्वस्यभरणाद्विश्वंभरकुलायेनीडेऽग्निःकाष्ठादाववहितःस्यादित्यनुवर्त्तते॥तत्रहिसमथ्यमानउपल
भ्यते॥यथाचक्षुरःक्षुरधानेकदेशेऽवस्थितोयथाचाग्निःकाष्ठादौसर्वतोव्याप्यावस्थितएवंसामान्यतोविशेषतश्चदेहंसंव्याप्याव

द्विश्वंभरोवाविश्वंभरकुलायेतंनपश्यंत्यकृत्स्नोहिस

स्थितआत्मातत्रहिसप्राणनादिक्रियावान्दर्शनादिक्रियावांश्चोपलभ्यते॥तस्मात्तत्रैवप्रविष्टंतमात्मानंप्राणनादिक्रियाविशि
ष्टंनपश्यंतिनोपलभंते॥नन्वप्राप्तप्रतिषेधोयंतंनपश्यंतीतिदर्शनस्याप्रकृतत्वा नकेवलंविशेषवृत्तिरेवतदोपलभ्याकिंतुसामा

न्यवृत्तिश्चेतिचकारार्थः॥अवस्थांतरेसैवेत्यपितस्यैवार्थः॥वाक्यांतरमवतारयितुंभूमिकामाह॥तस्मादिति॥यस्मादुभयीवृत्तिरात्मनःशरी
रेदृश्यतेतस्मात्तत्रैवजलसूर्यवदविद्ययाप्रविष्टोयमितियोजना॥व्याकृताज्जगतःसकाशादात्मानंपृथक्कर्तुंतंनपश्यंतीतिवाक्यंतद्व्याच
ष्टे॥तमात्मानमिति॥विशिष्टंपश्यंतोपिकेवलमात्मानंनपश्यंतीतियावत्॥चाक्षुषत्वनिषेधस्येष्टत्वमाशंक्यव्याचष्टे॥नोपलभंतइति॥उक्त

प्रतिषेधस्य प्राप्तिं दर्शयन्परिहरति ॥ नेत्यादिना ॥ तन्नामरूपाभ्यां स एष इत्यादिवाक्यानां ज्ञानार्थत्वे मानमाह ॥ रूपमिति ॥ विशिष्टस्य दर्शनेऽपि पूर्णस्यादर्शने हेतूक्तिरनन्तरवाक्यमित्याह ॥ तन्नेति प्रतिज्ञावाक्यार्थे स्थिते सतीति यावत् ॥ तस्मात्तद्दर्शनेऽपि पूर्णस्यादर्शनमिति शेषः ॥ विशिष्टस्यापि पूर्णत्वमात्मत्वादन्यथा प्राणनादिकर्तृत्वायोगादिति शङ्कते ॥ कुत इति ॥ प्राणनादिक्रियाकर्ता प्राणादिभिः संहतत्वात्पूर्णो न भव

नैष दोषः स एष इत्यादिवाक्यानामात्मैकत्वप्रतिपत्त्यर्थपरत्वात्प्रकृतमेव तस्य दर्शनं ॥ रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणायेति मन्त्रवर्णात्तत्र प्राणनादिक्रियाविशिष्टस्यादर्शने हेतुमाह ॥ अकृत्स्नोऽसमस्तो हि यस्मात्स प्राणनादिक्रियाविशिष्टः ॥

प्राणन्नेव प्राणो नाम भवति वदन्वाक्पश्यꣳश्चक्षुः शृण्वञ्छ्रोत्रं

कुतः पुनरकृत्स्नत्वमित्युच्यते प्राणन्नेव प्राणनक्रियामेव कुर्वन्प्राणो नाम प्राणसमाख्यः प्राणाभिधानो भवति ॥ प्राणनक्रियाकर्तृत्वाद्धि प्राणः प्राणितीत्युच्यते ॥ नान्यां क्रियां कुर्वन्यथा लावकः पाचक इति तस्मात्क्रियान्तरविशिष्टस्यानुपसंहारादकृत्स्नो हि सः तथा वदन्क्रियां कुर्वन्वक्तीति वाक्पश्यंश्चक्षुश्चष्टे द्रष्टा इति चक्षुः शृण्वञ्छृणोतीति श्रोत्रं ॥

तीत्युत्तरवाक्यैरुत्तरमाह ॥ उच्यत इति ॥ आत्मनि प्राणशब्दप्रवृत्तिमुपपादयति ॥ प्राणनक्रियाकर्तृत्वादिति ॥ तत्कर्तृत्वादात्मा प्राण उच्यते प्राणितीति व्युत्पत्तेरिति योजना ॥ सदृष्टान्तमेवकारार्थमाह ॥ नान्यामिति ॥ एवकारार्थमनूद्य हेत्वर्थमुपसंहरति ॥ तस्मादिति ॥ स्वापावस्थायां समस्तकरणोपसंहारेऽपि प्राणस्य व्यापारदर्शनात्प्राधान्यावगमात्प्राणन्नित्यादिवाक्यमादौ व्याख्याय क्रियाशक्तित्वेन प्राणसादृश्यार्थाद्वाचो वदन्नित्येतत्पूर्वकमुत्तरवाक्यानि व्याचष्टे ॥ तथेत्यादिना ॥

7

प्राणनवदनाभ्यामनुक्तकर्मेंद्रियव्यापारमुपलक्ष्यवाक्यद्वयतात्पर्यमाह॥ प्राणन्नेवेति॥ प्राणवागाद्युपाधिद्वारेणात्मनीतिशेषः॥ दृष्टिश्रुतिभ्यामनुक्तज्ञानेंद्रियव्यापारोपलक्षणंकृत्वानंतरवाक्ययोस्तात्पर्यमाह॥ पश्यन्निति॥ चक्षुराद्युपाधिद्वारात्मनीतिपूर्ववत्॥ उक्तबुद्धींद्रियव्यापाराभ्यामनुक्तं तद्व्यापारमनुपलक्ष्यात्मनः स्रष्टृत्वादिपरिच्छेदोनसिध्यतिसंबंधंविनोपलक्षणायोगादित्याशंक्याह नामरूपेत्यादिना॥ प्रकाश्यप्रकाशकातिरिक्तज्ञेयाभावात्तदुपलंभेचचक्षुःश्रोत्रयोरिवत्वगादेरपिकरणत्वादेकार्थत्वरूपसंबंधादुपलक्षणसंभवादात्मनः स्रष्टृत्वादिसिद्धिरित्यर्थः॥ तथा

प्राणन्नेवप्राणोवदन्वागित्याभ्यांक्रियाशक्त्युद्भवःप्रदर्शितोभवतिपश्यंश्चक्षुःशृण्वन्श्रोत्रमित्याभ्यांविज्ञानशक्त्युद्भवःप्रदर्श्यतेनाम रूपविषयत्वाद्विज्ञानशक्तेःश्रोत्रचक्षुषीविज्ञानस्यसाधनेविज्ञानंतुनामरूपसाधनंनहिनामरूपव्यतिरिक्तंविज्ञेयमस्तितयोश्चो

मन्वानोमन

पलंभेकरणंचक्षुःश्रोत्रेक्रियाचनामरूपसाध्याप्राणसमवायिनीतस्याःप्राणाश्रयायाअभिव्यक्तौवाक्करणंतथापाणिपादपायूपस्थाख्यानिसर्वेषामुपलक्षणार्थावागेतदेवहिसर्वंव्याकृतंत्रयंवा युक्तकर्मेंद्रियव्यापारेणानुक्ततद्व्यापारोपलक्षणादात्मनोनगंतृत्वादिपरिच्छेदः संगच्छते॥ विनासंबंधमुपलक्षणासिद्धेरित्याशंक्याह॥ क्रियाचेत्यादिना सर्वाक्रियानामरूपव्यंग्याप्राणाश्रयाचतत्रप्राणाश्रयनामविषयोच्चारणक्रियाव्यंजकत्वंवाचोहस्तादीनांतदाश्रयादानादिव्यंजकत्वात्तस्मादेकाश्रयक्रियाव्यंजकत्वयोगादुपलक्षणसंभवादात्मनोगंतृत्वादिसिद्धिरित्यर्थः। शक्तिद्वयोद्भवोत्त्क्यासमस्तसंसारस्यप्रतीच्यध्यासोत्रविवक्षितइत्याह॥ एतदेवेति॥ उद्भूतंशक्तिद्वयमेतच्छब्दार्थः॥ उक्तेर्थेवाक्यशेषमनुकूलयति॥

आत्मामन्वानःसन्मनइत्युच्यतेमनुतइतिव्युत्पत्तेरितिवाक्यांतरंव्याचष्टे॥मन्वानइति॥करणेप्रसिद्धस्यमनःशब्दस्यकथमात्मनिवृत्तिरित्याशंक्यव्युत्प
त्तिभेदमाह॥ज्ञानशक्तीत्यादिना॥आत्मादिशब्देभ्योविशेषमाह॥तानीति॥कृत्स्नात्मवस्तुवद्योतकानिनभवंतीत्येतदेवस्फुटयति॥एवंहीति॥प्राणादी
नांकर्मनामत्वेसतीतियावत्॥अवद्योत्यमानोपिनकृत्स्नोदृष्टःस्यादितिशेषः॥अकृत्स्नदर्शिनोप्यात्मदर्शित्वमाशंक्याह॥सयइति॥आत्मोपासि

——इदंनामरूपंकर्मेतिहिवक्ष्यतिमन्वानोमनोमनुतइतिज्ञानशक्तिविकाशानांसाधारणंकरणंमनःमनुतेनेनेतिपुरुषस्तुक
र्त्तासन्मन्वानोमनइत्युच्यते॥तान्येतानिप्राणादीन्यस्यात्मनःकर्मनामानिकर्मजानिनामानिकर्मनामान्येवनतुवस्तुमात्रविषया
ण्यतोनकृत्स्नात्मवस्तुवद्योतकानिएवंह्यसावात्माप्राणनादिक्रिययातत्तक्रियाजनितप्राणनादिनामरूपाभ्यांव्याक्रियमाणो

स्तान्यस्यैतानिकर्मनामान्येवसयोतएकैकमुपास्तेनसवेदाकृत्स्नोह्येषोतएकैकेनभवत्या

वद्योत्यमानोपिसयोतोस्मात्प्राणनादिक्रियासमुदायादेकैकंप्राणंचक्षुरितिवाविशिष्टमनुपसंहृतेतरविशिष्टक्रियात्मकंमनसायमात्मे
त्युपास्तेचिंतयतिनसवेदनसजानातिब्रह्मकस्मादकृत्स्नोऽसमस्तोहियस्मादेषआत्माअस्मात्प्राणनादिसमुदायादतःप्रविभक्तएकैके
नविशेषणेनविशिष्टइतरधर्मांतरानुपसंहारादुद्भवतियावदयमेवंवेदपश्यामिशृणोमिस्पृशामीतिवास्वभावप्रवृत्तिविशिष्टंवेदतावदंजसा
कृत्स्नमात्मानंनवेद॥कथंपुनःपश्यन्नवेदेत्याह॥ तुरात्मदर्शनासत्वमयुक्तमितिशंकित्वापरिहरति॥कस्मादित्यादिना॥तस्माद्विशिष्टात्मदर्शीनब्र
ह्मात्मत्वदर्शीतिशेषः‌उपास्तिर्ज्ञानमुपास्तइतिजानातिनस्वभावादुपासनमित्युक्तत्वात्तथाचजानन्नजानातीतिव्याहतिरित्याशंक्याह॥यावदिति॥यएवंवे

इत्येतद्विवृणोति॥पश्यन्नित्यादिना॥

72

आकांक्षापूर्वकं विद्यासूत्रमवतारयति॥कथमिति॥तत्रव्याख्येयंपदमादत्ते॥आत्मेतीति॥तद्व्याचष्टे॥प्राणादीति॥तस्मिन्दृष्टे पूर्वोक्तदोषराहित्यं
दर्शयति॥सतथेति॥तत्तद्विशेषणव्याप्तिद्वारेणेतियावत्॥कथंतत्तद्विशेषोपसंहारीतेनतेनात्मनातिष्ठन्कृत्स्नःस्यात्तत्राह॥वस्तुमात्रेति॥स्वतोस्य
प्राणनादिसंबंधेसंभवतिकिमित्युपाधिसंबंधेनेत्याशंक्याह॥तथाचेति॥आत्मनिसर्वोपसंहारवतिदृष्टे पूर्वोक्तदोषाभावात्तंपश्यन्नेवात्मदर्शीत्युप
संहरतितस्मादिति॥यथोक्तात्मोपासनेपूर्वोक्तदोषाभावेप्रागुक्तमेवहेतुंस्मारयति॥एवमिति॥तस्यार्थंस्फोरयति॥स्वेनेति॥वाङ्मनसातीतेनाक्रा

आत्मेत्येवआत्माइतिप्राणादीनिविशेषणानियान्युक्तानितानियस्यसआप्नुवंस्तान्यात्मेत्युच्यते॥सतथाकृत्स्नविशेषोपसंहारीसकृत्स्नो
भवतिवस्तुमात्ररूपेणहिप्राणाद्युपाधिविशेषक्रियाजनितानिविशेषणानिव्याप्नोतितथाचवक्ष्यति॥ध्यायतीवलेलायतीवेति॥तस्मा
दात्मेत्येवोपासीत॥एवंकृत्स्नोह्यसौस्वेनवस्तुरूपेणगृह्यमाणोभवति॥कस्मात्कृत्स्नइत्याशंक्याह॥अत्रास्मिन्नात्मनिहियस्मान्निरु
पाधिकेजलसूर्यप्रतिबिंबभेदाइवादित्येप्राणाद्युपाधिकृताविशेषाःप्राणादिकर्मजनामाभिधेयाःयथोक्ताह्येतेएकमभिन्नतांभवंतिप्र
तिपद्यंतेअतआत्मेत्येवोपासीतेति॥आत्मेत्येवोपासीतेतिनापूर्वविधिःपक्षेप्राप्तत्वात्कस्तर्ह्यत्रविधिःयत्साक्षादपरोक्षाद्ब्रह्मकतमआत्मेतियोयंविज्ञानम
यइत्येवमाद्यात्मप्रतिपादनपराभिःश्रुतिभिरात्मविषयंविज्ञानमुत्पादितं यत्कारणेनप्रत्यग्भूतेनेतियावत्॥आकांक्षापूर्वकमुत्तरवाक्यंसतात्प

र्यमवतार्यव्याकरोति॥कस्मादित्यादिना॥तस्माद्यथोक्तमात्मानमेवोपासीतेतिशेषः॥अस्यैवद्योतकोहिद्वितीयोहिशब्दः॥विद्यासूत्रविधिस्पर्शंविनावि
वक्षितेर्थेव्याख्याय पूर्वविधिरयमितिपक्षंप्रत्याह॥आत्मेत्येवेति॥अत्यंताप्राप्तार्थोह्यपूर्वविधिर्यथास्वर्गकामोग्निहोत्रंजुहुयादिति॥नायंतथाप
क्षेप्राप्तत्वादात्मोपासनस्यतस्यतत्त्वाप्रिश्नपुरुषविशेषापेक्षयाविचारावसानेस्पष्टीभविष्यतीत्यर्थः॥इदानीमात्मज्ञानस्याविधेयत्वख्यापनार्थंवस्तुस्व

उत्पाद्यतामुक्तश्रुतिभिरात्मविज्ञानं किं तावत्तेत्यत आह॥ तत्रेति॥ कारकादीत्यादिपदं तदवांतरभेदविषयं॥ नन्वविद्यायामपनीतायामपि रागद्वेषादिस
द्भावात्तद्धेतुधीप्रवृत्तिः स्यान्नहि विद्वदविदुषोर्व्यवहारे कश्चिद्विशेषः पश्वादिभिश्चाविशेषादिति न्यायादत आह॥ तस्यामिति॥ बाधितानुवृत्तिमात्रान्न
वैधीप्रवृत्तिर्बाधिताभिमानमंतरेण तदयोगादिति भावः विदुषः शुभप्रवृत्तिस्त्वावर्त्तयति॥ पारिशेष्यादिति॥ श्रौतज्ञानात्पूर्वमपि सर्वासां चित्तवृत्तीनां
जन्मनैवात्मचैतन्यव्यंजकत्वात्प्राप्तमात्मज्ञानं श्रौतेनतु ज्ञानेनास्थूलमात्मेतिस्फुरणमात्मज्ञानमेवेति नित्यप्राप्तिमभिप्रेत्याह तस्मादिति॥ अस्मिन्पक्ष इति
नित्यप्राप्तत्वपक्षोक्तिः अपूर्वविधिवादी शंकते तिष्ठतु तावदिति॥ सर्वेषां स्वभावतो विषयप्रवणानींद्रियाणि नात्मज्ञानवार्त्तामपि मृष्यंते तदत्यंताप्राप्त

तत्रात्मस्वरूपविज्ञानेनैव तद्विषयानात्माभिमानबुद्धिः कारकादिक्रियाफलाध्यारोपणात्मिकाऽविद्या निवर्तिता तस्यां निवर्त्तितायां
कामादिदोषानुपपत्तेरनात्मचिंतानुपपत्तिः पारिशेष्यादात्मचिंतैव तस्मात्तदुपासनमस्मिन्पक्षे न विधातव्यं प्राप्तत्वात्तिष्ठतु तावत्सा
क्षिकात्मोपासनप्राप्तिर्नित्यावेत्यपूर्वविधिः स्यात्॥ ज्ञानोपासनयोरेकत्वे सत्यप्राप्तत्वान्न सवेदेति विज्ञानं प्रस्तुत्यात्मेत्येवोपासीतेत्य
भिधानाद्वेदोपासनशब्दयोरेकार्थतावगम्यतेऽनेन ह्येतत्सर्वं वेदात्मानमेवावेदित्यादिश्रुतिभ्यश्च विज्ञानमुपासनं तस्य चाप्राप्तत्वाद्विध्य
हेत्वं त्वादात्मज्ञाने भवत्यपूर्वविधिरिति भावः॥ विशिष्टस्याधिकारिणः शब्दज्ञानं शब्दादेव सिद्धमिति कथमप्राप्तिरित्याशंक्याह॥ ज्ञानेति॥ न खल्व
त्र शाब्दज्ञानं विवक्षितं किंतूपासनं नाम मानसं कर्म तदेव ज्ञानावृत्तिरूपत्वाज्ज्ञानमित्येकत्वे सत्यप्राप्तत्वाद्विधेयमित्यर्थः॥ तयोरेकत्वं विवृणोति॥ नेत्या
दिना॥ अनेन ह्येत्यादौ वेदशब्दस्यार्थांतरविषयत्ववन्न सवेदेत्यत्रापि किं न स्यादित्याशंक्याह॥ अनेनेति॥ उक्तश्रुतिभ्यो यद्विज्ञानं श्रुतं तदुपासनमे
वेति योजना स योऽत एकैकमुपास्त इत्युपक्रमादात्मेत्येवोपासीतेत्युपसंहाराच्च न सवेदेत्यत्र तावद्वेदशब्दस्योपासनार्थत्वमेष्टव्यमन्यथोपक्रमोपसंहार

73

= यजेतेत्यत्रांशद्वयं यजिधातुः प्रत्ययश्च तत्र प्रत्ययेऽप्यंशद्वयं आख्यातत्वं लिङ्त्वं च आख्यातत्वं दशलकारेषु विद्यते लिङ्त्वं केवलं लिङ्येव तत्राख्यातत्वलिङ्त्वाभ्यां भावनैवोच्यते भा-
वना नाम भवितुर्भवनानुकूलो भावकव्यापारविशेषः सा च द्विविधा शाब्दी भावनार्थी भावना चेति तत्र पुरुषप्रवृत्त्यनुकूलो व्यापारविशेषः शाब्दी भावना सा च लिङ्त्वांशेनोच्यते लिङ्श्रवणेऽयं
मां प्रवर्तयति मत्प्रवृत्त्यनुकूलव्यापारवानयमिति नियमेन प्रतीयमानत्वात् यच्च यस्मात्प्रतीयते तत्तस्य वाच्यं यथा गोशब्दस्य गोत्वं स च प्रवृत्त्यनुकूलो व्यापारविशेषो लोके पुरुषनिष्ठोऽभिप्रायविशेषः

विरोधात्तथा चार्धवैशसासंभवादुपासनमेव सर्वत्र वेदनं तच्च सर्वथैवाप्राप्तमिति तस्मिन्नपूर्वे विधिः स्यादिति भावः॥ इतश्च तस्मिन्नेष्टव्यो विधिरित्याह॥ न चे-
ति॥ अतः प्रवर्तको विधिरूपेय इति शेषः स चात्यंताप्राप्तविषयत्वान्नियमादिरूपेण न भवतीत्याह॥ तस्मादिति॥ आत्मोपास्तिर्विधेयेत्यत्र हेत्वंतरमाह॥
कर्मविधीति॥ कर्मात्मज्ञानविध्योः शब्दानुसारेणाविशेषमभिदधाति॥ यथेत्यादिना संप्रत्यर्थतोऽप्यविशेषमाह॥ मानसेति॥ तदेव दृष्टांतेन स्पष्टयति॥ य-

न च स्वरूपान्वाख्याने पुरुषप्रवृत्तिरुपपद्यते तस्माद् अपूर्वविधिरेवायं कर्मविधिसामान्याच्च॥ यथा यजेत जुहुयादित्यादयः कर्मविधयो न
तैरस्यात्मेत्येवोपासीतात्मा वा अरे द्रष्टव्य इत्यादिरात्मोपासनविधेर्विशेषोऽवगम्यते॥ मानसक्रियात्वाच्च विज्ञानस्य॥ यथा यस्यै देवतायै हविर्
गृहीतं स्यात्तां मनसा ध्यायेद्वषट्करिष्यन्नित्याद्या मानसी क्रिया विधीयते तथात्मेत्येवोपासीत मंतव्यो निदिध्यासितव्य इत्याद्या क्रियैव वि-
धीयते ज्ञानात्मिका तथा वोचाम वेदोपासनशब्दयोरेकार्थत्वमिति भावनांशत्रयोपपत्तेश्च यथा हि यजेतेत्यस्यां भावनायां किं केन कथमि-
तिभाव्याद्याकांक्षापनयकारणमंशत्रयमवगम्यते

थेति॥ यदि क्रिया विधीयते कथं ज्ञानात्मिकेति विशेष्यते तत्राह॥ तथेति॥ इतश्चात्मोपासने
विधिरस्तीत्याह॥ भावनेति॥ वेदांतेषु भावनापेक्षितांशत्रयोपपत्तिं विशदयितुं दृष्टांतमाह॥ यथेति॥ भावनायां विधीयमानत्वे सतीति शेषः प्रेरणाधर्मकश-
ब्दव्यापारः स्वज्ञानकरणकः स्तुत्यादिज्ञानेतिकर्तव्यताकः पुरुषप्रयत्नभाव्यनिष्ठः शाब्दी भावनोच्यते स्वर्गं यागेन प्रयाजादिभिरुपकृत्य साधयेदिति पुरुषप्र-

वेदे पुरुषाभावात् लिङादिशब्दनिष्ठैव शाब्दी भावनेत्युपदिशति सा च शाब्दी भावना अंशत्रयमपेक्षते साध्यं साधनमितिकर्तव्यतां च साध्यं स्वर्गः साधनं लिङादिज्ञानस्य कारणत्वेनान्वयत्वं इतिकर्तव्य-
ताप्राशस्त्यज्ञानमितिकर्तव्यतात्वेनान्वितं यथा वर्म वा एतद्यज्ञस्य क्रियते यत्प्रयाजानुयाजा इति प्रयाजादिस्तुतिज्ञानं तथा हि भाव्याकांक्षायां किं भावयेत् स्वर्गं भावयेत् करणाकांक्षायां केन भावयेत् यागेन भाव-
येत् कथंभावाकांक्षायां यत्सन्निधौ पठितं अश्रूयमाणफलं च क्रियाजातं तदेवोपकार्याकांक्षायां इतिकर्तव्यतात्वेनान्वयमनुभवितुं योग्यं तथा च प्रयाजानुयाजासहकृतेन दर्शपूर्णमासेन स्वर्गं भाव्य = १

लिङ्त्वे ४

दृष्टांतस्थमर्थंदार्ष्टांतिकेयोजयति॥तथेत्यादिना॥त्यागोनिषिद्धकाम्यवर्जनं॥उपरमोनित्यनैमित्तिकत्यागस्तितिक्षादीत्यादिपदंसमाधानादिसंग्रहार्थं
इत्थंशमत्रयमितिसंबंधः॥शास्त्रंशांतोदांतइत्यादि॥उक्तप्रकारंशमत्रयं॥अन्यदपिसुलभमितिवक्तुमादिपदं॥विधिशून्यानांवेदांतानांकार्यपरत्वेपित
द्वीनानांतेषांवस्तुपरत्वेत्याशंक्याह॥यथाचेति॥विध्युद्देशत्वेनतच्छेषत्वेनेतियावत्अस्थूलादिवाक्यानामारोपितद्वैतनिषेधेनाद्वयंवस्तुसमर्पयतां

तथोपासीतेत्यस्यामपिभावनायांविधीयमानायांकिमुपासीतकेनोपासीतकथमुपासीतेत्यस्यामाकांक्षायामात्मानमुपासीतमनसा
त्यागब्रह्मचर्यशमदमोपरमतितिक्षादीतिकर्तव्यतासंयुक्तइत्यादिशास्त्रेणैवसमर्थ्यतेशमत्रयं॥यथाचक्रत्वर्थस्यदर्शपूर्णमासादिप्र
करणस्यदर्शपूर्णमासादिविध्युद्देशत्वेनोपयोगःएवमौपनिषदात्मोपासनप्रकरणस्यात्मोपासनविध्युद्देशत्वेनैवोपयोगः॥नेतिनि
त्यस्थूलमेकमेवाद्वितीयमशनायाद्यतीतंइत्येवमादिवाक्यानामुपास्यात्मस्वरूपविशेषसमर्पणेनोपयोगःफलंचमोक्षोऽविद्यानि
वृत्तिर्वा॥अपरेवर्णयंत्युपासनेनात्मविषयंविशिष्टंविज्ञानांतरंभावयेत्तेनात्माज्ञायतेऽविद्यानिवर्तकंचतदेव॥नात्मविषयंवेदवाक्य
जनितंविज्ञानमित्येतस्मिन्नर्थेवचनान्यपिविज्ञायप्रज्ञांकुर्वीतद्रष्टव्यःश्रोतव्योमंतव्योनिदिध्यासितव्यःसोन्वेष्टव्यःसविजिज्ञासित
व्यइत्यादीनि॥नार्थांतराभावात्॥नचात्मेत्येवोपासीतेत्यपूर्वविधिः कथमुपास्तिविधिशेषत्वमित्याशंक्याह॥नेत्यादिना॥ब्रह्मवेदब्रह्मैवभ
वतितरतिशोकमात्मविदित्यादीनांफलार्थकत्वेनोपास्तिविध्युपयोगमभिप्रेत्याह॥फलंचेति॥मोक्षोब्रह्मप्राप्तिःआत्मोपासनंविधेयमितिपक्षमु
क्त्वापक्षांतरमाह॥अपरइति॥तस्यानुपयोगमाशंक्याह॥तेनेति॥शाब्दस्यज्ञानस्यासंसृष्टापरोक्षात्मविषयत्वाभावमितिशब्देनहेतूकरोति॥ज्ञानां
तरंवेदांतेषुविधेयमित्यत्रमानमाह॥एतस्मिन्निति॥पक्षद्वयेप्राप्तेप्रथमपक्षंप्रत्याह॥नार्थांतराभावादिति॥तत्रनञर्थमेवस्पष्टयन्नाचष्टे॥नचेति॥

शाब्दज्ञानवतोविषयाभावान्नविधिःसंभवत्यविद्यातत्कार्यनिवृत्तेश्चस्वयंफलावस्थत्वाच्चेत्यर्थः हेतुभागंप्रश्नपूर्वकंविवृणोति॥कस्मादित्यादिना॥
आत्मोपदेशेनानात्मनिषेधद्वारावाक्योत्थज्ञानातिरेकेणेतियावत्॥कर्त्तव्यांतराभावेपिवाक्यजन्यविज्ञानमेवविधेयंस्यादित्याशंक्याह॥तत्र
हीति॥दृष्टांतेपिवाक्योत्थज्ञानातिरेकेणपुरुषप्रवृत्तिरसिद्धेत्याशंक्याह॥नहीति॥तदनुष्ठानंतर्हिवाक्यार्थज्ञानाधीनमितिव्यर्थोविधिस्तत्रा
ह॥तच्चेति॥अधिकारोविधिपुरुषसंबंधस्तल्लक्षतज्ज्ञानापेक्षमनुष्ठानमित्यर्थवान्विधिरित्यर्थः॥तर्हिप्रकृतेपिवाक्योत्थज्ञानव्यतिरेकेणपुरुष

कस्मादात्मस्वरूपकथनानात्मप्रतिषेधवाक्यजनितविज्ञानव्यतिरेकेणार्थांतरस्यकर्त्तव्यस्यमानसस्यवाह्यस्यवाऽभावात्तत्र
हिविधेःसाफल्यंयत्रविधिवाक्यश्रवणमात्रजनितविज्ञानव्यतिरेकेणपुरुषप्रवृत्तिर्गम्यतेयथादर्शपूर्णमासाभ्यांस्वर्गकामो
यजेतेत्येवमादौनहिदर्शपूर्णमासविधिवाक्यजनितविज्ञानमेवदर्शपूर्णमासानुष्ठानंतच्चाधिकाराद्यपेक्षानुभाविनतुनेतिनेत्या
त्मप्रतिपादकवाक्यजनितविज्ञानव्यतिरेकेणदर्शपूर्णमासादिवत्पुरुषव्यापारःसंभवतिसर्वव्यापारोपशमहेतुत्वात्तद्वाक्यजनितवि
ज्ञानस्यनह्युदासीनविज्ञानंप्रवृत्तिजनकमब्रह्मानात्मविज्ञाननिवर्त्तकत्वाच्चैकमेवाद्वितीयंतत्त्वमसीत्येवमादिवाक्यानांनचतन्निवृत्तौ
प्रवृत्तिरुपपद्यतेविरोधाद्वाक्यजनितविज्ञानमात्रान्नाब्रह्मानात्मविज्ञाननिवृत्तिरितिचेन्नतत्त्वमसिनेतिनेत्यात्मैवेदमेकमेवाद्वितीयंब्रह्मै
वेदममृतंनान्यदतोस्तिद्रष्टृतदेवब्रह्मत्वंविद्धीत्यादिवाक्यानां व्यापारसंभवाद्विधिसाफल्यमित्याशंक्याह॥नत्विति॥अथविमतंप्रवर्त्तकंवैदिकज्ञा
नत्वाद्विधिवाक्योत्थज्ञानवदित्याशंक्यप्रवर्त्तकविषयत्वमुपाधिरित्याह॥नहीति॥मिथ्याज्ञाननिवर्त्तकत्वमुपाध्यंतरमाह॥अब्रह्मेति॥वाक्योत्थज्ञानस्यत
न्निवर्त्तकत्वेपिप्रवर्त्तकत्वंकिंनस्यादित्याशंक्याह॥नचेति॥द्वितीयोपाधेःसाधनव्याप्तिंशंकते॥वाक्येति॥ब्रह्मात्मैक्यधीपरवाक्योत्थविज्ञानस्याज्ञानतत्कार्यध्वं

तद्व्यादित्वाद्वस्तुपरत्वादितियावत्॥ उक्तानांवाक्यानांविध्यपेक्षितार्थसमर्पकत्वेनतच्छेषत्वंशंकितमनुभाषतेद्रष्टव्येति॥ सिद्धांतोपक्रमेणसमाहितमेतदि त्याह॥ नेति॥ तदेवस्पष्टयति॥ आत्मेति॥ परोक्तमुद्भावयति॥ आत्मस्वरूपेति॥ कुत्रतर्हि विधिरात्मज्ञानेवावाक्यश्रवणेवातदर्थज्ञानस्मृतिसंतानेवाचित्तवृ त्तिनिरोधेवानाद्यइत्याह॥ नात्मवादीति॥ द्वितीयंशंकतेतच्छ्रवणेपीति॥ अनिष्टार्थवादिवाक्यस्यासत्यादिलक्षणस्यविधिंविनाश्रवणवत्तत्वमादेरपितस्माद्

तद्व्यादित्वात्॥ द्रष्टव्यविधेर्विषयसमर्पकाण्येतानीतिचेन्नार्थांतराभावादित्युक्तोत्तरत्वादात्मवस्तुस्वरूपसमर्पकैरेववाक्यैस्तत्त्वमसीत्यादिभिः श्रवणकालएवतद्दर्शनस्यकृतत्वाद्द्रष्टव्यविधेर्नानुष्ठानांतरंकर्त्तव्यमित्युक्तोत्तरमेतदात्मस्वरूपान्वाख्यानमात्रेणात्मविज्ञानेविधिमंतरेण नप्रवर्त्ततइतिचेत्॥ नात्मवादिवाक्यश्रवणेनात्मविज्ञानस्यजनितत्वात्किंभोःकृतस्यकरणं॥ तच्छ्रवणेपिनप्रवर्त्ततइतिचेन्नानवस्थाप्र संगाद्यथात्मवादिवाक्यार्थश्रवणेविधिमंतरेणनप्रवर्त्ततेतथाविधिवाक्यार्थश्रवणेपिविधिमंतरेणनप्रवर्त्तेयिष्यतइतिविध्यंतरापे क्षातथातदर्थश्रवणेपीत्यनवस्थाप्रसज्येतवाक्यजनितात्मज्ञानस्मृतिसंततेःश्रवणविज्ञानमात्राद्र्थांतरत्वमितिचेन्नार्थप्राप्तत्वाद्य दैवात्मप्रतिपादकवाक्यश्रवणादात्मविषयंविज्ञानमुत्पद्यतेतदैवतदुत्पद्यमानंतद्विषयंमिथ्याज्ञानंनिवर्त्तयदेवोत्पद्यतेआत्मविषय मिथ्याज्ञाननिवृत्तौचतत्प्रभवाःस्मृतयोनभवंतिस्वाभाविक्योऽनात्मवस्तुभेदविषयाः॥ तेश्रवणमविरुद्धमित्यभिसंधायदोषांतरमाह

नेत्यादिना॥ तत्त्वमादिश्रवणप्रयोजकोविधिरात्मनोपिप्रयुंक्तेश्रवणमितिचेन्नैवंसत्यध्ययनविधिरन्योवाद्येतदपेक्ष्याश्रुतस्यतत्त्वमस्यादेःस्वार्थबो धित्वंकर्मवाक्यवदितिस्वार्थनिष्ठत्वाविशेषोद्वितीयेतस्याप्रमाणत्वात्तदीयस्वपरनिर्वाहकत्वंदूरोत्सारितमित्यभिप्रेत्यानवस्थांविवृणोति॥ यथेत्यादिना ॥ तृतीयमाशंकते॥ वाक्यजनितेति॥ ततःसाविधेयेतिशेषः॥ तस्याःविधेयत्वंदूषयति॥ नेति॥ अर्थप्राप्तिंविवृणोति॥ यदैवेति॥ अनात्मस्मृतिहेतुज्ञाननिवृत्तौ

इदानीमनात्मस्मृतेरनर्थत्वस्यान्वयव्यतिरेकसिद्धत्वाच्चात्मस्मृतिः स्वभावप्राप्तेत्याह॥अनर्थत्वेति॥अनात्मनोनर्थत्वनिश्चयाच्चतदीयस्मृत्यनुपपत्तावितर
स्मृतिरर्थप्राप्तेत्याह॥आत्मावगताविति॥आत्मनश्चपरमेष्टत्वावगमादर्थप्राप्तातदीयस्मृतिरित्याह॥आत्मवस्तुनश्चेति॥अर्थप्राप्त्याविधेयत्वाभावमुप
संहरति॥तस्मादिति॥अनात्मस्मृतिहेत्वज्ञानाभावादित्युक्तब्दार्थः अर्थतश्चिदेकरसात्मस्वभावबलादितियावत्॥दृष्टफलत्वाच्चात्मस्मृतिर्नविधेयेत्या
ह॥शोकेति॥मिथ्याज्ञानमेवसानिवर्त्तयतिनशोकादीत्याशंक्याह॥विपरीतेति॥आत्मस्मृतेःशोकादिनिवर्त्तकत्वेमानमाह॥तथाचेति॥चतुर्थमुत्थापय

अनर्थत्वावगतेश्चआत्मावगतौहिसत्यामन्यदृष्टस्त्वनर्थत्वेनावगम्यतेअनित्यदुःखाशुध्यादिबहुदोषवत्वादात्मवस्तुनश्चतद्विलक्षणत्वा
त्तस्मादनात्मविज्ञानस्मृतीनामात्मावगतेरभावप्राप्तिः पारिशेष्यादात्मैकविज्ञानस्मृतिसंततेरर्थतएवभावान्नविधेयत्वंशोकमोहभया
यासादिदुःखदोषनिवर्त्तकत्वाच्चतत्स्मृतेर्विपरीतज्ञानप्रभवोहिशोकमोहादिदोषस्तथाचतत्रकोमोहोविद्वान्नविभेतिकुतश्चनाभयंवै
जनकप्राप्तोसिभिद्यतेहृदयग्रंथिरित्यादिश्रुतिभ्योनिरोधस्तर्ह्यर्थांतरमितिचेदथापिस्याच्चित्तवृत्तिनिरोधस्यवेदवाक्यजनितात्मविज्ञा
नादर्थांतरत्वात्॥तंत्रांतरेषुचकर्त्तव्यतयावगतत्वाद्विधेयत्वमितिचेन्नमोक्षसाधनत्वेनानवगमान्नहिवेदांतेषुब्रह्मात्मविज्ञानादन्यत्प
रमपुरुषार्थसाधनत्वेनावगम्यते॥

ति॥निरोधस्तर्हीति॥यदिवाक्योत्थज्ञानादेरविधेयत्वंतर्हिचित्तवृत्तिनिरोधोमुक्तिसाधनत्वेनविधीयतांतत
स्योक्तज्ञानादेरर्थांतरत्वादित्यर्थः॥चोद्यमेवविवृणोति॥अथापीति॥अर्थांतरत्वात्तस्यविधेयतेतिशेषः॥तस्यमुक्तिहेतुत्वेनविधेयत्वेयोगशास्त्रंसंवाद
यति॥तंत्रांतरेष्विति॥अथयोगानुशासनमितिनिश्श्रेयसहेतुःसमाधिःसूत्रितस्तस्यचलक्षणमुक्तंयोगश्चित्तवृत्तिनिरोधइति तन्निरोधावस्थायांचात्म
नःस्वरूपप्रतिष्ठितत्वंकैवल्यमाख्यातंतदाद्रष्टुःस्वरूपेवस्थानमित्येवंयोगशास्त्रेमुक्तिहेतुत्वेनेष्टोनिरोधविधिरित्यर्थः॥योगशास्त्रादपिबलवतीश्रु

चित्तवृत्तिनिरोधस्यमुक्तिहेतुत्वेपिनविधेयत्वंविधिंविनातत्सिद्धेरित्याह॥अनन्येति॥नतावद्यथाकथंचिन्निरोधोविधेयःसर्वस्यापितत्संभवाद्विधि
वैयर्थ्यान्नापिसर्वात्मनातन्निरोधोविधेयोज्ञानादेवतत्सिद्धेर्विध्यानर्थक्यादित्यर्थः॥नान्यःपंथाविद्यतेज्ञानादेवतुकैवल्यमित्यादिशास्त्रमनुसरन्नुपे
क्षवादंत्यजति॥अभ्युपगम्येति॥निरोधस्यमुक्तिहेतुत्वमिदमापरामृष्टं॥योगशास्त्रमपिश्रुतिस्मृतिविरोधेनप्रमाणं॥एतेनयोगःप्रत्युक्तइतिन्याया

आत्मानमेवावेत्तस्मात्तत्सर्वमभवद्ब्रह्मविदाप्नोतिपरंसयोहवैतत्परमंब्रह्मवेदब्रह्मैवभवतिआचार्यवान्पुरुषोवेदतस्यतावदेवचिर
मभयंहिवैब्रह्मभवतियएवंवेदेत्येवमादिश्रुतिशतेभ्यः॥अनन्यसाधनत्वाच्चनिरोधस्यनह्यात्मविज्ञानतत्स्मृतिसंतानव्यतिरेकेणचित्त
वृत्तिनिरोधस्यसाधनमस्त्य ऽभ्युपगम्येदमुक्तंनतुब्रह्मविज्ञानव्यतिरेकेणान्यन्मोक्षसाधनमवगम्यतेआकांक्षाभावात्तुभावनाभावोयदु
क्तंयजेतेत्येवमादौकिंकेनकथमितिभावनाकांक्षायांफलसाधनेतिकर्तव्यताभिराकांक्षापनयनंयथातद्वदिहाप्यात्मविज्ञानविधावप्युप
पद्यतइतितदसदेकमेवाद्वितीयंतत्त्वमसिनेतिनेत्यनंतरमवाह्यमयमात्माब्रह्मेत्यादिवाक्यार्थविज्ञानसमकालमेवसर्वाकांक्षाविनिवृ
त्तेर्नचवाक्यार्थविज्ञानेविधिप्रयुक्तःप्रवर्त्तते॥विध्यंतरप्रयुक्तौचानवस्थादोषमवोचाम॥नचैकमेवाद्वितीयंब्रह्मेत्यादिवाक्येषुविधिर
वगम्यते॥

दितिभावः॥वेदांतेषुविधेयाभावोक्त्याविधिर्निरस्तःसंप्रत्यंशत्रयवतीभावनातेषस्तीत्युक्तंदूषयति॥आकांक्षेति॥तदेवस्फुटयितुंउ
क्तमनुवदति॥यदुक्तमिति॥आगमावष्टंभेननिराचष्टे॥तदसदिति॥विधिमंतरेणवाक्यार्थज्ञानेप्रवृत्त्ययोगाद्वैधमेवज्ञानंसर्वाकांक्षानिवर्त्तकमित्याशं
क्याह॥नचेति॥यथाकर्मकांडेस्वाध्यायविधेरर्थावबोधपर्यंतत्वेनज्योतिष्टोमादिविध्यर्थज्ञानेविध्यंतरंनापेक्षतेतथाज्ञानकांडेपिस्यादित्यर्थः॥तत्रापिवे
दःकृत्स्नोधिगंतव्यइतिविध्यंतरप्रयुक्तमेववाक्यार्थज्ञानमित्याशंकाह॥विध्यंतरेति॥श्रुतहान्यश्रुतकल्पनाप्रसंगाच्चनविधिशेषत्वंवेदांतानामित्याह॥

वे॰
टी॰

76

वृ.र.
७४

वेदांताःस्वार्थेनमानंसिद्धार्थवाक्यत्वात्सोरोदीदित्यादिवदित्यनुमानात्तेषांविधिशेषत्वंप्रामाण्यार्थमेष्टव्यमितिशंकते॥वस्तुस्वरूपेति॥तदेवानुमानंप्रपंच
यति॥अथापीति॥विधेरश्रुतत्वेपीतियावत्॥फलवन्निश्चितज्ञानाजनकत्वमुपाधिरितिमन्वानःसमाधत्तेनविशेषादिति॥नत्वर्थंस्पष्टयति॥नवाक्य
स्येति॥विशेषंव्याचष्टे॥किंतर्हीति॥तस्यप्रामाण्यप्रयोजकत्वमन्वयव्यतिरेकाभ्यांदर्शयति॥तद्यत्रेति॥सामान्यन्यायंप्रकृतेयोजयन्पृच्छति॥किंचेति॥

आत्मस्वरूपान्वाख्यानेनैवावसितत्वाद्वस्तुस्वरूपान्वाख्यानमात्रत्वादप्रामाण्यमितिचेद्यथापिस्याद्यथासोरोदीद्यदरोदीत्तद्रुद्रस्यरुद्र
त्वमित्येवमादौवस्तुस्वरूपान्वाख्यानमात्रत्वादप्रामाण्यमेवमात्मार्थवाक्यानामपीतिचेन्नविशेषान्नवाक्यस्यवस्त्वन्वाख्यानंक्रियान्वा
ख्यानंवाप्रामाण्याप्रामाण्यकारणं॥किंतर्हिनिश्चितफलवद्विज्ञानोत्पादकत्वंतद्यत्रास्तितत्प्रमाणंवाक्यंयत्रनास्तितदप्रमाणंकिं
चभोःपृच्छामस्त्वां॥आत्मस्वरूपान्वाख्यानपरेषुवाक्येषुफलवन्निश्चितंविज्ञानमुत्पद्यतेनवोत्पद्यतेचेत्कथमप्रामाण्यमिति किं
चनपश्यस्यविद्याशोकमोहभयादिसंसारबीजदोषनिवृत्तिविज्ञानफलंनशृणोषिवाकिं॥तत्रकोमोहःकःशोकएकत्वमनुपश्यतः
मंत्रविदेवास्मिनात्मवित्सोहंभगवःशोचामितंमाभगवाञ्छोकस्यपारंतारयत्वितिएवमाद्युपनिषद्वाक्यशतान्येवंविद्यतेकिंसोरोदी
त्इत्यादिषुनिश्चितंफलवत्त्वविज्ञानं॥नचेद्विद्यतेऽस्त्वप्रामाण्यं॥तदप्रामाण्येफलवन्निश्चितविज्ञानोत्पादकस्यकिमित्यप्रामाण्यंस्या

किंतेषुतादृग्ज्ञानमुत्पद्यतेनवेतिप्रश्नार्थः॥द्वितीयेऽनुभवविरोधःस्यादितिमत्वापक्षांतरमनूद्यप्रत्याह॥उत्पद्यतेचेदिति प्रामाण्येहेतुसद्भावान्नाप्रामाण्य
मित्यर्थः॥निश्चितज्ञानजनकत्वेपिफलवत्त्वविशेषणमसिद्धमित्याशंक्याह॥किंचेति॥विद्वदनुभवफलश्रुतिसिद्धंविशेषणमितिभावः॥दृष्टांतंविघटयि
तुंप्रश्नांतरंप्रस्तौति॥एवमिति वेदांतेष्वेवेतियावत्॥किंवानेतिशेषः॥आद्येसाध्यवैकल्यंमत्वाद्वितीयंदूषयति॥नचेदिति॥तर्हितद्दृष्टांतेनतत्वमस्यादेरपिस्या

आ.

रामः
७४

विमतं स्वार्थे मानं यथोक्तज्ञानजनकत्वाद्दर्शादिवाक्यवदिति भावः विपक्षे दोषमाह॥ तदप्रामाण्ये चेति॥ प्रवर्त्तकज्ञानजनकत्वमुपाधिरिति शंकते॥ नन्विति॥ साधनव्याप्तिं धुनीते॥ आत्मेति॥ प्रवर्त्तकधीजनकत्वं धर्मिणि नास्तीत्यंगीकरोति॥ सत्यमिति॥ तर्हि यथोक्तोपाधिसद्भावादनुमानानुत्थानमित्याशंक्याह॥ नैष दोष इति॥ नहि प्रवर्त्तकधीजनकत्वं प्रामाण्ये कारणं निषेधवाक्येषु प्रामाण्यप्रसंगान्न च निवर्त्तकधीजनकत्वमपि तथाविधावप्रामाण्यप्रसंगान्नचोभयं प्रत्येकमुभयकारणत्वाभावेनाप्रामाण्यादिति भावः॥ वेदांतेषु प्रवर्तकधीजनकत्वाभावेन केवलमदोषः किंतु गुण इत्याह॥ अलंकारश्चेति॥ आत्मानं चेत्यादिश्रुतेरेतद्बुध्वेत्यादिस्मृतेश्चात्मज्ञानं कृतकृत्यतानिदानं न च ज्ञानस्य प्रवर्त्तकत्वे तद्युक्तं प्रवृत्तीनां क्लेशात्मकत्वात्

तदप्रामाण्ये च दर्शपूर्णमासादिवाक्येषु को विस्रंभः॥ ननु दर्शपूर्णमासादिवाक्यानां पुरुषप्रवृत्तिविज्ञानोत्पादकत्वात्प्रामाण्यमात्मविज्ञानवाक्येषु तन्नास्तीति सत्यमेवं नैष दोषः॥ प्रामाण्यकारणोपपत्तेः प्रामाण्यकारणं च यथोक्तमेव नान्यदलंकारश्चायं यत्सर्वप्रवृत्तिबीजनिरोधफलवद्विज्ञानोत्पादकत्वमात्मप्रतिपादकवाक्यानां नाप्रामाण्यकारणं॥ यत्तूक्तं विज्ञाय प्रज्ञां कुर्वीतेत्यादिवचनानां वाक्योत्थविज्ञानव्यतिरेकेणोपासनार्थत्वमिति॥ सत्यमेतत्किंतु नापूर्वविध्यर्थतापक्षे प्राप्तस्य नियमार्थतैव

पकत्वादतो यथोक्तज्ञानजनकत्वं वाक्यानां भूषणमेवेत्यर्थः॥ शब्दोत्थं ज्ञानं न विधेयमिति॥ प्रतिक्षिप्य पूर्वोक्तपक्षांतरमनुवदति॥ यत्तूक्तमिति॥ उपासनार्थत्वमित्यात्मोपासने नतत्साक्षात्कारं भावयेदित्येवमर्थत्वमित्यर्थः॥ अभ्युपगमवादेन परिहरति॥ सत्यमिति यथोक्तेषु वाक्येषु आत्मोपासनं तत्साक्षात्कारमुद्दिश्य विधीयते चेत्स्वकृते पि वाक्ये तत्संभवान्नापूर्वविधिरिति प्रक्रमो भज्येतेत्याशंक्याह॥ किंत्विति॥ कथं तर्हि विध्यंगीकारस्य वाचोयुक्तिरित्याशंक्याह॥ पक्षेति॥ यथा पक्षे प्राप्तस्यावघातस्य व्रीहीनवहंतीति नियमरूपो विधिरंगीकृतस्तथात्मोपासनस्यापि पक्षे प्राप्तस्य तदेव कर्त्तव्यं नानात्मोपासनमिति यो नियमस्तदर्थताप्रक

तेंत्रात्मस्वरूपविज्ञानेनैवेत्यादिपारिशेष्यादात्मचिंतैवेयं तं भाष्यं पूर्वमभिहितं सिद्धांतिना ६

पासिकीं प्राप्तिमुक्तामाक्षिपति॥कथमिति॥कापुनरत्रानुपपत्तिरित्याशंक्याह॥यावतेति॥आत्मनिवाक्योत्थे विज्ञाने सत्यनात्मस्मृतिहेतूनां मिथ्याज्ञा नादीनामपनीतत्वाद्धेतुभावे फलाभावन्यायेन तासामसंभवादात्मस्मृतिसंततिरेव पुनःसदास्यात्प्रकारांतरायोगादिति सिद्धांतिनोक्तत्वान्नात्मोपास नस्य पक्षे प्राप्तिरित्यर्थः॥तस्य नित्यप्राप्तिमुक्तामंगीकरोति॥बाढमिति॥तर्हि नियमविधिवाचोयुक्तिरयुक्तेत्याशंक्याह॥यद्यपीति॥आत्मनि नित्या परोक्षसंविदेकतानेस्मरणं विस्मरणं वायद्यपि नोपपद्यते तथापि तयोस्तस्मिन्ननुभवसिद्धत्वान्नियमविधेःसावकाशत्वमित्याशयेनाह॥शरीरेति ॥अथारब्धफलस्यापि कर्मणः सम्यक्ज्ञानात् निवृत्तेर्न विदुषो वागादीनां प्रवृत्तिरत आह॥लब्धेति यथामुक्तस्येषुपाषाणादेरप्रतिबंधायावद्वेगप्रवृ

कथं पुनरुपासनस्य पक्षप्राप्तिर्यावतापारिशेष्यादात्मविज्ञानस्मृतिसंततिर्नित्यैवेत्यभिहितं॥बाढं॥यद्यप्येवं शरीरारंभकस्य कर्मणो निय तफलत्वात्सम्यग्ज्ञानप्राप्ताव्यप्यवश्यंभाविनी प्रवृत्तिर्वाङ्मनःकायानां॥लब्धप्रवृत्तेःकर्मणो बलीयस्त्वान्मुक्तेष्वादिप्रवृत्तिवत्॥तेन पक्षे प्राप्तं ज्ञानप्रवृत्तेर्दौर्बल्यं तस्मात्त्यागवैराग्यादिसाधनबलावलंबेनात्मविज्ञानस्मृतिसंततिर्नियंतव्याभवति न त्वपूर्वाकर्त्तव्या प्राप्तत्वादि त्यवोचाम॥तस्मात्प्राप्तविज्ञानस्मृतिसंताननियमविध्यर्थानि विज्ञाय प्रज्ञां कुर्वीतेत्यादिवाक्यान्यन्यार्थासंभवात्॥ त्तिरवश्यंभाविनी तथा प्र

वृत्तफलस्य कर्मणो ज्ञानेनोपजीव्यतया ततो बलवत्वात्तद्वशाद्विदुषोपि यावद्भोगं वागादिप्रवृत्तिर्ध्रौव्यमित्यर्थः॥आरब्धकर्मप्राबल्ये फलितमाह॥तेने ति॥आरब्धस्य कर्मणो यथोक्तेन न्यायेन प्राबल्ये तद्वशात्क्षुधादिदोषो यदोद्भवति तदात्मनि विस्मरणादिसंभवात्तज्ज्ञानप्राप्तेः पाक्षिकत्वादवश्यंभाविक र्मापेक्षया तद्दौर्बल्यं स्यादित्यर्थः॥तथापि नियमविध्यंगीकारस्य किमायातं तदाह॥तस्मादिति॥ज्ञानस्य पक्षे प्राप्तत्वं तच्छब्दार्थः॥आदिपदं ब्रह्मचर्यशमद मादिसंग्रहार्थं॥विज्ञायेत्यादिवाक्यानां नियमविध्यर्थत्वमुपसंहरति॥तस्मादिति॥आदिपदेन प्रकृतमपि वाक्यं संगृह्यते॥तच्छब्दार्थमेव स्फोटयति॥अन्या

इतिपरोयंस्यात्तदितिपरः इतिपरस्माद्यावात्मशब्दश्चेति=५ ग्रंथेनः५

शाब्दज्ञानादेवपुमर्थसिद्धेस्तस्यतदावृत्तेस्तृतीयज्ञानस्यवाविधेयत्वाभावाद्वेदांताः शुद्धेसिद्धेर्थेमानमित्युक्तं इदानीमितिशब्दप्रयुक्तंचोद्यमुत्थापयति ॥अनात्मेति॥आत्मशब्दादूर्ध्वमितिशब्दप्रयोगादात्मशब्दार्थस्योपास्यत्वेनाविवक्षितत्वादात्मगुणकस्यानेकस्यानात्मनोऽव्याकृतशब्दितस्यप्रधानस्यो पासनमस्मिन्वाक्ये विवक्षितमित्यर्थः॥उक्तमेवार्थंदृष्टांतेनस्पष्टयति यथेत्यादिना॥अनात्मोपासनमेवात्रविधित्सितमित्यत्रहेत्वंतरमाह॥आत्मे

अनात्मोपासनमिदमितिशब्दप्रयोगाद्यथाप्रियमित्येतदुपासीतेत्यादौनप्रियादिगुणएवोपास्यः किंतर्हिप्रियादिगुणवत्प्राणाद्येवो पास्यंतथेहापीतिपरात्मशब्दप्रयोगादात्मगुणवदनात्मवस्तूपास्यमितिगम्यतेआत्मोपास्यत्ववाक्यवैलक्षण्याच्चपरेणचवक्ष्यत्या त्मानमेवलोकमुपासीतेतितत्रचवाक्येआत्मेवोपास्यत्वेनाभिप्रेतोद्वितीयाश्रवणादात्मानमेवेति॥इहतुनद्वितीयाश्रूयतेइतिपर

त्यात्मेत्येवोपासीतात्रह्येतेसर्वएकंभवंति

श्चात्मशब्दआत्मेत्येवोपासीतेतिअतोनात्मोपास्यआत्मगुणश्चान्यइतित्ववगम्यते॥न॥वाक्यशेषेआत्मनउपास्यत्वेनावगमादस्यैव वाक्यस्यशेषेआत्मैवोपास्यत्वेनावगम्यते॥तदेतत्पदनीयमस्यसर्वस्ययदयमात्मांतरतरंयदयमात्मात्मानमेवावेदितिप्रविष्टस्यदर्श नप्रतिषेधादनुपास्यत्वमितिचेद्यस्यैवात्मनःप्रवेशउक्तस्तस्यैवदर्शनंवार्यतेतंनपश्यंतीति ति॥तदेवप्रपंचयति॥परेणेति॥ततोवैलक्षण्यं दर्शयति॥इहत्विति॥वैलक्षण्यांतरमाह॥इतिपरश्चेति॥वैलक्षण्यफलमाह॥अतइति॥नात्रानात्मोपासनंविवक्षितमितिपरिहरति॥नेत्यादिना॥हे त्वर्थंस्फुटयति॥अस्यैवेति॥आत्मनश्चेदुपास्यत्वंतदाप्रक्रमविरोधःस्यादितिशंकते॥प्रविष्टस्येति॥आत्मनोदर्शनप्रतिषेधंप्रकटयति॥यस्येति॥तस्यै

बृ.र.
७६

=आत्मनः शब्दधियोरविषयत्वद्योतक इति शब्दः यस्य प्राणादिविशेषणान्युक्तानि तानि सर्वाण्याप्नुवन्नात्मेत्युच्यते तमात्मेत्येवोपासीत न केनचिद्विशेषणविशिष्टत्वेन शब्दप्रत्ययागम्यमात्मानमत्र संदधीतेति यावत्= ८

प्रकृतेति॥ तच्छब्दस्य प्रकृतपरामर्शित्वात्प्रविष्टस्य च प्रकृतत्वात्तस्य तेनोपादानादिति हेत्वर्थः॥ पूर्वपक्षं निगमयति॥ तस्मादिति॥ प्राणनादिविशिष्टस्य परिच्छिन्नत्वात्तस्य दृष्टत्वेपि पूर्णस्य न दृष्टतेति निषेधश्रुतिपर्यवसानान्नोपक्रमविरोधोस्तीति परिहरति॥ नेत्यादिना॥ तदेव विशदयति॥ दर्शनेति॥ कथमयमभिप्रायभेदः श्रुतेरवगम्यते तत्राह॥ प्राणनादीति॥ प्राणन्नेवेत्यादिना क्रियाविशेषविशिष्टत्वेनात्मनो विशेषणात्तस्य दृष्टत्वेपि नासौ परिपूर्णो दृष्टः स्यादिति श्रुतेराशयो लक्ष्यते॥ केवलस्य तु तस्योपास्यत्वमभिसंहितमकृत्स्नत्वदोषाभावादित्यर्थः॥ उक्तमर्थं व्यतिरेकमुखेन साधयति॥ आत्म

प्रकृतोपादानात्तस्मादात्मनोनुपास्यत्वमिति चेन्नाकृत्स्नत्वदोषाद्दर्शनप्रतिषेधोऽकृत्स्नत्वदोषाभिप्रायेण नात्मोपास्यत्वप्रतिषेधाभिप्रायेण प्राणनादिक्रियाविशिष्टत्वेन विशेषणात्॥ आत्मनश्चेदुपास्यत्वमनभिप्रेतं प्राणनाद्येकैकक्रियाविशिष्टस्यात्मनोऽकृत्स्नत्ववचनमनर्थकं स्यादकृत्स्नो ह्येषोत एकैकेन भवतीत्यनेकैकविशिष्टस्त्वात्माकृत्स्नत्वादुपास्य एवेति सिद्धं॥ यस्त्वात्मशब्दस्येति परः प्रयोगः आत्मशब्दप्रत्यययोरात्मतत्त्वस्य परमार्थतोऽविषयत्वज्ञापनार्थमन्यथात्मानमुपासीतेत्येवमवक्ष्यत्तथा चार्थादात्मनि आत्मशब्दप्रत्यययावनुज्ञातौ स्यातां तच्चानिष्टं नेति नेति विज्ञातारमरे केन विजानीयादविज्ञातं विज्ञातृ यतो वाचो निवर्तन्ते अप्राप्य मनसा सहेत्यादिश्रुतिभ्यः

नश्चेदिति॥ तस्यानुपास्यत्वार्थं तद्वचनमर्थवदित्याशंक्य तदुपास्यत्वनिषेधस्यात्मोपास्यत्वे पर्यवसानमभिप्रेत्याह॥ अनेकैकेति॥ उपक्रमोपसंहाराभ्यां उपास्यत्वमात्मनो दर्शितमिदानीमितिशब्दप्रयोगादनात्मोपासनमिदमित्युक्तं प्रत्याह॥ यस्त्विति प्रयोगशब्दादुपरिष्टात्तशब्दो द्रष्टव्यः॥ इतिशब्दस्य यथोक्तार्थत्वाभावे दोषमाह॥ अन्यथेति॥ नचात्मनः स्वातन्त्र्येणानुपास्यत्वार्थमितिशब्दोऽर्थवान्पूर्वापरवाक्यविरोधादिति द्रष्टव्यं॥ इतिशब्दमन्तरेण वाक्यप्रयोगे दोषमा

भा०

रामः
७६

तस्यशब्दप्रत्ययविषयत्वमिष्टमेवेतिचेत्तत्राह॥तन्नेति॥आत्मोपास्यत्ववाक्यवैलक्षण्यादनात्मोपासनमेतदित्युक्तंदूषयति॥यत्त्विति॥आत्मैवज्ञातव्योना नात्मेतिप्रतिज्ञायान्नहीत्यादिहेतुरुक्तःसंप्रतितदेतत्पदनीयमित्यादिवाक्यापोद्यंचोद्यमुत्थापयति॥अनिर्ज्ञातत्वेति॥उत्तरमाह॥अत्रेति॥निर्धारणमे वस्फोरयति॥अस्मिन्निति॥नान्यदित्युक्तत्वादनात्मनोविज्ञातव्यत्वाभावश्चेदूनेनहीत्यादिशेषविरोधस्यादितिशंकते॥किंनेति॥तस्याज्ञेयत्वं

यत्त्वात्मानमेवलोकमुपासीतेतितदनात्मोपासनप्रसंगनिवृत्तिपरत्वान्नवाक्यांतरं॥अनिर्ज्ञातत्वसामान्यादात्माज्ञातव्योऽनात्माच तत्रकस्मादात्मोपासनएवयत्नआस्थीयतेआत्मेत्येवोपासीतेतिनेतरविज्ञानेइत्यत्रोच्यतेतदेतदेवप्रकृतंपदनीयंगमनीयंना न्यदस्यसर्वस्येतिनिर्धारणार्थाषष्ठी॥अस्मिन्सर्वस्मिन्नित्यर्थःयदयमात्मायदेतदात्मतत्वं॥किंनविज्ञातव्यमेवान्यत्॥नकिंतर्हिज्ञा

तदेतत्पदनीयमस्यसर्वस्ययदयमात्मानेनह्येतत्सर्वंवेदयथाहवैपदेनानुविंदे

तव्यत्वेपिनपृथग्ज्ञानांतरमपेक्षतेआत्मज्ञानात्कस्मादनेनात्मनाज्ञातेनहियस्मादेतत्सर्वमनात्मजातमन्यद्यत्तत्सर्वंसमस्तंवेदजाना तिनन्वन्यज्ञानेनान्यन्नज्ञायतेइत्यस्यपरिहारंदुंदुभ्यादिग्रंथेनवक्ष्यामः निषेधति॥नेति॥तस्यापिज्ञातव्यत्वेनान्यदितिवचनमनवकाशमि त्याह॥किंतर्हीतितस्यसावकाशत्वंदर्शयति॥ज्ञातव्यत्वेपीति॥आत्मनःसकाशादनात्मनोर्थांतरत्वात्तस्यात्मज्ञानाज्ज्ञातव्यत्वायोगाज्ज्ञातव्यत्वेज्ञानांतर मपेक्षितव्यमेवेतिशंकते॥कस्मादिति॥उत्तरवाक्येनोत्तरमाह॥अनेनेति॥आत्मन्यनात्मजातस्यकल्पितत्वात्तस्यतदतिरिक्तस्वरूपाभावात्तज्ज्ञानेनैव ज्ञातत्वसिद्धेर्नास्तिज्ञानांतरापेक्षेत्यर्थः॥लोकदृष्टिमाश्रित्यानेनेत्यादिवाक्यार्थमाक्षिपति॥नन्विति॥आत्मकार्यत्वादनात्मनस्तस्मिन्नंतर्भावात्तज्ज्ञानेन

७१

आत्मतत्त्वस्य शास्त्राचार्यादयो ये उपायास्ते सत्याविद्याकल्पितत्वात्तेषां=१
सत्योपायाभावादात्मतत्त्वस्य पदनीयत्वासिद्धिरिति शंकते॥ कथमिति॥ असत्यस्यापि श्रुत्याचार्यादेरर्थक्रियाकारित्वसंभवादात्मतत्त्वस्य पदनीयत्वोप
पत्तिरित्याह॥ उच्यत इति॥ विविदिषितं लब्धुमिष्टं॥ अन्वेषणोपायत्वं दर्शयितुं पदेनेति पुनरुक्तिः॥ अनेनेत्यत्र वेदेति ज्ञानेनोपक्रम्यानुविंदेदिति लाभ
मुक्त्वा कीर्त्तिमित्यादिश्रुतौ पुनर्ज्ञानार्थेन विदिनोपसंहारादनुविंदेदिति श्रुतेरुपक्रमोपसंहारविरोधः स्यादिति शंकते॥ नन्विति॥ शंकितं विरोधं निरा
करोति॥ नेति॥ कथं तयोरैकार्थ्यं ग्रामादौ तदेकत्वाप्रसिद्धेरित्याशंक्याह॥ आत्मन इति॥ ग्रामादावप्राप्ते प्राप्तिरेव लाभो न ज्ञानमात्रं तथात्रापि किं न स्यादि

कथं पुनरेतत्पदनीयमित्युच्यते यथा ह वै लोके पदेन गवादिखुरांकितो देशः पदमित्युच्यते तेन पदेन नष्टं विवित्सितं पशुं पदेनान्विष्यमाणो
नुविंदेत् लभेत एवमात्मनि लब्धे सर्वमुपलभत इत्यर्थः॥ नन्वात्मनि ज्ञाते सर्वमन्यज्ज्ञायत इति ज्ञाने प्रकृते कथं लाभोऽप्रकृत उच्यत इति
॥ न ज्ञानलाभयोरेकार्थत्वस्य विवक्षितत्वादात्मनो ह्यलाभोऽज्ञानमेव तस्माज्ज्ञानमेवात्मनो लाभो नानात्मलाभवदप्राप्तप्राप्तिलक्षण आ
त्मलाभो लब्धृलब्धव्ययोर्भेदाभावाद्यत्र ह्यात्मनोऽनात्मा लब्धव्यो भवति। तत्रात्मा लब्धा लब्धव्योऽनात्मा स चाप्राप्त उत्पाद्यादिक्रियाव्यवहि
तः कारकविशेषोपादानेन क्रियाविशेषमुत्पाद्य लब्धव्यः स त्वप्राप्तप्राप्तिलक्षणोऽनित्यो मिथ्याज्ञानजनितकामक्रियाप्रभवत्वात्स्वप्रेपु
त्रादिलाभवदयं तु तद्विपरीत आत्मा

त्याशंक्याह॥ नेत्यादिना॥ ज्ञानलाभशब्दयोरर्थभेदस्तर्हि कुत्रेत्याशंक्याह॥ यत्र हीति॥ अनात्मनि लब्धृलब्ध
व्ययोर्ज्ञानज्ञेययोश्च भेदे क्रियाभेदात्फलभेदसिद्धिरित्यर्थः॥ नन्वात्मलाभोऽपि ज्ञानाद्भिद्यते लाभत्वादनात्मलाभवदित्याशंक्य ज्ञानहेतुमात्रानधीनत्वमुपा
धिरित्याह॥ स चेति॥ अप्राप्तत्वं व्यक्तीकरोति॥ उत्पाद्येति तद्व्यवधानमेव साधयति॥ कारकेति॥ किंच॥ अनात्मलाभोऽविद्याकल्पितः कादाचित्कत्वात्संमत
वदित्याह॥ स त्विति॥ किंच॥ असाववविद्याकल्पितोऽप्रामाणिकत्वात्संप्रतिपन्नवदित्याह॥ मिथ्येति॥ प्रकृते विशेषं दर्शयति॥ अयं त्विति॥ वैपरीत्यमेव स्फोर

आत्मत्वादिति॥ आत्मनस्तर्हि नित्यलब्धत्वान्न तत्रालब्धत्वबुद्धिः स्यादित्याशंक्याह॥ नित्येति॥ आत्मन्यलाभो ऽज्ञानं लाभस्तु ज्ञानमित्येतद्दृष्टांतेन स्पष्टयति॥ यथेत्यादिना॥ शुक्तिकायाः स्वरूपेण गृह्यमाणाया अपीति योजना॥ आत्मलाभो ऽविद्यानिवृत्तिरेवेत्यत्रोक्तं वक्ष्यमाणं च गमकं दर्शयति॥ तस्मादिति॥ अविरोधमुपसंहरति॥ तस्मादित्यादिना॥ तयोरेकार्थत्वेऽपि कथमनुविंदेदिति मध्ये प्रयुज्यते तत्राह॥ विंदत इति॥ आदिमध्यावसानानामविरोधम्

आत्मत्वादेव नो त्याज्यादि क्रियाव्यवहितो तो नित्यलब्धस्वरूपत्वेऽपि सत्यविद्यामात्रं व्यवधानं॥ यथा गृह्यमाणाया अपि शुक्तिकायाः विपर्ययेण रजताभासाया अग्रहणं विपरीतज्ञानव्यवधानमात्रं तथा ग्रहणं ज्ञानमात्रमेव विपरीतज्ञानव्यवधानापोहार्थत्वाज्ज्ञानस्य॥ एवमिहाप्यात्मनो ऽलाभो ऽविद्यामात्रव्यवधानं तस्माद्विद्यया तदपोहनमात्रमेव लाभो नान्यः कदाचिदप्युपपद्यते तस्मादात्मलाभे ज्ञा

देवं कीर्तिं श्लोकं विंदते य एवं वेद॥ ७॥

नादर्थांतरस्य साधनस्यानर्थक्यं वक्ष्यामः॥ तस्मान्निराशंकमेव ज्ञानलाभयोरेकार्थत्वं विवक्षन्नाह ज्ञानं प्रकृत्यानुविंदेदिति विंदते लाभार्थत्वाद्गुणविज्ञानफलमिदमित्युच्यते यथायमात्मा नामरूपानुप्रवेशेन ख्यातिं गतः आत्मेत्यादिनामरूपाभ्यां प्राणादिसंहतिं श्लोकं प्राप्तवानित्येवं यो वेद स कीर्तिं ख्यातिं श्लोकं संघातमिष्टैः सह विंदते लभते॥ कृतश्चात्मतत्त्वस्यैवज्ञेयमनादृत्यान्यदित्याह ॥

त्वा कीर्तिमित्यादिवाक्यमवतार्य व्याकरोति॥ गुणेत्यादिना॥ इतिशब्दादुपरिष्टाद्यथेत्यस्य संबंधो ज्ञानस्तुतिश्चात्र विवक्षिता॥ ज्ञानिनामीदृक्फलस्या नभिलषितत्वादिति द्रष्टव्यं॥ आत्मनः पदनीयत्वे तस्यैवाज्ञातत्वसंभवो हेतुरुक्तो ऽधुना तत्रैव हेत्वंतरत्वेनोत्तरवाक्यमवतारयति॥ कुत इति॥ अन्यद्ज्ञात्वे

विरक्तस्य लोकबाह्यत्वात् १



विरक्तस्य पुत्रे प्रीत्यभावात्कथमात्मनस्तस्मात्प्रियतरत्वमित्याशंक्याह ॥ पुत्रो हीति ॥ प्रियतरमात्मतत्त्वमिति शेषः ॥ लोकदृष्टिमेवावष्टभ्याह ॥ तथेति ॥ वित्तपदेन मानुषवित्तवद्दैवं वित्तमपि गृह्यते ॥ विशेषाणामानंत्यात्प्रत्येकं प्रदर्शनमशक्यमित्याशयेनाह तथान्यस्मादिति ॥ पुत्रादौ प्रीतिव्यभिचारेऽपि प्राणादौ तदव्यभिचारादात्मनो न प्रियतमत्वमिति शंकते ॥ तत्कस्मादिति ॥ पदांतरमादाय व्याकुर्वन्परिहरति ॥ उच्यत इत्यादिना ॥ अंतरतरत्वे प्रियतमत्वसाधने हेतु

तदेतदात्मतत्त्वं प्रेयः प्रियतरं पुत्रात्पुत्रो हि लोके प्रियः प्रसिद्धः ॥ तस्मात्प्रियतरमिति निरतिशयप्रियत्वं दर्शयति ॥ तथा वित्ताद्धिरण्यरत्नादेस्तथान्यस्माद्यद्यल्लोके प्रियत्वेन प्रसिद्धं तस्मात्सर्वस्मादित्यर्थः ॥ तत्कस्मादात्मतत्त्वमेव प्रियतरं न प्राणादीत्युच्यते अंतरतरं बाह्यात्पुत्रवित्तादेः प्राणपिंडसमुदायो ह्यंतरोऽभ्यंतरः संनिकृष्ट आत्मनः तस्मादप्यंतरादंतरतरं यदयमात्मा यदेतदात्मतत्त्वं ॥ यो हि लोके निरतिशयप्रियः

तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादंतरतरं यदयमात्मा

स सर्वप्रयत्नेन लब्धव्यो भवति तथायमात्मा लौकिकप्रियेभ्यः प्रियतमस्तस्मात्तल्लाभे महान्यत्न आस्थेय इत्यर्थः ॥ कर्त्तव्यताप्राप्तमप्यन्यप्रियलाभे यत्नमुज्झित्वा कस्मात्पुनरात्मानात्मप्रिययोरन्यतरप्रियहानेनेतरप्रियोपादानप्राप्तौ आत्मप्रियोपादानेनैवेतरहानं क्रियते न विपर्यय इत्युच्यते

रात्मत्वमित्यभिप्रेत्य विशेषं व्यपदिशति ॥ यदयमिति ॥ आत्मनो निरतिशयप्रेमास्पदत्वेऽपि कुतस्तस्यैवोपादेयत्वमित्याशंक्य वाक्यार्थमाह ॥ यो हीत्यादिना ॥ पुत्रादिलाभे दारादीनां कर्त्तव्यत्वेन प्राप्तप्रयत्नविरोधादात्मलाभे प्रयत्नः सुकरो न भवतीत्याशंक्याह ॥ कर्त्तव्यतेति ॥ आत्मनो निरतिशयप्रेमास्पदत्वे युक्तिं पृच्छति ॥ कस्मादिति ॥ आत्मप्रियस्योपादानमनुसंधानमितरस्यानात्मप्रियस्य हानमननुसंधानं ॥

रां॰ गा॰ २ प्राप्तः आत्मलाभे यः प्रयत्नः तेन सह पुत्रादिलाभे प्रयत्नस्य विरोधात् २

विपर्ययेऽनात्मनि पुत्रादावभिनिवेशेनात्मप्रियस्याननुसंधानमिति विभागः॥ युक्तिलेशं दर्शयितुमनंतरवाक्यमवतारयति॥ उच्यत इति॥ यः कश्चिदा त्मप्रियवादी स तस्मादन्यं प्रियं ब्रुवाणं प्रतिब्रूयादिति संबंधः॥ वक्तव्यं प्रश्नपूर्वकं प्रकटयति॥ किमित्यादिना॥ आत्मप्रियवादिन्येवं वदत्यपि पुत्रादिनाश स्तद्वाक्यार्थो नियतो न सिध्यतीत्याशंक्य परिहरति॥ स कस्मादित्यादिना॥ ह शब्दोऽवधारणार्थः समर्थपदादुपरि संबध्यते॥ तस्मादेवं वक्तीति शेषः॥ उक्तं स

स यः कश्चिदन्यमनात्मविशेषं पुत्रादिकं प्रियतरमात्मनः सकाशाद्ब्रुवाणं ब्रूयादात्मप्रियवादी किं प्रियं तवाभिमतं पुत्रादिलक्षणं रोत्स्यत्या वरणं प्राणसंरोधं प्राप्स्यति विनंक्ष्यतीति स कस्मादेवं ब्रवीति यस्मादीश्वरः समर्थः पर्याप्तो ह्यसावेवं वक्तुं ह यस्मात्तस्मात्तथैव स्याद्यत्तेनो क्तं प्राणसंरोधं प्राप्स्यति॥ यथाभूतवादी हि सः तस्मात्स ईश्वरो वक्तुमीश्वरशब्दः क्षिप्रवाचीति केचित्भवेद्यदि प्रसिद्धिः स्यात्तस्मादुक्त्व

स योऽन्यमात्मनः प्रियं ब्रुवाणं ब्रूयात्प्रियꣳ रोत्स्यतीती

श्चित्वान्यत्प्रियमात्मानमेव प्रियमुपासीत स य आत्मानमेव प्रियमुपास्ते आत्मैव प्रियो नान्योऽस्तीति प्रतिपद्यते अन्यद्धि लोके किं प्रियमप्यप्रि यमेवेति निश्चित्योपास्ते चिंतयति॥ न हास्यैवंविदः प्रियं प्रमायुकं प्रमरणशीलं भवति नित्यत्वा

मर्थ्यमनूद्य फलितमाह यस्मादिति॥ अथात्मप्रि यवादिना यथोक्तं सामर्थ्यमेव कथं लब्धमित्याशंक्याह॥ यथेति॥ अतोऽन्यदार्तमित्यनात्मनो विनाशित्वादिना शिनश्च दुःखात्मकत्वात्तत्प्रियत्वस्य भ्रांतिमात्र त्वादात्मनस्तद्विपरीत्यान्मुख्या प्रीतिस्तत्रैवेति भावः॥ पक्षांतरमनूद्य वृद्धप्रयोगाभावेन दूषयति॥ ईश्वरशब्द इति॥ अनात्मन्यमुख्या प्रीतिरिति स्थिते फलित माह॥ तस्मादिति॥ उपास्तिमनूद्य तत्फलं कथयति॥ स य इति॥ अनुवादद्योतको ह शब्दः॥ प्रियमात्मसुखं तस्यापि लौकिकसुखवन्नाशः सुखत्वादित्याशंक्य तन्निरा

फलश्रुतेर्गत्यंतरमाह॥आत्मप्रियेति॥महद्धीदमात्मप्रियग्रहणंयत्तन्निष्ठस्यप्रियंनप्रणश्यतितस्मात्तदनुसंधानंकर्त्तव्यमितिस्तुत्यर्थंफलकीर्त्तनमि
त्यर्थः॥ पक्षांतरमाह प्रियगुणेति॥योमंदःसन्नात्मदर्शीतस्यप्रियगुणविशिष्टात्मोपासनेप्रियंप्राणादिननश्यतीतिफलंविधातुंफलवचनमित्यर्थः॥
ननात्मानंप्रियमुपासीनस्यप्रियंप्राणादिविद्यासामर्थ्यान्ननश्यतितथाचमंदविशेषणंमंदमित्याशंक्याह॥ताच्छील्येति॥ताच्छील्येर्थेविहितस्योकञ्प्रत्य
यस्यश्रुत्योपादानात्स्वभावहानायोगाच्चप्रमरणशीलत्वाभावेपिप्राणादेरात्यंतिकंअप्रमरणमविवक्षितमित्यर्थः॥८॥तदाहुरित्यादेर्गतेनग्रंथेनसंबंधव

वादमात्रमेतदात्मविदोन्यस्यप्रियस्याप्रियस्यचाभावादात्मप्रियग्रहणंस्तुत्यर्थंवा॥प्रियगुणफलविधानार्थंवामंदात्मदर्शिनस्ताच्छील्य
प्रत्ययोपादानात्॥८॥सूत्रिताब्रह्मविद्यात्मेत्येवोपासीतेतियदर्थोपनिषत्कृत्स्नापितस्यैतस्यसूत्रस्यव्याचिख्यासुःप्रयोजनाभिधित्सयो

श्वरोहतथैवस्यादात्मानमेवप्रियमुपासीतसयआत्मानमेवप्रियमुपास्तेनहास्यप्रियंप्रमायुकंभवति॥८॥

पोज्जिघांसतितदितिवक्ष्यमाणमनंतरवाक्येवद्योसंवस्तुआहुर्ब्राह्मणाब्रह्मविविदिषवोजन्मजरामरणप्रबंधचक्रभ्रमणकृतायासदुः
खोदकाःपारमहोदधिप्लवभूतंगुरुमासाद्य कुर्वन्तंकीर्तयति॥सूत्रितेति॥तस्यांप्रमाणमाह॥यदर्थेति॥तर्हिसूत्रव्याख्यानेनैवसर्वोपनिषदर्थसि
द्धेस्तदाहुरित्यादिव्यर्थमित्याशंक्याह॥तस्येति॥विद्यासूत्रंव्याख्यातुमिच्छन्तीश्रुतिःसूत्रितविद्याविवक्षितप्रयोजनाभिधानायोपोद्घातंचिकीर्षतिप्रतिपाद्यमर्थं
बुद्धौसंगृह्यतादर्थ्येनार्थांतरोपवर्णनस्यतथात्वाच्चिंतांप्रकृतसिध्यर्थामुपोद्घातंप्रचक्षतइतिन्यायादित्यर्थः॥यद्ब्रह्मविद्ययेत्यादिवाक्यप्रकाश्यंचोद्यं
तच्छब्देनोच्यतेप्रकृतसंबंधासंभवादित्याह॥तदितीति॥ब्राह्मणमात्रस्यचोद्यकर्तृत्वंव्यावर्तयति॥ब्रह्मेति॥उत्सेत्स्यब्रह्मवेदनेच्छावत्त्वंव्यावर्तयितुं

जन्मचजराचमरणंचतेषांप्रबंधेप्रवाहेचक्रवदनवरतंभ्रमणेनकृतंयदायासात्मकंदुःखंतदेवोदकंयस्मिन्नपारेसंसाराख्येमहोदधौतत्रप्लव
भूतंतरणसाधनंइतियावत् तत्तीरंतस्यसंसारसमुद्रस्यतीरंब्रह्मेत्यर्थः॥तेषांविविदिषायाःसाफल्यार्थंतस्मिन्ननीकेसंसारेवैराग्यंदर्शयति॥धर्मेति
॥निर्वेदस्यनिरंकुशत्वंवारयति॥तद्विलक्षणेति॥उत्तरवाक्यमवतार्यव्याचष्टे॥किमित्यादिना॥अथपराययातदक्षरमधिगम्यतइतिश्रुत्यंतरमाश्रित्य

तत्तीरमुत्तितीर्षवोधर्माधर्मसाधनतत्फललक्षणात्साध्यसाधनरूपान्निर्विण्णास्तद्विलक्षणनित्यनिरतिशयश्रेयःप्रतिपित्सवः
किमाहुरित्याह॥यद्ब्रह्मविद्ययाब्रह्मपरमात्मातद्ययावेद्यतेसाब्रह्मविद्यातयाब्रह्मविद्ययासर्वंनिरवशेषंभविष्यंतोभविष्यामइ
त्येवंमनुष्यायन्मन्यंतेमनुष्यग्रहणंविशेषतोधिकारज्ञापनार्थंमनुष्याएवहिविशेषतोभ्युदयनिःश्रेयससाधनेधिकृताइत्यभिप्रा

तदाहुर्यद्ब्रह्मविद्ययासर्वंभविष्यंतोमनुष्यामन्यंते

योयथाकर्मविषयेफलप्राप्तिंध्रुवांकर्मभ्योमन्यंतेतथाब्रह्मविद्यायाःसर्वात्मभावफलप्राप्तिंध्रुवामेवमन्यंतेवेदप्रामाण्यस्योभयत्रा
विशेषात्तत्रविप्रतिषिद्धंवस्तुलक्ष्यतेअतःपृच्छामःकिमुतब्रह्मयस्यविज्ञानात्सर्वंभविष्यंतोमनुष्यामन्यंते॥ ह॥तद्ययेति॥मनुष्यायन्मन्यंते

तत्रविरुद्धंवस्तुभातीतिसंबंधःमनुष्यग्रहणस्यकृत्यमाह॥मनुष्येति॥ननुदेवादीनामपिविद्याधिकारादेवताधिकरणन्यायेनवक्ष्यतेतत्कुतोमनुष्याणा
मेवाधिकारज्ञापनमित्यतआहमनुष्याइति॥विशेषतःसर्वाविसंवादेनेतियावत्॥तथापिकिमितितेज्ञानान्मुक्तिंसिद्धवद्ब्रुवंतीत्याशंक्याह॥यथेति॥
उभयत्रकर्मब्रह्मणोरितियावत्॥उत्तरवाक्यमुपादत्ते॥तत्रेति॥मनुष्याणांमतंतत्तच्छब्दार्थः॥वस्तुशब्देनज्ञानात्फलमुच्यते ॥

आक्षेपगर्भस्यचोद्यस्यप्रवृत्तौविरोधप्रतिभासोहेतुरित्यतःशब्दार्थःतद्ब्रह्मपरिच्छिन्नमपरिच्छिन्नंवेतिकुतोब्रह्मणिचोद्यते॥तत्राह॥यस्येति॥प्र
श्नांतरंकरोति॥तत्किमिति॥ब्रह्मस्वात्मानमज्ञासीदतिरिक्तंवेतिप्रश्नस्यप्रसंगंदर्शयति॥यस्मादिति॥सर्वस्यअतिरिक्तविषयेज्ञानंप्रसिद्धंतल्लिं
विचारेणेत्याशंक्याह॥ब्रह्मचेति॥सर्वंखल्विदंब्रह्मेत्यादौब्रह्मणःसर्वात्मत्वश्रवणादतिरिक्तविषयाभावादात्मानमेवावेदितिपक्षस्यसावकाशते
त्यर्थः॥किंशब्दस्यप्रश्नार्थत्वमुक्त्वाऽऽक्षेपार्थत्वमाह॥तद्यदीति॥ब्रह्महिकिंचिदज्ञात्वासर्वमभवज्ज्ञात्वावा॥नाद्यः॥ब्रह्मविद्यानर्थक्यादित्युक्त्वाद्वितीय

तत्किमवेद्यस्माद्विज्ञानात्तद्ब्रह्मसर्वमभवद्ब्रह्मचसर्वमितिश्रूयते॥तद्यद्यविज्ञाययत्किंचित्सर्वमभवत्तथाऽन्येषामप्यस्तुकिंब्रह्मविद्य
या॥अथविज्ञायसर्वमभवद्विज्ञानसाध्यत्वात्कर्मफलेनतुल्यमेवेत्यनित्यत्वप्रसंगःसर्वभावस्यब्रह्मविद्याफलस्यानवस्थादोषश्च

किमुतद्ब्रह्मावेद्यस्मात्तत्सर्वमभवदिति॥९॥

तदप्यन्यद्विज्ञायसर्वमभवत्ततःपूर्वमप्यन्यद्विज्ञायेति॥नतावदविज्ञायसर्वमभवच्छास्त्रार्थवैरूप्यदोषात्फलानित्यत्वदोषस्तर्हि
॥नैकोपिदोषोर्थविशेषोपपत्तेः॥९॥

मनुवदति॥अथेतिस्वरूपमन्यद्वाज्ञात्वाब्रह्मणःसर्वापत्तिरितिविकल्प्योभयत्रसाधारणंदूषणमाह॥विज्ञा
नेति॥द्वितीयेदोषांतरमाह॥अनवस्थेति॥बहिरेवाक्षेपंपरिहरति॥नतावदितिअज्ञात्वैवब्रह्मणःसर्वभावोस्मदादेस्तुज्ञानादितिशास्त्रार्थवैरूप्यंनचा
स्मदादेरपितदंतरेणतद्भावःशास्त्रानर्थक्याज्ज्ञानाद्ब्रह्मणःसर्वभावपक्षेस्वोक्तंदोषंआक्षेप्तास्मारयति॥फलेति॥स्वतोऽपरिच्छिन्नंब्रह्माविद्यातत्कार्यसंबं
धात्परिच्छिन्नवद्भातितन्निवृत्त्यौपाधिकंसर्वभावस्यसाध्यत्वंनचानवस्थाज्ञेयांतरानंगीकारान्नापिक्रियाविरोधोविषयत्वमंतरेणवाक्योत्थबुद्धेःस्फुरणादिति

एतेनविद्यावैयर्थ्यमपिपरिहृतमित्याह॥अर्थेति॥यद्यपिब्रह्मापरिछिन्नंनित्यसिद्धंतथापितन्नाविद्यातत्कार्यध्वंसरूपस्यार्थविशेषस्यज्ञाना
दुपपत्तेर्नतद्वैयर्थ्यमित्यर्थः॥९॥इदानींप्रश्नमनूद्यतदुत्तरत्वेनब्रह्मेत्यादिश्रुतिमवतारयति॥यदीत्यादिना॥तत्रवृत्तिकृतांमतानुसारेणब्रह्मश
ब्दार्थमाह॥ब्रह्मेति॥तस्यपरिछिन्नत्वाज्ज्ञानेनसर्वभावस्यसाध्यत्वसंभवादितिहेतुमाह॥सर्वभावस्येतिसिद्धांतेयथोक्तहेत्वनुपपत्तिंदोषमाह॥
नहीति॥सातर्हिविज्ञानसाध्यामाभूदित्यतआह॥विज्ञानेति॥हिरण्यगर्भस्यनोपदेशजन्यज्ञानाद्ब्रह्मभावःसहसिद्धंचतुष्टयमितिस्मृतेःस्वाभाविक

यदिकिमपिविज्ञायैवतद्ब्रह्मसर्वमभवत्स्यकामःकिमुतद्ब्रह्मावेद्यस्मात्तत्सर्वमभवदिति॥एवंचोदितेसर्वदोषानागंधितंप्रतिवचन
माह॥ब्रह्मापरंसर्वभावस्यसाध्यत्वोपपत्तेर्नहिपरस्यब्रह्मणःसर्वभावापत्तिर्विज्ञानसाध्याविज्ञानसाध्यांचसार्वभावापत्तिमाह॥तस्मा
त्तत्सर्वमभवदितितस्माद्ब्रह्मवाइदमग्रआसीदित्यपरंब्रह्मेहभवितुमर्हति॥मनुष्याधिकाराद्वातद्भावीब्राह्मणःस्यात्सर्वंभविष्यंतोमनु
ष्यामन्यंतइतिहिमनुष्याःप्रकृतास्तेषांचाभ्युदयनिःश्रेयससाधनेविशेषतोधिकारइत्युक्तंनपरस्यब्रह्मणोनाप्यपरस्यप्रजापतेः॥अ
तोद्वैतैकत्वापरब्रह्मविद्ययाकर्मसहितया ज्ञानवत्वात्तस्मात्तत्सर्वमभवदितिचोपदेशाधीनधीसाध्योसौश्रुतोनचासीदित्यतीतकालावच्छेदस्मिका
लेतस्मिन्युज्यते॥समवर्ततेतिचजन्ममात्रंश्रूयतेकालात्मकेतत्संबंधस्यस्वाश्रयपराहतत्वान्मनुष्याणांप्रकृतत्वाच्चनापरंब्रह्मेहब्रह्मशब्दमित्यपरि
तोषाद्वृत्तिकारमतंहित्वाब्रह्मेतिब्रह्मभावीपुरुषोनिर्दिश्यतइतिभर्तृप्रपंचोक्तिमाश्रित्यतन्मतमाह॥मनुष्येति॥तदेवप्रपंचयति॥सर्वमित्यादिना॥द्वै
तैकत्वंसर्वजगदात्मकमपरंहिरण्यगर्भाख्यंब्रह्मतस्मिन्विद्याहिरण्यगर्भोहमितिअहंग्रहोपास्तिस्तयासमुच्चितयातद्भावमिहैवोपगतोहिरण्यगर्भप
देयद्भोज्यंततोपिदोषदर्शनाद्विरक्तःसर्वकर्मफलप्राप्त्यानिवृत्तकामादिनिगडःसाध्यांतराभावाद्विद्यामेवार्थयमानस्तद्दर्शीब्रह्मभावीजीवोस्मिन्वाक्येब्रह्म

तौ०द०शाँ० २

कथंब्रह्मभाविनिजीवेब्रह्मशब्दस्यप्रवृत्तिरित्याशंक्याह ॥ दृष्टश्चेति ॥ आदिशब्देनगृहस्थःसदृशींभार्यांविंदेतेत्यादिगृह्यते ॥ इहेतिप्रकृतवाक्यकथनं ॥ भर्तृप्रपंचव्याख्यानंदूषयति ॥ तन्नेति ॥ ब्रह्मशब्देनपरस्मादर्थांतरस्यग्रहेतस्यसर्वभावापत्तेःसाध्यत्वादनित्यत्वापत्तेःनतन्मतमुचितमित्यर्थः ॥ साध्यस्यापिमोक्षस्यनित्यत्वमाशंक्ययत्कृतकंतदनित्यमितिन्यायमाश्रित्याह ॥ नहीति ॥ सामान्यन्यायंप्रकृतेयोजयति ॥ तथेति ॥ भवतुसर्वभा

ऽपरब्रह्मभावमुपसंपन्नोभोज्यादपावृत्तःसर्वप्राप्यो छिन्नकामकर्मबंधनःपरब्रह्मभावीब्रह्मविद्याहेतोर्ब्रह्मेत्यभिधीयते ॥ दृष्टश्च
लोकेपिभाविनींवृत्तिमाश्रित्यशब्दप्रयोगोयथौदनंपचतीतिशास्त्रेचपरिव्राजकःसर्वभूताभयदक्षिणामित्यादिस्तथेहेतिकेचिद्ब्र
ह्मभावीपुरुषोब्राह्मणइतिव्याचख्युस्तेतन्नसर्वभावापत्तेरनित्यत्वदोषान्नहिसोस्तिलोकेपरमार्थतोयोनिमित्तवशाद्भावांतरमापद्यते
नित्यश्चेति ॥ तथाब्रह्मविज्ञाननिमित्तकृताचेत्सर्वभावापत्तिर्नित्याचेतिविरुद्धंअनित्यत्वेचकर्मफलतुल्यतेत्युक्तोदोषः ॥ विद्याकृताऽ
सर्वत्वनिवृत्तिंचेत्सर्वभावापत्तिंब्रह्मविद्याफलंमन्यसेब्रह्मभाविपुरुषकल्पनाव्यर्थास्यात्प्राग्ब्रह्मविज्ञानादपिसर्वोजंतुर्ब्रह्मत्वान्नित्यमे
वसर्वभावापन्नःपरमार्थतोऽविद्ययात्वब्रह्मत्वमसर्वत्वंचाध्यारोपितंयथाशुक्तिकायांरजतंव्योम्निवातलमलवत्त्वादितथेहब्रह्मणिअध्या
रोपितमविद्ययाऽब्रह्मत्वमसर्वत्वंचब्रह्मविद्ययानिवर्त्यतइतिमन्यसेयदितदायुक्तंयत्परमार्थतआसीत्परंब्रह्मब्रह्मशब्दस्यमुख्यार्थ
भूतंब्रह्मवाइदमग्रआसीदित्यस्मिन्वाक्यउच्यतइतिवक्तुं ॥

वापत्तेरनित्यत्वंकाहानिस्तत्राह ॥ अनित्यत्वेचेति ॥ किंच ॥ जीवस्याब्रह्मत्वं
तवाविद्याकृतंपारमार्थिकंवेतिविकल्प्याद्यमनूद्यदूषयति ॥ अविद्याकृतेति ॥ तत्रानुवादभागंविभजते ॥ प्रागित्यादिना ॥ ब्रह्मभाविपुरुषकल्प
नाव्यर्थेत्युक्तंव्यक्तीकरोति ॥ तदेति ॥ तस्मिन्पक्षेब्रह्मज्ञानात्पूर्वमपिपरमार्थतःपरंब्रह्मासीत्तदेवप्रकृतेवाक्येब्रह्मशब्देनोच्यतइतियुक्तंवक्तुंतद्धिब्रह्म

गौर्वाहीक इतिवदमुख्यार्थोपि ब्रह्मशब्दो निर्वहतीत्याशंक्याह॥ यथेति॥ निरतिशयमहत्वसंपन्नं वस्तु ब्रह्मशब्देन श्रुतमश्रुतस्तु ब्रह्मभावी पुरुषः श्रुत
हान्याचाश्रुतकल्पनान्यायवतीतस्मात्त्वत्कल्पनानयुक्तेतिव्यावर्त्यमाह॥ नत्विति॥ अग्निरधीतेऽनुवाकमित्यादौ श्रुतहान्याऽश्रुतोपादानं दृष्टमित्या
शंक्याह॥ महत्तर इति॥ तत्राग्निशब्दस्यमुख्यार्थत्वेसत्यन्विताभिधानानुपपत्त्या वाक्यार्थासिद्धेस्तज्ज्ञाने प्रयोजनेश्रुतमपिहित्वाऽश्रुतंगृह्यते॥ प्रकृते
त्वसतिप्रयोजनविशेषेश्रुतहान्यादिर्नयुक्तिमानित्यर्थः॥ मनुष्याधिकारंनिर्वोढुं ब्रह्मभाविपुरुषकल्पनेत्याशंक्यमहत्तरविशेषणं यद्ब्रह्मविद्ययेतिप
रस्यापितुल्यमधिकृतत्वंतस्यचाविद्याद्वाराधिकारत्वमविरुद्धमित्यग्रेस्फुटीभविष्यतीतिभावः॥ द्वितीयं कल्पमुत्थापयति॥ अविद्येति॥ ब्रह्मविद्यावे य

यथाभूतार्थवादित्वाद्वेदस्यनत्वियंकल्पनायुक्ताब्रह्मशब्दार्थविपरीतो ब्रह्मभावीपुरुषोब्रह्मेत्युच्यतेइतिश्रुतहान्यश्रुतकल्पना
याअन्याय्यत्वान्महत्तरे प्रयोजनांतरेऽसत्यविद्याकृतव्यतिरेकेणाब्रह्मत्वमसर्वत्वंचविद्यतएवेतिचेत् नतस्यब्रह्मविद्ययापोह
नुपपत्तेर्नहिकदाचित्कचित्साक्षाद्वस्तुधर्मस्यापोढादृष्टाकर्त्रावाब्रह्मविद्याअविद्यायास्तुसर्वत्रैवनिवर्त्तिकादृश्यते॥ तथेहापिअ
ब्रह्मत्वमविद्याकृतमेवनिवर्त्यतामसर्वत्वंचब्रह्मविद्ययानतुपारमार्थिकंवस्तुकर्त्तृनिवर्त्तयितुंवार्हतिब्रह्मविद्यातस्माद्व्यर्थेवश्रु
तहान्यश्रुतकल्पनाब्रह्मण्यविद्यानुपपत्तिरितिचेन्नब्रह्मणिविद्या ॥र्थ्यप्रसंगान्मैवमितिदूषयति॥ नतस्येति॥ अनुपपत्तिमेवसाधयति॥ न
हीति॥ साक्षाद्वारोपमंतरेणेतियावत्॥ वस्तुधर्मस्यपरमार्थभूतस्यपदार्थस्येत्यर्थः॥ विद्यायास्तर्हिकथमर्थवत्वंतत्राह॥ अविद्यायास्त्विति॥ सर्वत्रशु
क्त्यादावितियावत्॥ विमतमविद्यात्मकंविद्यानिवर्त्यत्वाद्रजतादिवदित्यभिप्रेत्यदार्ष्टांतिकमाह॥ तथेति॥ विमतेनकारकंविद्यात्वाच्छुक्तिविद्यावदि
त्याशयेनाह॥ नत्विति अब्रह्मत्वादेर्वास्तवत्वायोगादयुक्ताब्रह्मभाविपुरुषकल्पनेत्युपसंहरति॥ तस्मादिति॥ ब्रह्मण्यविद्यानिवृत्तिर्विद्याफलमित्यत्रचो

84

नहिसर्वज्ञेप्रकाशैकरसेब्रह्मण्यज्ञानमादित्येतमोवदुपपन्नमितिभावः॥तस्या ज्ञातत्वमज्ञत्वंवाक्षिप्यते नाद्यइत्याह॥नब्रह्मणीति॥नहितत्वम
सीतिविद्याविधानंविज्ञातेब्रह्मणियुक्तंपिष्टपिष्टिप्रसंगात्तस्तदज्ञातमेष्टव्यमित्यर्थः॥ब्रह्मात्मैक्यमज्ञातंशास्त्रेणज्ञाप्यतेतद्विषयंचश्रवणादिविधीय
तेतेनतस्मिन्नज्ञातत्वमेष्टव्यमित्युक्तमर्थंदृष्टांतेनसाधयति॥नहीति॥मिथ्याज्ञानस्याज्ञानाव्यतिरेकात् ब्रह्मण्यविद्याध्यारोपणायांशुक्तौरूप्यारोपणं
दृष्टांतितमितिद्रष्टव्यं॥कल्पांतरमालंबते॥नब्रूमइति॥ब्रह्माविद्याकर्त्तेनभवतीत्यस्ययथाश्रुतोवार्थस्तदन्यस्तदाश्रयोस्तीतिवातत्राद्यमंगीकरोति॥भ

विधानान्नहिशुक्तिकायांरजताध्यारोपणेअसतिशुक्तिकात्वंज्ञाप्यतेचक्षुर्गोचरापन्नायामियंशुक्तिकानरजतमितितथासदेवेदंसर्वं
ब्रह्मैवेदंसर्वमात्मैवेदंसर्वंनेदंद्वैतमस्तिअब्रह्मेतिब्रह्मण्येकत्वविज्ञानेनविधातव्यंब्रह्मण्यविद्याध्यारोपणायामसत्यां॥नब्रूमः शुक्ति
कायामिवब्रह्मण्यतद्धर्माध्यारोपणानास्तीतिकिंतर्हिनब्रह्मस्यात्मन्यतद्धर्माध्यारोपयितृ अविद्याकर्त्तृचेतिभवत्वेवंनाविद्याकर्त्तृभ्रांतं
चब्रह्मकिंतुनैवाब्रह्माविद्याकर्त्ताचेतनोभ्रांतोन्यइष्यते॥नान्योतोस्तिविज्ञातानान्यदतोस्तिविज्ञातृतत्त्वमस्यात्मानमेवावेदहंब्रह्मास्मि
न्योसावन्योहमस्मीतिनसवेदेत्यादिश्रुतिभ्यःस्मृतिभ्यश्चसमंसर्वेषुभूतेषुअहमात्मागुडाकेशशुनिचैवश्वपाकेचयस्तुसर्वाणिभूतानि
यस्मिन्सर्वाणिभूतानीतिचमंत्रवर्णात्नन्वेवंशास्त्रोपदेशानर्थक्यमितिवाढमेवमवगतेःस्वेवानर्थक्यमवगमानर्थक्यमपीति

वत्तितिअनादित्वादविद्या
याःकर्त्रपेक्षाभावाद्विनाचद्वारंब्रह्मणिभ्रांत्यनभ्युपगमादित्यर्थः॥द्वितीयंप्रत्याह॥किंत्विति॥ब्रह्मणोन्यश्चेतनोनास्तीत्यत्रश्रुतिस्मृतीरुदाहरति॥नान्यो
तोस्तीत्यादिना॥ब्रह्मणोन्योचेतनोपिनास्तीत्यत्रमंत्रद्वयंपठति॥यस्त्विति ब्रह्मणोन्यस्यात्तस्याभावेदोषमाशंकते॥नन्विति॥किमिदमानर्थक्यमवगतेः
नवगतेर्वाचोद्यतेतत्राद्यमंगीकरोति॥वाढमिति॥द्वितीयेनोपदेशानर्थक्यमवगमार्थत्वादितिद्रष्टव्यंउपदेशवदवगमस्यापिस्वप्रकाशेवस्तुनिनोपयोगोस्ति
अद्वैतसिद्धांतावगतेप्राप्तौसत्यांशास्त्रानर्थक्यमप्राप्तौवा=२

अनवगमनिवृत्तिः=१ यथावस्तुनोनज्ञानाधीनत्वंस्वप्रकाशत्वात्तथातद्भिन्नायास्तस्याअपि=१ प्रत्यक्षतया=१

अनुभवमनुसृत्यपरिहरति॥नानवगमेति॥वस्तुनोभिन्नाचेद्द्वैतहानिरभिन्नाचेज्ज्ञानाधीनत्वासिद्धिरितिशंकते॥तन्निवृत्तेरिति॥अनवगमनिरस्तेर्दृ
श्यमानत्वात्तथास्वरूपापलापायोगात्प्रकारांतरासंभवाच्चपंचमप्रकारत्वमेष्टव्यमितिमत्वाह॥नदृष्टेति॥दृष्टमपियुक्तिविरोधेत्याज्यमित्याशंक्याह॥दृश्यमान
मिति॥दृष्टविरुद्धमपिकृतोनेष्यतेतत्राह॥नचेति॥अनुपपन्नत्वमंगीकृत्योक्तंतदेवनास्तीत्याह॥नचेति॥युक्तिविरोधेदृष्टिराभासीभवतीतिशंकते॥दर्शने
ति॥दृष्टिविरोधेयुक्तेरेवाभासत्वंस्यादितिपरिहरति॥तत्रापीति॥अनुपपन्नत्वंहिसर्वस्यदृष्टिबलादिष्टंदृष्टस्यत्वनुपपन्नत्वेनकिंचिन्निमित्तमस्तीत्यर्थः॥

चेन्नानवगमनिवृत्तेर्दृष्टत्वात्तन्निवृत्तेरप्यनुपपत्तिरेकत्वइतिचेन्नदृष्टविरोधाद्दृश्यतेह्येकत्वविज्ञानादेवानवगमनिवृत्तिः॥दृश्यमानमप्य
नुपपन्नमितिब्रुवतोदृष्टविरोधःस्यान्नचदृष्टविरोधःकेनचिदप्यभ्युपगम्यतेनचदृष्टेऽनुपपन्नंनामदृष्टत्वादेवदर्शनानुपपत्तिरितिचे
तत्राप्येषैवयुक्तिःपुण्योवैपुण्येनकर्मणाभवतितंविद्याकर्मणीसमन्वारभेतेमंतावोढ्वाकर्त्ताविज्ञानात्मापुरुषइत्येवमादिश्रुतिस्मृति
न्यायेभ्यःपरस्माद्विलक्षणोन्यःसंसारीअवगम्यतेतद्विलक्षणश्चपरःसएषनेतिनेत्यशनायाद्यत्येतियआत्मापहतपाप्माविजरोविमृत्युरे
तस्यवाअक्षरस्यप्रशासनइत्यादिश्रुतिभ्यः॥कणादाक्षपादादितर्कशास्त्रेषुचसंसारिविलक्षणःईश्वरउपपत्तितःसाध्यतेसंसारदुःखापन
यार्थिप्रवृत्तिदर्शनात्स्फुटमन्यत्वमीश्वरात्संसारिणोवगम्यते

ब्रह्मभाविपुरुषकल्पनांनिराकृत्यस्वपक्षेशास्त्रस्यार्थवत्वमुक्तं॥संप्रतिप्रकारांतरेणपू
र्वपक्षयति॥पुण्यइति॥आदिशब्देनयोयंविज्ञानमयःप्राणेष्वित्याद्याश्रुतिर्गृह्यते॥कुरुकर्मैवतस्मात्त्वमित्याद्यास्मृतिः॥न्यायोमिथोविरुद्धयोरेकत्वायोगः॥
विलक्षणत्वमन्यत्वहेतुः॥जीवस्यपरस्मादन्यत्वेपिनतस्यततोन्यत्वमित्याशंक्याह॥तद्विलक्षणश्चेति॥परस्यतद्विलक्षणत्वंश्रुतितोदर्शयित्वातत्रैवोपपत्तिमाह
॥कणादेति॥क्षित्यादिकमुपलब्धिमत्कर्तृकंकार्यत्वाद्घटवदित्याद्योपपत्तिः॥तयोर्मिथोभेदेहेत्वंतरमाह॥संसारेति॥जीवस्यस्वगतदुःखध्वंसेदुःखंमेमाभूदित्यर्थित्वे

इतश्चेश्वरस्यनप्रवृत्तिहेतुफलयोरभावादित्याह॥अवाकीति॥मिथोभेदेश्रौतंलिंगांतरमाह॥सोन्वेष्टव्यइति॥तत्रैवलिंगांतरमाह॥मुमुक्षोश्चेति॥गतिर्देव
यानाद्यातस्यामार्गविशेषोर्चिरादिर्देशोगंतव्यंब्रह्मतेषामुपदेशास्तेर्चिषमभिसंभवंतीत्यादयस्तथापिकथंभेदसिद्धिस्तत्राह॥असतीति॥माभूदितिरित्या
शंक्याह॥तदभावेचेति॥कथंतर्हिगत्यादिकमुपपद्यतेतत्राह॥भिन्नस्येति॥जीवेश्वरयोर्मिथोभेदेहेत्वंतरमाह॥कर्मेति भेदेसत्युपपन्नासंभवतीतिशे

ऽवाक्यनादरोनमेपार्थोस्तीतिश्रुतिस्मृतिभ्यःसोन्वेष्टव्यःसविजिज्ञासितव्यस्तंविदित्वानलिप्यतेब्रह्मविदाप्नोतिपरंएकधैवानुद्रष्टव्यमे
तद्योवाएतदक्षरंगार्गिविदित्वातमेवधीरोविज्ञायप्रणवोधनुःशरोह्यात्माब्रह्मतल्लक्ष्यमुच्यतइत्यादिकर्मकर्तृनिर्देशाच्चमुमुक्षोश्चगतिमा
र्गविशेषोपदेशादसतिभेदेकस्यकुतोगतिःस्यात्॥तदभावेचदक्षिणोत्तरमार्गविशेषानुपपत्तिर्गंतव्यदेशानुपपत्तिश्चेतिभिन्नस्यतुपरस्मा
दात्मनःसर्वमेतदुपपन्नंकर्मज्ञानसाधनोपदेशाच्चभिन्नश्चेद्ब्रह्मणःसंसारीस्याद्युक्तस्तंप्रत्यभ्युदयनिश्रेयससाधनयोःकर्मज्ञानसाधनयोरु
पदेशोनेश्वरस्याप्तकामत्वात्तस्माद्युक्तंब्रह्मेतिब्रह्मभावीपुरुषउच्यतइतिचेन्नब्रह्मोपदेशानर्थक्यप्रसंगात्संसारीचेद्ब्रह्मभाव्यब्रह्मसन्विदि
तात्मानमेवाहंब्रह्मास्मीतिसर्वमभवत्तस्यसंसार्यात्मविज्ञानादेवसर्वात्मभावस्यफलस्यसिद्धत्वात्॥परब्रह्मोपदेशस्यध्रुवमानर्थक्यंप्राप्तंत
द्विज्ञानस्यक्वचित्पुरुषार्थसाधनेऽविनियोगात्संसारिणएवाहंब्रह्मास्मीतिब्रह्मत्वसंपादनार्थउपदेशइतिचे

षः तदेवस्फुटयति॥भिन्नश्चे
दिति॥तद्भेदेप्रामाणिकेपिकथंब्रह्मभाविपुरुषकल्पनेत्याशंक्योपसंहरति॥तस्मादिति॥ब्रह्मभाविनोजीवस्यब्रह्मशब्दवाच्यत्वेब्रह्मोपदेशस्यानर्थक्य
प्रसंगान्नैवमितिदूषयति॥नेत्यादिना॥प्रसंगमेवप्रकटयति॥संसारीचेदिति॥विधिशेषत्वेनब्रह्मोपदेशोर्थवानितिचेत्तत्रकिंकर्मविधिशेषत्वेनोपास्तिवि
धिशेषत्वेनवातदर्थवत्वमितिविकल्प्याद्यंदूषयति॥तद्विज्ञानस्येति॥अविनियोगाद्धिनियोजकश्रुत्याद्यभावादितिशेषः॥कल्पांतरमादत्ते॥संसारिणइति॥

ब्रह्मोपदेशस्यकथंसफलत्वं=१

उपदेशस्यज्ञानार्थत्वात्तदनपेक्षत्वाच्चसंपत्तेस्तस्यकथंतादर्थ्यमित्याशंक्याह॥ अनिर्ज्ञातेहीति॥ व्यतिरेकमुक्त्वान्वयमन्वाचष्टे॥ निर्ज्ञातेतिपदयोःसामाना
धिकरण्येनजीवब्रह्मणोरभेदावगमात्तसंपत्त्यसःसंभवतीतिसमाधत्तेनेत्यादिना॥ कथमेकत्वेगम्यमानेपिसंपदोनुपपत्तिरित्याशंक्याह॥ अन्यस्यहीति॥
एकत्वेहेत्वंतरमाह॥ इदमिति॥ एकत्वेफलितमाह॥ तस्मादिति॥ किंच॥ संपत्तिपक्षेतदापत्तिःफलमन्यद्वेतिविकल्प्यद्वितीयंप्रत्याह॥ नचेति॥ आद्यंदूष

दनिर्ज्ञातेहिब्रह्मस्वरूपेकिंसंपादयेदहंब्रह्मास्मीतिनिर्ज्ञातलक्षणेहिब्रह्मणिशक्यासंपत्कर्त्तुंनायमात्माब्रह्मयत्साक्षादपरोक्षाद्ब्रह्मयआ
त्मातत्त्वमसिसआत्माब्रह्मविदाप्नोतिपरमितिप्रकृत्यतस्माद्वाएतस्मादात्मनइतिसहस्रशोब्रह्मात्मशब्दयोःसामानाधिकरण्यादेकार्थत्वमे
वेत्यवगम्यतेअन्यस्यह्यन्यत्वेसंपत्क्रियतेनैकत्वेइदंसर्वंयदयमात्मेतिचप्रकृतस्यैवद्रष्टव्यस्यात्मनएकत्वंदर्शयतितस्मान्नात्मनोब्रह्मत्वसं
पदुपपत्तिर्नचाप्यन्यत्प्रयोजनंब्रह्मोपदेशस्यगम्यतेब्रह्मवेदब्रह्मैवभवतिअभयंवैजनकप्राप्तःअभयंहिवैब्रह्मभवतीतिचतदापत्तिश्रवणा
त्संपत्तिश्चेत्तदापत्तिर्नस्यान्नह्यन्यस्यान्यभावउपपद्यतेवचनात्संपत्तेरपितद्भावापत्तिःस्यादितिचेन्नसंपत्तेःप्रत्ययमात्रत्वाद्विज्ञान
स्यचमिथ्याज्ञाननिवर्त्तकत्वव्यतिरेकेणाकारकत्वमित्यवोचाम नचवचनंवस्तुनःसामर्थ्यजनकंज्ञापकंहिशास्त्रंनकारकमितिस्थितिः
सएषइहप्रविष्टइत्यादिवाक्येषुचपरस्यैवप्रवेशइतिस्थितंतस्माद्ब्रह्मेतिनब्रह्मभाविपुरुषकल्पनासाध्वी यति॥ संपत्तिश्चेति॥ तंयथायथे
त्यादिवाक्यमाश्रित्यशंकते॥ वचनादिति॥ संपत्तेरमानत्वान्नतद्बलादन्यस्यान्यत्वमित्याह॥ नेति॥ तस्याःमानत्वेप्येवंमानस्याकारकत्वान्नचसूत्राद्युपासना
दप्यन्यस्यान्यत्वंस्थितस्यनष्टस्यवानुपपत्तेःश्रुतिश्चनपूर्वसिद्धसूत्रादिभावाभिधायिनीतत्त्वात्तस्माद्ध्यातद्भावोपचारादतोब्रह्मभावःस्वतःसिद्धोनसंपादिकं
मित्याह॥ विज्ञानस्येति॥ अथान्यस्यान्यभावेयथोक्तंवचनमेवशक्त्याधायकमित्याशंक्याह॥ नचेति॥ ब्रह्मोपदेशानर्थक्यप्रसंगान्नब्रह्मभाविपुरुषकल्पनेत्युक्त्वा
कं३२

नचैकत्वेत्तरमाह॥ इदमिति॥

86

ब्रह्मोपदेशस्यसंपक्षेषत्वेदोषांतरमाह॥इष्टार्थेति॥तदेवविवृण्वन्निष्टमर्थमाचष्टे॥सैंधवेति॥यथोक्तंवस्तुतात्पर्यगम्यमस्यामुपनिषदीत्यत्रहेतुमाह॥कांड
द्वयेपीति॥मधुकांडावगतमवधारणंदर्शयति॥इत्यनुशासनमिति॥मुनिकांडांतेव्यवस्थितमुदाहरति॥एतावदिति॥नकेवलमुपदेशस्यसंपक्षेषत्वेवृ
हदारण्यकविरोधःकिंतुसर्वोपनिषद्विरोधोस्तीत्याह॥तथेति॥इष्टमर्थमित्यनुक्तानद्वाधनंनिगमयति तत्रेति॥ननुबृहदारण्यकेब्रह्मकंडिकायांजीवप
रयोर्भेदोभिप्रेतउपसंहारेत्वभेदइतिव्यवस्थायांतद्विरोधःशक्यःसमाधातुमित्यतआह॥तथाचेतिब्रह्मभाविपुरुषकल्पनायामुपदेशानर्थक्यमिष्टार्थवाध

इष्टार्थवाधनाच्चसैंधवघनवदनंतरमबाह्यमेकरसंब्रह्मेतिविज्ञानंसर्वस्यामुपनिषदिप्रतिपिपादयिषितोर्थः॥कांडद्वयेपर्यंतेऽवधारणाद
वगम्यतेइत्यनुशासनमेतावदरेखल्वमृतत्वमिति॥तथासर्वशाखोपनिषत्सुचब्रह्मैकत्वविज्ञानंनिश्चितोर्थः॥तत्रयदिसंसारीब्रह्मणोन्य
आत्मानमेवावेदितिकल्प्येतइष्टस्यार्थस्यबाधनंस्यात्॥तथाचशास्त्रमुपक्रमोपसंहारयोर्विरोधादसमंजसंकल्पितंस्याद्व्यपदेशानुपपत्ते
श्च॥यदिचात्मानमेवावेदितिसंसारीकल्प्येतब्रह्मविद्येतिव्यपदेशोनस्यादात्मानमेवावेदितिसंसारिणएववेद्यत्वोपपत्तेः॥आत्मेतिवेदितु
रन्यउच्यतइतिचेत् नाहंब्रह्मास्मीतिविशेषणादन्यश्चेद्वेद्यःस्यादयमसावितिवाविशेष्येतनत्वहमस्मीतिअहमस्मीतिविशेषणादात्मानमे
वावेदितिचावधारणान्निश्चितमात्मैवब्रह्मेत्यवगम्यतेतथाचसत्युपपन्नोब्रह्मविद्याव्यपदेशोनान्यथासंसारिविद्याह्यन्यथास्या

श्चेत्युक्तं॥इदानींब्रह्मेत्यादिवाक्येब्रह्मशब्देनपरस्याग्रहणेतद्विद्यायाब्रह्मविद्येतिसंज्ञानुपपत्तिदोषांतरमाह॥व्यपदेशानुपपत्तेश्चेति॥अत्रोक्तब्रह्मश
ब्दार्थोहेतुर्जीवादन्यस्तदात्मानमित्यत्रात्मशब्देनपरोगृह्यतेतद्विद्याचब्रह्मविद्येतिसंज्ञासिद्धिरितिशंकते॥आत्मेतीति॥वाक्यशेषविरोधान्मैवमित्या
ह॥नाहमिति॥तदेवप्रपंचयति॥अन्यश्चेदिति॥यथोक्तावगमेफलितमाह॥तथाचसतीति॥अत्यंतभेदेव्यपदेशानुपपत्तिंविशदयति॥संसारीति॥

जीवब्रह्मणोर्भेदाभेदोपगमादभेदे न ब्रह्मविद्येति व्यपदेशः सेत्स्यतीत्याशंक्याह॥ नचेति॥ स्यातां वा ब्रह्मात्मनोर्भेदाभेदौ तथापि भिन्नाभिन्नविद्यायां ब्रह्म
विद्येति नियतो व्यपदेशो न स्यादित्याह॥ नचेति॥ निमित्तविषयः भिन्नाभिन्नविषया विद्या ब्रह्मविषयापि भवत्येवेति व्यपदेशसिद्धिमाशंक्याह॥ तदेति॥
उभयात्मकत्वाद्वस्तुनस्तद्विद्यापि तथेति विकल्पोपपत्तिमाशंक्याह॥ नचेति॥ अस्तु तर्हि वस्तु ब्रह्म वाब्रह्म वा वैकल्पिकमित्याशंक्याह॥ श्रोतुरिति॥ संश
यितमपि ज्ञानं वाक्यादुत्पद्यते चेत्तावतैव पुरुषार्थः श्रोतुः सिध्यतीत्याशंक्याह॥ निश्चितं चेति॥ श्रोतुर्निश्चितज्ञानस्य फलवत्त्वेपि वक्तुः संशयितमर्थं व

न्न च ब्रह्मत्वाब्रह्मत्वे ह्येकस्योपपन्ने परमार्थतस्तमःप्रकाशाविव भानोर्विरुद्धत्वान्न चोभयनिमित्तत्वे ब्रह्मविद्येति निश्चितो व्यपदेशो
युक्तः॥ तदा ब्रह्मविद्या संसारिविद्या च स्यान्न च वस्तुनो द्वैजरतीयत्वं कल्पयितुं युक्तं तत्त्वज्ञानविवक्षायां श्रोतुः संशयो हि तथा स्यान्निश्चि
तं च ज्ञानं पुरुषार्थसाधनमिष्यते यस्य स्यादद्धा न विचिकित्सास्ति संशयात्मा विनश्यतीति श्रुतिस्मृतिभ्यामतो न संशयितो वाक्यार्थो वाच्यः
परहितार्थिना ब्रह्मणि साधकत्वकल्पना सद्वादिषु वापेशला तदात्मानमेवावेत्तस्मात्तत्सर्वमभवदितीति चेन्न शास्त्रोपसंभान्न ह्यस्मत्कल्प
नेयं शास्त्रकृता तु तस्मात्कान्तस्यायमुपालंभः॥ इतो न काचन हानिरित्याशंक्याह॥ अत इति निश्चितस्यैव ज्ञातार्थस्य पुमर्थसाधनत्वं न संशयितस्ये
त्यतः शब्दार्थः जीवपरयोरत्यन्तभेदस्य भेदाभेदयोश्चायोगात्परमेव ब्रह्म ब्रह्मशब्दवाच्यं न जीवस्तद्भावीत्युक्तं संप्रत्यत्यन्ताभेदपक्षे दोषमाशंकते॥ ब्रह्मणी
ति॥ तदात्मानमेवावेदिति ज्ञातृत्वं ब्रह्मण्युच्यते तदयुक्तं तस्य ज्ञानमूर्त्तित्वात्तस्यैव न तत्कर्मत्वमपि न च स्वकर्तृकर्मज्ञानान्मुक्तिः परस्य क्रियाकारकफल
विलक्षणत्वादतो न परं ब्रह्म ब्रह्मशब्दितमित्यर्थः॥ शास्त्रं ब्रह्मणि साधकत्वादि दर्शयति तच्चापौरुषेयमदोषान्नोपलंभार्हं तथा च तस्मिन्नाविद्यकं साधक
त्वाद्यविरुद्धमिति समाधत्ते॥ नशास्त्रेति॥ स चायुक्तस्तस्यापौरुषेयत्वेनासंभावितदोषत्वादिति शेषः॥ ननु ब्रह्मणो नित्यमुक्तत्वं परीक्षणार्थं शास्त्रमपपाल

शास्त्राद्धिब्रह्मणोनित्यमुक्तत्वंगम्यतेसाधकत्वादिचतस्यतेनैवोच्यतेनचार्धजरतीयमुचितंतथाचवास्तवंनित्यमुक्तत्वंकल्पितमितरदित्यास्थेयंयदितस्य
नित्यमुक्तत्वार्थंसर्वथैवसाधकत्वादिनेष्यतेतदास्वार्थपरित्यागःस्यात्साधकत्वादिनाविनाभ्युदयनिःश्रेयसयोरसंभवान्नचब्रह्मणोन्यश्चेतनोचेतनोवास्ति
॥नान्योतोस्तिद्रष्टाब्रह्मैवेदंसर्वमित्यादिश्रुतेः॥तस्माद्यथोक्ताव्यवस्थास्थेयेत्यर्थः॥किंच॥सर्वस्यापिसंसारस्यब्रह्मण्यविद्याध्यासात्तदंतर्भूतंसाधकत्वा
द्यपितत्राध्यस्तमित्यभ्युपगमेकानुपपत्तिरित्याहनचेति॥तस्यतस्मिन्कल्पितत्वंकुतोवगतमित्याशंक्याह॥एकधेति॥उक्तश्रुतितात्पर्यंसंकलयति॥सर्वोहि

नचब्रह्मणइष्टंचिकीर्षुणाशास्त्रार्थविपरीतकल्पनयास्वार्थपरित्यागःकार्योनचैतावत्येवासमायुक्ताभवतःसर्वंहिनानात्वंब्रह्मणिकल्पित
मेवैकधैवानुद्रष्टव्यंनेहनानास्तिकिंचनयत्रहिद्वैतमिवभवतिएकमेवाद्वितीयमित्यादिवाक्यशतेभ्यःसर्वोहिलोकव्यवहारोब्रह्मण्येव
कल्पितोनपरमार्थःसन्नित्यत्यल्पमिदमुच्यतेइयमेवकल्पनाऽपेशलेति॥तस्माद्यत्प्रविष्टःस्रष्टाब्रह्मतत्ब्रह्मवैशब्दोवधारणार्थःइदंशरी
रस्थंयद्गृह्यतेऽग्रेप्राक्प्रतिबोधादपिब्रह्मैवासीत्सर्वंचेदंकिंत्वप्रतिबोधाद्ब्रह्मास्म्यसर्वंचेत्यात्मन्यध्यारोपात्कर्ताहंक्रियावान्फलानांचभोक्ता
सुखीदुःखीसंसारीतिचाध्यारोपयतिपरमार्थतस्तुब्रह्मैवतद्विलक्षणंसर्वंचतत्कथंचिदार्येणआचार्येणदयालुनाप्रतिबोधितंनासिसंसारीत्या
त्मानमेवावेत्स्वाभाविक

ति॥सर्वस्यद्वैतव्यवहारस्यब्रह्मणिकल्पितत्वेप्रकृतचोद्यस्याभासत्वंफलतीत्याह॥इत्यल्पमिति॥परपक्षंनिराकृत्यस्वपक्षंद
र्शयति॥तस्मादिति॥तद्व्यतिरेकेणजगन्नास्तीतिसूचयतिवैशब्दइति॥तत्पदार्थमुक्त्वात्वंपदार्थंकथयति॥इदमितितयोर्वस्तुतोभेदंशंकित्वापदांतरंव्याच
ष्टे॥प्रागिति॥तस्यापरिच्छिन्नत्वमाह॥सर्वंचेति॥कथंतर्हिविपरीतधीरित्याशंक्याह॥किंत्विति॥यथाप्रतिभासंकर्तृत्वादेर्वास्तवत्वमाशंक्यशास्त्रविरोधान्नैवमि
त्याह॥परमार्थतस्त्विति॥तद्विलक्षणमध्यस्तसमस्तसंसाररहितमितियावत्॥किमुतद्ब्रह्मेतिचोद्यंपरिहृत्यकिंतदवेदितिचोद्यांतरंप्रत्याह॥तत्कथंचिदिति॥

पूर्ववाक्योक्तमविद्याविशिष्टमधिकारित्वेनव्यवस्थितंब्रह्मनासिसंसारीत्याचार्येणदयावता कथंचिद्बोधितमात्मानमेवावेदितिसंबंधः॥आत्मैवप्रमेयस्तज्ज्ञानमेवप्रमाणमित्येवमर्थत्वमेवकारस्यविवक्षन्नाह॥अविद्येति॥प्रकृतमात्मपदार्थंविविच्यवक्तुंपृच्छति॥ब्रूहीति॥सएषइहप्रविष्टइत्यत्रात्मनोदर्शितत्वात्प्राणनादिलिंगस्यतस्यत्वयैवानुसंधातुंशक्यत्वान्नास्तिवक्तव्यत्वमित्याह॥नन्विति॥आत्मानंप्रत्यक्षयितुंपृच्छतस्तत्परोक्षवचनमनुत्तरमितिशंकते॥नन्वसाविति॥आत्मानंचेत्प्रत्यक्षयितुमिच्छसितर्हिप्रत्यक्षमेवतंदर्शयामीत्याह॥एवंतर्हीति॥नेदंप्रतिज्ञानुरूपंप्रतिवचनमितिचोदयति

मविद्याध्यारोपितविशेषवर्जितमित्येवशब्दस्यार्थः॥ब्रूहिकोसावात्मास्वाभाविकोयमात्मानंविदितवद्ब्रह्म॥ननुनस्मरस्यात्मानंदर्शितोह्यसौयइहप्रविश्यप्राणित्यपानितिव्यानितिउदानितिसमानितीति॥नन्वसौगौरसावश्वइत्येवमसौव्यपदिश्यतेभवतानआत्मानंप्रत्यक्षंदर्शयस्येवंतर्हिद्रष्टाश्रोतामंताविज्ञातासआत्मेतिनन्वत्रापिदर्शनादिक्रियाकर्तुःस्वरूपंनप्रत्यक्षंदर्शयसिनहिगमिरेवगंतुःस्वरूपंछिदिर्वाछेत्तुः॥एवंतर्हिदृष्टेर्द्रष्टाश्रुतेःश्रोतामतेर्मंताविज्ञातेर्विज्ञातासआत्मेतिनन्वत्रकोविशेषोद्रष्टरियदिदृष्टेर्द्रष्टायदिवाघटस्यद्रष्टासर्वथापिद्रष्टैवद्रष्टव्यएवतुभवान्विशेषमाहदृष्टेर्द्रष्टेति॥द्रष्टातुयदिदृष्टेर्यदिवाघटस्यद्रष्टाद्रष्टैवनविशेषोपपत्ते

नन्वत्रेति॥प्रत्यक्षत्वाद्दर्शनादिक्रियायास्तत्कर्तुःस्वरूपमर्पितमेवेत्याशंक्याह॥नहीतियदिदर्शनादिक्रियाकर्तृस्वरूपोक्तिमात्रेणजिज्ञासानोपशाम्यतितर्हिदृष्ट्यादिसाक्षित्वेनात्मोक्त्यातुष्यतुभवानित्याह॥एवंतर्हिदृष्टेरिति॥पूर्वस्मात्प्रतिवचनादस्मिन्प्रतिवचनेद्रष्टृविषयोविशेषोनास्तीतिशंकते॥नन्विति॥विशेषाभावंविशदयति॥यदीत्यादिना॥घटस्यद्रष्टादृष्टेर्द्रष्टेतिविशेषेप्रतीयमानेतदभावोक्तिर्नायुक्तेत्याशंक्याह॥द्रष्टव्यएवेति॥तथाद्रष्टर्यपिविशेषोभविष्यतीत्याशंक्याह॥द्रष्टात्विति॥वृत्तिमदंतःकरणावच्छिन्नःसविकारोघटद्रष्टाकूटस्थचिन्मात्रस्वभावःसन्निधिसत्तामात्रेणबुद्धित

वृ॰ र॰ ८६

एतदेव स्फुटयति॥अस्तीति॥सप्तमी द्रष्टारमधिकरोति॥द्रष्टेर्द्रष्टुस्तावदन्वयव्यतिरेकाभ्यां विशेषं विशदयति॥यो दृष्टेरिति॥भवतु दृष्टिसद्भावे द्रष्टुः स
दातद्रष्टृत्वं तथापि कथं कूटस्थदृष्टित्वमित्याशंक्याह॥तत्रेति॥नित्यत्वमुपपादयति॥अनित्या चेदिति॥उक्तपक्षपरामर्शार्था सप्तमी॥कादाचित्के द्रष्टृदृश्य
त्वे दृष्टांतमाह॥यथेति॥घटादिवत्दृष्टिरपि कदाचिदेव द्रष्टा दृश्यते तेन सर्वदेत्यनिष्ठापत्त्यभावमाशंक्याह॥नचेति॥विकारिणश्चित्तस्य द्रष्टृत्वं क्रमद्रष्टृत्व
मन्यथा द्रष्टृत्वं च दृष्टं तत्साक्षिणोऽव्यावर्त्तमानं तस्य निर्विकारत्वं गमयतीति भावः॥दृष्टिद्वयं प्रमाणाभावादश्लिष्टमिति शंकते॥किमिति॥तदुभयमंगीकरोति॥

भा॰

रस्त्वत्र विशेषो यो दृष्टेर्द्रष्टा स दृष्टिश्चेद्भवति नित्यमेव पश्यति दृष्टिं न कदाचिदपि दृष्टिर्न दृश्यते द्रष्टा तत्र द्रष्टुर्दृष्ट्या नित्यया भवितव्यं
अनित्या चेत् द्रष्टुर्दृष्टिस्तत्र दृश्याया दृष्टिः सा कदाचिन्न दृश्येतापि॥यथाऽनित्यया दृष्ट्या घटादि वस्तु न च तद्वद् दृष्टेर्द्रष्टा कदाचिदपि
न पश्यति दृष्टिं किं द्वे दृष्टी द्रष्टुर्नित्याऽदृश्या अन्याऽनित्या दृश्येति वाढं प्रसिद्धा तावदनित्या दृष्टिरंधानंधत्वदर्शनान्नित्यैव चेत्सर्वोऽनंधः ए
व स्यात् द्रष्टुस्तु नित्या दृष्टिर्न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यत इति श्रुतेरनुमानाच्चांधस्यापि घटाद्याभासविषया स्वप्ने दृष्टिरुपलभ्यते
सा तर्हि इतरदृष्टिनाशेन नश्यति सा द्रष्टुर्दृष्टिस्तया विपरिलुप्तया नित्यया दृष्ट्या स्वरूपभूतया

वाढमिति॥तत्रानित्यां दृष्टिमनुभवेन साध
यति प्रसिद्धेति॥उक्तमर्थं युक्त्या व्यक्तीकरोति॥नित्यैवेति॥संप्रति नित्यां दृष्टिं श्रुत्या समर्थयते द्रष्टुरिति॥तत्रैवोपपत्तिमाह॥अनुमानाच्चेति॥तदेव वि
वृणोति॥अंधस्यापीति॥जागरिते चक्षुरादिहीनस्यापि स्वप्ने पुंसो वासनामय घटादिविषया दृष्टिरुपलभ्या या च सा तस्मिन्काले चक्षुरादिजनितदृष्ट्य
भावेऽपि स्वयमविनश्यंत्यनुभूयते सा द्रष्टुः स्वभावभूतार्थदृष्टिर्नित्येष्टव्या॥विमतं नित्यमव्यभिचारित्वात्परेष्टात्मवदिति प्रयोगोपपत्तेरित्यर्थः॥नन्वात्मा
दृष्टिस्वभावश्चेत्कथं दृष्टेर्द्रष्टेत्युक्तमत आह॥तयेति॥नित्यत्वे हेतुः॥अविपरिलुप्तयेति॥नित्यद्वयं परिहर्त्तुं स्वरूपभूतयेत्युक्तं॥तस्या दृष्ट्यंतरापेक्षां वारयति॥

राम॰ ८६

स्यमिति॥ उक्तमविपरिलुप्तत्वं व्यनक्ति॥ इतरामिति॥ आत्मा दृष्टेर्द्रष्टेति स्थिते फलितमाह॥ एवंचेति॥ अन्यश्चेतनोऽचेतनो वेति शेषः॥ नित्यदृष्टिस्वभाव
मात्मपदार्थं परिशोध्य श्रुत्यक्षराणि योजयति॥ तद्ब्रह्मेति॥ वाक्यशेषविरोधं चोदयति॥ नन्विति॥ किं कर्मत्वेनात्मनो ज्ञानं विरुध्यते किं वासाक्षित्वेनेति
वाच्यं नाद्यो नभ्युपगमादित्याह नेति॥ न द्वितीय इत्याह॥ एवमिति॥ तदेव स्पष्टयति॥ एवं दृष्टेरिति॥ तर्हि तद्विषयं ज्ञानांतरमपेक्षितव्यमिति कुतो

स्वयंज्योतिः समाख्यये तरामनित्यां दृष्टिं स्वप्नबुद्धांतयोर्वासनाप्रत्ययरूपां नित्यमेव पश्यन् द्रष्टेर्द्रष्टा भवति॥ एवं च सति दृष्टिरेव स्वरू
पमस्यायमग्निरिव न्यकाण्णादाना मिव दृष्टिव्यतिरिक्तोऽन्योऽचेतनो द्रष्टा तद्ब्रह्मात्मानमेव नित्यदृग्रूपमध्यारोपितानित्यदृष्ट्यादिवर्जि
तमेवावेद्विदितवत्॥ ननु विप्रतिषिद्धं न विज्ञातेर्विज्ञातारं विजानीया इति श्रुतेर्विज्ञातुर्विज्ञानं नैवं विज्ञानान्न विप्रतिषेध एवं दृष्टेर्द्रष्टे

ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मात्तत्सर्व

ति विज्ञायत एवान्यज्ञानानपेक्षत्वाच्च न च द्रष्टुर्नित्यैव दृष्टिरित्येवं विज्ञाते द्रष्टृविषयां दृष्टिमन्यामाकांक्षते निवर्त्तते हि द्रष्टृविषयदृष्ट्या
कांक्षा तदसंभवादेव॥ न ह्यविद्यमाने विषये आकांक्षा कस्यचिदुपजायते न च दृश्या दृष्टिर्द्रष्टारं विषयीकर्त्तुमुत्सहते यतस्तामाकांक्षेत

विरोधो न प्रसरतीत्याशंक्याह॥ अन्यज्ञानेति॥ न विप्रतिषेध इति पूर्वेण संबंधः॥ संगृहीतमर्थं विवृणोति॥ न चेति॥ नित्यैव स्वरूपभूतेति शेषः॥ विज्ञात
त्वं वाक्यीयबुद्धिवृत्तिव्याप्यत्वं अन्यां दृष्टिं स्फुरणलक्षणां॥ आत्मविषयस्फुरणाकांक्षाभावं प्रतिपादयति॥ निवर्त्तते हीति॥ आत्मनि स्फुरणरूपे स्फुरण
स्यान्यस्यासंभवे पि कुतस्तदाकांक्षोपशांतिरित्याशंक्याह॥ न हीति॥ किंच द्रष्टरि दृश्या दृश्या वा दृष्टिरपेक्ष्यते नाद्य इत्याह न चेति॥ आदित्यप्रकाश्यस्य रूपादेस्त

89

बृ.र.
८७

नद्वितीयद्वत्याह॥ नचेति॥ आत्मनोवृत्तिव्याप्यत्वेपिस्फुरणव्याप्यत्वानंगीकरणान्नवाक्यशेषविरोधोस्तीत्युपसंहरति॥ तस्मादिति॥ वाक्यांतरमाकां
क्षापूर्वकमादत्ते॥ तत्कथमिति॥ तदक्षराणिव्याचष्टे॥ दृष्टेर्द्रष्टेतिइतिपदमवेदित्यनेनसंबध्यते ब्रह्मशब्दंव्याचष्टे॥ ब्रह्मेतीति॥ ब्रह्माहंपदार्थयो
र्मिथोविशेषणविशेष्यभावमभिप्रेत्यवाक्यार्थमाह॥ तदेवेति॥ आचार्योपदिष्टेर्थेस्वस्यनिश्चयंदर्शयति॥ यथेति॥ इतिशब्दोवाक्यार्थज्ञानसमाप्त्यर्थः॥
इदानींफलवाक्यंव्याचष्टेतस्मादिति॥ सर्वभावमेवव्याकरोति॥ अब्रह्मेति॥ ब्रह्मेवाविद्ययासंसरतिविद्ययाचमुच्यतइतिपक्षस्यनिर्दोषत्वमुपसंहरति॥

नचस्वरूपविषयाकांक्षास्वस्यैवतस्मादज्ञानाध्यारोपणनिवृत्तिरेवात्मानमेवावेदित्युक्तंनात्मनोविषयीकरणंतत्कथमवेदित्याहाहंदृष्टे
र्द्रष्टात्माब्रह्मास्मिभवामीतिब्रह्मेतियत्साक्षादपरोक्षात्सर्वांतरआत्माशनायाद्यतीतोनेतिनेत्यस्थूलमनणित्येवमादिलक्षणंतदेवाहम
स्मिनान्यःसंसारीयथाभवानाहेति तस्मादेवंविज्ञानात्तद्ब्रह्मसर्वमभवद्ब्रह्माध्यारोपणापगमात्तत्कार्यस्यासर्वत्वस्यनिवृत्त्यासर्वमभवत्त
स्माद्युक्तमेवमनुष्याममन्यंतेयद्ब्रह्मविद्ययासर्वंभविष्यामइति यत्पृष्टंकिमुतद्ब्रह्मावेद्यस्मात्तत्सर्वमभवदितितन्निर्णीतंब्रह्मवाइदमग्रआ
सीत्तदात्मानमेवावेत्तस्मात्तत्सर्वमभवदिति॥ तत्तद्योयोदेवानांमध्येप्रत्यबुध्यतप्रतिबुद्धवानात्मानंयथोक्तेनविधिनासएवप्रतिबुद्धआ
त्मातद्ब्रह्माभवत्तथर्षीणांतथामनुष्याणांचमध्येदेवादीनामित्यादिलोकदृष्ट्यपेक्षयानब्रह्मत्वबुध्योच्यते तस्माद्युक्तमिति॥ वृत्तंकीर्त्तयति॥ यत्पृ
ष्टमिति॥ यथाग्निहोत्रादिमनुष्यत्वादिजातिमंतमर्थित्वादिविशेषवंतंचाधिकारिणमपेक्षतेनतथाज्ञानमितिवक्तुंतद्योयोदेवानामित्यादिवाक्यंतदक्षरा
णिव्याचष्टे॥ तत्तत्रेति॥ यथोक्तेनविधिनान्वयादिकृतपदार्थपरिशोधनादिनेत्यर्थः॥ ज्ञानादेवमुक्तिर्नसाधनांतरादित्येवकारार्थः विवक्षितमधिकार्यनिय
मंप्रकटयति॥ तथेत्यादिना॥ योयःप्रत्यबुध्यतसएवतदभवदितिपूर्वेणसंबंधः॥ ब्रह्मैवाविद्ययासंसरतिमुच्यतेचविद्ययेत्युक्तत्वाद्देवादीनांविद्याविद्याभ्यां

भा.
रामः
८७

देवादीनामित्यादीति तत्त्वदृष्ट्यैवभेदवचनेकाहानिरित्याशंक्याह॥पुरइति॥आविद्यकंभेदमनूद्यतचदात्मनास्थितब्रह्मचैतन्यस्यैवविद्याविद्याभ्यांबंधमोक्षोक्तेर्नपूर्वापरविरोधोस्तीतिफलितमाह॥अतइति॥अविद्यादृष्टिमनूद्यतत्त्वदृष्टिमन्वाचष्टे॥परमार्थतस्त्विति॥प्रतिबोधात्प्रागपितत्रदेवादिशरीरेष्वपरमार्थतोब्रह्मैवासीच्चेदोपदेशिकंज्ञानमनर्थकमित्याशंक्याह॥अन्यथैवेति॥नानाजीववादस्यतुनावकाशःप्रक्रमविरोधा

पुरःपुरुषआविशदितिसर्वत्रब्रह्मैवांतःप्रविष्टमित्यवोचामातःशरीराद्युपाधिजनितलोकदृष्ट्यपेक्षयादेवादीनामित्युच्यतेपरमार्थतस्तुतत्रतत्रब्रह्मैवाग्रआसीत्प्राक्प्रतिबोधाद्देवादिशरीरेष्वन्यथैवविभाव्यमानंतदात्मानमेवावेत्तथैवचसर्वमभवदस्याःब्रह्मविद्यायाःसर्वभावापत्तिःफलमित्येतस्यार्थस्यद्रढिम्नेमंत्रानुदाहरतिश्रुतिःकथंतद्ब्रह्मतदात्मानमेवाहमस्मीतिपश्यन्नेतस्माद्देवब्रह्मणो

मभवत्तद्योयोदेवानांप्रत्यबुध्यतसएवतदभवत्तथर्षीणांतथामनुष्याणांतद्धैतत्पश्यन्नृषिर्वामदेवःप्रतिपेदे ॥

दर्शनादृषिर्वामदेवाख्यःप्रतिपेदेहप्रतिपन्नवान्किल॥सएतस्मिन्ब्रह्मात्मदर्शनेवस्थितःएतान्मंत्रान्ददर्शअहंमनुरभवंसूर्यश्चेत्यादीन्तदेतद्ब्रह्मपश्यन्निितिब्रह्मविद्यापरामृश्यतेअहंमनुरभवंसूर्यश्चेत्यादिनासर्वभावापत्तिंब्रह्मविद्याफलंपरामृशतिपश्यन्सर्वात्मभावफलंप्रतिपेदेइतिअस्मात्प्रयोगाद्ब्रह्मविद्याऽसहायसाधनसाध्यमोक्षंदर्शयति॥ दित्याशयेनाह॥तदिति॥तथैवेत्युत्पन्नज्ञानानुसारित्वपरामर्शःतद्धैतदितिवाक्यमवतार्यव्याकरोति॥अस्याइति॥मंत्रोदाहरणश्रुतिमेवप्रश्नद्वारात्याचष्टे॥कथमित्यादिना॥ज्ञानान्मुक्तिरित्यस्यार्थवादोयमितिद्योतयितुंकिलेत्युक्तं॥आदिपदंसमस्तवामदेवसूत्रग्रहणार्थं॥तत्रावांतरविभागमाह॥तदेतदिति॥शतृप्रत्ययप्रयोगप्राप्तमर्थंकथयति ॥ पश्यन्निति ॥

लक्षणहेतोः क्रियायाइतिहेतौशतृप्रत्ययविधानान्नैरंतर्यंचसतिहेतुत्वसंभवात्प्रकृतेचप्रत्ययबलाद्ब्रह्मविद्यामोक्षयोर्नैरंतर्यंप्रतीतेस्तयासाधनांत
रानपेक्षयालभ्यमोक्षंदर्शयतिश्रुतिरित्यर्थः॥अत्रोदाहरणमाह॥भुंजानइति॥भुजिक्रियामात्रसाध्याहितृप्तिस्तत्रप्रतीयतेतथापश्यन्नित्यादावपिब्र
ह्मविद्यामात्रसाध्यामुक्तिर्भातीत्यर्थः॥तद्वैतदित्यादिव्याख्यायतदिदमित्याद्यवतारयितुंशंकयति॥सेयमिति॥ऐदंयुगीनानांकलिकालवर्त्तिनामि

भुंजानस्तृप्यतीतियद्वत्सेयंब्रह्मविद्ययासर्वभावापत्तिरासीन्महतांदेवादीनांवीर्यातिशयान्नेदानीमैदंयुगीनानांविशेषतोमनुष्याणाम
ल्पवीर्यत्वादितिस्यात्कस्यचिद्बुद्धिस्तद्व्युत्थापनायाह॥तदिदंप्रकृतंब्रह्मयत्सर्वभूतानुप्रविष्टंदृष्टिक्रियादिलिंगमेतद्धैतस्मिन्नपि
वर्त्तमानकालेयःकश्चिद्व्यावृत्तबाह्यौत्सुक्यःआत्मानमेवैवंवेदाहंब्रह्मास्मीतिअपोह्योपाधिजनितभ्रांतिविज्ञानाध्यारोपितान्विशे

हंमनुरभवंसूर्यश्चेतितदिदमप्येतर्हियएवंवेदाहंब्रह्मास्मीतिसइदंसर्वंभवतितस्यहनदेवाश्चनाभूत्याईशत

षान्संसारधर्मानाधिगतमनंतरमबाह्यंब्रह्मैवाहमस्मिकेवलमितिसोऽविद्याकृताऽसर्वत्वनिवृत्तेर्ब्रह्मविज्ञानादिदंसर्वंभवतिनहिमहा
वीर्येषुवामदेवादिषुहीनवीर्येषुवार्त्तमानिकेषुमनुष्येषुब्रह्मणोविशेषःतद्विज्ञानस्यवास्तिवार्त्तमानिकेषुपुरुषेषुतुब्रह्मविद्याफलेनैकांति
कताशंकयत तियावत्॥उत्तरवाक्यमुत्तरत्वेनावतार्यव्याकरोति॥तद्व्युत्थापनायेति॥तस्यतात्पर्यंवारयति॥यत्सर्वभूतेति॥प्रविष्टेप्रमाणमुक्तं
स्मारयति॥दृष्टीति॥व्यावृत्तंबाह्येषुविषयेषुउत्सुकंसाभिलाषंमनोयस्यसतथोक्तः॥एवंशब्दार्थमेवाह॥अहमिति॥तदेवज्ञानंविवृणोति॥अपोह्येति
॥यद्वामनुष्योहमित्यादिज्ञानेपरिपंथिनिकथंब्रह्माहमितिज्ञानमित्याशंक्याह॥अपोह्येति॥अहमित्यात्मज्ञानंसदासिद्धमितिनतद्दर्शयतितन्मित्याशं

संसारेति केवलमित्यद्वितीयत्वमुच्यते॥ज्ञानमुक्त्वातत्फलमाह॥सोविद्येति॥यत्तुदेवादीनांमहावीर्यत्वाद्ब्रह्मविद्ययामुक्तिःसिध्यतिनास्मदादीनामल्प
वीर्यत्वादितितत्राह॥नहीति॥श्रेयांसिबहुविघ्नानीतिप्रसिद्धिमाश्रित्यशंकते॥वार्त्तमानिकेष्विति॥शंकोत्तरत्वेनोत्तरंवाक्यमादायव्याकरोति॥अतआ
हेत्यादिना॥यथोक्तेनान्वयादिनाप्रकारेणब्रह्मविज्ञातुरितिसंबंधः॥अपिशब्दार्थंकथयति॥किमुतेति॥अल्पवीर्यास्तत्रविघ्नकरणेपर्याप्तानेतिकिमु
तवाच्यमितियोजनाअप्राप्तप्रतिषेधायोगमभिप्रेत्यचोदयति॥ब्रह्मविद्येतिशंकानिमित्तंदर्शयन्नुत्तरमाह॥उच्यतइति॥अधमर्णानिवोत्तमर्णादेवाद

इत्यतआहतस्यहब्रह्मविज्ञातुर्यथोक्तेनविधिनादेवामहावीर्याश्चनअपिअभूत्यैअभवनायब्रह्मसर्वभावस्यनेशतेनपर्याप्ताः॥किमुतान्ये
ब्रह्मविद्याफलप्राप्तौविघ्नकरणेदेवादयईशतइतिकाशंकेत्युच्यतेदेवादीन्प्रत्यृणवत्वान्मर्त्यानांब्रह्मचर्येणऋषिभ्योयज्ञेनदेवेभ्यःप्रज
यापितृभ्यइतिहिजायमानमेवर्णवंतंपुरुषंदर्शयतिश्रुतिःपशुनिदर्शनाच्चाथोअयंवेत्यादिलोकश्रुतेश्चात्मनोवृत्तिपरिपिपालयिषयाऽ
धमर्णानिवदेवाःपरतंत्रान्मनुष्यानमृतत्वप्राप्तिंप्रतिविघ्नंकुर्युरितिन्याय्यैवैषाशंकास्वपशून्स्वशरीराणीवचरक्षंतिदेवाःमहत्तरांहिवृत्तिं
कर्माधीनांदर्शयिष्यतिदेवादीनांबहुपशुसमतयैकैकस्यपुरुषस्य योमर्त्यान्प्रतिविघ्नंकुर्वंतीतिशेषः॥कथंदेवादीन्प्रतिमर्त्यानामनृणीत्वंतत्राह॥ब्र
ह्मचर्येणेति॥यथापशुरेवंसदेवानामितिमनुष्याणांपशुसादृश्यश्रवणाच्चतेषांपारतंत्र्याद्देवादयस्तान्प्रतिविघ्नंकुर्वंतीत्याह॥पश्विति अथोअयंवाआत्मा
सर्वेषांभूतानांलोकइतिचतेषांसर्वप्राणिभोग्यत्वश्रुतेश्चसर्वेतद्विघ्नकराभवंतीत्याह॥अथोइति॥लोकश्रुत्यभिप्रेतमर्थंप्रकटयति आत्मनइति यथाध
मर्णान्प्रत्युत्तमर्णाविघ्नमाचरंतितथादेवादयःस्वस्थितिपरिरक्षणार्थंपरतंत्रान्कर्मिणःप्रत्यमृतत्वप्राप्तिमुद्दिश्यविघ्नंकुर्वंतीतितेषांतान्प्रतिविघ्नकर्तृत्व
शंकासावकाशेत्यर्थःपशुनिदर्शनेनविवक्षितमर्थंविवृणोति॥स्वपशूनिति॥पशुस्थानीयानांमनुष्याणांदेवादिभीरक्ष्यत्वेहेतुमाह॥महत्तरामितिइतश्चदेवादीनांमनु

९१

वैस्यंतीति १

तस्मादिति॥इतश्चतेषांतान्प्रतिविघ्नकर्तृत्वंभातीत्याह यथेति स्वोलोको देहः॥एवंविलंसर्वंभूतभोज्योहमितिकल्पनावत्वं॥किंयापदानुषंगार्थश्चकारः॥ब्रह्मविलेपि मनुष्याणांदेवादिपारतंत्र्याविघातात्किमितितेविघ्नमाचरंतीत्याशंक्याह॥ब्रह्मविलइति॥देवादीनांमनुष्यान्प्रतिविघ्नकर्तृत्वशंकामुपपादितामुपसंहरति॥तस्मादिति॥नकेवलमुक्तहेतुबलादेवकिंतुसामर्थ्याच्चेत्याह॥प्रभाववंतश्चेति॥सामर्थ्याच्चेद्विद्याफलप्राप्तौतेषांविघ्नकरत्वंतर्हिकर्मफलप्राप्तावपिस्यादित्यतिप्रसंगंशंकते॥नन्विति॥भवतुतेषांसर्वत्रविघ्नाचरणमित्यतआह॥हंतेति॥अविश्रंभोविश्वासाभावः सामर्थ्याद्धिघ्नकर्तृत्वे ऽतिप्रसक्तंच

तस्मादेषांतन्नप्रियंयदेतन्मनुष्याविद्युरितिहिवक्ष्यतियथाहवैस्वायलोकायारिष्टिमिच्छेदेवंहैवंविदेसर्वाणिभूतान्यरिष्टिमिच्छंतीति च॥ब्रह्मविलेपारार्थ्यनिवृत्तेर्नस्वलोकत्वंपशुत्वंचेत्यभिप्रायः॥प्रियारिष्टिवचनाभ्यामवगम्यतेतस्माद्ब्रह्मविदोब्रह्मविद्याफलप्राप्तिं प्रतिकुर्युरेवविघ्नंदेवाः प्रभाववंतश्चहितेनन्वेवंसत्यन्यास्वपिकर्मफलप्राप्तिषुदेवानांविघ्नकरणंप्रसज्येतसमंहंततर्हिविस्रंभोभ्युदयनिःश्रेयससाधनानुष्ठानेषुतथेश्वरस्याचिंत्यशक्तित्वाद्धिघ्नकरणेप्रभुत्वंतथाकालकर्ममंत्रौषधितपसामेषांहिफलंसंपत्तिविपत्तिहेतुत्वंशास्त्रेलोकेचप्रसिद्धं॥अतोप्यनाश्वासःशास्त्रार्थानुष्ठाने॥न॥

तरमाह॥तथेतिअतिप्रसंगांतरमाह॥तथाकालेति॥विघ्नकरणेप्रभुत्वमितिपूर्वेणसंबंधः॥ईश्वरादीनांयथोक्तकार्यकरत्वेप्रमाणमाह॥एषांहीति॥एषह्येवसाधुकर्मकारयति॥कर्महैवतदूचतुरित्यादिवाक्यंशास्त्रशब्दार्थः॥देवादीनांविघ्नकर्तृत्ववदीश्वरादीनामपितत्संभवाद्वेदार्थानुष्ठानेविश्वासाभावात्तदप्रामाण्यंप्राप्तमितिफलितमाह॥अतोपीति॥किमिदंमवैदिकस्यचोद्यंकिंवावैदि

= तथाप्रयागस्नानाद्येकस्मिन्कर्मणिकालकृतफलवैचित्र्यंयथैकराश्युत्पन्नानांकालसाम्येपिकर्मकृतवैचित्र्यात्फलवैचित्र्यंइंद्रशत्रोवर्धस्वेतिमंत्रस्वरअश्विभ्यांगुरोराज्ञयार्कपत्रभक्षणेनांधीभूतायसद्रसायनभूतमपूपंदत्तंराहोर्वामृतपानात्क्वचिदक्रियाफलस्यमरणस्यनिरोधोयथायोगादीनांतपसाचशतजीवनश्रुत्युक्तायुरादिविपर्ययजनकत्वदर्शनात्क्वचिद्देशानांकालादिभ्यःप्राबल्यंयथाब्रह्मसभायांरैवतराजःक्वचिन्मंत्राणांद्रव्यादिभ्यःप्राबल्यंयथाशुक्रोदरेपीतस्यकचस्यसंजीवनविद्यावशाज्जीवनादौ=४

दृष्ट्याश्रुतिपादविषयादृष्टाद्यादानदर्शनात्प्राणिनांसुखदुःखादितारतम्यदृष्टेः स्वाभाववादेचनियतनिमित्तादानवैचित्र्यदर्शनयोरनुपपत्तेस्तदयोगा
त्कर्मफलंजगद्वैचित्र्यमित्यर्थः॥ द्वितीयंप्रत्याह सुखेति॥ कर्मैहेवेत्याद्याश्रुतिः कर्मणाबध्यतेजंतुरित्याद्यास्मृतिर्जगद्वैचित्र्यानुपपत्तिश्चन्यायः॥ कथमेताव
तादेवादीनांकर्मफलेविघ्नकर्तृत्वाभावस्तत्राह॥ कर्मणामिति॥ कथंहेतुसिद्धिरित्याशंक्यकर्मणःस्वोत्पत्तौदेवाद्यपेक्षांव्यतिरेकमुखेनदर्शयति॥ कर्मैहीति
स्वफलेपितस्यतत्सापेक्षत्वमस्तीत्याह॥ लब्ध्वेति॥ निष्पन्नमपिकर्मपूर्वोक्तंकारकमनपेक्ष्यस्वफलदानेशक्तंनभवतीत्यर्थः॥ कर्मणःस्वोत्पत्तौस्वफलेच

सर्वपदार्थानांनियतनिमित्तोपादानाज्जगद्वैचित्र्यप्रदर्शनाच्चस्वभावपक्षेचतदुभयानुपपत्तेःसुखदुःखादिफलनिमित्तंकर्मैत्येतस्मि
न्पक्षेस्थितेवेदस्मृतिन्यायलोकपरिगृहीतेदेवेश्वरकालास्तावन्नकर्मफलविपर्यासकर्त्तारःकर्मणांकांक्षितकारकत्वात्कर्मैहिशुभाशु
भंपुरुषाणांदेवकालेश्वरादिकारकमनपेक्ष्यनात्मानंप्रतिलभतेलब्धात्मकमपिफलदानेऽसमर्थं॥ क्रियायाहिकारकाद्यनेकनिमित्तो
पादानस्वाभाव्यात्तस्मात्क्रियानुगुणाहिदेवेश्वरादयइतिकर्मसुतावन्नफलप्राप्तिंप्रत्यविस्रंभःकर्मणामप्येषांवशानुगत्वंक्वचित्तत्साम
र्थ्यस्याप्रणोद्यत्वा

त्कारकसापेक्षत्वेहेतुमाह॥ क्रियायाहीति॥ कारकादीनामनेकेषांनिमित्तानामुपादानेनस्वभावोनिष्पद्यतेयस्याःसातथोक्ता
तस्याभावःकारकाद्यनेकनिमित्तोपादानस्वाभाव्यंतस्मादुभयत्रपरतंत्रंकर्मैत्यर्थः॥ देवादीनांकर्मापेक्षितकारकत्वेफलितमाह॥ तस्मादिति॥ इतोपि
कर्मफलेनाविस्रंभोस्तीत्याह॥ कर्मणामिति॥ एषांदेवादीनांक्वचिद्विघ्नलक्षणेकार्येकर्मणांवशवर्त्तित्वमेष्टव्यं॥ प्राणिकर्मापेक्षामंतरेणविघ्नकरणेऽति
प्रसंगादतोन्यत्रापिसर्वत्रतेषांतदपेक्षावाच्येत्यर्थः॥ तत्रतेषांकर्मवशवर्त्तित्वहेत्वंतरमाह॥ स्वसामर्थ्यस्येति॥ विघ्नलक्षणंहिकार्यंदुःखमुत्पादयति
नचदुःखमृतेपापाद्युपपद्यतेदुःखविषयेपापस्यसामर्थ्यस्यशास्त्राधिगतस्याप्रत्याख्येयत्वात्तस्मात्प्राणिनामदृष्टवशादेवदेवादयोविघ्नकारणमित्यर्थः॥

९२

दु १

आदिनां विषादिद्रव्येषु मारकादिगुणस्वभावग्रहणं-५ कुत्रचित्स्मर्त्तातेदैवद्रव्यादिस्वभावेभ्यः प्राधान्यं यथा चक्रवाकस्याग्निभक्षणादौ यथा वा मंत्र बहु शास्त्राणां छेदनाद्यभावे च- १



देवादीनां कर्मपारतंत्र्ये कर्मतत्परतंत्रं न स्यात्प्रधानगुणभाववैपरीत्यायोगादित्याशंक्याह॥ कर्मेति॥ इतश्च नामीषां नियतो गुणप्रधानभावोस्तीत्याह॥
दुर्विज्ञेयश्चेति॥ इति शब्दो हेत्वर्थः॥ यतो गुणप्रधानकृतो मतिविभ्रमो लोकस्योपलभ्यते तस्मादसौ दुर्विज्ञेयो न नियतोस्तीति योजना॥ मतिविभ्रमे
वादिविप्रतिपत्तिं हेतुमाह॥ कर्मैवेत्यादिना॥ कथं तर्हि निश्चयस्तत्राह॥ तत्रेति वेदवादीनुदाहरति॥ पुण्योवा इति॥ आदिपदेन धर्मरज्ज्वा व्रजेदूर्ध्वं
मित्यादयः स्मृतिवादा गृह्यंते॥ सूर्योदयदाहसेचनादौ कालज्वलनसलिलादेः प्राधान्यप्रसिद्धेर्न कर्मैव प्रधानमित्याशंक्याह॥ यद्यपीति॥ अनेकांति



त्कर्मकालदैवद्रव्यादिस्वभावानां गुणप्रधानभावस्त्वनियतो दुर्विज्ञेयश्चेति तत्कृतो मोहो लोकस्य कर्मैव कारकं नान्यत्फलप्राप्ताविति केचित्॥ दैवमेवेत्यपरे काल इत्येके द्रव्यादिस्वभाव इति केचित्सर्व एते संहता एवेत्यपरे तत्र कर्मणः प्राधान्यमंगीकृत्य वेदस्मृतिवादाः पुण्यो वै पुण्येन कर्मणा भवति पापः पापेनेत्यादयो यद्यप्येषां स्वविषये कस्यचित्प्राधान्योद्भव इतरेषां तत्कालीनप्राधान्यशक्तिसंभवस्तथापि न कर्मणः फलप्राप्तिं प्रत्यनैकांतिकत्वं शास्त्रन्यायनिर्धारितत्वात्कर्मप्राधान्यस्य नाविद्यापगममात्रत्वाद्ब्रह्मप्राप्तिफलस्य यदुक्तं ब्रह्मप्राप्तिफलं प्रति देवा विघ्नं कुर्युरिति तत्तन्न देवानां विघ्नकरणे सामर्थ्यं कस्माद्विद्याकालानंतरितत्वाद्ब्रह्मप्राप्तिफलस्य कथं

कत्वमप्रधानत्वं॥ तत्र हेतुमाह॥ शास्त्रेति॥ श्रुतिस्मृतिलक्षणं शास्त्रमुदाहृतं॥ जगद्वैचित्र्यानुपपत्तिर्न्यायः॥ कर्मफले देवादीनां विघ्नकर्तृत्वं प्रसं
गागतं निराकृत्य विद्याफले तेषां तदाशंकितं निराकरोति॥ नाविद्येति॥ तत्र नञर्थमुक्त्वानुवादपूर्वकं विशदयति॥ यदुक्तमिति॥ तत्र प्रश्नपूर्वकं
पूर्वोक्तं हेतुं स्फुटयति॥ कस्मादिति॥ आत्मनो ब्रह्मत्वप्राप्तिरूपाया मुक्तेरज्ञानध्वस्तिमात्रत्वात्तस्याश्च ज्ञानेन तुल्यकालत्वात्तस्मिन्सति तत्फलस्या
वश्यकत्वाद्देवादीनां विघ्नाचरणेनावकाशोस्तीत्यर्थः॥ उक्तमेवार्थमाकांक्षापूर्वकं दृष्टांतेन समर्थयते॥ कथमित्यादिना ॥ संदे



नैय्यायिकादयः ८

ब्रह्मविद्यातत्फलयोः समानकालत्वे फलितमाह॥ अतइति॥ देवादीनां ब्रह्मविद्याफले विघ्नकर्तृत्वाभावे हेत्वंतरमाह॥ यत्रेति॥ यस्यां विद्यायां सत्यां ब्रह्म
विदो देवादीनामात्मत्वमेव तस्यां सत्यां कथं ते तस्य विघ्नमाचरेयुः स्वविषये तेषां प्रातिकूल्याचरणानुपपत्तेरित्यर्थः॥ उक्तेर्थे समनंतरवाक्यमुत्थाप्य
व्याचष्टे तदेतदाहेति॥ कथं ब्रह्मविद्यासमकालमेव ब्रह्मविदे देवादीनामात्मा भवतितत्राह॥ अविद्यामात्रेति॥ अथेदं रजतमिति रजताकारायाः शुक्ति
कायाः शुक्तिकात्वमविद्यामात्रव्यवहितं तथा ब्रह्मविदोपि सर्वात्मत्वे तन्मात्रव्यवधानात्तस्याश्च विद्योदयेनांतरीयकत्वेन निवृत्तेर्युक्तं विद्यातत्फल

यथालोके द्रष्टुश्चक्षुष आलोकेन संयोगो यत्कालस्तत्काल एव रूपाभिव्यक्तिरेवमात्मविषयं ज्ञानं यत्कालं तत्काल एव तद्विषयाज्ञान
तिरोभावः स्यादतो ब्रह्मविद्यायां सत्यामविद्याकार्यानुपपत्तेः प्रदीप इव तमः कार्यस्य तत्के कस्य विघ्नं कुर्युर्देवा यत्रात्मत्वमेव देवानां ब्रह्म
विदः तदेतदाहात्मा स्वरूपं ध्येयं यत्तत्सर्वशास्त्रैर्विज्ञेयं ब्रह्म हि यस्मादेषां देवानां स ब्रह्मविद्भवति॥ ब्रह्मविद्यासमकालमेवाविद्या
मात्रव्यवधानापगमाच्छुक्तिकाया इव रजताभासायाः शुक्तिकात्वमित्यवोचाम अतो नात्मनः प्रतिकूलत्वे देवानां प्रयत्नः संभवति
तस्य ह्यनात्मभूतं फलं देशकालनिमित्तांतरितं तत्रानात्मविषये सफलः प्रयत्नो विघ्नाचरणाय देवादीनां न त्विह विद्यासमका
ले आत्मभूते देशकालनिमित्तानंतरितेऽवसरानुपपत्तेरेवं तर्हि विद्याप्रत्ययसंतत्यभावाद्विपरीतप्रत्ययतत्कार्ययोश्च दर्शनाद्धत्य एवा
त्मप्रत्ययोऽविद्यानिवर्त्तको न तु पूर्व इति॥ योः समानकालत्वमुक्तं चैतत्प्रतिवचनदशायामित्यर्थः॥ उक्तस्य हेतोरपेक्षितं वदन्ब्रह्मविदो देवा

द्यात्मत्वे फलितमाह॥ अतइति कैवल्ये तेषां विघ्नाकर्त्तृत्वे कुत्र तत्कर्त्तृतेत्याशंक्याह॥ यस्य हीति॥ तेषां निरंकुशप्रसरत्वं वारयति॥ नत्विति॥ सफलः प्र
यत्न इति पूर्वेण संबंधः तस्य निरवकाशत्वादिति हेतुमाह॥ अवसरेति॥ ज्ञानस्यानंतरितफलत्वात्तत्फले देवादीनां न विघ्नकर्तृतेत्युक्तमुपेत्य स्वयूथ्यः शं

के॥ सं॰ वृत्तिः॥

97

ज्ञानस्यानंतरफलत्वेनतदज्ञानंनिवर्त्तयेदज्ञानामिवतत्वज्ञानामपिब्रह्मास्मीतिज्ञानसंतत्यभावान्नचाद्यमेवज्ञानमज्ञानध्वंसिप्रागिवोर्ध्वमपिरागा
देस्तत्कार्यस्यचदृष्टत्वादतोदेहपातकालीनंज्ञानमज्ञानंनिवर्त्तयतीतिकुतोजीवन्मुक्तिरित्यर्थः॥अंत्यज्ञानस्याज्ञाननिवर्त्तकत्वंतत्संततेर्वाप्रथमे
तस्यांत्यत्वादात्मविषयत्वाद्वातद्भासितेतिविकल्प्योभयत्रदृष्टांताभावंमत्वाद्वितीयेदोषांतरमाह॥नप्रथमेनेति॥तदेवानुमानेनस्फोरयति॥यदिही
ति॥कल्पांतरंशंकयति॥एवंतर्हीति॥अविछिन्नाज्ञानसंततिरज्ञानंनिवर्त्तयतीत्येतद्दूषयति॥नेत्यादिना॥जीवनादिहेतुकःप्रत्ययोबुभुक्षितोहं

नप्रथमेनानैकांतिकत्वात् यदिहिप्रथमआत्मविषयःप्रत्ययोऽविद्यांननिवर्त्तयतितथांत्योपितुल्यविषयत्वादेवंतर्हिसंततोऽविद्यानि
वर्त्तकोनविछिन्नइतिनजीवनादौसतिसंतत्यनुपपत्तेः॥नहिजीवनादिहेतुकेप्रत्ययेसतिविद्याप्रत्ययसंततिरुपपद्यतेविरोधाद्
यजीवनादिप्रत्ययतिरस्करणेनेवामरणांताविद्यासंततिरितिचेन्नप्रत्ययेयत्तासंतानानवधारणाच्छास्त्रार्थानवधारणदोषादियत्तां
प्रत्ययानांसंततिरविद्यायानिवर्त्तिकेत्यनवधारणाच्छास्त्रार्थोनावध्रियेततच्चानिष्टंसंततिमात्रत्वेनावधारितएवेतिचेन्नाद्यंतयोर
विशेषा

भोस्येहमित्यादिलक्षणस्तस्यबुभुक्षाद्युपप्लुतस्यब्रह्मास्मीत्यविछिन्नप्रत्ययसंततेश्चविरुद्धतयायौगपद्यायोगेहेतुमाह विरोधा
दिति॥प्रत्ययसंततिमुपपादयन्नाशंकते॥अथेति॥उक्तरीत्याप्रत्ययसंततिमुपेत्यदूषयति॥नेत्यादिना॥तमेवदोषंविशदयति॥इयत्तामिति॥शा
स्त्रार्थोज्ञानसंततिरज्ञानंनिवर्तयतीत्येवमात्मकः॥आत्मेत्येवोपासीतेतिश्रुतेरात्मज्ञानसंततिमात्रसद्भावेततोविद्याद्वाराऽविद्याध्वस्तिरितिशास्त्रा
र्थनिश्चयसिद्धिरित्याह॥संततीति॥आत्मधीसंततेःसत्वेपिनसात्मविषयत्वाद्विद्याद्वाराऽविद्यांनिवर्तयतिआद्यद्वित्रिक्षणस्यात्मधीसंततौव्यभिचारा
दितिपरिहरति॥नाद्यंतयोरिति॥पूर्वस्मिन्प्रत्ययेनाविद्यानिवर्तकत्वमंत्येतुतथेत्युक्तेतस्यांत्यत्वात्तथात्वंचेद्दृष्टांताभावआत्मविषयत्वात्तथात्वेप्रथमप्रत्यये

व्यभिचारः स्यादित्युक्तो दोषो आद्यासंततिर्नाविद्याध्वंसिनी अंत्या तु तथेत्यंगीकारेपि विशेषाभावादंत्यत्वात्तस्याः निवर्त्तकत्वे दृष्टांताभावः आत्मविषयत्वात्तद्भावे त्वनैकांतिकत्वमित्येतावेवदोषौ स्यातामित्युक्तं विवृणोति॥ प्रथमेति॥ अंत्यप्रत्ययस्य संततेश्चाविद्यानिवर्तकत्वासंभवे प्रथमस्यापि रागाद्यनुवृत्या तद्योगाज्ज्ञानमज्ञानानिवर्त्तकमेवेति चोदयति॥ एवं तर्हीति श्रुतिविरोधेन परिहरति॥ न तस्मादिति॥ तासामर्थवादत्वेनाविवक्षितत्वं शंकते॥ अर्थवाद इति चेदिति॥ अतिप्रसंगेन दूषयति॥ न सर्वेति॥ यथोक्तश्रुतीनामर्थवादत्वेपि कथं सर्वशाखोपनिषदां तत्वप्रसक्तिरि

त्यथमाविद्याप्रत्ययसंततिर्मरणकालांतावेति विशेषाभावादाद्यंतयोः प्रत्यययोः पूर्वोक्तो दोषो प्रसज्येयातां एवं तर्ह्यनिवर्त्तक एवेति चेन्न तस्मात्तत्सर्वमभवदिति श्रुतेः भिद्यते हृदयग्रंथिः तत्र को मोह इत्यादिश्रुतिभ्यश्चार्थवाद इति चेन्न सर्वशाखोपनिषदामर्थवादत्वप्रसंगादेतावन्मात्रार्थत्वोपक्षीणा हि सर्वशाखोपनिषदः प्रत्यक्षप्रमितात्मविषयत्वादस्त्वेवेति चेन्नोक्तपरिहारत्वादविद्याशोकमोहभयादिदोषनिवृत्तेः प्रत्यक्षत्वादिति चोक्त एव परिहारः तस्मादाद्योंत्यः संततोऽसंततश्चेत्यचोद्यमेतत्॥ अविद्यादिदोषनिवृत्तिफलावसानत्वाद्विद्यायाः य एवाविद्यादिदोषनिवृत्तिफलकृत्प्रत्यय आद्योंत्यः संततोऽसंततो वा स एव विद्येत्यभ्युपगमान्न चोद्यस्यावतारगंधोप्यस्ति॥

त्याशंक्याह॥ एतावदिति॥ एतावन्मात्रार्थत्वमात्मज्ञानात्तदज्ञाननिवृत्तिरित्येतावन्मात्रस्यार्थस्य सद्भावः॥ अहंधीगम्ये प्रतीचित्तासां प्रवृत्तेः संवादविसंवादाभ्यां मानत्वायोगाद्दस्त्येवार्थवादतेति प्रसंगस्येष्टत्वं शंकते॥ प्रत्यक्षेति॥ प्रमातुरहंधीगम्यतानात्मनस्तत्साक्षिणस्तस्य वेदांताः ब्रह्मत्वं बोधयंतीति न संवादादिशंकेत्याह॥ नोक्तेति॥ विद्वदनुभवमाश्रित्यापि फलश्रुतेरर्थवादत्वं समाहितमित्याह॥ अविद्येति॥ आत्मज्ञानस्य तदज्ञाननिवर्त्तकत्वे स्थिते परमतस्य निरवकाशत्वं फलतीत्याह॥ तस्मादिति॥ चोद्यस्यानवकाशमेव विशदयति॥ अविद्यादीति॥ ज्ञानसंत

२.२.
१२

तैस्यतथाभूतस्येनयाषष्ठ्या=४

संप्रतिपरोक्तमनुवदति॥यत्तूक्तमितिदर्शनान्नाद्यंज्ञानमज्ञानध्वंसीतिशेषः॥प्रारब्धकर्मशेषस्यविद्वद्देहस्थितिहेतुत्वाद्विदुषोपियावदारब्धस्यंरा
गाद्याभासविरोधात्तस्येचदेहाभासजगदाभासयोरभावान्नाद्यज्ञानस्याज्ञाननिवर्त्तकत्वानुपपत्तिरित्युत्तरमाह॥नतच्छेषेति॥तदेवप्रपंचयति॥ये
नेत्यादिना॥तच्छब्दस्याक्षिपतीत्यनेनसंबंधः॥आक्षेपकत्वनियमंसाधयति॥विपरीतेति॥मिथ्याज्ञानेनरागादिदोषेणचनिमित्तेनप्रवृत्तत्वादितिया
वत्॥तथाभूतस्येत्यस्यविवरणंविपरीतप्रत्ययेत्यादि॥कर्मैवषष्ठ्याविशेष्यते॥तावन्मात्रंप्रतिभासमात्रशरीरं॥प्रारब्धकर्मणोप्यज्ञानजन्यत्वेनज्ञान
निवर्त्यत्वान्नज्ञानिनस्ततोदेहाभासादिसंभवतीत्याशंक्याह॥मुक्तेषुवदिति॥यथाप्रवृत्तवेगस्येषादेर्वेगस्यादेवाप्रतिबद्धस्यस्ययस्तथाभोगादेव

यत्तूक्तंविपरीतप्रत्ययतत्कार्ययोश्चदर्शनादिति॥नतच्छेषस्थितिहेतुत्वात् येनकर्मणाशरीरमारब्धंतद्विपरीतप्रत्ययदोषनिमित्त
त्वात्तस्यतथाभूतस्यैवविपरीतप्रत्ययदोषसंयुक्तस्यफलदानेसामर्थ्यमितियावच्छरीरपातस्तावत्फलोपभोगांगतयाविपरीतप्रत्य
यंरागादिदोषंचतावन्मात्रमाक्षिपत्येवमुक्तेषुवत्प्रवृत्तफलत्वात्तद्धेतुकस्यकर्मणस्तेननतस्यनिवर्त्तिकाविद्याऽविरोधात्किंतर्हिस्वा
श्रयादेवस्वात्मविरोध्यविद्याकार्यंयदुत्सित्सुतन्निरुणध्य

रब्धस्ययोभोगेनत्वितरेक्षपयित्वासंपद्यतइतिन्यायान्नज्ञानादित्यर्थः॥तद्धेतु
कस्यविपरीतप्रत्ययादिप्रतिभासकार्यजनकस्येतियावत्॥ननुज्ञानमनारब्धकर्मवदारब्धमपिकर्मकर्मत्वाविशेषान्निवर्त्तयिष्यतिनेत्याहते
नेति॥अविद्यालेशेनसहारब्धस्यकर्मणोविद्यानिवर्त्तिकानभवतीत्यत्रहेतुमाह अविरोधादिति॥नहिज्ञानादारब्धंकर्मक्षीयतेतदविरोधित्वादविद्या
लेशाच्चतदवस्थितेरन्यथाजीवन्मुक्तिशास्त्रविरोधादितिभावः॥आरब्धस्यकर्मणोज्ञानानिवर्त्यत्वेज्ञानंकर्मनिवर्त्तकमितिकथंप्रसिद्धिरित्याह॥किंत
र्हीति॥प्रसिद्धिविषयमाह॥स्वाश्रयादिति॥ज्ञानविरोधियदज्ञानकार्यमनारब्धकर्मज्ञानाश्रयप्रमात्राद्याश्रयादज्ञानफलात्मनाजन्माभिमुखंतन्निवर्त्तकं

विमतं न ज्ञाननिवर्त्यं कर्मत्वादारब्धकर्मवदित्यनुमानादनारब्धमपि कर्म न ज्ञाननिरस्यमित्याशंक्याह॥ अनागतत्वादिति॥ अनारब्धं कर्म फलरूपेणाप्रवृत्तत्वात्प्रवृत्तेन ज्ञानेन निवर्त्यं आरब्धं तु कर्म फलरूपेण जातत्वात्तद्भोगादृते न निवृत्तिमर्हति॥ अनुमानं त्वागमापबाधितमप्रमाणमित्यर्थः॥ नन्वनारब्धकर्मनिवृत्तावपि विदुषश्चेदारब्धकर्म न निवर्तते॥ तथा च यथा पूर्वं विपरीतप्रत्ययादिप्रवृत्तेर्विद्वदविद्वद्विशेषो न स्यादित्यत आह॥ किं चेति॥ हेतुसिध्यर्थं विपरीतप्रत्ययविषयं विशदयति॥ अनवधृतेति॥ संप्रति विद्वद्विषये विषयाभावाद्विपरीतप्रत्ययस्यानुत्पत्तिमुपन्यस्यति॥ स चेति॥ आश्रयस्याग्रही

नागतत्वादतीतं हीतरत्॥ किं च न च विपरीतप्रत्ययो विद्यावतउत्पद्यते निर्विषयत्वादनवधृतविषयविशेषस्वरूपं हि सामान्यमात्रमाश्रित्य विपरीतप्रत्यय उत्पद्यमान उत्पद्यते यथा शुक्तिकायां रजतमिति स च विषयविशेषावधारणवतोऽशेषविपरीतप्रत्ययाश्रयस्योपमर्दितत्वान्न पूर्ववत्संभवति शुक्तिकादौ सम्यक्प्रत्ययोत्पत्तौ पुनरदर्शनात् क्वचित्तु विद्यायाः पूर्वोत्पन्नविपरीतप्रत्ययजनितसंस्कारेभ्यो विपरीतप्रत्ययावभासाः स्मृतयो जायमाना विपरीतप्रत्ययप्राप्तिमकस्मात्कुर्वंति यथा विज्ञातदिग्विभागस्याप्यकस्माद्दिग्विपर्ययविभ्रमः सम्यग्ज्ञानवतोऽपि चेत्पूर्ववद्विपरीतप्रत्यय उत्पद्यते

त विशेषस्य सामान्यमात्रस्यालंबनस्येति यावत्॥ आश्रयस्येति पाठेप्ययमेवार्थः॥ विदुषो विपरीतप्रत्ययादिप्रतिभासेऽपि न यथापूर्वं तत्त्वं॥ यस्य तु यथापूर्वं संसारित्वमित्यादिन्यायविरोधादिति मत्वोक्तं॥ न पूर्ववदिति॥ तत्रानुभवं प्रमाणयति॥ शुक्तिकादाविति यथाऽज्ञानवतो विपरीतप्रत्ययभावोऽनुभूयते तथा तद्वतोऽपि क्वचिद्विपरीतप्रत्ययो दृश्यते तथा च कथं तद्वानुभवविरोधान्न प्रसरेदित्याशंक्य परोक्षज्ञानवति विपरीतप्रत्ययसत्त्वेऽपि नापरोक्षज्ञानवति तद्धार्ढ्यमित्यभिप्रेत्याह॥ क्वचित्त्विति॥ परोक्षज्ञानाधारः सप्तम्यर्थः॥ पंचमी त्वपरोक्षज्ञानार्था॥ अकस्मादित्यज्ञानातिरिक्तक्लृप्तसामग्र्यभावोक्तिः॥ विदुषो मिथ्याज्ञानाभावमुक्त्वा विपक्षे दोषमाह सम्यगिति॥

बृ·र· तत्पूर्वकमनुष्ठानमादिशब्दार्थः॥ सम्यग्ज्ञानाविस्रंभे दोषांतरमाह॥ सर्वं चेति॥ ज्ञानादज्ञानध्वंसे तदुत्थमिथ्याज्ञानस्य सविषयस्य बाधितत्वा भा·
९३ त्वविदुषो रागादिरित्युपपाद्य ज्ञानान्मोक्षे तज्जन्ममात्रेण शरीरस्थितिहेत्वभावात्पतेदिति सद्योमुक्तिपक्षं प्रत्याह॥ एतेनेति॥ प्रवृत्तफलस्य कर्म
णो भोगादृते क्षयो नास्तीत्युक्तेन न्यायेनेति यावत्॥ आरब्धकर्मणा देहस्थितिमुक्त्वा इतरेषां ज्ञाननिवर्त्यत्वमुपसंहरति॥ ज्ञानोत्पत्तेरिति॥ तस्य ह
न देवाश्च नेति विदुषो विद्याफलप्राप्तौ विघ्ननिषेधश्रुत्यनुपपत्त्या यथोक्तोऽर्थो भातीत्यर्थः॥ न केवलं श्रुतार्थापत्त्या यथोक्तार्थसिद्धिः किं तु श्रुतिस्मृति

सम्यग्ज्ञानेऽप्यविस्रंभात्कृत्स्नार्थविज्ञानादौ प्रवृत्तिरसमंजसा स्यात्॥ सर्वं च प्रमाणमप्रमाणं संपद्येत प्रमाणाप्रमाणयोर्विशेषानु
पपत्तेरेतेन सम्यग्ज्ञानानंतरमेव शरीरपाताभावः कस्मादित्येतत्परिहृतं ज्ञानोत्पत्तेः प्रागूर्ध्वं तत्कालजन्मांतरसंचितानां च कर्म
णामप्रवृत्तफलानां विनाशः सिद्धो भवति फलप्राप्तिविघ्ननिषेधश्रुतेरेव क्षीयंते चास्य कर्माणि॥ तस्य तावदेव चिरं सर्वे पाप्मानः प्रदू
यंते तं विदित्वा न लिप्यते कर्मणा पापकेन एतमु हैवैते न तरतो नैनं कृताकृते तपतः॥ एतं ह वाव न तपति॥ न बिभेति कुतश्चने
त्यादिश्रुतिभ्यश्च॥ ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते इत्यादिस्मृतिभ्यश्च यत्तु कर्मणैः प्रतिबध्यत इति॥ तन्न॥ अविद्याविषय
त्वादविद्यावान्ह्यणी तस्य कर्तृत्वाद्युपपत्तेर्यत्र वा अन्यदिव स्यात्तत्रान्योन्यं पश्येदिति हि वक्ष्यत्यनन्यत्वाद्धि स्वात्मास्य यत्राविद्यायां सत्या
मन्यदिव स्यात्तिमिरकृतद्वितीयचंद्रवत्तत्राविद्याकृतानेककारकापेक्षं दर्शनादि कर्म तत्कृतं फलं च दर्शयति तत्रान्योन्यं पश्येदित्यादिना

भ्यामपीत्याह क्षीयंते चेत्यादिना॥ जीवन्मुक्तिं साधयता ज्ञानफले प्रतिबंधाभाव उक्तः॥ इदानीं पूर्वोक्तं शंकाबीजमनुवदति॥ यत्त्विति॥ कर्मणि त्वं हि विदुषो राम:
विदुषो वेति विकल्प्याद्यं दूषयन्द्वितीयमंगीकरोति॥ तन्नेत्यादिना॥ कर्मणि तस्येति शेषः॥ तदेव स्फुटयति॥ अविद्यावानिति॥ अविदुषोऽस्ति कर्तृत्वादी सत्त्रमा ९३

वक्ष्यमाणवाक्यार्थप्रकृतोपयोगित्वेनकथयतिअनन्यदिति॥कर्मणित्वंविदुषोनेत्युक्तंव्यक्तीकर्तुंतस्यनास्तिकर्तृत्वादीत्यत्रापिप्रमाणमाह॥यत्रपुनरिति॥
विद्यायांसत्यामविद्यायास्तत्कृतानेकत्वभ्रमस्यचप्रहाणंयत्रसंपद्यते॥तत्रतस्मादेवकारणात्तत्केनेत्यादिनाकर्मादेरसंभवंदर्शयतीतियोजना॥प्रमा
णसिद्धमर्थंनिगमयति॥तस्मादिति॥अविद्याविषयमृणित्वमित्येतत्प्रपंचयन्नविद्यासूत्रमवतारयति॥एतच्चेति॥तदृणित्वमविद्याविषयंयथास्फु

यत्रपुनर्विद्यायांसत्यामविद्याकृतानेकत्वभ्रमप्रहाणात्तत्केनकंपश्येदितिकर्मासंभवंदर्शयतितस्मादविद्यावद्विषयएवऋणित्वंकर्म
संभवान्नेतरत्रएतच्चोत्तरत्रव्याचिख्यासिष्यमाणैरेववाक्यैर्विस्तरेणप्रदर्शयिष्यामः॥तद्यथेहैवतावदथयःकश्चिदब्रह्मविदन्यामात्म
नोव्यतिरिक्तांयांकांचिद्देवतामुपास्तेस्तुतिनमस्कारयागबल्युपहारप्रणिधानध्यानादिनोपास्तेतस्याःगुणभावमुपगम्यास्तेअन्योसावना

आत्माह्येषांऽसभवत्यथयोन्यांदेवतामुपास्तेन्योसावन्योहमस्मीतिनसवेदयथापशुरेवऽसदेवानां ॥

त्मामतःपृथगन्योहमस्म्यधिकृतोमयास्मात्कर्मणिवस्त्प्रतिकर्तव्यमित्येवंप्रत्ययःसन्नुपास्तेनसइत्थंप्रत्ययोवेदविजानातितत्त्वंनसकेवलमे
वंभूतोऽविद्वानविद्यादिदोषवानेवकिंतर्हियथापशुर्गवादिर्वाहनदोहनाद्युपकारैरुपभुज्यतएवंसइज्याद्यनेकोपकारैरुपभोक्तव्यत्वादे
कैकेनदेवादीनामतःपशुरिवसर्वार्थेषुकर्मस्वधिकृतइत्यर्थः॥ ऽभवतितथाथयोन्यामित्यादावनंतरग्रंथएवकथ्यतेप्रथममित्यर्थः॥तदक्ष
राणिव्याकरोति॥अथेत्यादिना॥विद्यासूत्रानंतर्यमविद्यासूत्रस्याथशब्दार्थः॥यागोगंधपुष्पादिनापूजा॥बल्युपहारोनिवेद्यसमर्पणं॥प्रणिधा
नमैकाग्र्यं॥ध्यानंतत्रैवानंतरितप्रत्ययप्रवाहकरणं॥आदिपदंप्रदक्षिणादिग्रहणार्थं॥भेददर्शनमत्रोपासनंशास्त्रीयमित्यभिप्रेत्येतदेवविवृणोति॥

अथोपासनविधिस्तत्र सूत्रमाह ॥

वाक्यांतरमवतार्यव्याचष्टे॥नसकेवलमिति॥सोऽविद्वानेवमुक्तदृष्टांतवशात्पशुरिवदेवादीनांभवति॥तेषांमध्येतस्यैकैकेनबहुभिरुपकारैर्भोग्य
त्वादितियोजना॥पशुसाम्येसिद्धमर्थंकथयति॥अतइति॥अथानेनाविद्यासूत्रेणकिंकृतंभवतीत्यपेक्षायामविद्यायाःसंसारहेतुत्वंसूत्रितमितिवृ
त्तमविद्याकार्यंकर्मफलंसंक्षिपति॥एतस्येत्यादिना॥कर्मसहायभूताविद्यादेवताध्यानात्मिका॥शास्त्रीयस्वाभाविककर्मणोऽपिद्वैविध्यंसूचयितुं

एतस्यह्यविदुषोवर्णाश्रमादिप्रविभागवतोह्यधिकृतस्यकर्मणोविद्यासहितस्यकेवलस्यचशास्त्रोक्तस्यकार्यंमनुष्यत्वादिकोब्रह्मांतः
उत्कर्षःशास्त्रोक्तविपरीतस्यचस्वाभाविकस्यकार्यंमनुष्यत्वादिकएवस्थावरांतोऽपकर्षोयथाचैतत्तथात्रयोवावलोकाइत्यादिनावक्ष्यामः
कृत्स्नेनैवाध्यायशेषेणविद्यायाश्चकार्यंसर्वात्मभावापत्तिरित्येतत्संक्षेपतोदर्शितंसर्वाहीयमुपनिषद्विद्याऽविद्याविभागप्रदर्शनेनैवोपक्षी

यथाहवैबहवःपशवोमनुष्यंभुञ्ज्युरेवमेकैकःपुरुषोदेवान्भुनक्त्ये

णायथाचैषोऽर्थःकृत्स्नस्यशास्त्रस्यतथाप्रदर्शयिष्यामः॥यस्मादेवंतस्मादविद्यावंतंपुरुषंप्रतिदेवाईशतेविघ्नंकर्तुंअनुग्रहंचेत्येतद्दर्श
यतियथाहवैलोकेबहवोगोऽश्वादयःपशवोमनुष्यंस्वामिनमात्मनोऽधिष्ठातारंभुञ्ज्युःपालयेयुरेवंबहुपशुस्थानीयएकैकोऽविद्वान्पुरुषोदेवा
न्देवानितिपित्राद्युपलक्षणार्थंभुनक्तिपालयति

चशब्दः॥तत्रतुसहकारिणीविद्यानग्नस्त्रीदर्शनादिरूपेतिभेदःकथंयथोक्तंकर्मफलम
विद्यावतःस्यादित्याशंक्याह॥यथाचेति॥सूत्रद्वैविध्यसिध्यर्थंविद्यासूत्रार्थमनुक्रामति॥विद्यायाश्चेति॥सूत्रांतराशंकांवारयति॥सर्वाहीति कथमे
तदवगम्यतेतत्राह॥यथेति॥मनुष्याणामविद्यावतांदेवपशुत्वेस्थितेफलितमाह॥यस्मादिति॥तत्रप्रमाणत्वेनोत्तरंवाक्यमुत्थापयति॥एतदिति॥

किमिदमविद्यावतो देवादिपालनमित्याशंक्य वाक्यतात्पर्यमाह॥ इमेइंद्रादय इति॥ अभिसंधिरविद्यावतः पुरुषस्येति शेषः॥ एकस्मिन्नेवेत्या
दिवाक्यमादाय व्याचष्टे॥ तत्रेति॥ मनुष्याणां पशुभावाद्व्युत्थानमप्रियं देवानामिति स्थिते तदुपायमपि तत्त्वज्ञानं तेषां देवा विद्विषंतीत्याह॥ त
स्मादिति॥ तत्त्वविद्यायाः दौर्बल्यत्वं कथं च नेत्युक्तं॥ मनुष्याणामुत्कर्षं देवानामसूयंतीत्यत्र प्रमाणमाह॥ तथाचेति॥ तेषां ब्रह्मविद्यया कैवल्याप्तिः

इमे इंद्रादयो न्येमत्तो ममेशितारो भृत्य इवाहमेषां स्तुतिनमस्कारेज्यादिनाराधनं कृत्वाभ्युदयं निश्रेयसं च तत्प्रत्तं फलं प्राप्स्यामीत्ये
वमभिसंधिः॥ तत्र लोके बहुपशुमतां यथैकस्मिन्नेव पशावादीयमाने व्याघ्रादिनाऽपह्रियमाणे महदप्रियं भवति तथा बहुपशुस्था
नीय एकस्मिन्पुरुषे पशुभावाद्व्युत्तिष्ठत्यप्रियं भवतीति किं चित्रं देवानां बहुपश्वपहरण इव कुटुंबिनस्तस्मादेषां देवानां तन्नप्रि

कस्मिन्नेव पशावादीयमानेऽप्रियं भवति किमु बहुषु तस्मादेषां तन्न प्रियं यदेतन्मनुष्या विद्युः॥ १०॥

यं किं तद्यदेतद्ब्रह्मात्मतत्त्वं कथं च न मनुष्या विद्युर्जानीयुः॥ तथा च स्मरणमनुगीतासु भगवतो व्यासस्य क्रियावद्भिर्हि कौंतेय देवलोकः
समावृतः॥ न चैतदिष्टं देवानां मर्त्यैरुपरिवर्त्तनमिति॥ अतो देवाः पशूनिव व्याघ्रादिभ्यो ब्रह्मविज्ञानाद्विघ्नमाचिकीर्षंत्यस्मदुपभोग्य
त्वान्माव्युत्तिष्ठेयुरिति यं तु मुमोचयिषंति तं श्रद्धादिभिर्योजयंति विपरीतमश्रद्धादिभि

सुतरामनिष्टेति भावः॥ देवादीनां मनुष्येषु ब्रह्म
ज्ञानस्याप्रियत्वेपि किं स्यादित्याशंक्याह॥ अत इति॥ तेषां विघ्नमाचरतामभिप्रायमाह॥ अस्मदिति॥ तर्हि देवादिभिरुपहतानां मनुष्याणां मुमुक्षैव
न संपद्येतेत्याशंक्याह॥ यं त्विति॥ उक्तं हि॥ न देवा दंडमादाय रक्षंति पशुपालवत्॥ यं हि रक्षितुमिच्छंति बुध्या संयोजयंति तमिति॥ तर्हि किमिति सर्वो ने

देवानामसंतोषंकमाह॥ विपरीतमिति॥

देवतापराङ्मुखममुमोचयिषितमितियावत्॥ संप्रतिदेवाप्रियवाक्येनध्वनितमर्थमाह॥ तस्मादिति॥ अविद्वत्सुमनुष्येषुदेवादीनांस्वातं
त्र्यंतद्बुद्ध्यर्थः॥ श्रद्धादिप्रधानस्तदाराधनपरःसन्देवानांप्रियःस्यात्तद्विपक्षस्त्वमुमुक्षावैकल्यादित्यर्थः॥ तत्रेतिविषयश्चतत्प्रसादात्सादित
वैराग्यःसर्वाणिकर्माणिसंन्यस्यविद्याप्रापकश्रवणादिकंप्रत्येकाग्रमनाःस्यादित्याह॥ अप्रमादीति॥ श्रवणादिकमनुतिष्ठन्नपिवर्णाश्रमाचारप
रोभवेदन्यथाविद्यालक्षणेफलेप्रतिबंधसंभवादित्याशयेनाह विद्यांप्रतीति॥ भयादिनिमित्ताध्वनेर्विकृतिः काकुरुच्यते॥ यथाहकाकुःस्त्रियां

त्तस्मान्मुमुक्षुर्देवाराधनपरःश्रद्धाभक्तिपरःप्रणेयोऽप्रमादीस्याद्विद्याप्राप्तिंप्रतिविद्यांप्रतीतिवाकाकैतत्प्रदर्शितंभवतिदेवाऽप्रि
यवाक्येन॥ १०॥ सूत्रितःशास्त्रार्थःआत्मेत्येवोपासीतेति॥ तस्यचव्याचिख्यासितस्यसाऽर्थवादेनतदाहुर्यद्ब्रह्मविद्ययेत्यादिनासंबंध
प्रयोजनेअभिहितेअविद्यायाश्चसंसाराधिकारकारणत्वमुक्तंअथयोन्यांदेवतामुपास्तइत्यादिनातत्राविद्वान्पशुवद्देवादिक
र्मकर्त्तव्यतयापरतंत्रइत्युक्तंकिंपुनर्देवादिकर्मकर्त्तव्यत्वेनिमित्तंवर्णाआश्रमाश्चतत्रकेवर्णाइत्यतइदमारभ्यते

विकारोयःशोकभीत्यादिभिर्ध्वनेरिति॥ तयाकाक्वाकाण्वश्रुतेःस्वरकंपेनभयमुपलक्ष्यदेवादिभजनेकल्यतेतात्पर्यमित्याह॥ काकेति॥ १०॥ ब्र
ह्मकंडिकामित्थंव्याख्यायब्रह्मवाइदमित्यादिवाक्यस्यातीतेनसंबंधंवक्तुंवृत्तंकीर्त्तयति॥ सूत्रितइति॥ शास्त्रार्थशब्दोब्रह्मविद्याविषयःतदाहुरि
त्यादिनोक्तमनुवदति॥ तस्यचेति॥ अर्थवादस्तद्योयोदेवानामित्यादिः॥ संबंधोज्ञानस्यसर्वापत्तिफलेनसाध्यसाधनत्वमधिकारिणाश्रयाश्रयित्वमैक्ये
नविषयविषयित्वमितिविभागः॥ अविद्यास्त्रवृत्तंकथयति॥ अविद्यायाश्चेति॥ संसारस्याधिकारःप्रवृत्तिरुत्पत्तिरितियावत्॥ यथापशुरित्यादिनोक्त
मनुभाषते॥ तत्रेति॥ अविद्याधिकारःसप्तम्यर्थः॥ तत्राविद्याकार्यंप्रपंचयितुमध्यायशेषप्रवृत्तिरितिमन्वानोऽविद्याविवर्त्तचातुर्वर्ण्यसृष्टिप्रकरनार्थंतदेत

तेषांदेवानांकार्यंयद्वर्णाश्रमादिस्तस्याभिमानिनः = ४

किंपुनरिति॥ब्रह्मवाइदमित्यादिवाक्यमिदमापरामृश्यते॥वर्णानेवविशिनष्टि॥यन्निमित्तेति॥यैर्निमित्तैर्ब्राह्मण्यादिभिःसंबद्धेषुकर्मस्वयमविद्वा
किंपुनरिति॥ब्रह्मवाइदमित्यादिवाक्यमिदमापरामृश्यते॥वर्णानेवविशिनष्टि॥यन्निमित्तेति॥...कर्मस्वयमविद्वा
नधिकृतःपशुरिवसंसरतीतिपशुनिदर्शनश्रुतौप्रसिद्धं॥तानिनिमित्तानिदर्शयितुमुत्तरंवाक्यंप्रवृत्तमित्यर्थः॥अथेत्यभ्यमंथदित्यत्रानुग्राहक
देवतासर्गंप्रक्रम्याग्नेरेवसृष्टिरुक्तानेंद्रादीनामत्रत्वविद्याप्रस्तुत्यतेषांसोच्यतेतत्रकःश्रुतेरभिप्रायस्तत्राह॥एतस्येति॥पूर्वमग्निसर्गानंतरमिंद्रा
दिसर्गोवाच्योपिनोक्तःफलाभावादिहत्वविदुषस्तत्कार्यवर्णाद्यभिमानिनःकर्माधिकृतिरित्येतस्यार्थस्यप्रदर्शनार्थंतदाविद्यत्वविवक्षयासंत्युत्सा

यन्निमित्तसंबद्धेषुकर्मस्वयंपरतंत्रएवाधिकृतःसंसारीति॥एतस्यैवार्थस्यप्रदर्शनायाग्निसर्गानंतरमिंद्रादिसर्गोनोक्तोग्नेस्तुसर्गः
प्रजापतेःसृष्टिपरिपूरणायप्रदर्शितःअयंचेंद्रादिसर्गस्तत्रैवद्रष्टव्यस्तद्धेषत्वादिहतुसएवाभिधीयतेऽविदुषःकर्माधिकारहेतु

ब्रह्मवाइदमग्रआसीदेकमेवतदेकंसन्नव्यभवत्

प्रदर्शनायब्रह्मवाइदमग्रआसीद्यदग्निंसृष्टाग्निरूपापन्नंब्रह्मब्राह्मणजात्यभिमानाद्ब्रह्मेत्यभिधीयतेवैइदंक्षत्रादिजातंब्र
ह्मैवाभिन्नमासीदेकमेवनासीत्क्षत्रादिभेदस्तद्ब्रह्मैकंक्षत्रादिपरिपालयित्रादिशून्यंसन्नव्यभवन्नविभूतवत्कर्मणेनालमासीदित्यर्थः॥

च्यतइत्यर्थः॥अग्निसर्गोपितर्हितत्रैवतद्वत्तत्राच्योविशेषाभावादित्याशंक्याह॥अग्नेस्त्विति॥प्रजापतेःसृष्टिपूर्तयेचेदग्निसृष्टिस्तत्रोक्ताहंतेंद्रादिसर्गो
पितत्रैववाच्योन्यथातदपूर्तिरित्याशंक्याह॥अयंचेति॥तर्हितत्रोक्तस्यकस्मादत्रोक्तिःपुनरुक्तेरित्याशंक्यैतस्यैवार्थस्येत्यत्रोक्तंस्मारयति॥इहत्विति॥
संगतिमुक्त्वावाक्यमादायव्याचष्टे॥ब्रह्मेति॥अग्रेक्षत्रादिसर्गात्पूर्वमितियावत्॥वैशब्दस्यावधारणार्थत्वंवदन्वाक्यार्थोक्तिपूर्वकमेकमित्यस्यार्थमाह॥

४६

कथंतर्हि तस्य कर्मानुष्ठानसामर्थ्यसिद्धिरित्याशंक्य समनंतरवाक्यं व्याचष्टे॥ ततइति॥ तदेव स्पष्टमाकांक्षाद्वारा स्पष्टयति॥ किंपुनरिति॥ एका चेत्क्ष
त्रजातिः सृष्टा कथंतर्हि यान्येतानीति बहूक्तिरित्याशंक्याह॥ तत्व्यक्तिभेदेनेति॥ क्षत्रजातेरेकत्वात्कथं क्षत्त्राणीति बहुवचनमित्याशंक्य जात्या
ख्यायामेकस्मिन्बहुवचनमन्यतरस्यामिति स्मृतिमाश्रित्याह॥ जातीति॥ बहूक्तेर्गत्यंतरमाह॥ व्यक्तीति॥ तासां बहुत्वाज्जातेश्च तदभेदात्तत्रापि भेद

ततस्तद्ब्रह्म ब्राह्मणोस्मि ममैतत्कर्त्तव्यमिति ब्राह्मणजातिनिर्वर्त्यं कर्म चिकीर्षुरात्मनः कर्मकर्तृत्वविभूत्यै श्रेयोरूपं प्रशस्तरूपमत्य
सृजतातिशयेनासृजत सृष्टवत् किंपुनस्तद्यत्सृष्टं क्षत्त्रं क्षत्त्रियजातिस्तद्व्यक्तिभेदेन प्रदर्शयति यान्येतानि प्रसिद्धानि लोके देवत्रा देवेषु
क्षत्त्राणीति जात्याख्यायां पक्षे बहुवचनस्मरणाद्व्यक्तिबहुत्वाद्वा भेदोपचारेण बहुवचनं कानि पुनस्तानीत्याह तत्राभिषिक्ता एव विशेषतो

तद्धैयोरूपमत्यसृजत क्षत्त्रं यान्येतानि देवत्रा क्षत्त्राणींद्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान इति

निर्दिश्यंते इंद्रो देवानां राजा वरुणो यादसां सोमो ब्राह्मणानां रुद्रः पशूनां पर्जन्यो विद्युदादीनां यमः पितॄणां मृत्यू रोगादीनामीशानो भासां
मित्येवमादीनि देवेषु क्षत्त्राणि तदन्विंद्रादिक्षत्त्रदेवताधिष्ठितानि मनुष्यक्षत्त्राणि सोमसूर्यवंश्यानि पुरूरवःप्रभृतीनि सृष्टान्येवइष्टव्या
नि तदर्थ एव हि देवक्षत्त्रसर्गः प्रस्तुतो यस्माद्ब्रह्मणातिशयेन सृष्टं क्षत्त्रं मुपचर्य बहूक्तिरित्यर्थः॥ क्षत्त्राणि इति बहुवचनमिति संबंधः॥ तेषां विशेष
तो ग्रहणं क्षत्त्रस्योत्तमत्वं ख्यापयितुमिति मन्वानः सन्नाह॥ कानि पुनरिति॥ ननु किमिति देवेषु क्षत्त्रसृष्टिरुच्यते ब्राह्मणस्य कर्मानुष्ठानसामर्थ्यसिध्यर्थं मनु
ष्येष्वेव तत्सृष्टिरुपदेष्टव्येत्याशंक्योपोद्घातोयमित्याह तदर्थ इति॥ तस्मादित्यादि व्याचष्टे॥ य
नै क्षत्त्राणां पू

यस्मादिदं ब्राह्मणजातेर्नियंतृ=३

क्षत्रस्य नियंतृत्ववदुत्कर्षहेतुत्वं तरमाह॥ तस्मादिति॥ ब्रह्मेति प्रसिद्धं ब्राह्मण्याख्यमिति यावत्॥ उक्तमेव प्रपंचयति॥ राजसूयेति॥ आसंद्यां मंचिकायां॥ क्षत्रे स्वकीयं यशः समर्पयतो ब्राह्मणस्य निष्कर्षमाशंक्याह॥ सैषेति॥ तयोर्ब्राह्मणत्वस्य तुल्यत्वात्कुतोऽवांतरभेदः क्षत्रमपि क्रतुकाले ब्राह्मण्यं

तस्मात्क्षत्रात्परं नास्ति ब्राह्मणजातेरपि नियंतृ तस्माद्ब्राह्मणः कारणभूतोऽपि क्षत्रस्य क्षत्रियमधस्ताद्व्यवस्थितः सन्नुपरिस्थितमुपास्ते क्व राजसूये क्षत्र एव तदात्मीयं यशः ख्यातिरूपं ब्रह्मेति दधाति स्थापयति॥ राजसूयाभिषिक्तेनासंद्यां स्थितेन राज्ञामंत्रितो ब्रह्मन्निति त्रिः ऋत्विक्पुनः स्वं प्रत्याह त्वं राजन्ब्रह्मासीति तदेतदभिधीयते क्षत्र एव तद्यशो दधातीति सैषा प्रकृता क्षत्रस्य योनिरेव यद्ब्रह्म तस्माद्यद्यपि राजा

तस्मात्क्षत्रात्परं नास्ति तस्माद्ब्राह्मणः क्षत्रियमधस्तादुपास्ते राजसूये क्षत्र एव तद्यशो दधाति सैषा क्षत्रस्य योनिर्यद्ब्रह्म तस्माद्यद्यपि राजा परमतां गच्छति ब्रह्मैवांतत उपनिःश्रयति स्वां योनिं य उ एनꣳ हिनस्ति स्वाꣳ स योनिमृच्छति स पापीयान्भवति यथा श्रेयाꣳसꣳ हिꣳसित्वा॥ ११॥ परमतां राजसूयाभिषेकगुणं गच्छति प्राप्नोति ब्रह्मैव ब्राह्मणजातिमेवांततोंऽते कर्मणि कर्मपरिसमाप्तावुपनिश्रयति आश्रयति॥ स्वां योनिं पुरोहितं पुरो निधत्त इत्यर्थः यस्तु पुनर्बलाभिमानात्स्वां योनिं ब्राह्मणजातिं ब्राह्मणं य उ एनं हिनस्ति न्यग्भावेन पश्यति स्वामात्मीयामेव स योनिमृच्छति स्वं प्रसवं विच्छिनत्ति विनाशयति स एतत्कर्मकृत्वा पापीयान्पापतरो भवति पूर्वमपि क्षत्रियः पाप एव क्रूरत्वादात्मप्रसवहिंसया सुतरां यथा लोके श्रेयांसं प्रशस्ततरं हिंसित्वा परिभूय पापतरो भवति तद्वत्

प्राप्नोतीत्याशंक्याह॥ तस्मादिति॥ क्षत्रस्य ब्रह्माभिभवे दोषश्रवणाच्च तस्य तदपेक्षया तद्गुणत्वमित्याह॥ यस्त्विति॥ प्रमादादपि वक्तुं तुशब्दः॥ य उ एनं हिन



99

बृ.र.
९७

ईयसुनस्तरबर्थस्य प्रयोगे हेतुमाह ॥ पूर्वमपीति ॥ ब्राह्मणाभिभवे पापीयस्त्वमित्येतदुदाहरणेन बुद्धावारोपयति यथेति ॥ ११ ॥ कर्तुर्ब्राह्मणस्य नियंतु
भा.

र्ब्रह्मक्षत्रियस्य सृष्टत्वात्किमुत्तरेणेत्याशंक्याह ॥ क्षत्रइति ॥ तद्व्याचष्टे ॥ कर्मणइति ॥ ब्रह्मब्राह्मणोऽस्मीत्यभिमानी पुरुषः ॥ तथा क्षत्रसर्गात्पूर्वमिवेतिय

वत् ॥ कथं तर्हि लौकिकसामर्थ्यसंपादनद्वारा कर्मानुष्ठानमत आह ॥ सविशमिति ॥ देवजातानीत्यत्र तकारो निष्ठा ॥ गणं गणं कृत्वाकिमित्याख्यानं वि

क्षत्रे सृष्टेऽपि स नैव व्यभवत्कर्मणे ब्रह्म तथा न व्यभवद्वित्तोपार्जयितुरभावात्स विशमसृजत कर्मसाधनवित्तोपार्जनायकः पुनरसौ वि
ट् यान्येतानि देवजातानि स्वार्थे निष्ठा ॥ य एते देवजातिभेदा इत्यर्थः ॥ गणशो गणं गणमाख्यायंते कथ्यंते गणप्राया हि विशः प्रायेण संह
ताहि वित्तोपार्जने समर्थाः नैकैकशः वसवोऽष्टसंख्यो गणस्तथैकादश रुद्राः द्वादशादित्याः विश्वेदेवास्त्रयोदश विश्वाया अपत्यानि सर्वे

सनैव व्यभवत्स विशमसृजत यान्येतानि देवजातानि गणश आख्यायंते वसवो रुद्रा आदित्या विश्वेदेवा मरुत इति ॥ १२ ॥
सनैव व्यभवत्स शौद्रं वर्णमसृजत पूषणमियं वै पूषेयꣳहीदꣳ सर्वं पुष्यति यदिदं किंच ॥ १३ ॥ वा देवा मरुतः सप्तगणाः ॥ १२ ॥

सपरिचारकाभावात्पुनरपि नैव व्यभवत्स शौद्रं वर्णमसृजत शूद्र एव शौद्रः स्वार्थे णि वृद्धिः कः पुनरसौ शूद्रो वर्णो यः सृष्टः तं दर्शयति पूषणमि
ह ॥ पूषणं पुष्यतीति पूषा कः पुनरसौ पूषेति विशेषतः तं निर्दिशति इयं पृथिवी पूषा स्वयमेव निर्वचनमाह इयं हीदं सर्वं पुष्यति पुष्णाति य

कर्तुः पालयितृ धनार्जयितॄणां सृष्टत्वात्कृतं वर्णांतरसृष्ट्ये
शामित्याशंक्याह ॥ गणेति ॥ विशां समुदायप्रधानत्वमद्यापि प्रत्यक्षमित्याह ॥ प्रायेणेति ॥ १२ ॥ कर्तृपालयितृधनार्जयितॄणां सृष्टत्वात्कृतं वर्णांतरसृष्ट्ये
त्याशंक्याह ॥ सपरिचारकेति ॥ शौद्रं वर्णमसृजतेत्यत्रौकारो वृद्धिः ॥ पुष्यतीति पूषेत्युक्तत्वात्प्रश्नस्यानवकाशत्वमाशंक्याह ॥ विशेषतइति ॥ पूषशब्द

टी.
रामः
९७

नन्वचातुर्वर्ण्यस्यैतावतैवकर्मानुष्ठानसिद्धेरलंधर्मसृष्ट्येत्यतआह॥सचतुरइति॥अनियत्ताशंकयानियामकाभावेतस्यानियतत्वसंभावनयेति
यावत्॥तच्छब्दःस्रष्टृब्रह्मविषयःकुतोधर्मस्यसर्वनियंतृत्वंक्षत्रस्यैवतस्यसिद्धेरित्याह॥तत्कथमिति॥अनुभवमनुसृत्यपरिहरतिउच्यतइत्यादि
ना॥तदेवोदाहरति॥यथेति॥राज्ञास्पर्धमानइतिशेषः॥धर्मस्योत्कृष्टत्वेननियंतृत्वेसत्याद्भिन्नत्वंहेत्वंतरमाह॥योवाइति॥कथंधर्मस्यस

सचतुरःसृष्ट्वापिवर्णान्नैवव्यभवदुग्रत्वात्क्षत्रस्यानियताशंकयातच्छ्रेयोरूपमत्यसृजतकिंतद्धर्मंतदेतच्छ्रेयोरूपंसृष्टंक्षत्रस्यक्षत्रंक्ष
त्रस्यापिनियंतृउग्रादप्युग्रंयद्धर्मोयोधर्मस्तस्मात्क्षत्रस्यापिनियंतृत्वाद्धर्मात्परंनास्तितेनहिनियम्यंतेसर्वेतत्कथमित्युच्यतेअथोअ
प्यबलीयान्दुर्बलतरोबलीयांसमात्मनोबलवत्तरमप्याशंसतेकामयतेजेतुंधर्मेणबलेनयथालोकेकश्चित्राज्ञासर्वबलवत्तमेनापिकु

सनैवव्यभवत्तच्छ्रेयोरूपमत्यसृजतधर्मंतदेतत्क्षत्रस्यक्षत्रंयद्धर्मस्तस्माद्धर्मात्परंनास्त्यथोअबलीयान्बलीयांसमाशंसते
तेधर्मेणयथाराज्ञैवंयोवैसधर्मःसत्यंवै तद्विकएवंतस्मात्सिद्धंधर्मस्यसर्वबलवत्तरत्वात्सर्वनियंतृत्वंयोवैसधर्मोव्यवहारलक्ष
णोलौकिकैर्व्यवह्रियमाणःससत्यंवैतत्सत्यमितियथाशास्त्रार्थतःसएवानुष्ठीयमानोधर्मनामाभवतिशास्त्रार्थत्वेनज्ञायमानस्तुसत्यं
भवति॥यस्मादेवं॥तस्मात्सत्यंयथाशास्त्रंवदंतंव्यवहारकालेआहुःसमीपस्थाउभयविवेकज्ञाधर्मंवदतीतिप्रसिद्धं सत्यंसद्दिपुरुषध

र्मोवचनधर्मःसत्यत्वमित्यवांतरभेदादित्याशंक्याह॥सएवेति॥यथोक्तेविवेकेलोकप्रसिद्धिंप्रमाणयति॥यस्मादिति॥उभयशब्दोधर्मसत्यविष
यः॥धर्मंवदतीत्येतदेवविभजते॥प्रसिद्धमिति॥यथाशास्त्रानुसारेणवदंतंधर्मंवदतीतिवदंति॥यथापूर्वोक्तवदनवैपरीत्येनधर्मंवदंतंसत्यंवदती
ज्ञायमानःशास्त्रतोयज्ञादिः ४

-वसंस्तेसर्वसत्त्वानीजायतेपत्रशासनं॥मोदमानाश्चतिष्ठंतियचाःकणशशालिनः=२ बौद्धधर्मेष्वुदासेनं २



लौकिकमितिसत्यंवदतीत्येतदेवस्फुटयति॥शास्त्रादिति॥कार्यकारणभावेनानयोरेकत्वमुपसंहरति॥एतदिति॥शास्त्रार्थसंशयेशिष्टव्यवहारा
न्निश्चयोयथायवंवराहादिशब्देषुधर्मसंशयेषुशास्त्रार्थवशान्निर्णयोयथाचैत्यवंदनादिष्वुदासेनाग्निहोत्रादावतोहेतुहेतुमद्भावादुभयोरेक्य
मितिभावः॥धर्मस्यसत्याभेदेफलितमाह॥तस्मादिति॥तस्यसर्वनियंतत्वेपिप्रकृतेकिमायातंतदाह॥तस्मात्सइति॥तर्हियथोक्तधर्मवशा

लौकिकंन्यायंवदतीतितथाविपर्ययेणधर्मंवालौकिकंव्यवहारंवदंतमाहुःसत्यंवदतिशास्त्रादनपेतंवदतीत्येतद्ध्युक्तमुभयंज्ञा
यमानमनुष्ठीयमानंचैतद्धर्मएवभवतितस्मात्सधर्मोज्ञानानुष्ठानलक्षणःशास्त्रज्ञानितरांश्चसर्वानेवनियमयतितस्मात्सक्षत्र

तत्तस्मात्सत्यंवदंतमाहुर्धर्मंवदतीतिधर्मंवावदंत॰सत्यंवदतीत्येतद्ध्येवैतदुभयंभवति ॥ १४॥

स्यापिक्षत्रमतस्तदभिमानोऽविद्वांस्तद्विशेषानुष्ठानायब्रह्मक्षत्रविट्शूद्रनिमित्तविशेषमभिमन्यतेतानिचनिसर्गतएवक
र्माधिकारनिमित्तानि॥१४॥तदेतच्चातुर्वर्ण्यंसृष्टंब्रह्मक्षत्रंविट्शूद्रइत्युत्तरार्थउपसंहारोयत्तत्स्रष्टंब्रह्मतदग्निनैवनान्येनरू
पेणदेवेषुब्रह्मब्राह्मणजातिरभवद्ब्राह्मणोब्राह्मणरूपेणमनुष्येषुब्रह्माभवदितरेषुवर्णेषु देवकर्मानुष्ठानसिद्धेर्वर्णाश्रमाभिमान
स्यकिंचित्करत्वमित्याशंक्याह॥अतइति॥धार्मिकत्वाद्यभिमानोब्राह्मण्याद्यभिमानंपुरोधायानुष्ठापकश्चेत्तदभिमानोपितथैवाभिमानांतरंपुर
स्कृत्यानुष्ठापयेदित्याशंक्याह॥तानिचेति॥नखल्वविदुषोधार्मिकस्यब्राह्मण्यादिषुनिमित्तेषुसत्सुकर्मप्रवृत्तौनिमित्तांतरमपेक्षतेप्रमाणाभावा
दित्यर्थः॥१४॥पुनरुक्तिवैयर्थ्यमाशंक्योक्तं॥उत्तरार्थइति॥पूर्वत्रदेवेषुदर्शितस्यवर्णविभागस्यमनुष्येषुउत्तरग्रंथेनयोजनार्थइतियावत्॥सृष्टवर्णचतुष्टयनिविष्टम
अग्निरूपापन्नंसृष्ट५



तेषांसदेवमनुष्याणांजगतोऽत्रिवसृष्टोक्तसुन्निवेशिताः...

विकारांतरमग्निब्राह्मणलक्षणं॥ क्षत्रियेणेत्यत्र विवक्षितमर्थमाह इंद्रादिदेवताधिष्ठित इति वैश्येनेति वस्वाद्यधिष्ठितत्वं उच्यते॥ शूद्रेणेति पूषा
धिष्ठितत्वं॥ अग्न्यादिभावमापन्नस्य क्षत्रादिभावो न तु क्षत्रादिभावमापन्नस्याग्न्यादिभाव इत्येतावन्मात्रेण ब्रह्मणो विकृतत्वाविकृतत्वमग्निब्रा
ह्मणस्तु त्वर्थमुक्तमित्यभिप्रेत्य तस्मादित्यादि व्याचष्टे॥ यस्मादिति॥ यथोक्तप्रार्थनायान्याय्यत्वं साधयति॥ तदर्थमेवेति॥ कर्मफलदानार्थमिति या

विकारांतरं प्राप्य क्षत्रियेण क्षत्रियो भवदिंद्रादिदेवताधिष्ठितो वैश्येन वैश्यः शूद्रेण शूद्रः यस्मात्क्षत्रादिषु विकारापन्नमग्नौ ब्रा
ह्मण एव चाविकृतं स्रष्टृ ब्रह्म तस्मादग्नावेव देवेषु देवानां मध्ये लोकं कर्मफलमिच्छंत्यग्निसंबद्धं कर्म कृत्वेत्यर्थः॥ तदर्थमेव हि तद्

तदेतद्ब्रह्म क्षत्रं विट् शूद्रस्तदग्निनैव देवेषु ब्रह्माऽभवद्ब्राह्मणो मनुष्येषु क्षत्रियेण क्षत्रियो वैश्येन वैश्यः शूद्रेण शूद्रस्त
स्मादग्नावेव देवेषु लोकमिच्छंते॥ ब्राह्मणे मनुष्येष्वेताभ्यां हि रूपाभ्यां ब्रह्माभव

ह्म कर्माधिकरणत्वेनाग्निरूपेण व्यव
स्थितं तस्मात्तस्मिन्नग्नौ कर्म कृत्वा तत्फलं प्रार्थयंत इत्येतदुपपन्नं ब्राह्मणे मनुष्येषु मनुष्याणां मध्ये कर्मफलेच्छायां नाग्न्यादिनिमित्तक्रियापेक्षा किं
तर्हि जातिमात्रस्वरूपप्रतिलंभेनैव पुरुषार्थसिद्धिः॥ यत्र तु देवाधीना पुरुषार्थसिद्धिस्तत्रैवाग्न्यादिसंबद्धक्रियापेक्षा स्मृतेश्च जप्येनैव तु संसिध्येद्ब्रा
ह्मणो नात्र संशयः॥

वत्॥ मनुष्याणां मध्ये कमपि मनुष्यमवलंब्य कर्मफलभोगापेक्षायामधिकरणसंप्रदानभावेनावस्थिताग्नींद्रादिनिमित्तक्रि
यापेक्षा नास्ति किंतु ब्राह्मणजातिप्राप्तिमात्रेण तत्प्रतिबद्धं जप्यादिकर्मावश्यंभावीति तन्मात्रेण पुरुषार्थः सिध्यतीति प्रतीकग्रहणपूर्वकमाह म
नुष्याणामिति॥ कुत्र तर्हि यथोक्तक्रियापेक्षेति तत्राह॥ यत्र त्विति देवानां मध्ये ग्निसंबद्धमेव कर्म कृत्वा पुरुषार्थलाभो मनुष्याणां मध्ये तु ब्राह्मण्यप्र
इंद्राय स्वाहेत्यत्रेंद्रः संप्रदानमग्निरधिकरणं = ३

जप्यग्रहणं जातिमात्रप्रयुक्तकर्मोपलक्षणार्थं॥ अन्यदग्निसंबद्धं कर्मको यंब्राह्मणो नामतन्नाह॥ मैत्रइति॥ सर्वेषुभूतेष्वभयप्रदो विशिष्टजातिमा
नितियावत्॥ ननुयथोक्तस्मृतेर्ब्राह्मण्यप्रतिलंभमात्रादभ्युदयलाभेपिकुतस्ततोनिश्रेयससिद्धिस्तत्राह॥ पारिव्राज्येति ब्राह्मणाःव्युत्थायाथभिक्षा
चर्यंचरंतीतिब्राह्मणस्यपारिव्राज्यंश्रूयतेतच्चसंन्यासाद्ब्रह्मणःस्थानमितिब्रह्मलोकसाधनंगम्यते॰ तथ्यब्राह्मणजातिनिमित्तंलोकमिच्छंतीतियुक्त
मित्यर्थः॥ ब्राह्मणेमनुष्येषुइत्यस्यार्थमुपसंहरति॥ तस्मादिति॥ हेतुवाक्यमादायव्याचष्टे॥ यस्मादिति॥ हिशब्दार्थोयस्मादित्युक्तोयत्स्रष्टृब्रह्मत
देताभ्यांयस्मात्साक्षादभवत्तस्मादग्नावेवेत्यादियुक्तमितियोजना॥ अग्नौहुत्वाब्राह्मणेचदत्वापरमात्मलक्षणंलोकमाप्तुमिच्छंतीतिभर्तृप्रपंच

कुर्यादन्यन्नवाकुर्यान्मैत्रोब्राह्मणउच्यतइतिपारिव्राज्यदर्शनाच्च तस्माद्ब्राह्मणत्वएवमनुष्येषुलोकंकर्मफलमिच्छंति॥ यस्मा
देताभ्यांहिब्राह्मणाग्निरूपाभ्यांकर्मकर्त्रधिकरणरूपाभ्यांयत्स्रष्टृब्रह्मसाक्षादभवदत्रतुपरमात्मलोकमग्नौब्राह्मणेचेच्छंतीति
केचित्॥ तदसदविद्याधिकारेकर्माधिकारार्थवर्णविभागस्यप्रस्तुतत्वात्परेणचविशेषणाद्यदिह्यत्रलोकशब्देनपरएवात्मोच्येतप
रेणविशेषणमनर्थकंस्यात्॥ स्वंलोकमदृष्ट्वेति॥ स्वलोकव्यतिरिक्तश्चेदग्न्याधीनतयाप्रार्थ्यमानःप्रकृतोलोकस्ततःस्वमितियुक्तं
विशेषणंप्रकृतपरलोकनिवृत्त्यर्थंत्वा व्याख्यानमनुवदति॥ अत्रेति॥ सप्तमीतस्मादित्यादिवाक्यविषयाप्रक्रमालोचनायांकर्मफलमिहलोक
शब्दार्थोनपरमात्माप्रक्रमभंगप्रसंगादितिदूषयति॥ तदसदिति॥ कर्माधिकारार्थकर्मसुप्रवृत्तिसिध्यर्थमितियावत्॥ वाक्यशेषगतविशेषणवशाद
पिकर्मफलस्यैवात्रलोकशब्दवाच्यत्वमित्याह॥ परेणचेति॥ तदेवप्रपंचयतियदिहीति॥ परपक्षेस्वमितिविशेषणंव्यावर्त्याभावान्नघटतेचेत्स्वपक्षेपि
कथंतदुपपत्तिरित्याशंक्याह॥ स्वलोकेति॥ परशब्दोनात्मविषयः॥ ननुप्रकृतेवाक्येलोकशब्देनपरमात्मानोच्यतेचेदुत्तरवाक्येपितेननासौउच्येतविशेष

त्वत्वेनचेति॥ कर्मफलविषयत्वेनापिविशेषणस्यनेतुंशक्यत्वान्नविशेषणासिद्धिरित्याशंक्याह॥ अविद्येति॥ तेषांस्वरूपव्यभिचारेवाक्यशेषंप्रमा णयति॥ ब्रवीतिचेति॥ उत्तरवाक्यस्यव्यावर्त्यपूर्वपक्षमाह॥ ब्रह्मणेति॥ तत्पुनरचेतनमकिंचित्करमित्याशंक्याह॥ तच्चेति॥ सर्वैरेववर्णैःस्वस्वक र्तव्यतयातान्प्रतिनियंतृभूत्वेतियोजना॥ तस्यपुमर्थोपायत्वप्रसिद्धिमादायफलितमाह॥ तस्मादिति॥ अविदितोपीतिच्छेदः॥ देवतागुणंकर्म

त्वत्वेनचाव्यभिचारात्परमात्मलोकस्याविद्याकृतानांचस्वत्वव्यभिचारात्॥ ब्रवीतिचकर्मकृतानांव्यभिचारंक्षीयतएवेति॥ ब्रह्मणास्रष्टावर्णाःकर्मार्थंतच्चकर्मधर्माख्यंसर्वानेवकर्तव्यतयानियंतृपुरुषार्थसाधनंचतस्मात्तेनैवचेत्कर्मणास्वोलोकःप रमात्माख्योऽविदितोपिप्राप्यतेकिंतस्यैवपदनीयत्वेनक्रियतइत्यतआहअथेतिपूर्वपक्षनिवृत्त्यर्थः॥ यःकश्चित्‌हवैअस्मात्संसा

दथयोहवाअस्माल्लोकात्स्वंलोकमदृष्ट्वाप्रैतिसएनमविदितोनभुनक्तियथावेदोवाननूक्तोन्यद्वा॥

रिकात्पिंडग्रहणलक्षणादविद्याकामकर्महेतुकादग्न्यधीनकर्माभिमानतयावाब्राह्मणजातिमात्रकर्माभिमानतयावाआगं तुकादस्वभूताल्लोकात्स्वंलोकमात्माख्यमात्मत्वेनाव्यभिचारित्वाददृष्ट्वाहंब्रह्मास्मीतिप्रैतिम्रियतेसयद्यपिस्वोलोकोऽविदितो

मुक्तिहेतुरितिपक्षंप्रतिक्षेप्तुमुत्तरवाक्यमुत्थापयति॥ अतआहेति॥ ज्ञानादेवमुक्तिर्नकर्मणेत्यागमप्रसिद्धमितिनिपातयोरर्थः॥ तत्रनिमित्त मुपादानंचेतिद्वयंसंक्षिपति॥ अविद्येति॥ निमित्तंविवृणोति॥ अग्न्यधीनेति॥ आत्माख्यस्यलोकस्यस्वत्वेहेतुमाह॥ आत्मत्वेनेति॥ अहंब्रह्मासी त्यदृष्ट्वेतिसंबंधः॥ यःपरमात्मानमविदित्वैवम्रियतेतमेनंपरमात्मानपालयतीतियोजना॥ परमात्मनःस्वरूपत्वादविदितस्यापिपालयितृत्वस्यादित्या

102

दँशमोस्मीतियाँवत्४

लोकशब्दादुपरिष्टात्तथापीति द्रष्टव्यं॥अविदित इत्यस्यव्याख्यानमविद्ययेत्यादि॥परमात्माख्योलोकोनाज्ञातोभुनक्तीत्यत्रकर्मफलभूतंलोकंवैध
र्म्यदृष्टांततयादर्शयति॥अस्व इति॥अज्ञातस्यापालयितृत्वेसाधर्म्यदृष्टांतमाह॥संख्येति॥यथालौकिकोदशमोदशमोस्मीत्यज्ञातोनशोकादिनिव
र्त्तनेनात्मानंभुनक्तितथापरमात्मापीत्यर्थः॥तत्रैवश्रुत्युक्तंदृष्टांतद्वयंव्याचष्टे॥यथावेत्यादिना॥अविद्यादीत्यादिशब्देनतदुत्थंसर्वंसंगृह्यते॥य

ऽविद्ययाव्यवहितोऽस्वइवाज्ञातःएनंसंख्याऽपूरणइवलौकिकआत्मानभुनक्तिनपालयतिशोकमोहभयादिदोषापनयेनयथावलौ
केवेदोऽननूक्तोऽनधीतःकर्माद्यर्थाववोधकत्वेननभुनक्त्यन्यद्वालौकिकंकृष्यादिकर्माकृतंस्वात्मनानभिव्यंजितमात्मीयफलप्रदाने
ननभुनक्त्येवमात्मास्वोलोकःस्वेनैवनित्यात्मस्वरूपेणानभिव्यंजितोऽविद्यादिप्रहाणेननभुनक्त्येव॥ननुकिंस्वलोकदर्शननिमित्तप

कर्माकृतंयदिहवाअप्यनेवंविन्महत्पुण्यंकर्मकरोतितद्धास्यांततःक्षीयतएव।

रिपालनेनकर्मणःफलप्राप्तिध्रौव्यादिष्टफलनिमित्तस्यचकर्मणोबाहुल्यात्तन्निमित्तंपालनमक्षय्यंभविष्यतितन्नकृतस्यक्षयवत्त्वादि
त्येतदाह यदिहवैसंसारेऽद्भुतवत्कश्चिन्महात्मापिअनेवंवित्स्वंलोकंयथोक्तेनविधिनाऽविद्वान्महदश्वमेधादिपुण्यकर्मेष्टफ
लमेवनैरंतर्येणकरोत्यनेनैवानंत्यंममभविष्यतीति दिहेत्यादिवाक्यापोह्यंचोद्यमुत्थापयति॥नन्विति॥नन्वनिष्टफलनिमित्तस्यापिकर्मणः
फलप्राप्तिध्रौव्यात्कथंकर्मणामोक्षःसेत्स्यतितत्राह॥इष्टेति॥बाहुल्यमश्वमेधादिकर्मणोमहत्तरत्वं॥तद्धिदुरितमभिभूयमोक्षमेवसंपादयिष्यतीत्यर्थः॥
यत्कृतकंतदनित्यमितिन्यायमाश्रित्यपरिहरति॥तन्नेत्यादिनासप्तम्यर्थःसंसारइति॥निपातार्थंसूचयति॥अद्भुतवदिति॥अनेवंवित्त्वंव्याकरोति॥स्वंलो

यत्कृतकं तदनित्यमिति २ यदिह वा इतिमूलस्थो यच्छब्दः १

पुण्यकर्मण्यवाये दुरितप्रसक्तिं निवारयति॥ नैरंतर्येणेति॥ तथा पुण्यं संचिन्वतोभिप्रायमाह॥ अनेनेति प्रक्रांतयच्छब्दापेक्षितं कथयति॥ तत्कर्मेति
॥ प्रागुक्तन्याययोरितीहेति निपातः॥ कारणरूपेण कार्यस्य ध्रुवत्वमाशंक्याह॥ तत्कारणयोरिति॥ मुक्तेरनित्यत्वदोषसमाधिस्तर्हि केन प्रकारेण स्या
दित्याशंक्याह॥ अत इति॥ आत्मशब्दार्थमाह॥ स्वमिति तदेव स्फुटयति॥ आत्मानमिति आत्मशब्दस्य प्रकृतस्वलोकविषयत्वे हेत्वंतरमाह॥ इ
हचेति॥ प्रयोगे तु पुनरुक्तिभयादर्थांतरविषयत्वमपि स्यादित्यर्थः॥ विद्याफलमाकांक्षाद्वारा निक्षिपति॥ सय इति॥ कर्मफलस्य क्षयित्वमुक्त्वा कर्म

तत्कर्मेह अस्याविद्यावतोऽविद्याजनितकामहेतुत्वात्स्वप्नदर्शनविभ्रमोद्भूतविभूतिवदंततोंते फलोपभोगस्य क्षीयत एव तत्कारण
योरविद्याकामयोश्चलत्वात्कृतस्य ध्रौव्यानुपपत्तिस्तस्मात्पुण्यकर्मफलपरिपालनानंत्याशास्त्येवाऽत आत्मानमेव स्वं लोकमात्मा
नमिति स्वंलोकमित्यस्मिन्नर्थे स्वंलोकमिति प्रकृतत्वादिह च स्वशब्दस्याप्रयोगादुपासीत स य आत्मानमेव लोकमुपास्ते तस्य कि
मित्युच्यते॥ न हास्य कर्म क्षीयते कर्माभावादेवेति नित्यानुवादो यथाऽविदुषः कर्मक्षयलक्षणं संसारदुःखं संततमेव न तथास्य तद
विद्यत इत्यर्थः॥ मिथिलायां प्रदीप्तायां न मे दह्यति किंचनेति यद्वत्वात्मलोकोपासकस्य विदुषो विद्यासंयोगात्कर्मैव न क्षीयत इत्य
परे वर्णयंति॥ लोकशब्दार्थं च कर्मसमवायिनं द्विधा परिकल्पयंति किल॥ णोऽक्षयत्वं वदतो व्याहतिमाशंक्याह॥ कर्मेति॥ वाक्यस्य विवक्षि

तमर्थं वैधर्म्यदृष्टांतेनाचष्टे॥ यथेति॥ अविदुष इति छेदः॥ कर्मक्षयेवाविदुषो दुःखाभावे दृष्टांतमाह॥ मिथिलायामिति॥ आत्मानमित्यादिके
वलज्ञानान्मुक्तिरित्येवं परतया व्याख्यातं॥ संप्रति तत्र भर्तृप्रपंचव्याख्यामुत्थापयति॥ स्वात्मेति॥ आत्मलोकोपासकस्य कर्माभावे कथं तदक्षय
वाचोयुक्तिरित्याशंक्य कर्माभावस्यासिद्धिमभिसंधाय कर्मसाध्यं लोकं व्याकृताव्याकृतरूपेण भिनत्ति॥ लोकशब्दार्थं चेति॥ औत्क्रेक्षिकी कल्पना न

बृ० टी० अ० १ (margin)

१०४

बृ·र·
१०१

भा·

तत्राद्यंलोकशब्दार्थमनूद्यतदुपासकस्यदोषमाह॥एकइति॥परिच्छिन्नकर्मात्मातत्साध्योव्याकृतावस्थोलोकस्तस्मिन्नहंग्रहोपासकस्येतियाव
त्॥किलशब्दस्तुपूर्ववत्॥द्वितीयंलोकशब्दार्थमनूद्यतदुपासकस्यलाभंदर्शयति॥तमेवेति॥यथाकुंडलादेरंतर्बहिरन्वेषणेसुवर्णातिरिक्त
रूपानुलंभात्तद्रूपेणास्यनित्यत्वंतथाकर्मसाध्यहिरण्यगर्भादिलोकंकार्यत्वादव्याकृतंकारणमेवेत्यंगीकृत्ययस्तस्मिन्नहंबुध्योपास्ते॥तस्याप
रिच्छिन्नकर्मसाध्यलोकात्मोपासकत्वात्ब्रह्मवित्त्वंकर्मित्वंचघटते॥तस्यस्वत्वात्मैवकर्मतेननतस्यतन्नक्षीयते॥यःपुनरहंतावस्थामुपास्तेतस्या
त्मैवकर्मभवतीतिहिभर्तृप्रपंचैरुक्तमित्यर्थः॥आत्मानमित्यादिसमुच्चयपरमितिप्राप्तंपक्षंप्रत्याह॥भवतीति॥श्रौतत्वाभावेहेतुमाह॥स्वलोकेति॥

एकोव्याकृतावस्थःकर्माश्रयोलोकोहिरण्यगर्भाख्यस्तंकर्मसमवायिनंलोकंव्याकृतंपरिच्छिन्नंयउपास्तेतस्यकिलपरिच्छिन्नकर्मात्म
दर्शिनःकर्मक्षीयतेतमेवकर्मसमवायिनंलोकमव्याकृतावस्थंकारणरूपमापाद्ययस्तूपास्तेतस्यापरिच्छिन्नकर्मात्मदर्शित्वात्तस्य
चकर्मनक्षीयतइति॥भवतीयंशोभनाकल्पनानतुश्रौतीस्वलोकशब्देनप्रकृतस्यपरमात्मनोभिहितत्वात्स्वंलोकमितिप्रस्तुत्यस्व
शब्दंविहायात्मशब्दप्रक्षेपेणपुनस्तस्यैवप्रतिनिर्देशादात्मानमेवलोकमुपासीतेति॥तत्रकर्मसमवायिलोककल्पनायाअनवसर
एवपरेणचकेवलविद्याविषयेणविशेषणात्किंप्रजयाकरिष्यामोयेषांनोयमात्मायंलोकइति

स्वंलोकमदृष्ट्वेत्यत्रस्वलोकशब्देनपरस्यप्रकृत
स्यात्मानमेवेत्यत्रप्रकृतहानाप्रकृतप्रक्रियापरिहारार्थमुक्तत्वान्नात्रलोकद्वैविध्यकल्पनायुक्तेत्यर्थः॥लोकशब्देनात्रपरमात्मपरिग्रहेहेत्वंतरमाह॥
स्वंलोकमितीति॥यथालोकस्यस्वशब्दार्थोविशेषणंतथात्मानमित्यत्रस्वशब्दपर्यायात्मशब्दार्थस्तस्यविशेषणंदृश्यते॥नचकर्मफलस्यमुख्यमा
त्मत्वमतोलोकशब्दोत्रपरमात्मैवेत्यर्थः॥प्रकरणाद्विशेषणाच्चसिद्धमर्थंदर्शयति॥तत्रेति॥परस्यैवलोकशब्दार्थत्वेहेत्वंतरमाह॥परेणेति॥

...नः
१०१

पुत्रेति॥ अथपरेष्ववाक्येषुपरमात्मालोकशब्दार्थः॥ प्रकृतेतुकर्मफलमितिव्यवस्थेतिचेन्नैवमेकवाक्यत्वसंभवेतद्भेदस्यान्याय्यत्वादित्याह॥ तैरि
ति॥ एकवाक्यत्वसंभावनामेवदर्शयति॥ इहापीति॥ यथोत्तरत्रात्मादिशब्देनलोकोविशेषितस्तथात्मानमित्यत्राप्यात्मशब्देनविशेष्यते॥ पूर्ववा
क्येचस्वंलोकमदृष्ट्वेतिस्वशब्देनात्मवाचिनातस्यविशेषणंदृश्यते॥ तथाचपूर्वापरालोचनायामेकवाक्यत्वसिद्धिरित्यर्थः॥ प्रकरणेनपरस्यलोकशब्द

पुत्रकर्मापरविद्याकृतेभ्योहिलोकेभ्योविशिनष्टिअयमात्मानोलोकइ
तिच॥ तैःसविशेषणैरस्यैकवाक्यतायुक्ते हापिस्वंलोकमितिविशेषणदर्शनादस्मात्कामयतइत्ययुक्तमितिचेदिहस्वोलोकःपरमा

त्मानमेवलोकमुपासीतसयआत्मानमेवलोकमुपास्तेनहास्यकर्मक्षीयतेस्माद्ध्येवात्मनोयद्यत्कामयतेतत्तत्सृजते॥ १५॥

त्मातदुपासनात्सएवभवतीतिस्थितेयद्यत्कामयतेतत्तदस्मादात्मनःसृजतइतितदात्मप्राप्तिव्यतिरेकेणफलवचनमयुक्तमितिचे
त् नखल्वोकोपासनस्तुतिपरत्वात्तस्मादेवलोकात्सर्वमिष्टंसंपद्यतइत्यर्थोनान्यदतःप्रार्थनीयमाप्तकामत्वादात्मतःप्राणआत्मतआ
शेत्यादिश्रुत्यंतरेणयथासर्वात्मभावप्रदर्शनार्थोवा॥ तैःसविशेषणैरस्यैकवाक्यतायुक्ता॥ र्थत्वमयुक्तंलिंगविरोधादितिचोदयति॥ अस्मा
दिति॥ तदेवविवृणोति॥ इहेत्यादिना॥ अर्थवादस्थंलिंगंनप्रकरणाद्बलवदितिमत्वासमाधत्ते॥ नेत्यादिना॥ स्तुतिमेवस्पष्टयति॥ तस्मादेवेति॥ लोकात्त्व
तादितिशेषः॥ यथाक्रांदोग्येस्तुत्यर्थमात्मनःफलमुच्यतेतथात्रापिआत्मलोकंस्तोतुमेतत्फलवचनमित्याह॥ आत्मतइति॥ मावाभूदस्माद्ध्येवेत्यादि
रर्थवादस्तथापितस्यसर्वात्मत्वप्रदर्शनार्थत्वात् युक्तमत्रलोकशब्देनपरमात्मग्रहणमित्याह॥ सर्वात्मेति॥ प्रकृतेतुकर्मफलमितिव्यवस्थेतिचेन्नैव

मेकवाक्यत्वसंभवेतद्भेदस्यान्याय्यत्वादित्याह॥ तैरिति॥

१०४

एकवाक्यत्वसंभावनामेव दर्शयतीहापीति॥ यथोत्तरत्र आत्मादिशब्देन लोको विशेषितः तथात्मानमित्यत्राप्यात्मशब्देन विशेष्यते पूर्ववाक्ये च स्वं लोकमदृष्ट्वेति स्वशब्देनात्मवाचिना तस्य विशेषणं दृश्यते तथा च पूर्वापरालोचनायामेकवाक्यत्वसिद्धिरित्यर्थः॥ प्रकरणेन परस्य लोकशब्दार्थत्वमयुक्तं लिंगविरोधादिति चोदयत्यस्मादिति॥ तदेव विवृणोतीहेत्यादिना॥ अर्थवादस्थं लिंगं प्रकरणाद्बलवदिति मत्वा समाधत्ते नेत्यादिना॥ स्तुतिमेवस्पष्टयति स्वस्मादेवेति॥ लोकाज्ज्ञातादिति शेषः॥ यथाछांदोग्ये स्तुत्यर्थमात्मनः स्रष्टृत्वमुच्यते तथात्राप्यात्मलोकं स्तोतुमेतत्फलवचनमित्याहात्मत इहापि स्वं लोकमिति विशेषणदर्शनादस्मात्कामयत इत्ययुक्तमिति चेदिह स्वो लोकः परमात्मा तदुपासनात्स एव भवतीति स्थिते यद्यत्कामयते तत्तदस्मादात्मनः सृजत इति तदात्मप्राप्तिव्यतिरेकेण फलवचनमयुक्तमिति चेत्॥ न स्वलोकोपासनस्तुतिपरत्वात्॥ अतः स्वस्मादेव लोकात्सर्वमिष्टं संपद्यत इत्यर्थो नान्यतः प्रार्थनीयमाप्तकामत्वादात्मतः प्राण आत्मत आशेत्यादिश्रुत्यंतरेण यथा सर्वात्मभावप्रदर्शनार्थो वा॥ पूर्ववद्यदिहि पर एवात्मा संपद्यते तदायुक्तोऽस्मात्स्येवात्मन इत्यात्मशब्दप्रयोगः स्वस्मादेव प्रकृतादात्मनो लोकादित्येवमर्थो अन्यथाऽव्याकृतावस्थात्कर्मणो लोकादिति सविशेषणमवश्यं प्रकृतपरमात्मलोकव्यावृत्तये व्याकृतावस्थाव्यावृत्तये च इति॥ भवतु वा मा वा भूदस्मात्स्येवेत्यादिरर्थवादस्तथापि तस्य सर्वात्मत्वप्रदर्शनार्थत्वाद्युक्तमत्र लोकशब्देन परमात्मग्रहणमित्याह सर्वात्मेति॥ तस्मात्तत्सर्वमभवदिति वाक्यं दृष्टांतयति॥ पूर्ववदिति॥ किंच॥ आत्मशब्दस्य त्रिधा परिच्छेदशून्यार्थवाचितायां यच्चाप्नोतीत्यादिन्यायेन सिद्धत्वात्तत्समानाधिकरणलोकशब्दस्यापि तदर्थत्वात्परस्यैवात्र लोकत्वमित्याह॥ यदिहीति॥ किंच॥ यदि लोकशब्देन परं हित्वार्थांतरमुच्यते तदा सविशेषणं वाक्यं स्यादन्यथा स्वं लोकमिति प्रकृतपरमात्मलोकस्य त्वत्पक्षेऽनंतरोक्तब्रह्मलोकस्य च व्यावृत्त्ययोगान्न

चात्रसविशेषणंवाक्यंदृष्टंअतःस्वलोकमितिप्रकृतःपरमात्मैवात्रापिलोकइत्याह॥अन्यथेति॥विशेषणंविनैवास्मादित्यत्रपरापराभ्यामर्थां
तरंकिंनस्यादित्याशंक्याह॥नहीति॥स्वंलोकमितिप्रकृतेपरमात्मन्यात्मानमेवेतिविशेषितेवाऽव्याकृतास्यापरापराभ्यामंतरालावस्थानप्रति
पत्तुंशक्यतेतस्याःश्रुतत्वाभावादित्यर्थः॥१५॥कांडिकांतरमवतार्यवृत्तमनूद्याकांक्षापूर्वकंतात्पर्यमाह॥अथोइत्यादिना॥अत्रेत्यविद्यावस्थापूर्वं

नह्यस्मिन्प्रकृतेविशेषितेऽश्रुतांतरालावस्थाप्रतिपत्तुंशक्यते॥१५॥अथोअयंवाआत्माअत्राविद्वान्वर्णाश्रमाद्यभिमानोधर्मेणनि
यम्यमानोदेवादिकर्मकर्तव्यतयापशुवत्परतंत्रइत्युक्तंकानिपुनस्तानिकर्माणियत्कर्तव्यतयापशुवत्परतंत्रोभवतिकेवातेदेवाद
योयेषांकर्मभिःपशुवदुपकरोतीतितदुभयंप्रपंचयति अथोइत्यस्यवाक्योपन्यासार्थःअयंयःप्रकृतोगृहीकर्माधिकृतोऽविद्वान्छरीरें

अथोअयंवाआत्मासर्वेषांभूतानांलोकःसयज्जुहोतियद्यजतेतेनदेवानांलोकोथयदनुब्रूतेतेनर्षीणामथयत्पित
भ्योनिपृणातियत्प्रजामिच्छते॥ द्रियसंघातादिविशिष्टःपिंडआत्मेत्युच्यतेसर्वेषांदेवादीनांपिपीलिकांतानांभूतानांलो
कोभोग्यआत्मेत्यर्थःसर्वेषांवर्णाश्रमादिविहितैःकर्मभिरुपकारित्वात्कैःपुनःकर्मविशेषैरुपकुर्वन्केषांभूतविशेषाणांलोकइ
त्युच्यतेसगृहीयज्जुहोतियद्यजतेयागोदेवतामुद्दिश्यस्वत्वपरित्यागःसएवा ग्रंथोवागृह्यते॥अपिपर्यायस्याथोशब्दस्यासंगतिमाशंक्य
व्याकरोति॥अथोइतीति॥परस्यापिप्रकृतत्वात्ततोविशिनष्टि॥गृहीतिगृहीत्वेहेतुः॥अविद्वानितीतरपर्युदासार्थंकर्माधिकृतइत्युक्तं॥कथमुक्त
स्यात्मनःसर्वभोग्यतेत्याशंक्याह॥सर्वेषामिति॥तदेवप्रश्नद्वाराप्रकटयति कैःपुनरिति॥यजतिजुहोत्योस्त्यागार्थत्वेनाविशेषात्पुनरुक्तिमाशंक्य

कै६

105

यागइति आसेचनं प्रक्षेपः॥ उक्तंचजुहोतिरासेचनावधिकःस्यादिति॥ यथोक्तहोमादिभिर्देवादीनस्तुपकुर्वतोगृहिणोऽविद्ययाप्रतिबंधसंभवात्तदुप

सेचनावधिकोहोमस्तेनहोमयागलक्षणेनकर्मणावश्यकर्त्तव्यत्वेनदेवानांपशुवत्परतंत्रत्वेनप्रतिबद्धइतिलोकोथयदनुब्रूतेस्वाध्या
यमधीतेहरहस्तेनऋषीणांलोकोथयत्पितृभ्योनिपृणातिनिपृणातिप्रयच्छतिपिंडोदकादियच्चप्रजामिच्छतेप्रजार्थमुद्यमंकरोतिइ
च्छाचोत्पत्त्युपलक्षणार्थाप्रजांचोत्पादयतीत्यर्थः॥ तेनकर्मणावश्यकर्त्तव्यत्वेनपितृणांलोकःपितृणांभोग्यत्वेनपरतंत्रोलोकोथय
न्मनुष्यान्वासयतेभूम्युदकादिदानेनगृहेयच्चतेभ्योवसङ्गोअवसङ्गावार्थिभ्योऽशनंददातितेनमनुष्याणांअथयत्पशुभ्यस्तृणोद

तेनपितृणामथयन्मनुष्यान्वासयतेयदेभ्योशनंददातितेनमनुष्याणामथयत्पशुभ्यस्तृणोदकंविंदतितेनपशूनांयदस्य
गृहेषुश्वापदावयांऽस्यापिपीलिकाभ्यउपजीवंतितेनतेषांलोकोयथाहवैस्वायलोकायारिष्टिमिच्छेदेवंऽहैवंविदेसर्वाणि
भूतान्यरिष्टिमिच्छंतितद्वाएतद्विदितंमीमांऽसितं॥ १६॥ कंविंदतिलंभयतितेनपशूनांयदस्यगृहेषुश्वापदावयांसिचपिपीली
काभिःसहकणबलिभांडक्षालनाद्युपजीवंतितेनतेषांलोकोयस्मादयमेतानिकर्माणिकुर्वन्नुपकरोतिदेवादिभ्यस्तस्माद्यथाहवैलो
केस्वायलोकायस्वस्मैदेहायारिष्टिमविनाशंस्वत्वभावाऽप्रच्युतिमिच्छेत्स्वत्वभावप्रच्युतिभयात्पोषणरक्षणादिभिःसर्वतःपरिपालयेदे
वंहएवंविदेसर्वभूतयोग्योहमनेनप्रकारेणमयाऽवश्यमृणिवत्प्रतिकर्त्तव्यमित्येवमात्मानंपरिकल्पितवतेसर्वाणिभूतानिदेवादीनियथोक्ता
न्यरिष्टिमविनाशमिच्छंतिस्वत्वाप्रच्युत्यैसर्वतःसंरक्षंतिकुटुंबिनइवपशूं कारित्वमावृत्तिरित्याशंक्याह यस्मादितिपूर्वेषामथशब्दानामभिप्रेत

भा॰२

ऋणंदेदाति२ झाँ६

देवादीनांकर्माधिकारिणिकर्त्तृत्वादिपरिपालनमेवपरिरक्षणमितिविवक्षित्वापूर्वोक्तंस्मारयति॥तस्मादिति॥यथोक्तंकर्मकुर्वन्यद्यपिदेवादीन्स्वमु
पकरोतितथापिनतत्कर्त्तृत्वमावश्यकंमानाभावादित्याशंक्याह॥तद्धइति॥भूतयज्ञोमनुष्ययज्ञःपितृयज्ञोदेवयज्ञोब्रह्मयज्ञश्चेत्येवंपंचमहाय
ज्ञाः॥ननुश्रुतमपिविचारंविनानानुष्ठेयंनहिरुद्ररोदनादिश्रुतमित्येवानुष्ठीयतेतत्राह॥मीमांसितमिति॥तदेतद्वेदयतेयद्यजतेसयदग्नौ
जुहोतीत्याद्यवदानप्रकरणं॥ऋणंहवावजायतेजायमानोयोस्तीत्यादिनार्थवादेनेतिशेषः॥१६॥वाक्यांतरमादायव्याख्यातुंपातनिकांकरोति
॥आत्मैवेत्यादिनाकर्मैवबंधनंतत्राधिकारोनुष्ठानंतस्मिन्नितियावद्विद्याधिकारस्तदुपायेश्रवणादौप्रवृत्तिस्तत्रेत्यर्थः यथोक्ताधिकारिणोदेवा

स्तस्मादेषांतन्नप्रियमित्युक्तं॥तद्वैएतत्तदेतद्यथोक्तानांकर्मणामृणवदवश्यकर्त्तव्यत्वंपंचमहायज्ञप्रकरणेविदितंकर्त्तव्य
तयामीमांसितंविचारितंचावदानप्रकरणे॥१६॥आत्मैवेदमग्रआसीत्॥ब्रह्मविद्वांश्चेदस्मात्पशुभावात्कर्त्तव्यताबंधनरूपात्प्र
तिमुच्यतेकेनायंकारितःकर्मबंधनाधिकारेऽवशइवप्रवर्त्ततेनपुनस्तद्विमोक्षणोपायेविद्याधिकारइति॥ननूक्तंदेवारक्षंतीति॥बा
ढं॥कर्माधिकारस्वगोचरारूढानेवतेपिरक्षंति॥अन्यथाऽकृताभ्यागमकृतनाशप्रसंगात्॥नतुसामान्यपुरुषमात्रंविशिष्टाधिकाराना
रूढंतस्माद्भवितव्यंतेनयत्प्रेरितोऽवशएवबहिर्मुखोभवतिस्वस्माल्लोकात्॥ दिभीरक्षणंप्रवृत्तिमार्गेनियमेनप्रवर्त्तकमितिशंकते॥नन्वि

ति॥उक्तमंगीकरोति॥बाढमिति॥तर्हिप्रवर्त्तकांतरंनवक्तव्यंतत्राह॥कर्माधिकारेति॥कर्मस्वधिकारेणस्वगोचरत्वंप्राप्तानेवदेवादयोपिरक्षंतिनस
र्वाश्रमसाधारणंब्रह्मचारिणमतोस्यकर्ममार्गेप्रवृत्तौदेवतादिरक्षणस्याहेतुत्वाद्ब्रह्मचारिणोनिवृत्तिंस्वस्याप्रवृत्तिपरत्वपक्षपातेकारणंवाच्यमित्यर्थः॥
मनुष्यमात्रंकर्मण्येवतेबलात्प्रवर्त्तयंतितेषामचिंत्यशक्तित्वादित्याशंक्याह॥अन्यथेति॥स्वगोचरारूढानेवेत्येवकारस्यव्यावर्त्यंकीर्त्तयतिनत्वितिविशिष्टाधि

कारोगृहस्थानुष्ठेयकर्मसुगृहस्थत्वेनस्वाम्यित्वंतेनदेव
गोचरतामप्राप्तमित्यर्थः॥

प्रं६

देवादिरक्षणस्याकारणत्वे फलितमाह॥ तस्मादिति॥ प्रत्यगविद्याय थोक्ताधिकारिणो नियमेन प्रवृत्त्यनुरागे हेतुरिति शंकते॥ नन्विति॥ तदेव स्फुटयति॥ अविद्यावानिति॥ तस्याः स्वरूपेण प्रवर्त्तकत्वं दूषयति॥ सापीति॥ अविद्यायास्तर्हि प्रवृत्त्यन्वयव्यतिरेकौ कथमित्याशंक्य कारणत्वेनेत्याह॥ प्रवर्त्तकेति॥ सत्यन्यस्मिन्कारणेऽकारणमेवाविद्या प्रवृत्तिरिति चेत्तत्राह॥ एवं तर्हीति॥ उत्तरवाक्यमुत्तरत्वेनावतार्य तस्मिन्विवक्षितं प्रवर्त्तकं संक्षिपति॥ तदिहाभिधीयत इति॥ तत्रार्थतः श्रुत्यंतरं संवादयति॥ स्वाभाविक्यामिति॥ तत्रैव भगवतः संमतिमाह॥ स्मृतौ चेति॥ अथ केन प्रयुक्तोयमित्यादि प्रश्न

नन्विद्ययाऽविद्यावान्हि बहिर्मुखीभूतः प्रवर्त्तते सापि नैव प्रवर्त्तिका वस्तुस्वरूपावरणात्मिका हि सा प्रवर्त्तकबीजत्वं तु प्रतिपद्यते ध्वमिव गर्तादिपतन प्रवृत्तिहेतुरेवं तर्हि उच्यतां किं यत्प्रवृत्तिहेतुरिति तदिहाभिधीयते एषणा कामः सः स्वाभाविक्यामविद्यायां वर्त्तमाना बालाः प्रवर्त्तते पराचः कामाननुयंतीति काठकश्रुतौ स्मृतौ च काम एष इत्यादि॥ मानवे च सर्वा प्रवृत्तिः कामहेतुकैवेति स एषोर्थः सविस्तरः प्रदर्श्यत इहाध्याय परिसमाप्तेः॥ आत्मैवेदमग्र आसीत् आत्मैव स्वाभाविकोऽविद्वान्कार्यकरणसंघातलक्षणो वर्णी अग्रे प्राग्दारसंबंधादात्मेत्यभिधीयते तस्मादात्मनः पृथग्भूतं काम्यमानं जायादिभेदरूपं नासीत्स एवैक आसीज्जायाद्येषणाबीजभूताविद्यावानेक एवासीत्स्वाभाविक्यात्मनि कर्त्रादिकारकक्रियाफलात्मकताध्यारोपलक्षणयाऽविद्यावासनया वासितः॥ स्योत्तरं काम एष

क्रोध एष रजोगुणसमुद्भव इत्यादि॥ अकामतः क्रिया काचिद्दृश्यते नेह कस्यचित्॥ यद्यद्धि कुरुते जंतुस्तत्तत्कामस्य चेष्टितमिति वाक्यमाश्रित्याह॥ मानवे चेति एवेति॥ दर्शितमिति शेषः॥ उक्तेर्थे तृतीयाध्यायशेषमपि प्रमाणयति॥ स एष इति॥ एवं तात्पर्यमुक्त्वा प्रतीकमादाय पदानि व्याकरोति आत्मैवेत्यादिना॥ वर्णीहि जत्वद्योतको ब्रह्मचारीति यावत्॥ कथं तर्हि हेत्वभावे तस्य कामित्वमपि स्यादित्याशंक्याह॥ जायादीति॥ स शब्दं व्याकुर्वन्नुत्तरवाक्यमा

कामनाप्रकारंप्रश्नपूर्वकंप्रकटयति॥कथमिति॥कर्माधिकारहेतुत्वंतस्याःसाधयति॥तयेति॥प्रजांप्रतिजायायाहेतुत्वद्योतकोऽथशब्दः॥प्रजाया
मानुषवित्तांतर्भावमुपेत्यद्वितीयोऽथशब्दःतृतीयस्तुवित्तस्यकर्मानुष्ठानहेतुत्वविवक्षयेतिविभागः॥कर्मानुष्ठानफलमाह॥येनेति॥तत्किंनित्यनैमि

सोऽकामयतकामितवान्कथंजायाकर्माधिकारहेतुभूतामेममकर्तुःस्यात्तयाविनाहमनधिकृतएवकर्मण्यतःकर्माधिकारसंपत्तयेभ
वेज्जायाऽथाहंप्रजायेयप्रजारूपेणाहमेवोत्पद्येयाथवित्तंमेस्यात्कर्मसाधनंगवादिलक्षणमथाहमभ्युदयनिःश्रेयससाधनंकर्मकु
र्वीययेनाहमनृणीभूत्वादेवादीनांलोकान्प्राप्नुयांतत्कर्मकुर्वीयकाम्यानिचपुत्रवित्तस्वर्गादिसाधनान्येतावान्वैकामएतावद्धिविषयपरि

आत्मैवेदमग्रआसीदेकएवसोऽकामयतजायामेस्यादथप्रजायेयाथवित्तंमेस्यादथकर्मकुर्वीयेत्येतावान्वैकामोनेच्छंश्च
नातोभूयोविंदेत्तस्मादप्येतर्ह्येकाकीकामयतेजायामेस्यादथप्रजायेयाथवित्तंमेस्यादथकर्मकुर्वीयेति॥

च्छिन्नइत्यर्थःएतावा
नेवहिकामयितव्योविषयोयदुतजायापुत्रवित्तकर्माणि॥साधनलक्षणैषणालोकाश्चत्रयोमनुष्यलोकःपितृलोकोदेवलोकइतिफल
भूताःसाधनैषणायाश्चास्याःएतदर्थाहिजायापुत्रवित्तकर्मलक्षणासाधनैषणातस्मात्सैकैवैषणायालोकैषणासैकैवसत्येषणासाधना
पेक्षेतिद्विधाऽतोऽवधारयिष्यत्युभेह्येतेएषणेएवेति

त्तिककर्मणामेवानुष्ठानंनेत्याह॥काम्यानिचेति॥क्रियापदमनुकृष्टंचशब्दः॥
कामशब्दस्ययथाश्रुतमर्थंगृहीत्वैतावानित्यादिवाक्यस्याभिप्रायमाह॥साधनलक्षणेति॥अस्याःसाधनैषणायाःफलभूताइतिसंबंधः॥द्वयोरेषणा
त्वमुक्त्वालोकैषणांपरिशिनष्टि॥एतदर्थाहीति॥कथंतर्हिसाधनैषणोक्तिरित्याशंक्याह॥सैकेति॥एतेनवाक्यशेषोऽप्यनुगुणोभवतीत्याह॥अतइति॥
कुर्वीयेति २

=कामशब्देनसाधनसाध्येषणयोरवाच्यत्वेनचानर्थता=२



साधनवत्फलमपिकाममाशंचेत्कथंतर्हिश्रुत्यासाधनमात्रमभिधायैतावानवध्रियतेतत्राह॥फलार्थत्वादिति॥उक्तेसाधनेसाध्यमार्थिकमि
त्यत्रदृष्टांतमाह॥भोजनइति॥साधनोक्तौसाध्यस्यार्थादुक्तेरेतावानितिद्वयोरनुवादेपिकथमेषणात्वेकामशब्दस्तत्रप्रयुज्यते॥नहितौपर्या
यौनचतंदवाच्यत्वेतयोरनर्थतैत्याशंक्यापर्यायत्वमेषणाकामशब्दयोरुपेत्याह॥तेएतेइति॥वेष्टनमेवस्पष्टयति॥कर्ममार्गइति॥अग्निमु



फलार्थत्वात्सर्वारंभस्यलोकैषणार्थप्राप्तोक्तैवेत्येतावान्वैएतावानेवकामइत्यवध्रियतेभोजनेभिहितेतृप्तिर्नहिपृथगभिधेयातद
र्थत्वाद्भोजनस्यतेएतेएषणेसाध्यसाधनलक्षणेकामोयेनप्रयुक्तोऽविद्वानवशएवकोशकारवदात्मानंवेष्टयतिकर्ममार्गएवात्मानं
प्रणिदधद्बहिर्मुखीभूतोनस्वंलोकंप्रतिजानातितथाचतैत्तिरीयकेऽग्निमुग्धोहैवधूमतांतःस्वंलोकंनप्रतिजानातीतिकथंपुनरेताव
त्वमवधार्यतेकामानामनंतत्वादनंताहिकामाइत्येतदाशंक्यहेतुमाहयस्मान्नेच्छंश्चनेइच्छन्नप्यतोऽस्मात्फलसाधनलक्षणाद्द्वयाधि
कतरंनविंदेतनलभेत॥नहिलोकेफलसाधनव्यतिरिक्तंदृष्टमदृष्टंवालब्धव्यमस्तिलब्ध्यविषयोहिकामस्तस्यचैतद्व्यतिरेकेणा
भावाद्युक्तंवक्तुमेतावान्वैकामइत्येतदुक्तंभवतिदृष्टार्थमदृष्टार्थंवासाध्यसाधनलक्षणमविद्यावत्पुरुषाधिकारविषयमेषणाद्वयंका
मोऽतोऽस्माद्विदुषाव्युत्थातव्यमिति

ग्धोऽग्निरेवहोमादिद्वारेणममश्रेयःसाधनंनात्मज्ञानमित्यभिमानवान्धूमतांतोधूमेनग्लानिमापन्नोधूमतावा
ममांतेदेहावसानेभवतीतिमन्यमानस्तेधूममभिसंभवंतीतिश्रुतेः॥स्वंलोकमात्मानं॥वाक्यांतरमुत्थाप्यव्याचष्टे॥कथमित्यादिना॥तस्मादेतावत्त्वमवधा
र्यतेतेषामितिशेषः॥उक्तमेवार्थंलोकदृष्टिमवष्टभ्यस्पष्टयति॥नहीति॥लब्धव्यांतराभावेपिकामयितव्यांतरंस्यादित्याशंक्याह॥लब्धव्येति॥एतद्व्यति
रेकेणसाध्यसाधनातिरेकेणेतियावत्॥तयोर्द्वयोरपिकामत्वविधायिश्रुतेरभिप्रायमाह॥एतदुक्तमिति ॥

कामस्यानर्थत्वात्साध्यसाधनयोश्चतावन्मात्रत्वात्स्वर्गादेःपुमर्थताविश्वासंत्यक्त्वास्वप्नलाभतुल्याभ्यस्तिसृभ्योप्येषणाभ्योव्युत्थानंसंन्यासात्मकंकृ
त्वाकांक्षितमोक्षसहेतुंज्ञानमुद्दिश्यश्रवणाद्यावर्तयेदित्यर्थः॥तस्मादपीत्यादिव्याचष्टे॥यस्मादिति॥प्राकृतस्थितिरेषानबुद्धिपूर्वकारिणामिदं
वृत्तमित्याशंक्याह॥प्रजापतेश्चेति॥तत्रहेतुत्वेनपूर्वोक्तंस्मारयति॥सोविभेदित्यादिना॥तत्रैवकार्यलिंगकमनुमानंसूचयति॥तस्मादिति॥

यस्मादेवमविद्वानात्माकामीपूर्वःकामयामासतथापूर्वतरोपिएषालोकस्थितिःप्रजापतेश्चैवमेषसर्गआसीत्सोविभेद्विद्ययात
तःकामप्रयुक्तएकाकीरममाणोऽरत्युपघातायस्त्रियमैच्छत्तांसमभवत्ततःसर्गोयमासीदितियुक्तंतस्मात्तत्स्रष्टवेतर्ह्येतस्मिन्न
पिकालेएकाकीसन्प्राक्दारक्रियातःकामयतेजायामेस्यादथप्रजायेयअथवित्तंमेस्यादथकर्मकुर्वीयेत्युक्तार्थंवाक्यं॥सएवंकामय

सयावदप्येतेषामेकैकंनप्राप्नोत्यकृत्स्नएवतावन्मन्यतेतस्योकृत्स्नतामनएवास्यात्मावाग्जायाप्राणःप्रजा

मानःसंपादयंश्चजायादीन्यावत्सएतेषांयथोक्तानांजायादीनांएकैकमपिनप्राप्नोत्यकृत्स्नोऽसंपूर्णोहमित्येवंतावदात्मानंमन्यतेपारि
शेष्यात्समस्तानेवैतान्संपादयतियदातदातस्यकृत्स्नतायदातुनशक्नोतिकृत्स्नतांसंपादयितुंतदास्याकृत्स्नत्वंतदास्यकृत्स्नत्वसंपा
दनायाहतस्यउतस्याकृत्स्नत्वाभिमानिनःकृत्स्नतेयमेवंभवतिकथमयंकार्यकरणसंघातःप्रविभज्यते सयावदित्यादिवाक्यमादाय

व्याचष्टे॥सएवमिति॥पूर्वःसशब्दोवाक्यप्रदर्शनार्थःद्वितीयस्तुव्याख्यानमध्यपातीत्यविरोधःअर्थसिद्धमर्थमाह॥पारिशेष्यादिति॥तस्याकृ
त्स्नतेत्येतदवतार्यव्याकरोति॥यदेत्यादिना॥अकृत्स्नत्वाभिमानिनोविरुद्धंकृत्स्नत्वमित्याशंक्याह॥कथमिति॥विरोधमंतरेणकात्स्न्यर्थंविभागंद

बृ.र.
१०६

मनैः प्रयोज्यत्वं वागादिचतुष्टयस्येत्यर्थः ४
विभागे प्रस्तुते मनसो यजमानत्वकल्पनायां निमित्तमाह ॥ तत्रेति ॥ उक्तमेव व्यनक्ति ॥ यथेति ॥ तथा मनसो यजमानत्वकल्पनावदित्यर्थः ॥ वाचिजा
यात्वकल्पनायां निमित्तमाह मनइति ॥ वाचो मनोनुवृत्तित्वं स्वरूपकथनपुरःसरं स्फोरयति ॥ वागितीति ॥ प्राणस्य प्रजात्वकल्पनां साधयति ॥ ता
भ्यां चेति ॥ कथं पुनश्चक्षुर्मानुषं वित्तमित्युच्यते पशुहिरण्यादि हि तदित्याशंक्याह ॥ तत्रेति ॥ आत्मादित्रये सिद्धे सतीति यावत् ॥ आदिपदेन कायचे

तत्र मनोनुवृत्तिहि इतरत्सर्वं कार्यकरणजातमिति मनः प्रधानत्वादात्मेवात्मा यथा जायादीनां कुटुंबपतिरात्मेव तदनुकारित्वाज्जाया
दिचतुष्टयस्यैवमिहापि मन आत्मा परिकल्प्यते कृत्स्नतायै तथा वाग्जाया मनोनुवृत्तित्वसामान्याद्वाचो वागिति शब्दश्रोदनादिलक्ष
णो मनसा श्रोत्रादिद्वारेण गृह्यते वधार्यते प्रयुज्यते चेति मनसो जायेव वाक्ताभ्यां च वाङ्मनसाभ्यां जायापतिस्थानीयाभ्यां प्रसूयते प्राणः

चक्षुर्मानुषं वित्तं चक्षुषा हि तद्विंदते श्रोत्रं दैवꣳ श्रोत्रेण हि तच्छृणोत्यात्मैवास्य कर्मात्मना हि कर्म करोति

कर्मार्थमिति प्राणः प्रजेव ॥ तत्र प्राणचेष्टादिलक्षणं कर्म चक्षुर्दृष्टवित्तसाध्यं भवतीति चक्षुर्मानुषं वित्तं तद्विविधं वित्तं मानुषमितरच्चातो
विशिनष्टि इतरवित्तनिवृत्त्यर्थं मानुषमिति गवादिहि मनुष्यसंबंधि वित्तं चक्षुर्ग्राह्यं कर्मसाधनं तस्मात्तत्स्थानीयं तेन संबंधाच्चक्षुर्मानुषं
वित्तं चक्षुषा हि यस्मात्तन्मानुषं वित्तं विंदते गवाद्युपलभत इत्यर्थः ॥ किं पुनरितरद्वित्तं श्रोत्रं दैवं देव
शागृह्यते मानुषमिति विशेषणस्यार्थ
वत्त्वं समर्थयते ॥ तद्विविधमिति ॥ संप्रति चक्षुषो मानुषवित्तत्वं प्रपंचयति ॥ गवादीति तत्सदपरामृष्टमेवार्थं व्याचष्टे ॥ तेन संबंधादिति ॥ तत्स्थानी
यं मानुषवित्तस्थानीयं तेन मानुषवित्तेनेत्येतत् ॥ संबंधमेव साधयति ॥ चक्षुषा हीति तस्माच्चक्षुर्मानुषं वित्तमिति शेषः ॥ आकांक्षापूर्वकमुत्तरवाक्य

तत्रहेतुमाह॥कस्मादित्यादिना॥यजमानादिनिर्वर्त्यकर्मप्रश्नपूर्वकं विशदयति॥किंपुनरित्यादिना॥इहेतिसंपत्तिशब्दोक्तिः॥शरीरस्यकर्मत्वम प्रसिद्धमितिशंकित्वापरिहरति॥कथंपुनरिति॥अस्येतियजमानोक्तिः हिशब्दोयतइत्यनूद्यते॥तस्मात्कृत्स्नतेत्युक्तमुपसंहरति॥तस्येति॥उक्त रीत्याकृत्स्नत्वेसिद्धेफलितमाह॥तस्मादिति॥अस्येतिदर्शनोक्तिः पशोःपुरुषस्यच पांक्तत्वंतच्छब्दार्थः पुरुषस्यपशुत्वाविशेषात्पृथग्ग्रहणमयुक्त

विषयत्वाद्धिज्ञानस्यविज्ञानंदैवंवित्तंतदिहश्रोत्रमेवसंपत्तिविषयंकस्माच्छ्रोत्रेणहियस्मात्तद्दैवंवित्तंविज्ञानंशृणोतिअतःश्रोत्रा धीनत्वाद्धिज्ञानस्यश्रोत्रमेवतदितिकिंपुनरेतैरात्मादिवित्तांतैरिहनिर्वर्त्यंकर्मेत्युच्यतेआत्मैवात्मेतिशरीरमुच्यतेकथंपुनरात्मा कर्मस्थानीयोऽस्यकर्महेतुत्वात्कथंकर्महेतुत्वमात्मनाहिशरीरेणयतःकर्मकरोति॥तस्यात्कृत्स्नत्वाभिमानिनःएवंकृत्स्नतासंप

सएषपाङ्क्तोयज्ञःपाङ्क्तःपशुःपाङ्क्तःपुरुषःपाङ्क्तमिदꣳसर्वंयदिदंकिंचतदिदꣳसर्वमाप्नोतियएवंवेद॥१७॥चतुर्थंब्रा ह्मणं॥४॥ न्नायथावाह्याजायादिलक्षणा॥एवंतस्मात्सएषपांक्तःपंचभिर्निर्वृत्तःपांक्तोयज्ञोदर्शनमात्रनिर्वृत्तोऽकर्मिणोपिक थंपुनरस्यपंचत्वसंपत्तिमात्रेणयज्ञत्वमुच्यतेयस्माद्वाह्योपियज्ञःपशुपुरुषसाध्यःसचपशुःपुरुषश्चपांक्तएवयथोक्तमनआदिपंच त्वयोगात्तदाहपांक्तःपशुर्गवादिःपांक्तःपुरुषःपशुत्वेप्यधिकृतत्वेनास्यविशेषःपुरुषस्येतिपृथक्पुरुषग्रहणंकिंबहुनापांक्तमिदंस र्वंकर्मसाधनंफलंचयदिदंकिंचयत्किंचिदिदंसर्व मित्याशंक्याह॥पशुत्वेपीति॥नकेवलपशुपुरुषयोरेवपाङ्क्तत्वंकिंतुसर्वस्येत्याह॥ किंबहुनेति॥तस्मादाध्यात्मिकस्यदर्शनस्ययज्ञत्वंपंचत्वयोगादविरुद्धमितिशेषः॥संपत्तिफलंव्याकरोति॥एवमित्याख्यातार्थंवाक्यमनव

ॐविद्वान्गृही धर्मानुगामी सर्वोपकारकः ९

साध्यं साधनं च पाङ्क्तं सूत्रात्मना ज्ञात्वा तच्चात्मत्वेनानुसंधानस्य तदाप्तिरेव फलं तत्क्रतुन्यायादित्यर्थः॥१७॥ इति बृहदारण्यके तृतीये प्रपाठके च
तुर्थब्राह्मणभाष्यटीका॥४॥ ब्राह्मणांतरमवतार्य संगतिं वक्तुं वृत्तं कीर्त्तयति॥ यत्सप्तान्नानीत्यादिना॥ तत्रेत्यतिक्रांतब्राह्मणोक्तिः॥ उपास्तिशब्दि
तं भेददर्शनमविद्याकार्यमनेनानूद्यन स वेदेतितद्धेतुरविद्या पूर्वत्र प्रस्तुतेति योजना॥ अथो अयमित्यत्रोक्तमनुवदति स वर्णाश्रमाभिमान इति॥

मेवं पांक्तं यज्ञमात्मानं यः संपादयति सः तदिदं सर्वं जगदात्मत्वेनाप्नोति य एवं वेद॥१७॥ इति बृहदारण्यके तृतीये प्रपाठके च
तुर्थं ब्राह्मणं॥४॥ यत्सप्तान्नानि मेधया विद्या प्रस्तुता तत्राविद्वानन्यां देवतामुपास्तेन्योसावन्योहमस्मीति स वर्णाश्रमाभिमानः

यत्सप्तान्नानि मेधया तपसाजनयत्पिता॥ एकमस्य साधारणं द्वे देवानभाजयत्॥ त्रीण्यात्मनेकुरुत पशुभ्य एकं प्राय
च्छत्॥ तस्मिन्त्सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च न॥ कस्मात्तानि न क्षीयंते द्यमानानि सर्वदा॥ यो वै तामक्षितिं वेद सोन्नम
त्तिप्रतीकेन॥ स देवानपि गच्छति स ऊर्जमुपजीवतीति श्लोकाः॥१॥ कर्मकर्त्तव्यतयानियतो जुहोत्यादिकर्मभिः कामप्रयु
क्तो देवादीनामुपकुर्वन्सर्वेषां भूतानां लोक इत्युक्तं यथा च स्वकर्मभिरेकैकेन सर्वैर्भूतैरसौ लोको भोज्यत्वेन सृष्टः आत्मैवेदमग्र आसीदित्या

द्युक्तं स्मारयति॥ कामप्रयुक्त इति॥ वृत्तमनूद्योत्तरग्रंथमवतारयितुमपेक्षितं पूरयति॥ यथा चेति॥ गृहिणो जगतश्च परस्परं स्वकर्मोपार्जितत्वमेष्ट
व्यमन्यथान्योन्यमुपकारकत्वायोगादित्यर्थः॥ ननु सूत्रस्यैव जगत्कर्त्तृत्वं ज्ञानक्रियातिशयवत्त्वान्नेतरेषां तदभावादत आह॥
=पंचयज्ञादिकर्मणायं गृही सर्वप्राणिभिर्भुज्यते इत्येवमस्य सर्वं जगत्स्वस्तुपकारकत्वं॥ जगतश्च द्रव्यदेवतादिरूपेण प्रतिदिनं भोगेयज्ञोपयोगे चोपकारकत्वमतो गृही सर्वजगत्कर्मणो
पार्जितः जगच्च गृहिकर्मोपार्जितं=२ =अन्यथा परस्परभोग्यभोक्तृत्वं न स्यात् सप्तान्नवैचित्र्यं कल्पादौ सप्तान्नवैचित्र्ये जगत्कर्मण उपादानत्वं पूर्वकल्पीय गृहिणः कर्मणश्च=२

एवमिति॥पूर्वकल्पीयविहितप्रतिषिद्धज्ञानकर्मानुष्ठाता सर्वो जंतुरुत्तरसर्गे स्रष्टृपितृत्वेनात्र विवक्षितो न तु प्रजापतिरेवेत्युक्तमर्थं संक्षिप्याह॥सर्वस्येति॥सर्वस्य मिथो हेतुहेतुमत्त्वे प्रमाणमाह॥एतदेवेति॥सर्वस्यान्योन्यकार्यकारणत्वोक्त्या कल्पितत्ववचनं कुत्रोपयुज्यते तत्राह॥आत्मैकत्वेति॥एवंभूमिकां कृत्वोत्तरब्राह्मणतात्पर्यमाह॥यदसावितिः॥उच्यंते ध्यानार्थमिति शेषः अन्नत्वे हेतुः भोज्यत्वादिति॥तेन ज्ञानकर्मभ्यां जन

एवमसावपि जुहोत्यादिपांक्तकर्मभिः सर्वाणि भूतानि सर्वं च जगदात्मनो भोज्यत्वेनासृजत एवमेकैकः स्वकर्मविद्यानुरूपेण सर्वस्य जगतो भोक्ता भोज्यं च सर्वस्य सर्वः कर्त्ता कार्यं चेत्यर्थः॥ एतदेव च विद्याप्रकरणे मधुविद्यायां व्यस्यामः सर्वं सर्वस्य कार्यमध्विति आत्मैकत्वविज्ञानार्थं यदसौ जुहोत्यादिना पांक्तेन काम्येन कर्मणात्मभोज्यत्वेन जगदसृजत विज्ञानेन च तज्जगत्सर्वं सप्तधा प्रविभज्यमानं कार्यकारणत्वेन सप्तान्नान्युच्यंते भोज्यत्वात्तेनासौ पिता तेषामन्नानामेतेषामन्नानां सविनियोगानां सूत्रभूताः संक्षेपतः प्रकाशकत्वादिमे मंत्राः यत्सप्तान्नानि यदजनयदिति क्रियाविशेषणं मेधया प्रज्ञया विज्ञानेन तपसा च कर्मणा ज्ञानकर्मणी एव हि मेधातपःशब्दवाच्ये तयोः प्रकृतत्वान्नेतरे मेधातपसी अप्रकरणात् पांक्तं हि कर्मजायादिसाधनं य एवं वेदेति चानंतरमेव ज्ञानं प्रकृतं तस्मान्न प्रसिद्धयोर्मेधातपसोराशंका कार्या अतो यानि यत्सप्तान्नानि ज्ञानकर्मभ्यां जनितवान्पिता तानि प्रकाशयिष्याम इति वाक्यशेषः॥१॥ तत्र मंत्राणामर्थस्तिरोहितत्वात्प्रायेण दुर्विज्ञेयो भवतीति तदर्थव्याख्यानाय ब्राह्मणं प्रवर्त्तते

क[नि]त्वेनेति यावत्॥ब्राह्मणमवतार्य मंत्रमवतारयति॥एतेषामिति॥तत्राद्यं मंत्रभागमादाय व्याचष्टे॥यत्सप्तान्नानीति॥अजनयदिति क्रियाया विशेषणं यदिति पदं॥तथा च तदुक्तं पितृत्वादिति शेषः॥ग्रंथार्थधारणशक्तिर्मेधा॥कृच्छ्रचांद्रायणादि तपः॥ते कस्मादत्र न गृह्येते तत्राह॥ज्ञानकर्मणी इति॥तयोः प्रकृतत्वं प्रकटयति॥पांक्तं हीति॥इतरयोरप्रकृतत्वे हेतूकृतमनूद्य फलितमाह॥तस्मादिति॥ज्ञानकर्म

=यत्प्रसिद्धं यथा स्यात्तथाऽजनयत्=२

यत्सप्तान्नानीत्यादिमंत्रभागंव्याख्यायब्राह्मणवाक्यसमुदायतात्पर्यमाह॥तत्रेति॥मंत्रब्राह्मणात्मकोग्रंथःसप्तम्यर्थः॥मेधयाहीत्यादिब्राह्मणमाकांक्षा
पूर्वकमुत्थापयति॥तत्रयदिति॥प्रकृतमंत्रसमुदायःसप्तम्यापरामृश्यते॥व्याख्यानमेवसंगृह्णाति॥प्रसिद्धोहीति॥नकेवलंहिशब्दान्मंत्रस्यप्रसि
द्धार्थत्वंकिंतुमंत्रस्वरूपालोचनायामपितत्सिध्यतीत्याह॥यदिति॥मंत्रार्थस्यप्रसिद्धत्वेमंत्रस्यानुगुणत्वंहेतूकृत्यफलितमाह॥अतइति॥तत्प्रसि
द्धिमुपपादयितुंपृच्छति॥नन्विति॥साध्यसाधनात्मकेजगतियत्पितृत्वमविद्यावतोभावितत्वस्यसत्वात्प्रसिद्धमनुभूयतेहिजायादिसंपादयन्ननि

तत्रयत्सप्तान्नानिमेधयातपसाजनयत्पितेतिअस्यकोर्थउच्यतइतिहिशब्देनैवव्याचष्टेप्रसिद्धार्थावद्योतकेनप्रसिद्धोह्यस्यमंत्रस्या
र्थइत्यर्थोयदजनयदितिचानुवादस्वरूपेणमंत्रेणप्रसिद्धार्थतैवप्रकाशिताअतोब्राह्मणमविशंकयैवाहमेधयाहितपसाजनयत्पि

यत्सप्तान्नानिमेधयातपसाजनयत्पितेतिमेधयाहितपसाजनयत्पिते

तेतिननुकथंप्रसिद्धत्वास्यार्थस्येत्युच्यतेजायादिकर्मांतानांलोकफलसाधनानांपितृत्वंतावत्प्रत्यक्षमेवाभिहितंचजायामेस्यादित्यादिना
॥तत्रचदेवंवित्तंविद्याकर्मपुत्रश्चफलभूतानांलोकानांसाधनंस्रष्टृत्वंप्रतीत्यभिहितंवक्ष्यमाणंचप्रसिद्धमेवतस्माद्युक्तंवक्तुंमेधयेत्यादि
एषणाहिफलविषयाप्रसिद्धैवचलोके ह्यनित्याह॥उच्यतइति॥श्रुत्याचप्रागुक्तत्वात्प्रसिद्धमेतदित्याह॥अभिहितंचेति॥यच्चमेधातपोभ्यांस्र
ष्टृत्वंमंत्रब्राह्मणयोरुक्तंतदपिप्रसिद्धमेवविद्याकर्मपुत्राणामभावेलोकत्रयोस्तत्यनुपपत्तेरित्याह॥तत्रचेतिपूर्वोत्तरग्रंथःसप्तम्यर्थःपुत्रेणैवायंलो
कोजय्यइत्यादौवक्ष्यमाणत्वात्तास्यार्थस्यप्रसिद्धतेत्याह॥वक्ष्यमाणंचेति॥मंत्रार्थस्यैवंप्रसिद्धत्वेमंत्रस्यप्रसिद्धार्थविषयंब्राह्मणमुपपन्नमित्युपसंहर

फलविषयत्वं तस्याः स्वानुभवसिद्धमिति वक्तुं हि शब्दः ॥ तस्यालोकप्रसिद्धत्वेपि कथं मंत्रार्थप्रसिद्धत्वमत आह ॥ एषणा चेति ॥ जायाद्यात्मक
स्य कामस्य संसारारंभकत्वं मोक्षेपि कामः संसारमारभेत कामत्वाविशेषादित्यतिप्रसंगमाशंक्याह ॥ ब्रह्मविद्येति ॥ तस्याः विषयो मोक्षः तस्मि
न्नहिती यत्वाद्रागादिपरिपंथिनि कामापरपर्यायो रागो नावकल्पते ॥ न हि मिथ्याज्ञाननिदानो रागः सम्यग्ज्ञानाधिगम्ये मोक्षे संभवति ॥ अद्वात
त्र भवंती तत्वबोधाधीनतया संसारविरोधीनी तन्न संसारानुषक्तिर्युक्ताविलर्थः ॥ शास्त्रीयस्य जायादेः संसारहेतुत्वे कर्मादेरशास्त्रीयस्य कथं त
द्धेतुत्वमित्याशंक्याह ॥ एतेनेति ॥ अविद्योत्थकामस्य संसारहेतुत्वोपदर्शनेनेति यावत् ॥ स्वाभाविकाभ्याम विद्याधीनकामप्रयुक्ताभ्यामित्यर्थः ॥ इ

एषणा च जायादीत्युक्तमेतावान्वै काम इत्यनेन ब्रह्मविद्याविषये च सर्वैकत्वात्कामानुपपत्तेः ॥ एतेनाशास्त्रीयप्रज्ञातपोभ्यां स्वाभा
विकाभ्यां जगत्स्रष्टृत्वमुक्तमेव भवति स्थावरांतस्य चानिष्टफलस्य कर्मविज्ञाननिमित्तत्वाद्विवक्षितस्तु शास्त्रीय एव साध्यसाध
नभावो ब्रह्मविद्याविधित्सया तद्वैराग्यस्य विवक्षितत्वात्सर्वो ह्ययं व्यक्ताव्यक्तलक्षणः संसारोऽशुद्धोऽनित्यः साध्यसाधनरूपो दुः
खोऽविद्याविषय इत्यतस्माद्विरक्तस्य ब्रह्मविद्यारभ्येति ॥ तत्रान्नानां विभागेन विनियोग उच्यते ॥

तच्चतयोर्जगत्स्रष्टिप्रयोजक
त्वमेष्टव्यमित्याह ॥ स्थावरांतस्येति ॥ यत्सप्तान्नानीत्यादिमंत्रपदस्य मेधया हीत्यादिब्राह्मणस्य चाक्षरोत्थमर्थमुक्त्वा तात्पर्यार्थमाह ॥ विवक्षित
स्त्विति ॥ शास्त्रपरवशस्य शास्त्रवशादेव साध्यसाधनभावाद्शास्त्रीयाद्वैमुख्यसंभवान्न तस्यात्र विवक्षितत्वमित्यर्थः ॥ शास्त्रीयस्य साध्यसाधनभा
वस्य विवक्षितत्वे हेतुमाह ॥ ब्रह्मेति ॥ तदेव प्रपंचयति सर्वो हीति ॥ दुःखपतीति दुःखस्य हेतुरिति यावत् ॥ प्रकृतमंत्रब्राह्मणव्याख्यासमाप्ताव
तिशब्दो विवक्षितार्थप्रदर्शनसमाप्तौ वा ॥ मंत्रब्राह्मणयोः श्रुत्यर्थाभ्यामर्थमुक्त्वा समनंतरग्रंथमवतारयति ॥ तत्रेति ॥ सप्तविधेन्ने सृष्टे सतीति यावत् ॥

ओ २

व्याख्यानमेवविवृणोति॥ असेत्यादिना॥ साधारणमन्नमसाधारणीकुर्वतो दोषंदर्शयति॥ सयइति॥ तत्परोभवतीत्युक्तंविवृणोति॥ उपासनं हीति॥ ब्राह्मणोक्तैर्थंमंत्रंप्रमाणयति॥ तथाचेति॥ मोघंविफलंदेवाद्यनुपयोग्यमन्नंयदिज्ञानदुर्बलोलभतेतदासवधएवतस्येतिसाधार णान्नस्यासाधारणीकरणंनिंदितमित्यर्थः॥ तत्रैवस्मृतीरुदाहरति॥ स्मृतिरपीति॥ नवृथाघातयेत्पशुंनचैकःस्वयमश्नीयाद्विधिवर्जंननिर्वपे

एकमस्यसाधारणमितिमंत्रपदंतस्यव्याख्यानमिदमेवास्यतत्साधारणमन्नमित्युक्तमस्यभोक्तृसमुदायस्यकिंतद्यदिदमद्यते भुज्यतेसर्वैःप्राणिभिरहन्यहनितत्साधारणमन्नंसर्वभोक्त्रर्थमकल्पयत्पितास्रष्टान्नंसयएतत्साधारणंसर्वप्राणभृत्स्थितिक रंभुज्यमानमन्नमुपास्तेतत्परोभवतीत्यर्थः॥ उपासनंहिनामतात्पर्यंदृष्टंलोकेगुरुमुपास्तेराजानमुपास्तइत्यादौतस्माच्छरीरस्थि

कमस्यसाधारणमितीदमेवास्यतत्साधारणमन्नंयदिदमद्यतेसयएतदुपास्तेनसपाप्मनोव्यावर्ततेमिश्रं ह्येतत्

तत्पर्यान्नोपभोगप्रधानोनादृष्टार्थकर्मप्रधानइत्यर्थः सएवंभूतोनपाप्मनोऽधर्माद्व्यावर्त्ततेनविमुच्यतइत्येतत्तथाचमंत्रवर्णोमोघ मन्नंविंदतइत्यादिः॥ स्मृतिरपि॥ नात्मार्थंपाचयेदन्नमप्रदायैभ्योयोभुंक्तेस्तेनएवसः॥ अन्नादेभ्रूणहामार्ष्टीत्यादिः

दितिपादत्रयंद्रष्टव्यं॥ इष्टान्भोगान्हिवोदेवादास्यंतेयज्ञभाविताः॥ तैर्दत्तानितिशेषः॥ अनेनाअभिशंसतिस्तेनः प्रयुक्तोराजनियावन्नान्तसंकरइ त्युत्तरपादत्रयंद्रष्टव्यं॥ तत्राद्यपादस्यार्थोभ्रूणहाश्रेष्ठब्राह्मणघातकः॥ यथाहुः॥ वरिष्ठब्रह्महाचैवभ्रूणहेत्यभिधीयतइति॥ स्वस्यान्नभक्षकेस्वपापंमा र्ष्टिशोधयतीत्यन्नदातुःपापस्ययोक्तेरितरस्यासाधारणीकृत्यभुंजानस्यपापितेति॥ अदत्त्वातुयएतेभ्यःपूर्वंभुंक्तेऽविचक्षणः॥ सभुंजानोनजानातिश्वगृध्रै

तैत्परलं ७ गर्भेहे २ पुरुषेब्राह्मणघातरूपं २

आकांक्षापूर्वकं हेतुमवतार्य व्याकरोति॥ कस्मादित्यादिना॥ सर्वभोज्यत्वं साधयति॥ यो मुख इति॥ परस्य श्वमार्जारादेरिति यावत्॥ पीडाकरत्वे हेतुमाह॥ ममेदमिति॥ प्रागुक्तदृष्टिफलमाचष्टे॥ तस्मादिति॥ साधारणमन्नमसाधारणीकुर्वीणस्य पापानिवृत्तिरित्यत्र हेत्वंतरमाह॥ दुष्कृतं हीति॥ यदा हि मनुष्याणां दुष्कृतमन्नमाश्रित्य तिष्ठति तदा तदसाधारणीकुर्वतो महत्तरं पापं भवतीत्यर्थः॥ एकमस्येत्यादिमंत्रब्राह्मणयोः स्वपक्षस्य भर्तृप्रपंचपक्षमाह॥ गृहिणेति यदन्नं गृहिणा प्रत्यहमग्नौ वैश्वदेवाख्यं निर्वर्त्यते तत्साधारणमिति भर्तृप्रपंचैरुक्तमित्यर्थः साधारणपदानुप

कस्मात्पुनः पाप्मनो न व्यावर्त्तते मिश्रं ह्येतत्सर्वेषां हि स्वं तदप्रविभक्तं यत्प्राणिभिर्भुज्यते सर्वभोज्यत्वादेव यो मुखे प्रक्षिप्यमाणोपि ग्रासः परस्य पीडाकरो दृश्यते ममेदं स्यादिति हि सर्वेषां तत्राशा प्रतिबद्धा॥ तस्मान्न परमपीडयित्वा ग्रसितुं शक्यते दुष्कृतं हि मनुष्याणामित्यादिस्मरणाच्च गृहिणा वैश्वदेवाख्यमन्नमहन्यहनि निरुप्यत इति केचित् तन्न सर्वभोक्तृसाधारणत्वं वैश्वदेवाख्यस्यान्नस्य न सर्वप्राणभुज्यमानान्नवत्स्वत्वसंनापि यदिदमद्यत इति तद्विषयं वचनमनुकूलं सर्वप्राणभृद्भुज्यमानान्नत्वात्ः पातिलाच्च वैश्वदेवाख्यस्य युक्तं श्वचांडालाद्याद्यस्यान्नस्याग्रहणं वैश्वदेवव्यतिरेकेणापि श्वचांडालाद्याद्यान्नदर्शनात्तत्र युक्तं यदिदमद्यत इति वचनं यदि हि तन्न गृह्येत साधारणशब्देन पित्र्याः स्पष्टत्वाः विनियुक्तत्वे तस्य प्रसज्येयातां दृष्यते हि तत्स्पष्टत्वं तद्विनियुक्तत्वं च सर्वेषान्नजातस्य॥ एतेर्न युक्तमिदं व्याख्यानमिति दूषयति॥ तत्रेति॥ वैश्वदेवस्य साधारणत्वमप्रामाणिकमित्युक्तं॥ इदानीं तस्याप्रत्यक्षत्वादिदमापरामर्शश्चानुपपत्तिमानित्याह॥ नापीति॥ इतश्च साधारणशब्देन सर्वप्राण्यन्नं ग्राह्यमित्याह॥ सर्वेति॥ वैश्वदेवग्रहेपि इतरग्रहः स्यादिति चेन्नेत्याह॥ वैश्वदेवेति॥ यत्तु परपक्षे यदिदमद्यत इति वचोनानुकूलमिति तन्नास्मत्पक्षे स्तीत्याह॥ तत्रेति॥ प्रत्यक्षं साधारणान्नं सप्तम्यर्थः॥ विपक्षे दोषमा

=दुष्कृतं हि मनुष्याणामन्नमाश्रित्य तिष्ठति॥ यो हि यस्यान्नमश्नाति किल्बिषं स स तद्भवेत्= ८

परपक्षेवाक्यशेषविरोधंदोषांतरमाह॥नचेति॥श्येनादितुल्यत्वंतस्यव्यावर्त्तयति॥नचतस्येति॥अनिषिद्धस्यापितस्यस्वभावजुगुप्सित
त्वात्तदनुष्ठायिनःपापानिवृत्तिरित्याशंक्याह॥नचेति॥अवश्यंयातितिर्यक्त्वंजग्ध्वाचैवाहुतंहविरितिअकुरणेवैश्वदेवस्यप्रत्यवायश्रवणा
च्चतदनुष्ठायिनोनपाप्मवेधोस्तीत्याह॥अकरणेचेति॥सर्वसाधारणान्नग्रहेतुतस्यरस्यनिरावचनमुपपद्यतेतेनतदेवग्राह्यमित्याह॥इतरत्रे

नचवैश्वदेवाख्यंशास्त्रोक्तंकर्मकुर्वतःपाप्मनोऽविनिवृत्तिर्युक्तानचतस्यप्रतिषेधोस्तिनचमत्स्यबंधनादिकर्मवत्स्वभावजुगुप्सि
तमेतच्छिष्टैर्निर्वर्त्यत्वादकरणेचप्रत्यवायश्रवणादितरत्रचप्रत्यवायोपपत्तेरहमन्नमन्नमदंतमाद्मीतिमंत्रवर्णात्॥हुदेवानभाज
यदितिमंत्रपदंयेहुअग्नेस्पृष्टादेवानभाजयत्केतेहुइत्युच्यतेहुतंचप्रहुतंचहुतमित्यग्नोहवनंप्रहुतंहुत्वाचबलिहरणंयस्माद्धुएते

हुदेवानभाजयदितिहुतंचप्रहुतंचतस्माद्देवेभ्योजुव्हतिचप्रचजुव्हत्यथोआहुर्दर्शपूर्णमासाविति

अग्नेहुतप्रहुतेदेवानभाजयत्पितातस्मादेतर्ह्यपिगृहिणःकालेदेवेभ्योजुव्हतिदेवेभ्यइदमन्नमस्माभिर्दीयमानमितिमन्वानाःप्र
चजुहूतिप्रजुहूतिचहुत्वाचबलिहरणंचकुर्वतइत्यर्थः॥अथोअप्यन्येआहुर्हुअग्नेपित्रादेवेभ्यःप्रत्तेनहुतप्रहुतेकिंतर्हिदर्शपूर्णमा
साविति हित्वश्रवणाविशेषादन्यत्रप्रसिद्धत्वाच्चहुतप्रहुतेइतिप्रथमःपक्षः॥ ति॥तत्रैववस्तुत्यंतरंसंवादयति॥अहमिति॥अर्थिभ्योऽविभ
ज्यान्नमदत्वास्वयमेवभुंजानंनरंअहमन्नमेवभक्षयामितमनर्थभाजंकरोमीत्यर्थः॥मंत्रांतरमादायाकांक्षाद्वाराब्राह्मणमुत्थाप्यव्याचष्टे॥हुदेवा
नित्यादिना॥हुतप्रहुतयोर्देवान्नत्वेसंप्रतितन्नमनुष्ठानमनुकूलयतियस्मादिति॥पक्षांतरमुपन्यस्यव्याकरोति॥अथोइति॥यदिदर्शपूर्णमासेदेवा

तर्हि द्वे देवानितिश्रुतद्विलस्यकृतप्रकृतयोरपि संभवान्नप्रथमपक्षस्य पूर्वपक्षत्वमत आह॥ यद्यपीति॥ प्रसिद्धतरत्वे हेतुमाह॥ मंत्रेति॥ अग्नये जुष्टं निर्वपाम्यग्निरिदं हविरजुषतेत्यादिमंत्रेषु दर्शपूर्णमासयोर्द्वैवान्नत्वस्य प्रतिपन्नत्वादिति यावत्॥ इतश्च दर्शपूर्णमासयोरेव द्वेवान्नत्वमिति वक्तुं सामान्यन्यायमाह॥ गुणेति॥ गुणप्रधानयोरेकत्र साधारणशब्दात्प्राप्तौ सत्यां प्रथमतरां प्रधाने भवत्यवगतिर्गौणमुख्ययोर्मुख्ये संप्रत्यय इति न्यायादित्यर्थः॥ अस्त्वेवं प्रस्तुते किं जातं तदाह दर्शपूर्णमासयोश्चेति॥ तयोर्निरपेक्षश्रुतिदृष्टतया सापेक्षस्मृतिसिद्धकृताद्यपेक्षया प्राधा

यद्यपि द्वित्वं कृतप्रकृतयोः संभवति तथापि श्रौतयोरेव तु दर्शपूर्णमासयोर्द्वैवान्नत्वं प्रसिद्धतरं मंत्रप्रकाशितत्वाद्गुणप्रधानप्राप्तौ च प्रधाने प्रथमतरावगतिर्दर्शपूर्णमासयोश्च प्राधान्यं कृतप्रकृतापेक्षया तस्मात्तयोरेव ग्रहणं युक्तं द्वे देवानभाजयदिति यस्माद्देवार्थमेते पित्रा

तस्मान्नेष्टियाजुकः स्या

कृते दर्शपूर्णमासाख्ये अन्ने तस्मात्तयोर्द्वैवार्थत्वाविघातायनेष्टियाजुक इति यजनशील इति इष्टिशब्देन किल काम्या इष्टयः शातपथीयं प्रसिद्धिः॥ न्यं सिद्धं॥ तथा च प्रधानयोस्तयोरितरयोश्च गुणयोरेकत्र प्राप्तौ प्रधानयोरेव द्वे देवानिति मंत्रेण ग्रहो युक्तिमानित्यर्थः॥ दर्शपूर्णमासयोर्द्वैवान्नत्वे समनंतरनिषेधवाक्यमनुकूलयति॥ यस्मादिति॥ इष्टियजनशीलो न स्यादिति संबंधः॥ ननु तद्यजनशीलत्वाभावे कृतो दर्शपूर्णमासयोर्द्वैवार्थत्वं न हि तावन्निष्पन्नौ तदर्थाविभ्याशंक्याह॥ इष्टिशब्देनेति॥ किं पुनरस्मिन्वाक्ये काम्येष्टिविषयत्वमिष्टिशब्दस्येत्यत्र नियामकं तत्र किलशब्दसूचितां पाठकप्रसिद्धिमाह॥ शातपथीति॥

113

काम्येष्टीनामनुष्ठाननिषेधेस्वर्गकामवाक्यविरोधःस्यादित्याशंक्याह॥ताच्छील्येति॥तत्रविहितस्योकञ्प्रत्ययस्यात्रप्रयोगात्काम्येष्टियजनप्रधान
त्वमिहनिषिध्यतेतत्त्वदेवप्रधानयोर्दर्शपूर्णमासयोरवश्यानुष्ठेयत्वसिध्यर्थंनतुताःस्वतोनिषिध्यंतेतेनन्नस्वर्गकामवाक्यविरोधोस्तीत्यर्थःपश्व
न्नविषयंमंत्रपदमादायप्रश्नपूर्वकंतदर्थंप्रकटयति॥पशुभ्यइति॥पशूनांपयोन्नमित्येतदुपपादयितुंपृच्छति॥कथंपुनरिति॥पयोहीतिप्रती
कमादायव्याकरोति॥अग्रइति॥पशवोद्विपादश्चतुष्पादश्चेतिश्रुतिमाश्रित्यमनुष्याश्चेत्युक्तंउचितंहीत्यत्रहिशब्दस्तस्मादर्थेयस्मादित्युपक्रमा

ताच्छील्यप्रत्ययप्रयोगात्काम्येष्टियजनप्रधानोनस्यादित्यर्थः॥पशुभ्यएकंप्रायच्छदितियत्पशुभ्यःप्रायच्छत्पिताकिंपुनस्तदन्नंत
त्पयःकथंपुनरवगम्यतेपशवोस्यान्नस्यस्वामिनइत्यतआहपयोह्यग्रेप्रथमंयस्मान्मनुष्याश्चपशवश्चपयएवोपजीवंतीत्युचि

त्पशुभ्यएकंप्रायच्छदितितत्पयःपयोह्येवाग्रेमनुष्याश्चपशवश्चोपजीवंति तस्मात्कुमारंजातंघृतंवैवाग्रेप्रलिलेहयंतिस्त
नंवानुधापयं तंहितेषांतदन्नमन्यथाकथंतदेवाग्रेनियमेनोपजीवेयुःकथमग्रेतदेवोपजीवंतीत्युच्यतेमनुष्याश्चपशव
श्चयस्मात्तेनैवान्नेनवर्त्ततेद्यत्वेपियथापित्राऽदौविनियोगःकृतःतस्मात्कुमारंबालंजातंघृतंवाग्रेवर्णिकाजातकर्मणिजातरूपसं
युक्तंप्रलिलेहयंतिप्राशयंतिस्तनंवानुधापयंतिपश्चात्पाययंति॥ तु॥औचित्यंव्यतिरेकद्वारासाधयति॥अन्यथेति॥नियमेनप्रथमंपशूनां
तदुपजीवनमसंप्रतिपन्नमितिशंकते॥कथमिति॥मनुष्यविषयेप्रश्नस्तदितरपशुविषयेवेतिपृच्छति॥उच्यतइति॥तत्राद्यमनुभवावष्टंभेनप्र
त्याचष्टे॥मनुष्याश्चेति॥चकारोमनुष्यमात्रसंग्रहार्थः॥तेनैवपयसैवेतितियावत्घृतंवेतिवाशब्दोवक्ष्यमाणविकल्पद्योतकः॥जातरूपंहेम॥

तत्रवर्णिकेभ्योन्येषांजातकर्मभावाद्योग्यतामनतिक्रम्यस्तनमेवजातंकुमारंप्रथमंपाययंतीत्याह॥ यथासंभवमिति॥ यद्वातेषांजातकर्म
नधिकृतानांजातंकुमारंयथासंभवंघृतंवास्तनंवाप्रथमंपाययंतीतियावत्॥ पशुविषयंप्रश्नंपशवश्चेतिसू. चितंसमाधानंप्रत्याह॥ स्तनमे
वेति॥ पशूनांजातंवत्समितिसंबंधः॥ पशूनांपयोन्नमित्यत्रलोकप्रसिद्धिंप्रमाणयति॥ अथेतिद्विपात्स्वधिकारविच्छेदार्थोऽथशब्दः॥
प्रतिवचनंव्याचष्टे॥ नाद्यापीति॥ ननुयेषामग्रेघृतोपजीवित्वमुपलभ्यते पयस्तेनोपजीवंतिघृतपयसोर्भेदादतः पश्वन्नत्वंपयसोभाग

यथासंभवंअन्येषांस्तनमेवाग्रेधापयंतिमनुष्येभ्योन्येषांपशूनांअथवत्संजातमाहुः कियत्प्रमाणोवत्सइत्येवंपृष्टाः संतोऽतृणा
दइतिनाद्यापितृणमत्त्यतीवबालःपयसैवाद्यापिवर्त्ततइत्यर्थः॥ यच्चाग्रेजातकर्मणि दोघृतमुपजीवंतियच्चेतरेपयएवतत्सर्व

त्वथवत्संजातमाहुरतृणादइति

थापिपयएवोपजीवंतिघृतस्यापिपयोविकारत्वात्पयस्त्वमेवकस्मात्पुनःसप्तमंसत्पश्वन्नंचतुर्थत्वेनव्याख्यायतेकर्मसाधनत्वा
त्कर्महिपयःसाधनाश्रयमग्निहोत्रादितच्चकर्मसाधनंवित्तसाध्यंवक्ष्यमाणस्यान्नत्रयस्यसाध्यस्य॥ यथादर्शपूर्णमासौपूर्वोक्ता
वन्नेअतःकर्मपक्षत्वात्कर्मणासहपिंडीकृत्योपदेशः सिद्धमतआह॥ यच्चेति॥ ननुघृतमुपजीवंतोपियएवोपजीवंतीत्ययुक्तंतद्वेदस्योक्तत्वा
त्तत्राह॥ घृतस्यापीति॥ मंत्रपाठक्रममतिक्रम्यपश्वन्नेव्याख्यातेप्रत्यवतिष्ठते॥ कस्मादिति॥ हेदेवानभाजयदितिव्याख्यातेसाधनेसाधनत्वाविशेषात्पये
पिवृद्धिस्यमित्यर्थंक्रममाश्रित्यपरिहरति॥ कर्मेति॥ तदेवस्पष्टयति॥ कर्महीति यद्यपिपयोरूपंसाधनमाश्रित्यकर्मप्रवृत्तंतथापिदर्शपूर्णमासानंतर्यंकथंपयसः
वक्ष्यमाणान्नत्रयस्यसाधनंकर्मयद्वित्तेनपयसासाध्यमित्यर्थः ४

सिध्यतितत्राह॥ तच्चेति॥ वित्तेनपयसासाध्यंकर्मान्नत्रयस्य
साधनमित्यत्रदृष्टांतमाह॥ यथेति॥

114

अग्निहोत्रंजुहोतियवागूंपचतीतियावत्=३



पूर्वोक्तौदर्शपूर्णमासोद्दे देवानेवक्ष्यमाणस्यान्नत्रयस्ययथासाधनंतथापयसोप्यग्निहोत्रादिद्वारातत्साधनत्वात्कर्मकोटिनिविष्टत्वात्तद्व्याख्यानानंतर्यं पयोव्याख्यानस्ययुक्तत्वमित्यर्थः॥पाठक्रमस्तर्हिकथमित्याशंक्यार्थक्रमेणतंद्बाधमभिप्रेत्याह॥साधनत्वेति॥आनंतर्यंपाठक्रमः॥अकारणत्वमविवक्षितत्वं॥पाठक्रमादर्थक्रमस्यबलीयस्त्वात्तेनेतरस्यबाध्यत्वमित्येतत्प्रथमेतंत्रेस्थितमित्यभिप्रेत्याह॥इतिचेति॥पयसस्यचतुर्थत्वेनव्याख्यानेहेत्वंतरमाह॥व्याख्यानइति॥व्याख्यानेसौकर्यंसाधयति॥सुखंहीति॥प्रतिपत्तिसौकर्यंप्रकटयति॥व्याख्यातानीति॥चत्वारिसाधनानित्रीणिसाध्यानीतिवि

साधनत्वाविशेषादर्थसंबंधादानंतर्यमकारणमितिचव्याख्यानेप्रतिपत्तिसौकर्याच्चसुखंहिनैरंतर्येणव्याख्यातुंशक्यंतेन्नानिव्याख्यातानिचसुखंप्रतीयंतेतस्मिन्सर्वंप्रतिष्ठितंयच्चप्राणितियच्चनेत्यस्यकोर्थइत्युच्यतेतस्मिन्पयस्यन्नेपयसिसर्वमध्यात्माधिभूताधिदैवलस्ष

तस्मिन्त्सर्वंप्रतिष्ठितंयच्चप्राणितियच्चनेतिपयसिहीदंसर्वंप्रतिष्ठितंयच्चप्राणितियच्चन

णंकृत्स्नंजगत्प्रतिष्ठितंयच्चप्राणितिप्राणचेष्टावद्यच्चनस्थावरंशैलादि॥तत्रहिशब्देनैवप्रसिध्द्यवद्योतकेनव्याख्यातंकथंपयोद्रव्यस्य सर्वप्राणिप्रतिष्ठात्वंकारणलोपपत्तेः भज्योक्तौवक्तृश्रोत्रोःसौकर्येणधीर्भवतितत्त्रपाठक्रमातिक्रमःश्रेयानित्यर्थः॥पयसस्यसर्वाधिष्ठानविषयंमंत्रमवतार्यप्रश्नपूर्वकंतदीयंब्राह्मणंव्याचष्टे॥तस्मिन्नित्यादिना॥मंत्राद्दे॥दोब्राह्मणेनप्रतिभातीत्याशंक्याह॥तत्रेति॥पयसिहीति ब्राह्मणेहिइतिशब्दस्यप्रसिद्धावद्योतकत्वमस्तितेनचहेतुनाहिशब्देनतस्मिन्नित्यादिमंत्रपदंव्याख्यातमितियोजना॥मंत्रार्थस्यलोकप्रसिध्यभावान्नप्रसिध्यवद्योतिनाहिशब्देनव्याख्यानंयुक्तमितिशंकते॥कथमिति॥कार्यकारणेप्रतिष्ठितमितिन्यायेनवैदिकींप्रसिद्धिमादायसमाधत्ते॥का

पयसोद्रवद्रव्यमात्रस्यकुतःसर्वजगत्कारणत्वमित्याशंक्याह॥कारणत्वंचेतितत्समवायित्वेपिकुतोजगतःकारणतेत्याशंक्याह॥अग्निहोत्रादी
ति॥तेवाएतेआहुतीहुतेउत्क्रामतस्तेंतरिक्षमाविशतइत्यादयःश्रुतिवादाःद्युपर्जन्यव्रीह्यादिक्रमेणाग्निहोत्राहुत्योर्गर्भाकारप्राप्तिंदर्शयंति
॥अग्नौप्रास्ताहुतिःसम्यगादित्यमुपतिष्ठते॥आदित्याज्जायतेवृष्टिर्वृष्टेरन्नंततःप्रजाइत्यादिस्मृतिवादाः॥पयसिहीत्यादिब्राह्मणमुपसंह
रति॥अतइति॥पयसःसर्वजगदाधारत्वस्यश्रुतिस्मृतिप्रसिद्धत्वादितियावत्सर्वंपयसिप्रतिष्ठितमितिविधित्सितदर्शनस्तुतयेशाखांते

कारणत्वंचाग्निहोत्रादिकर्मसमवायित्वंअग्निहोत्राद्याहुतिविपरिणामात्मकंचजगत्कृत्स्नमितिहिश्रुतिस्मृतिवादाःशतशो
व्यवस्थिताःअतोयुक्तमेवहिशब्देनव्याख्यानंयत्तद्ब्राह्मणांतरेषिदमाहुःसंवत्सरंपयसाजुहृदपपुनर्मृत्युंजयतीतिसंवत्सरेण

तद्यदिदमाहुःसंवत्सरंपयसाजुहृदपपुनर्मृत्युंजयतीति

किलत्रीणिषष्टिशतान्यह्नांतेषुचआहुतीनां॥सप्तचशतानिविंशतिश्चेतियाजुष्मतीरिष्टिकाअभिसंपद्यमानाः रीयमतंनिंदितुमुद्भावय
ति॥यतदिति॥नकेवलेनकर्मणामृत्युजयःकिंतुदर्शनसहितेनेतिदर्शयितुमग्निहोत्राहुतिषुसंख्यांकथयति॥संवत्सरेणेति॥उक्ताहुतिसंख्या
यांसंवत्सरावच्छिन्नायांअग्निहोत्रविदांसंप्रतिपत्त्यर्थंकिलेत्युक्तं॥ननुप्रत्यहंसायंप्रातश्चैत्याहुतीद्वेविद्येतेतत्कथमाहुतीनांषष्ट्यधिकानित्री
णिशतानिसंवत्सरेणभवंतितत्राह॥सप्तचेति॥प्रत्येकमहोरात्रावच्छिन्नाहुतिप्रयोगाणामेकस्मिन्संवत्सरेपूर्वोक्तासंख्यातत्रेवप्रयोगाद्धीनां
विंशत्यधिकासप्तशतरूपासंख्येतिप्रसिद्धमित्यर्थः॥आहुतीनांसंख्यामुक्त्वातासुयाजुष्मतीनामिष्टिकानांदृष्टिमाह॥याजुष्मतीरिति॥

तासामपि षष्ट्यधिकानि त्रीणि शतानि संख्यया भवंति तथा च प्रत्यहमाहुतीरभिनिष्पद्यमानाः संख्यासामान्येन याजुष्मतीरिष्टकाश्चिंतये दि
त्यर्थः॥ आहुतिमयीनामिष्टिकानां संवत्सरावयवाहोरात्रेषु संख्यासामान्येनैव दृष्टिमन्वाचष्टे॥ संवत्सरस्येति॥ तान्यपि षष्ट्यधिकानि त्रीणि श
तानि प्रसिद्धानि तथा च तेषु यथोक्तेष्विष्टकादृष्टिः श्लिष्टेत्यर्थः॥ चित्योग्नेः संवत्सरात्मप्रजापतिदृष्टिमाह॥ संवत्सरमिति॥ यः संवत्सरः प्रजाप
तिस्तं चित्यमग्निं विद्वांसः संपादयंति अहोरात्रेष्टकाद्वारा तयोः संख्यासाम्यादित्यर्थः॥ दृष्टिमनूद्य फलं दर्शयति॥ एवमिति उक्तसंख्यासामा
न्येनाग्निहोत्राहुतीरग्न्यवयवभूतयाजुष्मतीसंज्ञकेष्टकाः संपाद्य तद्रूपेणाहुतीर्ध्यायन्नाहुतिमयीश्चेष्टकाः संवत्सरावयवाहोरात्राणि तेनैव संपा

संवत्सरस्य चाहोरात्राणि संवत्सरमग्निं प्रजापतिमाप्नुवंति एवं कृत्वा संवत्सरं जुहुद् अपजयति पुनर्मृत्युमितः प्रेत्य देवत्वसंभूतः पुन
र्नैम्रियत इत्यर्थः॥ इत्येवं ब्राह्मणवादा आहुः न तथा विद्यान्न तथा द्रष्टव्यं यदहरेव जुहोति तदहः पुनर्मृत्युमपजयति न संवत्सरा
प्त्यासमपेक्षत एवं विद्वान् स न्यदुक्तं पयसि हीदं सर्वं प्रतिष्ठितं पय आहुतिविपरिणामात्मकत्वात्सर्वस्येति तदेके नैवान्त्यां जगदात्म
त्वं प्रतिपद्यते तदुच्यते अपजयति पुनर्मृत्युं पुनर्मरणं सकृन्मृत्वा विद्वान्शरीरेण वियुज्य सर्वात्मा भवति न पुनर्मरणाय परिच्छिन्नं शरीरं गृह्णा
तीत्यर्थः॥ यपुरुषनाडीस्थसंख्यासामान्येन तन्नाडीस्तान्येवाहोरात्राण्यापाद्य तद्रूपेणाहुतीरिष्टकानाडीश्चानुसंदधानो नाड्यहोरात्रयाजुष्मती
द्वारा पुरुषसंवत्सरचित्यानां समत्वमापाद्याहमग्निः संवत्सरात्मा प्रजापतिरेवेति ध्यायन्नग्निहोत्रं पयसा संवत्सरं जुहुहि द्यथासहितहोमवशात्सजा
पतिं संवत्सरात्मकं प्राप्य मृत्युमपजयतीत्यर्थः॥ एकीयमतमुपसंहृत्य तन्निंदापूर्वकं मतांतरमाह॥ इत्येवमित्यादिना॥ एवं विद्वान्नित्यकर्तव्यस्तौकरो
ति॥ यदुक्तमिति॥ तत्तथैव विद्वानेकाहोरात्रावच्छिन्नाहुतिमात्रेण जगद्रूपं प्रजापतिं प्राप्य मृत्युमपजयतीत्याह॥ तदेकेनेति॥ उक्तोर्थश्श्रुतिमवतार्य व्याच

सर्वेहीत्यादिहेतुवाक्यमाकांक्षापूर्वकमुत्थाप्यव्याकरोति॥कःपुनरित्यादिना॥यथोक्तदर्शनवशादेकयैवाहुत्यामृत्युमपजयतीत्यत्रब्राह्मणां
तरंसंवादयति॥अथेति॥यथासंवत्सरमित्याद्युक्तंतथायदहरेवेत्याद्यपिब्राह्मणांतरेसूचितमित्यर्थः॥ब्रह्महिरण्यगर्भभावीजीवःस्वयंभूःप
रस्यैवतदात्मनावस्थानात्तपोतप्यतकर्मान्वतिष्ठतयत्कृतकंतदनित्यमितिन्यायेनकर्मनिंदाप्रकारमाह॥तदैक्षतेति॥कर्मसहायभूतामुपासना

कःपुनर्हेतुःसार्वात्म्याश्याम्मृत्युमपजयतीत्युच्यतेसर्वेसमस्तंहियस्माद्देवेभ्यःसर्वेभ्योऽन्नाद्यमन्नमेवतदाद्यंचसायंप्रातराहुतिप्रक्षे
पेणप्रयच्छतितद्युक्तंसर्वमाहुतिमयमात्मानंकृत्वासर्वदेवान्नरूपेणसर्वैर्देवैरेकात्मभावंगत्वासर्वदेवमयोभूत्वापुनर्नम्रियतइत्य
थैतदप्युक्तंब्राह्मणेनब्रह्मवैस्वयंभूस्तपोतप्यततदैक्षतनवैतपस्यानंत्यमस्तिहंताहंभूतेष्वात्मानंजुहवानिभूतानिचात्मनीतितत्सर्वे

नतथाविद्याद्यदहरेवजुहोतितदहःपुनर्मृत्युमपजयत्येवंविद्वान्सर्वंहिदेवेभ्योन्नाद्यंप्रयच्छतिकस्मात्तानिनक्षीयं
तेद्यमानानिसर्वदेति
षुभूतेष्वात्मानंहुत्वाभूतानिचात्मनिसर्वेषांभूतानांश्रैष्ठ्यंस्वाराज्यमाधिपत्यंपर्यैदितिकस्मात्ता
निनक्षीयंतेऽद्यमानानिसर्वदेतियदापित्रान्नानिसृष्टानिपृथक्पृथग्भोक्तृभ्यःप्रत्तानितदाप्रभृत्येवतैर्भोक्तृभिरद्यमानानि॥

मुपदिशति॥हंतेति॥उपासनामनूद्यसमुच्चयफलंकथयतितत्सर्वेष्विति॥श्रेष्ठत्वेपिराजकुमारवदस्वातंत्र्यमाशंक्याह॥स्वाराज्यमिति॥अ
धिष्ठायपालयितृत्वमधिपत्यंपश्चन्नेव्याख्यातेप्रश्नरूपंमंत्रपदमादत्ते॥कस्मादिति॥ननुचत्वार्यन्नानिव्याख्यातानित्रीणिव्याचिख्यासिता
नितेषुव्याख्यातेषुकस्मादित्यादिप्रश्नोकस्मादित्याशंक्यसाधनेषूक्तेषुसाध्यानामपितेषामर्थादुक्तत्वमस्तीत्यभिप्रेत्यप्रश्नप्रवृत्तिंमन्वानोव्याचष्टे॥



16

नैरंतर्येणेति अन्नानां सदा भोक्तृभिरद्यमानत्वे हेतुमाह ॥ तन्निमित्तत्वादिति ॥ भोक्तॄणां स्थितेरन्ननिमित्तत्वात्तैः सदाद्यमानानि तानि यवपूर्णकुसूलवद्भवंति क्षीणानीत्यर्थः ॥ किंच ॥ ज्ञानकर्मफलत्वादन्नानां यत्कृतकं तदनित्यमिति न्यायेन क्षयः संभवतीत्याह ॥ कृतेति ॥ अस्तु तर्हि तेषां क्षयो नेत्याह ॥ न चेति ॥ भवतु तर्हि स्वभावादेव सप्तान्नात्मकस्य जगतोऽक्षीणत्वं नेत्याह ॥ भवितव्यं चेति ॥ स्वभाववादस्यातिप्रसंगित्वादित्यर्थः ॥

तन्निमित्तत्वात्तेषां स्थितेः सर्वदा नैरंतर्येण कृतत्वाच्च क्षयोपपत्तेश्च युक्तस्तेषां क्षयः न च तानि क्षीयमाणानि जगतोऽविभ्रष्टरूपेणैवावस्थानदर्शनाद्भवितव्यं चाक्षयकारणेन तस्मात्कस्मात्पुनस्तानि न क्षीयंत इति प्रश्नः तस्येदं प्रतिवचनं पुरुषो वा अक्षितिर्यथासौ पूर्वमन्नानां स्रष्टासीत्पिता मेधया जायादिसंबद्धेन च पांक्तकर्मणा भोक्ता च तथा येभ्यो दत्तान्यन्नानि तेपि तेषामन्नानां भोक्तारोपि

पुरुषो वा अक्षितिः स हीदमन्नं पुनः पुनर्जनयते

संतः पितर एव मेधया तपसा च यतो जनयंति तान्यन्नानि तदेतदभिधीयते पुरुषो वै योन्नानां भोक्ता सोक्षितिरक्षयहेतुः ॥ कथमस्याक्षितित्वमित्युच्यते स हि यस्मादिदं भुज्यमानं सप्तविधं कार्यकारणलक्षणं क्रियाफलात्मकं पुनः पुनर्भूयोभूयो जनयते उत्पादयति धिया धिया तत्तत्कालभाविन्या तया तया प्रज्ञया कर्मभिश्च वाङ्मनःकायचेष्टितैः ॥ प्रश्नं निगमयति ॥ तस्मात्कस्मादिति ॥ प्रतिवचनमादायुव्याचष्टे ॥ तस्येत्यादिना ॥ तेषां पितृत्वे हेतुमाह ॥ मेधयेति ॥ भोगकालेपि विहितप्रतिषिद्धज्ञानकर्मसंभवात्प्रवाहरूपेणान्नाक्षयः संभवतीत्यर्थः ॥ तत्र प्रतिज्ञाया भागमुपादायाक्षराणि व्याचष्टे ॥ तदेतदिति ॥ हेतुभागमुत्थाप्य विभजते ॥ कथमित्यादिना ॥ तस्मात्तद

उक्तं हेतुं व्यतिरेकद्वारोपपादयितुं यद्वैतदित्यादिवाक्यं तद्व्याचष्टे ॥ यदिति ॥ अन्वयव्यतिरेकसिद्धं हेतुं निगमयति ॥ तस्मादिति ॥ तथा यथा प्रज्ञमिति पठितव्यं ॥ साध्यं निगमयति ॥ तस्मादिति ॥ अस्य हेतो सिद्धे फलितमाह ॥ तस्माद्भुज्यमानानीति ॥ धियाधियेत्यादिश्रुतेः सहोद मित्यत्रोक्तं परिहारं प्रपंचयत्याः ॥ सप्तविधान्नस्य कार्यत्वात्प्रतिक्षणध्वंसित्वेपि पुनः पुनः क्रियमाणत्वात्प्रवाहात्मना तदचलं मंदाः पश्यंतीत्य

यद्यदिह यदेतत्सप्तविधमन्नमुक्तं क्षणमात्रमपि न कुर्यात्प्रज्ञया कर्मभिश्च ततो विच्छिद्येत भुज्यमानत्वात्सातत्येन क्षीयेत ह त स्माद्यथैवायं पुरुषो भोक्तान्नानां नैरंतर्येण यथाप्रज्ञं यथाकर्म करोत्यपि तस्मात्पुरुषोऽक्षितिः सातत्येन कर्तृत्वात्तस्माद्भुज्यमाना

यो वैतामक्षितिं वेदेति पुरुषो वा अक्षितिः स हीदमन्नं

न्यप्यन्नानि न क्षीयंत इत्यर्थोऽतः प्रज्ञाक्रियाफललक्षणप्रबंधारूढः सर्वो लोकः साध्यसाधनलक्षणः क्रियाफलात्मकः संह तानेकप्राणिकर्मवासनासंतानावष्टब्धत्वात्क्षणिकोऽशुद्धोऽसारो नदीस्रोतःप्रदीपसंतानकल्पः कदलीस्तंभवदसारः ॥

स्मिन्नर्थे तात्पर्यमाह ॥ अत इति ॥ प्रज्ञाक्रियाभ्यां हेतुभ्यां लक्ष्यते व्यावर्त्यते निष्पाद्यते यः प्रबंधः समुदायस्तदारूढस्तदात्मकः सर्वो लोक श्चेतनाचेतनात्मको हेतुप्रपंचः साध्यत्वेन साधनत्वेन च वर्तमानो ज्ञानकर्मफलभूतः क्षणिकोपि नित्य इव लक्ष्यते तत्र हेतुः ॥ संहतेति ॥ संहतानां मिथः सहायत्वेन स्थितानामनेकेषां प्राणिनामनंतानि कर्माणि वासनाश्च तत्संतानेनावष्टब्धत्वाद्दृढीकृतत्वादिति यावत्प्राती तिकमेव संसारस्य स्थैर्यं न तात्त्विकमिति वक्तुं विशिनष्टि ॥ नदीति असारोपि सारवद्भातीत्यत्र दृष्टांतमाह कदलीति ॥

अशुद्धोपि शुद्धवद्भातीत्यत्रोदाहरणमाह॥ मायेत्यादि॥ अनेकोदाहरणं संसारस्यानेकरूपत्वद्योतनार्थं॥ केषां पुनरेष संसारोऽन्यथा भातीत्यपे
क्षायां संसारीयपराग्दृशामिति न्यायेनाह॥ तदात्मेति॥ किमिति प्रतिक्षणप्रध्वंसि जगदिति श्रुत्योच्यते तत्राह॥ तदेतदिति॥ वैराग्यमपि कु
त्रोपयुज्यते तत्राह॥ विरक्तानां हीति॥ इति वैराग्यमर्थवदिति शेषः॥ पुरुषोऽन्नानामक्षयहेतुरित्युपपाद्य तज्ज्ञानमनूद्य फलमाह॥ यो वैता

फेनमायामरीच्यंभःस्वप्नादिसमस्तदात्मगतदृष्टीनामविकीर्यमाणो नित्यः सारवान्निवलस्य तेतदेतद्वैराग्यार्थमुच्यते धियाधियाज
नयते कर्मभिर्यद्धैतन्न कुर्यात्क्षीयेत हेति विरक्तानां हि तस्माद्ब्रह्मविद्यारब्धव्या चतुर्थं प्रमुखेनेति यो वैतामक्षितिं वेदेति वक्ष्यमा
णान्यपि त्रीण्यन्नान्यस्मिन्नवसरे व्याख्यातान्येवेति कृत्वा तेषां याथात्म्यविज्ञानफलमुपसंह्रियते यो वैतामक्षितिमक्षयहेतुं यथो

धियाधियाजनयते कर्मभिर्यद्धैतन्न कुर्यात्क्षीयेत ह सोऽन्नमत्ति प्रतीकेनेति मुखं प्रतीकं मुखेनेत्येतत्स देवानपि गच्छ
ति स ऊर्जमुपजीवतीति प्रशंसा॥२॥ कं वेद पुरुषो वा अक्षितिः स हीदमन्नं धियाधियाजनयते कर्मभिर्यद्धैतन्न कुर्यात्क्षीये
त हेति सोऽन्नमत्ति प्रतीकेनेत्यस्यार्थ उच्यते मुखं मुख्यत्वं प्राधान्यमित्येतत्प्राधान्येनैवान्नानां जाया पुत्रः वित्तद्रूपं कर्म च एतैः पंचभि
र्निर्वर्त्यत्वात् पितुः पुरुषस्याक्षितिस्त्वं यो वेद सोऽन्नमत्ति नान्नं प्रति गुणभूतः सन्यथाऽज्ञो तथा विद्वानन्नानामात्मभूतो भोक्तैव

मित्यादिना॥ यथोक्तमनुवदति॥ पुरुष इति॥ फलविषयं मंत्रपदमुपादाय तदीयं ब्राह्मणमवतार्य व्याकरोति॥ सोऽन्नमित्यादिना॥ यथोक्तोपा
सनवतो यथोक्तं फलमुपास्तिप्राधान्येनैव सोऽन्नमत्तीति संबंधः विदुषोऽन्नं प्रतिगुणत्वाभावे हेतुमाह॥ अन्नानामिति॥ उक्तमर्थं प्रतिगृह्णाति॥ भो

प्रशस्तिसिद्धयेप्रपंचयतिसदेवानित्यादिना॥२॥साधनात्मकमन्नचतुष्टयमन्नत्रयस्यकारणमस्तीतित्वगुणप्रक्षेपेणपुरुषोपासनस्यफलंचो
क्तं॥इदानींमाब्राह्मणसमाप्तेरुत्तरग्रंथस्यतात्पर्यमाह॥पांक्तस्येत्यादिनाब्राह्मणशेषतात्पर्यमुक्त्वामंत्रपदमनूद्याकांक्षाद्वाराब्राह्मणमुत्थाप्य
व्याचष्टे॥त्रीणीत्यादिनाज्ञानकर्मभ्यांसृष्टान्नानिसप्तचत्वारिभोक्तृभ्योविभज्यत्रीण्यात्मार्थंकल्पादौपिताकल्पितवानित्यर्थः॥अन्यत्रेत्यादि

भवतिनभोज्यतामापद्यतेसदेवानपिगच्छतिसऊर्जमुपजीवतिदेवानपिगच्छतिदेवात्मभावंप्रतिपद्यतेऊर्जममृतंचोपजीवतीति
यदुक्तंसाप्रशंसानापूर्वार्थोन्योस्ति॥२॥पांक्तस्यकर्मणःफलभूतानियानित्रीण्यन्नान्युपक्षिप्तानितानिकार्यत्वाद्विस्तीर्णविषयत्वा
च्चपूर्वेभ्योन्नेभ्यःपृथगुत्कृष्टानितेषांव्याख्यानार्थउत्तरोग्रंथआब्राह्मणपरिसमाप्तेः॥त्रीण्यात्मनेकुरुतेतिकोस्यार्थइत्युच्यतेम

त्रीण्यात्मनेकुरुतेतिमनोवाचंप्राणंतान्यात्मनेकुरुत

नोवाक्प्राणाएतानित्रीण्यन्नानितानिमनोवाचंप्राणंचात्मनेआत्मार्थमकुरुतकृतवान्सृष्ट्वादौपितातेषांमनसोस्तित्वंस्वरूपं
चप्रतिसंशयइत्यतआह॥अस्तितावन्मनःश्रोत्रादिबाह्यकरणव्यतिरिक्तंयतएवंप्रसिद्धंबाह्यकरणविषयात्मसंबंधेसत्यप्यभि
मुखीभूतविषयंनगृह्णाति॥

वाक्यमुपादत्ते॥तेषामिति॥षष्ठीनिर्धारणार्था॥तत्रमनसोस्तित्वमादौसाधयति॥अस्तितावदिति॥आत्मेंद्रि
यार्थसान्निध्येसत्यपिकदाचिदेवार्थधीर्जायमानाहेत्वंतरमाक्षिपति॥नचादृष्टादितदितियुक्तं॥तस्यदृष्टसंवादित्वात्तस्माद्यादिसान्निध्येज्ञा
नकादाचित्कत्वानुपपत्तिर्मनःसाधिकेत्यर्थः॥लोकप्रसिद्धिरपितत्रप्रमाणमित्याह॥यतइति॥अतोस्तिबाह्यकरणव्यतिरिक्तंविषयग्राहिकं

तस्मादनुमानात् ६

तामेवप्रसिद्धिमुदाहरणनिष्ठतयोदाहरति॥किंदृष्टवानित्यादिना॥तत्रैवान्वयव्यतिरेकावुपन्यस्यति॥तस्मादिति यथोक्तार्थापत्तिलोकप्रसिद्धिवशादितियावत्॥विमतमात्मव्यतिरिक्तापेक्षंतस्मिन्सत्यपिकादाचित्कत्वाद्घटवदित्यनुमानंतच्छब्दार्थः॥तस्मादनुमानादन्यदस्तिमनोनामेतिसंबंधः॥रूपादिग्रहणसमर्थस्यापिसतइतिप्रमाताच्यतेअंतःकरणस्यचक्षुरादिभ्योवैलक्षण्यमाह॥सर्वेति॥समनंतरवाक्यंफलि

किंदृष्टवानसीदंरूपमित्युक्तोवदत्यन्यत्रमेगतंमनआसीत्सोहमन्यत्रमनाःसन्नादर्शंतथेदंश्रुतवानसिमदीयंवचइत्युक्तोन्यत्रमनाअभूवंनाश्रौषंनश्रुतवानस्मीतितस्माद्यस्यासन्निधौरूपादिग्रहणसमर्थस्यापिसतश्चक्षुरादेःस्वस्वविषयसंबंधेरूपशब्दादिज्ञानंनभवतियस्यचभावेभवतितदन्यदस्तिमनोनामांतःकरणंसर्वकरणविषयोपयोगीत्यवगम्यतेतस्मात्सर्वोहिलो

न्यत्रमनाअभूवंनादर्शमन्यत्रमनाअभूवंनाश्रौषमितिमनसाह्येवपश्यतिमनसाशृणोतिकामःसंकल्पो

कोमनसाह्येवपश्यतिमनसाशृणोतितद्व्यग्रत्वेदर्शनाद्यभावादस्तित्वेसिद्धेमनसःस्वरूपार्थमिदमुच्यतेकामःस्त्रीव्यतिकराभिलाषादिःसंकल्पःप्रत्युपस्थितविषयविकल्पनंशुक्लनीलादिभेदेनविचिकित्सासंशयज्ञानंश्रद्धाऽदृष्टार्थेषुकर्मस्वास्तिक्यबुद्धिर्देवतादिषुवाऽश्रद्धातद्विपरीताबुद्धिःधृतिर्धारणंदेहाद्यवसादेउत्तंभनंअधृतिस्तद्विपर्ययःह्रीर्लज्जाधीःप्रज्ञाभीर्भयइत्येतदेवमादिकंसर्वंमनएवमनसोंतःकरणस्यरूपाण्येतानि

ताथविषयत्वेनादत्ते॥तस्मादिति॥तच्छब्देनोक्तंहेतुंस्पष्टयति॥तद्व्यग्रत्वइति॥कामादिवाक्यमवतार्यव्याकुर्वन्मनसःस्वरूपंप्रतिसंशयंनिरस्यति॥अस्तित्वइति॥अश्रद्धादिवत्कामादिरपिविवक्षितोत्रेतिमत्वामनोबुध्यारेकत्वमुपेत्योपसंहरति॥इत्येतदिति॥हेतुप्रश्नपुरःसरंमनोऽभो

सांकर्य५

मनोस्तित्वमिति॥तदेवान्यत्कारणंस्फोरयति॥यस्मादिति॥तस्माद्स्तिविवेककारणमंतःकरणमितिसंबंधः॥चक्षुरसंप्रयोगात्तेनस्पर्शविशेषा
दर्शनेपिसंप्रयुक्तयात्वचाविनापिमनोविशेषदर्शनंस्यादित्याशंक्याह॥यदीति॥त्वङ्मात्रस्यस्पर्शमात्रग्राहित्वेनविवेचकत्वायोगादित्यर्थः
विवेचकेकारणांतरेसत्यपिकुतोमनःसिद्धिस्तत्राह॥यत्तदिति॥वृत्तंकीर्त्तयति॥अस्तितावदिति॥उत्तरग्रंथमवतारयितुंभूमिकांकरोति॥

मनोस्तित्वंप्रत्यन्यच्चकारणमुच्यतेतस्मान्मनोनामास्त्यंतःकरणंयस्माच्चक्षुषोह्यगोचरेपृष्ठतोप्युपस्पृष्टःकेनचिद्धस्तस्यायंस्पर्शो
जानोरयमितिविवेकेनप्रतिपद्यतेयदिविवेककृन्मनोनामनास्तित्वङ्मात्रेणकुतोविवेकप्रतिपत्तिःस्याद्यत्तद्विवेकप्रतिपत्ति
कारणंतन्मनःअस्तितावन्मनःस्वरूपंचतस्याधिगतंत्रीण्यन्नानीहफलभूतानिकर्मणांमनोवाक्प्राणाख्यानिअध्यात्ममधि

विचिकित्साश्रद्धाऽश्रद्धाधृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वंमनएवतस्मादपिपृष्ठतउपस्पृष्टोमनसाविजानातियःकश्च
शब्दोवागेव भूतमधिदैवंचव्याचिख्यासितानितत्राध्यात्मिकानांवाङ्मनःप्राणानांमनोव्याख्यातंअथेदानींवाग्वक्तव्येत्यारं
भेयःकश्चश्लोकेशब्दोध्वनिस्ताल्वादिव्यंग्यःप्राणिभिर्वर्णादिलक्षणइतरोवावादित्रमेघादिनिमित्तःसर्वोध्वनिर्वागेवसा॥इदंता
वद्वाचःस्वरूपमुक्तंअथतस्याःकार्यमुच्यते त्रीणीति॥एवंभूमिकामारचय्याध्यात्मिकवाग्व्याख्यानार्थंयःकश्चेत्यादिवाक्यमादायव्याकरो
ति॥अथेत्यादिना॥शब्दपर्यायोध्वनिर्हिविधोवर्णात्मकोवर्णात्मकस्तत्राद्योव्यवहर्तृभिस्ताल्वादिस्थानव्यंग्योद्वितीयोमेघादिकृतःसर्वोपिप्रकृ
तावागेवेत्यर्थः प्रकाशकमात्रंवागित्युक्तातत्रप्रमाणमाह॥इदंतावदिति॥तस्मादभिधेयनिर्णायकत्वान्नासावपलापार्हेतिशेषः॥वाचोपिप्रकाश्य

त्वात्कथंप्रकाशकमात्रंवागित्युक्तमित्याशंक्याह॥

एषेति॥दृष्टांतंसमर्थयते नहीति प्रकाशांतरेणसजातीयेनेति शेषः॥प्रकाशिकापिवाक्प्रकाश्याचेत्तत्रापिप्रकाशकांतरमेष्टव्यमित्यनवस्था
स्यात्तन्निरासार्थमेषाहिनेतिश्रुतिःप्रकाशकमात्रवागित्याह॥स्वपरनिर्वाहकस्तुशब्दःतस्मात्प्रकाशकत्वंकार्यंयत्रदृश्यतेतत्रवाचःस्वरूप
मनुगतमेवेत्याह॥तद्धृदित्यादिना॥आध्यात्मिकप्राणविषयंवाक्यमवतार्यव्याकरोति अथेति॥मुखादौसंचार्यासंचरणाद्धीहृदयसंबंधिनो

एषावाग्घियस्मादंतमभिधेयावसानमभिधेयनिर्णयमायत्तानुगताएषापुनःस्वयंनाभिधेयवत्प्रकाश्याभिधेयप्रकाशिकैवप्रकाशात्म
कत्वात्प्रदीपादिवन्नहिप्रदीपादिप्रकाशःप्रकाशांतरेणप्रकाश्यतेतद्वद्वाक्प्रकाशिकैवस्वयंनप्रकाश्येत्यनवस्थांश्रुतिःपरिहर
त्येषाहिनप्रकाश्याप्रकाशकेत्वमेववाचःकार्यमित्यर्थः॥अथप्राणउच्यतेप्राणोमुखनासिकासंचारीहृदयवृत्तिःप्रणयनात्प्राणः॥

सैषाह्यंतमायत्तैषाहिनप्राणोपानोव्यानउदानःसमानो

अपनयनान्मूत्रपुरीषादेरपानोऽधोवृत्तिरानाभिस्थानोव्यायमनंकर्मव्यानःप्राणापानयोःसंधिर्वीर्यवत्कर्महेतुश्चउदानउत्कर्षोर्ध्व
गमनादिहेतुरापादतलमस्तकस्थानऊर्ध्ववृत्तिःसमानःसमंनयनाद्भुक्तस्यपीतस्यचकोष्ठस्थानोन्नपक्ता॥अनइत्येषांवृत्तिविशेषा
णांसामान्यभूतासामान्यदेहचेष्टादिसंबंधिनीवृत्तिरेवंयथोक्तंप्राणादिवृत्तिजातमेतत्सर्वंप्राणएव यावायुवृत्तिस्तत्रप्राणशब्दप्रवृत्तौनिमि

त्तमाह॥प्रणयनादिति॥पुरतोनिःसरणादितियावत्॥हृदयादधोदेशेवृत्तिरस्येत्यधोवृत्तिरानाभिस्थानोहृदयादारभ्यनाभिपर्यंतंवर्त्तमानइतियावत्॥
व्यायमनंप्राणापानयोर्नियमनंकर्मास्येतितथोक्तः॥वीर्यवत्कर्मारण्यामग्न्युत्पादनादि॥उत्कर्षोदेहेपुष्टिः॥आदिपदेनोत्क्रांतिरुक्ता॥प्राणशब्देनानशब्द
यकं १ कं ५

तथापितृतीयस्यप्राणशब्दस्यतादर्थ्यंपुनरुक्तिरित्याशंक्याह॥प्राणइतीति॥साधारणासाधारणवृत्तिमान्प्राणइत्यपौनरुक्त्यमित्यर्थः॥मनसोदर्श
नादिवद्वाचोऽभिधेयप्रकाशनवच्चप्राणस्यापिकार्यंवक्तव्यमित्याशंक्याह॥कर्मचेति॥एतन्मयइत्यत्रमयटोविकारार्थत्वंवृत्तसंकीर्तनपूर्वकंकथ
यति॥व्याख्यातानीति॥आध्यात्मिकानांवागादीनामारंभकत्वंवारयति॥प्राजापत्यैरिति॥आरब्धस्वरूपंप्रश्नपूर्वकमनंतरवाक्येननिर्धारयति॥को

प्राणइतिवृत्तिमानाध्यात्मिकोऽनउक्तः कर्मचास्यवृत्तिभेदप्रदर्शनेनैवव्याख्यातंव्याख्यातान्याध्यात्मिकानिमनोवाक्प्राणा
ख्यानिअन्नान्येतन्मयएतद्विकारःप्राजापत्यैरेतैर्वाङ्मनःप्राणैरारब्धःकोऽसौअयंकार्यकरणसंघातःआत्मापिंडःआत्मस्वरू
पत्वेनाभिमतोऽविवेकिभिरविशेषेणैतन्मयइत्युक्तस्यविशेषणंवाङ्मयोमनोमयःप्राणमयइतिस्फुटीकरणं॥३॥तेषामेवप्राजा

नइत्येतत्सर्वंप्राणएवैतन्मयोवाअयमात्मावाङ्मयोमनोमयःप्राणमयः॥३॥त्रयोलोकाएतएववागेवायंलोकोमनों
तरिक्षलोकःप्राणोसौलोकः॥४॥त्रयोवेदाएतएववागेवर्ग्वेदोमनोयजुर्वेदःप्राणःसामवेदः॥५॥देवाःपितरोमनुष्या
एतएववागेवदेवामनःपितरःप्राणोमनुष्याः॥६॥ पत्यानामन्नानामाधिभौतिकोविस्तारोऽभिधीयतेत्रयोलोकाःभूर्भुवःस्व
रित्याख्याएतएववाङ्मनःप्राणास्तत्रविशेषोवागेवायंलोकोमनोंतरिक्षलोकःप्राणोसौलोकः ॥ ४ ॥ साविति॥कार्यकरण
संघातेकथमात्मशब्दप्रवृत्तिरित्याशंक्याह॥आत्मस्वरूपत्वेनेति॥ वाङ्मयइत्यादिवाक्यस्यपूर्वेणपौनरुक्त्यमाशंक्याह॥अविशेषेणेति॥
वागादीनामाध्यात्मिकविभूतिप्रदर्शनानंतरमाधिभौतिकविभूतिप्रदर्शनार्थमुत्तरग्रंथमवतारयति॥तेषामेवेति॥तत्रेत्युक्तंसामान्यंपरामृश

त्रिलोकीवाक्यादुत्तरं वाक्यं विज्ञातादिवाक्यानामात्मकत्वं नेतव्यमित्याह॥ तथेति॥ ७॥ विज्ञातादिवाक्यमादाय तद्गतं विशेषं दर्शयति विज्ञातमिति॥
विज्ञातं सर्वं वाचो रूपमिति प्रतिज्ञातोऽर्थः सप्तम्यर्थः प्रकाशकत्वेऽपि कथं वाचो विज्ञातत्वमित्याशंक्याह॥ कथमिति प्रकाशात्मकत्वमेव कुतो वाचः
सिद्धमित्याह॥ वाचेति॥ वाग्विशेषस्तद्विभूतिः॥ ८॥ संदिह्यमानाकारत्वात्संकल्पविकल्पात्मकत्वादिति यावत्॥ तस्मात्सर्वं विजिज्ञास्यं मनो रूप

तथा त्रयो वेदा इत्यादीनि वाक्यानि निरूव्यर्थानि॥ ७॥ विज्ञातं विजिज्ञास्यमविज्ञातमेत एव तत्र विशेषो यत्किंच विज्ञातं विस्पष्टं ज्ञातं वाच
स्तद्रूपं तत्र स्वयमेव हेतुमाह॥ वाग्घि विज्ञाता प्रकाशात्मकत्वात्कथमविज्ञाता भवेद्यान्यानपि विज्ञापयति वाचैव संम्राड् बन्धुः प्रज्ञायत
इति हि वक्ष्यति वाग्विशेषविद इदं फलमुच्यते वागेवैनं यथोक्ता वाग्विभूतिविदं तद्विज्ञातं भूत्वाऽवति पालयति विज्ञातरूपेणैवास्यान्नं भो

पिता माता प्रजैत एव मन एव पिता वाङ्माता प्राणः प्रजा॥ ७॥ विज्ञातं विजिज्ञास्यमविज्ञातमेत एव यत्किंच विज्ञातं वाचस्तद्रू
पं वाग्घि विज्ञाता वागेनं तद्भूत्वावति॥ ८॥ यत्किंच विजिज्ञास्यं मनसस्तद्रूपं मनो हि विजिज्ञास्यं मन एनं तद्भूत्वावति॥ ९॥

ज्यत्वं प्रतिपद्यत इत्यर्थः॥ ८॥ तथा यत्किंच विस्पष्टं ज्ञातुमिष्टं विजिज्ञास्यं तत्सर्वं मनसो रूपं मनो हि यस्मात्संदिह्यमानाकारत्वाद्वि
जिज्ञास्यं पूर्ववन्मनोविभूतिविदः फलं मन एनं तद्धि जिज्ञास्यं भूत्वाऽवति विजिज्ञास्यस्वरूपेणैवान्नत्वमापद्यते॥ ९॥ तथा यत्किंचा
विज्ञातं विज्ञानागोचरं न च संदिह्यमानं प्राणस्य तद्रूपं प्राणो ह्यविज्ञातः अविज्ञातरूपो हि यस्मात्प्राणो मिति संबंधः॥ पूर्ववद्वाग्विभूतिविदो
यथा फलमुक्तं तद्वदिति यावत्॥ ९॥ अनिरुक्तश्रुतेरविज्ञातरूपो यस्मात्प्राणस्तस्माद्विज्ञातं सर्वं प्राणस्य रूपमिति योजना॥

वागेवायंलोकइत्यादिः ५ भूरादिषुकश्चिदंशोविज्ञातःकश्चित्तद्विधःकश्चिदज्ञातः २ भूरादावेकैकस्मिन् ४

विज्ञातादिरूपातिरेकेणलोकवेदाद्यभावा हिज्ञातादिरूपत्वाभिधानेनैववागादीनांलोकाद्यात्मत्वेसिद्धे किमर्थंत्रयोलोकाइत्यादिवाक्यमि त्याशंक्यतथैवव्याख्यानार्थमित्याह॥विज्ञातेति॥भूरादिष्वेकैकत्रविज्ञातादित्रयदृष्टेर्वागादेश्चव्यवस्थितत्वात्कुतोविज्ञातादेर्वागाद्यात्मत्वंनियंतुंशक्य मित्याशंक्याह॥सर्वत्रेति॥प्राणविभूतिविदःसंप्रतिफलंकथयति॥प्राणइति॥लोकेविज्ञातस्यैवभोज्यत्वोपलंभादविज्ञातादिरूपेणप्राणादेर्न

ऽनिरुक्तश्रुतेःविज्ञातविजिज्ञास्याविज्ञातभेदेनवाङ्मनःप्राणविभागेस्थितेत्रयोलोकाइत्यादयोवाचनिकाएवसर्वत्रविज्ञातादि रूपदर्शनादुच्चनादेवनियमःस्मर्तव्यः प्राणएनंतद्भूत्वाऽवत्यविज्ञातरूपेणैवास्यप्राणोन्नंभवतीत्यर्थः शिष्यपुत्रादिभिःसंदिह्य मानाविज्ञातोपकाराआचार्यपित्रादयोदृश्यंतेतथामनःप्राणयोरपिसंदिह्यमानाविज्ञातयोरन्नत्वोपपत्तिः॥१०॥व्याख्यातोवाङ्म

यत्किंचाविज्ञातंप्राणस्यतद्रूपंप्राणोह्यविज्ञातःप्राणएनंतद्भूत्वावति॥१०॥

नःप्राणानामाधिभौतिकोविस्तारोथायमाधिदैविकार्थआरंभस्तस्यैतस्यावाचःप्रजापतेरन्नत्वेनप्रस्तुतायाःपृथिवीशरीरंबाह्य आधारोज्योतीरूपंप्रकाशात्मकंकरणंपृथिव्याआधेयभूतंअयंपार्थिवोग्निर्द्विरूपाहिप्रजापतेर्वाक्कार्यमाधारोऽप्रकाशःकरणंचा धेयंप्रकाशः भोज्यत्वोपपत्तिरित्याशंक्याह॥शिष्येति॥शिष्यैरविवेकिभिःसंदिह्यमानोपकाराअपिगुरवस्तेषांभोज्यतामापद्यमानादृश्यंतेपु त्रादिभिश्चातिबालैरविज्ञातोपकाराःपित्रादयस्तेषांभोज्यत्वमापद्यंतेतथाप्रकृतेपिसंभवतीत्यर्थः॥१०॥उत्तमनूद्यतस्यैवाचःपृथिवीत्यादिवताऽय ति॥व्याख्यातइति॥आधिदैविकार्थस्तद्विभूतिप्रदर्शनार्थइतियावत्॥समनंतरसंदर्भस्यतात्पर्यमुक्त्वावाक्याक्षराणियोजयति॥तस्याइति॥कथम

|2|

उक्तमर्थंसंक्षिप्यनिगमयति॥तदुभयमिति॥अध्यात्ममधिभूतंचयावाक्परिच्छिन्नातस्यास्तुल्यपरिमाणत्वमाधिदैविकवागंशत्वादंशांशि
नोश्चतादात्म्यात्तथासहदर्शयति॥तत्रेति॥तावानयमग्निरितिप्रतीकमादायव्याकरोति॥आधेयइति॥समानमुत्तरमित्यस्यायमर्थोध्या
त्ममधिभूतंचमनःप्राणयोराधिदैविकमनःप्राणांशत्वात्तादात्म्याभिप्रायेणतुल्यपरिमाणत्वमुच्यतेतथाचैवाचासमानंप्राणादावुत्तरवाक्येकथ्य

स्तदुभयंपृथिव्यन्नोवागेवप्रजापतेस्तत्रयावत्परिमाणेवाध्यात्माधिभूतभेदभिन्नासतीवाग्भवतितत्रसर्वत्राधारत्वेनपृथिवीव्य
वस्थितातावत्येवभवतिकार्यभूतातावानयमग्निराधेयःकरणरूपेणज्योतीरूपेणपृथिवीमनुप्रविष्टःतावानेवभवतिसमानमु
त्तरं॥११॥अथैतस्यप्राजापत्यान्नोक्तस्यैवमनसोद्यौर्द्युलोकःशरीरंकार्यमाधारोज्योतीरूपंकरणमाधेयोसावादित्यस्तत्त्रयाव

त्तस्यैवाचःपृथिवीशरीरंज्योतीरूपमयमग्निस्तद्यावत्येववाक्तावतीपृथिवीतावानयमग्निः॥११॥

त्परिमाणमेवाध्यात्ममधिभूतंवामनस्तावतीतावद्विस्तारातावत्परिमाणामनसोज्योतीरूपस्यकरणस्याधारत्वेनव्यवस्थिताद्यौस्ता
वानेसावादित्योज्योतीरूपंकरणमाधेयंतावग्न्यादित्यौवाङ्मनसौआधिदैविकेमातापितरौमिथुनंमैथुन्यभावमितरेतरसंसर्गं
समैतांसमगच्छेतामनसा मानंसमानपरिमाणत्वमिति॥११॥आधिदैविकवाग्विभूतिव्याख्यानानंतर्यमथशब्दार्थः॥मनसोद्वैरूप्य
मुक्त्वाव्याप्तिमभिधत्ते॥तत्रेति॥मनएवास्यात्मावाग्जायाप्राणःप्रजेत्यध्यात्मंमनएवपितावाङ्मातापाणःप्रजेत्यधिभूतंचवाङ्मनसयोःप्राणस्यप्र
जात्वमुक्तंतथाधिदैवेपितस्यतत्प्रजात्वंवाच्यमित्यभिप्रेत्याह॥तावदिति॥कथमादित्यस्यमनसःप्राणंप्रतिपितृत्वंवाचोवाग्नेर्मातृत्वंतत्राह॥म

सावित्रं पावकमग्नेर्यं च प्रकाशमृते कार्यसिद्ध्यदर्शनात्तयोः सिद्धं जनकत्वमित्यर्थः॥ कर्मशब्देन कार्यमुच्यते॥ तत्करिष्यामीति प्रत्येकमभिसंधि
पूर्वकमादित्याग्न्योर्द्यावापृथिव्योरंतराले संगतिरासीदित्याह॥ कर्मेति॥ संगतिकार्यमभिप्रायानुसारिं दर्शयति तत इति॥ वायोरिंद्रत्वासप
त्नत्वगुणविशिष्टस्योपासनमभिप्रेत्याह॥ योजात इति॥ द्वितीयस्य सपत्नत्वेवागादेरपि तथात्वं स्यादित्याशंक्याह॥ प्रतिपक्षत्वेनेति॥ यथोक्तसप

दित्येन प्रसूतं पित्रा वाचाग्निना मात्रा प्रकाशितं कर्म करिष्यामीत्यंतरा रोदस्योस्ततस्तयोरेवसंगमनात्प्राणो वायुरजायत परिस्पंदा
यकर्मणे योजातः स इंद्रः परमेश्वरो न केवलमिंद्र एवासपत्नः अविद्यमानः सपत्नो यस्य कः पुनः सपत्नो नाम द्वितीयो वै प्रतिपक्षत्वे

अथैतस्य मनसो द्यौः शरीरं ज्योतीरूपमसावादित्यस्तद्यावदेव मनस्तावती द्यौस्तावानसावादित्यस्तौ मिथुनꣳ समै
तां ततः प्राणो जायत स इंद्रः स एषोऽसपत्नो द्वितीयो वै सपत्नो नास्य सपत्नो भवति य एवं वेद॥१२॥ नोपगतो द्वितीयः सपत्न

इत्युच्यते तेन द्वितीयत्वेपि सति वाङ्मनसे न सपत्नत्वं भजेते प्राणं प्रति गुणभावोपगते एवैते अध्यात्ममिव॥ तत्र प्रासंगिकासपत्नविज्ञा
नफलमिदं नास्य विदुषः सपत्नः प्रतिपक्षो भवति य एवं यथोक्तं प्राणमसपत्नं वेद॥१२॥ अथैतस्य प्रकृतस्य प्राजापत्यान्नस्य प्राण
स्य न प्रजोक्तस्यानंतरनिर्दिष्टस्यापः शरीरं कार्यकरणाधारः तद्व्याख्यानफलमाह॥ तेनेति॥ असपत्नगुणकप्राणोपासने फलवाक्यं प्रमाण

यति॥ तत्रेति॥ प्राणस्यासपत्नत्वे सिद्धे सतीति यावत्॥ प्रासंगिकत्वं प्रजोक्तिप्रसंगादागतत्वं॥१२॥ आधिदैविकयोर्वाङ्मनसयोर्विभूतिनिर्देशा
नंतर्यमथेत्युक्तं॥ नन्वेतस्येत्येतच्छब्देन प्रजात्वेनोक्तस्य प्राणस्य किमिति न ग्रहणं तत्राह॥ न प्रजेति॥ अन्नत्रयस्य समप्रधानत्वेन प्रकृतत्वादेतच्छब्देन प्र

पूर्ववद्वाचोमनसश्चपृथिवीद्यौश्चशरीरंयथातथेत्यर्थः॥द्वैरूप्येप्राणस्योक्त्वाव्याप्तिमविशिष्टंव्याचष्टे॥चंद्रइति॥वाङ्मनःप्राणानामाधिदैविकरूपेणो
पासनंविधातुंवृत्तंकीर्त्तयति॥तानीति॥एतेभ्योतिरिक्तमधिष्ठानमस्तीत्याशंक्यविशिनष्टि॥कार्यात्मकइति॥प्रजापतिरेतेभ्योतिरिक्तोस्तीत्याशं



पूर्ववत्ज्योतीरूपमसौचंद्रःतत्रयावानेवप्राणोयावत्परिमाणोध्यात्मादिभेदेषुतावद्व्याप्तिमत्यःआपस्तावत्परिमाणास्तावानसौ
चंद्रआधेयस्तास्वप्स्वनुप्रविष्टःकरणभूतोध्यात्ममधिभूतंचतावद्व्याप्तिमानेवतान्येतानिपित्रापांक्तेनकर्मणासृष्टानित्रीण्यन्नानिवा
ङ्मनःप्राणाख्यानिअध्यात्ममधिभूतंचजगत्समस्तमेतैर्व्याप्तंनैतेभ्योन्यदतिरिक्तंकिंचिदस्तिकार्यात्मकंकरणात्मकंवा॥समस्तानि

अथैतस्यप्राणस्यापःशरीरंज्योतीरूपमसौचंद्रस्तद्यावानेवप्राणस्तावत्यआपस्तावानसौचंद्रस्तएतेसर्वएवसमाःस
र्वेनंताःसयोहैतानंतवतउपास्तेंतवतꣳसलोकंजयत्यथयोहैताननंतानुपास्तेनंतꣳसलोकंजयति॥१३॥ ॥

तेतानिप्रजापतिस्तेएतेवाङ्मनःप्राणाःसर्वएवसमास्तुल्याव्याप्तिमंतोयावत्प्राणिगोचरंसाध्यात्माधिभूतंव्याप्यव्यवस्थिताअतएवानं
तायावत्संसारभाविनोहितेनहिकार्यकरणप्रत्याख्यानेनसंसारोवगम्यते॥कार्यकरणात्मकाहितइत्युक्तं॥सयःकश्चित्हएतान्प्रजाप
तेःआत्मभूताननंतवतःपरिच्छिन्नानधिभूतरूपेणअध्यात्मरूपेणवोपास्तेसचतदुपासनानुरूपमेवफलमंतवंतंलोकंजयतिपरिच्छिन्न
एवसजायतेनैतेषामात्मभूतोभवतीत्यर्थः॥

क्याह॥समस्तानीति॥सोपस्करंवृत्तमनूद्यवाक्यमादायव्याचष्टे॥तएतइति॥तुल्यांव्याप्तिमेवव्य
नक्ति॥यावदिति॥तावदशेषंजगद्व्याप्येतियोजना॥तुल्यव्याप्तिमत्त्वमुपजीव्याह॥अतएवेति॥तेषांयावत्संसारभावित्वमभिव्यनक्ति॥नहीति॥

कार्यकरणयोर्यावत्संसारभावित्वेपिप्राणानांकिमायातमतआह॥कार्येति॥तेषुपरिछिन्नत्वेनध्यानेदोषमाह॥सयइति॥एवंपातनिकांकृत्वाविवक्षितमुपासनमुपदिशति॥अथेति॥१३॥अन्नत्रयेफलवस्थानविषयेव्याख्यातेवक्तव्याभावात्किमुत्तरग्रंथेनेत्याशंक्यवृत्तंकीर्तयतिपितेति॥तेषांतत्फलेप्रमाणाभावमादायशंकते॥तत्रेति॥प्रस्तुतंव्याख्यानंसप्तम्यर्थः॥कार्यलिंगकमनुमानंप्रमाणयन्नुत्तरमाह॥उच्यतइति॥अनुमा

अथपुनर्येहैतानन्नंतान्सर्वात्मकान्सर्वप्राण्यात्मभूतानपरिछिन्नानुपास्तेसोनंतमेवलोकंजयति॥१३॥पितापांक्तेनकर्मणा सप्तान्नानिसृष्ट्वातत्रत्रीण्यन्नानिआत्मार्थमकरोदित्युक्तंतान्येतानिपांक्तकर्मफलभूतानिव्याख्यातानितत्रकथंपुनःपांक्तस्य

सएषसंवत्सरःप्रजापतिःषोडशकलस्तस्यरात्रयएवपंचदशकला ध्रुवैवास्यषोडशीकलासरात्रिभिरेवाचपूर्यतेऽपचक्षीयते ॥

कर्मणःफलमेतानीत्युच्यतेयस्मात्तेष्वपित्रिष्वन्नेषुपांक्ततावगम्यतेवित्तकर्मणोरपितत्रसंभवात्तत्रपृथिव्यग्नीमातादिवादित्योपितायोयमनयोरंतराप्राणःसप्रजेतिव्याख्यातं तत्रवित्तकर्मणीसंभावयितव्येइत्यारंभःसएषसंवत्सरोयोयमन्न

नमेवस्फुटयितुमन्नेषुपांक्तत्वावगतिंदर्शयति॥यस्मादिति॥तस्मात्कारणमपिताद्दशमितिशेषः॥कथंपुनस्तत्रपांक्तत्वधीरित्याशंक्याह॥वित्तेति॥आत्माजायाप्रजेतित्रयंसंगृहीतुमपिशब्दः॥उक्तंहेतुंव्यक्तीकुर्वन्नुक्तंस्मारयति॥तत्रेति॥अन्नत्रयंसप्तम्यर्थः॥तथापिकथंपांक्तत्वमित्याशंक्यानंतरग्रंथमवतारयति॥तत्रवित्तेति॥सप्तमीपूर्ववत्॥अवतारितंग्रंथंव्याचष्टे॥योयमित्यादिना ॥

कथंप्रजापतेस्तिथिभिरापूर्यमाणत्वमपक्षीयमाणत्वंचतत्राह॥प्रतिपदाद्याभिरितिरुद्धेर्मर्यादांदर्शयति॥यावदिति॥अपक्षयस्यमर्यादा
माह॥यावद्ध्रुवेति॥अवशिष्टाममावास्यानिविष्टांकलांप्रपंचयन्द्वितीयकलोत्पत्तिंशुक्लप्रतिपदिदर्शयति॥सप्रजापतिरिति॥प्राणिजातमेव

त्मात्माप्रजापतिःप्रकृतःसएषसंवत्सरात्मनाविशेषतोनिर्दिश्यतेषोडशकलःषोडशकलाअवयवाअस्यसोयंषोडशकलःसंवत्सरः
संवत्सरात्माकालरूपःतस्यचकालात्मनःप्रजापतेरात्रयएवाहोरात्राणितिथयइत्यर्थःपंचदशकलाःध्रुवैवनित्यैवव्यवस्थिताअस्य
प्रजापतेःषोडशीषोडशानांपूरणीकलासरात्रिभिरेवतिथिभिःकलोक्ताभिरापूर्यतेचापक्षीयतेचप्रतिपदाद्याभिर्हिचंद्रमाःप्रजापतिः
शुक्लपक्षेआपूर्यतेकलाभिरुपचीयमानाभिर्वर्द्धतेयावत्संपूर्णमंडलःपौर्णमास्यांताभिरेवापचीयमानाभिःकलाभिरपक्षीयतेकृष्णपक्षे॥

सोमावास्यांॅरात्रिमेतयाषोडश्याकलयासर्वमिदंप्राणभृदनुप्रविश्यततःप्रातर्जायते

यावत्ध्रुवैकाकलाव्यवस्थितामावास्यायांसप्रजापतिःकालात्मामावास्याममावास्यायांरात्रिंरात्रौयाव्यवस्थिताध्रुवाकलोक्तैतयाषो
डश्याकलयासर्वमिदंप्राणभृत्प्राणिजातमनुप्रविश्ययदपःपिबतियच्चौषधीरश्नातितत्सर्वमेवौषध्यात्मनासर्वंव्याप्यामावास्यायांरात्रिम
वस्थायततोपरेद्युःप्रातर्जायतेद्वितीययाकलयासंयुक्तःएवंपांक्तात्मकोसौप्रजापतिःदिवादित्योमनःपिताष्टथिव्यग्नीवाग्जायामातातयो
श्चप्राणःप्रजाचांद्रमस्यस्ति ~ थयःकलावित्तमुपचयापचयधर्मित्वाद्वित्तवदासांचकलानांकालावयवानांजगत्परिणामहेतुत्वंकर्म विशिनष्टि॥
यदिति॥स्थावरंजंगमंचेत्यर्थः॥औषध्यात्मनेत्युपलक्षणंजलात्मनेत्यपिद्रष्टव्यं॥फलभूतेप्रजापतौपांक्तत्वंवक्तुमुपक्रांतंतद्व्यापिनोक्तमित्याशंक्याह॥एव

हिंसयेत्तं दे

कलानां वित्तवद्धित्तत्वे हेतुमाह ॥ उपचयेति ॥ पांक्तत्वनिर्देशेन लब्धमर्थमाह ॥ एवमेष इति ॥ संप्रति कृत्स्नस्य प्रजापतेरुपक्रमानुसारित्वं दर्शयति ॥ जायेति ॥ भवतु प्रजापतेरुक्तरीत्या पांक्तत्वं तथापि कथं पांक्तकर्मफलत्वं तत्राह ॥ कारणेति ॥ पांक्तकर्मफलत्वं प्रजापतेरुक्त्वा प्रासंगिकमर्थमाह ॥ यस्मादिति ॥ अपि कृकलासस्येति कुतो विशेषोक्तिरित्याशंक्याह ॥ कृकलासो हीति ॥ कुतस्तस्य पापात्मत्वं तत्राह ॥ दृष्टोपीति ॥ विशेषनिषेधस्य शेषा

एवमेष कृत्स्नः प्रजापतिर्जायामे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्म कुर्वीयेत्येषणानुरूप एव पांक्तस्य कर्मणः फलभूतः संवृत्तः कारणानुविधायि हि कार्यमिति लोकेपि स्थितिः ॥ यस्मादेष चंद्र एतां रात्रिं सर्वं प्राणिजातमनुप्रविष्टो ध्रुवया कलया वर्त्तते तस्मादेतो रेताममावास्यां रात्रिं प्राणभृतः प्राणिनः प्राणं न विच्छिंद्यात्प्राणिनं न प्रमापयेदित्येतत् ॥ अपि कृकलासस्य कृकलासो हि पापात्मा स्वभावे

तस्मादेतां रात्रिं प्राणभृतः प्राणं न विच्छिंद्यादपि कृकलासस्यैतस्या एव देवताया अपचित्यै ॥ १४ ॥

नैव हिंस्यते प्राणिभिः दृष्टोप्यमंगल इति कृकलानप्रतिषिद्धैव प्राणिहिंसा न हिंस्यात्सर्वा भूतान्यन्यत्र तीर्थेभ्य इति वादं प्रतिषिद्धा तथापि नामावास्याया अन्यत्र प्रतिप्रसवार्थं वचनं हिंसायाः कृकलासविषये वाकिंतर्ह्येतस्याः सोमदेवतायाः अपचित्यै पूजार्थं ॥ १४ ॥ यो वै परोसाभिहि तः संवत्सरः प्रजापतिः षोडशकलः स नैवात्यंतं परोक्षो मंतव्यो यस्मादयमेव सः

तुज्ञापरत्वाद्विरोधः सामान्यशास्त्रेण स्यादिति शंकते ॥ नन्विति ॥ तीर्थश ब्दः शास्त्रविहितप्रदेशविषयः ॥ साधारण्येन सर्वत्र निषिद्धापि हिंसा विशेषतोऽमावास्यायां निषिध्यमाना सोमदेवतापूजार्था ततः शेषानुज्ञाभावान्न सामान्योक्तिविरोधोस्तीति परिहरति ॥ बाढमिति ॥ १४ ॥ यस्पूर्वमाधिदैविकमन्नात्मकप्रजापत्युपासनमुक्तं तदहमस्मि प्रजापतिरित्यहंग्रहेण कर्त्तव्यमित्याह ॥ यो

प्रत्यक्षमुपलभ्यमानंप्रजापतिंप्रश्नद्वाराप्रकटयति॥कोसाविति॥तस्यप्रजापतित्वमप्रसिद्धमित्याशंक्यपरिहरति॥केनेत्यादिना॥कलानांजगद्धिपरिण
महेतुत्वंकर्मेत्युक्तंवित्तेपिकर्महेतुत्वमस्तितेनतत्रकलाशब्दप्रवृत्तिरुचितेत्याह वित्तेति॥यथाचंद्रमाःकलाभिःशुक्लकृष्णपक्षयोरापूर्यतेऽपक्षी
यतेचतथासविद्वान्वित्तेनैवोपचीयमानेनापूर्यतेऽपक्षीयमाणेनचापक्षीयतेएतच्चलोकप्रसिद्धत्वान्नप्रतिपादनसापेक्षमित्याह॥सचंद्रवदिति॥आ

प्रत्यक्षंउपलभ्यते कोसौअयंयोयथोक्तंज्ञ्यन्नात्मकंप्रजापतिमात्मभूतंवेत्तिसएवंवित्पुरुषःकेनसाआन्येनप्रजापतिरितितदुच्यतेतस्यैवं
विदःपुरुषस्यगवादिवित्तमेवपंचदशकलाउपचयापचयधर्मित्वाद्धित्तसाध्यंचकर्मतस्यकृत्स्नतायैआत्मैवपिंडएवास्यविदुषःषो
डशानांपूरणीषोडशीकलाध्रुवास्थानीयासचंद्रवद्वित्तेनैवापूर्यतेचापक्षीयतेचतदेतल्लोकेप्रसिद्धंतदेतन्नभ्यंनाभ्येहितंनाभिंवाहेतीति

योवैससंवत्सरःप्रजापतिःषोडशकलोयमेवस्योयमेवंवित्पुरुषस्तस्यवित्तमेवपंचदशकलाआत्मैवास्यषोडशीकलासवित्तेनै
वाचपूर्यतेपचक्षीयतेतदेतन्नभ्यंयदयमात्माप्रधिर्वित्तंतस्माद्यद्यपिसर्वज्यानिंजीयतआत्मनाचेज्जीवतिप्रधिनागादित्येवाहुः॥१५॥

किंतद्यदयंयोयमात्मापिंडःप्रधिर्वित्तंपरिवारस्थानीयंबाह्यंवित्तंचक्रस्येवारनेम्यादितस्माद्यद्यपिसर्वज्यानिंसर्वस्वापहरणंजीयतेहीयते
ग्लानिंप्राप्नोतीत्यात्मनाचक्रनाभिस्थानीयेनचेद्यदिजीवतिप्रधिनाबाह्येनपरिवारेणायमगात्क्षीणोयंयथाचक्रमरनेमिविमुक्तमेवमाहुर्जीवंश्चे
दरनेमिस्थानीयेनवित्तेनपुनरुपचीयतइत्यभिप्रायः॥१५॥ तैवध्रुवाकलेत्युक्तंतदेवरथचक्रदृष्टांतेनस्पष्टयति॥तदेतदितिनाभिश्चक्रपिंडिका॥त
त्स्थानीयंवानभ्यंतदेवप्रश्नद्वारास्फोरयति॥किंतदिति॥शरीरस्यचक्रपिंडिकास्थानीयत्वमयुक्तंपरिवारादर्शनादित्याह॥प्रधिरिति॥शरीरस्यरथचक्रपिं

पदार्थमुक्त्वा वाक्यार्थमाह॥जीवंश्चेदिति॥१५॥अनन्तरयात्मनिप्रजापतावहंग्रहोपासनस्यसफलस्योक्तत्वाद्वक्तव्याभावादुत्तरग्रंथवैयर्थ्यमाशंक्यतद्विषयं वक्तुंवृत्तमनुवदति॥एवमिति॥साधनोक्तैवफलमुक्तंतयोर्मिथोवद्धत्वात्प्राजापत्यंचफलंप्रागेवदर्शितंतत्किमुत्तरग्रंथेनेत्याशंक्यसामान्येनतत्प्रतीताव पिइदमस्येतिविशेषोनोक्तस्ततस्तदुक्त्यर्थमुत्तराश्रुतिरित्याह॥तत्रेति॥पूर्वग्रंथःसप्तम्यर्थः॥नियमोनावगतइतिसंबंधः॥उपन्यासःप्रारंभः॥वाचश

एवंपांक्तेनदैववित्तविद्यासंयुक्तेनकर्मणान्यन्नात्मकःप्रजापतिर्भवतीतिव्याख्यातमनंतरंचजायादिवित्तंपरिवारस्थानीयमित्यु क्तंतत्रपुत्रकर्मापरविद्यानांलोकप्राप्तिसाधनत्वमात्रंसामान्येनावगतंनपुत्रादीनांलोकप्राप्तिफलंप्रतिविशेषसंबंधनियमःसोयंपुत्रा दीनांसाधनानांसाध्यविशेषसंबंधोवक्तव्यइत्युत्तरकंडिकाप्रणीयतेअथेतिवाक्योपन्यासार्थस्त्रयोवावेत्यवधारणार्थस्त्रयएवशास्त्रोक्त

अथत्रयोवावलोकामनुष्यलोकःपितृलोकोदेवलोकइतिसोयंमनुष्यलोकःपुत्रेणैवजय्योनान्येनकर्मणाकर्मणापितृलोको

साधनार्हालोकानन्यूनानाधिकावाकेतइत्युच्यतेमनुष्यलोकःपितृलोकोदेवलोकइतितेषांसोयंमनुष्यलोकःपुत्रेणैवसाधनेनजय्योजेतव्यः साध्योयथाचपुत्रेणजेतव्यस्तथोत्तरत्रवक्ष्यामोनान्येनकर्मणाविद्ययावेतिवाक्यशेषःकर्मणाअग्निहोत्रादिलक्षणेनकेवलेनपितृलोकोजेत व्योनपुत्रेणनापिविद्यया॥ द्वस्यावधारणार्थंविवृणोति॥त्रयएवेति॥तदेवलोकत्रयंप्रश्नद्वारास्फोरयति॥केतइत्यादिना॥जयोनामपुत्रेणमनुष्य लोकातिक्रमइतिकेचित्तान्प्रत्याह॥साध्यइति॥पुत्रेणास्यसाध्यत्वमसिद्धमित्याशंक्याह॥यथाचेति॥द्विविधोहिमनुष्यलोकजयःकर्तव्यशेषानुष्ठानंभो गश्चतत्राद्यमाश्रित्यान्ययोगव्यवच्छेदमेवकारार्थंदर्शयति॥नान्येनेति॥द्वितीयेत्वयोगव्यवच्छेदस्तदर्थः॥ज्योतिषेमंलोकंजयतीतिसाधनांतरेणापिमनु

पूर्ववाक्यस्यमेवकारमुत्तरवाक्ययोरनुषक्तमुपेत्यवाक्यद्वयंव्याचष्टे॥कर्मणेत्यादिना॥साधनत्रयस्यापेक्षयाफलद्वारकमुत्कर्षंविद्यायांदर्शयति॥देवलोकइति॥१६॥वृत्तमनुवदति॥एवमिति॥पुत्रादिवज्जायावित्तयोरपिप्रकृतत्वात्फलविशेषविनियोगोवक्तव्यइत्याशंक्याह॥जायाति॥नष्टथक्पुत्रकर्मभ्यामितिशेषः॥नष्टथक्साधनंकर्मणःसकाशादितिद्रष्टव्यं॥अवत्वेवंसाधनत्रयनियमस्तथापिविद्याकर्मणीहित्वासमनंत

विद्ययादेवलोकोनपुत्रेणनापिकर्मणादेवलोकोवैलोकानांत्रयाणांश्रेष्ठःप्रशस्यतमःतस्मात्तत्साधनत्वाद्विद्यांप्रशंसंति॥१६॥एवंसाध्यलोकत्रयफलभेदेनविनियुक्तानिपुत्रकर्मविद्याख्यानित्रीणिसाधनानिजायातुपुत्रकर्मार्थत्वान्नष्टथक्साधनमितिष्टथक्नाभिहितावित्तंचकर्मसाधनत्वान्नष्टथक्साधनंविद्याकर्मणोर्लोकजयहेतुत्वंस्वात्मप्रतिलाभेनैवभवतीतिप्रसिद्धंपुत्रस्यत्वक्रियात्म

विद्ययादेवलोकोदेवलोकोवैलोकानां श्रेष्ठस्तस्माद्विद्यांप्रशंसंति॥१६॥अथातःसंप्रत्तिर्यदाप्रैष्यन्मन्यतेथपुत्रमाहत्वंब्रह्मत्वंयज्ञस्त्वंलोकइतिसपुत्रःप्रत्याहाहं कत्वात्केनप्रकारेणलोकजयहेतुत्वमितिनज्ञायतेऽतस्तद्वक्तव्यमित्यथानंतरमारभ्यतेसंप्रत्तिःसंप्रदानंसंप्रत्तिरितिवक्ष्यमाणस्यकर्मणोनामधेयंपुत्रेहिस्वात्मव्यापारंसंप्रदानंकरोतिअनेनप्रकारेणपितातेनसंप्रत्तिसंज्ञकमिदंकर्मतत्कस्मिन्कालेकर्तव्यमित्याहसपितायदायस्मिन्कालेप्रैष्यन्मरिष्यन्मरिष्यामीत्यरिष्टादिदर्शनेनमन्यतेऽथतदापुत्रमाहूयाहत्वंब्रह्मत्वंयज्ञस्त्वंलोकइतिसएवमुक्तःपुत्रःप्रत्याह॥ एवंचेत्किमितिपुत्रनिरूपणमित्याशंक्याहविद्याकर्मणोरिति॥यथोक्तेचोद्येपुत्रस्यलोकहेतुत्वज्ञानार्थंसंप्रतिवाक्यमित्याह॥अतइति॥अथातइतिपदद्वयंव्याख्यायसंप्रत्तिसंप्रत्तिपदंव्याचष्टे॥संप्रत्तिरिति॥किमिदंसंप्रदानंनामतदाह॥संप्रत्तिरितीति॥तदे

अनेनप्रकारेणेतिवक्ष्यमाणप्रकारोक्तिः॥अरिष्टादीत्यादिपदेनदुःस्वप्नादिसंग्रहः॥प्रत्याहवाक्यत्रयमितिसंबंधः॥पुत्रस्याहंब्रह्मेत्यादिप्रतिवचनेहेतुमा
हसत्त्विति मयाकार्यंयदध्ययनादितदेवावशिष्टंत्वयाकार्यमितिपुत्रस्यप्रागनुशिष्टताभावेप्रतिवचनानुपपत्तिरित्यर्थः॥यद्वैकिंचेत्यादिवाक्यानांपुत्रा
नुमंत्रणवाक्यैरर्थभेदाभावात्पुनरुक्तिरित्याशंक्याह॥एतस्येति॥यद्वैकिंचेत्यादिवाक्येवाक्यार्थमाह॥योध्ययनेति॥त्वंब्रह्मेतिवाक्यवत्त्वंयज्ञइतिवाक्य

सतुपूर्वमेवानुशिष्टोजानातिमयैतत्कर्तव्यमितितेनाहअहंब्रह्माहंयज्ञोहंलोकइतिएतद्वाक्यत्रयमेतस्यार्थस्तिरोहितइतिमन्वाना
श्रुतिर्व्याख्यानायप्रवर्ततेयद्वैकिंचयत्किंचअवशिष्टमनूक्तमधीतमनधीतंचतस्यसर्वस्यैवब्रह्मेत्येतस्मिन्पदएकतैकत्वंयोध्ययन
व्यापारोममकर्तव्यआसीदेतावंतंकालंवेदविषयःसइतऊर्ध्वंत्वंब्रह्मत्वत्कर्तृकोस्त्वित्यर्थस्तथा येवैकेचयज्ञाअनुष्ठेयाःसंतोमयानु

ब्रह्माहंयज्ञोहंलोकइतियद्वैकिंचानूक्तंतस्यसर्वस्यब्रह्मेत्येकतायेवैकेचयज्ञास्तेषांसर्वेषांयज्ञइत्येकतायेवैकेचलोका
स्तेषांसर्वेषांलोकइत्येकतैतावद्वा॥ ष्ठिताश्चाननुष्ठिताश्चतेषांसर्वेषांयज्ञइत्येतस्मिन्पदएकत्वंमत्कर्तृकायज्ञायेआसन्तइतऊ
र्ध्वंत्वंयज्ञस्त्वत्कर्तृकाभवंत्वित्यर्थः॥तथायेवैकेचलोकामयाजेतव्याःसंतोजिताअजिताश्चतेषांसर्वेषांलोकइत्येतस्मिन्पदेएकताइतऊर्ध्वं
त्वंलोकस्त्वयाजेतव्यास्तेइतऊर्ध्वंमयाध्ययनयज्ञलोकजयकर्तव्यःक्रतुस्त्वयिसमर्पितोहंत्वमुक्तोस्मिकर्तव्यताबंधनविषयात्क्रतोः ॥

126 मपिशक्यंव्याख्यातुमित्याह॥तथेति ब्राह्मणार्थंसंगृह्णाति॥मत्कर्तृकाइतित्वंलोकइत्यस्यव्याख्यानंयेवैकेचेत्यादि॥तत्रपदार्थानुक्त्वावाक्यार्थमाह॥इत
इति॥किमितित्वत्कर्तृकमध्ययनादिमयिसमर्प्यतेत्वयैवकिंनानुष्ठीयतेतत्राह॥इतऊर्ध्वमिति॥कर्तव्यतैवबंधनंतद्विषयःक्रतुःसंकल्पस्तस्मादितिया १८

सपुत्रइत्यादेस्तात्पर्यमाह॥सचेति॥तत्रेति॥यथोक्तानुशासनोक्तिः॥एतत्सर्वमित्यादिप्रतीकमादायव्याचष्टे॥सर्वंहीति अनद्यतनेभूतेऽर्थेविहितस्यल ङोभविष्यदर्थत्वंकथमित्याशंक्याह॥छन्दसीति॥पुत्रानुशासनस्यफलवत्त्वमाह॥यस्मादित्यादिना॥कृतसंप्रत्तिकःसन्पिताकिंकरोतीत्यपेक्षायामाह॥स

सचसर्वंतथैवप्रतिपन्नवान्पुत्रोऽनुशिष्टत्वात्तत्रेमंपितुरभिप्रायंमन्वानाचष्टेश्रुतिरेतावद्वैतत्परिमाणंवैइदंसर्वंयद्गृहिणाकर्तव्यंयदुतवेदा अध्येतव्याःयज्ञायष्टव्यालोकाजेतव्याएतत्सर्वंसन्नयंसर्वंहीमंभारंमदधीनंमत्तोऽपच्छिद्यात्मनिनिधायेतोस्माल्लोकान्मामामभुनजस्माल यिष्यतीतिलृङर्थेलङ्छन्दसिकालनियमाभावात्यस्मादेवंसंपन्नःपुत्रःपितरमस्माल्लोकात्कर्तव्यताबंधनवतोमोचयिष्यतितस्मात्पुत्रमनुशिष्टंलो क्यंलोकहितंपितुराहुर्ब्राह्मणाअतएवह्येनंपुत्रमनुशासतिलोक्योऽयंनःस्यादितिपितरःसपितायदायस्मिन्कालेएवंवित्पुत्रसमर्पितकर्तव्य

इदꣳसर्वमेतन्मासर्वꣳसन्नयमितोऽभुनजदितितस्मात्पुत्रमनुशिष्टंलोक्यमाहुस्तस्मादेनमनुशासतिसयदैवंविदस्माल्लो कात्प्रैत्यथैभिरेवप्राणैःसहपुत्रमाविशति॥

ताक्रतुरस्माल्लोकात्प्रैतिम्रियतेऽथतदाएभिरेवप्रकृतैर्वाङ्मनःप्राणैःपुत्रमाविशति पुत्रंव्याप्नोतिअध्यात्मपरिच्छेदहेत्वपगमात्पितुर्वाङ्मनःप्राणाःस्वेनाधिदैविकेनरूपेणपृथिव्यग्न्याद्यात्मनाभिन्नघटप्रदीपप्रकाशवत्सर्व माविशन्तितैःप्राणैःसहपिताप्याविशतिवाङ्मनःप्राणात्मभावितत्वात्पितुरहमस्म्यनंतावाङ्मनःप्राणाअध्यात्मादिभेदविस्तारा इत्येवंभावि तोहिपितातस्मात्तत्प्राणानुवृत्तित्वंपितुर्भवतीतियुक्तमुक्तमेभिरेवप्राणैःसहपुत्रमाविशतीतिसर्वेषांह्यसावात्माभवतिपुत्रस्यच॥ पितेति॥कोऽयंप्रवे शोनहिविशिष्टस्यकेवलस्यवाविलेसर्पवत्प्रवेशःसंभवत्यतआहअध्यात्मेति॥हेतुर्मिथ्याज्ञानादिःवागादिषुविशेषपरिच्छेदोऽर्थान्तरस्यपितुरावेशधीरित्याशंक्या

भावनाफलमाह॥ तस्मादिति॥ पुत्रविशेषणात्परिच्छिन्नत्वं पितुस्तद्वस्थमित्याशंक्याह॥ सर्वेषांहीति॥ मृतस्य पितुरितो लोकाद्व्यावृत्तस्य कथं यथोक्तरूप
त्वमित्याशंक्याह॥ एतदुक्तमिति॥ पुत्ररूपेणात्रस्थितिमेव विभजते नैवेति॥ मृतोपि पिता नुशिष्टपुत्रात्मनात्र वर्त्तते नास्मादयं तं व्यावृत्तः फलरूपे
णच परत्रेति भावः उक्तेर्थे ऐतरेयश्रुतिं संवादयति तथा चेति॥ षष्ठी प्रथमाभ्यां पिता पुत्रावुच्येते॥ सयदीत्यादिवाक्यमवतार्य व्याकरोति॥ अथेत्या

एतदुक्तं भवति यस्य पितुरेवमनुशिष्टः पुत्रो भवति सोस्मिन्नेव लोके वर्त्तते पुत्ररूपेण नैव मृतो मंतव्य इत्यर्थः तथा च श्रुत्यंतरे सोस्यायमा
त्मा पुण्येभ्यः कर्मभ्यः प्रतिधीयत इति अथेदानीं पुत्रनिर्वचनमाह स पुत्रो यदि कदाचिदनेन पित्राऽक्ष्णया कोणच्छिद्रांतराऽकृतं भवति क
र्त्तव्यं तस्मात्कर्त्तव्यतारूपात्पित्राऽकृतात्सर्वस्माल्लोकप्राप्तिप्रतिबंधरूपात्पुत्रो मुंचति मोचयति तत्सर्वं स्वयमनुतिष्ठन्पूरयित्वा तस्मात्पूर

सयद्यनेन किंचिदक्ष्णयाकृतं भवति तस्मादेनꣳ सर्वस्मात्पुत्रो मुंचति तस्मात्पुत्रो नाम स पुत्रेणैवास्मिंल्लोके प्रतितिष्ठ

णेन त्रायते स पितरं यस्मात्तस्मात्पुत्रो नामेदं तत्पुत्रस्य पुत्रत्वं यत्पितुश्छिद्रं पूरयित्वा त्रायते स पितैवंविधेन पुत्रेण मृतोपि सन्नमृतोस्मि
न्नेव लोके प्रतितिष्ठत्येवमसौ पिता पुत्रेणेमं मनुष्यलोकं जयति न तथा विद्याकर्मभ्यां देवलोकपितृलोकौ स्वरूपलाभसत्तामात्रेण न
हि विद्याकर्मणी स्वरूपलाभव्यतिरेकेण पुत्रवद्व्यापारांतरापेक्ष्य लोकजयहेतुत्वं प्रतिपद्येते ॥ दिना॥ अकृतमकृतादिति च्छे

127 दः तस्मादिति प्रतीकमादाय व्याकरोति॥ पूरणेनेति तदेव प्रपंचयति॥ इदं तदिति॥ पुत्रवैशिष्ट्यं निगमयति॥ सपितेति॥ पुत्रेणेतल्लोकजयमुप
संहरति॥ एवमिति॥ यथोक्तात्पुत्राद्विद्याकर्मणोर्विशेषमाह॥ न तथेति॥ कथं तर्हि ताभ्यां पिता तौ जयति तत्राह॥ स्वरूपेति॥ तदेव स्पष्टयति॥ नहीति॥

अनुशिष्टपुत्रेणैतल्लोकजयिनंपितरमधिकृत्य अथैनमित्यादिवाक्यंतद्व्याकरोति॥ अथेति॥ पुत्रप्रकरणविच्छेदार्थोयशब्दः॥ आवेशप्रकारबुभुत्सा यामुत्तरवाक्यप्रवृत्तिंप्रतिजानीते॥ कथमित्यादिना॥१७॥ पृथिव्यैचेत्यादिवाक्यस्यव्यावर्त्यंपसंवृत्तानुवादपूर्वकमुत्थापयति॥ एवमिति॥ अन्नेति॥ वैदिकान्निर्धारयितुंसप्तमी॥ बहुवदनशीलत्वेहेतुः॥ श्रुत्युक्तेति॥ मोक्षार्थतामृणापाकरणश्रुतिस्मृतिभ्यांवदंतीतिशेषः॥ मीमांसकपक्षंप्रकृ

अथकृतसंप्रत्तिकंपितरमेनमेतेवागादयः प्राणादेवाहैरण्यगर्भाअमृताअमरणधर्माणआविशंतिकथमितिवक्ष्यतिपृथिव्यैचैनमि त्यादि॥१७॥ एवंपुत्रकर्मापरविद्यानांमनुष्यलोकपितृलोकदेवलोकसाध्यार्थताप्रदर्शिताश्रुत्यास्वयमेवात्रकेचिद्बहुवदूकाःश्रुत्युक्त विशेषार्थानभिज्ञाःसंतःपुत्रादिसाधनानांमोक्षार्थतांवदंतितेषामुखापिधानंश्रुत्येदंकृतंजायामेस्यादित्यादिपांक्तंकाम्यकर्मैत्युपक्रमेण

त्यथैनमेतेदेवाःप्राणअमृताआविशंति॥१७॥

पुत्रादीनांचसाध्यविशेषविनियोगोपसंहारेणचतस्माद्ऋणश्रुतिरविद्वद्विषयानपरमात्मविद्विषयेतिसिद्धं॥ वक्ष्यतिचकिंप्रजयाकरिष्या मोयेषांनोयमात्मायंलोकइति॥ केचित्तुदेवलोकपितृलोकजयोपिपितृलोकदेवलोकाभ्यांव्यावृत्तिरेव॥ तच्छ्रुतिविरोधेनदूषयति॥ तेषामिति॥ कथमित्याशंक्यश्रुतेरादिमध्यावसानालोचनयापुत्रादेःसंसारफलत्वावगमान्नमुक्तिफलतेत्याह॥ जायेत्यादिना॥ पुत्रादीनांचेतिचकारादेतावान्वैका मइत्तिमध्येसंग्रहः॥ यदुक्तमृणापाकरणश्रुतिस्मृतिभ्यांपुत्रादेर्मुक्तिफलतेतितत्राह॥ तस्मादिति॥ पुत्रादेःश्रुतंसंसारफलत्वंपरामृष्टंतच्छब्दःश्रुतिशब्दः स्मृतेरुपलक्षणार्थः॥ श्रुतिस्मृत्योरविरक्तविषयत्वेवाक्यशेषमनुकूलयति॥ वक्ष्यतिचेति॥ मीमांसकपक्षंनिराकृत्यभर्तृप्रपंचपक्षमुत्थापयति॥ केचित्त्वि

पुत्रादिसाधनाधीनतयालोकत्रयव्यावृत्तावपिकथंमोक्षःसंपद्यतेनहिपुत्रादीन्येवमुक्तिसाधनानिविरक्तत्वविरोधादित्याशंक्याह॥तस्मादिति॥पृ
थिव्यैचेत्याद्योत्तराश्रुतिरेवमीमांसकमतवद्वैतप्रपंचमतमपिनिराकरोतीतिदूषयति॥तेषामिति॥कथंसातन्मतंनिराकरोतीत्याशंक्यश्रुतिंविशि
नष्टि॥कृतेति॥अन्यात्मोपासितृत्वदाशिवचनविरुद्धंपरमतमित्युक्तंतदाप्तेरेवमुक्तित्वादित्याशंक्याह॥नचेति॥तथापिकथंयथोक्तंफलंमोक्षोन
भवतितत्राह॥मेधेति॥अन्यात्मनोज्ञानकर्मजन्यत्वेहेतुमाह॥पुनःपुनरिति॥सूत्राप्तेरमुक्तित्वेहेत्वंतरमाह॥यद्वेति॥कार्यकरणवत्वश्रुतेरपिसू

तस्मात्पुत्रकर्मापरविद्याभिःसमुच्चित्यानुष्ठिताभिस्त्रिभ्यःएतेभ्योलोकेभ्योव्यावृत्तःपरमात्मविज्ञानेनमोक्षमधिगच्छतीतिपरं
परयामोक्षार्थान्येवपुत्रादिसाधनानीत्युक्तितेषामपिमुखापिधानायेयमेवश्रुतिरुत्तराकृतसंप्रत्तिकस्यपुत्रिणःकर्मिणस्त्र्यन्ना
त्मविद्याविद[illegible]लप्रदर्शनायप्रवृत्तानचेदमेवफलंमोक्षइतिशक्यंवक्तुमन्नसंबंधात्मेधातपःकार्यत्वाच्चान्नानांपुनःपुनर्जनयतइ
तिदर्शनात्॥यद्वैतत्त्वकुर्यात्क्षीयतेहेतिचक्षयश्रवणाच्छरीरंज्योतीरूपमितिचकार्यकरणत्वोपपत्तेस्त्रयंवाइदमितिचनामरूपकर्मा
त्मत्वेनोपसंहारान्नचेदमेवसाधनत्रयंसंहतंसत्कस्यचिन्मोक्षार्थंकस्यचित्त्वन्यात्मफलमित्यस्मादेववाक्यादवगंतुंशक्यंपुत्रादिसाधना
नांत्वन्यात्मफलदर्शनेनैवोपक्षीणत्वाद्वाक्यस्य॥पृथिव्यैपृथिव्याश्चएनमग्नेश्च त्रभावेनमुक्तिरित्याह॥शरीरमिति॥अविद्यातद्वस्यद्वैतस्यत्र्या

त्मकत्वेनोपसंहारात्तदात्मसूत्रभावोबंधांतर्भूतोनमुक्तिरितियुक्त्यंतरमाह॥त्रयमिति॥नन्वविरक्तस्याज्ञस्यसूत्राप्तिफलमपिकर्मादिविरक्तस्यवि
दुषोमुक्तिफलमितिव्यवस्थितिर्नेत्याह॥नचेदमिति॥नहिपृथिव्यैचेत्यादिवाक्यस्यैकस्यसकृच्छ्रुतस्यानेकार्थत्वंभिद्यतेहितथावाक्यमितिन्यायादित्य
र्थः॥पृथिव्यैचेत्यादिवाक्यावष्टंभेनपक्षद्वयंप्रतिक्षिप्यतदक्षराणिव्याचष्टे॥पृथिव्याइति॥एन मित्युक्तमनूद्यव्याकरोति॥एनमिति ॥

128

कथंपुनःसूत्रात्मभूतावागुपासकमाविशतितत्राह॥सर्वेषांहीति॥तर्हितयोरभेदादविदुषोपिप्राप्तैववागितिविदुषिविशेषोनास्तीत्याशंक्याह॥साहीति॥दैव्यांवाचिदोषविगममुत्तरवाक्येनसाधयति॥साचेति॥विद्वद्वाचःस्वरूपंसंक्षिपति॥अमोघेति॥१८॥वाचिदर्शितंन्यायंमनस्यतिदिशति॥त



दैवीआधिदैवात्मिकावागेनंकृतसंप्रतिकमाविशतिसर्वेषांहिवाचउपादानभूतादैवीवाक्पृथिव्यग्निलक्षणासाह्याध्यात्मिकाऽसंगादिदोषैर्निरुद्धाविदुषस्तद्दोषापगमेआवरणभंगइवोदकंप्रदीपप्रकाशवच्चव्याप्नोतितदेतदुच्यतेपृथिव्याअग्नेश्चेनंदैवीवागाविशतीतिसाचदैवीवागनृतादिदोषरहिताशुद्धाययावाचादैव्यायद्यदेवआत्मनेपरस्मैवावदतितत्तद्भवत्यमोघाऽप्रतिबद्धास्यवाग्भवतीत्यर्थः॥१८॥तथादिवश्चैनमादित्याच्चदैवंमनआविशतितच्चदैवंमनःस्वभावनिर्मलत्वाद्येनमनसाऽसावानंद्येवभवतिसुख्येवभवत्यथोअपि

पृथिव्यैचैनमग्नेश्चदैवीवागाविशतिसावैदैवीवाग्ययायद्यदेववदतितत्तद्भवति॥१८॥दिवश्चैनमादित्याच्चदैवंमनआविशतितद्वैदैवंमनोयेनानंद्येवभवत्यथोनशोचति ॥ १९ ॥

नशोचतिशोकादिनिमित्तासंयोगात्॥१९॥तथाद्भ्यश्चैनंचंद्रमसश्चदैवःप्राणआविशतिसवैदैवःप्राणःकिंलक्षणइत्युच्यतेयःसंचरन्प्राणिभेदेषुसंचरन्समष्टिव्यष्टिरूपेणाथवासंचरन्जंगमेषुसंचरन्स्थावरेषुनव्यथतेदुःखनिमित्तेनभयेनयुज्यतेअथोअपिनरिष्यतिनविनश्यतिनहिंसामापद्यते

थेति॥यन्मनःस्वभावनिर्मलत्वेनदैवमित्युक्तंतदेवविशिनष्टि॥येनेति॥सैवाइतिविद्वदुक्तिः॥येनमनसाविद्वानशोचत्यपितद्धेत्वभावात्तद्दैवमितिपूर्वेणसंबंधः॥१९॥मनस्युक्तंन्यायंप्राणेऽतिदिशति॥तथेति॥तमेवदैवंप्राणंप्रश्नपूर्वकंप्रक

सएवंविदित्यादिव्याचष्टे॥सयइति॥विदिरत्रलाभार्थः॥नकेवलंयथोक्तमेवविद्याफलंकिंतुफलांतरमप्यस्तीत्याह॥किंचेति॥सर्वभूतात्मत्वेत
द्दोषयोगात्प्रजापत्यसंपदनादेयमित्युत्तरवाक्यव्यावर्त्यामाशंकामाह॥अथेति॥सर्वप्राणिसुखदुःखैरित्यस्मादूर्ध्वंसशब्दोध्याहर्तव्यः॥सर्वात्मके

सयोयथोक्तमेवंवेत्तित्यन्नात्मदर्शनंसर्वेषांभूतानामात्माभवतिसर्वेषांभूतानांप्राणोभवतिसर्वेषांभूतानांमनोभवतिवाग्भवतीत्येवंसर्वभू
तात्मतयासर्वज्ञोभवतीत्यर्थः सर्वकृच्चयथैषापूर्वसिद्धाहिरण्यगर्भदेवताएवमेवनास्यसर्वज्ञत्वेसर्वकृत्वेवाक्वचित्प्रतिघातः॥किंच॥स
इतिदृष्टांतनिर्देशोयथैतांहिरण्यगर्भदेवतामिज्यादिभिःसर्वाणिभूतानिअवंतिपालयंतिपूजयंत्येवंहैवंविदंसर्वाणिभूतान्यवंतिइज्या

अग्नेश्चैनंचंद्रमसश्चदैवःप्राणआविशतिसवैदैवःप्राणोयःसंचरं२श्चासंचरं२श्चनव्यथतेथोनरिष्यतिसएवंवित्सर्वेषां
भूतानामात्माभवतियथैषादेवतैवं२सयथैतांदेवता२सर्वाणिभूतान्यवंत्येवं२हैवंविदं२सर्वाणिभूतान्यवंति ॥

दिलक्षणांपूजांसततंप्रयुंजतइत्यर्थः॥अथेदमाशंक्यतेसर्वप्राणिनामात्माभवतीत्युक्तंतस्यचसर्वप्राणिकार्यकरणात्मत्वेसर्वप्राणि
सुखदुःखैःसंबध्यतइति॥तन्न॥अपरिछिन्नबुद्धित्वात्परिछिन्नात्मबुद्धीनांह्याक्रोशादौदुःखसंबंधोदृष्टोऽनेनाहमाक्रुष्टइत्यस्यतुस
र्वात्मनोयआक्रुश्यतेयश्चाक्रोशतितयोरात्मत्वबुद्धिविशेषाभावान्नतन्निमित्तंदुःखमुपपद्यते॥ विदुष्येकैकभूतनिष्टदोषयोगोनास्तीत्युत्तरमा

=गर्भिण्यस्यएवंभूतंगर्भमित्युच्यतेश्रुतौ॥गर्भाणांतत्रज्ञानंहिजायतेबहुयोनिकं॥१॥सत्येवंसगरस्यापिपत्न्याःषष्टिसहस्रके॥गर्भेव्याप्तेनजीवेनदुःखंनैवात्रभूयते॥२॥तैरेवतद्दनुभू
येतगर्भैस्त्वाहिश्रुतिर्जगौ॥विश्वरूपेययाविश्वंविचित्रंभातिवैस्फुटं॥३॥विश्वरूपीविजानन्वैपीड्यतेनैवतैर्नतैः॥भिन्नभारोयथाभारःस्वल्पोपिदुःखदोभवेत्॥सएवसस्यदेहस्य
दुःखदोदुःखदोनहि=२ तेनदुःखेननतैर्हिस्वंपीड्यते१ २=यथावृक्षलग्नफलेषुजीवद्वयंवृक्षजीवःसामान्यरूपेणवर्ततेवीजजीवस्तुविशेषरूपेण

ह॥तन्नेति॥तदेवप्रपंचयति॥परिछिन्नेति॥

अपरिच्छिन्नधीत्वेपिसूत्रात्मकेविदुषिसर्वभूतांतर्भावात्तत्दुःखादियोगःस्यादेवेत्याशंक्यजठरकुहरविपरिवर्त्तिकृमिदोषैरस्माकमसंसर्गवत्स्व
कृतेपिसंभवान्नैवमित्यभिप्रेत्याह॥मरणेति॥नोपपद्यतेविदुषोदुःखमितिपूर्वेणसंबंधः॥दृष्टांतंविवृणोति॥यथेति॥मैत्रस्यस्वहस्ताद्यभिमानवत
स्तद्दुःखादियोगवत्विदुषःसूत्रात्मनःस्वांशभूतसर्वभूताभिमानिवत्स्तद्दुःखादिसंसर्गःस्यादित्याशंक्यदार्ष्टांतिकमाह॥तथेति॥ममतवतादीत्यादि

मरणदुःखवच्चनिमित्ताभावाद्यथाहिकस्मिंश्चिन्मृतेकस्यचित्दुःखमुत्पद्यतेममासौपुत्रोभ्रातावेतिपुत्रादिनिमित्तंतन्निमित्ताभावेतन्म
रणदर्शिनोपिनैवदुःखमुपजायतेतथेश्वरस्याप्यपरिच्छिन्नात्मनोममतवतादिदुःखनिमित्तमिथ्याज्ञानादिदोषाभावान्नैवदुःखमुपजाय
तेतदेतदुच्यते॥यदुकिंचयत्किंचेमाःप्रजाःशोचंतिअमैवसहैवप्रजाभिस्तच्छोकादिनिमित्तंदुःखंसंयुक्तंभवत्यासांप्रजानांपरिच्छिन्नबुद्धि

यदुकिंचेमाःप्रजाःशोचंत्यमैवासांतद्भवतिपुण्यमेवामुंगच्छतिनहवैदेवान्पापंगच्छति॥२०॥

जनितत्वात्सर्वात्मनस्तुकेनसहकिंसंयुक्तंभवेद्वियुक्तंवाअमुंतुप्राजापत्येपदेवर्त्तमानंपुण्यमेवशुभमेवफलमभिप्रेतंपुण्यमितिनि
रतिशयंहितेनपुण्यंकृतंतेनतत्फलमेवगच्छतिनहवैदेवान्पापंगच्छतिपापफलस्यावसराभावात्पापफलंदुःखंनगच्छतीत्यर्थः॥२०

पदेनाहंताग्रहणं॥तदेवदुःखनिमित्तंमिथ्याज्ञानं॥आदिशब्देनरागादिरुक्तः॥उक्तेर्थेश्रुतिमवतार्यव्याचष्टेतदेतदिति॥शुभमेवगच्छतीतिसंबं
धः॥फलरूपेणवर्तमानस्यकथंकर्मसंबंधःस्यादित्याशंक्याह॥फलमिति॥उक्तमेवव्यनक्ति॥निरतिशयइति ॥ २० ॥

७= यथास्वत्वस्यवैशेष्यात्धनाद्युपार्जनेप्रजाः॥पीड्यंतेस्वत्वसामान्याद्राजासुख्येवकेवलः॥तथासावीश्वरोलोकेनिष्फलंकोनदुःखभाक्=७

अथेत्यादिवाक्यस्यवक्तव्यशेषाभावादानर्थक्यमाशंक्यव्यवहितोपासनानुवादेनतदंगव्रतविधानार्थमुत्तरंवाक्यमित्यानर्थक्यंपरिहरति॥तएत
इत्यादिना॥व्रतमित्यवश्यानुष्ठेयंकर्मोच्यतेजिज्ञासायाःसत्वमतःशब्दार्थः॥उपासनोक्त्यानंतर्यमथशब्दार्थंकथयति॥अनंतरमिति॥विचारणा
मेवस्फोरयति॥एषामिति॥प्रवृत्तायांमीमांसायांप्राणव्रतमभग्नत्वेनधारणीयमितिनिर्धारणार्थमाख्यायिकांप्रमाणयति॥तत्रेत्यादिना॥कथंवा

तएतेसर्वएवसमाःसर्वेनंताइत्यविशेषेणवाङ्मनःप्राणानामुपासनमुक्तंनान्यतमगतोविशेषउक्तःकिमेवमेवप्रतिपत्तव्यंकिं
वाविचार्यमाणेकश्चिद्विशेषोव्रतमुपासनंप्रतिपत्तुंशक्यतइत्युच्यतेथातोनंतरंव्रतस्योपासनस्यमीमांसाउपासनकर्मविचारणे
त्यर्थः॥एषांप्राणानांकस्यकर्मव्रतत्वेनधारयितव्यमितिमीमांसाप्रवर्त्ततेतत्रप्रजापतिर्हेहशब्दःकिलार्थेप्रजापतिःकिलप्रजाःस

अथातोव्रतमीमाꣳसाप्रजापतिर्हकर्माणिससृजे॥

ष्ट्वाकर्माणिकरणानिवागादीनिकर्मार्थानिहितानीतिकर्माणीत्युच्यंतेससृजेसृष्टवान्वागादीनिकरणानीत्यर्थः॥तानिपुनःसृष्टा
न्यन्योन्येनेतरेतरमस्पर्द्धंतस्पर्धांसंघर्षंचक्रुःकथंवदिष्याम्येवस्वव्यापाराद्वदनादनुपरतेवाहंस्यामितिवाग्व्रतंदध्रेधृतवतीय
द्यन्योपिमत्समोस्तिस्वव्यापारादनुपरंतुंशक्तःसोपिदर्शयत्वात्मनोवीर्यमिति॥तथाद्रक्ष्याम्यहमितिचक्षुःश्रोष्याम्यहमितिश्रोत्र
मेवमन्यान्यपिकर्माणिकरणानि गादिषुकरणेषुकर्मशब्दप्रवृत्तिरित्याशंक्याह॥कर्माणीति॥तदीयसृष्टेरुपयोगमुपदर्शयि
तुंभूमिकांकरोति॥तानीति॥स्पर्धाप्रकारंप्रश्नपूर्वकंप्रकटयति॥कथमित्यादिना ॥

130

यथाकर्मस्वीयंस्वीयंव्यापारमनुसृत्यव्रतंदध्रिरेत्वगादीनिकरणानीत्यर्थः॥प्रजापतेर्वागादिषुश्रमद्वारास्वकर्मप्रच्युतिरासीदित्यत्रकार्यलिंगक मनुमानंप्रमाणयति॥तस्मादिति॥वागादीनांभग्नव्रतत्वनिर्धारणानंतर्यमथशब्दार्थः॥प्राजापत्येप्राणेमृत्युग्रस्तत्वाभावेकार्यलिंगकमनुमा

यथाकर्मयद्यस्यकर्मयथाकर्मतानिकरणानिमृत्युर्मारकःश्रमरूपीभूत्वाउपयेमेसंजग्राहकथंतानिकरणानिस्वव्यापारेप्रव र्त्तान्याप्नोत्श्रमरूपेणात्मानंदर्शितवानाप्त्वाचतान्यवारुंधावरोधंकृतवान्मृत्युःस्वकर्मभ्यःप्रच्यावितवानित्यर्थः॥तस्मादद्यत्वेपिव दनेस्वकर्मणिप्रवृत्तावाक्श्राम्यत्येवश्रमरूपिणामृत्युनासंयुक्तासकर्मतःप्रच्यवतेतथाश्राम्यतिचक्षुःश्राम्यतिश्रोत्रंअथेममेव

तानिसृष्टान्यन्योन्येनास्पर्द्धंतवदिष्याम्येवाहमितिवाग्दध्रेद्रक्ष्याम्यहमितिचक्षुःश्रोष्याम्यहमितिश्रोत्रमेवमन्यानिकर्मा णियथाकर्मतानिमृत्युःश्रमोभूत्वोपयेमेतान्याप्नोत्तान्याप्त्वामृत्युरवारुंधतस्माच्छ्राम्यत्येववाक्छ्राम्यतिचक्षुःश्राम्यतिश्रो त्रमथेममेवनाप्नोद्योयंमध्यमःप्राणस्तानिज्ञातुंदध्रिरे॥ मुख्यंप्राणंनाप्नोत्नप्राप्तवान्मृत्युःश्रमरूपीयोयंमध्यमःप्राणस्तेनेना द्यत्वेपिअश्रांतएवकर्मणिप्रवर्त्ततेतानीतराणिकरणानितंज्ञातुंदध्रिरेधृतवतिमनः॥अयंवैनोस्माकंमध्येश्रेष्ठःप्रशस्यतमोऽभ्य धिकोयस्माद्यःसंचरंश्चासंचरंश्चनव्यथतेऽथोनरिष्यतिहंतेदानींअस्यैवप्राणस्यसर्वेवयंरूपमसामप्राणमात्मत्वेनप्रतिप द्येमहिएवंविनिश्चित्यत

नंसूचयतितेनेति॥प्रवर्त्ततेप्राणइतिइतिसंबंधः॥तथापिकथंप्राणस्यैवव्रतंधार्यमित्यपेक्षायामाह॥तानीतिज्ञा नार्थमनुसंधानप्रकारमेवदर्शयति॥अयमिति॥तस्यश्रेष्ठत्वेफलितमाह॥हंतेति॥इतिशब्दंव्याकरोति॥एवंविनिश्चित्येति ॥

अस्माकंवागादीनांव्रतानिमृत्योर्वारणायनपर्याप्तानीतिविनिश्चित्यदध्रिरेप्राणव्रतमेवेतिसंबंधःप्राणरूपत्वमुक्त्वाकरणानांतन्नामत्वमाह॥यस्मा
दितियस्मादित्यस्यतस्मादितिव्यवहितेनसंबंधः॥प्राणरूपंचलनात्मत्वमितिकुतोनिश्चीयतेतत्राह॥नहीति॥तर्हिकरणेषुप्रकाशात्मत्वमेवन

एतस्यैवसर्वेरूपमभवन्प्राणरूपमेवात्मत्वेनप्रतिपन्नाःप्राणव्रतमेवदध्रिरेऽस्मद्व्रतानिनमृत्योर्वारणायपर्याप्तानीतियस्मात्प्राणे
नरूपेणरूपवंतीतराणिकरणानिचलनात्मनास्वेनचप्रकाशात्मनानहिप्राणादन्यत्रचलनात्मकत्वोपपत्तिः॥चलनव्यापारपूर्वकाण्ये
वहिसर्वदास्वव्यापारेषुलक्ष्यंतेतस्मादेतेवागादयःएतेनप्राणाभिधानेनाख्यायंतेऽभिधीयंतेप्राणाइत्येवं॥यएवंप्राणात्मतांसर्वकर

ऽयंवैनःश्रेष्ठोयःसंचरꣳश्चासंचरꣳश्चनव्यथतेथोनरिष्यतिहंतास्यैवसर्वेरूपमसामेतितएतस्यैवसर्वेरूपमभवꣳस्तस्मादेत
एतेनाख्यायंतेप्राणाइतितेनहवावतत्कुलमाचक्षतेयस्मिन्कुलेभवतियएवंवेद॥ णानांवेतिप्राणशब्दाभिधेयत्वंचतेनहवावतेनै

वविदुषातत्कुलमाचक्षतेलौकिकाःयस्मिन्कुलेसविद्वान्जातोभवतितत्कुलंविद्वन्नाम्नैवप्रथितंभवतिअमुष्येदंकुलमितियथातापत्यइ
तियएवंयथोक्तंवेदवागादीनांप्राणस्वरूपतांप्राणाख्यत्वंचतस्यैतत्फलंकिंच॥यःकश्चिदुहएवंविदाप्राणात्मदर्शिनास्पर्धतेतत्प्रतिप
क्षीसन्सोऽस्मिन्नेवशरीरेऽनुशुष्यतिशोषमुपगच्छतिअनुशुष्यहैवशोषंगत्वैवांततोंऽतेम्रियतेनसहसानुपद्रुपतोम्रियते चलनात्मत्वमित्या

शंक्याह॥चलनेति॥संप्रतिविद्याफलमाह॥यएवमिति॥तदेवस्पष्टयति॥यस्मिन्निति॥तपतीसूर्यसुतातस्याःवंशस्तापत्यःकस्येदंफलमित्युक्तेपूर्वोक्त
मेवस्फुटयति॥यएवमित्यादिना॥नकेवलंविद्यायायथोक्तमेवफलंकिंतुफलांतरमप्यस्तीत्याह॥किंचेति॥प्राणविदासहस्पर्द्धानकर्त्तव्येतिभावः॥

इत्यध्यात्ममित्यस्यानर्थक्यमाशंक्याह॥ इत्येवमिति॥ २१॥ अध्यात्मंदर्शनमुक्त्वाऽधिदैवतंदर्शनंवक्तुंअनंतरवाक्यमवतारयति॥ अथेति॥ तर्हिज्व
लिष्यामीत्यादिकिमर्थमित्याशंक्याह॥ कस्येति॥ वदिष्यामीत्यादावुक्तंव्याख्यानमिहापिद्रष्टव्यमित्याह॥ अध्यात्मवदिति॥ यथादैवतंस्वंस्वंदेवता

इत्येवमुक्तमध्यात्मंप्राणात्मदर्शनमित्युक्तोपसंहारोऽधिदैवतप्रदर्शनार्थः॥ २१॥ अथानंतरमधिदैवतंदेवताविषयंदर्शनमुच्यतेक
स्यदेवताविशेषस्यव्रतधारणंश्रेयइतिमीमांस्यते अध्यात्मवत्सर्वेज्वलिष्याम्येवाहमित्यग्निर्दध्रेतप्स्याम्यहमित्यादित्योभास्याम्य
हमितिचंद्रमाएवमन्यादेवतायथादैवतंसदृष्टांतोऽध्यात्मंवागादीनामेषांप्राणानांमध्येमध्यमःप्राणोमृत्युनाऽनाप्तःस्वकर्मणोनप्रच्या

यउहैवंविदास्पर्द्धतेनुशुष्यत्यनुशुष्यहैवांततोम्रियतइत्यध्यात्मं॥ २१॥ अथाधिदैवतंज्वलिष्याम्येवाहमित्यग्निर्दध्रेत
प्स्याम्यहमित्यादित्योभास्याम्यहमितिचंद्रमाएवमन्यादेवतायथादैवतꣳसयथैषांप्राणानांमध्यमःप्राणएवमेतासां
देवतानांवायुर्म्लोचंतिह्यन्यादेवतानवायुःसैषाऽनस्तमितादेवतायद्वायुः॥ २२॥ वितःइतिस्वेनप्राणव्रतेनाभग्नव्रतोयथा

एवमेतासामग्न्यादीनांदेवतानांवायुरपिम्लोचंत्यस्तंयंतिस्वकर्मभ्यउपरमंतेयथाध्यात्मंवागादयोअन्यादेवताअग्न्याद्यानवायुर
स्तंयातियथामध्यमःप्राणोअतःसैषाऽनस्तमितादेवतायद्वायुर्योयंवायुरेवमध्यात्ममधिदैवंचमीमांसित्वानिर्धारितंवायात्मनोव्रत
मभग्नमिति॥ २२॥

व्यापारमनतिक्रम्यान्यादेवताविद्युदाद्यादध्रिरेव्रतमित्यर्थः॥ सयथेत्यादिव्याचष्टे॥ अध्यात्ममिति॥ वायुरपिमृत्युनाऽ
नासःस्वकर्मणोनप्रच्यावितइतिस्वेनवायुव्रतेनाभग्नव्रतइतिशेषः॥ तदेवसाधयति॥ म्लोचंतीति॥ ब्राह्मणोक्तमर्थमुपसंहरति॥ एवमि

ब्राह्मणार्थदार्ढ्यार्थं मंत्रमवतार्य व्याकरोति॥ अथेत्यादिना॥ सूर्योधिदैवमुदयकाले वायोरुदृच्छति तत्र चापरसंध्यासमये स्तं गच्छति स एवा
ध्यात्मं प्रबोधसमये चक्षुरात्मना प्राणादुदेति पुरुषस्य स्वापसमये च तस्मिन्नेवास्तं गच्छतीति यतश्चेत्यादौ विभागः॥ श्लोकस्योत्तरार्धं प्राणा
दित्यादि ब्राह्मणव्यवहितं श्लोके पूर्णताज्ञापनार्थं प्रथमं व्याचष्टे॥ तं देवा इति॥ धारणस्य प्रकृतत्वात्सामान्येन च विशेषं लक्षयति॥ एतवंतद

अथैतस्यैवार्थस्य प्रकाशक एष श्लोको मंत्रो भवति यतश्च यस्माद्वायोरुदेत्युदृच्छति सूर्योध्यात्मं च चक्षुरात्मना प्राणादस्तं च यत्र
वायौ प्राणे च गच्छति अपरसंध्यासमये स्वापसमये च पुरुषस्य तं देवास्त धर्मं देवाश्चक्रिरे एतवंतो वागादयोग्न्यादयश्च प्राणव्रतं वा
युव्रतं च पुरा विचार्य स एवाद्येदानीं श्वोपि भविष्यत्यपि कालेऽनुवर्त्स्यतेऽनुवर्तिष्यते च देवैरित्यभिप्रायः॥ तत्रेमं संक्षेपतो व्याच

अथैष श्लोको भवति यतश्चोदेति सूर्योस्तं यत्र च गच्छतीति प्राणाद्वा एष उदेति प्राणेस्तमेति तं देवाश्चक्रिरे धर्मं स एवा
द्य स उ श्व इति यद्वा एतेमुर्ह्यध्रियंत॥ ब्राह्मणं प्राणाद्वा एष सूर्य उदेति प्राणेऽस्तमेति तं देवाश्चक्रिरे धर्मं स एवाद्य स उ श्व इ
त्यस्य कोर्थ इत्युच्यते यद्वै एते व्रतममुर्हि अमुष्मिन्काले वागादयोग्न्यादयश्च प्राणव्रतं वायुव्रतं चाध्रियंत तदेवाद्यापि कुर्वंत्यनुवर्त्स्य
तेऽनुवर्त्तिष्यंते च व्रतं तयोरभग्नमेव॥ यत्तु वागादिव्रतं अग्न्यादिव्रतं च तद्भग्नमेव तेषामस्तमनकाले स्वापकाले च वायौ प्राणे च नि
म्लुक्तिदर्शनादथे
ति स एवेति धर्मपरामर्शः तत्रेति सप्तमी संपूर्णमंत्रमधिकरोति॥ इमं मंत्रमिति पूर्वार्धोक्तिः॥ उत्तरार्धस्य ब्राह्मणमाकां
क्षापूर्वकमुत्थाप्य व्याचष्टे॥ तमित्यादिना॥ तैरभग्नं देवैरभग्नत्वेन मीमांसितं तेनानुगच्छंतीत्यर्थः॥ विशेषणस्यार्थवत्त्वं साधयति॥ यत्विति॥ उक्तं हेतु

बृ॰र॰ १३०

यथाग्नेरित्युपमार्थोयशब्दःअनुगच्छतिशाम्यतीत्येतत्॥वायुमनुतदधीनएवतस्मिन्कालेउद्वात्यस्तमेति॥उदवासीदस्तंगतइत्यर्थः॥इतिशब्दोग्रि
रहस्यविषयवाक्यसमाप्त्यर्थः॥अध्यात्मंप्राणव्रतमधिदैवंचवायुव्रतमित्येकमेवव्रतंधार्यमितिमंत्रब्राह्मणाभ्यांप्रतिपाद्यतस्मादितिव्याचष्टे॥य
स्मादिति॥नहिवागाद्योग्न्याद्योवापरिस्पंदविरहिणःस्यातुमर्हंतीतितेनप्राणादिव्रतंतैरनुवर्त्यतएवेत्यर्थः॥एकमेवेतिनियमेप्राणव्यापारस्याभग्न

तदन्यत्रोक्तंयदावैपुरुषःस्वपितिप्राणंतर्हिवागप्येतिप्राणंमनःप्राणंचक्षुःप्राणंश्रोत्रंयदाप्रबुध्यतेप्राणादेवाधिपुनर्जायंतइत्यध्या
त्ममथाधिदैवतंयदावाअग्निरनुगच्छतिवायुंतर्ह्यनूद्वातितस्मादेनमुदवासीदित्याहुर्वायुंह्यनूद्वातियदादित्योस्तमेतिवायुंतर्हिप्रवि
शतिवायुंचंद्रमावायौदिशःप्रतिष्ठितावायोरेवाधिपुनर्जायंतइतियस्मादेतदेवव्रतंवागादिष्वग्न्यादिषुचानुगतंयदेतद्वायोश्चप्राणस्य

तदेवाप्यद्यकुर्वीततस्मादेकमेवव्रतंचरेत्प्राण्याच्चैवापान्याच्च

चपरिस्पंदात्मकत्वंसर्वैर्देवैरनुवर्त्यमानंव्रतंतस्मादन्योप्येकमेवव्रतंचरेत्किंतत्प्राण्यात्प्राणनव्यापारंकुर्यादपान्यादपाननव्यापारंच
नहिप्राणव्यापारस्यप्राणनापाननलक्षणस्यउपरमोस्तितस्मात्तदेवैकंव्रतंचरेत्॥हित्वेंद्रियांतरव्यापारंनेन्मामापाप्मामृत्युःश्रमरूपी
आप्नुवन्नाप्नुयान्नेदर्थःपरिभयेयद्यहमस्माद्व्रतात्प्रच्युतःस्यांग्रस्तएवाहंमृत्युनेत्येवंत्रस्तोधारयेत्प्राणव्रतमित्यभिप्रायोयदिकदाचिद्
च्चरेत्त्वारभेतप्राणव्रतंसमापिपयिषेत्समापयितुमिच्छे त्वंहेतुमाह॥नहीति॥तदनुपरमेफलितमाह॥तस्मादिति॥ननुप्राणनाद्यभावेजीवनासंभ
वात्तस्यार्थिकत्वात्तदनुष्ठानमविधेयमित्याशंक्यैवकारलभ्यंनियमंदर्शयति॥हित्वेतिनेत्यादिवाक्यस्याक्षरार्थमुक्त्वातात्पर्यार्थमाह॥यद्यहमिति ॥

भा॰

एम॰ १३०

प्राणव्रतस्य सकृदनुष्ठानमाशंक्य सर्वेंद्रियव्यापारनिवृत्तिरूपं संन्यासमामरणमनुवर्तयेदित्याह॥ यदीति॥ विपक्षे दोषमाह॥ यदि हीति॥ प्राणादिप रिभवपरिहारार्थं नियमं निगमयति॥ तस्मादिति॥ विद्याफलं वक्तुं भूमिकां करोति॥ तेनेति॥ व्रतमेव विशिनष्टि॥ प्राणेति॥ प्रतिपत्तिमेव प्रकटयति ॥ सर्वभूतेष्विति॥ संप्रति विद्याफलं कथयति एवमिति॥ कथमेकस्मिन्नेव विज्ञाने फलविकल्पः स्यादित्याशंक्य विज्ञानप्रकर्षापेक्षं सायुज्यं तन्निकर्षा

थ यदि ह्यस्मा व्रतादुपरमेत्प्राणः परिभूतः स्यादेवाश्च तस्मात्समापयेद्व्रतं न उ तेनानेन व्रतेन प्राणात्मप्रतिपत्त्या सर्वभूतेषु वागा दयोऽग्न्यादयश्च मदात्मका एवाहं प्राणात्मा सर्वपरिस्पंदकृदेवं तेनानेन व्रतधारणेन तस्या एव प्राणदेवतायाः सायुज्यं सयुग्भाव मेकात्मत्वं सलोकतां समानलोकतां चैकस्थानत्वं विज्ञानमांद्यापेक्षमेतज्जयति प्राप्नोतीति॥ २३॥ हरिः ॐ तत्सदिति श्रीमद्बृहदारण्य

नेन्मा पाप्मा मृत्युराप्नुवदिति यद्यु चरेत्समापिपयिषेत्तेनो एतस्यै देवतायै सायुज्यꣳ सलोकतां जयति॥ २३॥ पंचमं ब्राह्म णं॥ ५॥ के शांकरीयभाष्ये तृतीये प्रपाठके पंचमं ब्राह्मणं॥ ५॥ यदेतदविद्याविषयत्वेन प्रस्तुतं साध्यसाधनलक्षणं व्याकृतं जग त्प्राणात्मप्राप्त्यंतोत्कर्षवदपि फलं यच्चैतस्य व्याकरणात्प्रागवस्थाऽव्याकृतशब्दवाच्या वृक्षबीजवत्सर्वमेतत्त्रयं किं तत्त्रयं इत्युच्य ते नाम रूपं कर्म चेत्यनात्मैव नात्मा पेक्षं सालोक्यमित्याह॥ विज्ञानेति॥ इति श्रीमद्बृहदारण्यके पंचमं ब्राह्मणं॥ ५॥ प्रपंचितस्याविद्याकार्यस्य संक्षेपेणोपसंहारार्थं ब्राह्मणांतरमवतारयति॥ यदेतदिति॥ फलमपि ज्ञानकर्मणोरुक्तविशेषणवद्यदेतत्प्रस्तुतमिति संबंधः॥ अव्याकृतप्रक्रियायामु क्तं स्मारयति॥ यच्चेति॥ व्याकृताव्याकृतस्य जगतः संगृहीतं रूपमाह॥ सर्वमिति॥ वाङ्मनःप्राणाख्यं त्रयमित्याशंक्य प्रत्याह॥ किं तदित्यादिना॥ किमर्थं पु

133

वं२

आत्मशब्दार्थमाह॥यस्मात्स्मादिति॥अनात्मत्वेनजगतोहेयत्वंतच्छब्देनपरामृश्यते॥वैराग्यमपिकिमर्थमित्याशंक्याह॥नहीति॥अविरक्तोपिकृतूहलतयातत्राधिकारीस्यादित्याशंक्याह वाह्येति॥अनात्मप्रमाणमप्यात्मानंप्रत्यापयिष्यत्यात्मनःसर्वात्मत्वात्कुतोविरोधइत्याशंक्याह॥तथेति॥कथंत

यस्मात्सात्परोसाक्षात्तस्मादस्माद्विरज्येतेत्येवमर्थस्त्रयंवाइत्याद्यारंभोनह्यस्मादनात्मनोऽव्यावृत्तचित्तस्यात्मानमेवलोकमहंब्रह्मास्मीत्युपासितुंबुद्धिःप्रवर्त्ततेवाह्यप्रत्यगात्मप्रवृत्त्योर्विरोधात्तथाकाठके॥परांचिखानिव्यतृणत्स्वयंभूस्तस्मात्पराङ्पश्यतिनांतरात्मन्॥कश्चिद्धीरःप्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्नित्यादिकथंपुनरस्याव्याकृतात्माकृतस्यक्रियाकारकफलात्मनःसंसारस्यनामरूपकर्मात्मकते

त्रयंवाइदंनामरूपंकर्मतेषांनाम्नांवागित्येतदेषामुक्थमतोहिसर्वाणिनामान्युत्तिष्ठंत्येतदेषां५सामे

वनपुनरात्मत्वमित्येतत्संभावयितुंशक्यतइत्यत्रोच्यते॥तेषांनाम्नांयथोपन्यस्तानांवागितिशब्दसामान्यमुच्यतेयःकश्चशब्दोवागेवसेत्युक्तत्वाद्वागित्येतस्यशब्दस्ययोर्थःशब्दसामान्यमात्रमेतदेषांनामविशेषाणामुक्थंकारणमुपादानंसैंधवलवणकणानामिवसैंधवाचलस्तदाहातोह्यस्मान्नामसामान्यात्सर्वाणिनामानियज्ञदत्तोदेवदत्तइत्येवमादिप्रविभागान्युत्तिष्ठंतिउत्पद्यंतेप्रविभज्यंतेलवणाचलादिवलवणकणाःकार्यंच

हिप्रत्यगात्मधीस्तत्राह॥कश्चिदिति॥उपसंहारस्येत्थंसफलत्वेपिसर्वस्यजगतोनामादिमात्रत्वंप्रमाणाभावादयुक्तमितिशंकते॥कथमिति॥अनुमानैःसंभावनांदर्शयति॥अत्रेति॥तत्रतत्कार्यत्वहेतुकमनुमानमाह॥तेषामिति॥वागित्येतदुक्थमितिसंबंधः॥इंद्रियव्यावृत्त्यर्थंवाक्पदार्थमाह॥शब्देतिसंगृहीतमर्थंविवृणोति॥यःकश्चेत्यादिना॥उक्थत्वमुपपादयितुमुत्तरवाक्यमित्याह॥तदाहेति॥कार्यकारणभावेपिकिमायातमतआह॥कार्यंचे

=शब्दविशेषाःशब्दसामान्याद्भिन्नानभवंतितत्कार्यत्वाद्घटादिवत्=२

सर्वेनामविशेषास्तन्मात्रात्तत्वतोनभिद्यंतेतत्कार्यत्वाद्यद्यत्कार्यंतत्ततस्तत्वतोनभिद्यतेयथामृदोघटइत्यर्थः॥सर्वेनामविशेषास्तत्सामान्येकल्पिताःप्रत्येकं
तदनुविद्धत्वाद्रज्जिदंशानुविद्धसर्पादिवदित्यनुमानांतरमाह॥तथेति॥कार्याणांकारणेंतर्भाववदितियावत्॥उक्तमेवप्रश्नपूर्वकंप्रपंचयति॥कथ
मित्यादिना॥साम्यंसाधयति॥एतद्धीति॥इतश्चनामविशेषानाममात्रेंतर्भवंतीत्याह॥किंचेति॥नामविशेषाणांनाममात्रादात्मलाभात्तस्मादविशेषात्

कारणेनाव्यतिरिक्तंतथाविशेषाणांचसामान्येंतर्भावात्कथंसामान्यविशेषभावइतिएतच्छब्दसामान्यमेषांनामविशेषाणांसा
मसमत्वात्सामसामान्यमित्यर्थः॥एतद्धियस्मात्सर्वैर्नामभिरात्मविशेषैःसमंकिंच॥आत्मलाभाविशेषाच्चनामविशेषाणांयस्यच
यस्मात्परस्मादात्मलाभोभवतिसतेनाप्रविभक्तोदृष्टोयथाघटादीनांमृदाकथंनामविशेषाणांआत्मलाभोवाचइत्युच्यतेयतएतदेषां

तद्धिसर्वैर्नामभिःसममेतदेषांब्रह्मैतद्धिसर्वाणिनामानिबिभर्ति॥१॥

वाक्छब्दवाच्यंवस्तुब्रह्मात्मातततोह्यात्मलाभोनाम्नांशब्दव्यतिरिक्तस्वरूपानुपपत्तेस्तत्प्रतिपादयत्येतच्छब्दसामान्यंहियस्माच्छब्दवि
शेषान्सर्वाणिनामानिबिभर्तिधारयतिस्वरूपप्रदानेनएवंकार्यकारणत्वोपपत्तेःसामान्यविशेषोपपत्तेरात्मप्रदानोपपत्तेश्चनामविशे
षाणांशब्दमात्रतासिद्धा नैवांतर्भावइत्यस्यार्थः॥सर्वेनामविशेषास्तत्सामान्यात्पृथग्वस्तुतःसंतितेनात्मवत्त्वाद्येनात्मवंतस्तेततोन्येवस्तु
तोनसंतियथामृदात्मवंतोघटादयोवस्तुतस्ततोन्येनसंतीत्युक्तेनुमानेव्याप्तिंसाधयति॥यस्यचेति॥हेतुसमर्थनार्थमुत्तरवाक्यमुत्थापयति॥कथमित्या
दिना॥अतःशब्दमात्रात्तद्विशेषाणामात्मलाभोभवतीतिशेषः॥तत्रैवयुक्तिमाह॥ततोहीतितत्रैववाक्यमवतार्यव्याचष्टे॥तदित्यादिना॥तस्मात्तन्मात्रात्तद्वि

प्रथमकंडिकयासिद्धमर्थमुपसंहरति॥एवमिति॥उपपत्तित्रयमुत्तरवाक्यद्वयेपितुल्यमित्यादिशति॥एवमुत्तरयोरिति॥१॥तत्रव्याख्यानसापेक्षाणि पदानिव्याकरोति॥अथेत्यादिना॥नामव्याख्यानानंतर्यमथशब्दार्थः॥चक्षुरुक्थमितिसंबंधः॥चक्षुरितिचक्षुःशब्दाभिधेयंचक्षुर्विषयसामान्यमभिधी यतेतच्चरूपसामान्यंतदपिप्रकाश्यमात्रमितियोजना॥२॥रूपप्रकरणानंतर्यमथेत्युच्यते॥क्रियाविशेषाणांक्रियामात्रेंतर्भावंप्रश्नद्वारास्फोरयति॥

एवमुत्तरयोरपिसर्वंयोज्यंयथोक्तं॥१॥अथेदानींरूपाणांसितासितप्रभृतीनांचक्षुरितिचक्षुर्विषयसामान्यंचक्षुःशब्दाभिधेयंरूपसामान्य मात्रंप्रकाश्यमात्रमभिधीयते॥अतोहिसर्वाणिरूपाण्युत्तिष्ठंतिएतदेषांसामेतद्धिसर्वैरूपैःसममेतदेषांब्रह्मैतद्धिसर्वाणिरूपाणिबि भर्ति॥२॥अथेदानींसर्वकर्मविशेषाणांमननदर्शनात्मकानांचलनात्मकानांचक्रियासामान्यमात्रेंतर्भावउच्यतेकथंसर्वेषांकर्मविशेषा

अथरूपाणांचक्षुरित्येतदेषामुक्थमतोहिसर्वाणिरूपाण्युत्तिष्ठंत्येतदेषाꣳसामैतद्धिसर्वैरूपैःसममेतदेषांब्रह्मैतद्धि सर्वाणिरूपाणिबिभर्त्ति॥२॥अथकर्मणामात्मेत्येतदेषामुक्थमतोहिसर्वाणिकर्माण्युत्तिष्ठंत्येतदेषाꣳसामैतद्धिसर्वैःकर्म भिःसममेतदेषांब्रह्मैतद्धिसर्वाणिकर्माणिबिभर्तितदेतत्त्रयꣳ

णामात्माशरीरसामान्यंआत्मात्मनःकर्मात्मेत्युच्यतेआत्मनाहिश रीरेणकर्मकरोतीत्युक्तंशरीरेचसर्वंकर्माभिव्यज्यतेऽतस्तात्स्थ्यात्तच्छब्दंकर्मसामान्यमात्रंसर्वेषामेषामुक्थमित्यादिपूर्ववत्तदेतद्यथोक्तंनाम रूपंकर्मत्रयं

कथमित्यादिना॥आत्मशब्देनात्रशरीरनिर्वर्त्यकर्मग्रहणेपुरुषविधब्राह्मणशेषमनुकूलयति॥आत्मनाहीति॥तत्रैवोपपत्तिमाह॥शरी रेचेति॥तथापिकथमात्मशब्दःशरीरनिर्वर्त्यकर्मब्रूयादित्याशंक्यलक्षणयेत्याह॥अतइति॥संक्षेपस्यापिसंक्षेपांतरमाह॥तदेतदिति॥तदेतत्त्रयंत्रिदंडविष्टंभ

कथंसंहतत्वमतआह॥इतरेतराश्रयमिति॥रूपविषयमाश्रित्यनामकर्मणीसिध्यतःस्वातंत्र्येणनिर्विषययोस्तयोःसिध्यदर्शनान्नामकर्मणीचाश्रित्य रूपंसिध्यतिनहितेहित्वाकिंचिदुपलभ्यतइत्यर्थः॥वाचकेनवाच्यस्यतेनेतरस्यताभ्यांचक्रियायास्तयातयोरपेक्षादर्शनादन्योन्यमभिव्यंजकत्वमा ह॥इतरेतरेति॥सतिनाम्निरूपसंहारदर्शनाद्रूपेचसतिनामसंहारदृष्टेःसतोश्चतयोःकर्मणस्तस्मिंश्चसतितयोरुपसंहारोपलंभादितरेतरप्रलय मित्याह इतरेतरप्रलयमिति॥त्रयाणामेकत्वंविरुद्धमितिशंकित्वापरिहरति॥केनेत्यादिना॥कथंकार्यकरणसंघातात्मनात्रयाणामेकत्वंतत्राह॥त

इतरेतराश्रयमितरेतराभिव्यक्तिकारणमितरेतर प्रलयंसंहतंत्रिदंडविष्टंभवत्सदेकंकेनात्मनैकत्वमित्युच्यतेअयमात्मापिंडःकार्य करणात्मसंघातस्तथाभ्यंतरेव्याख्यातएतन्मयोवाअयमात्मेत्यादिनाएतावद्वाइदंसर्वंव्याकृतमव्याकृतंचयदुतनामरूपकर्मेतिआत्मा

सदेकमयमात्मात्मोएकःसन्नेतत्त्रयंतदेतदमृतंसत्येनच्छन्नं

उएकोऽयंकार्यकरणसंघातःसन्नध्यात्माधिभूताधिदैवभावेनव्यवस्थितमेतदेवत्रयंनामरूपंकर्मेतितदेतद्वक्ष्यमाणममृतंसत्येनच्छन्न मित्येतस्यवाक्यस्यार्थमाह॥प्राणोवाअमृतंकरणात्मकोंतरुपष्टंभनकर्माआत्मभूतोऽमृतोऽविनाशीनाम थेति॥नामरूपकर्मणांकार्यकर णसंघातमात्रत्वेपिततोव्यतिरिक्तंसंघातादन्यत्स्यादित्याशंक्याह॥एतावदिति॥नामादित्रयस्यसंघातमात्रत्वेकथंव्यवहारासांकर्यमित्याशंक्याह ॥आत्मेति॥संघातोयमात्मशब्दितःस्वयमेकोपिसन्नध्यात्मादिभेदेनस्थितंत्रयमेवभवतीतिव्यवहारासांकर्यमित्यर्थः॥एकस्मिन्नपिसंघातेकार्यक रणरूपेणावांतरविभागमाह॥तदेतदिति॥आत्मभूतस्तस्योपाधित्वेनस्थितइतियावत्॥अविनाशीस्थूलदेहेगच्छत्स्वपियावन्मोक्षंनगच्छतीत्यर्थः॥स

BS

करणयाथात्म्यं कथयति॥ क्रियात्मकस्त्विति॥ पंचीकृतपंचमहाभूतात्मकं तत्कार्यं सर्वं सच्चत्यच्चेति व्युत्पत्तेः सत्यं वैराजं शरीरं कार्यं॥ अपंची
कृतपंचमहाभूततत्कार्यात्मककरणरूपसप्तदशकलिंगस्य सूत्रात्मस्यायतनं तस्यैवाच्छादकं तत्त्वस्त्वनात्मापि स्थूलदेहकृत्स्नत्वात् तद्दर्शनं ते
नापि कृत्स्नं प्रत्यग्वस्तु सुतरामिति तज्ज्ञानेऽवहितैर्भाव्यमिति भावः॥ इदानीमविद्याकार्यप्रपंचमुपसंहरति॥ एतदिति॥ अविद्याविषयविवरण

रूपे सत्यं कार्यात्मके शरीरावस्थे क्रियात्मकस्तु प्राणस्तयोरुपष्टंभको बाह्याभ्यां शरीरात्मकाभ्यामुपजनापायधर्मिभ्यां मर्त्या
भ्यां छन्नोऽप्रकाशीकृतः एतदेव संसारसतत्वमविद्याविषयं प्रदर्शितमत ऊर्ध्वं विद्याविषय आत्माधिगंतव्य इति चतुर्थ आर

प्राणो वा अमृतं नामरूपे सत्यं ताभ्यामयं प्राणश्छन्नः
॥३॥८०॥ षष्ठं ब्राह्मणं॥६॥ इति तृतीयोध्यायः॥ १ ॥

भ्यते॥३॥ ॐ॥ हरिः ॐ तत्सदिति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीगोविंदभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवत्पूज्यपा
दकृतौ बृहदारण्यकभाष्ये तृतीयोध्यायः समाप्तः ॥ ३ ॥

स्यवक्ष्यमाणोपयोगमुपसंहरति अत इति॥ प्रपंचिते सत्यविद्याविषये ततो
विरक्तस्यात्मानं विविदुषोस्तज्ज्ञापनार्थं चतुर्थप्रमुखः संदर्भो भविष्यति तस्मादविद्याविषयविवरणमुपयोगीति भावः॥ ॐ॥ हरिः ओमत
त्सदिति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानंदपूज्यपादशिष्येण श्रीमद्भगवदानंदज्ञानेन कृतायां श्रीमद्बृहदारण्यकभाष्यतास
र्यटीकायां तृतीयोध्यायः समाप्तः॥ मूल २५० भाष्य २२०० टीका ३१०० ॥

श्रीगणेशायनमः॥तृतीयेध्यायेसूत्रितविद्याविद्ययोरविद्याप्रपंचितासंप्रतिविद्यांप्रपंचयितुंचतुर्थमध्यायमारभमाणोवृत्तंकीर्त्तयत्यात्मेति॥
किमित्यर्थांतरेषुसत्स्वात्मतत्वमेवानुसंधातव्यंतत्राह॥तदन्वेषणेति॥तस्यैवान्वेष्टव्यत्वेपरमप्रेमास्पदत्वेनपरमानंदत्वंहेत्वंतरमाह॥तदेवेति॥
आत्मतत्वज्ञानस्यसर्वाप्तिफलत्वाच्चतदेवान्वेष्टव्यमित्याहात्मानमिति॥उक्तयापरिपाट्यासिद्धमर्थंसंगृह्णात्यात्मतत्वमिति॥उक्तमर्थांतरमनुवदति
॥यस्त्विति॥सोऽविद्याविषयइतिसंबंधः॥कथंभेददृष्टिविषयस्याविद्याविषयत्वंतत्राहान्योसाविति॥योभेददृष्टिपरःसनवेदेत्यविद्यातद्दृष्टिमूलत्वसू

श्रीगणेशायनमः॥आत्मेत्येवोपासीत॥तदन्वेषणेचसर्वमन्विष्टंस्यात॥तदेवचात्मतत्वंसर्वस्मात्प्रेयस्त्वादन्वेष्टव्यमात्मानमेवावेदहं
ब्रह्मास्मीत्यात्मतत्वमेकंविद्याविषयः॥यस्तुभेददृष्टिविषयःसोऽन्योसावन्योहमस्मीतिनसवेदेत्यविद्याविषयः॥एकधैवानुद्रष्टव्यम
त्योःसमृत्युमाप्नोतियइहनानेवपश्यतीत्येवमादिभिःप्रविभक्तोविद्याऽविद्याविषयोसर्वोपनिषत्सु॥तत्रचाविद्याविषयःसर्वएवसाध्य
साधनादिभेदविशेषविनियोगेनव्याख्यातआतृतीयाध्यायपरिसमाप्तेः॥सचव्याख्यातोऽविद्याविषयःसर्वएवद्विःप्रकारोंतःप्राणउपष्टंभ
कोगृहस्येवस्तंभादिलक्षणःप्रकाशकोऽमृतो

त्रितातेनतद्विषयोभेददृष्टिविषयइत्यर्थः॥कथंयथोक्तौविद्याविद्याविषयावसंकीर्णावनूसात्रश
क्यतेतत्राहैकधेति॥सशान्तब्राह्मणेवृत्तमर्थंकथयति॥तत्रचेति॥विद्याविद्याविषययोरितियावत्॥आदिपदंसाध्यसाधनावांतरभेदसंग्रहार्थं
॥यथोक्तोभेदस्यवविशेषः॥तस्मिन्विनियोगोव्यवस्थापनंतेनेत्यर्थः॥उपसंहारब्राह्मणांतेवृत्तमनुभाषते॥सचेति॥अथवाउक्तौविद्याविद्याविष
योकथमसंकीर्णौमंतव्यावित्याशंक्याहैकधेति॥तत्रोत्तरग्रंथस्यविषयपरिशेषार्थंपुरुषविधब्राह्मणशेषमारभ्योक्तंदर्शयति॥तत्रचेति॥तर्हिस
माप्तत्वादविद्याविषयस्यकथमविदुषोगार्ग्यस्यप्रवृत्तिरित्याशंक्यतदर्थमवांतरविभागमनुवदति॥सचेति॥तावेवप्रकारौदर्शयन्नादौसूक्ष्मशरीरमुप

तस्यबाह्यकरणद्वारास्थूलेषुविषयेषुप्रकाशकत्वममृतत्वंचचक्षुरादितंद्वितीयंप्रकारमाचक्षाणःस्थूलंशरीरंदर्शयति॥बाह्यश्चेति॥तस्यकथापिविद्यासूक्ष्मदेहंप्रत्यप्रकाशकत्वादप्रकाशकत्वं॥आगमापायित्वेनावहेयत्वंसूचयत्युपजनेति॥यथागृहस्यतृणादिःबहिरंगंतथासूक्ष्मस्यदेहस्यस्थूलदेहस्तथापितृणादिविनागृहस्यव्यवहारायोग्यत्ववत्तस्यापिस्थूलदेहंविनानतद्योग्यत्वमितिमत्वाह॥तृणेति॥तस्यपूर्वब्राह्मणांतेनामरूपेसत्यमित्यप्रस्तुतत्वंअस्तीत्याह॥सत्येति॥सर्वथाबाधवैधुर्यंसत्यत्वमितिशंकांनिरसितुंविशिनष्टिमर्त्यंइति॥तस्यकार्यंदर्शयति॥तेनेति॥रत्नमूर्द्धाजातशत्रुब्राह्मणमवतारयतिसएवेति॥आदित्यचंद्रादयोबाह्याधारभेदाः॥अनेकधात्वमतिष्ठामूर्द्धेत्यादिचक्ष्यमाणगुणवशात्दृष्टव्यं॥

बाह्यश्चकार्यलक्षणोऽप्रकाशकःउपजनापायधर्मकस्तृणकुशमृत्तिकासमोगृहस्येवसत्यशब्दवाच्योमर्त्यस्तेनामृतशब्दवाच्यःप्राणश्छन्नइतिचोपसंहृतं॥सएवचप्राणोबाह्याधारभेदेष्वनेकधाविस्तृतःप्राणएकोदेवइत्युच्यते॥तस्यैवबाह्यःपिंडएकःसाधारणोविराड्वैश्वानरआत्मापुरुषविधःप्रजापतिकोहिरण्यगर्भइत्यादिभिःपिंडप्रधानशब्दैराख्यायते॥सूर्यादिप्रविभक्तकरणः॥एकंचानेकंचब्रह्मैतावदेवनातःपरमस्ति॥प्रत्येकंचशरीरभेदेषुपरिसमाप्तंचेतनावत्कर्तृभोक्तृचेत्यविद्याविषयमेवात्मत्वेनोपगतोगार्ग्योब्राह्मणोवक्तोपस्थाप्यते॥

कथंतर्हितस्यैकत्वंतत्राहप्राणइति॥प्राणस्यनानात्वमेकत्वंचोक्तंतत्रैकत्वंविवृणोति॥तस्यैवेति॥प्राणस्यैवस्वभावभूतोनात्मलक्षणःपिंडःसमष्टिरूपोहिरण्यगर्भादिशब्देरुपाधिविषयैस्तत्रतत्रश्रुतिस्मृत्योरुच्यते॥सचाग्निर्मूर्द्धाचक्षुषीचंद्रसूर्यावित्यादिश्रुतेःसूर्यादिभिःप्रविभक्तैःकरणैरुपेतोभवतीत्यर्थः॥यद्ब्रह्मसमस्तंव्यस्तंचतदिदंहिरण्यगर्भमात्रमेवनतस्मादधिकमस्तीतिहिरण्यगर्भस्तोत्येकंचेति॥एकत्वंविशदीकृत्यप्राणस्यनानात्वंविशदयतिप्रत्येकंचेति॥गोत्वादिसामान्यतुल्यत्वंआवर्त्तयतिचेतनावदिति॥केवलभोक्तृत्वपसंवारयतिकर्त्रिति॥च

तस्मादमुख्यात् ब्रह्मणो विपरीतं मुख्यं ब्रह्म तस्मिन्नात्मदृष्टी राजा श्रोता सिद्धांतवादीत्यर्थः॥ किमिति वक्तृश्रोतृरूपाख्यायिका प्रणीयते तत्राहैवं हीति॥ एवं शब्दार्थमेव स्फुटयति पूर्वपक्षेति॥ अतो भवितव्यमाख्यायिकयेति शेषः॥ आख्यायिकानंगीकारे दोषमाह विपर्यये हीति॥ यथा तर्कशास्त्रे ण समर्प्यमाणोऽर्थो ज्ञातुं न शक्यते औत्सेसिकतर्काणां निरंकुशत्वात्तथा केवलमर्थानुगम्यते प्रश्नप्रतिवचनभावरहितैर्वाक्यैस्तैः समर्प्यमाणोऽपि दु र्विज्ञेयोऽर्थः स्यादतो ह्याख्यायिकानानुश्रीयतेऽतः सा सुखप्रतिपत्त्यर्थमनुसर्तव्येत्यर्थः॥ कुतो दुर्विज्ञेयत्वं तत्राहात्यंतेति॥ यथोक्तस्य वस्तुनो दुर्विज्ञेयत्वे श्रु

तद्विपरीतात्मदृग्राजा तद्यन्त्रुः श्रोता॥ एवं हि यतः पूर्वपक्षसिद्धांताख्यायिकारूपेण समर्प्यमाणोऽर्थः श्रोतुश्चित्तस्य वशमेति विपर्यये हि तर्कशास्त्रवत् केवलार्थानुगमवाक्यैः समर्प्यमाणो दुर्विज्ञेयः स्यात्॥ अत्यंतसूक्ष्मत्वाद्वस्तुनः तथा च काठके॥ श्रवणायापि बहुभिर्यो न लभ्य इत्यादिवाक्यैः सुसंस्कृतदेवबुद्धिगम्यत्वं सामान्यमात्रबुध्यगम्यत्वं च सप्रपंचं प्रदर्शितं॥ आचार्यवानाचार्याद्धैव विद्येति च छांदोग्ये उपदेक्ष्यंति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिन इति च गीतासु इहापि च शाकल्ययाज्ञवल्क्यसंवादेनातिगह्वरत्वं महता संरंभेण ब्रह्मणो वक्ष्यति॥ तस्मात् श्लिष्ट एवाख्यायिकारूपेण पूर्वपक्षसिद्धांतरूपमापाद्य वस्तुसमर्पणार्थ आरंभः॥ आचारविध्युपदेशार्थश्च॥ एवमाचारवतो वक्तृश्रो त्रोराख्यायिकानुगतोऽर्थोऽवगम्यते॥

तिस्रुतिसंवादं दर्शयति॥ तथा चेति॥ सुसंस्कृता परिशुद्धा देवबुद्धिः सात्त्विकी बुद्धिः॥ सामान्यमात्रबुद्धिस्तामसी राजसी च॥ अतिगह्वरत्वमत्यंतगंभीरत्वं॥ संरंभस्तात्पर्यं ब्रह्मणो दुर्विज्ञेयत्वे फलितमाह तस्मादिति॥ आख्यायिकायाः सुखप्रतिपत्त्यर्थत्वमुक्त्वार्थांतरमाहाचारेति॥ उत्तमाद्धमेन प्रणिपातोपसदनादिद्वारा विद्या ग्राह्याऽधमात्तूत्तमेन तद्व्यतिरेकेण शुश्रूषादिमात्रेण सा लभ्येत्याचारप्रकारज्ञापनार्थश्चाय मारंभ इत्यर्थः॥ आख्यायिकायाः यथोक्तेऽर्थेऽन्वितत्वं कथयत्येवमिति॥ वक्तृश्रोत्रोर्मध्ये यथोक्ताचारवता श्रोत्रा विद्या लब्धव्या वक्त्रा च तादृशेन सोपदेष्टव्येत्येषो

तस्मादाचारविशेषं दर्शयितुमेषाख्यायिकायुक्तेत्यर्थः॥ आगमानुसारिगुरुसंप्रदायादेव तत्त्वधीर्लभ्यते॥ यस्तु केवलस्तर्कस्तदृशा नैषा बुद्धिः सि
द्ध्यति॥ तथा च केवलतर्कप्रयुक्तात्तत्त्वबुद्धिरिति संभावनानिषेधार्थाख्यायिकेति प्रसंगांतरमाह केवलेति॥ केवलेन तर्केण तत्त्वबुद्धिर्न सिद्ध्यतीत्यत्र
त्र श्रुतिस्मृती दर्शयति नैषेति॥ मतिं दद्यादिति शेषः॥ प्रकारांतरेणाख्यायिकामवतार्य तत्राख्यायिकानुगुण्यं दर्शयति तथा हीति॥ श्रद्धा ब्रह्मज्ञाने प

केवलतर्कबुद्धिनिषेधार्थां चाख्यायिका॥ नैषा तर्केण मतिरापनेया न तर्कशास्त्रदग्धा गेति च श्रुतिस्मृतिभ्यां श्रद्धा च ब्रह्मविज्ञाने परमं साध
नमित्याख्यायिकार्थः॥ तथा हि गार्ग्यजातशत्रोरतीव श्रद्धालुता दृश्यते आख्यायिकायां॥ श्रद्धावाँल्लभते ज्ञानमिति च स्मृतिः॥ तत्र पूर्वपक्षवा
द्यविद्याविषयब्रह्मवित्॥ दृप्तबालाकिर्दृप्तो गर्वितोऽसम्यक्ब्रह्मवित्त्वादेव॥ बलाकाया अपत्यं बालाकिर्दृप्तश्चासौ बालाकिश्चेति दृप्तबाला

ॐ दृप्तबालाकिर्हानूचानो गार्ग्य आस स होवाचाजातशत्रुं काश्यं ब्रह्म ते ब्रवाणीति स होवाचाजातशत्रुः सहस्रमेतस्यां वाचि
दद्मः॥ किः॥ ह शब्द ऐतिह्यार्थ आख्यायिकायाः अनूचानोऽनुवचनसमर्थः वक्ता वाग्मी गार्ग्यो गोत्रत आस बभूव कस्मिंश्चित्कालविशेषे॥ स ह
उवाचाऽजातशत्रुमजातशत्रुनामानं काश्यं काशिराजमभिगम्य ब्रह्म ते ब्रवाणीति॥ ब्रह्म ते तुभ्यं ब्रवाणि कथयानि॥ स एवमुक्तोऽजातशत्रु
रुवाच सहस्रं गवां दद्म एतस्यां वाचि यो मां प्रत्यवोचो ब्रह्म ते ब्रवाणीति तावन्मात्रमेव गोसहस्रप्रदाने निमित्तमित्यभिप्रायः॥ साक्षाद्ब्रह्म
कथनमेव निमित्तं कस्मान्नापेक्ष्यते सहस्रदाने ब्रह्म ते ब्रवाणीतीयमेव तु वाग्निमित्तमपेक्ष्यत इत्युच्यते॥ रमं साधनमित्यत्र भगवतोऽपि संमतिमा
ह श्रद्धावानिति॥ आख्यायिकार्थं बहुधा स्थिते तदक्षराणि व्याचष्टे तत्रेत्यादिना॥ पूर्वपक्षवादित्वे हेतुमाहाविद्याविषयेति॥ गर्वितत्वे हेतुमाहासम्यगिति॥ इयमे

137

बृ.२. ३

अतोब्रह्मब्रवाणीतिवागेवसहस्रदानेनिमित्तमितिशेषः॥ श्रुतिंव्याचष्टेजनकइति॥ प्रसिद्धंजनकस्यदातृत्वादितद्वद्योतकोनिपातइतियावत्॥ वा
क्यार्थमाहजनकोदित्सुरित्यादिनासंभावितवानसीतिप्रागुक्तंवाङ्मात्रंसहस्रदानेनिमित्तमितिशेषः॥ तस्मान्मुग्धप्रसिद्ध्यतिक्रमणादितियावत्॥ त
त्सर्वंदातृत्वादिकमित्यर्थः॥ इतिशब्दोभिप्रायसमाप्त्यर्थः॥ १॥ हृदिप्रविष्टोभोक्ताहमित्यादिप्रत्यक्षंप्रमाणयस्येहमिति॥ दृष्टिफलंनैरंतर्येणाभ्यासंदर्श

यतः श्रुतिरेवराज्ञोभिप्रायमाह॥ जनकोदाताजनकःश्रोतेतिचैतस्मिन्वाक्यद्वयेपदद्वयमभ्यस्यतेजनकोजनकइतिवैशब्दः प्रसि
द्धावद्योतनार्थोजनकोदित्सुर्जनकःशुश्रूषुरितिब्रह्मशुश्रूषवोविवक्षवः प्रतिजिघृक्षवश्चजनाधावंत्यभिगच्छंतितस्मात्तत्सर्वंमव्य
भिसंभावितवानसीति॥ १॥ एवंराजानंशुश्रूषुमभिमुखीभूतंसहउवाचगार्ग्यः यएवासौआदित्येचक्षुषिचैकोभिमानीचक्षुर्द्वारेणहृद्

जनकोजनकइतिवैजनाधावंतीति॥ १॥ सहोवाचगार्ग्योयएवासावादित्येपुरुषएतमेवाहंब्रह्मोपासइतिसहोवाचा
जातशत्रुर्मामैतस्मिन्संवदिष्ठाः॥ दिप्रविष्टोहंभोक्ताहंकर्त्ताचेत्यवस्थितःएतमेवाहंब्रह्मपश्याम्यस्मिन्कार्यकरणसंघातेउ
पासे॥ तस्मात्तमहंपुरुषंतुभ्यंब्रवीम्युपास्वेति॥ सएवमुक्तःप्रत्युवाचाजातशत्रुर्मामेतिहस्तेनविनिवारयन्नेतस्मिन्ब्रह्मणिविज्ञेयेमा
संवदिष्ठाःमामेत्याबाधनार्थंद्विर्वचनमेवंसमानेविज्ञानविषयआवयोरस्मानविज्ञातवतइवदर्शयताबाधिताःस्यामो

यत्युपासइति॥ तावतामम किमायातंतत्राह तस्मादिति॥ मामेतिप्रतीकमादायाभ्यासस्यार्थमाहमामेतीति॥ विनिवारयन्प्रत्युवाचेतिसंबंधः॥ एक
स्यमाङोनिवारकत्वमपरस्यसंवादेनसंगतिरितिविभागेसंभवतिकुतोद्विर्वचनमित्याशंक्याहमामेत्याबाधनार्थमिति ॥

एमः ३

तदेवस्फुटयत्येवमिति॥त्वदुक्तेनप्रकारेणयोविज्ञानविषयोर्थस्तस्मिन्नावयोर्विज्ञानसाम्यादेवसमानेपिविज्ञानवत्त्वेसत्यस्मानविज्ञानवतइवस्वीकृत्य
तमेवार्थमस्मान्प्रत्युपदेशेनज्ञापयताभवतावयंबाधिताःस्यामइतियोजनातथापिगार्ग्यस्यकथमीषत्बाधनंतत्राहातइति॥अतिष्ठाःसर्वेषामित्या
दिवाक्यंशंकाद्वाराऽवतार्यव्याकरोत्यथेत्यादिना॥एतंपुरुषमितिशेषः॥इतिशब्दोगुणोपास्तिसमाप्त्यर्थः॥पूर्वोक्तरीत्यात्रिभिर्गुणैर्विशिष्टंब्रह्मतदुपा

ऽतोमासंवदिष्ठाःमासंवादंकार्षीरस्मिन्ब्रह्मण्ययन्यच्चेज्ज्ञानासितद्ब्रह्मवक्तुमर्हसिनतुयन्मयाज्ञायतएव॥अथचेन्मन्यसेजानीषेत्वं
ब्रह्ममात्रंनतुतद्विशेषणोपासनफलानीतितन्नमंतव्यंयतःसर्वमेतदहंजानेयद्ब्रवीषिकथमतिष्ठाअतीत्यसर्वाणिभूतानितिष्ठती
त्यतिष्ठाःसर्वेषांचभूतानांमूर्द्धाशिरोराजेतिवैराजादीप्तिगुणोपेतत्वादेतैर्विशेषणैर्विशिष्टमेतद्ब्रह्मास्मिन्कार्यकरणसंघातेकर्तृभो

अतिष्ठाःसर्वेषांभूतानांमूर्द्धाराजेतिवाअहमेतमुपासइतिसयएतमेवमुपास्तेतिष्ठाःसर्वेषांभूतानांमूर्द्धाराजाभवति॥२॥

क्तृचेत्यहमेतमुपासइति॥फलमप्येवंविशिष्टोपासकस्यसयएतमेवमुपास्तेअतिष्ठाःसर्वेषांभूतानांमूर्द्धाराजाभवति॥यथागुणोपास
नमेवहिफलंतंयथायथोपासतेतदेवभवतीतिश्रुतेः॥२॥संवादेनादित्यब्रह्मणिप्रत्याख्यातेऽजातशत्रुणाचंद्रमसिब्रह्मांतरंप्रतिपेदेगा
र्ग्योयएवासौचंद्रेमनसिचैकःपुरुषोभोक्ताकर्त्ताचेतिपूर्ववद्विशेषणं॥बृहन्महान्पांडरंशुक्लंवासोयस्यसोयंपांडरवासाअप्करीरत्वात्सो
णस्ययश्चान्नभूतो सकस्यफलमपिजानामीत्युक्त्वाफलवाक्यमुपादत्तेसयइति॥किमितियथोक्तंफलमुच्यतेतत्राहयथेति॥२॥मनसिचेतिचकारात्बु
द्धौचेत्यर्थः॥यएकःपुरुषस्तमेवाहंब्रह्मोपासेत्वंवेत्यमुपास्वेत्युक्तेमामेत्यादिनाप्रत्युवाचेत्याहइतिपूर्ववदिति॥भानुमंडलतोद्विगुणंचंद्रमंडलमितिप्रसिद्धि

140

बृ.र.
४

कथंपांडरवासस्त्वंप्राणाभिमानिनः प्राणस्यसंभवतीत्याशंक्याहाप्शरीरत्वादिति॥पुरुषोहिशरीरेणवाससेववेष्टितोभवति॥पांडरत्वंचापांप्रसिद्ध
मापोवासः प्राणस्येतिचश्रुतिः॥अतोयुक्तंप्राणस्यपांडरवासस्त्वमित्यर्थः॥नकेवलंसोमशब्देनचंद्रमागृह्यतेकिंतुलतापिसमाननामधर्मत्वादित्या
हयश्चेति॥तंचंद्रमसंलतात्मकंचद्विनिष्ठंचपुरुषमेकीकृत्याहंग्रहेणोपास्तिरित्यर्थः॥संप्रत्युपास्तिफलमाहयथोक्तेति॥यत्तशब्देनप्रकृतिरुक्ताविं

ऽभिषूयतेलतात्मकोयज्ञेतमेकीकृत्यएतमेवाहंब्रह्मोपासेयथोक्तगुणंयउपास्तेतस्याहरहःसोमोभिषुतोयज्ञेप्रसुतश्चविकारेष्वन्नंचा

सहोवाचगार्ग्योयएवासौचंद्रेपुरुषएतमेवाहंब्रह्मोपासइतिसहोवाचाजातशत्रुर्मामैतस्मिन्संवदिष्ठाबृहत्पांडरवासाःसोमो
राजेतिवाअहमेतमुपासइतिसयएतमेवमुपास्तेऽहरहर्हसुतः प्रसुतोभवतिनास्यान्नंक्षीयते॥३॥सहोवाचगार्ग्योयएवा
सौविद्युतिपुरुषएतमेवाहंब्रह्मोपासइतिसहोवाचाजातशत्रुर्मामैतस्मिन्संवदिष्ठास्तेजस्वीतिवाअहमेतमुपासइतिस
यएतमेवमुपास्तेतेजस्वीहभवतितेजस्विनीहास्यप्रजाभवति॥४॥सहोवाचगार्ग्योयएवायमाकाशेपुरुषएतमेवाहंब्रह्मोपा
सइतिसहोवाचाजातशत्रुर्मामैतस्मिन्संवदिष्ठाःपूर्णमप्रवर्तीतिवाअहमेतमुपासइतिसयएतमेवमुपास्तेपूर्यतेप्रजयापशुभि
र्नास्यास्माल्लोकात्प्रजोद्वर्तते॥५॥

स्यनक्षीयतेऽन्नात्मकोपासकस्य॥३॥तथाविद्युतिलचिहृदयेचैकादेवतातेजस्वीतिविशेषणंतस्याः
तत्फलंतेजस्वीहभवतितेजस्विनीहास्यप्रजाभवतिविद्युतांबहुत्वस्यांगीकरणादात्मनिप्रजायांचफलबाहुल्यं॥४॥ काशशब्देनविकृतयोगहानेय
थोक्तोपासकस्यप्रकृतिविकृत्यनुष्ठानसामर्थ्यंलीलालभ्यमित्यर्थः॥अन्नाशयस्योपासनानुसारित्वादुपपन्नत्वमभिप्रेत्योपासकंविशिनष्टिअन्नात्मेति॥३॥संवा

कथमेकमुपासनमनेकफलमित्याशंक्याह विमुक्तामिति॥४॥अप्रवर्तित्वमप्रवर्तकत्वमक्रियावत्वंवा॥५॥कथमेकस्मिन्वायावपराजितासेनेतिगुणः
संभवतितत्राह मरुतामिति॥विशेषणत्रयस्य फलत्रयंक्रमेणमनुत्पादयतिजिष्णुरित्यादिना॥अन्यतस्त्यानामन्यतोमातृतोजातानां॥६॥यद्वविविच्य

तथाकाशेहृद्याकाशेहृदयेचैका पूर्णमप्रवर्तिचेतिविशेषणद्वयंपूर्णत्वविशेषणफलमिदं पूर्यतेहप्रजयापशुभिरप्रवर्तिविशेषणफलं
नास्यास्माल्लोकात्प्रजोद्वर्ततेइतिप्रजासंतानाविच्छित्तिः॥५॥तथावायौप्राणेहृदिचैकाविशेषणमिंद्रःपरमेश्वरोवैकुंठोऽप्रसह्योनपरैर्जि

सहोवाचगार्ग्योयएवायंवायौपुरुषएतमेवाहंब्रह्मोपासइतिसहोवाचाजातशत्रुर्मामैतस्मिन्संवदिष्ठाइंद्रोवैकुंठोऽपराजि
तासेनेतिवाअहमेतमुपासइतिसयएतमेवमुपास्तेजिष्णुर्हापराजिष्णुर्भवत्यन्यतस्त्यजायी॥६॥सहोवाचगार्ग्योयएवाय
मग्नौपुरुषएतमेवाहंब्रह्मोपासइतिसहोवाचाजातशत्रुर्मामैतस्मिन्संवदिष्ठाःविषासहिरितिवाअहमेतमुपासइतिसयए
तमुपास्तेविषासहिर्हभवतिविषासहिर्हास्यप्रजाभवति॥७॥ तपूर्वापराजितासेनामरुतांगणत्वप्रसिद्धेरुपासनफलमपिजिष्णुर्हि
जयनशीलोऽपराजिष्णुर्नचपरैर्जितस्वभावोभवत्यन्यतस्त्यजायीअन्यतस्त्यानांसपत्नानांजयनशीलोभवति॥६॥अग्नौवायिहृदिचैकावि
शेषणंविषासहिर्मर्षयितापरेषामग्निबाहुल्यात्फलबाहुल्यंपूर्ववत्॥७॥अप्सुरेतसिहृदिचैकाविशेषणंप्रतिरूपःअनुरूपःश्रुतिस्मृत्यप्रतिकू
लइत्यर्थः॥ तेस्विप्यतेतत्सर्वेभस्मीकरणेनसहतेतेनाग्निर्विषासहिः॥यथापूर्वंविमुक्तांबाहुल्यादात्मनिप्रजायांचफलबाहुल्यमुक्तंतथात्राप्यग्नीनां
बहुलत्वादुपासकस्यात्मनिप्रजायांचदीप्ताग्नित्वंसिद्ध्यतीत्याहाग्नीति॥७॥प्रतिरूपत्वंप्रतिकूलत्वमित्येतद्व्यावर्तयत्यनुरूपइति॥अन्यच्चफलमिति

१९५

तथाविधः श्रुतिस्मृत्यनुकूल इतियावत्॥ ८॥ हार्देचेत्येतदेवस्पष्टयति॥ सत्त्वेति॥ सर्वत्रैकेतिविशेषणस्यदेवतेतिविशेष्यतयासंबध्यते॥ तदेवरो

फलंप्रतिरूपंश्रुतिस्मृतिशासनानुरूपमेवैनमुपगच्छतिप्राप्नोतिनविपरीतमन्यच्चास्मात्तथाविधएवोपजायते॥ ८॥ आदर्शप्रसाद

स्वभावेचान्यत्रखड्गादौहार्देचसत्त्वशुद्धिस्वाभाव्येचैकाविशेषणं॥ रोचिष्णुर्दीप्तिस्वभावः॥ फलंचतदेवरोचनाधारबाहुल्यात्फलबाहुल्यं

सहोवाचगार्ग्योयएवायमप्सुपुरुषएतमेवाहंब्रह्मोपासइतिसहोवाचाजातशत्रुर्मामैतस्मिन्संवदिष्ठाः प्रतिरूपइतिवा

अहमेतमुपासइतिसयएतमेवमुपास्तेप्रतिरूपꣳहैवैनमुपगच्छतिनाप्रतिरूपमथोप्रतिरूपोस्माज्जायते॥ ८॥ सहोवाच

गार्ग्योयएवायमादर्शेपुरुषएतमेवाहंब्रह्मोपासइतिसहोवाचाजातशत्रुर्मामैतस्मिन्संवदिष्ठारोचिष्णुरितिवाअहमेतमु

पासइतिसयएतमेवमुपास्तेरोचिष्णुर्हभवतिरोचिष्णुर्हास्यप्रजाभवत्यथोयैःसंनिगच्छतिसर्वाꣳस्ताnतिरोचते॥ ९॥ सहो

वाचगार्ग्योयएवायंयंतंपश्चाच्छब्दोनुदेत्येतमेवाहंब्रह्मोपासइतिसहोवाचाजातशत्रुर्मामैतस्मिन्संवदिष्ठाअसुरितिवाअ

हमेतमुपासइतिसयएतमेवमुपास्तेसर्वꣳहैवास्मिँल्लोकआयुरेतिनैनंपुराकालात्प्राणोजहाति ॥ १० ॥

॥ ९॥ यंतंगच्छंतंयएवायंशब्दःपृष्ठतोनूदेतिअध्यात्मंचजीवनहेतुःप्राणस्तमेकोऽकृत्याहासुःप्राणोजीवनहेतुरितिगुणस्तस्यफलंसर्व

मायुरस्मिँल्लोकएतीति॥ यथोपात्तकर्मणाप्तुःकर्मफलपरिच्छिन्नकालात्पुरापूर्वंरोगादिभिःपीड्यमानमप्येनंप्राणोनजहाति ॥ १० ॥

चिष्णुत्वमित्यर्थः॥ ९॥ आहेतमेवाहमित्यादीतिशेषः॥ तस्यगुणवदुपासनस्येत्यर्थः॥ सर्वमायुरित्येतद्व्याचष्टेयथोपात्तमिति ॥ १० ॥ ५७ ॥

क्वापुनरसावेकादेवतातत्राहाश्विनाविति॥तस्यदेवस्येतियावत्॥यथोक्तंगुणद्वयंउपपादयतिदिशामिति॥द्वितीयत्वंसाधुभृत्यादिपरिहृतत्वं॥११

दिक्षुकर्णयोर्हृदि चैकाश्विनौदेवाववियुक्तस्वभावौगुणस्तस्यद्वितीयत्वमनपगतत्वमवियुक्तताचान्योन्यंदिशामश्विनोश्चैवंधर्मित्वात्तदेव
चफलमुपासकस्यगणाविच्छेदोद्वितीयत्वंच॥११॥छायायांबाह्येतमस्यध्यात्मेचावरणात्मकेऽज्ञानेहृदिचैकादेवताविशेषणंमृत्युःफलंस

सहोवाचगार्ग्योयएवायंदिक्षुपुरुषएतमेवाहंब्रह्मोपासइतिसहोवाचाजातशत्रुर्मामैतस्मिन्संवदिष्ठाद्वितीयोनपग
इतिवाअहमेतमुपासइतिसयएतमेवमुपास्तेद्वितीयवान्हभवतिनास्माद्गणश्छिद्यते॥११॥सहोवाचगार्ग्योयएवायं
छायामयःपुरुषएतमेवाहंब्रह्मोपासइतिसहोवाचाजातशत्रुर्मामैतस्मिन्संवदिष्ठामृत्युरितिवाअहमेतमुपासइतिसय
एतमेवमुपास्तेसर्वंहैवास्मिंल्लोकआयुरेतिनैनंपुराकालान्मृत्युरागच्छति॥१२॥सहोवाचगार्ग्योयएवायमात्मनिपुरु
षएतमेवाहंब्रह्मोपासइतिसहोवाचाजातशत्रुर्मामैतस्मिन्संवदिष्ठाआत्मन्वीतिवाअहमेतमुपासइतिसयएतमेवमु
पास्तआत्मन्वीहभवत्यात्मन्विनीहास्यप्रजाभवतिसहतूष्णीमाससगार्ग्यः॥१३॥ र्वंपूर्ववत्॥मृत्योरनागमनेनरोगादिपीडाऽ

भावोविशेषः॥१२॥आत्मनिप्रजापतौबुद्धौचहृदिचैका॥आत्मन्वीहआत्मवानितिविशेषणंफलमात्मन्वीहभवत्यात्मवान्भवत्यात्म
न्विनीहास्यप्रजाभवतिबुद्धिवत्त्वात्प्रजायासंपादनं॥ शब्दब्रह्मोपासकस्येवतमोब्रह्मोपासकस्यापिफलमित्याहफलमिति॥फलभे
दाभावेकथमुपासनभेदःस्यादित्याशंक्याहमृत्योरिति॥१२॥यंस्तानिब्रह्माण्युपन्यस्यसमस्तंब्रह्मोपदिशतिप्रजापताविति॥आत्मवत्त्वंवश्यात्म

१४२ हि

फलस्यात्मगामित्वान्नप्रजायांतद्भिधानमुचितमित्याशंक्याहब्रुह्मेति॥१३॥विचारार्थामुक्तिरितिकल्पयतिकिमेतावदिति॥वाक्यार्थंचोद्यसमा
धिभ्यांस्फुटयतिकिमित्यादिना॥आदित्यादेरविदितत्वनिषेधंप्रतिज्ञायहेतुमाहनफलवदिति॥नैतानिवाक्यानिफलवद्विज्ञानपराणिअर्थवादत्वा
दित्याशंक्याहनचेति॥फलवत्वाच्चापूर्वविधिपराण्येतानिवाक्यानीत्याहतदनुरूपाणीति॥अर्थवादत्वेपितेषामपूर्वार्थत्वंकिंनस्यादित्याशंक्याहार्थ

स्वयंपरिज्ञातत्वेनैवंक्रमेणप्रत्याख्यातेषुब्रह्मसुसगार्ग्यःक्षीणब्रह्मविज्ञानोऽप्रतिभासमानोत्तरस्तूष्णीमवाक्शिराआसतथाभूतमा
लक्ष्यगार्ग्यं॥१३॥सहोवाचाजातशत्रुरेतावन्नूइतिकिमेतावद्ब्रह्मनिर्ज्ञातमाहोस्विदधिकमप्यस्तीतितरआह॥एतावद्धीति॥नैता
वताविदितेनब्रह्मविदितंभवतीत्याहाजातशत्रुःकिमर्थंगर्वितोसिब्रवाणीति॥किमेतावद्विदितंविदितमेवनभवतीत्युच्यतेनफल

सहोवाचाजातशत्रुरेतावन्नूइत्येतावद्धीतिनैतावताविदितंभवतीति ॥

वद्विज्ञानश्रवणात्त्वचार्थवादत्वमेववाक्यानामवगंतुंशक्यमपूर्वविधानपराणिहिवाक्यानिप्रत्युपासनोपदेशंलक्ष्यंतेऽतिष्ठाःसर्वे
षांभूतानामित्यादीनि॥तदनुरूपाणिचफलानिसर्वत्रश्रूयंतेविभक्तान्यऽर्थवादत्वेएतदसमंजसं॥कथंतर्हिनैतावताविदितंभव
तीति॥नैषदोषः॥अधिकृतापेक्षत्वाद्ब्रह्मोपदेशार्थंहिशुश्रूषवेऽजातशत्रवेअमुख्यब्रह्मवित्गार्ग्यःप्रवृत्तःसयुक्तएवमुख्यब्रह्मविदाजा
तशत्रुणाऽमुख्यब्रह्मविद्गार्ग्योवक्तुंयन्मुख्यब्रह्मवक्तुंप्रवृत्तस्त्वंतन्नजानीषइति॥

वादत्वइति॥वाक्यानांफलवद्विज्ञानपरत्वमुपेत्यनिषे
धवाक्यस्यगतिंपृच्छतिकथंतर्हीति॥तस्यानर्थक्यंपरिहरतिनैषदोषइति॥अधिकृतापेक्षत्वादित्यनप्रतिषेधस्येत्युक्तंस्फुटयतिब्रह्मेति ॥

नैतावतेत्यविशेषेणामुख्यब्रह्मज्ञानमपिनिषिद्धमितिचेन्नेत्याहयदीति॥किंचनिष्कामेनचेदेतानिउपासनानिअनुष्ठीयंतेतदैतेषांब्रह्मज्ञानार्थत्वाद
मुख्यब्रह्मज्ञाननिषेधमंतरेणनिषेधोपपत्तेरित्याहेतद्धिज्ञानेति॥आदित्यादिकमेवमुख्यंब्रह्मेतिनिषेधानर्थक्यंतदवस्थमित्याशंक्याहाविद्येति॥

यद्यमुख्यब्रह्मविज्ञानमपिप्रत्याख्यायेततदैतावतेतिनब्रूयान्नकिंचित्ज्ञातंत्वयेत्येवंब्रूयात्तस्मादेवंत्वयेतावत्त्वविद्याविषयेब्रह्मण्येत
द्धिज्ञानद्वारत्वाच्चपरब्रह्मविज्ञानस्ययुक्तमेववक्तुंनैतावताविदितंभवतीति॥अविद्याविषयेविज्ञेयत्वंनामरूपकर्मात्मकत्वंचैषांतृतीये
ध्यायेप्रदर्शितं॥तस्मान्नैतावताविदितंभवतीतिब्रुवताधिकंब्रह्मज्ञातव्यमस्तीतिदर्शितंभवति॥तच्चानुपसन्नायनवक्तव्यमित्याचारविधित्सो

सहोवाचगार्ग्यउपत्वायानीति॥१४॥सहोवाचाजातशत्रुःप्रतिलोमंवैतद्यद्ब्राह्मणःक्षत्रियमुपेयाद्ब्रह्ममेवक्ष्यतीतिव्येवत्वाज्ञ
पयिष्यामीतितंपाणावादायोत्तस्थौतौहपुरुषꣳसुप्तमाजग्मतुस्तमेतैर्नामभिरामंत्रयांचक्रेबृहन्पाण्डरवासःसोमराजन्निति
सनोत्तस्थौतंपाणिनापेषंबोधयांचकारसहोत्तस्थौ॥१५॥ गार्ग्यःस्वयमेवाहोपत्वायानीत्युपगच्छानित्वांयथान्यःशिष्योगुरुं॥१४॥सहोवा
चाजातशत्रुःप्रतिलोमंविपरीतंवैतत्॥किंतत्॥यद्ब्राह्मणःउत्तमवर्णःआचार्यत्वेधिकृतःसन्क्षत्रियमनाचार्यस्वभावमुपेयादुपगच्छेच्छि
ष्यवृत्त्याब्रह्ममेममवक्ष्यतीत्येतदाचारविधिशास्त्रेषुनिषिद्धं॥तस्मात्तिष्ठत्वमाचार्यएवसन्विज्ञापयिष्याम्येवत्वामहं॥यस्मिन्विदितेब्रह्मवि
दितंभवतियत्तन्मुख्यंब्रह्मवेद्यं॥ आदित्यादेर्मुख्यब्रह्मत्वासंभवान्निषेधस्योपपन्नत्वात्तत्सामर्थ्यसिद्धमर्थमुपन्यस्यतितस्मादिति॥उपगमनवाक्यसु
स्थाप्यमाचष्टेतच्चेति॥अब्राह्मणादध्ययनमापत्कालेविधीयते॥अनुव्रज्याचशुश्रूषायावदध्ययनंगुरोः॥नाब्राह्मणेगुरौशिष्योवासमात्यंतिकंवसेदित्यादीन्याच

143

प्राणस्याम्रियमाणस्यैवसंबोधनार्थंप्रयुक्तनामाऽश्रवणादापेषणाच्चोत्थानात्तस्याभोक्तृत्वंसिद्ध्यतीतिफलितमाहतस्मादिति॥तौहसुप्तमित्यादिसुप्तपुरु
षगत्युक्तिमाक्षिपतिकथमिति॥गार्ग्यकाश्याभिमतयोरुभयोरपिजागरितेकरणेषुसंनिधानाविशेषात्तत्रैवकिमितिविवेकोनदर्शितइत्यर्थः॥
जागरितेकरणेषुद्वयोःसन्निधानेपिसांकर्यात्तदुष्करंविवेचनमितिपरिहरतिजागरितेति॥ब्रह्मशब्दादूर्ध्वंसशब्दमध्याहृत्ययोजनातर्हिस्वा

तंगार्ग्यंसलज्जमालक्ष्यविस्रंभजननायपाणौहस्तआदायगृहीत्वोत्तस्थौउत्थितवान्॥तौहगार्ग्यजातशत्रूपुरुषंसुप्तंराजगृहप्रदेशे
क्वचिद्राजगमतुरागतौतंचपुरुषंसुप्तंप्राप्यैतैर्नामभिर्बृहन्पांडरवासःसोमराजन्नित्येतैरामंत्रयांचक्रेएवमामंत्र्यमाणोपिससुप्तोनोत्त
स्थौतमप्रतिबुध्यमानंपाणिनापेषमापिष्यापिष्यबोधयांचकारप्रतिबोधितवान्तेनसहोत्तस्थौतस्मात्योगार्ग्येणाभिप्रेतोनासावस्मि
न्शरीरेकर्त्ताभोक्ताब्रह्मेति॥१५॥कथंपुनरिदमवगम्यतेसुप्तपुरुषागमनतत्संबोधनानुत्थानेर्गार्ग्याभिमतस्यब्रह्मणोऽब्रह्मत्वंज्ञा
पितमिति॥जागरितकालेयोगार्ग्याभिप्रेतःपुरुषःकर्त्ताभोक्ताचब्रह्मसन्निहितःकरणेषुयथातथाऽजातशत्रुअभिप्रेतोपितत्स्वा
मीभृत्येष्विवराजासन्निहितएव॥किंतुभृत्यस्वामिनोर्गार्ग्यजातशत्रुअभिप्रेतयोर्यद्विवेकावधारणकारणंतत्संकीर्णत्वादनवधारित
विशेषंयद्दृष्टत्वमेवभोक्तृत्वंदृश्यत्वं ———— यच्चाभोक्तृदृश्यत्वमेवनतुद्रष्टृत्वंतच्चोभयमिहसंकीर्णत्वाद्धिविच्यदर्शयितुमश
क्यमितिसुप्तपुरुषगमनं॥

मिभृत्यन्यायेनतयोर्विवेकोपिसुकरःस्यादित्याशंक्याह किंत्विति॥किंतद्विवेकावधारणकारणंतदाहयद्दृष्ट
त्वमिति॥कथंतदनवधारितविशेषमितितदाहतच्चेति॥इहेतिजागरितोक्तिः॥यद्यपिजागरितंहित्वासुषुप्तेपुरुषेविवेकार्थंतयोरुपगतिस्तत्र
चभोक्तैवसंबोधितःस्वनामभिस्तद्बुद्ध्योत्तिष्ठतिनाचेतनस्तथापिनेष्टविवेकसिद्धिर्गार्ग्यकाश्याभीष्टात्मनोरुत्थितिसंशयादितिशंकतेनन्विति ॥

संशयंनिराकरोति॥नेत्यादिना॥विशेषावधारणमेववि—शदयति॥योहीत्यादिना॥स्वव्यापारस्तुमुलशब्दादिःयथानिर्ज्ञातोयथोक्तैर्विशेषणैरुपलब्धं
रूपमनतिक्रम्यवर्त्तमानः॥प्राणस्योक्तविशेषणवतःस्वापेवस्थानेपितस्यतदाभोगाभावस्तत्रभोक्तृतराभ्युपगमादित्याशंक्याहनचेति॥तस्यैवभो
क्तृत्वेफलितमाहतस्मादिति॥अस्तुतस्यप्राप्तशब्दश्रवणंतत्राहनचेति॥परिशेषसिद्धमर्थमाहतस्मादिति॥प्राणस्याभोक्तृत्वंव्यतिरेकद्वारासाधयति

ननुसुप्तेपिपुरुषेविशिष्टैर्नामभिरामंत्रितोभोक्तेवप्रतिपत्स्यतेनाभोक्तेतिनैवनिर्णयःस्यादितिचेत्॥ननिर्द्धारितविशेषत्वाद्गार्ग्याभि
प्रेतस्य॥योहिसत्येनकृत्स्नःप्राणआत्माऽमृतोवागादिष्वनस्तमितोनिम्लोचत्सुयस्यापःशरीरंपांडरवासायश्चासपत्नत्वाद्बृहन्यश्चसो
मोराजाषोडशकलःसस्वव्यापारारूढोयथानिर्ज्ञातएवानस्तमितस्वभावआस्तेनचान्यस्यकस्यचिद्व्यापारस्तस्मिन्कालेगार्ग्येणाभिप्रे
यतेतद्विरोधिनः॥तस्मात्त्वनामभिरामंत्रितेनप्रतिबोद्धव्यंनचप्रत्यबुध्यततस्मात्पारिशेष्याद्गार्ग्याभिप्रेतस्याभोक्तृत्वंब्रह्मणः ॥
———————भोक्तृस्वभावश्चेद्बुंजीतेवस्वंविषयंप्राप्तंनहिदग्धृस्वभावःसन्वह्निस्तृणोलपादिदाह्यंस्वविषयंप्राप्तंनदहतिप्रकाश्यंवान
प्रकाशयति॥नचेद्दहतिप्रकाशयतिवाप्राप्तंविषयंनासौवह्निर्दग्धाप्रकाशयिताचेतिनिश्चीयते॥तथाऽसौप्राप्तशब्दादिविषयोप
लब्धस्वभावश्चेद्गार्ग्याभिप्रेतःप्राणोबृहन्पांडरवासइत्येवमादिशब्दंस्वविषयमालभेत्यथाप्राप्तंतृणोलपादिवन्हिर्दहेत्प्रकाश
येच्चाऽव्यभिचारेणतद्वत्॥तस्मात्प्राप्तानांशब्दादीनामप्रतिबोधादभोक्तृस्वभावइतिनिश्चीयते॥नहियस्ययःस्वभावोनिश्चितःसतंव्यभिचरति
कदाचिदप्य भोक्तृस्वभावश्चेदिति॥नचभुंक्तेतस्मादभोक्तेतिशेषः॥उक्तमर्थंदृष्टांतेनस्पष्टयतिनहीत्यादिना॥उलपंबालतृणं॥विपक्षेदोषमाहनचेदिति॥
उक्तमर्थंसंक्षिप्याहयथेत्यादिना॥प्राणस्याभोक्तृत्वमुक्तमुपसंहरति॥तस्मादिति॥यद्यपिप्राणःस्वापेशब्दादीन्नप्रतिबुध्यतेतथापिभोक्तृस्वभावोभविष्यति

144

संबोधनशब्दाश्रवणमतः शब्दार्थः तस्यस्वनामाग्रहणंसंबंधाग्रहणकृतंनानात्मत्वकृतमितिशंकतेसंबोधनार्थेति॥शंकामेवविशदयतिस्यादेतदित्यादि
ना॥देवतायाःसंबंधाग्रहणमयुक्तंसर्वज्ञत्वादित्युत्तरमाहनदेवतेति॥तदेवप्रपंचयतियस्यहीत्यादिना॥तयेतिग्रहणकर्तृनिर्देशः॥अवश्यमितिसू
चितामनुपपत्तिमाहान्यथेति॥आदिपदेनयागस्तुतिनमस्कारादिगृह्यते संव्यवहारोभिज्ञाभोगप्रसादादिः॥संबोधननामाग्रहस्तत्कृतानात्मत्वदोष
श्चत्वदिष्टात्मनोपितुल्यइतिशंकतेव्यतिरिक्तेति॥संगृहीतंचोद्यंविवृणोतियस्यचेति॥तदासुषुप्तिदशायांप्रतिपत्तिर्युक्तेतिसंबंधः॥तद्विषयत्वादिति

तःसिद्धंप्राणस्याभोक्तृत्वंसंबोधनार्थेनामविशेषेसंबंधाग्रहणादप्रतिबोधइतिचेत्॥स्यादेतद्यथाबहुषासीनेषुस्वनामविशेषेणसंबंधा
ग्रहणात्स्वामयंबोधयतीतिभृत्यवन्नापिसंबोध्यमानोविशेषतोनप्रतिपद्येततथेमानिबृहन्नित्येवमादीनिममनामानीत्यगृहीतसंबंध
त्वात्प्राणोनगृह्णातिसंबोधनार्थंशब्दंनत्वविज्ञातृत्वादेवेतिचेत्॥नदेवताभ्युपगमेऽग्रहणानुपपत्तेः॥यस्यहिचंद्राभिमानिनीदेवताभ्या
त्वंप्राणोभोक्ताभ्युपगम्यतेतस्यतयासंव्यवहारायविशेषनाम्नासंबंधोवश्यंगृहीतव्योऽन्यथाह्वानादिविषयेसंव्यवहारोनुपपन्नःस्यात्॥व्य
तिरिक्तपक्षेप्यप्रतिपत्तिरयुक्तमितिचेद्यस्यचप्राणव्यतिरिक्तोभोक्तातस्यापिबृहन्नित्यादिनामभिःसंबोधनेबृहत्त्वादिनाम्नांतदात्तद्विषय
त्वात्प्रतिपत्तिर्युक्तानचकदाचिदपिबृहत्वादिशब्दैःसंबोधितःप्रतिपद्यमानोदृश्यते॥तस्मादकारणमभोक्तृत्वेसंबोधनाप्रतिपत्तिरिति
चेत् नतद्भूतस्तावद्वाग्नाभिमानानुपपत्तेः॥ रिक्तात्मविषयत्वादितियावत्॥अस्त्येवातिरिक्तस्यात्मनःसंबोधनशब्दश्रवणमितिचेन्नेत्याहनच

कदाचिदिति॥त्वदिष्टात्मनःसंबोधनशब्दाप्रतिपत्तावपिभोक्तृत्वांगीकारस्तद्वदर्थः॥अभोक्तृत्वेप्राणस्येतिशेषः यथाहस्तःपादांगुलिरित्यादिनामोक्तो
मैत्रोनोत्तिष्ठतिसर्वदेहाभिमानित्वेनतन्नाम्नानभिमानित्वादेवंकार्यश्चेष्टात्मनःसर्वकार्यकरणाभिमानित्वादंगुलिस्थानीयप्राणमात्रेतदभावात्तन्नामाग्रहणं

आत्मनः १ प्राणस्य २

तदेवस्फुटयतियस्येति॥ प्राणमात्रे प्राणादिकरणवतोभिमानाभावेफलितमाहतस्मादिति॥ चंद्रस्यापिप्राणैकदेशत्वात्तन्नामभिः संबोधनेकृत्स्नाभिमा
नोसनोत्तिष्ठत्यत्राप्यंगुल्यादिदृष्टांतोपपत्तेरित्याशंक्याहनत्विति॥ गोत्ववत्तस्यसर्ववस्तुषुसमाप्तेरहमितिसर्वत्राभिमानसंभवाच्चंद्रनामोक्तावपिना
प्रतिपत्तिर्युक्तेत्यर्थः॥ प्राणवच्चिदात्मनोपिपूर्णतयासर्वात्माभिमानसिद्धेर्बोधाबोधौतुल्यावित्याशंक्याहदेवतेति॥ विशिष्टस्यात्मनोदेवतायामात्म
त्वाभिमानाभावादितरस्यचकूटस्थज्ञप्तिमात्रत्वेनतद्योगान्नतुल्यतेत्यर्थः॥ प्रकारांतरेणप्राणस्याभोक्तृत्वंबारयन्नाशंकतेस्वनामेति॥ अयुक्तंप्राणेतर

यस्यप्राणव्यतिरिक्तोभोक्तासप्राणादिकरणवान्प्राणीतस्यनप्राणदेवतामात्रेभिमानोयथाहस्तेतस्मात्प्राणनामसंबोधनेकृत्स्नाभिमा
निनोयुक्तैवाप्रतिपत्तिः॥ नतुप्राणस्यासाधारणनामसंयोगेदेवतात्मत्वानभिमानाच्चात्मनः॥ स्वनामप्रयोगेषुप्रतिपत्तिदर्शनादयुक्तमि
तिचेत्सुषुप्तस्ययल्लौकिकंदेवदत्तादिनामतेनापिसंबोध्यमानःकदाचिन्नप्रतिपद्यतेसुषुप्तस्तथाभोक्तापिसन्प्राणोनप्रतिपद्यतइति
चेत्नात्मप्राणयोःसुप्तासुप्तत्वविशेषोपपत्तेःसुप्तत्वात्प्राणग्रस्ततयोपरतकरणआत्मास्वनामप्रयुज्यमानमपिनप्रतिपद्यतेनतुतदसु
प्तस्यप्राणस्यभोक्तृत्वेउपरतकरणत्वंसंबोधनाग्रहणंवायुक्तं॥ अप्रसिद्धनामभिःसंबोधनमयुक्तमितिचेत्संतिहिप्राणविषयाणिप्र
सिद्धानिप्राणादिनामानितान्यपोह्याप्रसिद्धैर्बृहत्वादिनामभिःसंबोधनमयुक्तंलौकिकन्यायापोहात्तस्माद्ब्रह्मोक्तुरेवसतःप्राणस्याप्रति
पत्तिरितिचेत्॥ स्यभोक्तृत्त्वमितिशेषः॥ तदेवविवृणोतिसुषुप्तस्येति॥ विशेषंदर्शयन्नुत्तरमाहनात्मेति॥ कस्याभीष्टात्मनःसुप्तत्वप्रयुक्तंफलमाह
सुप्तत्वादिति॥ प्राणस्यापिसंहृतकरणत्वात्स्वनामाग्रहणमित्याशंक्यतस्यासुप्तत्वकृतंकार्यंकथयतिनत्विति॥ नहिकरणस्वामिनिव्याप्रियमाणेकरणो
परमःसंभवतितस्यचानुपरतकरणस्यस्वनामाग्रहणमयुक्तमित्यर्थः॥ प्राणनामत्वेनाप्रसिद्धनामभिःसंबोधनात्तदनुत्थानंनानात्मत्वादितिशंकतेअप्र

तद्देवस्पष्टयतिसंनिहिताति॥प्रसिद्धमनूद्याप्रसिद्धं विधेयमितिलौकिकोन्यायः॥अप्रसिद्धसंज्ञाभिःसंबोधनस्यायुक्तत्वेफलितमाह तस्मादिति॥ चंद्रदेवतास्मिन्देहेकर्त्रीभोक्त्रीचात्मेतिगार्ग्याभिप्रायनिषेधेदेवतानामग्रहणस्यतात्पर्यंतत्ग्रहोर्थवानितिपरिहरतिनदेवतेति॥तदेवप्रपंचयतिकेवलेति॥प्राणादिनामभिःसंबोधनेपितन्निराकरणंकर्तुंशक्यमित्याशंक्याहनहीति॥लौकिकनाम्नोदेवताविषयत्वाभावादित्यर्थः॥प्राणस्याभोक्तृत्वेपींद्रियाणांभोक्तृत्वमितिकेचित्तान्प्रत्याहप्राणेति॥प्राणकरणचंद्रदेवतानामभोक्तृत्वेपिदेवतांतरमन्त्रभोक्तृस्यादित्याशंक्याहदेवतांतराभा

नदेवताप्रत्याख्यानार्थत्वात्केवलसंबोधनमात्राप्रतिपत्त्येवासुप्तस्याध्यात्मिकस्यप्राणस्याभोक्तृत्वेसिद्धेयच्चंद्रदेवताविषयैर्नामभिःसंबोधनंतच्चंद्रदेवताप्राणोस्मिन्शरीरेभोक्तेतिगार्ग्यस्यविशेषप्रतिपत्तिनिराकरणार्थं॥नहितल्लौकिकनाम्नासंबोधनेशक्यंनिराकर्तुं॥प्राणप्रत्याख्यानेनैवप्राणग्रस्तत्वात्करणांतराणांप्रवृत्त्यनुपपत्तेर्भोक्तृत्वाशंकानुपपत्तिः॥देवतांतराभावाच्च॥नन्वतिष्ठाइत्याद्यात्मनोयंतेनगुणवद्देवताभेदस्यदर्शितत्वादितिचेन्नतस्यप्राणएवैकत्वाभ्युपगमात्सर्वश्रुतिषरनाभिनिदर्शनेन॥सत्येनछन्नःप्राणोवामृतमितिचप्राणबाह्यस्यान्यस्यानभ्युपगमात्भोक्तुरेषउह्येवसर्वदेवाःकतमएकोदेवइतिप्राणइतिच॥सर्वदेवानांप्राणएवैकत्वोपपादनाच्च॥

च्चेति॥भोक्तृत्वाशंकानुपपत्तिरितिपूर्वेणसंबंधः॥तत्रोपक्रमविरोधंशंकतेनन्विति॥दर्शितत्वाद्देवतांतराभावोनास्तीतिशेषः॥स्वतंत्रोदेवताभेदोनास्तीतिसमाधत्तेनतस्येति॥प्राणेदेवताभेदस्यैक्ययुक्तिमाहारनाभीति॥नदेवतांतरस्यभोक्तृत्वंगार्ग्यस्यस्वपक्षविरोधादितिशेषः॥सर्वश्रुतिष्वित्युक्तंताःसंक्षेपतोदर्शयत्येषइति॥कतिदेवायाज्ञवल्क्येत्यादिनासंक्षेपविस्ताराभ्यांसर्वेषांदेवानांप्राणात्मन्यैवैकत्वमुपपाद्यतेअतोनदेवताभेदोस्तीत्याहसर्वदेवानामिति॥प्राणात्पृथक्भूतस्यदेवस्यात्मातिरेकेसत्यसत्वापत्तेश्चप्राणांतर्भावःसर्वदेवताभेदस्येतिवक्तुंचशब्दः॥

करणानामभोक्तृत्वेहेत्वंतरमाहतथेति॥ देवताभेदेष्विवेतियावत्॥ अनाशंकाभोक्तृत्वस्येतिशेषः॥ तत्रोदाहरणांतरमाहदेहभेदेष्विवेति॥ नहि हस्तादिषुप्रत्येकंभोक्तृत्वंशंक्यतेतथात्रापिनेत्रादिष्वपिनभोक्तृत्वाशंकायुक्तातेषुस्मृतिरूपज्ञानस्येच्छायाः योहंरूपमद्राक्षंसशब्दंशृणोमीत्यादिप्रतिसंधानस्यचायोगादित्यर्थः॥ अनुपपत्तिमेवस्फुटयतिनहीति॥ क्षणिकविज्ञानस्यनिरासयस्यभोक्तृत्वाशंकापिप्रतिसंधानासंभवादेवप्रत्युक्तेत्याहविज्ञानेति॥ प्राणादीनामनात्मत्वमुक्त्वास्थूलदेहस्यतदुक्तुंपूर्वपक्षयतिनन्विति॥ संघातोभूतचतुष्टयसमाहारःस्थूलोदेहइतियावत्॥

तथाकरणभेदेष्वनाशंकादेहभेदेष्विवस्मृतिज्ञानेच्छाप्रतिसंधानानुपपत्तेः॥ नह्यन्यदृष्टमन्यःस्मरतिजानातीच्छतिप्रतिसंदधातिवा॥ तस्मान्नकरणभेदविषयेभोक्तृत्वाशंकाविज्ञानमात्रविषयावाकदाचिदुपपद्यते॥ ननुसंघातएवास्तुभोक्ताकिंव्यतिरिक्तकल्पनयेतिनापेषणेविशेषदर्शनात्॥ यदिहिप्राणशरीरसंघातमात्रोभोक्तास्यात्संघातमात्राविशेषात्तदाआपिष्टस्यानापिष्टस्यचप्रतिबोधेविशेषोनस्यात्॥ संघातव्यतिरिक्तेतुपुनर्भोक्तरिसंघातसंबंधविशेषानेकत्वात्पेषणापेषणकृतवेदनायाःसुखदुःखमोहमध्यमाधमोत्तमकर्मफलभेदोपपत्तेश्चविशेषोयुक्तः॥

गौरोहंपश्यामीत्यादिप्रत्यक्षेणतस्यात्मत्वदृष्टेरितिभावः॥ प्रमाणाभावादतिरिक्तकल्पनानयुक्तेत्याह॥ किंव्यतिरिक्तेति॥ संघातस्यात्मत्वंदूषयतिनापेषणइति॥ विशेषदर्शनंव्यतिरेकद्वाराविशदयतियदिहीति॥ प्राणेनसहितंस्थूलंशरीरमेवसंघातस्तन्मात्रोयदिभोक्तास्यादितियोजना॥ त्वत्पक्षेपिकथंपेषणापेषणयोरुत्थानेविशेषःस्यादित्याशंक्याहसंघातेति॥ तस्यसंघातेनसंबंधविशेषाःस्वकर्मारभ्यत्वात्मीयत्वस्वप्राणपरिपाल्यत्वादयस्तेषामनेकत्वात्पेषणापेषणयोरिंद्रियोद्भवाभिभवकृतवेदनायाःस्फुटत्वास्फुटत्वात्मकोविशेषोयुक्तः॥ सुखदुःखमोहानामुत्तममध्यमाधमकर्मफलानांकर्मोद्भवाभिभवकृतविशेषसंभवाच्चयथोक्तोविशेषःसंभवतीत्यर्थः॥

146

परपक्षेपि तथैव विशेषः स्यादित्याशंक्याह नत्विति॥ नहि तत्र स्वकर्मारब्धत्वादयः संबंधविशेषाः कर्मफलभेदो वा युज्यते संघातवादिनाऽतींद्रियकर्मा
नंगीकारात् अतः संघातमात्रे भोक्तरि प्रतिबोधविशेषासिद्धिरित्यर्थः॥ शब्दस्पर्शादीनां पटुत्वमतिपटुत्वं मांद्यमतिमांद्यमित्येवमादिना कृतो विशेषो बो
धे दृश्यते सोपि संघातवादे न सिध्यतीत्याह तथेति॥ अयुक्त इति यावत्॥ चकारो विशेषानुकर्षणार्थः॥ मा तर्हि प्रतिबोधे विशेषो भूदित्याशंक्याहास्ति

नतु संघातमात्रे संबंधकर्मफलभेदानुपपत्तेर्विशेषो युक्तः॥ तथा शब्दादिपटुमांद्यादिकृतश्च नास्ति चायं विशेषो यस्मात् स्पर्शमात्रेणाप्रति
बुध्यमानं पुरुषं सुप्तं पाणिना पेषमापिष्यापिष्य बोधयांचकार राजाजातशत्रुः॥ तस्माद्य आपेषणेन प्रतिबुबुधे ज्वलन्निव स्फुरन्निव कुतश्चिदा
गत इव पिंडं च पूर्वविपरीतं बोधचेष्टाकारविशेषादिमत्त्वेनापादयन् सोन्योस्ति गार्ग्याभिमतब्रह्मभ्यो व्यतिरिक्त इति सिद्धं॥ संहतत्वाच्च
पारार्थ्योपपत्तिः प्राणस्य गृहस्य स्तंभादिवत् शरीरस्यांतरुपष्टंभकः प्राणः शरीरादिभिः संहत इत्यवोचाम॥ अरनेमिवच्च नाभिस्थानीये एत
स्मिन् सर्वमिति च॥ तस्माद्गृहादिवत् स्वावयवसमुदायात्मजातीयव्यतिरिक्तार्थं संहन्यत इत्येवमवगच्छेमहि॥ स्तंभकुड्यतृणकाष्ठादि
गृहावयवानां स्वात्मजन्मोपचयापक्षयविनाशनामाकृतिकार्यधर्मनिरपेक्षलब्धसत्तादितद्विषयद्रष्टृश्रोतृमंतृविज्ञात्रर्थत्वं दृष्टमन्या
महे तत्संघातस्य च

चेति॥ विशेषदर्शनफलमाह तस्मादिति॥ आदिशब्देन गुणादिर्गृह्यते॥ अन्यः संघातादिति शेषः॥ देहादेरनात्मत्वमुक्त्वा प्राण
स्यानात्मत्वे हेत्वंतरमाह संहतत्वाच्चेति॥ हेतुं साधयति गृहस्येति॥ यथा नेमिरराश्च नाभिश्च संहन्यंते तथैव प्राणस्य संहतिरित्याहारनेमिवच्चेति॥ किंच प्राणे
नाभिस्थानीये सर्वं च समर्पितमिति श्रूयते तद्युक्तं तस्य संहतत्वमित्याह नाभीति॥ संहतत्वफलमाह तस्मादिति॥ प्राणस्य गृहादिवत् पारार्थ्येपि संहतशेषित्व
मेषितव्यं गृहादेस्तथादर्शनादित्याशंक्याह स्तंभेति॥ स्वात्मनां स्तंभादीनां जन्म चोपचयश्चापक्षयश्च विनाशश्च नाम चाकृतिश्च कार्यं चेत्येते धर्मास्तन्निरपेक्ष

तथालब्धसत्तास्फुरणंचयेनसंचलेष्वस्तंभादिषुविषयेषुद्रष्टाचश्रोताचमंताचविज्ञाताचतदर्थत्वंतेषांतत्संघातस्यचदृष्टं प्राणादीनामपितथात्वंभ
वितुमर्हतीतिमन्यामहइतिसंबंधः॥ प्राणादिःस्वातिरिक्तदृष्टृशेषः॥ संहतत्वात् गृहादिवदित्यनुमानात्सत्तायांतत्प्रतीतौचप्राणादिविक्रियानपेक्ष
तयासिद्धोद्रष्टानिर्विकारोयुक्तस्तस्यविकारवत्वेहेत्वभावादितिभावः॥ प्राणदेवतापारार्थ्यानुमानंत्वाश्रयांतरविरुद्धमितिशंकतेदेवतेति॥ प्राणदेव
तायाश्चेतनत्वमेवकथमभ्युपगतंतत्राहप्राणस्येति॥ तथापिप्रकृतेनुमानेकथंत्वाश्रयांतरविरोधस्तत्राहचेतनावत्वेचेति॥ योहियेनसमःसतच्छेषोन

तथाप्राणाद्यवयवानांतत्संघातस्यचस्वात्मजन्मोपचयापक्षयविनाशनामाकृतिकार्यधर्मनिरपेक्षलब्धसत्तादितद्विषयद्रष्टृश्रोतृमं
तृविज्ञात्रर्थत्वंभवितुमर्हतीति॥ देवताचेतनावत्वेसमत्वात्तद्गुणभावानुपगमइतिचेत् प्राणस्यविशिष्टैर्नामभिरामंत्रणदर्शनाच्चेतना
वत्वमभ्युपगतंचेतनावत्वेचपारार्थ्योपगमःसमत्वादनुपपन्नइतिचेत्॥ ननिरुपाधिकस्यकेवलस्यविजिज्ञापयिषितत्वात्॥ क्रियाका
रकफलात्मकताह्यात्मनोनामरूपोपाधिजनिताऽविद्याध्यारोपिताततन्निमित्तोलोकस्यक्रियाकारकफलाभिमानलक्षणःसंसारःसनिरु
पाधिकात्मस्वरूपविद्ययानिवर्तयितव्यइतितत्स्वरूपविजिज्ञापयिषयोपनिषदारंभः॥ ब्रह्मतेब्रवाणीतिनैतावताविदितंभवतीत्युप
क्रम्यैतावदरेखल्वमृतत्वमितिचोपसंहारात्॥ नचातोन्यदंतरालेविवक्षितमुक्तंवास्ति॥ भवतियथादीपोदीपांतरेणतुल्योनतच्छेषइति
व्याप्तिविरोधःस्यादित्यर्थः॥ नायंविरोधःसमाधातव्यःशेषशेषिभावस्यात्राप्रतिपाद्यत्वादितिपरिहरतिनिरुपाधिकस्येति॥ तदेवस्फुटयतिक्रियेत्या
दिना॥ उपनिषदारंभोनिरुपाधिकंस्वरूपंज्ञापयितुमित्यत्रगमकमाहब्रह्मेति॥ द्वेवावब्रह्मणोरूपेमूर्तंचैवामूर्तंचेत्यादिदर्शनादस्यामुपनिषदिसोपा
धिकमपिब्रह्मविवक्षितमित्याशंक्याह॥ नचेति॥ द्वित्ववादस्यकल्पितविषयत्वान्नेतिनेतीतिनिर्विशेषवस्तुसमर्पणादतोन्यदार्तमितिचोक्तेरत्रनिरुपा

शेषशेषिभावस्याप्रतिपाद्यत्वे फलितमाह तस्मादिति॥ किमर्थं तर्हि शेषशेषिभावस्तत्र तत्रोक्तस्तत्राह विशेषवतो हीति॥ सोपाधिकस्य शेषशेषिभावो वि वक्षितस्तत्र च स्वामिभृत्यन्यायेन विशेषसंभवादसिद्धं समत्वमित्यर्थः न च विपरीतस्य निरुपाधिकस्य शेषशेषित्वमस्तीत्यत्र हेतुमाह निरुपाख्यो ही ति॥ शेषशेषित्वाद्यशेषविशेषशून्य इत्यर्थः॥ पाणिपेषवाक्यविचारार्थं संक्षिप्योपसंहरत्यादित्यादीति॥ वृत्तमनूद्यानंतरग्रंथमवतार्य व्याचष्टे स एवमित्यादिना॥ एतत्त्वपनं यथा भवति तथेति यावत्॥ यत्रेत्युक्तं कालं विशिनष्टि प्रागिति॥ तदा क्वाभूदिति संबंधः॥ विज्ञानमय इत्यत्र विज्ञानं

तस्मादनवसरः समत्वाद्गुणभावानुपगमइतिचोद्यस्य॥ विशेषवतो हि सोपाख्यस्य संव्यवहारार्थो गुणगुणिभावो न विपरीतस्य निरुपा ख्यो हि विजिज्ञापयिषितः सर्वस्यामुपनिषदि स एष नेति नेतीत्युपसंहारात्॥ तस्मादादित्यादिब्रह्मभ्य एतेभ्योऽविज्ञानमयेभ्यो विलक्षणो न्योस्ति विज्ञानमय इति एतत्सिद्धं॥ स एवमजातशत्रुर्व्यतिरिक्तात्मास्तित्वं प्रतिपाद्य गार्ग्यमुवाच यत्रयस्मिन्काल एष विज्ञानमयः पुरुष ए तत्स्वपनं सुप्तोऽभूत्प्राक्पाणिपेषप्रतिबोधाद्विज्ञानं विज्ञायते अनेनेत्यंतःकरणं बुद्धिरुच्यते तन्मयस्तत्प्रायो विज्ञानमयः किं पुनस्तत्प्रा यत्वं॥ तस्मिन्नुपलभ्यत्वं तेन चोपलभ्यत्वमुपलब्धृत्वं च॥ कथं पुनर्मयटोऽनेकार्थत्वे प्रायार्थतैवावगम्यते॥ स वा अयमात्मा ब्रह्म विज्ञानम यो मनोमय इत्येवमादौ प्रायार्थ एव प्रयोगदर्शनात्॥ पर

परं ब्रह्म तद्धि कारो जीवस्तेन विकारार्थे मयडिति केचित्तं निराकरोति विज्ञानमिति॥ अं तःकरणप्रायत्वमात्मनो न कल्पते तस्यासंगस्य तेनासंबंधादित्याक्षिपति किं पुनरिति॥ असंगस्याप्याविद्यं बुद्ध्यादिसंबंधमुपेत्य परिहरति तस्मि न्निति॥ तत्प्राक्षित्वाच्च तत्प्रायत्वमित्याह उपलब्धृत्वं चेति॥ नियामकाभावं शंकित्वा परिहरति कथमित्यादिना॥ एकस्मिन्नेव वाक्ये पृथिवीमय इत्यादौ प्रायार्थत्वोपलंभाद्विज्ञानमय इत्यत्रापि तदर्थत्वमेव मयटो निश्चितमित्युक्तमिदानीं जीवस्य परमात्मरूपविज्ञानविकारत्वस्य श्रुतिस्मृत्योरप्रसिद्धत्वाच्च प्रा

अप्रसिद्धमपि विज्ञानविकारत्वं श्रुतिवशाद्दिदृक्षितमित्याशंक्याह य एष इति॥ य एष विज्ञानमय इत्यत्र विज्ञानमयस्यैषेति प्रसिद्धवदनुवादादप्रसिद्धविज्ञानविकारत्वं सर्वनामश्रुतिविरुद्धमित्यर्थः॥ जीवो ब्रह्मावयवस्तत्संदर्शो वा तदर्थो मयडित्याशंक्याहावयवेति॥ ब्रह्मणो निरवयवत्वश्रुतेः तस्यैव जीवरूपेण प्रवेशश्रवणाच्च प्रकृते वाक्ये मयटोऽवयवावयवार्थयोगान्निर्विषयत्वासंभवाच्च पारिशेष्यात्पूर्वोक्तप्रायार्थतैवेत स्वप्रत्येतव्येत्यर्थः॥ विज्ञानम

विज्ञानविकारत्वस्याप्रसिद्धत्वाद्य एष विज्ञानमय इति च प्रसिद्धवदनुवादात् अवयवोपमार्थयोश्चात्रासंभवात्पारिशेष्यात्प्रायार्थतैव॥
तस्मात्संकल्पविकल्पाद्यात्मकमंतःकरणं तन्मय इत्येतत् पुरुषः पुरिशयनात्॥ क्वैष तदाभूदिति प्रश्नः स्वभावविजिज्ञापयिषया॥ प्राक्प्रतिबोधात्क्रियाकारकफलविपरीतस्वभाव आत्मेति कार्याभावेन दिदर्शयिषितं॥ न हि प्राक्प्रतिबोधात्कर्मादिकार्यं सुखादि किंचन गृह्यते॥

स होवाचाजातशत्रुर्यत्रैष एतत्सुप्तोऽभूद्य एष विज्ञानमयः पुरुषः॥ क्वैष तदाभूत्कुत एतदागादिति तदु ह न मेने गार्ग्यः॥ १६॥

तस्मादकर्मप्रयुक्तत्वात्तथा स्वाभाव्यमेवात्मनोऽवगम्यते॥ यस्मिन् स्वाभाव्येऽभूद्यतश्च स्वाभाव्यात्प्रच्युतः स संसारिस्वभावविलक्षण इत्येतद्द्विवस्यायेष्ठतिगार्ग्यं प्रतिभानरहितं बुद्धिमुत्पादनाय॥ क्वैष तदाभूत्कुत एतदागादित्येतदुभयं गार्ग्येणैवं पृष्टमासीत्तथापि गार्ग्येणानष्टष्टमिति नोदास्ते जातशत्रुर्बोधयितव्य एवेति प्रवर्तते यपदार्थमुपसंहरति तस्मादिति॥ यत्रेत्यादिव्याख्यायवाक्यशेषमवतार्य तात्पर्यमाह क्वैष इति॥ स्वरूपज्ञापनार्थं प्रश्नप्रवृत्तिरित्येतत्प्रकटयति प्रागिति॥ कार्याभावे नेत्युक्तं व्यनक्ति न हीति॥ तस्मादित्यस्यैवार्थमाहाकर्मप्रयुक्तत्वादिति॥ किं तथा स्वाभाव्यमिति तदाह यस्मिन्निति॥ द्वितीयप्रश्नार्थं संक्षिपति यतश्चेति॥ उक्तेऽर्थे प्रश्नद्वयमुत्थापयत्येतदिति॥ तथा स्वाभाव्यमेवे

140

एतदित्यधिकरणमपादानंचगृह्यतेकिमितितंप्रत्युभयंपृच्छ्यते॥स्वकीयप्रतिज्ञांनिर्वोढुमित्यभिप्रेत्याहबुद्धीति॥ननुशिष्यत्वात्गार्ग्येणैवप्रष्टव्यंसचे
दज्ञत्वान्नपृच्छतितर्हिराज्ञस्तस्मिन्नौदासीन्यमेवयुक्तंतत्राहइत्येतदुभयमिति॥तदुहेत्यादिव्याकरोत्येवमिति॥एतदागमनंयथाभवतितथेतियावत्
तत्रक्रियापदयोर्यथाक्रमंवक्तुंप्रष्टुंचेत्याभ्यांसंबंधः॥१६॥कूटस्थचिदेकरसोयमात्मातत्रक्रियाकारकफलव्यवहारोवस्तुतोनास्तीतिविवक्षितार्थस्त

ज्ञापयिष्याम्येवेतिप्रतिज्ञातत्वादेवमसावुत्पाद्यमानोपिगार्ग्योयत्रैषआत्माभूत्प्राक्प्रबोधाद्यतश्चैतदागमनमागात्तदुभयंनव्युत्पेदेव
क्तुंप्रष्टुंवागार्ग्योहनमेनेनज्ञातवान्॥१७॥सहोवाचाजातशत्रुर्विवक्षितार्थसमर्पणाय॥यत्रैषएतत्सुप्तोभूद्यएषविज्ञानमयःपुरुषःक्वै
षतदाभूत्कुतएतदागादितियदपृच्छामतच्छृणुउच्यमानं॥यत्रैषएतत्सुप्तोभूत्तदातस्मिन्कालएषांवागादीनांप्राणानांविज्ञानेनांतः

सहोवाचाजातशत्रुर्यत्रैषएतत्सुप्तोभूद्यएषविज्ञानमयःपुरुषस्तदेषांप्राणानांविज्ञानेनविज्ञानमादाययएषोंतर्हृदयआ
काशस्तस्मिंछेतेतानियदागृह्णात्यथहैतत्पुरुषःस्वपितिनाम॥ करणगताभिव्यक्तविशेषविज्ञानेनोपाधिस्वभावजनितेनादाय
विज्ञानंवागादीनांस्वविषयगतसामर्थ्यंगृहीत्वायएषोंतर्मध्येहृदयेहृदयस्याकाशोयःआकाशशब्देनपरएवस्वआत्मोच्यतेतस्मिन्स्व
आत्मन्याकाशेशेतेस्वाभाविके स्यप्रकटीकरणार्थंप्रस्तुतंप्रश्नद्वयमनुवदतियत्रेति॥उपाधिरंतःकरणंतस्यस्वभावस्तदुपादानमज्ञानं॥तेनजनि
तमंतःकरणगतमभिव्यक्तंविशेषविज्ञानंचैतन्याभासलक्षणंतेनकरणेनेत्यर्थः॥वागादीनांस्वंस्वंविषयगतंप्रतिनियतंप्रकाशनसामर्थ्यंविज्ञानमि
त्यर्थः॥यएषोंतरितिप्रतीकमादायव्याचष्टेमध्यइति॥आकाशशब्दस्यभूताकाशविषयत्वमाशंक्याकाशोर्थांतरत्वादिव्यपदेशादितिन्यायेनाहाकाशश

हेतित्वदेहगतस्यभङ्गबाणविद्धिन्नस्याकाशस्यहस्तिदेहावच्छिन्नाकाशेनसहैकत्वंगतस्यलोहयोगादयस्कांतेनोद्धरणवत्कारणयोगात्कर्मभिरुद्धरणं॥तथाचश्रुतिः पुनश्चजन्मांतरकर्मयोगादित्या
स्वरूपेब्रह्मण्येवसुषुप्तस्यशयनंभूताकाशेतुनभवतीत्यत्रछांदोग्यश्रुतिसंमतिमाहश्रुत्यंतरेति॥कीदृगत्रस्वपनंविवक्षितमित्याशंक्याहलिंगेति॥
स्वापाधिकारेस्वाभाविकत्वमविद्यामात्रसंमिश्रत्वंसतिसंपद्यनविदुरित्यादिश्रुतेरितिद्रष्टव्यं॥तानियदेत्यादिवाक्यमाकांक्षापूर्वकमादत्तेयदेत्यादि
ना॥विज्ञानानितत्साधनानीत्येतत्॥पुरुषइतिप्रथमाषष्ठ्यर्थेऽतोवस्यत्यस्यपुरुषस्येति॥अश्वकर्णादिनाम्नोविशेषमाहगौणमेवेति॥गौणत्वमुसा

ऽसंसारिकेनकेवलआकाशएवमुख्यंतरसामर्थ्यात्सतासोम्यतदासंपन्नोभवतीति॥लिंगोपाधिसंबंधकृतंविशेषात्मस्वरूपमुत्सृज्या
विशेषेस्वाभाविकआत्मन्येवकेवलेवर्ततइत्यभिप्रायः॥यदाशरीरेंद्रियाध्यसतामुत्सृजतितदासोस्वात्मनिवर्त्ततइतिकथमवगम्यते
नामप्रसिध्याकासेनामप्रसिद्धिरित्याहतानिवागादिविज्ञानानियदायस्मिन्कालेगृह्णात्यादत्तेऽथतदाहएतत्पुरुषःस्वपितिनामएतन्ना

तद्गृहीतएवप्राणोभवतिगृहीतावाग्गृहीतंचक्षुर्गृहीतंश्रोत्रंगृहीतंमनः॥१७॥

मास्यपुरुषस्यतदाप्रसिद्धंभवति॥गौणमेवास्यनामभवतिस्वमेवात्मानमपीत्यपिगच्छतीतिस्वपितीत्युच्यते॥सस्वंस्वपितीतिना
मप्रसिध्यात्मनःसंसारधर्मविलक्षणंरूपमवगम्यतेनत्वत्रयुक्तिरस्तीत्याशंक्याह॥तत्तत्रस्वापकालेगृहीतएवप्राणोभवतिप्राणइ
तिघ्राणेंद्रियंवागादिप्रकरणात्वागादिसंबंधेहिसतितदुपाधित्वादस्यसंसारधर्मित्वंलक्ष्यते॥वागादयश्चोपसंहृताएवतदातेन॥कथं॥

दयतिस्वमेवेति॥नाम्नोर्थव्यभिचारस्यापिदृष्टत्वात्तदृशान्नस्वापेस्वरूपावस्थानमितिशंकामनूद्यतत्गृहीतएवेत्यादिवाक्यमस्याप्यव्याचष्टे॥सत्यमि
त्यादिना॥कापुनरात्मनःस्वापावस्थायामसंसारिस्वरूपेवस्थानमित्यत्रयुक्तिरिहोक्ताभवतितत्राहवागादीति॥तदासुषुप्तावस्थायांतेनात्मनाचैतन्या

यथाघटतीतिघटइत्यादिषु २ पुरुषे १

स्वापेकरणोपसंहारं विवृणोति कथमित्यादिना॥ तदुपसंहारफलं कथयति तस्मादिति॥ १७॥ अन्वयव्यतिरेकाभ्यां वागाद्युपाधिकमात्मनः संसारित्वमु
क्तं तत्र व्यतिरेकासिद्धिमाशंकते नन्विति॥ व्यतिरेकासिद्धौ फलितमाह तस्मादिति॥ स्वप्नस्य रज्जुसर्पादिवन्मिथ्यात्वेन वस्तुधर्मत्वाभावान्नात्म

गृहीता वाक् गृहीतं चक्षुर्गृहीतं श्रोत्रं गृहीतं मनः॥ तस्मादुपसंहृतेषु वागादिषु क्रियाकारकफलात्मताभावात् स्वात्मस्थ एवात्माभव
तीत्यवगम्यते॥ १७॥ ननु दर्शनलक्षणायां स्वप्नावस्थायां कार्यकरणवियोगेऽपि संसारधर्मित्वमस्य दृश्यते यथा च जागरिते सुखी दुःखी
बंधुवियुक्तः शोचति मुह्यते च तस्माच्छोकमोहधर्मवानेवायं नास्य शोकमोहादयः सुखदुःखादयश्च कार्यकरणसंयोगजनितभ्रान्त्याध्यारो
पिता इति॥ न मृषात्वात्॥ स प्रकृत आत्मा यत्र यस्मिन्काले दर्शनलक्षणया स्वप्न्यया स्वप्नवृत्त्या चरति वर्तते तदा ते हास्य लोकाः कर्मफलानि

स यत्रैतत्स्वप्न्यया चरति ते हास्य लोकास्तदुतेव महाराजो भवत्युतेव महाब्राह्मण उतेवोच्चावचं निगच्छति॥

केते तत्र उत अपि महाराज इव भवति सोऽयं महाराजत्वमिवास्य लोको न महाराजत्वमेव जागरित इव तथा महाब्राह्मण इव उत अपि उच्चाव
चं उच्चं देवत्वाद्यवचं च तिर्यक्त्वादि उच्चमिवावचमिव च निगच्छति॥ मृषैव महाराजत्वादयोऽस्य लोका इवशब्दप्रयोगाद्व्यभिचारदर्शनाच्च॥ त
स्माद्बंधुवियोगादिजनितशोकमोहादिभिः स्वप्ने संबध्यत एव॥ ननु च यथा जागरिते जाग्रत्काला न:संसारित्वं इत्युत्तरमाह न मृषात्वादि

ति॥ तदुपपादयन्नादौ स यत्रेत्यादीन्यक्षराणि योजयति स प्रकृत इत्यादिना॥ अथात्र स्वप्नस्वभावो निर्दिश्यते तेन तस्य मिथ्यात्वं कथ्यते तत्राह मृषैवेति॥
स्वप्ने दृष्टानां महाराजत्वादीनां जाग्रत्स्वनुवृत्तिराहित्यं व्यभिचारदर्शनं स्वप्नस्य मिथ्यात्वे सिद्धमर्थमाह तस्मादिति॥ विमता लोका न मिथ्या तत्कालाव्यभिचा

२ देहद्वयात्मनो विवेचनमात्रेण गतार्थत्वात्पाणिवाक्यगतस्य जागरितस्य स्वप्नस्य त्वं प्रति वस्तुतो संतमपि २ जगन्मिथ्यात्वेन पाणिपेषणवाक्ये २

साध्यवैकल्यं वक्तुं सिद्धांती पाणिपेषवाक्योक्तं स्मारयति ननु चेति ॥ जाग्रल्लोकस्य मिथ्यात्वे फलितमाह तत्कथमिति ॥ प्रादुर्भावे जाग्रल्लोकस्य कर्त्तृत्वं प्राक रणिकमेष्टव्यं तत्र पूर्ववादी दृष्टांतं साधयति सत्यमित्यादिना ॥ अन्वयव्यतिरेकाख्यो न्यायः ॥ देहद्वयस्यात्मनश्च विवेकमात्रं प्रागुक्तं न तु प्राधान्येनात्मनः शु द्धिरुक्तेति विभागमंगीकृत्य वस्तुतोऽसंतमपि दृष्टांतं संतं कृत्वा तेन स्वप्नसत्यत्वमाशंक्य तन्निरासेनात्यंतिकी शुद्धिरात्मनः स्वप्नवाक्येनोच्यते ॥ तथा च

ऽव्यभिचारिणो लोका एवं स्वप्नेऽपि तेऽस्य महाराजत्वादयो लोकाः स्वप्नकालभाविनः स्वप्नकालाऽव्यभिचारिणः आत्मभूता एव न त्वविद्याध्या रोपिता इति ॥ ननु च जाग्रत्कार्यकरणात्मकत्वं देवतात्मत्वं चाविद्याध्यारोपितं न परमार्थतइति व्यतिरिक्तविज्ञानमयात्मप्रदर्शनेन प्रदर्शि तं ॥ तत्कथं दृष्टांतत्वेन स्वप्नलोकस्य मृतइवोज्जीविष्यन्प्रादुर्भविष्यति ॥ सत्यं विज्ञानमये व्यतिरिक्ते कार्यकरणदेवतात्मत्वदर्शनमविद्या ध्यारोपितं शुक्तिकायामिव रजतत्वदर्शनमित्येतत्सिध्यति व्यतिरिक्तात्मास्तित्वप्रदर्शनन्यायेनैव न तु तच्छुद्धिपरतयैव न्याय उक्त इ त्यसन्नपि दृष्टांतो जाग्रत्कार्यकरणदेवतात्मत्वदर्शनलक्षणः पुनरुद्भाव्यते ॥ सर्वो हि न्यायः कंचिद्विशेषमपेक्षमाणोऽपुनरुक्तो भव ति ॥ न तावत्स्वप्ने अनुभूतमहाराजत्वादयो लोका आत्मभूता आत्मनोऽन्यस्य जाग्रत्स्वप्नेति विंबभूतस्य लोकस्य दर्शनात् महाराज एव तावद्व्यस्तसुप्तासुप्रकृतिषु पर्यंके शयानः स्वप्नान्पश्यन्नुपसंहृतकरणः पुनरुपगतप्रकृतिं महाराजमिवात्मानं जागरितइव पश्यति ॥

च्य २ सेत्र ज्ञात् २ संस्कारस्य २ स्वप्ने २

जाग्रतोऽपि तथा मिथ्यात्वादात्मैकरसः शुद्धः स्यादित्याशयवानाह इत्यसन्नपीति ॥ पाणिपेषवाक्ये जाग्रन्मिथ्यात्वोक्त्यार्थादुक्ताशुद्धिरत्रापि सैवोच्यते चेत्पु नरुक्तिरित्याशंक्याह सर्वो हीति ॥ यत्किंचित्साम्यात्पौनरुक्त्यं सर्वत्र तुल्यमवांतरभेदादपौनरुक्त्यं प्रकृतेऽपि समं पूर्वत्र शुद्धिद्वारस्यार्थिकत्वादिह वाचनि कत्वादिति भावः ॥ जाग्रद्दृष्टांतेन स्वप्नसत्यत्वचोद्यसंभवाद्वाचस्तस्य समाधिरिति पूर्ववादिमुखेनोक्तां समाधिमधुनाकथयति न तावदिति ॥ विमतान द्रष्टुरा

स्वप्नलोकस्य दृष्टांतत्वेन जाग्रल्लोकः कथं प्रादुर्भविष्यति तत्र दृष्टांतः मृतइवोज्जीविष्यन् १ रागेच्छासुखदुःखादिबुद्धेः सत्त्वात्प्रवर्ततेसुषुप्ते नास्ति तन्नाशे तस्माद्बुद्धेस्तु नात्मन इति स्मरणे १



१५०

बृ.र. १४ पं०१

दर्शनात्१

किंचस्वप्नदृष्टानांजाग्रद्दृष्टाद्दर्शांतरत्वेनदृष्टेर्मिथ्यात्वमित्याहमहाराजइति॥तेषांजाग्रद्दृष्टाद्दर्शांतरत्वमसिद्धमित्याशंक्याहनचेति॥प्रमाणसामग्र्यभावा
च्चस्वप्नस्यमिथ्यात्वमित्याहनचेति॥योग्यदेशाभावाच्चतन्मिथ्यात्वमित्याहनचेति॥देहाद्बहिरेवस्वप्नदृष्टंगीकाराद्योग्यदेशसिद्धिरित्याशंक्याहदे

र्घमागतंभुंजानमिवचभोगान्॥नचतस्यमहाराजस्यपर्यंकेशयानात्द्वितीयोन्यःप्रकृत्युपेतोविषयेपर्यटन्नहनिलोकेप्रसिद्धोस्तिय
स्मैसौसुप्तःपश्यति॥नचोपसंहृतकरणस्यरूपादिमतोदर्शनमुपपद्यतेनचदेहेदेहांतरस्यतत्तुल्यस्यसंभवोस्तिदेहस्यसैवहिस्वप्नद
र्शने॥ननुपर्यंकेशयानःपथिप्रवृत्तमात्मानंपश्यति॥नबहिःस्वप्नान्पश्यतीत्येतदाह॥समहाराजोजानपदान्जनपदेभवान्राजो

सयथामहाराजोजानपदान्गृहीत्वास्वेजनपदेयथाकामंपरिवर्त्ततैवमेवैषएतत्प्राणान्गृहीत्वास्वेशरीरेयथाकामंप
रिवर्त्तते।१८॥

पक्षरणभूतान्भृत्यानन्यांश्चगृहीत्वोपादायस्वआत्मीयएवजयादिनोपार्जितेजनपदेयथाकामंयोयःकामोऽस्यय
थाकाममिच्छातोयथापरिवर्त्ततेतत्यर्थः॥एवमेवएषविज्ञानमयःएतदितिक्रियाविशेषणंप्राणान्गृहीत्वाजागरितस्थानेभ्यःउपसंहृ
त्यस्वेशरीरेस्वएवदेहेनबहिर्यथाकामंपरिवर्त्तते॥कामकर्मभ्यामुद्भासिताःपूर्वानुभूतवस्तुसदृशीर्वासनाअनुभवतीत्यर्थः॥तस्मात्स्व
प्नेमृषाध्यारोपिताएवात्मभूतत्वेनलोकाअविद्यमानाएवसंतस्तथाजागरितेपीतिमंतव्यं॥ हस्यस्येति॥एतदेवसाधयितुंशंकतेनन्विति॥

तत्रसयथेत्यादिवाक्यमुत्तरत्वेनावतार्यव्याचष्टेनबहिरित्यादिना॥यथाकामंतंतमनतिक्रम्येत्यर्थः॥एतदितिक्रियायाःग्रहणस्यविशेषणमेतत्ग्रहणंय
थाभवतितथेत्यर्थः॥परिवर्त्ततेनमेवविवृणोतिकामेति॥योग्यदेशाभावेसिद्धेसिद्धमर्थंदर्शयतितस्मादिति॥स्वप्नस्यमिथ्यात्वेतद्दृष्टांतत्वेनजडत्वादिहेतुनाजाग

अ: रामः १४

लौँकि४

हृयोर्मिथ्यात्वेप्रतीचोविशुद्धिःसिद्धेत्युपसंहरतितस्मादिति॥अक्रियाकारकफलात्मकइतिविशेषणंसमर्थयतेयस्मादिति॥जागरितंदृष्टांतीकृत्यदा
र्ष्टांतिकमाह॥तथेति॥द्रष्टृदृश्याभावेसिद्धेफलितमाहतस्मादिति॥अन्यच्चफलंकथयतिविशुद्धइति॥१८॥वृत्तानुवादपूर्वकंउत्तरश्रुतिनिरस्यामा

तस्माद्विशुद्धोऽक्रियाकारकफलात्मकोविज्ञानमयइत्येतत्सिद्धं॥यस्मात्दृश्यंतेद्रष्टुर्विषयभूताःक्रियाकारकफलात्मकाःकार्यकरण
लक्षणालोकाःतथास्वप्नेपितस्मादन्योसौदृश्येभ्यःस्वप्नजागरितलोकेभ्योद्रष्टाविज्ञानमयोविशुद्धः॥१८॥दर्शनवृत्तौस्वप्नेवासनारा
शेर्दृश्यत्वादतद्धर्मतेतिविशुद्धतावगतात्मनः॥तत्रयथाकामंपरिवर्त्ततइतिकामवशात्परिवर्त्तनमुक्तं॥द्रष्टृदृश्यसंबंधश्चास्यस्वाभा

अथयदासुषुप्तोभवतियदानकस्यचनवेदहितानामनाड्योद्वासप्ततिसहस्राणिहृदयात्पुरीततमभिप्रतिष्ठंते ॥

विकइत्यशुद्धताशंक्यतेअतस्तद्विशुद्ध्यर्थमाह॥अथयदासुषुप्तोभवति॥यदास्वप्नयाचरतितदाप्ययंविशुद्धएव॥अथपुनर्यदाहि
त्वादर्शनवृत्तिंस्वप्नंयदायस्मिन्कालेसुषुप्तःसंप्रसादंस्वाभाव्यगतोभवतिसलिलमिवान्यसंबंधकालुष्यंहित्वास्वाभाव्येनप्रसीदति॥क
दासुषुप्तोभवति॥यदायस्मिन्कालेनकस्यचननकिंचनेत्यर्थःवेदविजानातिकस्यचनवाशब्दादेःसंबंधिवस्त्वंतरंकिंचननवेद
त्यध्याहार्यं॥पूर्वंतुन्याय्यंविशेषज्ञानाभावस्यविवक्षितत्वात्॥एवंतावद्विशेषविज्ञानाभावेसुषुप्तोभवतीत्युक्तं शंकामाहदर्शनवृत्तावित्या

दिना॥तत्रेतिस्वप्नोक्तिः॥कामादिसंबंधश्चकारार्थः॥निवर्त्यशंकासद्भावान्निवर्त्तिकानंतरश्रुतिप्रवृत्तिंप्रतिजानीते॥अतइति॥स्वप्नेपिशुद्धिरुक्ताकिंसुषु
प्तिग्रहणेनेत्याशंक्याह॥यदेति॥गतोभवतितदासुतरामस्यशुद्धिःसिद्ध्यतीतिशेषः॥तमेवसुषुप्तिकालंप्रश्नपूर्वकंप्रकटयतिकदेति॥विकल्पंव्यावर्त्तयतिपूर्वं

नकस्यचनइत्यस्यनकिंचनवेदइत्येवंन्याय्य३ ५सुषुप्तः

१ विस्तारतः संख्या नाडीनां ७२७२१०२०१ मध्यमतः संख्या ७२००० संक्षेपतः १०१ पूषालंबुषा हस्तिजिह्वा गांधारी सरस्वती इडा पिंगला सुषुम्ना पयस्विनी विश्वोदरी शङ्खा शंखिनी कुहू राका सिनी



हितफलप्राप्तिनिमित्तत्वान्नाड्यो हिता उच्यंते तासां देहसंबंधानामन्वयव्यतिरेकाभ्यामन्नरसविकारत्वमाहान्नेति॥ तासामेवं मध्यमसंख्यां कथयति ताश्चे ति॥ तासां च हृदयसंबंधिनीनां ततो निर्गत्य देहव्याप्त्या बहिर्मुखत्वमाह हृदयादिति॥ ताभिरित्यादि व्याकर्तुं भूमिकां करोति तत्रेति॥ शरीरं सप्तम्यर्थः शरी

केन पुनः क्रमेण सुषुप्तो भवतीत्युच्यते हिता नाम हिता इत्येवं नाम्न्यो नाड्यः शिरा देहस्यान्नरसविपरिणामभूतास्ताश्च द्वासप्ततिसहस्रा णि द्वे सहस्रे अधिके सप्ततिश्च सहस्राणि ताः द्वासप्ततिसहस्राणि नाडीनां हृदयात् हृदयं नाम मांसपिंडस्तस्मान्मांसपिंडात्पुंडरीकाका रात् पुरीततं हृदयपरिवेष्टनमाचक्षते तदुपलक्षितं शरीरमिह पुरीतत् ऊर्द्ध्वेनाभिप्रेतं पुरीततमभिप्रतिष्ठंत इति शरीरं कृत्स्नं व्याप्नुवंत्यो श्वत्थपर्णराजय इव बहिर्मुखाः प्रवृत्ता इत्यर्थः॥ तत्र बुद्धेरंतःकरणस्य हृदयं स्थानं तत्रस्थबुद्धितंत्राणि चेतराणि बाह्यानि करणानि

ताभिः प्रत्यवसृप्य पुरीतति शेते ॥

तेन बुद्धिः कर्मवशात् श्रोत्रादीनि ताभिर्नाडीभिर्मत्स्यजालवत् कर्णशष्कुल्यादिस्थानेभ्यः प्रसारयति प्रसार्य चाधितिष्ठति जागरितकाले तां विज्ञानमयोऽभिव्यक्तस्वात्मचैतन्यावभासतया व्याप्नोति संकोचनकाले च तस्या अनु संकुचति सोऽस्य विज्ञानमयस्य स्वापो जाग्र द्विकाशानुभवो भोगो बुद्ध्युपाधिस्वभावानुविधायी हि सः चंद्रादिप्रतिबिंब इव जलाद्यनुविधायी तस्मात्तस्या बुद्धेः जाग्रद्विषयायास्ता भिर्नाडीभिः प्रत्यवसर्पणमनु प्रत्यवसृप्य पुरीतति शरीरे शेते तिष्ठति

रे करणानां बुद्धितंत्रत्वे किं स्यादिति तदाह तेनेति॥ तथापि जीवस्य किमा यत्तमित्याशंक्याह सोऽयं विज्ञानमय इति॥ भोगशब्दो जागरविषयः बुद्धिविकारमनुभवन्नात्मा जागर्तीत्युच्यते तत्संकोचं चानुभवन् स्वपितीत्यत्र हेतु वाली॥ तासामपि इडापिंगलासुषुम्ना॥ तासामपि सुषुम्ना॥ १

बुद्ध्यनुविधायित्वं परामृश्यताभिरित्यादिव्याचष्टे तस्मादिति॥ प्रत्यवसर्पणं व्यावर्त्तनं पदार्थमुक्त्वा वाक्यार्थमाह तप्तमिवेति॥ कर्मत्वे देहस्य कर्त्तृत्वे चात्मनो दृष्टांतौ द्वयं॥ हृदयाकाशे ब्रह्मणि शेते विज्ञानात्मेत्युक्तोपरीतातिशयनमाचक्षाणस्य पूर्वापरविरोधः स्यादित्याशंक्याह स्वाभा

तप्तमिव लोहपिंडमविशेषेण संव्याप्याग्निवच्छरीरं संव्याप्य वर्त्तत इत्यर्थः॥ स्वाभाविक एव स्वात्मनि वर्त्तमानोपि कर्मानुगतबुद्ध्यनुवृत्ति त्वात्पुरीततिशेत इत्युच्यते॥ नहि सुषुप्तकाले शरीरसंबंधोस्ति तीर्णोहि तदा सर्वान् शोकान् हृदयस्येति हि वक्ष्यति॥ सर्वसंसारदुःखवियु क्तेयमवस्थेति॥ अत्र दृष्टांतः॥ सयथा कुमारो वात्यंतबालो वा महाराजो वात्यंतवश्यप्रकृतिर्यथोक्तकृन्महाब्राह्मणो वात्यंतपरिपक्वविद्या विनयसंपन्नोतिघ्नीमतिशयेन दुःखं हंतीति अतिघ्नी आनंदस्यावस्था सुखावस्थां तां प्राप्य गत्वा शयीतावतिष्ठेत॥ एषां च कुमारादीनां स्वभा

सयथा कुमारो वा महाराजो वा महाब्राम्हणो वातिघ्नीमानंदस्य गत्वा शयीतैवमेवैष एतच्छेते॥१९॥

वावस्थानां सुखं निरतिशयं प्रसिद्धं लोके॥ विक्रियमाणानां हि तेषां दुःखं न स्वभावतस्तेन तेषां स्वाभाविक्यवस्था दृष्टांतत्वेनोपादीयते प्रसिद्धत्वान्न तेषां स्वाप एवाभिप्रेतः स्वापस्य दार्ष्टांतिकत्वेन विवक्षितत्वात्॥ विशेषाभावाच्च विशेषे हि सति दृष्टांतदार्ष्टांतिकभेदः स्यात्॥ तस्मान्न तेषां स्वापो दृष्टांतः एवमेव यथायं दृष्टांतः एष विज्ञानमयः एतच्छयनं शेत इत्येतच्छब्दः क्रियाविशेषणार्थः॥ एवमयं स्वाभाविके स्व आत्मनि सर्वसंसारधर्मातीतो वर्त्तते स्वापकाल इति॥ विकइति॥ औपचारिकमिदं वचनमित्यत्र हेतुमाह नहीति॥ इयमवस्थेति प्रकृता सुषुप्तिरु च्यते॥ उक्तेषु दृष्टांतेषु विवक्षितमंशं दर्शयत्येषां चेति॥ दुःखमपि तेषां प्रसिद्धमित्याशंक्याह विक्रियमाणानां हीति॥ कुमारादि स्वापस्यैव दृष्टांतत्वं किं न स्या

उत्तरार्थ ६

बृ.र. १६

तत्त्वापत्त्यदृष्टांतत्वमस्मत्स्वापस्य दार्ष्टांतिकत्वमिति विभागमाशंक्याह विशेषाभावादिति॥ क्वैष तदाभूदिति प्रश्नस्योत्तरमुपपादितमुपसंहरति एवमिति॥ स यथेत्यादिः संगतिं वक्तुं वृत्तं कीर्तयति क्वैष इति॥ किं पुनराद्यप्रश्ननिर्णयेन फलितमिति॥ त्वंपदार्थशुद्धिरित्याहानेनेति॥ शुद्धिद्वारा ब्रह्मत्वं च तस्योक्तमित्या हासंसारित्वं चेति॥ उत्तरग्रंथस्य तात्पर्यमाह कुत इति॥ पूर्वेणोत्तरस्य गतार्थत्वं शंकते नन्विति॥ स्थित्यवधेरेव निर्द्धारितत्वादागत्यवधेर्निर्द्धिधारयिषया प्रश्ने प्रतिवचनं सावकाशमित्याशंक्याह तथासतीति॥ अपौरुषेयी श्रुतिरशेषदोषशून्यत्वान्नातिशंकनीयेति सिद्धांती गूढाभिसंधिराह किं श्रुतिरिति॥ नन्व

क्वैष तदाभूदित्यस्य प्रश्नस्य प्रतिवचनमुक्तं॥ अनेन च प्रश्ननिर्णयेन विज्ञानमयस्य स्वभावतो विशुद्धिरसंसारित्वं चोक्तं॥ कुत एतदागादित्य स्य प्रश्नस्यापाकरणार्थं आरंभः॥ ननु यस्मिन्ग्रामे नगरे वा यो भवति सोन्यत्र गच्छन्ततस्तस्मादेव ग्रामान्नगराद्वागच्छति नान्यतः तथा सति क्वैष तदाभूदित्येतावानेवास्तु प्रश्नो यत्राभूत्तत एवागमनं प्रसिद्धं स्यान्नान्यत इति कुत एतदागादिति प्रश्नो निरर्थक एव॥ किं श्रुतिरुपालभ्य ते भवतान किं तर्हि द्वितीयस्य प्रश्नस्यार्थांतरं श्रोतुमिच्छाम्यत आनर्थक्यं चोदयामि॥ एवं तर्हि कुत इत्यपादानार्थतां न गृह्यते ऽपादानार्थत्वे हि पुनरुक्ततानान्यार्थत्वे अस्तु तर्हि निमित्तार्थः प्रश्नः कुत एतदागात् किं निमित्तमिहागमनमिति॥ न निमित्तार्थतापि प्रतिवचनवैरूप्या त्॥ आत्मनश्च सर्वस्य जगतो अग्निविस्फुलिंगादिवदुत्पत्तिः प्रतिवचने श्रूयते॥ न हि विस्फुलिंगानां विद्रवणेऽग्निर्निमित्तमपादानमेव तु सः॥

तिराक्षिप्यते निर्दोषत्वादिति पूर्ववाद्याह नेति॥ श्रुतेरनासेयत्वदीयं चोद्यं निरवकाशमित्याह किं तर्हीति॥ तस्य सावकाशत्वं पूर्ववादी साधयति द्वितीयस्येति॥ पूर्ववादिनं प्रत्यपादानादर्थांतरे पंचम्याः प्रयुज्यमाणे सत्येकदेशी ब्रवीत्येवं तर्हीति॥ कथमन्यार्थत्वं तदाहास्त्विति॥ तर्हि तस्यामपादानार्थत्वेन पुनरुक्ततावस्था यामित्यर्थः॥ एकदेशिनं पूर्ववादी दूषयति नेति॥ अपादानार्थतावदित्यपेरर्थः॥ तदेव स्फुटयत्यात्मनश्चेति॥ जगतः सर्वस्य चेतनस्याचेतनस्य वेति वक्तुं च

वृत्तं २

अ. ४

॥ ६॥

रामः १६

तर्हि भवत्वपादानार्था पंचमीत्याशंक्य पूर्ववादी पूर्वोक्तं स्मारयति नन्विति॥ सर्वाविद्यातज्जनिर्मुक्तं प्रत्यगद्वयं ब्रह्म प्रश्नद्वयव्याजेन प्रतिपिपादयिषितमिति न पुनरुक्तिरिति सिद्धांती स्वाभिसंधिमुद्घाटयति नैष दोष इति॥ यथोक्तं वस्तु प्रश्नाभ्यां विवक्षितमिति कुतो ज्ञातमित्याशंक्य तदुक्तं तार्तीयमर्थमनुवद

तथा परमात्मा विज्ञानमयस्यात्मनोपादानत्वेन श्रूयतेऽस्मादात्मन इत्येतस्मिन्वाक्ये तस्मात्प्रतिवचनवैलोम्यात् कुत इति प्रश्नस्य निमित्तार्थता न शक्या वर्णयितुं॥ नन्वपादानपक्षेपि पुनरुक्तता दोषो व्यवस्थित एव॥ नैष दोषः॥ प्रश्नाभ्यामात्मनि क्रियाकारकफलात्मतापोहस्य विवक्षितत्वात्॥ इह हि विद्याऽविद्याविषयावुपन्यस्तौ॥ आत्मेत्येवोपासीतात्मानमेवावेदात्मानमेव लोकमुपासीतेति विद्याविषयः॥ तथाऽविद्याविषयश्चापांक्तं कर्म तत्फलं चान्नत्रयं नामरूपकर्मात्मकमिति॥ तत्राविद्याविषये वक्तव्यं सर्वमुक्तं विद्याविषयस्त्वात्मा केवल उपन्यस्तो न निर्णीतः॥ तन्निर्णयाय च ब्रह्म ते ब्रवाणीति प्रक्रांतं ज्ञपयिष्यामीति च तद्ब्रह्म विद्याविषयभूतं ज्ञापयितव्यं याथात्म्यतः॥ तस्य च याथात्म्यं क्रियाकारकफलभेदशून्यमसंतविशुद्धमद्वैतमित्येतद्विवक्षितमतस्तदनुरूपौ प्रश्नावुत्थाप्येते श्रुत्या क्वैष तदाभूत् कुत एतदागादिति॥ तत्र यत्र भवति तदधिकरणं यद्भवति तदधिकर्तव्यं तयोश्चाधिकरणाधिकर्तव्ययोर्भेदो दृष्टो लोके॥ तथा यत आगच्छति तदपादानं य आगच्छति स कर्ता तस्मादन्यो दृष्टस्तथात्माक्वाप्यभूदन्यस्मिन्नन्यः कुतश्चिदागादन्यस्मादन्यः केनचित्साधनांतरेणेत्येवं लोकवत्प्राप्ता बुद्धिः॥ सा प्रतिवचनेन निवर्तयितव्येति॥ तदिहेति॥ विद्याविषयनिर्णयस्य कर्तव्यत्वमत्र न प्रतिभातीत्याशंक्याह तन्निर्णयाय चेति॥ अन्यथा प्रक्रमभंगः स्यादिति भावः॥ किं तद्याथात्म्यं तदाह तस्य चेति॥ कथं यथोक्तयाथात्म्याख्यानोपयोगित्वं प्रश्नयोरित्याशंक्य तयोः श्रौतमर्थमाह तत्रेति॥ प्रश्नप्रवृत्तिमुक्त्वा प्रतिवचनप्रवृत्तिमाह सेति॥ निवर्तयितव्येति तत्प्रवृत्तिरिति शेषः॥

153

संप्रतिप्रतिवचनयोस्तात्पर्यमाहनायमिति॥स्वात्मन्येवाभूदित्यत्रप्रमाणमाहस्वमात्मानमिति॥सुषुप्तेस्वात्मन्येवस्थितिरतःशब्दार्थः॥प्रबोधदशायामा त्मनएवागमनापादानत्वमित्यत्रमानत्वेनानंतरश्रुतिमुत्थापयतितकुत्रैवेति॥स्थित्यागत्योरात्मनएवावधित्वमित्यत्रोपपत्तिमाहात्मेति॥वस्त्वं तराभावस्यासिद्धिंशंकित्वादूषयतिनन्वित्यादिना॥१८॥क्रियावतोमृदादेर्घटाद्युत्पत्तिदर्शनात्ब्रह्मणोःक्रियत्वात्ततोनप्राणाद्युत्पत्तिरितिशंक्

नायमात्माऽन्योऽन्यत्रभूदन्योवान्यस्मादागतःसाधनांतरंवात्मन्यस्तिकिंतर्हिस्वात्मन्येवाभूत्स्वमात्मानमपीतोभवतिसतासोम्यतदा संपन्नोभवतिप्राज्ञेनात्मनासंपरिष्वक्तःपरेआत्मनिसंप्रतिष्ठितइत्यादिश्रुतिभ्यः॥अतएवनान्योन्यस्मादागच्छति॥तकुत्रैवप्रदर्श्यते अस्मादात्मनइत्यात्मव्यतिरेकेणवस्त्वंतराभावात्॥नन्वस्तिप्राणाद्यात्मव्यतिरिक्तंवस्त्वंतरं॥नप्राणादेस्ततएवनिष्पत्तेः॥१९॥तत्कथमित्यु

सयथोर्णनाभिस्तंतुनोच्चरेद्यथाग्नेःक्षुद्राविस्फुलिंगाव्युच्चरंत्येवमेवास्मादात्मनःसर्वेप्राणाःसर्वेलोकाःसर्वेदेवाःसर्वा णिभूतानिव्युच्चरंतितस्योपनिषत्सत्यस्यसत्यमितिप्राणावैसत्यंतेषामेषसत्यं॥२०॥प्रथमंब्राह्मणं॥१॥

च्यते॥तत्रदृष्टांतः॥स यथालोकेऊर्णनाभिः॥ऊर्णनाभिर्लूताकीटएकएवप्रसिद्धःसन्स्वात्माप्रविभक्तेनतंतुनाउच्चरेदुद्गच्छेन्नचास्तितस्योद्गमनेस्वतोतिरिक्तंकारकां तरं॥यथाचैकरूपादेकस्मादग्नेःक्षुद्राअल्पाविस्फुलिंगास्तदग्न्यवयवाव्युच्चरंतिविविधंनानाव्युच्चरंति ॥ यथेमौदृष्टांतौकारकभेदाभा वेपिप्रवृत्तिंदर्शयतःप्राक्प्रवृत्तेश्वस्वभावतएकत्वमेवमेवास्मादात्मनोविज्ञानमयस्यप्राक्प्रतिबोधात्यत्स्वरूपंतस्मादित्यर्थः॥ नेतत्कथमिति॥ सृष्टेर्मायामयत्वमाश्रित्यश्रुत्यापरिहरतिउच्यतइति॥स्वात्माःप्रविभक्तेनेत्युक्तमन्वयव्यतिरेकद्वारास्फोरयतिनचेति॥असहायस्यकारणत्वेदृष्टांतमुक्त्वाकू

माध्यंदिनश्रुतिमाश्रित्याहसर्वएतइति॥ तस्येत्याद्यवतार्यव्याचष्टे यस्मादित्यादिना॥ ननुप्रत्यक्भूतस्यब्रह्मणोवाचकेषुशब्दांतरेष्वपिसत्सुकिमित्येत
द्विषयमादरंक्रियतेतत्राहशास्त्रेति॥ ब्राह्मणवाक्यार्थोपिकथंनिश्चीयतामित्याहतस्येति॥ २०॥ उक्तमंगीकृत्यविशेषाऽदृष्ट्यासंशयानोविचारं

सर्वेप्राणावागादयः॥ सर्वेलोकाभूरादयःसर्वाणिकर्मफलानिसर्वेदेवाःप्राणलोकाधिष्ठातारोऽग्न्यादयः॥ सर्वाणिभूतानिब्रह्मादिस्तंब
पर्यंतानिप्राणिजातानि॥ सर्वएतआत्मानइत्यस्मिन्पाठेउपाधिसंपर्कजनितप्रबुध्यमानविशेषात्मानइत्यर्थोव्युच्चरंति॥ यस्मादात्मनः
स्थावरंजंगमंजगदिदमग्निविस्फुलिंगवत्व्युच्चरतिअनिशंयस्मिन्नेवचप्रलीयतेजलबुद्बुदवद्यदात्मकंचवर्त्ततेस्थितिकालेतस्या
स्यआत्मनोब्रह्मणउपनिषदुपसमीपंनिगमयतीत्यभिधायकःशब्दउपनिषदित्युच्यतेशास्त्रप्रामाण्यादेतच्छब्दगतोविशेषोवसीयते
उपनिगमयितृत्वंनामकासावुपनिषदित्याह॥ सत्यस्यसत्यमितिसाहिसर्वत्रचोपनिषदलौकिकार्थत्वात्दुर्विज्ञेयार्थेतितदर्थमाचष्टे
प्राणावैसत्यंतेषामेषसत्यमितिएतस्यैववाक्यस्यव्याख्यानायोत्तरंब्राह्मणद्वयंभविष्यति॥ २०॥ प्रथमंब्राह्मणं॥ १॥ भवतुतावदुपनिष
द्व्याख्यानायोत्तरंब्राह्मणद्वयं॥ तस्योपनिषदित्युक्तंतत्रनजानीमःकिंप्रकृतस्यात्मनोविज्ञानमयस्यपाणिपेषणोत्थितस्यसंसारिणः
शब्दादिभुजइयमुपनिषदाहोस्विदसंसारिणःकस्यचित्॥ किंचातोयदिसंसारिणस्तदासंसार्येवविज्ञेयस्तद्विज्ञानादेवसर्वप्राप्तिः
सएवब्रह्मशब्दवाच्यस्तद्धियैवब्रह्मविद्येति ॥ प्रस्तौतिभवत्विति॥ संदिग्धंसप्रयोजनंचविचार्यमितिन्यायेनसंदेहमुक्त्वाविचारप्रयो
जनंपृच्छतिकिंचातइति॥ कस्मिन्पक्षेकिंफलतीतिपृष्टेप्रथमपक्षमनूद्यतस्मिन्फलमाहयदीति॥ यद्विज्ञानान्मुक्तिस्तस्यैवज्ञेयतानजीवस्ये
त्याशंक्याहतद्विज्ञानादिति॥ ब्रह्मज्ञानादेवसानसंसारिज्ञानादित्याशंक्याहसएवेति॥ यद्विद्याब्रह्मविद्यातदेवब्रह्मनसंसारीत्याशंक्याहतद्धियैवेति॥

154

आद्यकल्पीयफलसमाप्ताविति शब्दः॥

पक्षांतरमनूद्य तस्मिन्फलमाहाथेत्यादिना॥ किमत्र नियामकमित्याशंक्य ब्रह्म वा इदमित्यादिशास्त्रमित्याह सर्वमेतदिति॥ ब्रह्मोपनिषत्स्वेशास्त्र प्रामाण्यात्सर्वं समंजसं चेत्तथैवास्तु किं विचारेणेत्याशंक्य जीवब्रह्मणोर्भेदोऽभेदो वेति विकल्प्याद्ये दोषमाह किंत्विति॥ अभेदपक्षं दूषयति संसारिणश्चेति॥ उपदेशानर्थक्याद्भेदपक्षानुपपत्तिरिति शेषः॥ विशेषानुपलंभस्य संशयहेतुत्वमनुवदति यत इति॥ पक्षद्वये फलप्रतीतिं परामृशत्येव

अथासंसारिणस्तदा तद्विषयाविद्यातस्माच्च ब्रह्मविज्ञानात्सर्वभावापत्तिः सर्वमेतच्छास्त्रप्रामाण्याद्भविष्यति किं तस्मिन्पक्षे आत्मेत्येवोपासीतात्मानमेवावेदहं ब्रह्मास्मीति परब्रह्मैकत्वप्रतिपादिकाः श्रुतयः कुप्येरन् संसारिणश्चान्यस्याभावे उपदेशानर्थक्यात्॥ यत एवं पंडितानामप्येतन्महामोहस्थानमनुक्तप्रतिवचनप्रश्नविषयं॥ अतो यथाशक्त्या ब्रह्मविद्याप्रतिपादकवाक्येषु ब्रह्मविजिज्ञासूनां बुद्धिव्युत्पादनाय विचारयिष्यामः॥ न तावदसंसारी परः पाणिपेषप्रतिबोधिताच्छब्दादिभुजोवस्थांतरविशिष्टादुत्पत्तिश्रुतेः न प्रशासिताशनायादिविवर्जितः परो विद्यते॥ कस्माद्यस्माद्ब्रह्म ज्ञपयिष्यामीति प्रतिज्ञाय सुप्तं पुरुषं पाणिपेषं बोधयित्वा तं शब्दादिभोक्तृत्वविशिष्टं दर्शयित्वा तस्यैव स्वप्नद्वारेण सुषुप्ताख्यमवस्थांतरमुन्नीय तस्मादेवात्मनः सुषुप्तावस्थाविशिष्टादग्निविस्फुलिंगोर्णनाभिदृष्टांताभ्यामुत्पत्तिं दर्शयति श्रुतिः एवमेवास्मादित्यादिना॥

मिति॥ अन्वयव्यतिरेककौशलं पांडित्यं॥ एतदित्यैकात्म्योक्तिर्महत्त्वं मोहस्य विचारोऽस्य निर्णयं विनानुच्छिन्नत्वं॥ तस्य स्थानमालंबनं केनापि नोक्तं प्रतिवचनं यस्य किं तदैकात्म्यमिति प्रश्नस्य तस्य विषयभूतमिति यावत्॥ न हि येन केनचिदैकात्म्यं प्रष्टुं प्रतिवक्तुं वा शक्यते॥ श्रवणायापि बहुभिर्यो न लभ्य इत्यादिश्रुतेरित्यर्थः॥ विचारे प्रयोजनमुक्त्वा तत्कार्ये विचारमुपसंहरति॥ अत इति॥ संशयादिना विचारकार्यतामवतार्य पूर्वपक्षयति न तावदिति॥ जगत्कर्ता हीश्वरो विवस्यते प्रकृते च सुषुप्तिविशिष्टाज्जीवाज्जगज्जन्मोच्यते तस्माद्

तदेवप्रपंचयतिनेत्यादिना॥प्रकृतेपिजीवेजगत्कारणत्वमीश्वरस्यैवात्रश्रुतमित्याशंक्याहनचेति॥तत्रप्रकरणाविरोधंहेतुमाहविज्ञानेति॥श्रुत्यंतरव
शादपिजीवएवात्रजगत्कर्तेत्याहसमानप्रकरणेचेति॥श्रुत्यंतरस्यचजीवविषयत्वंजगद्वाचित्वाधिकरणपूर्वपक्षन्यायेनद्रष्टव्यंवाक्यशेषवशादपि
जीवस्यैववेदितव्यत्वंवाक्यान्वयाधिकरणपूर्वपक्षन्यायेनदर्शयति॥तथाचेति॥जीवातिरिक्तस्यपरस्यवेदितव्यस्याभावेपूर्वोत्तरवाक्यानामानुकूल्यं

नचान्योजगदुत्पत्तिकारणंअंतरालेश्रुतोस्तिविज्ञानमयस्यैवहिप्रकरणं॥समानप्रकरणेचश्रुत्यंतरेकौषीतकिनामादित्यादिपुरुषान्प्र
स्तुत्यसहोवाचयोवैबालाकेएतेषांपुरुषाणांकर्त्तायस्यवैतत्कर्मसवैवेदितव्यइतिप्रबुद्धस्यैवविज्ञानमयस्यवेदयितव्यतांदर्शयतिना
थांतरस्य॥तथाचात्मनस्तुकामायसर्वंप्रियंभवतीत्युक्त्वायएवात्माप्रियःप्रसिद्धस्तस्यैवद्रष्टव्यश्रोतव्यमंतव्यनिदिध्यासितव्यतांदर्श
यति॥तथाचविद्योपन्यासकालआत्मेत्येवोपासीततदेतत्प्रेयःपुत्रात्प्रेयोवित्तात्तदात्मानमेवावेदहंब्रह्मास्मीत्येवमादिवाक्यानामानु
लोम्यंस्यात्परस्याभावे॥वक्ष्यतिचात्मानंचेद्विजानीयादयमस्मीतिपुरुषइति॥सर्ववेदांतेषुचप्रत्यगात्मवेद्यतैवप्रदर्श्यतेऽहमितिनबहिर्वेद्य
ताशब्दादिवत्प्रदर्श्यतेऽसौब्रह्मेतितथाकौषीतकिनामेवनवाचंविजिज्ञासीतवक्तारंविद्यादित्यादिनावागादिकरणेभ्यएतस्यकर्त्रैवेवे
दितव्यतांदर्शयति॥अवस्थांतरविशिष्टोऽसंसारीतिचेत्अथापिस्याद्योजागरितेशब्दादिभुग्विज्ञानमयःसएवसुषुप्त्याख्यमवस्थांतरंग
तोऽसंसारीतिपरःप्रशासितान्यःस्यादितिचेत्नादृष्टत्वान्नह्येवंधर्मकःपदार्थोदृष्टोऽन्यत्रवैनासिकसिद्धांतात्॥ हेत्वंतरमाहतथाचेत्यादिना॥इ



तश्चजीवस्यैववेद्यतेत्याहसर्वेति॥तत्रैवहेत्वंतरमाहतथेति॥सवैवेदितव्यइत्यत्रनस्पष्टंजीवस्यवेदितव्यत्वमिहतुस्पष्टमितिभेदः॥स्वापावस्थाज्जीवा
ज्जगज्जन्मश्रुतेस्तस्यैववेद्यत्वदृष्टेश्चजगद्धेतुरीश्वरोवेदांतवेद्योनास्तीत्युक्तेसेश्वरवादीचोदयत्यवस्थांतरेति॥चोद्यमेवविवृणोत्यथापीति॥उक्तोपप

नावस्थाभेदात्वस्तुभेदस्तथाऽनुभवादपराद्वांताच्चेतिपरिहरतिनादृष्टत्वादिति॥अवस्थाभेदाद्वस्तुभेदाभावंदृष्टांतेनस्पष्टयतिनहीति॥तत्रै
वहेत्वंतरमाह॥न्यायाच्चेति॥जागरादिविशिष्टस्यैवस्वापवैशिष्ट्यात्तस्यसंसारित्वान्नेश्वरोन्योस्तीतिउक्त्वातदभावेवादिसंमतिमाहतथाचेति॥आ
दिशब्दोलोकायतादिसमस्तनिरीश्वरवादिसंग्रहार्थः॥युक्तिशतैरितितस्यदेहित्वेऽस्मदादितुल्यत्वात्तदभावेमुक्तवज्जगत्कर्तृत्वायोगात्जीवा

नहिलोकेगौःतिष्ठन्गच्छन्वागौर्भवतिशयानस्त्वश्वादिजात्यंतरमितिन्यायाच्चयद्धर्मकोयःपदार्थःप्रमाणेनावगतोभवतिसदेशका
लावस्थांतरेष्वपितद्धर्मकएवभवतिसचेत्तद्धर्मकत्वंव्यभिचरतिसर्वप्रमाणव्यवहारोलुप्येत॥तथाचन्यायविदःसांख्यमीमांसका
दयोऽसंसारिणोऽभावंयुक्तिशतैःप्रतिपादयंति॥संसारिणोपिजगदुत्पत्तिस्थितिलयक्रियाकर्तृत्वविज्ञानस्याभावादयुक्तमितिचेत्
यन्महताप्रपंचेनस्थापितंभवताशब्दादिभुक्संसार्येवावस्थांतरविशिष्टोजगतइहकर्तेतितदसद्यतोजगदुत्पत्तिस्थितिलयक्रिया
कर्तृत्वविज्ञानशक्तिसाधनाभावःसर्वलोकप्रत्यक्षःसंसारिणःसकथमस्मदादिवत्संसारीमनसापिचिंतयितुमशक्यांपृथिव्यादिविन्या
सविशिष्टंजगन्निर्मिमीयात्॥अतोऽयुक्तमितिचेत्॥नशास्त्रात्कृत्स्नंसंसारिणएवमेतस्मादात्मनइतिजगदुत्पत्त्यादिदर्शयतितस्मात्सर्वं
श्रद्धेयमितिस्यादयमेकःपक्षः॥यःसर्वज्ञःसर्वविद्योशनायापिपासेअत्येत्यसंगोनहिसज्यतेएतस्यवाऽक्षरस्यप्रशासने नामेवादृष्टद्वारातत्त्व

र्तृत्वसंभवात्तस्याकिंचित्करत्वमित्यादिभिरित्यर्थः॥जीवोजगज्जन्मादिहेतुर्नभवतितत्रासमर्थत्वात्पाषाणवत्तच्चसंसारित्वादितिशंकतेसंसारिणोपी
ति॥ईश्वरस्यैवेत्यपेरर्थः॥अयुक्तंप्राणादिकर्तृत्वंइतिशेषः॥संग्रहवाक्यंविवृणोतियन्महतेत्यादिना॥कालात्ययापदेशेनदूषयतिनशास्त्रादिति॥
निरीश्वरवादमुपसंहरति॥तस्मादिति॥सेश्वरवादमुत्थापयति॥यःसर्वज्ञइत्यादिना॥तान्पृथिव्याद्यभिमानिनःपुरुषान्निरुह्योत्साद्ययोतिक्रांतवानस्

उदाहृताश्श्रुतयःस्मृतयश्चन्यायस्तुविचित्रंकार्यंविशिष्टज्ञानवत्पूर्वकंप्रासादादौतथोपलंभादित्यादिः॥प्रकरणमनुसृत्यजीवस्यप्राणादिकारण
त्वमुक्तंस्मारयतिनन्विति॥नेदंजीवस्यप्रकरणमितिपरिहरतिनेत्यादिना॥प्रतिवचनस्याकाशशब्दस्यपरविषयत्वमसिद्धमित्याशंक्याहकैषेति

यःसर्वभूतेषुतिष्ठन्नंतर्याम्यमृतःसयस्तान्पुरुषान्निरुह्यात्यक्रामत्सवाएषमहानजआत्माएषसेतुर्विधरणःसर्वस्यवशीसर्वस्येशा
नोयआत्मापहतपाप्माविजरोविमृत्युःसतेजोऽसृजतआत्मावाइदमेकएवाग्रआसीन्नलिप्यतेलोकदुःखेनबाह्यइत्यादिश्रुतिशतेभ्यः
स्मृतेश्चअहंसर्वस्यप्रभवोमत्तःसर्वंप्रवर्ततेइतिपरोऽस्यसंसारीश्रुतिस्मृतिन्यायेभ्यश्चसचकारणंजगतः॥नन्वेवमेवास्मादात्मनइतिसंसा
रिणएवोत्पत्तिंदर्शयतीत्युक्तं॥नयएषोंतर्हृदयआकाशइतिपरस्यप्रकृतत्वात्अस्मादात्मनइतियुक्तःपरस्यैवपरामर्शः॥कैषतदाभूदि
त्यस्यप्रश्नस्यप्रतिवचनत्वेनाकाशशब्दवाच्यःपरआत्मोक्तःयएषोंतर्हृदयआकाशस्तस्मिन्शेतइतिसतासोम्यतदासंपन्नोभवत्यहरह
र्गच्छंत्यएतंब्रह्मलोकंनविंदंतिप्राज्ञेनात्मनासंपरिष्वक्तःपरेआत्मनिसंप्रतिष्ठितइत्यादिश्रुतिभ्यःआकाशशब्दःपरआत्मेतिनिश्चीयतेद
हरोऽस्मिन्नंतराकाशइतिप्रस्तुत्यतस्मिन्नेवात्मशब्दप्रयोगाच्चप्रकृतएवपरमात्मा॥तस्माद्युक्तमेवमेवास्मादात्मनइतिपरमात्मनएवसृ
ष्टिरितिसंसारिणःसृष्टिस्थितिसंहारज्ञानसामर्थ्याभावंचावोचाम॥अत्रचात्मेत्येवोपासीतात्मानमेवावेदहंब्रह्मास्मीतिब्रह्मविद्याप्रस्तु
ताब्रह्मविषयंचब्रह्मज्ञानमिति॥

इतश्चाकाशशब्दस्यपरमात्मविषयतेत्याहदहरोऽस्मिन्निति॥यआत्मापहतपाप्मेत्यात्मशब्दप्रयोगः॥प्रतिवच
नेपरस्याकाशशब्दवाच्यत्वेफलितमाहप्रकृतएवेति॥तस्यप्रकृतत्वेलब्धमर्थमाहतस्मादिति॥इतश्चपरस्मादेवप्राणादिसृष्टिरित्याहसंसारिणइति॥य
न्महताप्रपंचेनेत्यादावितिशेषः॥अस्तीश्वरोजगत्कारणंब्रह्मतदेवजीवस्यस्वरूपंतस्येयमुपनिषदितिसिद्धांतमाशंक्यदूषयतिअत्रचेति॥तृतीयोध्या

कापुनःसाब्रह्मविद्येतितत्राहब्रह्मविषयंचेति॥इतिब्रह्मविदांप्रसिद्धमितिशेषः॥चतुर्थेब्रह्मविद्याप्रस्तुतेत्याहब्रह्मेति॥सत्यमस्तिप्रस्तुताब्रह्मविद्या साजीवविद्यापिभवतिजीवब्रह्मणोरभेदादित्याशंक्याहतत्रेति॥ब्रह्मविद्यायांप्रस्तुतायामितियावत्॥इदानींनगृह्णीयादितिसंबंधः॥मिथोविरुद्ध त्वप्रतीत्यवस्थायामित्येतत्॥अन्योन्यविरुद्धत्वंतदूक्त्वार्थः॥विपक्षेदोषमाहपरमिति॥कथंतर्हीश्वरेमतिंकुर्यादित्याशंक्यस्वामित्वेनेत्याहतस्मादि

ब्रह्मतेब्रवाणिब्रह्मज्ञपयिष्यामीतिप्रारब्धंतत्रेदानीमसंसारिब्रह्मजगतःकारणमशनायाद्यतीतंनित्यमुक्तबुद्धशुद्धस्वभावंतद्विपरी तश्चसंसारीतस्मादहंब्रह्मास्मीतिनगृह्णीयात्परंहिदेवमीशानंनिकृष्टसंसार्यात्मत्वेनस्मरन्कथंनदोषभाक्स्यात्॥तस्मान्नाहंब्रह्मास्मी तियुक्तं॥तस्मात्पुष्पोदकांजलिस्तुतिनमस्कारबल्युपहारस्वाध्यायाध्ययनयोगादिभिराराधयिषेत्आराधनेनविदित्वासर्वेशि तब्रह्मभवति॥नपुनरसंसारिब्रह्मसंसार्यात्मत्वेनचिंतयेदग्निमिवशीतत्वेनआकाशमिवमूर्तिमत्वेन॥ब्रह्मात्मत्वप्रतिपादकम पिशास्त्रमर्थवादोभविष्यति॥सर्वतर्कशास्त्रलोकन्यायैश्चैवमविरोधःस्यात्॥नमंत्रब्राह्मणवादेभ्यस्तस्यैवप्रवेशश्रवणात्पुरश्चक्र इतिप्रकृत्यपुरःपुरुषआविशदितिरूपंरूपंप्रतिरूपोबभूवतदस्यरूपंप्रतिचक्षणाय॥सर्वाणिरूपाणिविचित्यधीरोनामानिकृत्वा भिवदन्यआस्तेइतिसर्वशाखासुसहस्रशोमंत्रवादाःसृष्टिकर्तुरेवासंसारिणःशरीरप्रवेशंदर्शयंति॥तथाब्राह्मणवादाःतत्सृष्ट्वातदेवा नुप्राविशत्सएतमेवसीमानंविदार्यैतयाद्वाराप्रापद्यतसेयंदेवतेमास्तिस्रोदेवताअनेनजीवेनात्मनानुप्रविश्य ति॥आदिपदंप्रदक्षिणादि

संग्रहार्थं॥ऐकात्म्यशास्त्रादात्ममतिरेवब्रह्मणिकर्तव्येत्याशंक्याहनपुनरिति॥कातर्हिशास्त्रगतिस्तत्राहब्रह्मेति॥मुख्यार्थत्वसंभवेकिमित्यर्थवादतेत्याशं क्याहसर्वेति॥संसारित्वाऽसंसारित्वादिनामिथोविरुद्धयोर्जीवेश्वरयोःशीतोष्णवदैक्यानुपपत्तिर्न्यायः॥विज्ञानात्मविषयत्वंतटस्थेश्वरविषयत्वंचोपनिषदोनिवा

परस्यैवप्रवेशवादिमंत्रब्राह्मणवादानुदाहरतिपुरइत्यादिना॥यत्त्वहंब्रह्मेतिनगृह्णीयादितितत्राहसर्वेश्रुतिषुचेति॥शास्त्रीयमप्येकत्वमनिष्टप्रसंगा
त्तन्नस्वीकर्तव्यमितिशंकतेयदेति॥परस्यसंसारित्वेतदसंसारित्वशास्त्रानर्थक्यंफलितमाहतथाचेति॥संसारिणोऽनन्यस्यापिपरस्यासंसारित्वेसंसा
रित्वाभिमतोपिअसंसारीत्युपदेशानर्थक्यंतंविनैवमुक्तिसिद्धिरितिदोषांतरमाहासंसारित्वेचेति॥तत्रायंदोषंविवृणोतियदितावदिति॥नलिप्यते

एषसर्वेषुभूतेषुगूढोत्मानप्रकाशते॥सर्वश्रुतिषुचब्रह्मण्यात्मशब्दप्रयोगादात्मशब्दस्यचप्रत्यगात्माभिधायकत्वादेषसर्वभूतांतरा
त्मेतिचश्रुतेःपरमात्मव्यतिरेकेणसंसारिणोभावादेकमेवाद्वितीयंब्रह्मेवेदमात्मैवेदमित्यादिश्रुतिभ्योयुक्तमेवाहंब्रह्मास्मीत्यवधार
यितुं॥यद्येवंस्थितःशास्त्रार्थस्तदापरमात्मनःसंसारित्वंतथाचसतिशास्त्रानर्थक्यंअसंसारित्वेचोपदेशानर्थक्यंस्पष्टोदोषःस्यात्॥य
दितावत्परमात्मासर्वभूतांतरात्मासर्वशरीरसंपर्कजनितदुःखान्यनुभवतीतिस्पष्टंपरस्यसंसारित्वंप्राप्तंतथाचपरस्यासंसारित्वप्र
तिपादकाःश्रुतयःकुप्येरन्स्मृतयश्चसर्वेचन्यायाः॥अथकथंचित्प्राणिशरीरसंबंधजैर्दुःखैर्नसंबध्यतइतिशक्यंप्रतिपादयितुंपर
मात्मनःसाध्यपरिहार्याभावादुपदेशानर्थक्यदोषोनशक्यतेनिवारयितुं॥अत्रकेचित्परिहारमाचक्षतेपरमात्मानसाक्षाद्भूतेषुप्रविष्टः
स्वेनरूपेणकिंतर्हिविकारभावमापन्नोविज्ञानात्मत्वंप्रतिपेदेसचविज्ञानात्मापरस्मादन्योऽनन्यश्चयेनान्यस्तेनसंसारित्वसंबंधीयेनानन्यस्ते
नाहंब्रह्मेतिधारणार्हःएवंसर्वमविरुद्धंभविष्यतीति॥ लोकदुःखेनेत्याद्याःश्रुतयः॥यस्यनाहंकृतोभावोबुद्धिर्यस्यनलिप्यतइत्याद्याःस्मृतयः॥कूट
स्थत्वासंगत्वाद्योन्यायाः॥द्वितीयदोषप्रसंगमापाद्यप्रकटयतिअथेत्यादिना॥दोषद्वयेस्यपूर्व्यसमाधिमुत्थापयति॥अत्रेति॥कथंतर्हितस्यकार्येप्रविष्टस्य
जीवत्वंतत्राहकिंतर्हीति॥जीवस्यब्रह्मविकारत्वेपिततोभेदान्नाहंब्रह्मेतिधीरभेदेब्रह्मणोपिसंसारितेत्याशंक्याहसचेति॥तथापिकथंशंकितदोषाभावस्तत्राह

एवमितिभिन्नाभिन्नत्वपरामर्शः सर्वमित्युपदेशादिनिर्देशः॥ एकदेशिमतंनिराकर्तुंविकल्पयतितत्रेति॥ एतागतयइत्येतेपक्षावक्ष्यमाणाःसंभवंतिनग
त्यंतरमित्यर्थः॥ यथापृथिवीशब्दितंद्रव्यमनेकावयवसमुदायस्तथाभूतभौतिकात्मकानेकद्रव्यसमुदायःसावयवःपरमात्मातस्यैकदेशश्चेतन्यल
क्षणोविकारोजीवःपृथिव्येकदेशमृद्विकारघटशरावादिवदित्येकःकल्पः॥ यथाभूमेरूषरादिदेशोनखकेशादिर्वापुरुषस्यविकारस्तथाऽ
वयविनःपरस्यैकदेशविकारोजीवइतिद्वितीयःकल्पः॥ यथाक्षीरंस्वर्णंवासर्वात्मनादधिरुचकादिरूपेणपरिणमतेतथाकृत्स्नएवपरोजीवभा

तत्रविज्ञानात्मनोविकारपक्षएतागतयःपृथिवीद्रव्यवदनेकद्रव्यसमाहारस्यसावयवस्यपरमात्मनःएकदेशविपरिणामोविज्ञानात्मा
घटादिवत्॥ पूर्वसंस्थानावस्थस्यैवापरस्यैकदेशोविक्रीयतेकेशोखरादिवत्॥ सर्वएववापरःपरिणमेत्क्षीरादिवत्॥ तत्रसमानजातीया
नेकद्रव्यसमुदायस्यकश्चित्द्रव्यविशेषोविज्ञानात्मत्वंप्रतिपद्यतेयदातदासमानजातीयत्वादेकत्वमुपचरितमेवनतुपरमार्थतः॥ तथा
चसतिसिद्धांतविरोधः॥ अथनित्यायुतसिद्धावयवानुगतोवयवीपरआत्मातस्यतदवस्थस्यैकदेशोविज्ञानात्मासंसारीतदापिस
र्वावयवानुगतत्वादवयविनएवावयवगतोदोषोगुणोवेतिविज्ञानात्मनःसंसारित्वदोषेणपरएवात्मासंबध्यतइतीयमप्यनिष्टाक
ल्पना॥

वेनपरिणमेदितिकल्पांतरं॥ तत्राद्यमनूद्यदूषयतितत्रेत्यादिना॥ नानाद्रव्याणांसमाहारोवातानिवाऽन्योन्यापेक्षाणिपरश्चेत्तस्यैकत्वंस्यान्न
हिबहूनांमुख्यमेकत्वं॥ समाहारस्यचसमुदायापरपर्यायस्यसमुदायिभ्योभेदाभेदाभ्यांदुर्भणत्वेनकल्पितत्वादित्यर्थः॥ तर्हिब्रह्मणोमुख्यमेकत्वंमाभूत्त
त्राहतथाचेति॥ नहितन्नानात्वंकस्यापिसंमतमितिभावः॥ द्वितीयमनूद्यनिराकरोत्यथेत्यादिना॥ सर्वेष्वेवापृथगवस्थितेष्ववयवेषुजीवेष्वनुस्यूतश्चे
तनोवयवीपरश्चेत्तर्हियथाप्रत्यवयवंमलसंसर्गेदेहस्यमलिनत्वंतथापरस्यजीवगतैर्दुःखैर्महत्दुःखंस्यादितिप्रथमकल्पनावत्द्वितीयापिकल्पनानयु

तृतीयं प्रत्याह क्षीरवदिति॥ न जायते म्रियते वा विपश्चिदित्याद्याः श्रुतयः न जायते म्रियते वा कदाचिदित्याद्याः स्मृतयः॥ श्रुत्यादिकोपस्येष्टत्वमाशंक्य वैदिकं प्रत्याह सचेति॥ श्रुतिस्मृती विवेचयन् पक्षत्रयसाधारणं दूषणमाह निष्कलमित्यादिना॥ कूटस्थस्य निरवयवस्य कात्स्न्यैकदेशाभ्यां परिणामासंभवान्न्यायः॥ जीवस्य परमात्मैकदेशत्वे दोषांतरमाह चाचलस्येति॥ एकदेशस्यैकदेशिव्यतिरेकेणाभावाज्जीवस्य स्वर्गादिषु गत्यनुपपत्तिरित्युक्तमन्यथा परस्यापि गतिः स्यान्न हि परावयवेषु चलत्सु पटो न चलतीत्याह परस्येति॥ उक्तं यदि तावत्सर्वमात्मेत्याद्यविशेषः॥ जीवस्य संसारित्वेपि परस्य तत्क्षीरवत्सर्वं परिणामपक्षे सर्वं श्रुतिस्मृतिकोपः सचानिष्टः निष्कलं निष्क्रियं शांतं दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यंतरो ह्यजः आकाशवत्सर्वगतश्च नित्यः स वा एष महानज आत्माजरोऽमृतो न जायते म्रियते वा कदाचिदव्यक्तोयमित्यादिश्रुतिस्मृतिन्यायविरुद्धा एते सर्वे पक्षाः॥ अचलस्य परमात्मन एकदेशपक्षे विज्ञानात्मनः कर्मफलदेशसंसरणानुपपत्तिः परस्य चासंसारित्वमित्युक्तं॥ परस्यैकदेशोग्निविस्फुलिंगवत्स्फुटितो विज्ञानात्मा संसरतीति चेत्॥ तथापि परस्यावयवस्फुटनेन क्षतप्राप्तिस्तत्संसरणे च परमात्मप्रदेशांतरावयवव्यूहे छिद्रताप्राप्तिः॥ अव्रणत्ववाक्यविरोधश्च॥ आत्मावयवभूतस्य विज्ञानात्मनः संसरणे च परमात्मशून्यप्रदेशाभावादवयवांतरनोदनव्यूहनाभ्यां हृदयशूलेनेव परमात्मनो दुःखित्वप्राप्तिः॥ नास्तीति शंकते परस्येति॥ परस्य निरवयवत्वश्रुतेः अवयवस्फुटनानुपपत्तिरिति मन्वानो दूषयति तथापीति॥ यत्र यस्यावयवः स्फुटति तत्र तस्य क्षतं प्राप्नोति॥ तदीयावयवस्य संसरणे च परमात्मनः प्रदेशांतरेवयवानां व्यूहे सत्युपचयः स्यात्तथा च परस्यावयवा यतो निर्गच्छंति तत्र छिद्रताप्राप्तिः यत्र च गच्छंति तत्रोपचयः स्यादित्यकायमव्रणमस्थूलमनण्वह्रस्वमित्यादिवाक्यविरोधो भवेदित्यर्थः॥ परस्यैकदेशो विज्ञानात्मेति पक्षे दुःखित्वमपि तस्य दुर्वारमापतेदिति दोषांतरमाहात्मावयवेति॥

मृल्लोहविस्फुलिंगदृष्टांतश्रुतिवशात्परस्यावयवा जीवा इति सिद्धांतिअतोजीवानां परैकदेशत्वेनोक्तो दोषोवतरतियुक्त्यपेक्षयाश्रुतेर्बलवत्त्वादि
तिशंकते॥ अग्निविस्फुलिंगादीति॥ शास्त्रार्थो युक्तिविरुद्धो न सिद्ध्यतीति दूषयति न श्रुतेरिति॥ नञर्थं विवृणोति न शास्त्रमिति॥ हेतुभागमाकांक्षा
पूर्वकं विभजते किं तर्हीति॥ सूर्यादिव्यावृत्त्यर्थमज्ञातानामित्युक्तमस्तु शास्त्रमज्ञातार्थज्ञापकं तथापि परस्य नास्ति सावयवत्वमित्यत्र किमायात
मिति पृच्छति किं चातइति॥ शास्त्रस्य यथोक्तस्वभावत्वे यत्परस्य निरवयवत्वं फलति तदुच्यमानं समाहितेन श्रोतव्यमित्याह शृण्विति॥ तत्र प्रथमं

अग्निविस्फुलिंगादिदृष्टांतश्रुतेर्न दोष इति चेत्॥ नश्रुतेर्ज्ञापकत्वात् न शास्त्रं पदार्थानन्यथा कर्त्तुं प्रवृत्तं किं तर्हि यथाभूतानामज्ञा
तानां ज्ञापने किं चातः शृणु अतो यद्भवति॥ यथाभूताः मूर्त्ता॰ मूर्त्तादिपदार्थधर्मा लोके प्रसिद्धास्तद्दृष्टांतोपादानेन तदविरोध्येव वस्त्वंत
रं ज्ञापयितुं प्रवृत्तं शास्त्रं न लौकिकवस्तुविरोधज्ञापनाय लौकिकमेव दृष्टांतमुपादत्ते॥ उपादीयमानोपि दृष्टांतो॰ नर्थकः स्यात्॥ दार्ष्टा
तिकासंगतेर्न ह्यग्निः शीत आदित्यो न तपतीति वा दृष्टांतशतेनापि प्रतिपादयितुं शक्यं प्रमाणांतरेणान्यथाधिगतत्वात् वस्तुनः॥ न च
प्रमाणं प्रमाणांतरेण विरुध्यते प्रमाणांतराविषयमेव हि प्रमाणांतरं ज्ञापयति॥ लोकाविरोधेन शास्त्रप्रवृत्तिं दर्शयति यथेति॥ आदिपदेन
भावाभावादिग्रह्यते॥ पदार्थेष्वेव भोक्तृपारतंत्र्याद्धर्मशब्दस्तेषां लोकसिद्धपदार्थानां दृष्टांतानामुपन्यासेनेति यावत्॥ तदविरोधिलोकप्रसिद्धप
दार्थाविरोधीत्यर्थः॥ वस्त्वंतरं निरवयवादिदार्ष्टांतिकं तदविरोद्धो वेत्येवकारस्य व्यावर्त्यमाह न लौकिकेति॥ विपक्षे दोषमाह पादीयमानोपीति॥ स
मान्येनोक्तमर्थं दृष्टांतविशेषनिविष्टतया स्पष्टयति न हीति॥ अग्नेरुष्णत्वमादित्यस्य तापकत्वमन्यथेत्युच्यते॥ ननु लौकिकं प्रमाणं लौकिकपदार्थाविरुद्ध
मेव स्वार्थं समर्पयति वैदिकं पुनरपौरुषेयं तद्विरुद्धमपि स्वार्थं प्रमापयेदलौकिकविषयत्वादत आह न चेति॥ ननु श्रुतेरज्ञातज्ञापकत्वेन लोकानपेक्षत्वात्तद्विरो

लोकावगतसामर्थ्यः शब्दो वेदेपि बोधक इति न्यायात्तदनपेक्षा श्रुतिर्नाज्ञातं ज्ञापयितुमलमित्यर्थः॥ शास्त्रस्य लोकानुसारित्वे सिद्धे फलितमाह तस्मादिति॥
प्रसिद्धो न्यायो लौकिको दृष्टांतः॥ नहि नित्यस्याकाशादेः सावयवत्वं परैश्चानित्योभ्युपगतस्तन्न तस्य सावयवत्वेनांशांशित्वकल्पना वस्तुतः संभवतिलो
कविरोधादित्यर्थः॥ जीवस्य परांशत्वानंगीकारे श्रुतिस्मृत्योर्गतिर्वक्तव्येति शंकते क्षुद्रा इति॥ तयोर्गतिमाह नेत्यादिना॥ विस्फुलिंगे दर्शितन्यायं सर्वत्रा

नच लौकिकपदपदार्थाश्रयणव्यतिरेकेणागमेन शक्यमज्ञातं वस्त्वंतरमवगमयितुं॥ तस्मात्प्रसिद्धन्यायमनुसरता न शक्या परमात्मनः
सावयवांशांशित्वकल्पना परमार्थतः प्रतिपादयितुं॥ क्षुद्रा विस्फुलिंगा ममैवांश इति च श्रूयते स्मर्यते चेति चेत्॥ नैकत्वप्रत्ययार्थपर
त्वादग्नेर्हि विस्फुलिंगा ग्निरेवेत्येकत्वप्रत्ययार्हा दृष्टा लोके तथा चांशांशिनेकत्वप्रत्ययार्हः॥ तत्रैवं सति विज्ञानात्मनः परमात्मविकारां
शत्ववाचकाः शब्दाः परमात्मैकत्वप्रत्ययाधित्सवः॥ उपक्रमोपसंहाराभ्यां च सर्वासूपनिषत्सु पूर्वमेकत्वं प्रतिज्ञाय दृष्टांतैर्हेतुभिश्च प
रमात्मनो विकारांशादित्वं जगतः प्रतिपाद्य पुनरेकत्वमुपसंहरति॥ तद्यथेहैव तावदिदं सर्वं यदयमात्मेति प्रतिज्ञायोत्पत्तिस्थितिलयहेतु
दृष्टांतैर्विकारविकारित्वाद्येकत्वप्रत्ययहेतून्प्रतिपाद्यानंतरमबाह्यमयमात्मा ब्रह्मेत्युपसंहरिष्यति॥ तस्मादुपक्रमोपसंहाराभ्यामयमर्थो
निश्चीयते परमात्मैकत्वप्रत्ययदृढिम्न उत्पत्तिस्थितिलयप्रतिपादकानि वाक्यानीति अन्यथा वाक्यभेदप्रसंगाच्च॥ शमात्रेतिदिशतितथाचे

ति॥ दृष्टांते यथोक्तरीत्या स्थिते दार्ष्टांतिकमाह तत्रेति॥ परमात्मना सह जीवस्यैकत्वविषयं प्रत्ययमाधातुमिच्छंतीति तथोक्तास्तेषामेकत्वप्रत्ययाव
तारहेतुत्वे हेत्वंतरं संगृह्णात्युपक्रमेति॥ तदेव स्फुटयति सर्वासु हीति॥ उक्तमर्थमुदाहरणनिष्ठतया विभजते तद्यथेति॥ इहेति प्रकृतोपनिषदुक्तिरा
दिशब्देनांशांशित्वादिगृह्यते॥ विवृतं संग्रहवाक्यमुपसंहरति॥ तस्मादिति॥ तेषां स्वार्थनिष्ठत्वे दोषं वदन्नेकत्वप्रत्ययार्थत्वे हेत्वंतरमाहान्यथेति॥

हि

श्री

159

अमृतत्वं १

संभवत्येकवाक्यत्वेवाक्यभेदश्चनेष्यतइतिन्यायेनोक्तंप्रपंचयतिसर्वोपनिषत्स्विति॥किंचतेषांस्वार्थनिष्ठत्वेश्रुतफलाभावात्फलांतरंकल्पनीयंनचैकत्व
प्रत्ययविषयतयाततफलेनिराकांक्षेषुतेषुतत्कल्पनायुक्तादृष्टेसत्यदृष्टकल्पनानवकाशादित्याह॥फलांतरंचेति॥उत्पत्त्यादिश्रुतीनांस्वार्थनिष्ठत्वासं
भवेफलितमुपसंहरतितस्मादिति॥तत्वमस्यादिवाक्यमेक्यपरंतद्वेषःसृष्ट्यादिवाक्यमित्युक्तेर्थेद्रविडाचार्यसंमतिमाहात्रचेति॥तत्रदृष्टांतरूपामाख्या
यिकांप्रणयतिकश्चित्किलेति॥जातमात्रेप्रागवस्थायामेवराजास्मीत्यभिमानाभिव्यक्तेरित्यर्थः॥ताभ्यांतत्परित्यागेनिमित्तविशेषस्यानिश्चित

सर्वोपनिषत्सुहिविज्ञानात्मनःपरमात्मनैकत्वप्रत्ययोविधीयतइत्यविप्रतिपत्तिःसर्वेषामुपनिषद्वादिनांतद्धिद्येकवाक्ययोगेचसं
भवत्युत्पत्त्यादिवाक्यानांवाक्यांतरत्वकल्पनायांनप्रमाणमस्तिफलांतरंचकल्पयितव्यंस्यात्॥तस्मादुत्पत्त्यादिश्रुतयःआत्मैकत्वप्रतिपा
दनपराः॥अत्रचसंप्रदायविद्आख्यायिकांसंप्रचक्षते॥कश्चित्किलराजपुत्रोजातमात्रएवमातापितृभ्यामपविद्धोव्याधगृहेसंवर्द्धि
तःसोऽमुष्यवंश्यतामजानन्व्याधजातिप्रत्ययोव्याधजातिकर्मण्येवानुवर्ततेनराजास्मीतिराजजातिकर्मण्यनुवर्ततेयदापुनःकश्चि
त्परमकारुणिकोराजपुत्रस्यराजश्रीप्राप्तियोग्यतांजानन्अमुष्यपुत्रतांबोधयतिनत्वंव्याधःअमुष्यराज्ञःपुत्रःकथंचिद्व्याधगृहमनुप्रवि
ष्टइतिसएवंसंबोधितस्त्यक्त्वाव्याधजातिप्रत्ययकर्माणिपितृपैतामहीमात्मनःपदवीमनुवर्ततेराजाहमस्मीति ॥

त्वद्योतनार्थंकिलेत्युक्तं॥व्याधजातिप्रत्ययस्तत्प्रयुक्तोव्याधोस्मीत्यभिमानोयस्यसतथाव्याधजातिकर्माणितत्प्रयुक्तानिमांसक्रयणादीनिरा
जास्मीत्यभिमानपूर्वकंतज्जातिप्रयुक्तानिपरिपालनादीनिकर्माणि॥अज्ञानंतत्कार्यंचोक्त्वाज्ञानंतत्फलंचदर्शयतियदेत्यादिना॥बोधप्रकारमभि
नयतिनत्वमिति॥कथंतर्हिशाबरवेश्मप्रवेशस्तत्राहकथंचिदिति॥राजाहमस्मीत्यभिमानपूर्वकमात्मनःपितृपैतामहींपदवीमनुवर्ततेइतिसंबंधः॥

दार्ष्टांतिकरूपामाख्यायिकामाचष्टे॥ तथेति॥ जीवस्य परस्माद्विभागे निमित्तमज्ञानं तत्कार्यं च प्रसिद्धमिति द्योतयितुं किलेत्युक्तं॥ तज्ज्ञातिस्तत्त्वभावो वस्तुतः परमात्मैवेति यावत्॥ इहेत्यपरोक्षानुभवगम्यतोक्तिः॥ गहनं गंभीरं वनं॥ संसारधर्मानुवर्तने हेतुमाह परमात्मतामिति॥ उक्तां विद्यां तत्कार्यविरोधिनीं ब्रह्मात्मविद्यां लंभयति नत्वमिति॥ राजपुत्रस्य राजास्मीति प्रत्ययवद्वाक्यादेवाधिकारिणि ब्रह्मास्मीति प्रत्ययश्चेत् रूतं वि

तथा किलायं परस्मादग्निविस्फुलिंगादिवत्तज्ज्ञातिरेव विभक्तः इह देहेंद्रियादिगहने प्रविष्टोऽसंसारी सन् देहेंद्रियादिसंसारधर्ममनुवर्त्तते देहेंद्रियसंघातोऽस्मि कृशः स्थूलः सुखी दुःखीति परमात्मतामजानन्नात्मनः॥ न त्वमेतदात्मकः परमेव ब्रह्मासि असंसारीति प्रतिबोधित आचार्येण हित्वैषणात्रयानुवृत्तिं ब्रह्मैवास्मीति प्रतिपद्यते॥ अत्र राजपुत्रस्य राजप्रत्ययवत् ब्रह्मप्रत्ययो दृढो भवति॥ विस्फुलिंगवदेव त्वं परस्माद्ब्रह्मणो भ्रष्ट इत्युक्ते॥ विस्फुलिंगस्य प्रागग्नेर्भंशादग्न्येकत्वदर्शनात्॥ तस्मादेकत्वप्रत्ययदार्ढ्याय सुवर्णमणिलोहाग्निविस्फुलिंगदृष्टांताः नोत्पत्त्यादिभेदप्रतिपादनपराः॥ सैंधवघनवत्तु अनन्येकरसनैरंतर्यत्वावधारणादेकधैवानुद्रष्टव्यमिति च॥ यदि च ब्रह्मणश्चित्रपटवद्वृक्षसमुद्रादिवच्चोत्पत्त्याद्यनेकधर्मविचित्रता विजिग्राहयिषिता एकरसं सैंधवघनवदनंतरमबाह्यमिति नोपसमाहरिष्यदेकधैवानुद्रष्टव्यमिति च न प्रायोक्ष्यत य इह नानेव पश्यतीति निंदावचनं च॥ तस्मादेकरूपैकत्वप्रत्ययदार्ढ्यायैव सर्ववेदांतेषूत्पत्तिस्थितिलयादिकल्पनानतत्प्रत्ययकरणाय ॥

स्फुलिंगादिदृष्टांतश्रुत्येत्याशंक्याहात्रेति॥ तथापि कथं ब्रह्मप्रत्ययदार्ढ्यं तत्राह विस्फुलिंगस्येति॥ दृष्टांतेष्वेकत्वदर्शनं तस्मादिति परामृष्टं उत्पत्त्यादिभेदे नास्ति शास्त्रतात्पर्यमित्यत्र हेत्वंतरमाह सैंधवेति॥ चकारोऽवधारणादिति पदमनुकर्षति॥ संगृहीतमर्थं विवृणोति यदि चेत्यादिना॥ निंदावचनं च न प्रायोक्ष्यतेति संबंधः एकरस्यावधारणश्रवणफलमाह तस्मादिति॥ एकत्वस्य भेदसहत्वं वार

60

आदिशब्देनप्रवेशननियमनेग्राह्यो तेननतस्यप्रत्ययकरणायेत्यत्रतक्रुब्देनोत्सत्यादिभेदोविवक्षितः किंचपरस्यैकदेशोविज्ञानात्मेत्यत्रतदेकदेशःस्वाभा
विकोवास्यादौपाधिकोवेतिविकल्प्याद्यंदूषयतिनचेति॥विपक्षेदोषमाह्हादेशस्येति॥द्वितीयमुत्थापयति॥अथेति॥एकदेशस्यौपाधिकत्त्वपक्षे
परस्मिन्विवेकवतांतदखंडत्वबुद्धिभाजांतदेकदेशोवस्तुतःपृथक्भूतान्यवहारावलंबनमितिनैवबुद्धिर्ज्ञायते॥औपाधिकस्यस्फटिकलौहि
त्यवन्मिथ्यात्वादित्युत्तरमाहनतदेति॥ननुजीवेकर्त्ताहंभोक्ताहमितिपरिच्छिन्नधीःसर्वेषामुपलभ्यतेसाचतस्यवस्तुतोऽपरिच्छिन्नब्रह्ममात्रत्वान्मि

नचनिरवयवस्यपरस्यपरमात्मनोऽसंसारिणःसंसार्येकदेशकल्पनान्याय्या॥स्वतोऽदेशत्वात्परमात्मनः॥अदेशस्यपरस्यैकदेश
संसारित्वकल्पनायांपरएवसंसारीतिकल्पितंभवेत्॥अथपरोपाधिकृतएकदेशःपरस्यघटकरकाद्याकाशवत्॥नतदातत्रविवे
किनांपरमात्मैकदेशःपृथक्संव्यवहारभागितिमतिरुत्पद्यते॥अविवेकिनांविवेकिनांचोपचरिताबुद्धिर्दृष्टेतिचेत्नाविवेकिनांमि
थ्याबुद्धित्वात्विवेकिनांचसंव्यवहारमात्रालंबनार्थत्वात् यथाकृष्णोरक्तश्चाकाशइतिविवेकिनामपिकदाचित्कृष्णतारक्तताचाका
शस्यसंव्यवहारमात्रालंबनार्थत्वंप्रतिपद्यतइतिनपरमार्थतःकृष्णोरक्तोवाकाशोभवितुमर्हति॥ तस्मान्नधीवदुपचरितातस्मादुभये

षामुक्तात्मबुद्धिदर्शनात्परमात्मैकदेशत्वंजीवस्यदुर्वारमितिचोदयस्यविवेकिनामिति॥तत्राविवेकिनांयथोक्ताबुद्धिरुपचरितानभवत्यतस्तस्मिंस्त
द्बुद्धित्वेनाविद्यात्वादितिपरिहरतिनेत्यादिना॥तथापिविवेकिनामीदृशीधीरुपचरितेतिचेत्तत्राहविवेकिनांचेति॥तेषांसंव्यवहारोभिज्ञाभिवदनात्म
कस्तावन्मात्रस्यालंबनमाभासभूतोर्थःतद्विषयत्वात्तद्बुद्धेरपिमिथ्याबुद्धित्वादुपचरितत्वासिद्धिरित्यर्थः॥विवेकिनामविवेकिनांचात्मनिपरिच्छिन्न
धीरुपलब्धेत्येतावतानतस्यवस्तुतोब्रह्मांशत्वादिसिद्धतीत्येतदृष्टांतेनसाधयतियथेति॥अविवेकिनामित्यपेरर्थः॥
चित्रेग्निर्व्याघ्रसर्पाणांमुखेदत्वास्वतर्जनी॥बालंवदत्यरेबालपश्येदंदूरतोमुखं॥एतावतानशब्दस्यसत्यत्वंप्रत्ययस्यच॥एवमेवमभिज्ञानांव्यवहारेत्रकाक्षतिः २

ब्रह्मणि वस्तुतोंऽशादिकल्पनानकर्त्तव्येतिदार्ष्टान्तिकमुपसंहरति अत इति॥ अंशांशिनो विशदीकरणमेकदेशैकदेशीति॥ अतः शब्दोपात्तमेव हेतुं स्फुटयति सर्वकल्पनेति॥ सर्वासां कल्पनानामपनयनमेवार्थः सारत्वेनाभीष्टः तत्परत्वादुपनिषदां तदेकसमधिगम्ये ब्रह्मणि न काचिदपि कल्पनास्तीत्यर्थः॥ उपनिषदां निर्विकल्पकवस्तुपरत्वे फलितमाह अतो हि त्वेति॥ ब्रह्मणो निर्विशेषत्वेपि आत्मनस्तदेकदेशस्य सविशेषत्वं किं न स्या

अतो न पंडितैर्ब्रह्मस्वरूपप्रतिपत्तिविषये ब्रह्मणोंऽशांश्येकदेशैकदेशिविकारविकारित्वकल्पना कार्या॥ सर्वकल्पनापनयनार्थसारपरत्वात्सर्वोपनिषदां॥ अतो हित्वा सर्वकल्पनामाकाशस्येव निर्विशेषता प्रतिपत्तव्या॥ आकाशवत्सर्वगतश्च नित्यो न लिप्यते लोकदुःखेन बाह्य इत्यादिश्रुतिशतेभ्यः॥ नात्मानं ब्रह्मविलक्षणं कल्पयेदुष्णात्मकद्वाग्नेः शीतैकदेशं प्रकाशात्मके वा सवितरि तमएकदेशंतत्कल्पनाऽपनयनार्थसारपरत्वात्सर्वोपनिषदां॥ तस्मान्नामरूपोपाधिनिमित्ता एवात्मन्यसंसारधर्मिणि सर्वव्यवहाराः॥ रूपं रूपं प्रतिरूपो बभूव सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाभिवदन्यदास्त इत्येवमादिमंत्रवर्णेभ्यः॥ न स्वत आत्मनः संसारित्वमलक्तकाद्युपाधिसंयोगजनितरक्तस्फटिकादिबुद्धिवद्भ्रांतमेव न परमार्थतः॥ ध्यायतीव लेलायतीव न कर्मणा वर्द्धते नो कनीयान् न कर्मणा लिप्यते पापकेन॥ समं सर्वेषु भूतेषु तिष्ठंतं परमेश्वरम्॥ शुनि चैव श्वपाके चेत्यादिश्रुतिस्मृतिन्यायेभ्यः परमात्मनोऽसंसारित्वं॥ अत एकदेशो विकारः शक्तिर्वा विज्ञानात्मान्यो वेति विकल्पयितुं निरवयवत्वाभ्युपगमे विशेषतो न शक्यते॥ दित्याशंक्याह नात्मानमिति॥ आत्मा निर्विशेषश्चेत्कथं तस्मिन्व्यवहारस्तत्राह तस्मादिति॥ आत्मनि सर्वो व्यवहारो नामरूपोपाधिप्रयुक्त इत्यत्र प्रमाणमाह रूपंरूपमिति॥ असंसारधर्मिणीत्युक्तं विशेषणं विशदयति न स्वत इति॥ आत्मासंसारित्वमात्मनीत्यत्र मानमाह ध्यायतीति॥ कूटस्थत्वासंगत्वादिन्यायः॥ परमात्मनः सांशत्वपक्षो निराकृतः॥

श्रौतस्मार्तलौकिकं जायत्स्वप्नसुषुप्त्यात्मकं नामरूपक्रियात्मकं वा त्रैयं॥२

ननुतस्यनिरंशत्वेपिकुतोजीवस्यतन्मात्रत्वंतदेकदेशत्वादिसंभवादतआहएकदेशइति॥कथंतर्हिपादोस्यविश्वाभूतानिममैवांशोजीवलोके॥अंशो
नानाव्यपदेशात्॥सर्वएतआत्मनोव्युच्चरंतीतिश्रुतिस्मृतिवादास्तत्राहांशादीति॥न्यायागमाभ्यांजीवेश्वरयोरंशांशित्वादिकल्पनांनिराकृत्यवेदांतानामै
क्यपरत्वेस्थितेसतिद्वैतासिद्धिःफलतीत्याहसर्वोपनिषदामिति॥एकत्वज्ञानस्यसनिदानद्वैतध्वंसित्वमथशब्दार्थः॥प्रकृतंज्ञानंतत्सदेनपरामृश्यतेइ
त्यद्वैतमेवतत्त्वमितिशेषः॥किमर्थमितिप्रश्नमन्वानोद्वैतिनांमतमुत्थापयतिकर्मकांडेति॥वेदांतानामैक्यपरत्वेपिकथंतत्प्रामाण्यविरोधप्रसंगस्तत्रा

अंशादिश्रुतिस्मृतिवादाश्चैकत्वार्थानतुभेदप्रतिपादकाःविवक्षितार्थैकवाक्ययोगादित्यर्थोवाचाम॥सर्वोपनिषदांपरमात्मैकत्वज्ञापनप
रत्वेअथकिमर्थंतत्प्रतिकूलोर्थोविज्ञानात्मभेदःपरिकल्प्यतइति॥कर्मकांडप्रामाण्यविरोधपरिहारायेत्येके॥कर्मप्रतिपादकानिहि
वाक्यान्यनेकक्रियाकारकफलभोक्तृकर्त्राश्रयाणिविज्ञानात्मभेदाभावेह्यसंसारिणएवपरमात्मनएकत्वेकथमिष्टफलासुक्रियासुप्र
वर्त्तयेयुःपुनरनिष्टफलाभ्योवाक्रियाभ्योनिवर्त्तयेयुः॥कस्यवाबद्धस्यमोक्षायोपनिषदारभ्येत॥अपिचपरमात्मैकत्ववादिपक्षेकथंपर
मात्मैकत्वोपदेशःकथंवातदुपदेशग्रहणफलं॥बद्धस्यहिबंधनाशफलायोपदेशस्तदभावउपनिषच्छास्त्रंनिर्विषयमेव॥ हकर्मेति॥तथापिकथं

विरोधावकाशःस्यादित्याशंक्याहविज्ञानात्मेति॥केवलाद्वैतपक्षेकर्मकांडविरोधमुक्त्वातत्रैवज्ञानकांडविरोधमाहकस्यवेति॥परस्यनित्यमुक्तत्वादन्य
स्यस्वतःपरतोवाबद्धस्याभावाद्विद्याभावस्तथाचाधिकार्यभावादुपनिषदारंभासिद्धिरित्यर्थः॥कर्मकांडस्यकांडांतरस्यचप्रामाण्यानुपपत्तिर्विज्ञा
नात्मादिभेदंकल्पयतीत्यर्थापत्तिद्वयमुक्तं॥तत्रद्वितीयामर्थापत्तिंप्रपंचयतिअपिचेति॥कापुनरुपदेशस्यानुपपत्तिस्तत्राहबद्धस्येति॥तदभावइ
त्यत्रतद्ब्रह्मोबद्धमधिकरोतिनिर्विषयंनिरधिकारंकिंचयद्यर्थापत्तिद्वयमुक्तयाविधयोत्तिष्ठतितर्हिभेदस्यदुर्निरूपत्वात्कथंकर्मकांडंप्रमाणमितियद्बुद्ध

ब्रह्मवादेपिशिष्यशासित्रादिभेदाभावेकथमुपनिषत्प्रामाण्यमित्याक्षेपुंसुकरत्वाद्य श्चोपनिषदांप्रतीयमानंशिष्यशासि त्रादिभेदमाश्रित्यप्रामाण्यमि
तिपरिहारःसकर्मकांडस्यापिसमानस्तत्रापिप्रातीतिकंभेदमादायप्रामाण्यस्यसुप्रतिपन्नत्वान्न चभेदप्रतीतिर्भ्रांतिर्बाधाभावादित्यभिप्रे
त्याहएवंतर्हीति॥चोद्यसाम्यंविवृणोतियेनेति॥इतिचोद्यसाम्यात्परिहारस्यापिसाम्यमितिशेषः॥ननुकर्मकांडंभेदपरंब्रह्मकांडंत्वभेदपरंप्र
तिभातिनवस्तुनिविकल्पःसंभवत्यतोन्यतरस्याप्रामाण्यमतआहेवंतर्हीति॥तुल्यमुपनिषदामपिस्वार्थाविघातकत्वमित्याशंक्याहोपनिषदामि

एवंतर्ह्युपनिषद्वादिपक्षस्यकर्मकांडवादिपक्षेणचोद्यपरिहारयोःसमानःपंथाः॥येनभेदाभावेकर्मकांडंनिरालंबनमात्मानंनलभ
तेप्रामाण्यंप्रतितथोपनिषदपि॥एवंतर्हियस्यप्रामाण्येस्वार्थविघातोनास्तितस्यैवकर्मकांडस्यास्तुप्रामाण्यंउपनिषदांतुप्रामाण्य
कल्पनायांस्वार्थविघातोभवेदितिमाभूत्प्रामाण्यं॥नहिकर्मकांडंप्रमाणंसदप्रमाणंभवितुमर्हति॥नहिप्रदीपःप्रकाश्यंप्रकाशयति
नप्रकाशयतिचेति॥प्रत्यक्षादिप्रमाणविप्रतिषेधाच्च॥नकेवलमुपनिषदोब्रह्मैकत्वंप्रतिपादयंत्यःस्वार्थविघातंकर्मकांडप्रामाण्यवि
घातंचकुर्वंतिप्रत्यक्षादिभिर्निश्चितभेदप्रतिपत्त्यर्थैःप्रमाणैश्चविरुध्यंते॥तस्मादप्रामाण्यमेवोपनिषदांअन्यार्थतावास्तुनत्वेवंब्रह्मैकत्व
प्रतिपत्त्यर्थता॥नउक्तोत्तरत्वात्॥ ति॥स्वार्थःशब्दशक्तिवशात्प्रतीयमानःसृष्ट्यादिभेदः॥यत्तूच्यतेकर्मकांडस्यव्यावहारिकंप्रामाण्यंनतात्त्विकंता
त्त्विकंतुकांडांतरस्येतितत्राहनहीति॥यद्धिप्रामाण्यस्यव्यावहारिकत्वंतदेवतस्यतात्त्विकत्वंनहिप्रमाणंतत्त्वंचनावेदयतिव्याघातादित्यभिप्रेत्यदृष्टांतमा
हनहीति॥स्वार्थविघातात्कर्मकांडविरोधाच्चोपनिषदामप्रामाण्यमित्युक्तमुपसंहर्तुमितिशब्दः॥उपनिषदामप्रामाण्येहेत्वंतरमाहप्रत्यक्षादीति॥प्रत्यक्षा
दीनिनिश्चितानिभेदप्रतिपत्त्यर्थानिप्रमाणानितैरितिविग्रहः॥अध्ययनविध्युपपादितानांकृतस्नानामप्रामाण्यमित्याशंक्याहान्यार्थतावेति॥सिद्धांतयं

पाँती १

उपनिषत्प्रामाण्यनिषेधकस्यैं ४ वाक्यत्वाविशेषात्तें ४

तदेवस्फुटयितुंसामान्यन्यायमाहप्रमाणस्येति॥स्वार्थेप्रमोत्पादकत्वाभावेपिप्रामाण्यमिष्ठंतंप्रत्याह्वान्यथेति॥यथोक्तप्रयोजकप्रयुक्तंप्रामाण्यम प्रामाण्यंचेत्येतस्मिन्पक्षेकिंफलतीतिपृच्छतिकिंचेति॥तन्नकिमुपनिषदःस्वार्थंबोधयंतिनवेतिविकल्प्याद्यमनूद्यदूषयतियदितावदिति॥द्वि तीयमुत्थाप्यनिराकरोतिनेत्यादिना॥अग्निर्यथाशीतंनकरोतितथोपनिषदोब्रह्मैकत्वेप्रमांनकुर्वंतीतिवदंतंप्रतिप्रतिबंदिग्रहोनयुक्तोनुभवविरोध दित्याशंक्याहयदीति॥तर्हिस्वार्थप्रमितिजनकत्वान्महावाक्यस्यप्रामाण्यंस्यादित्याशंक्याहप्रतिषेधेति॥उपनिषद्प्रामाण्येभवद्वाक्याप्रामाण्यंतत्प्रामा

प्रमाणस्यहिप्रमाणत्वमप्रमाणत्वंवाप्रमोत्पादनानुत्पादननिमित्तं॥अन्यथाचेत्त्वंभादीनांप्रामाण्यप्रसंगात्शब्दादौप्रमेये॥किंचातोय दितावदुपनिषदोब्रह्मैकत्वप्रतिपत्तिप्रमांकुर्वंतिकथमप्रमाणंभवेयुःनकुर्वंत्येवेतिचेत्यथाग्निःशीतइतिसभवान्नेवंवदन्वक्तव्यःउप निषत्प्रामाण्यप्रतिषेधार्थंभवतोवाक्यमुपनिषत्प्रामाण्यप्रतिषेधंकिंनकरोत्येवाग्निर्वारूपप्रकाशं॥अथकरोतियदिकरोतिभवतुतदाप्र तिषेधार्थंप्रमाणंचभवद्वाक्यमग्निश्चरूपप्रकाशकोभवेत्प्रतिषेधवाक्यप्रामाण्येभवत्येवोपनिषदांप्रामाण्यमत्रभवंतोब्रुवंतुकःपरिहारइ ति॥नन्वत्रप्रत्यक्षामद्वाक्येउपनिषत्प्रामाण्यप्रतिषेधार्थाप्रतिपत्तिरग्नेश्चरूपप्रकाशनप्रतिपत्तिःप्रमाकस्तर्हिभवतःप्रद्वेषोब्रह्मैकत्वप्र त्ययेप्रमांप्रत्यक्षांकुर्वंतीषुउपनिषत्सुउपलभ्यमानासुप्रतिषेधानुपपत्तेः॥शोकमोहादिनिवृत्तिश्चप्रत्यक्षंफलंब्रह्मैकत्वप्रतिपत्तिपारं पर्यजनितमित्यवोचाम ॥ ॥ ॥

ण्येतूपनिषत्प्रामाण्यंदुर्वारमितिसाम्येप्राप्तेव्यवस्थापकःसमाधिर्वक्तव्यइत्याहात्रेति॥उक्तमे वार्थंचोद्यसमाधिभ्यांविशदयतिनन्वित्यादिना॥प्रतिषेधमंगीकृत्योक्ता॥यथोक्तोपनिषदुपलंभेसतितत्स्यनिरवकाशत्वात्प्रद्वेषानुपपत्तिरित्याहप्र तिषेधेति॥उपनिषदुत्थायाःधियोवैफल्यात्तासामप्रमाणतेत्याशंक्याहशोकेति॥एकत्वप्रतिपत्तिस्तावदापातेनजायतेसाचविचारंप्रयुज्यमननादिद्वाराद्दढीभ

अत्रापिवाक्यत्वाविशेषात् ३ प्रतिषेधार्थाइत्यस्यविग्रहोयमंगीकृत्योक्तायथोक्ताकोर्थःप्रतिषेधार्था २

उपनिषद्प्रामाण्यप्रतिपादनात्मकस्यतववाक्यस्यसामान्यात्तें ३

ऐकस्मिन्नेववाक्ये २

स्वार्थप्रमाजनकत्वादुपनिषदांप्रामाण्यमित्युक्तमुपसंहरतितस्मादिति॥प्रामाण्यहेतुसद्भावादुपनिषदांप्रामाण्यंप्रतिपाद्यतदप्रामाण्यंपरोक्तमनुव
दतियच्चोक्तमिति॥कथंहितासांस्वार्थविघातकत्वंकिंताभ्योब्रह्मैकमेवाद्वितीयंनैवचेतिप्रतिपत्तिरुत्पद्यतेकिंवाकाश्चिद्ब्रह्मैकत्वप्रतिपत्तिमन्याश्चोप
निषदस्तत्प्रतिषेधंकुर्वंतीतिविकल्प्याद्यंदूषयतितदपिनेति॥तदेवप्रपंचयतिनहीति॥एकस्यवाक्यस्यानेकार्थत्वमंगीकृत्यवैधर्म्योदाहरणमुक्तमित्या

तस्मातएवमुक्तोत्तरत्वादुपनिषदंप्रत्यप्रामाण्यशंकातावन्नास्ति॥यच्चोक्तंस्वार्थविघातकत्वादप्रामाण्यमिति॥तदपिनतदर्थप्रतिपत्ते
बोधकाभावात्॥नह्युपनिषद्भ्योब्रह्मैकमेवाद्वितीयंनैवचेतिप्रतिपत्तिरस्तियथाग्निरुष्णःशीतश्चेतिएतस्माद्वाक्याद्विरुद्धार्थद्वयप्रतिप
त्तिःअभ्युपगम्यैवेतदवोचाम॥नतुवाक्यप्रामाण्यसमयेएषन्यायोयदुतैकस्यवाक्यस्यानेकार्थत्वं॥सतिचानेकार्थत्वेस्वार्थश्चस्यात्तद्विघात
कृच्चविरुद्धोन्योर्थः॥नत्वेतद्वाक्यप्रमाणकानांविरुद्धमविरुद्धंचैकंवाक्यमनेकार्थंप्रतिपादयतीत्येषसमयोर्थैकत्वादेकवाक्यता॥नचका
निचिदुपनिषद्वाक्यानिब्रह्मैकत्वप्रतिषेधंकुर्वंति॥यत्तुलौकिकंवाक्यंअग्निरुष्णःशीतश्चेतिनतत्रैकवाक्यतातदेकदेशस्यप्रमाणांतर
विषयानुवादित्वादग्निःशीतइतिएतदेकंवाक्यमग्निरुष्णइतितुप्रमाणांतरानुभवस्मारकंनतुस्वयमर्थावबोधकं॥अतोनाग्निःशीत
इत्यनेनैकवाक्यताप्रमाणांतरानुभवस्मारणेनैवोपक्षीणत्वात्॥यत्तु

हाभ्युपगम्येति॥तस्यांगीकारवादत्वेहेतुमाहनत्विति॥उक्तमर्थंव्यतिरेकद्वारा
विवृणोतिसतिचेति॥भवत्वेकस्यवाक्यस्यानेकार्थत्वंनेत्याहनत्विति॥कस्तर्हितेषांसमयस्तत्राहार्थैकत्वादिति॥तदुक्तंप्रथमेतंत्रे॥अर्थैकत्वादेकंवाक्यंसाकां
संचेद्विभागेस्यादिति॥द्वितीयंदूषयतिनचेति॥एकस्यवाक्यस्यानेकार्थत्वंलोकेदृष्टमित्याशंक्याहयत्त्विति॥तदेकदेशस्येत्यादिवाक्यंविवृणोत्यग्निरिति॥
अनुवादकबोधकभागयोरेकवाक्यत्वाभावंफलितमाहातइति॥हेत्वर्थमुक्तमेवस्फुटयतिप्रमाणांतरेति॥शीतःशैशिरोग्निरित्येतद्बोधकमेवचेद्वाक्यंक

थंतर्हितत्रलोकस्यविरुद्धार्थधीरित्याशंक्याहयत्त्विति॥

वृ॰र॰ २७ | अ॰ ४

वाँक्यन्यायविदः २

स्वार्थविघातत्वादप्रामाण्यमुपनिषदामित्येतन्निराकृत्य चोद्यांतरमनूद्य निराकरोति यच्चेत्यादिना॥ तस्मिन्निति॥ इष्टार्थप्रापकसाधनोक्तिः॥ ननूपनिषद्वाक्यं ब्रह्मात्मैकत्वं साक्षात्प्रतिपादयदर्थात्कर्मकांडप्रामाण्यविघातकमिति चेत्तदप्रामाण्यमनुत्पत्तिलक्षणं विपर्यासलक्षणं वेति विकल्प्याद्यं दूषयति नचेति॥ विदितपदतदर्थसंगतेर्वाक्यश्राविणस्तदर्थे प्रमोत्पत्तिदर्शनादित्यर्थः॥ स्वार्थे प्रमामुत्पादयदपि वाक्यं मानांतरविरोधादप्रमाणमित्याशंक्याह साधारणे चेदिति॥ स्वगोचरभूरत्वात्प्रमाणानामित्यर्थः॥ विमतं न तत्प्रमोत्पादकं प्रमाणापहृतविषयत्वादनुष्णाग्निवाक्यवदिति शंकते ब्र

विरुद्धार्थप्रतिपादकमिदं वाक्यमिति मन्यते तद्धीतोष्णपदाभ्यामग्निपदसामानाधिकरण्यप्रयोगनिमित्ताभांतिः॥ नत्वेकस्य वाक्यस्यानेकार्थत्वं लौकिकस्य वैदिकस्य वा॥ यच्चोक्तं कर्मकांडप्रामाण्यविघातकृदुपनिषद्वाक्यमिति॥ तन्नान्यार्थत्वाद्ब्रह्मैकत्वप्रतिपादनपरा ह्युपनिषदो नेष्टार्थप्राप्तिसाधनोपदेशं तस्मिन्वा पुरुषनियोगं वारयंत्यनेकार्थत्वानुपपत्तेरेव॥ नच कर्मकांडवाक्यानां स्वार्थे प्रमानोत्पद्यते॥ असाधारणे चेत्स्वार्थे प्रमामुत्पादयति वाक्यं कुतोऽन्येन विरोधः स्याद्ब्रह्मैकत्वे निर्विषयत्वात्प्रमा नोत्पद्यत एवेति चेत्॥ न प्रत्यक्षत्वात्प्रमायाः दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत ब्राह्मणो न हंतव्य इत्येवमादिवाक्येभ्यः प्रत्यक्षा प्रमा जायमाना सा नैव भविष्यति यद्युपनिषदो ब्रह्मैकत्वं बोधयिष्यंतीत्यनुमानं न चानुमानं प्रत्यक्षविरोधे प्रामाण्यं लभते तस्मादसदेवैतद्गीयते प्रमैव नोत्पद्यत इति॥ अपि च यथा

ह्रेति॥ प्रत्यक्षविरोधादनुमानमनवकाशमिति परिहरति नेत्यादिना॥ इतश्च कर्मकांडस्य नाप्रामाण्यमिति वदन्द्वितीयं प्रत्याह अपि चेति॥ यथाप्राप्तस्येत्यस्यैव व्याख्यानमविद्याप्रत्युपस्थापितस्येति साध्यसाधनसंबंधबोधकस्य कर्मकांडस्य न विपर्यासो मिथ्यार्थत्वेऽपि तत्स्वार्थक्रियाकारित्वसामर्थ्यानपहारात्प्रामाण्योपपत्तेरिति भावः॥ ननु कर्मकांडस्य मिथ्यार्थत्वे मिथ्याज्ञानप्रभवत्वादनर्थनिष्ठत्वेनाप्रवर्तकत्वादप्रामाण्यमत आह यथेति॥

राम॰ २७

पैरस्यनित्यमुक्तत्वादन्यस्यस्वतः परतोवाबद्धस्याभावाच्छिष्याभावः॥तथाचाधिकार्यभावादुपनिषदारंभासिद्धिः परमात्मनोजीवात्मनोकल्पयतीत्युक्तं॥११ पुरुषस्यै४

विमतमप्रमाणंमिथ्यार्थत्वाद्विप्रलंभकवाक्यवदित्याशंक्यव्यभिचारमाहयथाकाम्येष्विति॥अग्निहोत्रादिषुकाम्येषुकर्मसुमिथ्याज्ञानजनितं मिथ्याभूतंकाममुपादायशास्त्रप्रवृत्तिवन्नित्येष्वपितेषुसाधनमसदेवादायशास्त्रंप्रवर्त्ततांतथापिबुद्धिमंतानप्रवर्त्तिष्यंतेवेदांतेभ्यस्तन्मिथ्यात्वावगमादित्याशंक्याहनचेति॥अविद्यावतांकर्मसुप्रवृत्तिमाक्षिपतिविद्यावतामेवेति॥द्रव्यदेवतादिज्ञानंवाब्रह्मैकत्वज्ञानंवाकर्मसुप्रवर्त्तकमिति

प्राप्तस्यैवाविद्याप्रत्युपस्थापितस्यक्रियाकारकफलस्याश्रयणेनेष्टानिष्टप्राप्तिपरिहारोपायसामान्येप्रवृत्तस्यतद्विशेषमजानतस्तदाचक्षाणाश्रुतिः क्रियाकारकफलभेदस्यलोकप्रसिद्धस्यसत्यतामसत्यतांवानाचष्टे॥नचवारयतीष्टानिष्टफलप्राप्तिपरिहारोपायविधिपरत्वात्॥यथाकाम्येषुप्रवृत्ताश्रुतिःकामानांमिथ्याज्ञानप्रभवत्वेसत्यपियथाप्राप्तानेवकामानुपादायतत्साधनान्येवविधत्ते॥नतुकामानांमिथ्याज्ञानप्रभवत्वादनर्थरूपत्वाच्चेतिविदधाति॥तथानित्याग्निहोत्रादिशास्त्रमपिमिथ्याज्ञानप्रभवंक्रियाकारकभेदंयथाप्राप्तमेवादायेष्टविशेषप्राप्तिमनिष्टविशेषपरिहारंवाकिमपिप्रयोजनंपश्यदग्निहोत्रादीनिकर्माणिविधत्तेनाविद्यागोचरासद्वस्तुविषयमितिनप्रवर्त्ततेयथाकाम्येषु॥नचपुरुषाःनप्रवर्त्तेरन् अविद्यावंतोदृष्टत्वाद्यथाकामिनः॥विद्यावतामेवकर्माधिकारइतिचेत् नब्रह्मैकत्वविद्यायाकर्माधिकारविरोधस्योक्तत्वात्॥एतेनब्रह्मैकत्वेनिर्विषयत्वादुपदेशेनतद्ग्रहणफलाभावदोषपरिहारउक्तोवेदितव्यः॥पुरुषेच्छारागादिवैचित्र्याच्च॥



विकल्पस्याद्यमंगीकृत्यद्वितीयंदूषयतिनेत्यादिना॥कर्मकांडप्रामाण्यानुपपत्तिरित्याद्यामर्थापत्तिंनिराकृत्यद्वितीयामर्थापत्तिमतिदेशेननिराकरोत्येतेनेति॥कर्मकांडस्यांशंप्रतिसार्थकत्वोपपादनेनेतियावत्॥ननुकर्मकांडसंबंधंबोधयत्प्रवृत्त्याद्विपरमतोरागादिवशात्तदयोगाच्छास्त्रीयप्रवृत्त्यादिविषयस्यद्वैतस्यसत्यत्वमन्यथातद्विषयत्वानुपपत्तिरित्यर्थापत्त्यंतरमायातमितितत्राहपुरुषेच्छेति॥नप्रवृत्तिनिवृत्तीशास्त्रवशादितिशे=षेऐहिकद्रव्यादिषुरागादिवशात्तत्तदृशक्षणभंगुरादृष्टस्वर्गादिसाधनेषुशास्त्रेणप्रवृत्त्ययोगात्शास्त्रप्रवृत्तियोग्येषुस्वर्गादिषुअर्थापत्त्यासत्यत्वंकल्प्यैअन्यथाद्रव्यादिवत्स्वर्गस्यचतुल्येपज्ञादौप्रवृत्त्येवनस्यात्॥२

तदेवस्फुटयत्यनेकाहीति॥शास्त्रस्याकारकत्वात्प्रवर्तकत्वाद्यभावमुक्त्वातन्नैवयुक्तंतस्माहदृश्यंतेहीति॥तर्हिशास्त्रस्यकिंकृत्यमित्याशंक्याहतस्मादि
ति॥तत्रसंबंधविशेषोपदेशेसतीतियावत्॥यथारुचिपुरुषाणांप्रवृत्तिश्चेत्परमपुरुषार्थंकैवल्यमुद्दिश्यसम्यक्ज्ञानसिद्ध्येतदुपायश्रवणादिषुसन्न्या
सपूर्विका॥प्रवृत्तिर्बुद्धिपूर्वकारिणामुचितेत्याशंक्याहतथेति॥रागादिवैचित्र्यानुसारेणेतियावत्॥उक्तंहि॥अपिवृंदावनेशून्येसृगालत्वंसइच्छतिनतुनिर्वि

अनेकाहिपुरुषाणामिच्छारागादयश्चदोषाविचित्रास्ततश्चबाह्यविषयरागाद्यपहृतचेतसोनशास्त्रंनिवर्तयितुंशक्तंनापिस्वभावतोबाह्यवि
षयविरक्तचेतसोविषयेषुप्रवर्तयितुंशक्तंकिंतुशास्त्रादेतावदेवभवतीदमिष्टसाधनमिदमनिष्टसाधनमितिसाध्यसाधनसंबंधविशेषाभि
व्यक्तिःप्रदीपादिवत्तमसिरूपादिज्ञानंनतुशास्त्रंभृत्यानिवबलान्निवर्तयतिनियोजयतिवा॥दृश्यंतेहिपुरुषाःरागादिगौरवाच्छास्त्रमप्य
तिक्रामंतः॥तस्मात्पुरुषमतिवैचित्र्यमपेक्ष्यसाध्यसाधनसंबंधविशेषाननेकधोपदिशति॥तत्रपुरुषाःस्वयमेवयथारुचिसाधनविशेषे
षुप्रवर्तंतेशास्त्रंतुसवितृप्रदीपादिवदुदास्तएव॥तथाकस्यचित्परोपिपुरुषार्थोऽपुरुषार्थवदवभासते॥यस्ययथावभासःसतथारूपंपुरु
षार्थंपश्यति॥तदनुरूपाणिसाधनान्युपादित्सते॥तथाचार्थवादोपि॥त्रयाःप्राजापत्याःप्रजापतौपितरिब्रह्मचर्यमूषुरित्यादिः॥तस्मान्नब्र
ह्मैकत्वंज्ञापयिष्यंतोवेदांताविधिशास्त्रस्यबाधकाः॥नचविधिशास्त्रमेतावतानिर्विषयंस्यात्॥ षयंमोक्तुंसंगंतुमर्हतिगौतमेत्यादि॥कथं

तर्हिपुरुषार्थविवेकसिद्धिस्तत्राहयस्येति॥पुरुषार्थदर्शनकार्यमाहतदनुरूपाणीति॥स्वाभिप्रायानुसारेणपुरुषाणांपुरुषार्थप्रतिपत्तिरित्यत्रग
मकमाहतथाचेति॥पश्चाद्दकारत्रयेप्रजापतिनोक्तेदेवादयःस्वाभिप्रायेणदमाद्यर्थत्रयंजगृहुस्तथास्वाभिप्रायवशादेवपुरुषाणांपुरुषार्थधीरित्यर्थवा
दतोवगतमित्यर्थः॥पूर्वोत्तरकांडयोरविरोधमुपसंहरतितस्मादिति॥एकस्यवाक्यस्यद्व्यर्थत्वायोगादितियावत्॥अर्थाद्बाधकत्वमाशंक्याहनचेति॥एताव
=१कर्मकांडंतावत्साध्यसंबंधमात्रंबोधयतिनतुवेदांतविरुद्धस्वर्गादिसत्यत्वंअर्थभेदेनवाक्यभेदात्तथावेदांतशास्त्रमपिसर्वस्यब्रह्मत्वंबोधयन्असत्यत्वंबोधयतिनतुकर्मणिरागिणांप्रवृत्तम
र्थभेदाद्वाक्यभेदापत्तेः॥१

वेदांतानामबाधकत्वेपिकर्मकांडस्यतत्प्रामाण्यनिवर्तकत्वमस्तीत्याशंक्याहनापीति॥स्वपक्षेसर्वविरोधनिरासद्वारास्वार्थेवेदांतानांप्रामाण्यमुक्तंसंप्र
तितार्किकपक्षमुत्थापयतितत्रेति॥ऐक्येशास्त्रागम्येस्वीकृतेसतीतियावत्॥सर्वंप्रमाणमित्यागमवाक्यंप्रत्यक्षादिचेत्यर्थः॥कथमैक्यावेदकमागम
वाक्यंप्रत्यक्षादिनाविरुद्ध्यतेतत्राह॥तथेति॥यथाब्रह्मैकत्वेप्रवृत्तस्यशास्त्रस्यप्रत्यक्षादिविरोधंमन्यंतेतथातेअस्मान्प्रतिचोदयंत्यपीतियोजना॥तत्रप्र

नाप्युक्तकारकादिभेदंविधिशास्त्रमुपनिषदांब्रह्मैकत्वंप्रतिप्रामाण्यंनिवर्त्तयति॥स्वविषयशूराणिहिप्रमाणानिश्रोत्रादिवत्॥तत्रपं
डितंमन्याःकेचित्स्वचित्तवशात्सर्वंप्रमाणमितरेतरविरुद्धंमन्यंतेतथाप्रत्यक्षादिविरोधमपिचोदयंतिब्रह्मैकत्वे॥शब्दादयःकिलश्रोत्रा
दिविषयाःभिन्नाःप्रत्यक्षंउपलभ्यंतेब्रह्मैकत्वंब्रुवतांप्रत्यक्षविरोधःस्यात्तथाश्रोत्रादिभिःशब्दाद्युपलब्धारःकर्त्तारश्चधर्माधर्मयोःप्रति
शरीरंभिन्नाअनुमीयंतेसंसारिणः॥तत्रब्रह्मैकत्वंब्रुवतामनुमानविरोधश्च॥तथाचागमविरोधंवदंतिग्रामकामोयजेतपशुकामोय
जेतस्वर्गकामोयजेतेत्येवमादिवाक्येभ्योग्रामपशुस्वर्गादिकामास्तत्साधनाद्यनुष्ठातारश्चभिन्नाअवगम्यंते॥अत्रोच्यते॥तेतुकुतर्क
दूषितांतःकरणाःब्राह्मणादिवर्णापसदाःअनुकंपनीयाआगमार्थविछिन्नसंप्रदायबुद्धयइति॥कथंश्रोत्रादिद्वारैःशब्दादिभिःप्र
त्यक्षतउपलभ्यमानैर्ब्रह्मणएकत्वंविरुद्ध्यतइतिवदंतोवक्तव्याः

त्यक्षविरोधंप्रकटयतिशब्दादयइति॥संप्रत्यनुमानविरोधमाहतथेति॥स्व
देहसमवेतचेष्टातुल्यचेष्टादेहांतरेदृष्टासाचप्रयत्नवत्पूर्विकाविशिष्टचेष्टात्वात्संमतवदित्यनुमानविरुद्धमैक्यशास्त्रमित्यर्थः॥तत्रैवप्रमाणांतरवि
रोधमाहतथाचेति॥मानत्रयविरोधान्नब्रह्मैक्यमितिप्राप्तेप्रत्याहतेतुकुतर्केति॥इतिदूष्यतातेषामितिशेषः॥द्वैतग्राहिप्रमाणविरुद्धमद्वैत
मितिवदतांकथंशोच्यतेतिपृच्छतिकथमिति॥तत्रब्रह्मैकत्वेप्रत्यक्षविरोधंपरिहरतिश्रोत्रादीति॥तथात्वेतदेकत्वाभ्युपगमविरोधःस्यादितिशेषः॥

165

एक—स्मिन्नेव देहे स्वप्रयत्नपूर्वकस्य पुरुषस्यैवैकस्य करचरणादौ भिन्नचेष्टायाः संभवात्स्वदेहचेष्टायाः भेदादात्मभेदानुपलब्धिविरोधेऽप्यात्मैक्यरभावादनुमानानुत्थानादेकस्मिन्देहे यथात्मैक्ये कत्वेपि चेष्टाभेदो भवति तथानेकेष्वपि देहेष्वात्मैकत्वे चेष्टाभेदो भवत्येवेति कृत्वा चेष्टाभेदो नात्मभेदसाधकः तस्माच्चेष्टाभेदादेवात्मभेदः साधनीयः स च नाध्यक्षात् प्रत्यक्षप्रमाणात्सिध्येत्परस्यात्मनः स्वस्मादि

यथा सर्वभूतस्थमेकमाकाशमित्यत्र न शब्दादिभेदग्राहि प्रत्यक्षविरोधस्तथैकं ब्रह्मेत्यत्रापि न तद्विरोधोऽस्तीत्याह अथेति॥ तस्य कल्पितभेदविषयत्वादिति भावः॥ अनुमानविरोधं परोक्तमनुवदति यच्चेति॥ या चेष्टा सा प्रयत्नवत्पूर्विकेत्येतावता नात्मभेदः सिध्यति॥ स्वप्रयत्नपूर्वकत्वस्यापि संभवादनुपलब्धिविरोधे तन्नुमानस्यैवानुत्थानात्स्वदेहचेष्टायाः स्वप्रयत्नपूर्वकत्ववत्परदेहचेष्टायास्तद्यत्नपूर्वकत्वे चादावेव स्वपरभेदः सिध्येत् स च नाध्यक्षात्परस्यानध्यक्षत्वान्नानुमानादन्योन्याश्रयादित्याशयवानाह भिन्ना इति॥ दोषान्तराभिधित्सयाशंकयति अथेति॥ अस्मदर्थं पृच्छति के यूयमिति॥ स हि स्थूलदे

अनुमानकुशलाः १

किं शब्दादीनां भेदेनाकाशैकत्वं विरुध्यत इति अथ न विरुध्यते॥ न तर्हि प्रत्यक्षविरोधः॥ यच्चोक्तं प्रतिशरीरं शब्दाद्युपलब्धा रागधर्माधर्मयोश्च कर्त्तारो भिन्ना अनुमीयन्ते तथा च ब्रह्मैकत्वे अनुमानविरोध इति॥ भिन्नाः केरनुमीयन्त इति प्रष्टव्याः॥ अथ यदि ब्रूयुः सर्वैरस्माभिरनुमानकुशलैरिति के यूयमनुमानकुशला इत्येवं पृष्टानां किमुत्तरं॥ शरीरेन्द्रियमनआत्मसु च प्रत्येकमनुमानकौशलप्रत्याख्याने शरीरेन्द्रियमनःसाधना आत्मानो वयमनुमानकुशला अनेककारकसाध्यत्वात्क्रियाणामिति चेत्॥ एवं तर्ह्यनुमानकौशले भवतामनेकत्वप्रसंगः॥ अनेककारकसाध्या हि क्रियेति भवद्भिरेवाभ्युपगतं तत्रानुमानं च क्रिया सा शरीरेन्द्रियमनआत्मसाधनैः कारकैरात्मकर्तृका निर्वर्त्त्यत इत्येतत्प्रतिज्ञातं

होवा करणजातं वा देहद्वयादन्यो वा नाद्यौ तयोरचेतनत्वादनुमातृत्वायोगान्न तृतीयस्तस्याविकारित्वादिति भावः॥ किंशब्दस्य प्रश्नार्थतां मत्वा पूर्ववादी आह शरीरेति॥ आत्मा देहादिबहुसाधनविशिष्टोऽनुमाता क्रियाणामनेककारकसाध्यत्वादेवंविशिष्टात्मकर्तृकानुमानात्प्रतिदेहमात्मभेदधीरित्यर्थः॥ विशिष्टस्यात्मनोऽनुमानकर्तृत्वे क्रियाणामनेककारकसाध्यत्वादिति हेतुश्चेत्तदा तव देहादेश्चैकैकस्याप्यनेकत्वं स्यादित्युत्तरमाह एवं तर्हीति॥ तदेव विवृणोति अनेकेति॥ आत्मनो देहादीनां चानुमानकारकाणां प्रत्येकमवान्तरक्रियास्ति वह्न्यादिषु तथादर्शनात्तथा चात्मनो वां

१० स्वभेदपूर्वकः परस्य भेदः परभेदपूर्वकः स्वस्य भेदः भेदे सिद्धे सति व्याप्तिग्रहादनुमानं अनुमानेन भेदसिद्धिरिति च १० आक्षेपे किंशब्द इति सिद्धान्त्यभिप्रायमज्ञात्वा ४

तस्यामपिक्रियात्वसाम्यान्नानेककारकसाध्यत्वाभावप्रसंगात्=२ सावयवत्वात्परिच्छिन्नत्वात्संघातत्वाच्च १
तथाहिजन्ममरणकरणानांप्रतिनियमादयुगपत्प्रवृत्तेश्चपुरुषबहुत्वंसिद्धंत्रैगुण्यविपर्ययाच्चैव=४
द्येपिआत्मातिरिक्तानेककारकसाध्यत्वात्तदनतिरिक्ततत्साध्यत्वाभावानाद्यो॰नवस्थानात्द्वितीयेत्वात्मनो॰नेकत्वापत्तेर्नैरात्म्यंस्यान्नचावांतरक्रियाना
नेककारकसाध्याप्रधानक्रियायामपितथात्वप्रसंगात् इतेनदेहादिष्वपिकारकत्वंप्रत्युक्तमितिभावः॥यत्त्वात्मात्मप्रतियोगिकभेदवान्वस्तुत्वात्घट
वदितितत्रात्माप्रतिपन्नो॰प्रतिपन्नोवेतिविकल्प्यद्वितीयंप्रत्याहयोहीति॥प्रतिपन्नत्वपक्षेपिभेदेनाभेदेनवातत्प्रतिपत्तिरुभयथापिनानुमानप्रवृत्ति
रित्याहतत्रेति॥इतश्चात्मभेदानुमानानुत्थानमित्याहकेनेति॥किंशब्दस्याक्षेपार्थत्वंस्फुटयतिनहीति॥जन्मादीनांप्रतिनियमादिलिंगवशादात्मभेदः
=भवतद् तिशेषः३
तत्रवयमनुमानकुशलाद्रत्येवंवदद्भिःशरीरेंद्रियमनःसाधनाआत्मानःप्रत्येकंवयमनेकइत्यभ्युपगतंस्यादहो॰नुमानकौशलंप्रदर्शि
तमपुच्छशृंगैस्तार्किकबलीवर्दैः॥योह्यात्मानमेवनजानातिसकथंमूढस्तद्गतंभेदमभेदंवाजानीयात्॥तत्रकिमनुमिनोतिकेनवालिंगे
नन्ह्यात्मनःस्वतोभेदप्रतिपादकंकिंचिल्लिंगमस्तियेनलिंगेनात्मभेदंसाधयेत्॥यानिलिंगान्यात्मभेदसाधनायनामरूपवंत्युपन्यस्य
तितानिनामरूपगतान्युपाधयएवात्मनोघटकरकापवरकभूछिद्राणीवाकाशस्य॥यदाकाशस्यभेदलिंगंपश्यतितदात्मनोपिभेद
लिंगंलभेतसःनह्यात्मनःपरतोपिविशेषमनभ्युपगच्छद्भिस्ताकिंकशतैरपिभेदलिंगमात्मनोदर्शयितुंशक्यते॥स्वतस्तुदूरादपनीतमे
वाविषयत्वादात्मनः॥यद्यत्परआत्मधर्मत्वेनाभ्युपगच्छतितस्यतस्यनामरूपात्मकताभ्युपगमात्॥नामरूपाभ्यांचात्मनोन्यताभ्युपग
मादाकाशोवैनामनामरूपयोर्निर्वहितातेयदंतरातद्ब्रह्मेतिश्रुतेः सेत्स्यतीतिचेन्नेत्याहयानीति॥आत्मनःसजातीयभेदेलिंगाभावंदृष्टांतेनसा
धयतियदेति॥किंचौपाधिकोवास्वाभाविकोवात्मनिभेदःसाध्यतेनाद्यःसिद्धसाध्यत्वादित्यभिप्रेत्याहनहीति॥नद्वितीयइत्याहस्वतस्त्विति॥आत्माद्रव्य
त्वातिरिक्तापरजातीयो॰श्रावणविशेषगुणत्वात्घटादिवदित्यनुमानांतरमाशंक्यान्यतरासिद्धिंदर्शयतियद्यदिति॥ताभ्यामात्मनोन्यत्वाभ्युपगमेम
अविघातः५ द्रव्यत्वातिरिक्तत्वंपृथिवीत्वाद्यपरसामान्यत्वं॥तज्जातीयत्वंनामआत्मत्वसामान्यत्वं॥आत्मत्वजातिविशेषगुणवत्वात्॥ २

166

= यत्पूर्वोक्तायाअर्थापत्तेरनुवादःकृतःयदुक्तमित्यादिस्तस्यार्थः ३



तत्रैवोपपत्तिमाहोत्पत्तीति॥अनुमानाविरोधमुपसंहरत्यतइति॥आगमविरोधमुक्तन्यायातिदेशेननिराकरोत्येतेनेति॥औपाधिकभेदाश्रयत्वेनव्यवहारस्योपपन्नत्वोपदर्शनेनेतियावत्॥प्रत्यक्षानुमानागमैरद्वैतस्याविरोधेपिस्याद्विरोधोर्थापत्त्येतिचेत्तत्राहयदुक्तमिति॥उपदेशोयस्मैक्रियतेयस्यचोपदेशग्रहणप्रयुक्तंफलंतयोर्ब्रह्मैकत्वेसत्युपदेशानर्थक्यमित्यनुवादार्थः॥किंक्रियाणामनेककारकसाध्यत्वादेवंचोद्यते॥किंवाब्रह्मणोनित्यमुक्तत्वादितिविकल्प्याद्यंदूषयतितदपीति॥तासामनेककारकसाध्यत्वस्यप्रत्युदस्तत्वादितिभावः॥यदिब्रह्मणोनित्यमुक्तत्वाभिप्रायेणोपदेशानर्थक्यंचोद्यतेतत्रनित्यमु

नामरूपेव्याकरवाणीतिच॥उत्पत्तिलयात्मकेहिनामरूपेतद्विलक्षणंचब्रह्मअतोनुमानस्यैवाविषयत्वात्कुतोनुमानविरोधः॥एतेनागमविरोधःप्रत्युक्तः॥यदुक्तंब्रह्मैकत्वेयस्माउपदेशोयस्यचोपदेशग्रहणफलंतदभावादेकत्वोपदेशानर्थक्यमितितदपिनानेककारकसाध्यत्वात्क्रियाणांकृश्चोद्योभवतिएकस्मिन्ब्रह्मणिनिरुपाधिकेनोपदेशोनोपदेशानचोपदेशग्रहणफलंतस्मादुपनिषदांचानर्थक्यमित्येतदभ्युपगतमेव॥अथानेककारकविषयानर्थक्यंचोद्यतेनस्वतोभ्युपगमविरोधादात्मवादिनां॥तस्मात्तार्किकचाटभटराजाप्रवेश्यमभयंदुर्गमिदमल्पबुध्यगम्यंशास्त्रगुरुप्रसादरहितैश्च॥कस्तंमदामदंदेवंमदन्योज्ञातुमर्हति॥ क्तेब्रह्मणिज्ञातेऽज्ञातेवातदान

र्थक्यचोदनेतिविकल्प्याद्यमंगीकरोतिएकस्मिन्निति॥द्वितीयमुत्थापयतिअथेति॥उपदेशस्तावदनेकेषांकारकाणांसाध्यतयाविषयस्तदानर्थक्यमज्ञाते नित्यमुक्तेब्रह्मणिचोद्यतेचेदित्यर्थः॥सर्वैरात्मवादिभिरुपदेशस्यज्ञानार्थमिष्टत्वात्तद्विरोधादज्ञातेब्रह्मणितदानर्थक्यचोद्यमनुपपन्नमित्याहनस्वतइति॥अद्वैतेविरोधांतराभावेपितार्किकसमयविरोधोस्तीत्याशंक्याहतस्मादिति॥प्रमाणविरोधाभावस्तच्छब्दार्थः॥आर्यमर्यादांभिंदानाश्चाटाःविवक्षंतेभटास्तुसेवकाःमिथ्याभाषिणस्तेषांसर्वेषांराजानस्तार्किकास्तैरप्रवेश्यमनाक्रमणीयमिदंब्रह्मात्मैकत्वमितियावत्॥शास्त्रादिप्रसादशून्यैरगम्यत्वेप्रमाणमाहकस्त

स्येस्य ६

देवतादेवैरप्रसादेनलभ्यंज्ञानमित्यत्रश्रुतिस्मृतिवादाःसंतितेभ्यश्चशास्त्रादिप्रसादहीनैरलभ्यंतत्त्वमितिनिश्चितमित्यर्थः॥ शास्त्रादिप्रसादवता मेवतत्त्वंसुगममित्यत्रश्रौतंस्मार्तंचलिंगांतरंदर्शयतितदेजतीति॥ ब्रह्मणोऽद्वितीयत्वेसर्वप्रकारविरोधाभावेफलितमाहतस्मादिति॥ संसारिणो ब्रह्मणोर्थांतरत्वाभावेश्रुतीनामानुकूल्यंदर्शयतितस्मादिति॥ अद्वैतेश्रुतिसिद्धेविचारनिष्पन्नमर्थमुपसंहरति॥ तस्मात्सरस्येति॥ २०॥ चतुर्था ध्यायस्यप्रथमंब्राह्मणं॥ १॥ वृत्तवर्तिष्यमाणयोःसंगतिंवक्तुंवृत्तंकीर्तयतिब्रह्मेति॥ ब्रह्मतेब्रवाणीतिप्रक्रम्यव्येवत्वाज्ञपयिष्यामीतिप्रतिज्ञायज

देवैरत्रापिविचिकित्सितंपुरानैषातर्केणमतिरापनेया॥ वरप्रसादलभ्यत्वंश्रुतिस्मृतिवादेभ्यश्च॥ तदेजतितन्नैजतितद्दूरेतद्वंति कइत्यादिविरुद्धधर्मसमवायित्वप्रकाशकमंत्रवर्णेभ्यश्च॥ गीतासुचमत्स्थानिसर्वभूतानीत्यादि॥ तस्मात्परब्रह्मव्यतिरेकेणसंसारी नामनान्यद्वस्त्वंतरमस्तितस्मात्सुष्ठुच्यते॥ ब्रह्मवाइदमग्रआसीत्तदात्मानमेवावेदहंब्रह्मास्मीतिनान्यदतोऽस्तिद्रष्टृनान्यदतोऽस्तिश्रो तृइत्यादिश्रुतिशतेभ्यः॥ तस्मात्परस्यैवब्रह्मणःसत्यस्यसत्यंनामउपनिषत्परा॥ २०॥ चतुर्थाध्यायस्यप्रथमंब्राह्मणं॥ १॥ ब्रह्मज्ञपयिष्या मीतिप्रस्तुतंतत्रयतोजगज्जातंयन्मयंयस्मिंश्चलीयतेतदेकंब्रह्मेतिज्ञापितं॥ किमात्मकंपुनस्तज्जगज्जायतेलीयतेच॥ पंचभूतात्मकंभूता निचनामरूपात्मकानिनामरूपेसत्यमितिह्युक्तं॥ तस्यसत्यस्यपंचभूतात्मकस्यसत्यंब्रह्म॥ कथंपुनर्भूतानिसत्यमितिमूर्तामूर्तब्राह्म

णं गतोजन्मादयोयतस्तदद्वितीयंब्रह्मेतिव्याख्यातमित्यर्थः॥ जन्मादिविषयस्यजगतःस्वरूपंपृच्छतिकिमात्मकमिति॥ विप्रति पत्तिनिरासार्थंतत्स्वरूपमाहपंचेति॥ कथंतर्हिनामरूपकर्मात्मकंजगदित्युक्तंतत्राहभूतानीति॥ तत्रगमकमाहनामरूपेइति॥ भूता नांसत्यत्वेकथंब्रह्मणःसत्यत्ववाचोयुक्तिरित्याशंक्याहतस्येति॥ तत्सत्यमित्यवधारणाद्ध्येषुभूतेषुसत्यत्वासिद्धिरितिशंकयित्वासमाधत्तेकथ

सच्चत्यच्चसत्यमितिश्रुतत्वाभूतानिसत्यशब्दवाच्यानिविवक्ष्यंतेचेत्कथंतर्हिकार्यकरणसंघातस्यप्राणानांचसत्यत्वमुक्तंतत्राहमूर्तेति॥यथो
क्तभूतरूपत्वात्कार्यकरणानांतदात्मकानिभूतानिसत्यानीत्यंगीकारात्कार्यकरणानांसत्यत्वंप्राणाअपितदात्मकाःसत्यशब्दवाच्याभवंतीतिप्राणा
वैसत्यमित्यविरुद्धमित्यर्थः॥एवंपातनिकांकृत्वोत्तरब्राह्मणद्वयस्यविषयमाह॥तेषामिति॥उपनिषद्व्याख्यानायब्राह्मणद्वयमित्युक्तिविरुद्धमेतदि

मूर्तामूर्तभूतात्मकत्वात्कार्यकरणात्मकानिभूतानिप्राणाअपिसत्यं॥तेषांकार्यकरणात्मकानांभूतानांसतत्त्वनिर्दिधारयिषयाब्राह्म
णद्वयमारभ्यते॥सैवोपनिषद्व्याख्याकार्यकरणसतत्त्वावधारणद्वारेणहिसत्यस्यसत्यंब्रह्मावधार्यते॥अत्रोक्तंप्राणावैसत्यंतेषामेषस
त्यमितितत्रकेप्राणाःकियंतोवाप्राणविषयाउपनिषदःकाइतिचब्रह्मोपनिषत्प्रसंगेनकरणानांप्राणानांस्वरूपमवधारयति॥पथिग

यो ह वै शिशुꣳ साधानꣳ सप्रत्याधानꣳ सस्थूणꣳ सदामं वेद सप्त ह द्विषतो भ्रातृव्यानवरुणद्धि ॥

तकूपारामाद्यवधारणवत्॥योहवैशिशुंसाधानंसप्रत्याधानंसस्थूणंसदामंवेद॥तस्येदंफलंकिंतत्सप्तसप्तसंख्याकान्हद्विषतोद्वे
षकर्तॄन्भ्रातृव्यान्भ्रातृव्याहिद्विविधाभवंतिद्विषंतोऽद्विषंतश्चतत्रद्विषंतोयेभ्रातृव्यास्तान्द्विषतोभ्रातृव्यानवरुणद्धि ॥

त्याशंक्याहसैवेति॥कार्यकरणात्मकानांभूतानांस्वरूपनिर्द्धारणेवोपनिषद्व्याख्येत्यत्रहेतुमाहकार्येति॥ब्राह्मणद्वयमेवमवतार्यशिशुब्राह्मण
स्यावांतरसंगतिमाहात्रेत्यादिना॥उपनिषदःकाःकियंत्योवेत्युपसंख्यातव्यमित्याकांक्षायामितिशेषः॥ब्रह्मचेदवधारयितुमिष्टंतर्हितदेवावधार्यतां
किमितिमध्येकरणस्वरूपमवधार्यतेतत्राहपथीति॥ब्राह्मणतात्पर्यमुक्त्वातदक्षराणिव्याकरोतियोहेत्यादिना॥विशेषणस्यार्थवत्त्वार्थंभ्रातृव्यान्भिन

केपुनरत्रआतव्याविवस्यंतेतत्राहसप्तेति॥कथंश्रोत्रादीनांसप्तत्वंद्वारभेदादित्याहविषयेति॥कथंतेषांआतव्यत्वमित्याशंक्यविषयाभिलाषद्वारे
त्याहतत्प्रभवाइति॥तथापिकथंतेषांद्वेष्टृत्वमतआहतेहीति॥अथेंद्रियाणिविषयविषयांदृष्टिंकुर्वंत्येवात्मविषयामपितांकरिष्यंतितत्रास्यथोक्त
आतव्यत्वंतेषामितितत्राहप्रत्यगिति॥इंद्रियाणिविषयप्रवणानितत्रैवदृष्टिहेतवोनप्रत्यगात्मनीत्यत्रप्रमाणंकाठकेचेति॥फलोक्तिमुपसंहरतित

सप्तयेशीर्षण्याःप्राणाःविषयोपलब्धिद्वाराणितत्प्रभवाःविषयरागाःसहजत्वात्आतव्याःतेह्यस्यस्वात्मस्थांदृष्टिंविषयविषयांकुर्वंति
तेनतेद्वेष्टारोआतव्याःप्रत्यगात्मेक्षणप्रतिषेधकरत्वात्॥काठकेचोक्तंपरांचिखानिव्यतृणत्स्वयंभूस्तस्मात्पराङ्पश्यतिनांतरात्मन्नि
त्यादि॥तत्रयःशिप्रादीन्वेदतेषांयाथात्म्यमवधारयतिसएतान्आतव्यानवरुणद्ध्यपावृणोतिविनाशयति॥तस्मैफलश्रवणेनाभिमु

अयंवावशिशुर्योयंमध्यमःप्राणस्तस्येदमेवाधानं॥

खीभूतायाह॥अयंवावशिशुःकोसौयोयंमध्यमःप्राणःशरीरमध्येयःप्राणोलिंगात्मायःपंचधाशरीरमाविष्टोबृहत्पांडरवासःसोमराज
न्नित्युक्तोयस्मिन्वाङ्मनःप्रभृतीनिकरणानिविषक्तानिपड्वीशशंकुनिदर्शनात्सएषशिशुरिवविषयेष्वितरकरणवदपटुत्वात्
शिशुःसाधानमित्युक्तंकिंपुनस्तस्यशिशोर्वत्सस्थानीयस्यकरणात्मनआधानंतस्येदमेवशरीरमाधानंकार्यात्मकमाधारआधीयतेस्मि
न्नित्याधानं॥तस्यहिशिशोःप्राणस्येदंशरीरमधिष्ठानं॥ त्रेति॥उक्तविशेषणेषुआतव्येषुसिद्धेष्वितियावत्॥प्राणेवागादीनांविषक्तत्वेहेतुमाहपड्वीशे
ति॥यथाजासोहयस्यतुरोपिपादबंधनकीलानपर्यायेणोत्पाट्योत्क्रामतितथाप्राणोवागादीनितिनिदर्शनवशात्प्राणेविषक्तानिवागादीनिसिद्धानीत्यर्थः॥

सं॰ बद्धेषु ५

शरीरस्याधिष्ठानत्वं स्फुटयत्यस्मिन्हीति॥ प्राणमात्रे विषक्तानि करणानि नोपलब्धिद्वाराणीत्यत्र प्रमाणमाह तथा हीति॥ देहाधिष्ठाने प्राणे विषक्तानि तान्युपलब्धिद्वाराणीत्यत्र अनुभवमनुकूलयति शरीरेति॥ तत्रैवाजातशत्रुब्राह्मणसंवादं दर्शयति तच्चेति॥ शरीराश्रिते प्राणे वागादिषु विषक्तेषु उपलब्धुरुपलभ्यमानत्वमिति यावत्॥ प्रत्याधानत्वं शिरसो व्युत्पादयति प्रदेशेति॥ बलपर्यायस्य प्राणस्य स्थूणत्वं समर्थयते बलेति॥ अयंमुमू

अस्मिन्हि करणान्यधिष्ठितानि लब्धात्मकान्युपलब्धिद्वाराणि भवंति न तु प्राणमात्रे विषक्तानि॥ तथा हि दर्शितमजातशत्रुणोपसंहृतेषु करणेषु विज्ञानमयो नोपलभ्यते शरीरदेशव्यूढेषु तु करणेषु विज्ञानमय उपलभ्यमान उपलभ्यते॥ तच्च प्रदर्शितं पाणिपेषप्रतिबोधनेन॥ इदं प्रत्याधानं शिरः प्रदेशविशेषेषु प्रतिप्रत्याधीयत इति प्रत्याधानं॥ प्राणः स्थूणाऽन्नपानजनिता शक्तिः प्राणो बलमिति पर्यायाः बलावष्टं

इदं प्रत्याधानं प्राणः स्थूणान्नं दाम॥ १॥

भो हि प्राणोऽस्मिञ्छरीरे स यत्नायमात्माऽबल्यं नेत्य संमोहमिवेति दर्शनात्॥ यथा वत्सः स्थूणावष्टंभ एवं॥ शरीरपक्षपाती वायुः प्राणः स्थूणेति केचित्॥ अन्नं दामान्नं हि भुक्तं त्रेधा विपरिणमते यः स्थूलः परिणामः स एतत्तद्द्वयं भूत्वेमामप्येति मूत्रं च पुरीषं च यो मध्यमो रसः सारः स लोहितादिक्रमेण स्वकार्यं शरीरं साप्तधातुकमुपचिनोति स्वयोन्यन्नागमे हि शरीरमुपचीयते

सुरात्मा यस्मिन्काले देहमबलभावं नीतास्संमोहमिव प्रतिपद्यते तदोत्क्रामतीति षष्ठे दर्शनादिति यावत्॥ बलावष्टंभोऽस्मिन्देहे प्राण इत्यत्र दृष्टांतमाह यथेति॥ मतं प्रपंचपक्षं दर्शयति शरीरेति॥ उक्तं हि प्राण इत्युच्छ्वासनिश्वासकर्मा वायुः शारीरः शरीरपक्षपाती गृह्यते॥ एतस्यां स्थूणायां शिशुः प्राणः करणदेवतालिंगपक्षपाती गृह्यते स देवः प्रा

णो सोच्छ्वासं कुर्वंतीति ५

=३ उपाद्देवपूजासंगतकरणमित्रकरणपथिष्विति वा विभाषोपसंख्यानम्‌ उपात्स्यस्तङानौस्तोमंत्रकरणेसति

त्वगसृङ्मांसमेदोमज्जास्थिशुक्रेभ्यः सप्तभ्यो धातुभ्यो जातं साप्तधातुकं॥ तथापि कथमन्नस्य दामत्वं तदाह तेनेति॥१॥ योह वै शिशुमित्यादौ सूत्रितशिश्वादिपदार्थान्व्याख्यायानंतरसंदर्भस्य तात्पर्यं दर्शयन्नुत्तरवाक्यमुपादाय व्याकरोतीदानीमित्यादिना॥ ननु यत्र मंत्रेणोपस्थानं क्रियते तत्रैवोपपदपूर्वस्य तिष्ठतेरात्मनेपदं भवति॥ उक्तं हि उपान्मंत्रकरण इति दृश्यते चादित्यं गायत्र्योपतिष्ठत इति न चात्र मंत्रेण किंचित्क्रियते किं त्वन्नास्य हेतुत्वात्प्राणस्य सप्ता

ऽन्नमयत्वात् विपर्यये ऽपक्षीयते पतति यस्त्वणिष्ठो रसो ऽमृतमूर्क्प्रभाव इति कथ्यते स नाभेरूर्ध्वं हृदयदेशमागत्य हृदयाद्विप्रसृतेषु द्वासप्त तिनाडीसहस्रेष्वनुप्रविश्य यत्तत्करणसंघातरूपं लिंगं शिशुसंज्ञकं तस्य शरीरे स्थितिकारणं भवति बलमुपजनयन्स्थूणाख्यं॥ तेनान्नमुभयतः पाशवत्सदामवत्प्राणशरीरयोर्निबंधनं भवति॥१॥ इदानीं तस्यैव शिशोः प्रत्याधानरूढस्य चक्षुषि काश्चनोपनिषद उच्यंते॥ तमेताः सप्ता

तमेताः सप्ताक्षितय उपतिष्ठंते तद्या इमा अक्षन्लोहिन्यो राजयस्ताभिरेनꣳ रुद्रोऽन्वायत्तोऽथ या अक्षन्नापस्ताभिः पर्जन्यो या कनीनका तयादित्यो यत्कृष्णं तेनाग्निर्यच्छुक्लं तेनेंद्रोऽधरयैनं वर्तन्या पृथिव्यन्वायत्ता द्यौरुत्तरया नास्यान्नं क्षीयते य एवं वेद॥२॥

क्षितय उपतिष्ठंते तं करणात्मकं प्राणं शरीरेऽन्नबंधनं च सुष्ठू ढमेता वक्ष्यमाणाः सप्त सप्तसंख्याका अक्षितयोऽक्षितिहेतुत्वादुपतिष्ठंते॥ यद्यपि मंत्रकरणे तिष्ठतिरुपपूर्व आत्मनेपदी भवति॥ इहापि सप्तदेवताभिधानानि मंत्रस्थानीयानि करणानि तिष्ठतेस्तोत्राण्यात्मनेपदं न विरुद्धं॥

क्षितय इत्युपनिषदो विवक्ष्यंते तत्राह यद्यपीति॥ मंत्रेण कस्यचिदनुष्ठानस्य करणे विवक्षिते तिष्ठतिरुपपूर्वो यद्यप्यात्मनेपदी भवति तथाप्यत्र सप्तरुद्रादिदेवतानामानि मंत्रवदवस्थितानि तैश्च करणान्युपासनानुष्ठानानि अत्र क्रियंते अतस्तिष्ठतेः उपपूर्वस्यात्मनेपदमविरुद्धमिति योजना॥ लोहितरेखाभी

उक्तौ रुद्रादिदेवताः प्राणोपासनाङ्गत्वात्मकस्य संवृता इति वागादयस्तासां रुद्रादिशब्दाभिधेया इत्यभिप्रेत्य उक्तेऽर्थे मंत्रसंमतिमाह २

पर्जन्यस्यान्नद्वारा प्राणस्थयहेतुत्वे प्रमाणमाह पर्जन्य इति॥ कथं पुनरेतेषां प्राणं प्रत्यक्षितित्वं सर्वेषां सिद्धमिति तत्राह तेता इति॥ संप्रत्युपास्ति
फलमाह इत्येवमिति॥ २॥ रुद्रादिशब्दानां देवताविषयत्वान्मंत्रस्यापि तद्विषयतेत्याशंक्य चक्षुषि रुद्रादिगणस्योक्तत्वादिंद्रियसंबंधात्तस्य क

=अर्वाग्बिलस्य १

कास्ता अक्षितय इत्युच्यंते तस्त्र याः इमाः प्रसिद्धाः अक्षन्नक्षिणि लोहिन्यो लोहिताराजयो रेखास्ताभिर्द्वारभूताभिरेनं मध्यमं प्राणं रुद्रो
न्वायत्तः अनुगतः॥ अथ या अक्षन्नक्षिणि आपो धूमादिसंयोगेनाभिव्यज्यमाना स्ताभिरद्भिर्द्वारभूताभिः पर्जन्यो देवतात्माऽन्वायत्तोऽनु
गतः उपतिष्ठत इत्यर्थः॥ स चान्नभूतोऽक्षितिः प्राणस्य पर्जन्ये वृष्टत्यानंदिनः प्राणा भवंतीति श्रुत्यंतरात्॥ या कनीनिका दृक्शक्तिस्तया क

तदेष श्लोको भवत्यर्वाग्बिलश्चमस ऊर्ध्वबुध्नस्तस्मिन्यशो निहितं विश्वरूपं॥ तस्यासत ऋषयः सप्त तीरे वागष्टमी ब्रह्मणा संवि
दानेत्यर्वाग्बिलश्चमस ऊर्ध्वबुध्न इतीदं तच्छिर एष ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्नस्तस्मिन्यशो निहितं विश्वरूपमिति प्राणा वै यशो
विश्वरूपं प्राणानेतदाह तस्यासत ऋषयः सप्त तीर इति प्राणा वा ऋषयः प्राणानेतदाह वागष्टमी ब्रह्मणा संविदानेति वाग्घ्यष्टमी ब्र
ह्मणा संवित्ते॥ ३॥

नीनिकया द्वारेणादित्यो मध्यमं प्राणमुपतिष्ठते॥ यत्कृष्णं चक्षुषि तेनैनमग्निरुपतिष्ठते॥ यच्छुक्लं चक्षुषि तेनेंद्रोऽध
रयावर्तन्या पक्ष्मणा एनं पृथिव्यन्वायत्ताऽधरत्वसामान्यात्॥ द्यौरुत्तरयोर्ध्वत्वसामान्यात्॥ एताः सप्तान्नभूताः प्राणस्य संततमुपतिष्ठंत इ
ति एवं यो वेद तस्यैतत्फलं नास्यान्नं क्षीयते य एवं वेद॥ २॥ तत्रैतस्मिन्नर्थ एष श्लोको मंत्रो भवत्यर्वाग्बिलश्चमस इत्यादिः॥ तत्र मंत्रार्थमाचष्टे श्रु
तिरर्वाग्बिलश्चमस ऊर्ध्वबुध्न इति॥

रणग्रामत्वप्रतीतेस्तद्विषयश्लोको न प्रसिद्धदेवताविषय इत्यभिप्रेत्याह तत्रेति॥ मंत्रस्य व्याख्यानसा

=१ चमंत्यस्मिन्निति व्युत्पत्त्या चमसः पात्रविशेषः १

शिरसश्चमसाकारत्वमस्पष्टमित्याशंक्यसमाधत्तेकथमित्यादिना॥वागष्टमीत्ययुक्तंतस्याःसप्तमत्वेनोक्तत्वान्नचैकस्याःद्वित्वमित्याशंक्याहब्रह्मणेति
शब्दराशिर्ब्रह्मतेनसंवादःसंसर्गस्तंगच्छतीशब्दराशिमुच्चारयंतीवागष्टमीस्यादितियावत्॥तथापिसप्तमत्वंविहायकथमष्टमत्वंतत्राहतद्धेतुमि

कः पुनरसावर्वाग्बिलश्चमसऊर्ध्वबुध्नः॥इदंतच्छिरएषह्यर्वाग्बिलश्चमसऊर्ध्वबुध्नः इदंतच्छिरश्चमसाकारंहितत्॥कथमेषह्यर्वाग्बिलोमुखस्यबिलरूपत्वाच्छिरसोबुध्नाकारत्वा
दूर्ध्वबुध्नस्तस्मिन्यशोनिहितंविश्वरूपमितियथासोमश्चमसेएवंतस्मिंच्छिरसिविश्वरूपंनानारूपंनिहितंस्थितंभवतिकिंपुनस्तद्यशः
प्राणावैयशोनिहितंविश्वरूपंप्राणाःश्रोत्रादयोवायवश्चमरुतःसप्तधातेषुविप्रसृतंयशइत्येतदाहमंत्रःशब्दादिज्ञानहेतुत्वात्तस्यासत

इमावेवगोतमभरद्वाजावयमेवगोतमोयंभरद्वाजइमावेवविश्वामित्रजमदग्नीअयमेवविश्वामित्रोयंजमदग्निरिमावेव
वशिष्ठकश्यपावयमेववशिष्ठोयंकश्यपोवागेवात्रिर्वाचाह्यन्नमद्यतेत्तिर्हवैनामैतद्यदत्रिरितिसर्वस्यात्ताभवतिसर्वमस्या
न्नंभवतियएवंवेद॥४॥द्वितीयंब्राह्मणं॥ ऋषयःसप्ततीरइतिप्राणाःपरिस्पंदात्मकाःतएवचऋषयःप्राणानेतदाहमंत्रःवाग
ष्टमीब्रह्मणासंविदानेतिब्रह्मणासंवादंकुर्वंत्यष्टमीभवति॥तद्धेतुमाह॥वाग्घ्यष्टमीब्रह्मणासंवित्तेइति॥३॥केपुनस्तस्यचमसस्यतीरे
आसतऋषयइतिइमावेवगोतमभरद्वाजौकर्णौअयमेवगोतमोयंभरद्वाजोदक्षिणश्चोत्तरश्चविपर्ययेणवातथाचक्षुषीउपदिशन्नुवाचेमा
वेवविश्वामित्रजमदग्नीदक्षिणंविश्वामित्रउत्तरंजमदग्निर्विपर्ययेणवा तिवक्तृत्वात्तत्वभेदेनद्विधावागिष्टातत्रवक्तृत्वेनअष्टमीसप्तमीचा
द्त्वेनेत्यविरोधःरसनातूपलब्धिहेतुरितिभावः॥३॥विपर्ययेणेत्येतत्पूर्ववदित्युच्यते॥अत्रिःसप्तमइतिसंबंधःअत्रित्वेहेतुरदनक्रियायोगादिति

हेतुंसाधयति॥वाचाहीति॥साद्यमर्थंनिगमयतितस्मादिति॥तर्हिकथमत्रिरितिव्यपदिश्यतेतत्राहअत्तिरेवेति॥प्राणस्ययदन्नजातमेतस्यसर्वस्या
त्ताभवत्यत्रिनिर्वचनविज्ञानादितिसंबंधः॥सर्वमस्येत्यादिवाक्यमर्थोक्तिपूर्वकंपठत्यत्तैवेति॥नकेवलमत्रिनिर्वचनेनविज्ञानेकृतमेतत्फलंकिंतुप्र

इमामेववसिष्ठकश्यपौनासिकेउपदिशन्नुवाचदक्षिणःपुटोभवतिवसिष्ठउत्तरःकश्यपःपूर्ववद्वागे॰वात्रिरदनक्रियायोगात्सप्र
मोवाचाह्यन्नमद्यते॥तस्मादत्तिर्हवैप्रसिद्धंनामैतदत्तृत्वादत्तिरिति॥अत्तिरेवसन्नयदत्रिरुच्यतेपरोक्षेण॥सर्वस्यैतस्यवान्नजात
स्यप्राणस्यात्रिनिर्वचनविज्ञानादत्ताभवत्यत्तैवभवतिनामुष्मिन्नन्नेनपुनःप्रतिपद्यतइत्येतदुक्तंभवति॥सर्वमस्यान्नंभवतीतिपूर्व
वमेतद्यथोक्तंप्राणयाथात्म्यंवेदसएवमध्यमःप्राणोभूत्वाधानप्रत्याधानगतोभोक्तैवभवतिनभोज्यंभोज्याद्व्यावर्ततइत्यर्थः॥४॥इति

द्वेवावब्रह्मणोरूपेमूर्त्तंचैवामूर्त्तंच॥

चतुर्थाध्यायस्यद्वितीयंब्राह्मणं॥२॥तत्रप्राणावैसत्यमित्युक्तं॥याःप्राणानामुपनिषदस्ताब्रह्मोपनिषत्प्रसंगेनव्याख्याताएतेतेप्राणाइ
तिच॥तेकिमात्मकाःकथंवातेषांसत्यत्वमितिचवक्तव्यमितिपंचभूतानांसत्यानांकार्यकरणात्मकानांस्वरूपावधारणार्थमिदंब्राह्मण
मारभ्यते॥यदुपाधिविशेषापनयनद्वारेणनेतिनेतीतिब्रह्मणःसतत्त्वंनिर्दिधारयिषितं॥ णयाथात्म्यवेदनप्रयुक्तमित्याहयएवमिति॥४॥द्विती
यंब्राह्मणं॥२॥संबंधंवक्तुंवृत्तंकीर्त्तयतितत्रेति॥अजातशत्रुब्राह्मणावसानंसप्रम्यर्थः॥उपनिषदोरुद्राद्यभिधानानि॥चकारादुक्तमित्यनुषंगः॥उ
त्तरब्राह्मणतात्पर्यमाहतेकिमात्मकाइति॥ब्रह्मणोनिर्द्धारणीयत्वात्किमितिभूतानांसतत्त्वंनिर्द्धार्यतेतत्राहयदुपाधीति॥तेषामुपाधिभूतानांस्वरूपाव

सत्यस्य सत्यमित्यत्र षष्ठ्यंतं सत्यशब्दितं हेयं प्रथमांतं सत्यशब्दितमादेयं ॥ तयोराद्यस्वरूपोक्त्यर्थमथेत्यतः प्राक्तनं वाक्यं तदूर्ध्वमाब्राह्मण
समाप्तेरादेयनिरूपणार्थमिति समुदायार्थः ॥ सविशेषमेव ब्रह्म न निर्विशेषमिति केचित्तान्निराकर्तुं विभजते तत्रेति ॥ ब्राह्मणार्थे पूर्वोक्तरी
त्या स्थिते सतीति यावत् ॥ द्वे वावेत्यादिश्रुतेः सोपाधिकं ब्रह्मरूपं विवृणोति ॥ पंचभूतेति ॥ शब्दप्रत्ययविषयत्वं सोपाख्यत्वं ॥ निरुपाधिकं ब्रह्म

तत्र हि रूपं ब्रह्म पंचभूतजनितकार्यकरणसंबद्धं मूर्त्तामूर्त्ताख्यं मर्त्यामृतस्वभावं तज्जनितवासनारूपं च सर्वज्ञं सर्वशक्ति सोपाख्यं
भवति क्रियाकारकफलात्मकं च सर्वव्यवहारास्पदं ॥ तदेव ब्रह्म विगतसर्वोपाधिविशेषं सम्यग्दर्शनविषयमजममजरममृतमभयं वा
ङ्मनसयोरविषयमद्वैतत्वान्नेति नेतीति निर्दिश्यते ॥ तत्र यदपोहद्वारेण नेति नेतीति निर्दिश्यते ब्रह्म तेन एते द्वे वाव वावशब्दोऽवधारणा

मर्त्यं चामृतं च स्थितं च यच्च सच्च त्यच्च ॥ १ ॥

र्थो द्वे एवेत्यर्थः ॥ ब्रह्मणः परमात्मनो रूपे रूप्यते याभ्यामरूपं परं ब्रह्माविद्याध्यारोप्यमाणाभ्यां ॥ के ते द्वे मूर्तं चैव मूर्तमेव च तथाऽमूर्तं
चैवामूर्तमेव चेत्यर्थः ॥ अंतर्नीतस्वात्मविशेषणे मूर्त्तामूर्ते द्वे एवेत्यवधार्यते ॥ कानि पुनस्तानि विशेषणानि मूर्त्तामूर्तयोरित्युच्यंते ॥ मर्त्यं
च मर्त्यं मरणधर्म्यमृतं च तद्विपरीतं च स्थितं च परिच्छिन्नं गतिपूर्वकं यत्स्थास्नु ॥ यच्च यातीति यद्व्याप्यपरिच्छिन्नं स्थितविपरीतं रूपं दर्शयति तद्द्वे

ति ॥ एवं भूमिकामारचय्याक्षराणि व्याकरोति तत्रेत्यादिना ॥ द्वे रूप्ये सतीति यावत् ॥ अमूर्तं चेत्यत्र चकारादेवकारानुषक्तिर्विवक्षिता ॥ ब्रह्मणो रूपद्व
यमवधार्यते चेन्मर्त्यत्वादीनि वक्ष्यमाणविशेषणान्यवधारणविरोधादयुक्तानीत्याशंक्याहांतर्नीतेति ॥ मूर्त्तामूर्त्तयोरंतर्भावितानि स्वात्मनियानि विशे

17

यत्तु गतिपूर्वकं स्यात्सतुतत्परिच्छिन्नं स्थितमिति योजना॥ विशेष्यमाणत्वं प्रत्यक्षेणोपलभ्यमानत्वं॥ १॥ तत्रेति निर्द्धारणार्थ्या सप्तमी॥ तत्र प्रत्येकं मूर्त्तामू
र्त्तं चतुष्टयविशेषणवत्त्वे सतीति यावत्॥ कथं स्थितत्वेपि मर्त्यत्वं तत्राह परिच्छिन्नंहीति॥ तदेव दृष्टांतेन स्पष्टयति यथेत्यादिना॥ अतो मर्त्यत्वान्मूर्त्तमिति शे

सश्च सदित्यन्येभ्यो विशेष्यमाणासाधारणधर्मविशेषवत्॥ यच्च तद्विपरीतं त्यदिति एवं सर्वदापरोक्षाभिधानार्हं॥ १॥ तत्र चतुष्टयविशेषणविशिष्टं मूर्त्तं
च तथाऽमूर्त्तं च॥ तत्र कानि मूर्त्तविशेषणानि कानि चेतराणीति विभज्यंते तेन तदेतन्मूर्त्तं मूर्च्छितावयवमितरेतरानुप्रविष्टावयवं घनं संहतमित्यर्थः॥ किं त
द्यदन्यत्कस्मादन्यद्वायोश्चांतरिक्षाच्च भूतद्वयात्परिशेषात्पृथिव्यादिभूतत्रयमेतन्मर्त्यं यदेतन्मूर्त्तारव्यं भूतत्रयमिदं मर्त्यं मरणधर्मिकस्माद्यस्मात्स्थित
मेतत्परिच्छिन्नं ह्यर्थांतरेण संप्रयुज्यमानं विरुध्यते यथा घटः स्तंभकुड्यादिना तथा मूर्त्तं स्थितं परिच्छिन्नमर्थांतरसंबंधिततोर्थांतरविरोधान्मर्त्यमेतत्

तदेतन्मूर्त्तं यदन्यद्वायोश्चांतरिक्षाच्चैतन्मर्त्यमेतत्स्थितमेतत्सत् ॥

सद्विशे
ष्यमाणासाधारणधर्मवत्॥ तस्माद्धि परिच्छिन्नं परिच्छिन्नत्वान्मर्त्यं अतो मूर्त्तं मूर्त्तत्वाद्वा मर्त्यं मर्त्यत्वात्स्थितं स्थितत्वात्सत् अतोन्योन्याव्य
भिचाराच्चतुर्णां धर्माणां यथेष्टं विशेषणविशेष्यभावो हेतुहेतुमद्भावश्च दर्शयितव्यः॥ सर्वथापि तु भूतत्रयं चतुष्टयविशेषणविशिष्टं मू
र्त्तं रूपं ब्रह्मणः तत्र चतुर्णामेकस्मिन्गृहीते विशेषणे इतरत्गृहीतमेव विशेषणमित्याह॥ षः॥ मूर्त्तत्वमर्त्यत्वयोरन्योन्यहेतुहेतुमद्भावं द्यो
तयितुं वा शब्दः॥ कथं पुनश्चतुर्षु धर्मेषु विशेषणविशेष्यभावो हेतुहेतुमद्भावश्च निश्चेतव्यस्तत्राहातोन्योन्येति॥ रूपरूपिभावस्यापि व्यवस्थाभाव
माशंक्याह सर्वथापीति॥ तस्येतस्यैषरस इत्येव वक्तव्ये किमिति मूर्त्तस्येत्यादिना विशेषणचतुष्टयमनूद्यते तत्राह तत्रेति ॥
=३ एकस्य विशेषणस्य ग्रहणे इतरस्यापि विशेषणस्यैव ग्रहणं स्यात्तन्माभूदिति कृत्वा सर्वविशेषणग्रहणे भूतत्रयस्य विशेष्यस्य ग्रहणार्थं सर्वविशेषग्रहणं ३

सारतरैः ५

सारत्वं साधयति त्रयाणां ही ति॥ तत्र प्रतिज्ञामनूद्य हेतुमाहैतदिति॥ एतेन सवितृमंडलेन कृतानि विभज्यमानान्यसंकीर्णानि कृष्णं शुक्लं लोहितमित्येतानि रूपाणि विशेषणानि येषां पृथिव्यप्तेजसां तानि तथा ततो भूतत्रयकार्यमध्ये सवितृमंडलस्य प्राधान्यमित्यर्थः॥ यएषतपतीत्यस्यार्थमाहाधिदैविकस्येति॥ हेतुवाक्यमादाय तस्य तात्पर्यमाह सतइति॥ मंडलमेतच्छब्दार्थः मंडलपरिग्रहे हेतुमाह मूर्तो हीति॥ मूर्तग्रहणस्योप

तस्यैतस्य मूर्तस्यैतस्य मर्त्यस्यैतस्य स्थितस्यैतस्य सतश्चतुष्टय विशेषणस्य भूतत्रयस्येत्यर्थः॥ एषरसः सार इत्यर्थः॥ त्रयाणां हि भूतानां सारिष्ठः सविता एतत् साराणि त्रीणि भूतानि यत एतत्कृतविभज्यमानरूपविशेषणानि भवंति॥ आधिदैविकस्य कार्यस्यैतद्रूपं यत्सविता यदेतन्मंडलं तपति सतो भूतत्रयस्य हि यस्मादेषरसः इत्येतद्गृह्यते मूर्तो ह्येष सवितातपति सारिष्ठश्च॥ यत्त्वाधिदैविकं करणं

तस्यैतस्य मूर्तस्यैतस्य मर्त्यस्यैतस्य स्थितस्यैतस्य सत एष रसो य एष तपति सतो ह्येष रसः ॥ २ ॥

मंडलाभ्यंतरं तद्वक्ष्यामः॥ २॥ अथामूर्तमथाधुनामूर्तमुच्यते॥ वायुश्चांतरिक्षं चयत्परिशेषितं भूतद्वयमेतदमृतममूर्तत्वादस्थितमतोऽविरुध्यमानं केनचिदमृतममरणधर्म्येतद्यत्स्थितविपरीतं या प्यपरिच्छिन्नं यस्मादेतदन्येभ्योऽप्रविभज्यमानविशेषमतस्त्यं त्यदिति परोक्षाभिधानार्हमेव पूर्ववत् लक्षणत्वाच्चतुर्णामन्वयोहेत्वर्थः॥ अतश्च मंडलात्मा सविता भूतत्रयकार्यमध्ये भवति प्रधानं॥ कार्यकारणयोरैकरूप्यस्यौत्सर्गिकत्वादित्याह सारिष्ठश्चेति॥ मंडलं चेदाधिदैविकं कार्यं किंपुनस्तथाविधं करणमिति तदाह यत्त्विति॥ २॥ आधिदैविकं मूर्तमभिधाय तादृगेवामूर्तं प्रतीकोपादानपूर्वकं स्फुटयत्यथेत्यादिना॥ अमूर्तत्वमुभयत्र हेतुत्वेन संबध्यते॥ अपरिच्छिन्नत्वमविरोधे हेतुरमूर्तत्वादीनां मिथो विशेषणविशे

मंडले चतुर्णां मूर्तमर्त्यस्थितसतामन्वयो हीत्यस्य हेतोः ३ अमूर्तत्वादमृतममृतत्वादस्थितं=१

=२हिरण्यगर्भस्यापिपंचभूतात्मकत्वात्

पुनरुक्तिरपिपूर्ववत्॥यएषइत्यादिप्रतीकग्रहणंतस्यव्याख्यानंकरणात्मकइत्यादि॥ यथाभूतत्रयस्यमंडलंसारिष्टमुक्तंतद्वदित्याह पूर्ववदिति ॥सारिष्टत्वमनूद्यहेतुमाहेतदिति॥तादर्थ्याद्भूतद्वयस्यभूतत्रयोपसर्जनस्यस्वयंप्रधानस्यहिरण्यगर्भारंभार्थत्वादितियावत्॥भूतद्वयंभूतत्रयो पसर्ज्जनमितिशेषः॥हेतुमवतार्यव्याचष्टे॥स्यस्यहीति॥पुरुषशब्दादुपरिष्टात्सशब्दोद्रष्टव्यः॥अमूर्तत्वादिविशेषणचतुष्टयवैशिष्ट्यंसाधर्म्यंतत्फल

तस्यैतस्यामूर्त्तस्यैतस्यामृतस्यैतस्ययतएतस्यत्यस्यचतुष्टयविशेषणस्यामूर्त्तस्यैषरसः पूर्ववत्कोसौयएषएतस्मिन्मंडलेपुरुषः करणात्म कोहिरण्यगर्भः प्राणइत्यभिधीयतेयःसएषअमूर्तस्यभूतद्वयस्यरसः पूर्ववत्सारिष्टएतत्पुरुषसारंचामूर्तंभूतद्वयंहैरण्यगर्भलिंगारंभा यहिभूतद्वयाभिव्यक्तिरव्याकृतात्तस्मात्तादर्थ्यात्तत्सारंभूतद्वयं॥त्यस्यह्येषरसोयस्माद्योमंडलस्थःपुरुषोमंडलवन्नगृह्यतेसारश्चभूतद्व

अथामूर्त्तंवायुश्चांतरिक्षंचैतदमृतमेतद्यदेतत्त्यंतस्यैतस्यामूर्त्तस्यैतस्यामृतस्यैतस्ययतएतस्यत्यस्यैषरसोयएष एतस्मिन्मंडलेपुरुषः॥ यस्यतस्मादस्तिमंडलस्यस्यपुरुषस्यभूतद्वयस्यचसाधर्म्यं॥तस्माद्युक्तंप्रसिद्धवद्धेतूपादानंत्यस्य ह्येषरसइति॥रसःकारणंहिरण्यगर्भविज्ञानात्माचेतनइतिकेचित्॥ माह॥तस्मादिति॥स्वमतमुक्त्वाभर्तृप्रपंचमतमाहरसइति॥त्यस्यही त्यादौरसशब्देनभूतद्वयकारणमुक्तं॥नचतच्चेतनादन्यत्नचजीवस्तथाऽसामर्थ्यान्नापिपरःकौटस्थ्यात्तस्माच्चेतनःसूत्रस्तेनज्ञस्तथेत्यर्थः॥सोपिक र्यंभूतद्वयकारणमतआहतत्रेति॥ परकीयपक्षःसप्तम्यर्थः॥तत्कर्मणस्तत्रासाधारण्यमसंप्रतिपन्नमित्यभिप्रेत्यकिलेत्युक्तंयथाहुःयोह्येतस्मि न्मंडलेविज्ञानात्माएषखल्वविद्याकर्मपूर्वप्रज्ञापरिष्कृतोविज्ञानात्मत्वमापद्यतेतदेतत्कर्मरूपंविज्ञानात्मनस्तद्वायंतरिक्षप्रयोक्तृभवतीति॥

अप्रामाण्यं२

ननुहिरण्यगर्भदेहस्यपंचभूतात्मकत्वात्भूतद्वयोस्तत्त्वापिइतरभूतोत्पत्तिंविनाकुतोस्यभोगःसिद्ध्यत्यतआहतत्कर्मेति॥वाय्वंतरिक्षाधारंतद्रूपं परिणतमितियावत्॥वाय्वंतरिक्षयोर्भूतत्रयोपसर्जनयोरितिशेषः॥प्रयोक्ताहिरण्यगर्भविज्ञानात्माइत्येतन्निराकरोतितन्नेति॥कथंमूर्त्तरसेन सहयथोक्तामूर्त्तरसस्यातुल्यतेत्याशंक्याहमूर्त्तस्येति॥अमूर्त्तश्चासौरसश्चेत्यमूर्त्तरसः तेनेतियावत्॥अमूर्त्तरसस्यचेतनत्वेतुरसयोर्वैजात्यंस्या दितिभावः॥अस्तुतयोर्वैजात्यंनेत्याहयथाहीति॥मूर्त्तमर्त्त्यंस्थितंसदितिमूर्त्तस्यधर्मचतुष्टयममूर्त्तममृतंव्यापित्यदित्यमूर्त्तस्यविभजनमसंकीर्णत्वे

तत्रचकिलहिरण्यगर्भविज्ञानात्मनःकर्मवाय्वंतरिक्षयोःप्रयोक्तृतत्कर्मवाय्वंतरिक्षाधारंसदितरेषांभूतानांप्रयोक्तृभवतितेन स्वकर्मणावाय्वंतरिक्षयोःप्रयोक्तेतितयोःरसःकारणमुच्यतइति॥तन्नमूर्त्तरसेनातुल्यत्वान्मूर्त्तस्यतुभूतत्रयस्यरसोमूर्त्तमेवमंड

लस्यह्येषरसइत्यधिदैवतं॥३॥

लंहष्टंभूतत्रयस्यसमानजातीयंनचेतनस्तथाऽमूर्त्तयोरपिभूतयोस्तत्समानजातीयेनैवामूर्त्तरसेनयुक्तंभवितुंवाक्यप्रवृत्तेस्तुल्य त्वात्॥यथाहिमूर्त्तामूर्त्तेचतुष्टयधर्मवतीविभज्येतेतथारसवतोरपिमूर्त्तामूर्त्तयोस्तुल्येनैवन्यायेनयुक्तोविभागोनत्वर्द्धवैशसं॥ मूर्त्तरसेपिमंडलोपाधिश्चेतनोविवस्यतइतिचेत्॥अत्यल्पमिदमुच्यतेसर्वत्रैवतुमूर्त्तामूर्त्तयोर्ब्रह्मरूपेणविवक्षितत्वात्॥ नप्रदर्शनंयथारसव तोर्मूर्त्तामूर्त्तयोस्तुल्यत्वमुक्तंतथारसयोरपितयोस्तुल्येनैवप्रकारेणप्रदर्शनमुचितंनत्वमूर्त्तरसश्चेतनोमूर्त्तरसस्त्वचेतनइतियुक्तोविभागोर्द्धवैशस स्याप्रामाणिकत्वादित्याहतथेति॥अर्द्धवैशसंपरिहर्त्तुंशंकतेमूर्त्तरसेपीति॥अमूर्त्तरसवन्मूर्त्तरसशब्देनापिचेतनस्यैवब्रह्मणोमंडलापन्नस्यग्रहणमि

बृ·र· ३७ | अ· ४

मंडलस्यचेतनकार्यतयाचेतनत्वेसर्वस्यतत्कार्यतयातन्मात्रत्वाद्रसयोश्चेतनत्वेतिविशेषणानर्थक्यमित्यर्थः॥मंडलाधारस्यचेतनत्वंपुरुषशब्दश्रुतिवशादे
ष्टव्यमितिशंकतेपुरुषशब्दइति॥अनुपपत्तिंपरिहरतिनेत्यादिना॥तदेवव्याकरोतिनवाइति॥इत्थंविभक्ताःसंतोनैवशक्ष्यामोमवहारंप्रजनयितुमित्यालो
च्यतत्क्चक्षुश्रोत्रजिह्वाघ्राणवाङ्मनोरूपानिमान्सप्तपुरुषानेकंपुरुषंसंहृतंलिंगंकरवामेतिचनिश्चित्यामी प्राणाःसप्तपुरुषानुक्तानेकंपुरुषंलिंगात्मानंकृत
पुरुषशब्दोऽचेतनेऽनुपपन्नइतिचेन्नपक्षपुच्छादिविशिष्टस्यैवलिंगस्यपुरुषशब्ददर्शनान्नवाइत्थंसंतःशक्ष्यामःप्रजाःप्रजनयितुमिमान्सप्त
पुरुषानेकंपुरुषंकरवामेतितएतान्सप्तपुरुषानेकंपुरुषमकुर्वन्नित्यादावन्नरसमयादिषुचश्रुत्यंतरेपुरुषशब्दप्रयोगादित्यधिदैवतमित्युक्तोप
संहारअध्यात्मविभागोस्त्यर्थः॥३॥अथाधुनाध्यात्मंमूर्तामूर्तयोर्विभागउच्यतेकिंतन्मूर्तमिदमेवकिंचेदंयदन्यत्प्राणाच्चवायोर्यश्चायमंतरात्मंत
अथाध्यात्ममिदमेवमूर्तंयदन्यत्प्राणाच्चयश्चायमंतरात्मन्नाकाशएतन्मर्त्यमेतत्स्थितमेतत्सत्तस्यैतस्यमूर्तस्यैतस्यमर्त्य
स्यैतस्यस्थितस्यैतस्यसतएषरसोयच्चक्षुःसतोह्येषरसः॥४॥ ७ रआत्मन्याकाशःस्वशरीरस्थश्चयःप्राणएतत्द्वयंवर्जयि
त्वायदन्यच्छरीरारंभकंभूतत्रयमेतन्मर्त्यमित्यादिसमानमन्यत्पूर्वेण॥एतस्यसतएषरसोयच्चक्षुरित्याध्यात्मिकस्यशरीरारंभकस्यकार्य
स्यैषरसःसारस्तेनहिसारेणसारवदिदंशरीरंसमस्तंयथाधिदैवतमादित्यमंडलेनप्राथम्याच्चचक्षुषीएवप्रथमेसंभवतइतितेजोरसोनि
रवर्त्तताग्निरितिलिंगात्॥तैजसंहिचक्षुः॥ ७ वंतइतिश्रुत्यर्थः॥आदिशब्देनलौकिकमपिदर्शनंसंगृह्यतेश्रुत्यंतरेतैत्तिरीयकेपुरुषशब्दप्रयोगः
सवाएषपुरुषोन्नरसमयइत्यादिः॥परकीयव्याख्यानंप्रत्याख्यायप्रकृतश्रुतिव्याख्यानमनुवर्त्तयतीत्यधिदैवतमिति॥३॥चक्षुषोरसत्वंप्रतिज्ञापूर्वकंप्रकट
यतिआध्यात्मिकस्येत्यादिना॥चक्षुषःसारत्वेशरीरावयवेषुप्राथम्यंहेत्वंतरमाहप्राथम्याच्चेति॥तत्रप्रमाणमाहचक्षुषीएवेति॥संभवतोजायमानस्यजंतोश्च
क्षुषीएवप्रथमेप्रधानेसंभवतोजायेतेशश्वद्द्वैरेतसःसिक्तस्यचक्षुषीएवप्रथमेसंभवतइतिहिब्राह्मणमित्यर्थः॥चक्षुषःसारत्वेहेत्वंतरमाहतेजइति॥

रामः ३७

आदित्यप्रधानंविराट् ४ =५ तेजोरसोनिरवर्तताग्निरित्यत्रतेजोरसयोःपर्यायत्वंश्रूयते॥चक्षुषस्तेजस्त्वंप्रसिद्धं॥ततस्तेजःपर्यायस्यरसशब्दस्यचक्षुषिप्रवृत्तिरविरुद्धा ५

=४ तेजएवरसः सारः निर्वर्तकप्रजापतिशरीरान्निष्क्रांतइत्यर्थः ४

शरीरमात्रस्याविशेषेणनिष्पादकंतत्रसर्वत्रसंनिहितमपितेजोविशेषतश्चक्षुषिस्थितमादित्यश्चक्षुर्भूत्वाक्षिणीप्राविशदितिश्रुतेरतस्तेजःशब्दपर्या
यरसशब्दस्यचक्षुषिप्रवृत्तिरविरुद्धेतिभावः॥इतश्चतेजःशब्दपर्यायोरसशब्दश्चक्षुषिसंभवतीत्याहतैजसंहीति॥प्रतिज्ञार्थमुपसंहरत्येतत्सार
मिति॥हेतुमवतार्यतस्यार्थमाहसतोह्यीति॥चक्षुषोमूर्तत्वान्मूर्तभूतत्रयकार्यत्वमुक्तंसाधर्म्यादिहावयवेषुप्राधान्याच्चतस्याध्यात्मिकभूतत्रयसारत्वसिद्ध

यैतत्सारमाध्यात्मिकंभूतत्रयं॥सतोह्येषरसइतिमूर्तत्वसारत्वेहेत्वर्थः॥४॥अथाधुनाऽमूर्तमुच्यते॥यत्परिशेषितंभूतद्वयंप्राणश्चयश्चायमंत
रात्मन्नाकाशएतदमूर्तमन्यत्पूर्ववत्एतस्यत्यस्यैषरसः सारोयोयंदक्षिणेक्षन्पुरुषोदक्षिणेऽक्षन्निितिविशेषग्रहणंशास्त्रप्रत्यक्षत्वात्॥लिं

अथामूर्तंप्राणश्चयश्चायमंतरात्मन्नाकाशएतदमृतमेतद्यदेतत्त्यंतस्यैतस्यामूर्तस्यैतस्यामृतस्यैतस्ययतएतस्यत्यस्यैषरसो
योयंदक्षिणेक्षन्पुरुषस्त्यस्यह्येषरसः॥५॥तस्यहैतस्यपुरुषस्यरूपं॥ गस्यहिदक्षिणेक्षिणिविशेषतोधिष्ठात्त्वंशास्त्रस्यप्रत्यक्षंसर्व
श्रुतिषुतथाप्रयोगदर्शनात्॥त्यस्यह्येषरसइतिपूर्ववद्विशेषतोऽग्रहणादमूर्तत्वसारत्वेएवहेत्वर्थः॥५॥ब्रह्मणउपाधिभूतयोर्मूर्तामूर्त
योःकार्यकरणविभागेनाध्यात्माधिदैवतयोर्विभागोव्याख्यातःसत्यशब्दवाच्ययोः॥ रित्यर्थः॥४॥कुतोविशेषोक्तिरित्याशंक्याहदक्षिणइति॥

शास्त्रस्यतेनवादक्षिणेक्षिणिविशेषस्यप्रत्यक्षत्वादितिहेत्वर्थः द्वितीयांव्याख्यामाश्रित्यहेत्वर्थंस्फुटयतिलिंगस्येति॥हेतुमनूद्यतदर्थंकथयतित्यस्ये
ति॥यथापूर्वत्रचक्षुषिमूर्तादिचतुष्टयदृष्ट्यातादृग्भूतत्रयसारतोक्तातथात्रापिलिंगात्मन्यऽमूर्तत्वादिचतुष्टयस्यविशेषेणाग्रहणादमूर्तत्वादिनासाध
र्म्यात्तथाविधभूतद्वयसारत्वंतस्यशरीरेप्राधान्याच्चतत्सारत्वसिद्धिरित्यर्थः॥५॥तस्यहेत्यादेर्वृत्तानुवादपूर्वकंसंबंधमाहब्रह्मणइति॥विभागोविशेषः॥

१७५

=७ त्नौ नासं योगेन प्रकाश्ययोगेन च पटवद्भित्तिचित्रवच्च

तस्याधिदैवं प्रकृतस्यैतस्याध्यात्मसंनिहितस्य अमूर्त्तरसभूतांतःकरणस्यैव रागादिवासनेति वक्तुं तस्येत्यादिवाक्यमित्यर्थः॥ कथमिदं रूपं लिंगस्य प्राप्तमिति तदाह मूर्त्तेति॥ मूर्त्तामूर्त्तवासनाभिर्विज्ञानमयसंयोगेन च जनितं बुद्धे रूपमिति यावत्॥ नेदमात्मनो रूपं तस्यैकरसस्यानेकरूपवत्त्वानुपपत्तेरिति मत्वा विशिनष्टि विचित्रमिति॥ वास्तवत्वशंकां वारयति मायेति॥ वैचित्र्यमनुसृत्यानेकोदाहरणं॥ अंतःकरणस्यैव रागादिवासनाश्चेत् कथं पुरुषस्तन्मयो दृश्यते तत्राह सर्वेति॥ तदेव व्याकुर्वन् विज्ञानवादिनां भ्रांतिमाहैतावन्मात्रमिति बुद्धिमात्रमेवाहंवृत्तिविशिष्टं स्वरसभंगुरं रागादिकलुषितमात्मा नान्यः स्थायी क्षणिको वेति यत्र ते भ्रांतास्तस्य रूपं वक्ष्याम इति संबंधः॥ तार्किकाणामपि बौद्धवत् भ्रांतिमुद्भावयत्येतदेवेति॥ अंतःकरणमे

अथेदानीं तस्य हैतस्य पुरुषस्य करणात्मनो लिंगस्य रूपं वक्ष्यामः वासनामयं॥ मूर्त्तामूर्त्तवासनाविज्ञानमयसंयोगजनितं विचित्रं पटं भित्तिचित्रवन्मायेंद्रजालमृगतृष्णिकोपमं सर्वव्यामोहास्पदं॥ एतावन्मात्रमेवात्मेति विज्ञानवादिनो वैनाशिका यत्र भ्रांताः॥ एतदेव वासनामयं पटरूपवदात्मनो द्रव्यस्य गुण इति नैय्यायिकाः वैशेषिकाश्च संप्रतिपन्नाः॥ इदमात्मार्थं त्रिगुणं स्वतंत्रं प्रधानाश्रयं पुरुषार्थेन हेतुना प्रवर्त्तत इति सांख्याः॥ औपनिषदंमन्या अपि केचित्प्रक्रियां रचयंति

वाहंधीग्राह्यं रागादिधर्मकं आत्मा तस्य वासनामयं रूपं पटस्य शौक्ल्यवत् गुणः स च संसार इति यत्र तार्किका भ्रांतास्तस्य रूपं वक्ष्याम इति पूर्ववत्॥ सांख्यानां भ्रांतिमाहेदमिति॥ केन प्रकारेणांतःकरणमात्मार्थमिष्यते तत्राह पुरुषार्थेनेति॥ कथमस्य त्रिगुणत्वादिकं सिद्ध्यति तत्राह प्रधानाश्रयमिति॥ नांतःकरणमेवात्मा किं त्वन्यः सर्वगतः सर्वविक्रियाशून्यः स्वप्रकाशस्तस्य भोगापवर्गानुगुण्येन प्रधानात्मकमंतःकरणं तत्स्वधर्मकं प्रवर्त्तत इति यत्र कापिला भ्राम्यंति तस्य रूपं वक्ष्याम इति संबंधः॥ यत्र विचित्रा विपश्चितां भ्रांतिस्तदंतःकरणं तस्य हेत्यत्रोच्यते नात्मेति स्वपक्षमुक्त्वा भर्तृप्रपंचपक्षमुत्थापयति॥ औपनिषदंमन्या इ

कीदृशीप्रक्रियेत्युक्तेराशित्रयकल्पनांवदन्नादावधमराशिंदर्शयतिमूर्तेति॥उत्कृष्टराशिमाचष्टेपरमात्मेति॥राश्यंतरमाहताभ्यामिति॥तान्येतानि त्रीणिवस्तूनिमूर्तामूर्तमहारजनादिरूपमात्मतत्वमितिपरोक्तिमाश्रित्यराशित्रयकल्पनामुक्त्वामध्यमाधमराश्योर्विशेषमाहप्रयोक्तेति॥उत्पाद कत्वंप्रयोक्तृत्वं॥कर्मग्रहणंविद्यापूर्वप्रज्ञयोरुपलक्षणंसाधनंज्ञानकर्मकारणंकार्यकरणजातंतदपिप्रयोज्यमित्याहसाधनंचेति॥इतिशब्दोरा शित्रयकल्पनासमाप्त्यर्थः॥परकीयंकल्पनांतरमाहतत्रेति॥राशित्रयेकल्पितेसतीतियावत्॥संधिकरणमेवस्फोरयतिलिंगाश्रयश्चेति॥तत्र

मूर्तामूर्तराशिरेकःपरमात्मराशिरुत्तमस्ताभ्यामन्योयंमध्यमःकिलतृतीयःकर्ताभोक्ताविज्ञानमयेनाजातशत्रुप्रतिबोधितेनस हविद्याकर्मपूर्वप्रज्ञासमुदायः॥प्रयोक्ताकर्मराशिःप्रयोज्यःपूर्वोक्तोमूर्तामूर्तभूतराशिःसाधनंचेति॥तत्रचतार्किकैःसहसंधिंकुर्वं तिलिंगाश्रयश्चैषकर्मराशिरित्युक्त्वापुनस्तत्रस्वमस्यंतःसांख्यत्वभयात्सर्वंकर्मराशिःपुष्पाश्रयइवगंधःपुष्पवियोगेपिपुटतैलाश्रयो भवतितद्वल्लिंगवियोगेपिपरमात्मैकदेशमाश्रयतिसपरमात्मैकदेशःकिलान्यतआगतेनगुणेनकर्मणासगुणोभवतिनिर्गुणोपिसन्सकर्ता भोक्ताबध्यतेमुच्यतेचविज्ञानात्मेतिवैशेषिकचित्तमप्यनुसरंति॥सचकर्मराशिर्भूतराशेरागंतुकःस्वतोनिर्गुणस्यैवपरमात्मैकदेशत्वात्॥

इत्युक्तिपरामर्शःसांख्यत्वभयान्नस्यंतोवैशेषिकचित्तमप्यनुसरंतीतिसंबंधः॥कथंतच्चित्तानुसरणंतदुपपादयतिकर्मराशिरिति॥कथंनिर्गु णमात्मानंकर्मराशिराश्रयतीत्याशंक्याहपरमात्मैकदेशइति॥अन्यतइतिकार्यकरणात्मकाद्भूतराशेरितियावत्॥यदाभूतराशिनिष्ठंकर्मादि तद्वारात्मन्यागच्छतितदासकर्तृत्वादिसंसारमनुभवतीत्याहसकर्तेति॥स्वतस्तस्यकर्मादिसंबंधेनसंसारित्वंस्यादितिचेन्नेत्याहसचेति॥निर्गुणए वविज्ञानात्मेतिशेषः॥सांख्यचित्तानुसारार्थमेवपरेषांप्रक्रियांतरमाहस्वतइति॥नैसर्गिकाप्यविद्यापरस्मादेवाभिव्यक्तासतीतदेकदेशंविकृत्यत

=७तर्हिसांख्यावयंनोपनिषदइतिभीत्यान्यांकल्पनामाहुः

175

=५ वस्त्वहस्त्वादिवत्स्वत्वादिवद्वा

ऽविद्येत्युक्तासांख्यचित्तमप्यनुसरंतीत्यर्थः॥ अविद्यापरस्मादुत्पन्नाचेत्तमेवाश्रयेन्नतदेकदेशमित्याशंक्याहोस्वरवदिति॥ यथाऽऽहिथियाजातोपूर्वस्व
रदेशस्तदेकदेशमाश्रयत्येवमविद्यापरस्माज्जातापितदेकदेशमाश्रयिष्यतीत्यर्थः॥ तदेतत्दूषयितुमुपक्रमतेसर्वमेतदितितार्किकैःसहसंघिक
रणादिकमेतत्सर्वमधिकृत्यसामंजस्येनपूर्वोक्तानांकल्पनानामापातेनरमणीयत्वमनुभवंतीतियावत्॥ यथोक्तकल्पनानांश्रुतिन्यायानुसा
रित्वाभावात्त्याज्यत्वंसूचयतिनेत्यादिना॥ कर्मद्वयंप्रत्येकंक्रियापदेनसंबध्यते॥ नञश्चोभयत्रान्वयः॥ कथंयथोक्तकल्पनानामापातरमणीयत्वे
नश्रुतिन्यायबाह्यत्वमितिपृच्छतिकथमिति॥ यदुक्तंपरस्यैकदेशोविज्ञानात्मेतितत्रतदेकदेशत्वंवास्तवमवास्तवंवाप्रथमेसपरस्माद्भिन्नोभिन्नोवे

स्वतउत्थिताःविद्याःनागंतुकाप्युस्वरवदनात्मधर्मइतिअनयाकल्पनयासांख्यचित्तमनुवर्त्तते॥ सर्वमेतत्तार्किकैःसहसामंजस्यस्यकल्प
नयारमणीयंपश्यंतिनोपनिषत्सिद्धांतंसर्वन्यायविरोधंचपश्यंति॥ कथमुक्ताएवतावत्सावयवत्वेपरमात्मनःसंसारित्वसव्रणत्वकर्मफ
लदेशसंसरणानुपपत्त्यादयोदोषाः॥ नित्यभेदेचविज्ञानात्मनःपरेणैकत्वानुपपत्तिःलिंगमेवचेत्परमात्मनउपचरितदेशत्वेनपरिकल्पित
घटकरकादिभूछिद्राकाशादिवत्॥ तथालिंगवियोगेपिपरमात्मदेशाश्रयणंवासनायाअविद्यायाश्चस्वतउत्थानमुषरवदित्यादिकल्पनानुप
पन्नैव॥ तिविकल्प्याद्यंदूषयत्युक्ताएवेति॥ आदिशब्देनश्रुतिस्मृतिविरोधोगृह्यते॥ कल्पांतरंप्रत्याहनित्यभेदेचेति॥ भेदाभेदयोर्विरुद्धत्वादनुपपत्ति
प्रकारार्थः॥ लिंगोपाधिरात्मापरस्यांशइतिकल्पांतरंशंकतेलिंगमेवेति॥ उपचरितत्वंकल्पितत्वंलिंगोपाधिनाकल्पितःपरांशोजीवात्मेत्युक्तेस्वापादौलिंग
ध्वंसेवासनानात्मनिस्याल्लिंगाभावेतदधीनजीवाभावात्तत्श्चतद्वियोगेपिलिंगस्थावासनाजीवेतिष्ठतीतिप्रक्रियानुपपन्नेतिदूषयतितथेति॥ यत्तुपरस्माद
विद्यायाःसमुत्थानमितितन्निराकरोत्यविद्यायाश्चेति॥ आदिपदेनानात्मधर्मत्वमविद्यायाःगृह्यतेपरस्मादविद्योत्पन्नेतस्यैवसंसारःस्यात्तयोरेकाधिकरण्या

इतश्चाविद्यायांसत्यांनमुक्तिर्नचतस्यांनष्टायांतत्सिद्धिःकारणेस्थितेकार्यस्यात्यंतनाशायोगात्कार्याविद्यानाशेतत्कारणपराभावस्तथाचमोक्षिणोऽ
भावान्मोक्षासिद्धिर्नचानात्मधर्मौविद्याविद्येअपितद्धर्मत्वप्रसंगात्तयोरेकाश्रयत्वादितिभावः॥यत्तुलिंगापगमेपितत्गतावासनात्मन्यस्ती
तितत्राहनचेति॥पटकादौतुपुष्पाद्यवयवानामेवानुवृत्तिरितिभावः॥इतश्चवासनायाःजीवाश्रयत्वमसंगतमित्याहनचेति॥ननुजीवेसमवायिका
रणेमनःसंयोगादसमवायिकारणात्कामाद्युत्पत्तिरित्युदाहृतश्रुतिषुविवक्ष्यतेतत्राहनचासामिति॥दृश्यमानंसंसारमौपाधिकमभिधायजीवस्यब्र
ह्मत्वोपपादनेतात्पर्यंश्रुतीनामुपक्रमोपसंहारैकरूप्यादिभ्योगम्यतेतन्नार्थांतरकल्पनेत्यर्थः॥इतश्चयथोक्तश्रुतीनांनार्थांतरकल्पनेत्याह॥एताव

नचवांस्यंदेशव्यतिरेकेणवासनायाःवस्त्वंतरसंचरणंमनसापिकल्पयितुंशक्यं॥नचश्रुतयोनुगच्छंतिकामःसंकल्पोविचिकित्साहृद
येह्येवरूपाणिध्यायतीवलेलायतीवकामायेस्यहृदिश्रितास्तीर्णोहितदासर्वान्छोकान्हृदयस्येत्याद्याः॥नचासांश्रुतीनांश्रुतादन्यार्थां
तरकल्पनान्याय्या॥आत्मनःपरब्रह्मत्वोपपादनार्थपरत्वादासामेतावन्मात्रार्थउपक्षयत्वाच्चसर्वोपनिषदां॥तस्मात्कुत्सितकल्पनाःकुश
लाःसर्वोपनिषदर्थमन्यथाकुर्वंति॥तथापिवेदार्थश्चेत्स्यात्कासंभवतुनमेद्वेषः॥नचद्वेवावब्रह्मणोरूपइतिराशित्रयपक्षेसमंजसं॥य
दातुमूर्तामूर्तेतज्जनितवासनाश्चमूर्तामूर्तेद्वेरूपेब्रह्मचरूपिततीयंनचान्यच्चतुर्थमंतराले न्मात्रेति॥सर्वासामुपनिषदामेकरसेर्थेपर्यवसानंफल



वत्वादिलिंगेभ्योगम्यतेतत्कथमुक्तश्रुतीनामर्थांतरकल्पनेत्यर्थः॥ननुउपनिषदामैक्यादर्थांतरमपिप्रतिपाद्यंव्याख्यातारोवर्णयंतितत्कथमर्थांतरकल्पना
नुपपत्तिरतआहतस्मादिति॥सर्वोपनिषदामैक्यपरत्वप्रतिभासस्तत्कुब्दार्थः॥ननुपरैरुच्यमानोपिवेदार्थोभवत्येवकिमित्यसौद्वेषादेवत्यज्यतेतत्राहतथा
पीति॥नचार्थांतरस्यवेदार्थत्वंतत्रतात्पर्यलिंगाभावादितिभावः॥लिंगवियोगेपिपुंसिवासनास्तीत्येतन्निराकृत्यराशित्रयकल्पनांनिराकरोतिनचेति॥कथंसि

राशित्रयपक्षेजीवस्यरूपमध्येंतर्भावेनिषेद्धाकोटिनिवेशः स्याद्रूपिमध्येंतर्भावेश्रुतिः शिक्षणीयेत्याह्नान्यथेति॥ भवत्वेवं[ई १]श्रुतेः शिक्षेतितन्ना
ह्तदेति॥ रूपिमध्येजीवांतर्भावकल्पनायामितियावत्॥ विषयभेदेनोपक्रमाविरोधंचोदयत्यथेति॥ इत्थंव्यवस्थायांजीवद्वाराविक्रियमाणस्य
परस्यरूपेमूर्त्तामूर्त्तेइत्युक्तिरयुक्तावासनाकर्मादेरपितत्द्वारातत्रसंबंधाविशेषादितिदूषयतितदेति॥ विज्ञानात्मद्वारापरस्यविक्रियमाणत्वमं
गीकृत्योक्तंतदेवनास्तीत्याहनचेति॥ तथाभूतस्यान्यथाभूतस्यचविक्रियायादुरुपपादत्वादित्यर्थः॥ किंचजीवस्यब्रह्मणोवस्त्वंतरत्वमात्यंतिक

तदेतदनुकूलमवधारणंहेएवब्रह्मणोरूपेइति॥ अन्यथाब्रह्मैकदेशस्यविज्ञानात्मनोरूपेइतिकल्प्यंपरमात्मनोवाविज्ञानात्मद्वारेणे
तितदाचरूपेएवेतिद्विवचनमसमंजसंरूपाणीतिवासनाभिःसहबहुवचनंयुक्ततरंस्यात्हेचमूर्त्तामूर्त्तेवासनाश्चतृतीयमिति॥ अथ
मूर्त्तामूर्त्तेएवपरमात्मनोरूपेवासनास्तुविज्ञानात्मनइतिचेन्न॥ तदाविज्ञानात्मद्वारेणविक्रियमाणस्यपरमात्मनइतीयंवाचोयुक्तिरन
र्थिकास्यात्॥ वासनाया अपिविज्ञानात्मद्वारत्वस्याविशिष्टत्वात्॥ नचवस्तुवस्त्वंतरद्वारेणविक्रियतइतिमुख्ययावृत्त्याशक्यंकल्प
यितुंनचविज्ञानात्मापरमात्मनोवस्त्वंतरंतथाकल्पनायांसिद्धांतहानात्॥ तस्माद्वेदार्थमूढानांस्वचित्तप्रभवाएवमादिकल्पनाअस
रवाह्यानह्यक्षरबाह्योवेदार्थोवेदार्थोपकारीवा॥ निरपेक्षत्वाद्वेदस्यप्रामाण्यंप्रति॥ तस्माद्राशित्रयकल्पनाऽसमंजसा॥ योयंदक्षिणेऽक्ष
न्पुरुषइतिलिंगात्माप्रस्तुतः आध्यात्मे मनात्यंतिकंवानाद्यइत्याहनचेति॥ नहितीयोभेदाभेदनिरासादितिद्रष्टव्यं॥ परपक्षदूषणमुपसं
हरतितस्मादिति॥ एवमादिकल्पनाराशित्रयंजीवस्यकामाद्याश्रयत्वमित्याद्याः॥ अक्षरबाह्यत्वेफलितमाहनहीति॥ वेदार्थोपकारित्वाभावेहेतुमा
हनिरपेक्षत्वादिति॥ वेदार्थत्वाद्यभावेसिद्धमर्थंकथयतितस्मादिति॥ तस्यहेत्वन्तरपरकीयप्रक्रियांप्रत्याख्यायस्वमतेनतद्व्याख्यामाहयोयमिति ॥

=ई यथाविज्ञानात्मद्वारापरआत्मनःमूर्तामूर्तेतथातद्वारावासनापिस्यात्

=प्ररूपितेनेत्यपिपाठः

प्रकृतत्वाल्लिंगात्मग्रहेजीवस्यापिपाणिपेषवाक्येतद्भावात्तस्यैवात्रतच्छब्देनग्रहःस्यादितिशंकतेनन्विति॥प्रकृतत्वेपितस्यनिर्विशेषब्रह्मत्वेनज्ञापयितु
मिष्टत्वात्नवासनामयंसंसाररूपंतत्त्वतोयुक्तमितिपरिहरतिनैवमिति॥इतश्चजीवस्यनवासनारूपिताकिंतुचित्तस्येत्याहयदिहीति॥निषेद्ध्यकोटि
प्रवेशादितिभावः॥नायंजीवस्यादेशःकिंतुब्रह्मणस्तटस्थस्येतिशंकयित्वादूषयतिनन्वित्यादिना॥षष्ठावसानेविज्ञातारमरेकेनेत्यात्मानमुपक्रम्यस

ऽधिदैवेचययएषएतस्मिन्मंडलेपुरुषइतितस्येतिप्रकृतोपादानात्सएवोपादीयतेयोसौत्यस्यामूर्तस्यरसोनतुविज्ञानमयः॥ननुविज्ञानम
यस्यैतानिरूपाणिकस्मान्नभवंतिविज्ञानमयस्यापिप्रकृतत्वात्तस्येतिचप्रकृताभ्यादानात्॥नैवंविज्ञानमयस्यारूपत्वेनविजिज्ञापयिषि
तत्वात्॥यदिहितस्यैवविज्ञानमयस्यैतानिमहारजनादीनिरूपाणिस्युःतस्यैवनेतिनेतीत्यनाख्येयरूपतयाऽदेशोनस्यात्॥ननुअन्यस्यैवा
सावादेशोनतुविज्ञानमयस्येति॥नषष्ठांतउपसंहारात्विज्ञातारमरेकेनविजानीयादितिविज्ञानमयंप्रस्तुत्यसएषनेतिनेतीतिज्ञपयि
ष्यामीतिचप्रतिज्ञायाअर्थवत्वात्॥यदिचविज्ञानमयस्यैवासंव्यवहार्यमात्मस्वरूपंविज्ञापयितुमिष्टंस्यात्प्रध्वस्तसर्वोपाधिविशेषंतत
इयंप्रतिज्ञार्थवतीस्यात्॥येनासौज्ञापितोजानात्यात्मानमेवाहंब्रह्मास्मीतिशास्त्रनिष्ठांप्राप्नोतिनबिभेतिकुतश्चन॥अथपुनरन्योविज्ञानम
यात्ऽन्योनेतिनेतीतिव्यपदिश्यतेतदान्यदसौब्रह्मान्योहमस्मीतिविपर्ययगृहीतःस्यात्॥नात्मानमेवावेदहंब्रह्मास्मीति॥तस्मात्तस्यहेतस्येति
लिंगपुरुषस्यैवैतानिरूपाणि॥

एषनेतिनेत्यात्मेत्यात्मशब्दात्तस्यैवादेशोपसंहारादिहापितस्यैवादेशोनतटस्थस्येत्यर्थः॥इतश्चप्रत्यगर्थस्यैवायमादेश
इत्याहज्ञपयिष्यामीतिचेति॥तदेवसमर्थयतेयदिचेति॥कथमेतावताप्रतिज्ञार्थवत्त्वंतदाहयेनेति॥ज्ञानफलंकथयतिशास्त्रेति॥अन्वयमुखेनोक्तमर्थंव्यति
रेकमुखेनसाधयत्यथेत्यादिना॥विपर्ययेगृहीतेब्रह्मकंडिकाविरोधंदर्शयतिनात्मानमिति॥तच्छब्देनजीवपरामर्शासंभवेफलितमाहतस्मादिति ॥

तनुलिंगस्यचेदेतानिरूपाणिकिमित्युपन्यस्यंतेपरमात्मस्वरूपस्यैववक्तव्यत्वादतआहसत्यस्यचेति॥इंद्रगोपोपमानेनकौसुंभस्यगतत्वान्महा
रजनंहरिद्रेतिव्याख्यातं॥तत्रलोकप्रसिद्धिंदर्शयतियेनेति॥ऊर्णादीत्यादिपदंकंबलादिग्रहार्थं॥मनसिवासनावैचित्र्येकिंकारणमितितदाहक्व

सत्यस्यचसत्येपरमात्मस्वरूपेवक्तव्येनिरवशेषंसत्यंवक्तव्यंसत्यस्यचविशेषरूपाणिवासनास्तासामिमानिरूपाण्युच्यंतेएतस्यपुरु
षस्यप्रकृतस्यलिंगात्मनएतानिरूपाणि॥कानितानीत्युच्यंतेयथालोकेमहारजनंहरिद्रातयारक्तंमाहारजनंयथावासोलोकेएवंस्त्र्या
दिविषयसंयोगेतादृशंवासनारूपंरंजनाकारमुत्पद्यतेचित्तस्ययेनासौपुरुषोरक्तइत्युच्यतेवस्त्रादिवद्यथाचलोकेपांड्वाविकमवेरिद
माविकंऊर्णादियथाचैतदापांडुरंभवति॥तथान्यद्वासनारूपं॥यथाचलोकेइंद्रगोपोऽत्यंतरक्तोभवत्येवमस्यवासनारूपंक्वचिद्विषयवि

यथामाहारजनंवासोयथापांड्वाविकंयथेंद्रगोपोयथाग्न्यर्चिर्यथापुंडरीकंयथासकृद्विद्युत्तं

शेषापेक्षयारागस्यतारतम्यंक्वचित्पुरुषचित्तवृत्त्यपेक्षया॥यथाचलोकेऽग्न्यर्चिर्भास्वरंभवतितथाक्वचित्कस्यचिद्वासनारूपंभवति॥य
थापुंडरीकंशुक्लंतद्वदपिचवासनारूपंकस्यचिद्भवति॥यथासकृद्विद्युत्तंयथालोकेसकृद्विद्योतनंसर्वतःप्रकाशकंभवतितथाज्ञानप्र
काशविवृद्ध्यपेक्षयाकस्यचिद्वासनारूपंउपजायते॥नैषांवासनारूपाणामादिरंतोमध्यंसंख्यावादेशःकालोनिमित्तंवावधार्यतेऽसंख्ये
यत्वाद्वासनायाःवासनाहेतूनांचानंत्यात्॥तथाचवक्ष्यतिषष्ठेइदंमयोदोमयइत्यादि

चिदिति॥चित्तवृत्तिशब्देनसत्वादिगुणपरिणामोवि
वक्षितः॥परिमितदृष्टांतोक्त्यावासनानामपिपरिमितत्वंदृष्टांतदार्ष्टांतिकयोःसाम्यादित्याशंक्याहनैषामिति॥तत्रवाक्यशेषंसंवादयतितथाचेति॥

=२क्वचिदाहाराच्चित्तपरिणामःक्वचिद्विषयाभिमुख्यात्क्वचित्सदृशदर्शनात्क्वचिल्लिंगदर्शनात्क्वचिच्छ्रवणात्क्वचिद्योगादिप्रयत्नात्क्वचिन्मणिमंत्रौषधिदेशकालवरशापादिवशात् २

वासनानंत्यात्तदीयपरिमितिप्रदर्शनेपरिमितदृष्टांतपरिग्रहस्यातात्पर्यैकुन्नतात्पर्यमित्याशंक्याह तस्मादितिप्रकारप्रदर्शनमेवाभिनयत्येवंप्रकाराणीति॥ अंत्यवासनाविशिष्टसूत्रोपास्तिंफलवतींतस्रकर्षाभिधानपूर्वकमभिदधातियत्त्वित्यादिना॥ व्यक्तिः सर्वस्यवस्तुजातस्येतिशेषः तदीयमित्यस्य

तस्मान्नस्वरूपसंख्यावधारणार्थादृष्टांताः यथामहारजनंवासइत्यादयः किंतर्हिप्रकारप्रदर्शनार्थाः॥ एवंप्रकाराणिहिवासनारूपाणीति॥ यत्तुवासनारूपमभिहितमंतेसकृद्विद्योतनमिवेतितत्किलहिरण्यगर्भस्याव्याकृतात्प्रादुर्भवतस्तडिद्वत्सकृदेवव्यक्तिर्भवतीतितत्तदीयवासनारूपंहिरण्यगर्भस्ययोवेदतस्ससकृद्विद्युता इवहवैइत्यवधारणार्थावेवमेवास्यश्रीःस्यातिर्भवतीत्यर्थः॥ यथाहिरण्यगर्भस्ये

सकृद्विद्युत्तेवहवाअस्यश्रीर्भवतियएवंवेदा थातआदेशोनेतिनेति

वमेतद्यथोक्तंवासनारूपमंत्यंयोवेद॥ एवंनिरवशेषंसत्यस्वरूपमभिधायय त्तत्सत्यस्यसत्यमवोचामतस्यैवस्वरूपावधारणार्थंब्रह्मणइदमारभ्यते॥ अथानंतरंसत्यस्वरूपनिर्देशानंतरंयत्सत्यस्यसत्यंतदेवावशिष्यतेयस्मादतस्तस्मात्सत्यस्यसत्यस्वरूपंनिर्देक्ष्यामः॥ आदेशोनिर्देशोब्रह्मणः कः पुनरसौनिर्देशउच्यते॥ नेतिनेतीतिएवनिर्देशः॥ ननुकथमाभ्यांनेतिनेतीतिशब्दाभ्यांसत्यस्यसत्यंनिर्दिदिक्षितमिति॥ उच्यतेसर्वोपाधिविशेषापोहेनयस्मिन्नकश्चिद्विशेषोस्तिनामवारूपंवाकर्मवाभेदोवाजातिर्वागुणोवा व्यक्तीकरणंहिरण्यगर्भस्येति॥ तदेवस्फुटयतियथेत्यादिना॥ वृत्तमनूद्यानंतरग्रंथमवतार्यव्याकरोत्येवमित्यादिना॥ तस्यैवब्रह्मणइतिसंबंधः॥ कस्मादनंतरमित्युक्तेतद्दर्शयन्नतःशब्दंचापेक्षितंपूरयन्व्याकरोतिसत्यस्येति॥ यथोक्तादेशस्याभावपर्यवसायित्वंमन्वानःशंकतेनन्विति॥ निरवधिकनिषेधासिद्धेस्तदवधित्वेनसत्यस्यसत्यं

178

=रनामादिद्वारेण

ब्रह्मणो विधिमुखेन निर्देशे संभाव्यमाने किमिति निषेधमुखेन तन्निर्दिश्यते तत्राह यस्मिन्निति॥ तद्विधिमुखेन निर्देष्टुमशक्यमिति शेषः नामरूपाद्यभावेपि ब्रह्मणि शब्दप्रवृत्तिमाशंक्याह तद्द्वारेणेति॥ जात्यादीनामन्यतमस्य ब्रह्मण्यपि संभवात्तद्द्वारा तत्र शब्दप्रवृत्तिः स्यादिति चेन्नेत्याह॥ न चेति॥ उक्तमर्थं वैधर्म्यदृष्टांतेन स्पष्टयति गौरिति॥ तथा जात्याद्यभावान्न ब्रह्मणि शब्दप्रवृत्तिरिति शेषः कथं तर्हि क्वचिद्विधिमुखेन ब्रह्मोपदिश्यते तत्राह अध्यारोपितेति॥ विज्ञानानंदादिवाक्येषु शबलेगृहीतशक्तिभिः शब्दैर्लक्ष्यते ब्रह्मेत्यर्थः॥ ननु लक्षणामुपेक्ष्य साक्षादेव ब्रह्म किमिति न विवक्ष्यते तत्राह यदा पुनरिति॥ निर्देष्टुं लक्षणामुपेक्ष्य साक्षादेव वक्तुमिति यावत् तत्र शब्दप्रवृत्तिनिमित्तानां जात्यादीनामभावस्योक्तत्वादित्यर्थः॥ विधिमुखेन निर्देशासंभवे फलितमाह तदेति॥ प्राप्तो निर्देशो यस्य विशेषस्य तत्प्रतिषेधमुखेनेति यावत्॥ एवं ब्रह्म निर्दिदिक्षितं चेदेकेनैव नञालंकृतं द्वितीयेनेत्याशंक्याहेदं चेति॥ वीप्सयाव्याप्तिः सर्वविषयसंग्रहस्तदर्थं नकारद्वयमित्युक्तमेव व्यनक्ति यद्यदिति॥ विषयत्वेन प्राप्तं सर्वं न ब्रह्मेत्युक्ते सत्यविषयः प्रत्यगात्मा ब्रह्मेत्येकत्वे शास्त्रपर्यवसानान्नैराकांक्ष्यमतः सिद्धतीत्याह तथा चेति॥ इतिशब्दस्य प्रकृतपरामर्शित्वात्प्रकृतमूर्तामूर्तादेरन्यत्वे ब्रह्मणो नकारपर्यवसानं किमिति नेष्यते तत्राहान्यथेति॥ आशंका

तत्तद्द्वारेण हि शब्दप्रवृत्तिर्भवति॥ न चैषां कश्चिद्विशेषो ब्रह्मण्यस्ति अतो न निर्देष्टुं शक्यते इदं तदिति गौरसौ स्पंदते शुक्लो विषाणीति यथा लोके निर्दिश्यते॥ तथा ऽध्यारोपितनामरूपकर्मद्वारेण ब्रह्म निर्दिश्यते विज्ञानमानंदं ब्रह्म विज्ञानघन एव ब्रह्मात्मेत्येवमादिशब्दैः॥ यदा पुनः स्वरूपमेव निर्दिदिक्षितं भवति निरस्तसर्वोपाधिविशेषं तदा न शक्यते केनचिदपि प्रकारेण निर्देष्टुं तदायमेवाभ्युपायो यदुत प्राप्तनिर्देशप्रतिषेधद्वारेण नेति नेतीति निर्देशः॥ इदं च नकारद्वयं वीप्साव्याप्त्यर्थं यद्यत्प्राप्तं तत्तन्निषिध्यते तथा च सत्यनिर्दिष्टाशंका ब्रह्मणः परिहृता भवति॥ अन्यथा हि नकारद्वयेन प्रकृतद्वयप्रतिषेधे यदन्यत्प्रकृतात्प्रतिषिद्धद्वयाद्ब्रह्म तन्न निर्दिष्टं कीदृशं तु खल्वित्याशंका न निवर्तिष्यते ॥

अनर्थकश्चेतिचकारेणसमुच्चितंदोषांतरमाहब्रह्मेति॥उक्तमर्थमन्वयमुखेनसमर्थयतेयदात्विति॥सर्वोपाधिनिरासेनतत्रतत्रविषयेवेदनेच्छायदानि
वर्तितातदायथोक्तंप्रत्यक्ब्रह्माहमितिनिश्चित्याकांक्षासर्वतोव्यावर्त्ततेतेननिर्देशस्यसार्थकत्वंयदाचोक्तरीत्याब्रह्मात्मैत्येवप्रज्ञावस्थिताभवतितदा
प्रतिज्ञावाक्यमपिपरिसमाप्त्यर्थंस्यादितियोजना॥वीप्सापक्षमुपसंहरतितस्मादिति॥आदेशस्यप्रक्रमाननुगुणत्वमाशंक्यानंतरवाक्येनपरिहरतिन

तथाचानर्थकश्चसनिर्देशःपुरुषस्यविविदिषायाअनिवर्त्तकत्वात्॥ब्रह्मज्ञपयिष्यामीतिचवाक्यमपरिसमाप्त्यर्थंस्यात्॥यदातुसर्वदिक्का
लादिविविदिषानिवर्त्तितास्यात्सर्वोपाधिनिराकरणद्वारेणतदासैंधवघनवदेकरसंप्रज्ञानघनमनंतरमबाह्यंसत्यस्यसत्यमहंब्रह्मास्मी
तिसर्वतोनिवर्ततेविविदिषाऽऽत्मन्येवावस्थिताप्रज्ञाभवति॥तस्माद्वीप्सार्थंनेतिनेतीतिनकारद्वयं॥ननुमहतायत्नेनपरिकरबंधंकृत्वाकिंयुक्त

नह्येतस्मादितिनेत्यन्यत्परमस्त्यथनामधेयँसत्यस्यसत्यमितिप्राणावैसत्यंतेषामेषसत्यं॥६॥तृतीयंब्राह्मणं॥

मेवंनिर्देष्टुंब्रह्म॥बाढं॥कस्मात्नहीतियस्मादितिनेतिनेत्येतस्मादितीतिव्याप्तव्यप्रकारानकारद्वयविषयानिर्दिश्यंतेयथाग्रामोग्रामोरमणी
यइत्यन्यत्परंनिर्देशनंनास्तितस्मादयमेवनिर्देशोब्रह्मणः॥यदुक्तंतस्योपनिषत्सत्यस्यसत्यमित्येवंप्रकारेणसत्यस्यसत्यंतत्परंब्रह्मअतोऽयु
क्तमुक्तंनामधेयंब्रह्मणोनामैवनामधेयंकिंतत्सत्यस्यसत्यंप्राणावैसत्यंतेषामेषसत्यमिति॥६॥तृतीयंब्राह्मणं॥ न्वित्यादिना॥नहीतिप्रतीकोपादानं॥य
स्मादित्यस्यहिशब्दार्थस्यतस्मादित्यनेनसंबंधः॥व्याप्तव्याःसंग्राह्याविषयीकर्त्तव्यायेप्रकारास्तेनकारद्वयस्यविषयाःसंतोनिर्दिश्यंतेइतिनेतिनेत्येतस्मादित्य
नेनभागेनेतियोजना॥इतिव्यांव्याप्तव्यसर्वप्रकारसंग्रहेदृष्टांतमाहयथेति॥ग्रामोग्रामोरमणीयइत्युक्तेराष्ट्रनिविष्टरमणीयसर्वग्रामसंग्रहवत्प्रकृतेपीतिशे

179

यथोक्तान्निषेधरूपान्निर्देशादन्यन्निर्देशनं यस्माद्ब्रह्मणो न परमस्ति तस्मादित्युपसंहारः॥ अथेत्यादिवाक्यं प्रकृतोपसंहारत्वेन व्याचष्टे यदुक्तमित्या
दिना॥६॥ तृतीयं ब्राह्मणं॥ संबंधाभिधित्सया वृत्तं कीर्त्तयत्यात्मेत्येवेति॥ किमित्यात्मतत्त्वमेव ज्ञातव्यं तत्राह तदेवेति॥ इत्थं सूत्रितस्य विद्याविषयस्य वाक्यस्य
व्याख्यानमेव विषयस्तत्र विद्या साधनं साध्या मुक्तिरिति संबंधो मुक्तिश्च फलमित्येते तदात्मानमित्यादिना दर्शिता इत्याह इत्युपन्यस्तस्येति॥ विद्यावि
षयमुक्तं निगमयति एवमिति॥ उक्तमर्थांतरं स्मारयति अविद्यायाश्चेति॥ अन्योसावित्याद्यारभ्याविद्याया विषयश्च संसार उपसंहृतः त्रयमित्यादिने

आत्मेत्येवोपासीत॥ तदेवैतस्मिन्सर्वस्मिन्पदनीयमात्मतत्त्वं यस्मात्प्रेयः पुत्रादेरित्युपन्यस्तस्य वाक्यस्य व्याख्यानविषये संबंधप्रयोजने अभिहिते॥
तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवदित्येवं प्रत्यगात्मा ब्रह्म विद्याया विषय इत्येतदुपन्यस्तं॥ अविद्यायाश्च विषयोन्योसावन्योहमस्मीति न स वेदेत्यारभ्य चातुर्वर्ण्यप्रविभागादिनिमित्तपांक्तकर्मसाध्यसाधनलक्षणो बीजांकुरवद्व्याकृताव्याकृतस्वभावो नामरूपकर्मात्मकः संसारः त्रयं वा इदं नाम रूपं कर्मेत्युपसंहृतः॥ शास्त्रीय उत्कर्षलक्षणो ब्रह्मलोकांतोऽधोभावश्च स्थावरांतोऽशास्त्रीयः पूर्वमेव प्रदर्शितः॥ द्वया हेत्यादिना॥ एतस्मादविद्याविषयाद्विरक्तस्य प्रत्यगात्मविषय ब्रह्मविद्यायामेवाधिकारः कथं नाम स्यादिति तृतीयेध्याय उपसंहृतः समस्तोऽविद्याविषयः॥

तिसंबंधः॥ संसारमेव विशिनष्टि चातुर्वर्ण्येति॥ चातुर्वर्ण्यं चातुराश्रम्यमिति प्रविभागादिनिमित्तं यस्य पांक्तस्य कर्मणस्त
स्य साध्यसाधनमित्येवमात्मक इति यावत्॥ तस्यानादित्वं दर्शयति बीजांकुरवदिति॥ तमेव त्रिधा संक्षिपति नामेति॥ स चोत्कर्षापकर्षाभ्यां द्विधा भिद्यते तत्राद्यमु
दाहरति शास्त्रीय इति॥ उत्कृष्टो हि संसारः स्वल्पात्मभावः शास्त्रीयज्ञानकर्मलभ्य इत्यर्थः॥ द्वितीयं कथयत्यधोभावश्चेति॥ निकृष्टः संसारः स्वाभाविकज्ञानकर्म
साध्य इत्यर्थः॥ किमित्यविद्याविषयो व्याख्यातो न हि स पुरुषस्योपयुज्यते तत्राहेतस्मादिति॥ प्रत्यगात्मैव विषयस्तस्मिन्या ब्रह्मेति विद्या तस्यामिति यावत् ॥

तार्तीयमर्थमनूद्यचातुर्थिकमर्थंकथयतिचतुर्थेत्विति॥एवंवृत्तमनूद्योत्तरब्राह्मणतात्पर्यमाहास्मादिति॥किमितिसंन्यासोविधित्स्यतेकर्मणैवविद्यालाभ
संभवादित्याशंक्याहजायेति॥अविद्यायाविषयएवविषयोयस्येतिविग्रहः॥तस्मात्संन्यासोविधित्सितइतिपूर्वेणसंबंधः॥ननुप्रकृतंकर्माविद्याविष
यमपिकिमित्यात्मज्ञानंतादर्थ्येनानुष्ठीयमानंनफलयतितत्राहान्येति॥तदेवदृष्टांतेनस्पष्टयतिनहीति॥पांक्तस्यकर्मणोऽन्यसाधनत्वमेवकथमधिगत

चतुर्थेतुब्रह्मविद्याविषयंप्रत्यगात्मानंब्रह्मतेब्रवाणिब्रह्मज्ञपयिष्यामीतिचप्रस्तुत्यतद्ब्रह्मैकमद्वयंसर्वविशेषशून्यंक्रियाकारकफलस्वभाव
सत्यशब्दवाच्याशेषभूतधर्मप्रतिषेधद्वारेणनेतिनेतीतिज्ञापितं॥अस्याब्रह्मविद्यायाअंगत्वेनसंन्यासोविधित्सितः॥जायापुत्रवित्तादिलक्ष
णंपांक्तंकर्माविद्याविषयंयस्मान्नात्मप्राप्तिसाधनं॥अन्यसाधनंह्यन्यस्मैफलसाधनायप्रयुज्यमानंप्रतिकूलंभवति॥नहिबुभुक्षापिपासा
निवृत्त्यर्थंधावनंगमनंवासाधनं॥मनुष्यलोकपितृलोकदेवलोकसाधनत्वेनहिपुत्रादिसाधनानिश्रुतानिनात्मप्राप्तिसाधनत्वेनविशेषित
त्वात्॥नचब्रह्मविदोविहितानिकाम्यत्वश्रवणादेतावान्वैकामइति॥ब्रह्मविदश्चाप्तकामत्वादाप्तकामस्यकामानुपपत्तेः॥येषांनोयमात्मायं
लोकइतिचश्रुतेः॥केचित्तुब्रह्मविदोप्येषणासंबंधंवर्णयंतितेबृहदारण्यकेनश्रुतं॥पुत्राद्येषणानामविद्याविषयत्वंविद्याविषयेचयेषांनोयमा
त्मायंलोकइत्यतःकिंप्रजयाकरिष्यामइत्येषविभागस्तैर्नश्रुतःश्रुत्याकृतः॥

त्वं

मित्याशंक्याहमनुष्येति॥सोयंमनुष्यलोकःपुत्रेणैवजय्यःकर्मणा
पितृलोकोविद्ययादेवलोकइतिविशेषितत्वं॥श्रुतत्वमेवविशेषितत्वोक्तिद्वारास्फुटीकृतमितिचकारेणद्योत्यते॥ननुब्रह्मविद्यास्वफलेविहितंकर्मापे
क्षतेश्रौतसाधनत्वाद्दर्शादिवत्तथाचसमुच्चयान्नकर्मसंन्याससिद्धिरतआहनचेति॥कर्मणांकाम्यत्वेपिब्रह्मविदस्तानिकिंनस्युरित्याशंक्याहब्रह्मविदश्चे
ति॥इतश्चतस्यपुत्रादिसाधनानुपपत्तिरित्याहयेषामिति॥समुच्चयपक्षमनुभाष्यश्रुतिविरोधेनदूषयतिकेचित्त्विति॥श्रुतिविरोधमेवस्फोरयतिपुत्रादीनि॥

पंपंत्तिं५ =५तइदविद्दूिषयं

अविद्वद्विषयत्वंश्रुतंतत्प्रकरणेतेषामुपदेशादितिशेषः॥किंप्रजयाकरिष्यामइत्यतआरभ्ययेषांनोयमात्मायंलोकइतिचविद्याविषयेश्रुतमि
तियोजना॥एषविभागःश्रुत्याकृतस्तैःसमुच्चयवादिभिर्नश्रुतइतिसंबंधः॥नकेवलंश्रुतिविरोधादेवसमुच्चयासिद्धिः किंतुयुक्तिविरोधाच्चेत्याह
सर्वेति॥द्वितीयश्चकारोवधारणार्थोनञासंबध्यते॥स्मृतिविरोधाच्चसमुच्चयासिद्धिरित्याहव्यासेति॥तत्रप्रथमंपूर्वोक्तंयुक्तिविरोधंस्फुटयतिक्रि
येति॥प्रतिकूलवर्त्तनंनिवर्त्यनिवर्त्तकभावः॥संप्रतिस्मृतिविरोधंस्फोरयतियदिदमिति॥प्रसिद्धंवेदवचनंकुरुकर्मत्यजंप्रतियदिदमुपलभ्यतेवि

सर्वक्रियाकारकफलोपमर्दस्वरूपायांचविद्यायांसत्यां सहकार्येणाविद्यायाःअनुवृत्तिंलक्षणश्चविरोधस्तैर्नविज्ञातः॥व्यासवाक्यं
चैतैर्नश्रुतं॥कर्मविद्यास्वरूपयोर्विद्याविद्यात्मकयोःप्रतिकूलवर्त्तनंविरोधः॥यदिदंवेदवचनंकुरुकर्मत्यजेतिच॥कांगतिंविद्यया
यांतिकांचगच्छंतिकर्मणा॥एतद्वेदितुमिच्छामितद्भवान्प्रब्रवीतुमे॥एतावन्योन्यवैरूप्येवर्त्तेतेप्रतिकूलतइत्येवंपृष्टस्यप्रतिवचनेन
॥कर्मणाबध्यतेजंतुर्विद्ययातुविमुच्यते॥तस्मात्कर्मनकुर्वंतियतयःपारदर्शिनइत्येवमादिविरोधःप्रदर्शितः॥तस्मान्नसाधनांतरसहि
ताब्रह्मविद्यापुरुषार्थसाधनं॥सर्वविरोधात्तुसाधननिरपेक्षैवपुरुषार्थसाधनमितिपारिव्राज्यंसर्वसाधनसंन्यासलक्षणमंगत्वेनविधि
त्स्यते॥ वेकिंनंप्रतिचत्यजेति॥तत्रकांगतिमित्यादिशिष्यस्यव्यासंप्रतिप्रश्नः तस्यबीजमाहेताविति॥विद्याकर्मोरव्यावुपायौपरस्परविरुद्धत्वेनवर्त्ते
तेसाभिमानत्वनिरभिमानत्वादिपुरस्कारेणप्रातिकूल्यात्समुच्चयानुपपत्तेर्यथोक्तस्यप्रश्नस्यसावकाशत्वमित्यर्थः॥इत्येवंपृष्टस्यभगवतोव्यासस्येतिशेषः
॥विरोधोज्ञानकर्मणोःसमुच्चयस्येतिवक्तव्यं॥समुच्चयानुपपत्तिमुपसंहरति॥तस्मादिति॥कथंतर्हिब्रह्मविद्यापुरुषार्थसाधनमितितत्राहसर्वविरोधादिति
॥सर्वस्यक्रियाकारकफलभेदात्मकस्यद्वैतेंद्रजालस्यब्रह्मविद्यायाविरोधादितियावत्॥एकाकिनीब्रह्मविद्यामुक्तिहेतुरितिस्थितेफलितमाहइतिपारि

नकेवलं संन्यासस्य श्रवणादिपोष्कल्यदृष्टद्वारेण विद्यापरिपाकांगत्वं श्रुत्यादिवशादवगम्यते किंतु लिंगादपीत्याह तावदेवेति॥ तत्रैव लिंगांतरमाह षष्ठसमा
प्ताविति॥ एतच्चोभयतः संबध्यते॥ यदि कर्मसहितं ज्ञानं मुक्तिहेतुस्तदा किमिति कर्मिणः सतो याज्ञवल्क्यस्य पारिव्राज्यमुच्यते तस्मात्त्यागस्तदंगत्वेन वि
धित्सित इत्यर्थः॥ तत्रैव लिंगांतरमाह मैत्रेय्येति॥ नहि मैत्रेयी भर्तरि त्यक्तकर्मणि स्वयं कर्माधिकर्तुमर्हति पतिद्वारमंतरेण भार्याया स्तदनधिकारात्तथा
च तस्यै कर्मशून्यायै मुक्तेः साधनत्वेन विद्योपदेशात्कर्मत्यागस्तदंगत्वेन ध्वनित इत्यर्थः॥ तत्रैव हेत्वंतरमाह वित्तेति॥ किमहं तेन कुर्यामिति वित्तं निंद्यते अ

एतावदेवामृतत्वसाधनमित्यवधारणात्॥ षष्ठसमाप्तौ लिंगाच्च कर्मी सन्याज्ञवल्क्यः प्रवव्राजेति॥ मैत्रेय्यै च कर्मसाधनरहितायै साध
नत्वेनामृतत्वस्य ब्रह्मविद्योपदेशात्॥ वित्तनिंदावचनाच्च॥ यदि ह्यमृतत्वसाधनं कर्म स्याद्धि त्तसाध्यं पांक्तं कर्मेति तन्निंदावचनमनिष्टं
स्यात्॥ यदि तु परित्तित्याजयिषितं कर्म ततो युक्ता तत्साधननिंदा कर्माधिकारनिमित्तवर्णाश्रमादिप्रत्ययोपमर्दाच्च ब्रह्मतं परादात्स्त्रत्रं तं प
रादादित्यादिः॥ नहि ब्रह्मक्षत्राद्यात्मप्रत्ययोपमर्दे ब्राह्मणेनेदं कर्तव्यं क्षत्रियेणेदं कर्तव्यमिति विषयाभावादात्मानं लभते विधिः॥ यस्यैव पु
रुषस्योपमर्दितः प्रत्ययो ब्रह्मक्षत्राद्यात्मविषयस्तस्य तत्प्रत्ययसंन्यासात्तत्कार्याणां कर्मणां कर्मसाधनानां चार्थप्राप्तश्च संन्यासः॥

तच्च तत्साध्यं कर्म ज्ञानसहायत्वेन मुक्तौ नोपकरोतीत्यर्थः॥ तदेव विवृणोति यदि हीति॥ तन्निंदावचनमित्यत्र तच्छब्देन वित्तमुच्यते॥ त्वत्पक्षे वा कथं निंदा
वचनमिति तत्राह यदि त्विति॥ किंच ब्राह्मणोहं क्षत्रियोहमित्याद्यभिमानस्य कर्मानुष्ठाननिमित्तस्य निंद्यासर्वमिदमात्मैवेति प्रत्यये श्रुतेस्तात्पर्यदर्शना
द्धि त्यागत्वेन संन्यासो विधित्सित इत्याह कर्माधिकारेति॥ ननु जाग्रति विधौ कर्मानुष्ठानमशक्यमपह्नोतुं मत आह नहीति॥ ननु वर्णाश्रमाभिमानवतः
संन्यासोपीष्यते स कथं तदभावे संभवेत्तत्राह यस्यैवेति॥ अर्थप्राप्तश्चेत्यवधारणार्थश्चकारः प्रयोजकज्ञानवतो वैधसंन्यासाभ्युपगमादविरोध इति भावः॥
=१ ब्राह्मणः परिव्रजेदिति श्रुत्वा ब्राह्मणोहमिति प्रयोजकज्ञानवान् विधितः प्रव्रजेद्गलिताभिमानस्त्वर्थान्न विधितः १ ह्रां २

=७किंतेनामृतास्यां

आत्मज्ञानांगत्वं संन्यासस्य श्रुतिस्मृतिन्यायसिद्धं चेत्किमर्थमियमाख्यायिका प्रणीयते तत्राह तस्मादिति॥ विद्यापेक्षितार्थवादसिद्ध्यर्थमाख्यायिकेति भावः॥ भार्यामामंत्र्य किंकृतवानिति तदाहोद्यास्यन्निति॥ वैशब्दोवधारणार्थः॥ आश्रमांतरं यास्यन्नेवाहमस्मीति संबंधः॥ यथोक्ते स्थानांतरं भार्यायाः

तस्मादात्मज्ञानांगत्वेन संन्यासविधित्सयैवाख्यायिकेयमारभ्यते॥ मैत्रेयीतिहोवाच याज्ञवल्क्यः मैत्रेयीं स्वभार्यामामंत्रितवान् याज्ञवल्क्यो नामऋषिः॥ उद्यास्यन् ऊर्ध्वं यास्यन् पारिव्राज्याख्यमाश्रमांतरं वै अरे इति संबोधनमहमस्मात् गार्हस्थ्यात् स्थानादाश्रमादूर्ध्वं गंतुमिच्छन्नस्मि भवामि अतो हंत तवानुमतिं प्रार्थयामि ते तव॥ किं चान्यत्तेतवानया द्वितीयया भार्यया कात्यायन्या अंतं विच्छेदं करवाणि पतिद्वारेण युव

मैत्रेयीतिहोवाच याज्ञवल्क्य उद्यास्यन्वा अरेहमस्मात्स्थानादस्मि हंत तेनया कात्यायन्यांतं करवाणीति॥ १॥ साहोवाच मैत्रेयी यन्नु म इयं भगोः सर्वा पृथिवी वित्तेन पूर्णा स्यात्कथं तेनामृता स्यामिति नेतिहोवाच याज्ञवल्क्यो यथैवोपकरणवतां जीवितं तथैव ते जीवितꣳ स्यादमृतत्वस्य तु नाशास्ति वित्तेनेति॥ २॥

योर्मया संबध्यमानयोः यः संबंध आसीत्तस्य संबंधस्य विच्छेदं करवाणि द्रव्यविभागं कृत्वा वित्तेन संविभज्य युवां गमिष्यामि॥ १॥ सैवमुक्ताहउवाच॥ यद्यदि नु इति वितर्के मे मम इयं पृथिवी भगो भगवन् सर्वा सागरपरिक्षिप्ता वित्तेन धनेन पूर्णा स्यात्कथं कथं चनेति आक्षेपार्थः

कर्तव्यं दर्शयत्यतद्इति॥ सति भार्यादौ संन्यासस्य तदनुज्ञापूर्वकत्वनियमादिति भावः॥ कर्त्तव्यांतरं कथयति किंचेति॥ आवयोर्विच्छेदः स्वाभाविकोस्ति किं तत्र कर्त्तव्यमित्याशंक्याह पतिद्वारेणेति॥ त्वयि प्रव्रजिते स्वयमेवावयोर्विच्छेदो भविष्यतीत्याशंक्याह द्रव्येति॥ वित्ते तु न स्त्रीस्वातंत्र्यमिति भावः॥ मैत्रेयी मोक्षमेवापेक्षमाणा भर्त्तारं प्रत्यानुकूल्यमात्मनो दर्शयति सैवमिति॥ कर्मसाध्यस्य गृहप्रासादादिवन्नित्यत्वानु

=१ नैनुकथंशब्देनकिंशब्देनकिंशब्दादानंकिमर्थंक्रियतेयतः प्रकारार्थत्वमपितत्रसंभवतितत्राहवित्तेति

कथंतेनेत्यत्रकथंशब्देनकिमहंतेनेत्यत्रत्वंकिंशब्दमुपादायवाक्यंयोजनीयं॥वित्तसाध्यस्यकर्मणोऽमृतत्वसाधनत्वमात्रासिद्धेस्तत्प्रकारप्रश्नस्यनिरवकाशत्वादित्यर्थः॥मुनिरपिभार्यामाह दयाभिज्ञः संतुष्टःसन्नात्सेयंप्रश्नंचप्रतिवदतीत्याहप्रत्युवाचेति॥वित्तेनममामृतत्वाभावेतदर्किंचित्करमवसेयमित्याशंक्य

प्रश्नार्थोवातेनपृथिवीपूर्णवित्तसाध्येनकर्मणाऽग्निहोत्रादिनाऽमृताकिंस्यामितिव्यवहितेनसंबंधः॥प्रत्युवाचयाज्ञवल्क्यः कथमितियदि आक्षेपार्थमनुमोदनंनेतिहोवाचयाज्ञवल्क्यइतिप्रश्नश्चेत्प्रतिवचनार्थंनैवस्याःअमृताकिंतर्हियथैवलोकेउपकरणवतांसाधनवतांजीवितंसुखोपायभोगसंपन्नंतथैवतद्वदेवतवजीवितंस्यादमृतत्वस्यतुनाशामनसाप्यस्तिवित्तेनवित्तसाध्येनकर्मणेति॥२॥साहोवाचमैत्रेय्येव

साहोवाचमैत्रेयीयेनाहंनामृतास्यांकिमहंतेनकुर्यांयदेवभगवान्वेदतदेवमेब्रूहीति॥३॥सहोवाचयाज्ञवल्क्यःप्रियाबतारे नःसतीप्रियंभाषसएह्यास्स्वव्याख्यास्यामितेव्याचक्षाणस्यतुमेनिदिध्यासस्वेति॥४॥

मुक्त्वासत्युवाचमैत्रेयीयद्येवंनाहंयेनामृतास्यां किमहंतेनवित्तेनवित्तसाध्येनकर्मणाकुर्यांयदेवभगवान्केवलममृतत्वसाधनंवेदतदेवामृतत्वसाधनंमेमह्यंब्रूहि॥३॥सहोवाचयाज्ञवल्क्यःएवं वित्तसाध्येमतत्वसाधनेप्रत्याख्यातेयाज्ञवल्क्यःस्वाभिप्रायसंपत्तौतुष्टआहसहोवाचप्रियेष्टाबतेत्यनुकंप्याहअरेमैत्रेयिनोस्माकंपूर्वमपिप्रियासतीभवतीदानींप्रियमेवचित्तानुकूलंभाषसेऽतएह्यास्स्वउपविशव्याख्यास्यामियत्तेत्वेष्टममृतत्वसाधनमात्मज्ञानंकथयिष्यामि व्याचक्षाणस्यतुमेममव्याख्यानंकुर्वतोनिदिध्यासस्ववाक्यान्यर्थतोनिश्चयेनध्यातुमिच्छेति॥४॥

हकिंतर्हीति॥२॥वित्तस्यामृतत्वसाधनत्वाभावमधिगम्यतस्मिन्नाशांत्यक्त्वामुक्तिसाधनमेवात्मज्ञानमात्मार्थंदातुंपतिंनियुंजानाब्रूतेसाहेति॥३॥भार्यापेक्षितंमोक्षोपायंविवक्षुस्तामादौस्तौतिसहेत्यादिना॥

182

वित्तेन साध्यं कर्म तस्मिन्नमृतत्वसाधने शंकिते किमहं तेन कुर्यामिति भार्ययापि प्रत्याख्याते सतीति यावत्॥ साभिप्रायो न कर्म मुक्तिहेतुरिति तस्य भार्याद्वारापि संप्रत्तौ सत्यामित्यर्थः॥४॥ अमृतत्वसाधनमात्मज्ञानं विवक्षितं चेदात्मा वा अरे द्रष्टव्य इत्यादि वक्तव्यं किमिति न वा अरे पत्युरित्यादि वाक्य



स होवाचामृतत्वसाधनं वैराग्यमुपदिदिक्षुः जायापतिपुत्रादिभ्यो विरागमुत्पादयति तत्संन्यासायन वै वै शब्दः प्रसिद्धस्मरणार्थः प्रसिद्धमे तल्लोके पत्युर्भर्तुः कामाय प्रयोजनाय जायायाः पतिः प्रियो न भवति किं तर्ह्यात्मनस्तु कामाय प्रयोजनायैव भार्यायाः पतिः प्रियो भवति तथा

स होवाच न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति न वा अरे जायायै कामाय जाया प्रिया भवत्यात्मनस्तु कामाय जाया प्रिया भवति न वा अरे पुत्राणां कामाय पुत्राः प्रिया भवंत्यात्मनस्तु कामाय पुत्राः प्रिया भवंति न वा अरे वित्तस्य कामाय वित्तं प्रियं भवत्यात्मनस्तु कामाय वित्तं प्रियं भवति न वा अरे ब्रह्मणः कामाय ब्रह्म प्रियं भवत्यात्मनस्तु कामाय ब्रह्म प्रियं भवति न वा अरे क्षत्रस्य कामाय क्षत्रं प्रियं भवत्यात्मनस्तु कामाय क्षत्रं प्रियं भवति न वा अरे लोकानां कामाय लोकाः

न वा अरे जायायै इत्यादि समानमन्यत्न वा अरे पुत्राणां न वा अरे वित्तस्य न वा अरे ब्रह्मणः न वा अरे क्षत्रस्य न वा अरे लोकानां न वा अरे देवानां न वा अरे भूतानां न वा अरे सर्वस्य पूर्वपूर्वं यथासन्ने प्रीतिसाधने वचनं तत्र तत्रेष्टतरत्वाद्वैराग्यस्य॥ मित्याशंक्याह॥ जायेति॥ उवाच जायादीनामात्मार्थत्वेन प्रियत्वमात्मनस्त्वानौपाधिकप्रियत्वेन परमानंदत्वमिति शेषः॥ प्रतीकमादाय व्याचष्टे॥ न वा इति॥ किं तन्निपातेनस्मार्यते तदाह॥ प्रसिद्धमिति॥ यथोक्ते क्रमे नियामकमाह॥ पूर्वंपूर्वमिति॥ यद्यदासन्नं प्रीतिसाधनं तत्तदनतिक्रम्य तस्मिन्विषये पूर्वंपूर्वं वचनमिति योजना॥ तत्र हेतुमाह॥ तत्रेति॥



निकटे त्यादौ ३

नवाअरेसर्वस्येत्ययुक्तंपत्यादीनामुक्तत्वादंशेनपुनरुक्तिप्रसंगादित्याशंक्याह॥सर्वग्रहणमिति॥उक्तवदनुक्तानामपिग्रहणंकर्तव्यंनचसर्वेविशेषतोग्रही
तुंशक्यंतेतेनसामान्यार्थंसर्वपदमित्यर्थः॥सर्वपर्यायेणसिद्धमर्थमुपसंहरति॥तस्मादिति॥ननुतृतीयेप्रियत्वमात्मनआख्यातंतदेवात्रापिकथ्यतेचेत्पुनरु

सर्वग्रहणमुक्तानुक्तार्थंतस्माल्लोकप्रसिद्धमेतदात्मैवप्रियोनान्यत्तदेतत्प्रेयःपुत्रादित्युपन्यस्तंतस्यैतद्वृत्तिस्थानीयंप्रपंचितंतस्मादात्मप्रीति
साधनत्वाद्गौण्यन्यत्रप्रीतिरात्मन्येवमुख्यातस्मादात्मावाअरेद्रष्टव्योदर्शनार्हःदर्शनविषयमापादयितव्यःश्रोतव्यःपूर्वमाचार्यतःआग

प्रियाभवंत्यात्मनस्तुकामायलोकाःप्रियाभवंतिनवाअरेदेवानांकामायदेवाःप्रियाभवंत्यात्मनस्तुकामायदेवाःप्रियाभ
वंतिनवाअरेभूतानांकामायभूतानिप्रियाणिभवंत्यात्मनस्तुकामायभूतानिप्रियाणिभवंतिनवाअरेसर्वस्यकामायसर्वं
प्रियंभव त्यात्मनस्तुकामायसर्वंप्रियंभवत्यात्मावाअरेद्रष्टव्यःश्रोतव्योमंतव्योनिदिध्यासितव्योमैत्रेय्या मतश्चपश्चान्मं

तव्यःतर्कतस्ततोनिदिध्यासितव्योनिश्चयेनध्यातव्यः॥एवंह्यसौदृष्टोभवतिश्रवणमनननिदिध्यासनसाधनैर्निर्वर्तितैः॥यदैकत्व
मेतान्युपगतानितदासम्यग्दर्शनंब्रह्मैकत्वविषयंप्रसीदतिनान्यथाश्रवणमात्रेणयद्वद्ब्रह्म क्तिःस्यात्तत्राह॥तदेतदिति॥अथोपन्यासविवर

णार्थंप्रीतिरात्मन्येवेत्ययुक्तंपुत्रादावपितद्दर्शनादतआहतस्मादिति॥आत्मनोनिरतिशयप्रीत्यास्पदत्वेनपरमानंदत्वमभिधायोत्तरंवाक्यमादायव्या
चष्टे॥तस्मादित्यादिना॥कथंपुनरिदंदर्शनमुत्पद्यतेतत्राहश्रोतव्यइति॥श्रवणादीनामन्यतमेनात्मज्ञानलाभात्किमितिसर्वेषामध्ययनमित्याशंक्याह॥ए
वंहीति॥विध्यनुसारित्वमेवंशब्दार्थः॥श्रुतत्वाविशेषाद्विकल्पहेत्वभावाच्चसर्वैरेवात्मज्ञानंजायतेचेत्तेषांसमप्रधानत्वमाग्नेयादिवदापत्तेदित्याशंक्याह॥यदेति॥

१ यथाब्राह्मणपाठादादावग्नीषोमीयानुष्ठानंमंत्रपाठादादावाग्नेयानुष्ठानंततःसमप्रधानत्वं

प्रज्ञामांद्यकुतर्कसंशयादयः=२

श्रवणस्यप्रमाणविचारत्वेनप्रधानत्वादंगित्वंमनननिदिध्यासनयोस्तुतत्कार्यप्रतिबंधप्रध्वंसित्वादंगत्वमित्यङ्गाङ्गिभावेनयदाश्रवणादीन्यसकृदनुष्ठाने
नसमुच्चितानितदासामग्रीपौष्कल्यात्तत्ज्ञानंफलशिरस्कंसिध्यतिमननाद्यभावेश्रवणमात्रेणनैवतदुपपद्यतेमननादिनाप्रतिबंधाप्रध्वंसित्वाकयस्यफलव
त्तानजनकत्वायोगादित्यर्थः॥परामर्शवाक्यस्यतात्पर्यमाह॥यदित्यादिना॥कर्मनिमित्तंब्रह्मसत्रादितदेववर्णाश्रमावस्थादिरूपमात्मन्यविद्ययारोपित

सत्रादिकर्मनिमित्तंवर्णाश्रमादिलक्षणंआत्मन्यविद्ययाध्यारोपेणप्रत्ययविषयंक्रियाकारकफलात्मकमविद्याप्रत्ययविषयंरज्ज्वामिवसर्प
प्रत्ययस्तदुपमर्दनार्थमाह॥आत्मनोवाअरेमैत्रेयिदर्शनेनश्रवणेनमत्याविज्ञानेनइदंसर्वंविदितंभवति॥३५॥ननुकथमन्यस्मिन्विदितेऽ
न्यद्विदितंभवतिनैषदोषःनह्यात्मव्यतिरेकेणान्यत्किंचिदस्तियद्यस्तिनतद्विदितंस्यान्नत्वन्यदस्त्यात्मैवतुसर्वंतस्मात्सर्वमात्मनिविदितेवि

ऽऽत्मनोवाअरेदर्शनेनश्रवणेनमत्याविज्ञानेनेदꣳसर्वंविदितं॥३५॥

दितंस्यात्कथंपुनरात्मैवसर्वमित्येतच्छ्रावयतिब्रह्मतंपरादाद्ब्रह्मब्राह्मणजातिस्तंपुरुषंपरादात्परादध्यात्पराकुर्यात्कंयोन्यत्रात्मनःआ
त्मस्वरूपव्यतिरेकेणात्मैवनभवतीयंब्राह्मणजातिरितितांयोवेदतंपरादध्यात्साब्राह्मणजातिरनात्मस्वरूपेणमांपश्यतीति स्वप्रत्ययोमि

थ्याज्ञानंतस्यविषयतयास्थितंक्रियाद्यात्मकंतदुपमर्दनार्थमाहेतिसंबंधः॥अविद्याध्यारोपितप्रत्ययविषयमित्येतदेवव्याकरोति॥अविद्येतिअवि
द्याजनितप्रत्ययविषयत्वेदृष्टांतमाह॥रज्ज्वामिति॥आत्मनिविदितेसर्वंविदितमित्युक्तमाक्षिपति॥नन्विति॥दृष्टविरोधंनिराचष्टे॥नैषदोषइति॥आ
त्मनिज्ञातेज्ञातमेवसर्वंततोऽर्थांतरस्याभावादित्युक्तमेवस्फुटयति॥यदीत्यादिना॥आकांक्षापूर्वकमुत्तरवाक्यमुदाहृत्यव्याचष्टे॥कथमित्यादिना॥पुरुषंवि

कैवल्यासंबंधिनंकुर्यात्=५

पराकरणेपुरुषस्यापराधित्वंदर्शयति॥अनात्मेति॥परमात्मातिरेकेणदृश्यमानामपिब्राह्मणजातिंस्वस्वरूपेणपश्यन्कथमपराधीस्यादित्याशंक्याह
॥परमात्मेति॥इदंब्रह्मेत्युत्तरवाक्यानुवादस्तस्यव्याख्यानं॥यान्यनुक्रांतानीत्यादिआत्मैवसर्वमित्येतत्प्रतिपादयति॥यस्मादित्यादिना॥स्थितिका
लेतिष्ठतितस्मादात्मैवसर्वंतद्व्यतिरेकेणाग्रहणादितियोजना॥३६॥स्थित्यवस्थायांसर्वस्यात्ममात्रत्वंज्ञातुमशक्यंज्ञापकाभावादित्याक्षिपति॥कथं

परमात्माहिसर्वेषामात्मातथाक्षत्रंक्षत्रियजातिस्तथालोकादेवाभूतानिसर्वमिदंब्रह्मेतियावंत्यत्रप्रक्रांतानियान्यनुक्रांतानितानिस
र्वाण्यात्मैवयदयमात्मायोयमात्माद्रष्टव्यःश्रोतव्यइतिप्रकृतोयस्मादात्मनोजायतेआत्मन्येवलीयतेआत्ममयंचस्थितिकालेआत्मव्य
तिरेकेणाग्रहणादात्मैवसर्वं॥३६॥कथंपुनरिदानीमिदंसर्वमात्मैवेतिगृहीतुंशक्यतेचिन्मात्रानुगमात्सर्वत्रचित्स्वरूपतैवेतिगम्यतेतत्र

ब्रह्मतंपरादाद्योन्यत्रात्मनोब्रह्मवेदक्षत्रंतंपरादाद्योन्यत्रात्मनःक्षत्रंवेदलोकास्तंपरादुर्योन्यत्रात्मनोलोकान्वेददेवास्तं
परादुर्योन्यत्रात्मनोदेवान्वेदभूतानितंपरादुर्योन्यत्रात्मनोभूतानिवेदसर्वंतंपरादाद्योन्यत्रात्मनःसर्वंवेदेदंब्रह्मेदंक्षत्र
मिमेलोकाइमेदेवाइमानिभूतानीदंसर्वंयदयमात्मा॥३६॥ दृष्टांतउच्यतेयत्स्वरूपव्यतिरेकेणाग्रहणंयस्यतस्यतदात्मत्वमेवलो
केदृष्टंसयथासइतिदृष्टांतोलोकेयथादुंदुभेर्भेर्यादेर्हन्यमानस्यताड्यमानस्यदंडादिनानवाह्यांछब्दान्बहिर्भूतान्छब्दविशेषान्दुंदुभिशब्द
सामान्यान्निष्क्रष्टान्दुंदुभिशब्दविशेषान्नशक्नुयाद्ग्रहणायग्रहीतुं पुनरिति॥घटःस्फुरतीत्यादिप्रत्ययमाश्रित्यपरिहरति॥चिन्मात्रेति॥सयथादुंदु
भेरित्यादिवाक्यमवतारयति॥तत्रेति॥सर्वत्रचिद्व्यतिरेकेणासत्त्वंसप्तम्यर्थः॥दृष्टांतेविवक्षितंसंक्षिपति॥यत्स्वरूपेति॥दुंदुभिदृष्टांतमादायाक्षराणिव्याचष्टे॥
उच्चनीचान्२

१=वितस्तित्रयदीर्घाताम्रनिर्मिताचर्मछिन्नचतुर्विंशत्संगलवद्दूनहूयाभेरीवर्तुलचर्मवद्धैकाननाइंदुभिरितिभेदः

शब्दविशेषानेवविशदयति॥दुंदुभीति॥कथंतर्हिदुंदुभिशब्दविशेषाणांग्रहणंतदाह॥दुंदुभेस्त्विति॥दुंदुभिशब्दसामान्यस्येतियावत्॥उक्तेर्थेदुंदुभ्या
घातस्येत्यादिवाक्यमुत्थाप्यव्याचष्टे॥दुंदुभ्याघातस्येति॥वाशब्दार्थमाहतद्गताविशेषाइति॥उक्तमर्थंव्यतिरेकमुखेनविशदयति॥नत्विति॥विवक्षितं
दार्ष्टांतिकमाचष्टे॥तथेति॥तत्रैववस्तुविशेषग्रहणसंभावनामभिप्रेत्यस्वप्नजागरितयोरित्युक्तं॥२७॥तथादुंदुभिदृष्टांतवदितियावत्॥शंखस्यतुग्रहणे

दुंदुभेस्तुग्रहणेनदुंदुभिशब्दसामान्यस्यविशेषणत्वेनदुंदुभिशब्दाएतइतिशब्दविशेषागृहीताभवंतिदुंदुभिशब्दसामान्यव्यतिरेकेणा
भावात्तेषांदुंदुभ्याघातस्यवादुंदुभेराहननमाघातःदुंदुभ्याघातविशिष्टस्यशब्दसामान्यस्यग्रहणेनतद्गताविशेषाःगृहीताभवंति
नतुतएवनिर्भिद्यग्रहीतुंशक्यंतेविशेषरूपेणाभावात्तेषांतथाप्रज्ञानव्यतिरेकेणस्वप्नजागरितयोर्नकश्चिद्वस्तुविशेषोगृह्यतेतस्मा

सयथादुंदुभेर्हन्यमानस्यनबाह्यान्छब्दान्छक्नुयाद्ग्रहणायदुंदुभेस्तुग्रहणेनदुंदुभ्याघातस्यवाशब्दोगृहीतः॥३७॥सय
थाशंखस्यध्मायमानस्यनबाह्यान्छब्दान्शक्नुयाद्ग्रहणायशंखस्यतुग्रहणेनशंखध्मस्यवाशब्दोगृहीतः॥३८॥

त्प्रज्ञानव्यतिरेकेणाभावोयुक्तस्तेषां॥३७॥तथासयथाशंखस्यध्मायमानस्यशब्देनसंयोज्यमानस्यापूर्यमाणस्यनबाह्यांछब्दांछक्नुया
दित्येवमादिपूर्ववत्तथावीणायैवीणायाःवाद्यमानायाअनेकदृष्टांतोपादानमिहसामान्यबहुत्वख्यापनार्थंअनेकेहि

नेत्यादिवाक्यमादिशब्दार्थः॥ दुंदुभेस्तुग्रहणेनेत्यादिवाक्यंदृष्टांतयति॥ पूर्ववदिति॥ ३८॥ तथेतिदृष्टांतद्वयपरामर्शः॥एकेनैवदृष्टांतेनविवक्षिता
र्थसिद्धौकिमित्यनेकदृष्टांतोपादानमित्याशंक्याह॥अनेकेति॥इहेतिजगदुच्यतेश्रुतिर्वा॥सामान्यबहुत्वमेवस्फुटयति॥अनेकेहीति ॥

तेषांस्वस्वसामान्येंतर्भावेपिकृतोब्रह्मणिपर्यवसानमित्याशंक्याह॥तेषामिति॥कथमित्यस्मात्पूर्वंतथेत्यध्याहारः इतिमन्यतेश्रुतिरितिशेषः॥विमतंतन्मातिरेकितद्तिरेकेणागृह्यमाणत्वाद्यद्यद्तिरेकेणागृह्यमाणंतत्तद्तिरेकिनभवतियथादुंदुभ्यादिशब्दास्तत्सामान्यातिरेकेणागृह्यमाणास्तद्तिरेके

विलक्षणाश्चेतनाचेतनरूपाःसामान्यविशेषास्तेषांपारंपर्येगत्यायथैकस्मिन्महासामान्येंतर्भावःप्रज्ञानघनेकथंनामप्रदर्शयितव्य इतिदुंदुभिशंखवीणाशब्दसामान्यविशेषाणांयथाशब्दत्वेअंतर्भावःएवंस्थितिकालेतावत्सामान्यविशेषाव्यतिरेकाद्ब्रह्मैकत्वंशक्य मवगंतुं॥३९॥एवमुत्पत्तिकालेप्रागुत्पत्तेर्ब्रह्मैवेतिशक्यमवगंतुं॥यथाग्नेर्विस्फुलिंगधूमांगारार्चिषांप्राग्विभागादग्निरेवेतिभवत्यग्र

सयथावीणायैवाद्यमानायैनबाह्यान्छब्दान्छक्नुयाद्ग्रहणायवीणायैतुग्रहणेनवीणावादस्यवाशब्दोगृहीतः॥३९॥

कत्वमेवंजगन्नामरूपविकृतंप्रागुत्पत्तेःप्रज्ञानघनएवेतियुक्तंगृहीतुमित्येतदुच्यतेसयथार्द्रैधाग्नेःआर्द्रैरेधोभिरिद्धोग्निरार्द्रैधा ग्निःतस्मादभ्याहितात्पृथग्धूमाःपृथग्नानाप्रकारंधूमग्रहणंविस्फुलिंगादिप्रदर्शनार्थंधूमविस्फुलिंगादयोविनिर्गच्छंतिएवंयथा यंदृष्टांतःअरेमैत्रेयिअस्यपरमात्मनःप्रकृतस्यमहतोभूतस्यनिश्वसितमेतन्निश्वसितमिवनिश्वसितं यथाःप्रयत्नेनैवपुरुषनिश्वासो भवत्येवंवाअरेकिंत णनसंतीत्यनुमानंविवक्षन्नाह॥दुंदुभीति॥शब्दत्वेंतर्भावस्तथाप्रज्ञानघनेसर्वंजगदंतर्भवतीतिशेषः॥दृष्टांतत्रयमवष्टभ्यनि ष्टंकितमर्थमुपसंहरतिएवमिति॥३९॥सयथार्द्रैधाग्नेरित्यादिवाक्यस्यतात्पर्यमाह॥एवमित्यादिना॥स्थितिकालवदित्येवंशब्दार्थः॥तत्रवाक्यमवतार्यव्या चष्टे॥इत्येतदिति॥महतोनवच्छिन्नस्यभूतस्यपरमार्थस्येतियावत्॥निश्वसितमिवेत्युक्तंव्यनक्ति॥यथेति॥अरेमैत्रेयितत्तोजातमितिसंबंधःतदेवाकांक्षापूर्व

स्थापितात्=५ निर्गताःटंकाःदोषाःयस्मात्२

इतिहासइतिब्राह्मणमेवेतिसंबंधः॥संवादादिरित्यादिपदेनप्राणसंवादादिग्रहणंअसद्वाइदमग्रआसीदित्यादीत्यत्रादिशब्देनासदेवेदमग्रआसीदित्यादिगृह्यते॥देवजनविद्यानृत्यगीतादिशास्त्रंवेदःसोयंवेदाहूहिर्नभवतीत्यर्थःइत्याद्याविद्येतिसंबंधःआदिशब्दःशिल्पशास्त्रसंग्रहार्थः॥प्रियमित्येतदुपासीतेत्याद्याइत्यत्रादिशब्दःसत्यस्यसत्यमित्युपनिषत्संग्रहार्थः॥तदेतेश्लोकाइत्यादयइत्यत्रादिशब्देनतदप्येषश्लोकोभवतिअसन्नेवसभवती

न्निश्वसितमिवततोजातमित्युच्यतेयदृग्वेदोयजुर्वेदःसामवेदोथर्वांगिरसश्चतुर्विधंमंत्रजातमितिहासइत्युर्वशीपुरूरवसोःसंवादादिःउर्वशीहाप्सराइत्यादिब्राह्मणमेवपुराणमसद्वाइदमग्रआसीदित्यादिविद्यादेवजनविद्यावेदःसोयमित्याद्याउपनिषदःप्रियमित्येतदुपासीतेत्याद्याःश्लोकाःब्राह्मणप्रभवामंत्रास्तदेतेश्लोकाइत्यादयःसूत्राणिवस्तुसंग्रहवाक्यानिवेदयथात्मेत्येवोपासीतेत्यादीनिअनु

सयथार्द्रैधाग्नेरभ्याहितात्पृथक्धूमाविनिश्चरंत्येवंवाअरेस्यमहतोभूतस्यनिश्वसितमेवैतद्यदृग्वेदोयजुर्वेदःसामवेदोथर्वांगिरसइतिहासःपुराणंविद्याउपनिषदःश्लोकाःसूत्राण्यनुव्याख्यानानिव्याख्यानानि

व्याख्यानानिमंत्रविवरणानि

व्याख्यानान्यर्थवादाः॥अथवावस्तुसंग्रहवाक्यविवरणान्यनुव्याख्यानानियथाचतुर्थाध्यायेआत्मेत्येवोपासीतेत्यस्ययथावान्योसावन्योहमस्मीतिनसवेदयथापशुरेवमित्यस्यायमेवाध्यायशेषःमंत्रविवरणानिव्याख्यानानिएवमष्टविधं

त्यादिगृह्यते॥इत्यादीनीत्यादिपदमथयोन्यांदेवतामुपास्तेब्रह्मविदाप्नोतिपरमित्यादिग्रहीतुं॥अर्थवादेषुव्याख्यानपदप्रवृत्तौहेत्वभावंशंकित्वापसांतरमाह॥अथवेति॥इतिहासादिशब्दव्याख्यानमुपसंहरति॥एवमिति॥ब्राह्मणमितिहासादिपदवेदनीयमितिशेषः॥ऋगादिशब्दानामितिहासादिशब्दानांचप्रसिद्धार्थत्यागेकोहेतुरित्याशंक्य

प्रमाणांतरानपेक्षत्वाद्धेतोर्वेदस्य प्रामाण्यं तच्चापौरुषेयत्वात्प्रमाणांतरानपेक्षस्य हेतोरभावान्नेति चेन्नेत्याह बुद्धीति ४ ३ तर्हि अभिव्यक्तमेव कृतकत्वं तस्मादप्रामाण्यमिति चेत्तत्राह प्रत्यक्षा निश्वसितश्रुतिरितिहासादिशब्दानां प्रसिद्धार्थत्यागे हेतुः परिशेषस्त्वन्यत्रेत्यभिप्रेत्याह॥ एवं मंत्रेति॥ ननु प्रथमे कांडे वेदस्य नित्यत्वेन प्रामाण्यं स्थापितं तदनित्यत्वे तद्धानिरित्यत आह॥ नियतेति॥ नियतेत्यादौ वेदो विशेष्यते॥ कल्पांतेंऽतर्हितान्वेदानित्यादिवाक्यान्नियतरचनावत्त्वं वेदस्य गम्यते॥ अनादिनिधनानित्यादेश्च सदातनत्वं तस्य निश्चीयते॥ न च कृतकत्वादप्रामाण्यं प्रत्यक्षादौ व्यभिचारान्न च पौरुषेयत्वादनपेक्षत्वहेत्वभावादप्रामाण्यं बुद्धिपूर्वप्रणीतत्वाभावेनं तत्सिद्धेर्न चोन्मत्तवाक्यसादृश्यमबाधितार्थत्वादिति भावः॥ सिद्धे वेदस्य प्रामाण्ये फलितमाह॥ तस्मादि

अनपेक्षत्वसिद्धेः १

———— ब्राह्मणमेवं मंत्रब्राह्मणयोरेव ग्रहणं॥ नियतरचनावतो विद्यमानस्यैव वेदस्याभिव्यक्तिः पुरुषनिश्वासवन्न च पुरुषबुद्धिप्रयत्नपूर्वकः अतः प्रमाणनिरपेक्ष एव स्वार्थे तस्माद्युक्तेनोक्तं तत्तथैव प्रतिपत्तव्यमात्मनः श्रेयस्कृद्भिः ज्ञानं वा कर्म वेति॥ नाम

न्यस्यैवैतानि निश्वसितानि॥ ४०॥

प्रकाशवशाद्धि रूपस्य विक्रियाव्यवस्था नामरूपयोरेव हि परमात्मोपाधिभूतयोर्व्याक्रियमाणयोः सलिलफेनवत्तत्त्वान्यत्वेनानिर्वक्तव्ययोः सर्वावस्थयोः संसारत्वमित्यतो नाम्न एव निश्वसितत्वमुक्तं तद्वचनेनैवेतरस्य निश्वसितत्वसिद्धेः ति॥ नामप्रपंचसृष्टिरेवात्रोपदिशनरूपप्रपंचसृष्टिः सा चोपदेष्टव्या सृष्टिपरिपूर्तेरन्यथानुपपत्तेरित्याशंक्याह॥ नामेति॥ यद्यपि नाम तंत्राद्रूपसृष्टिरिति नामसृष्टिवचनेन रूपसृष्टिरर्थादुक्ता तथापि सर्वसंसारसृष्टिर्नोक्ता नामरूपयोरेव संसारत्वे प्राक्तत्सृष्टेः संसारो न स्यादित्याशंक्याह॥ नामरूपयोरिति॥ सर्वावस्थयोर्व्यक्ताव्यक्तावस्थयोरिति यावत्॥ नामप्रपंचस्यैवात्र सर्गोक्तिमुपपादितामुपसंहरति॥ इतीति॥ अतः शब्दार्थं स्फुटयति॥ तद्वचनेनेति॥

186

अज्ञानप्रभवा लोका वेदाश्च ज्ञानसंभवाः विदितात्मसतत्त्वस्य नेह नानास्ति किंचनेति स्मृतेः १

बृ॰ र॰ ५॰ | अ॰ ४

निश्वसितश्रुतिं किंचिदंतरेणावतारयति॥ अथवेत्यादिना॥ मिथ्यात्वेपि प्रतिबिंबवत्प्रामाण्यसंभवाद्दृश्यत्वादि वाक्यानां च मिथ्याज्ञानाधीनप्रयत्नजन्यत्वे नामानत्वाद्वेदस्य तदभावाद्विषयाव्यभिचाराच्च नाप्रामाण्यमित्याह॥ तदाशंकेति॥ अन्यो ग्रंथो बुद्धादिप्रणीतः स्वर्गकामश्चैत्यं वंदेदित्यादिः॥४०॥ स यथा सर्वासामपामित्यादि समनंतरग्रंथमुत्थापयति॥ किंचान्यदिति॥ तदेव व्याकरोति॥ न केवलमिति॥ प्रलयकाले च प्रज्ञानव्यतिरेकेणाभावाज्जगतो ब्रह्मत्व

अथवा सर्वस्य द्वैतजातस्याविद्याविषयत्वमुक्तं ब्रह्मत्वं परादादिदं सर्वं यदयमात्मेति तेन वेदस्याप्रामाण्यमाशंक्येत तदाशंकानिवृत्त्यर्थमिदमुक्तं पुरुषनिश्वासवदप्रयत्नोत्थितत्वात्प्रमाणं वेदो न यथान्यो ग्रंथ इति॥४०॥ किंच अन्यन्न केवलं स्थित्युत्पत्तिकालयोरेव प्रज्ञानव्यतिरेकेणाभावाज्जगतो ब्रह्मत्वं प्रलयकाले च जलबुद्बुदफेनादीनामिव सलिलव्यतिरेकेणाभाव एवं प्रज्ञानव्यतिरेकेण तत्कार्याणां

स यथा सर्वासामपाꣳ समुद्र एकायनमेवꣳ सर्वेषाꣳ स्पर्शानां त्वगेकायन

नामरूपकर्मणां तस्मिन्नेव लीयमानानामभावः तस्मादेकमेव ब्रह्म प्रज्ञानघनमेकरसं प्रतिपत्तव्यमित्यत आह प्रलयदर्शनाय दृष्टांतः स इति दृष्टांतो यथा येन प्रकारेण सर्वासां नदीवापीतडागादिगतानामपां समुद्रोऽब्धिरेकायनमेकगमनमेकप्रलयोऽविभागप्राप्तिरित्य

मिति संबंधः॥ उक्तमर्थं दृष्टांतेन स्पष्टयति॥ जलेति॥ तथापि प्रज्ञानमेकैकमेवं स्यान्न ब्रह्मेत्याशंक्याह॥ तस्मादिति॥ सत्यज्ञानादिवाक्याद्ब्रह्मणस्तन्मात्रत्वादित्यर्थः॥ यथोक्तं ब्रह्म चेत्प्रतिपत्तव्यं किमिति तर्हि स यथेत्यादि वाक्यमित्याशंक्य तच्छेषत्वेन प्रलयं दर्शयितुं दृष्टांतवचनमेतदित्याह॥ अत आहेति॥ प्रलीयते स्मिन्निति प्रलय एकश्चासौ प्रलयश्चेति एकप्रलयः॥ तडागादिगतानामपां कुतः समुद्रे लयो न हि तासां तेन संगतिरित्याशंक्याह॥ अवि

रामः ५०

अत्र हि समुद्रशब्देन जलसामान्यमुच्यते तद्व्यतिरेकेण च जलविशेषाणामभावो विवक्षितः॥ तेषां तत्संस्थानमात्रत्वादतश्चासामस्मिन्नविभागस्य प्राप्तिरितिसमुद्रेऽविभाग प्राप्तिरित्यर्थः॥ पिच्छिलादीनामित्यादिशब्देनानुक्ताः स्पर्शविशेषाः सर्वे गृह्यन्ते॥ विषयाणामिंद्रियकार्यत्वाभावात्कुतः स्पर्शानां त्वचि लयः स्यादित्याह॥ त्वगिति॥ स्पर्शविशेषाणां स्पर्शसामान्ये तर्भावं प्रपंचयति॥ तस्मिन्निति॥ तथापि समस्तस्य जगतो ब्रह्मव्यतिरेकेणाभावाद्ब्रह्म

यथायं दृष्टांत एवं सर्वेषां स्पर्शानां मृदुकर्कशकठिनपिच्छिलादीनां वायोरात्मभूतानां त्वगेकायनं त्वगितित्वग्विषयं स्पर्शसामान्यमात्रं॥ तस्मिन्प्रविष्टाः स्पर्शविशेषाः आपइव समुद्रं तद्व्यतिरेकेणाभावभूता भवंति तस्यैव हि ते संस्थानमात्रा आसंस्तथा तदपि स्पर्शसामान्यमात्रं त्वक्शब्दवाच्यं मनः संकल्पे मनोविषयसामान्यमात्रे त्वग्विषयइव स्पर्शविशेषाः प्रविष्टं तद्व्यतिरेकेणाभावभूतं भवत्येवं मनो

मेवं सर्वेषां रसानां जिह्वैकायनमेवं सर्वेषां गंधानां नासिके एकायन

विषयोपि बुद्धिविषयसामान्यमात्रे प्रविष्टः तद्व्यतिरेकेणाभावभूतो भवति विज्ञानमात्रमेव भूत्वा प्रज्ञानघने परे ब्रह्मणि आपइव समुद्रे प्रलीयते एवं परंपराक्रमेण शब्दादौ सह ग्राहकेण करणेन प्रलीने प्रज्ञानघने उपाध्यभावात्सैंधवघनवत्प्रज्ञानघनमेकरसमनंतरमपारं निरंतरं ब्रह्म व्यवतिष्ठते॥ तमित्येतत्कथं प्रतिज्ञातमित्याशंक्य परंपरया ब्रह्मणि सर्वे विलयं दर्शयितुं क्रममनुक्रामति॥ तथेति॥ मनसि सति विषयविषयिभावस्य दर्शनादसति चादर्शनान्मनः स्पंदितमात्रं विषयजातमिति तस्य तद्विषयमात्रे प्रविष्टस्य तदतिरेकेणासत्वमित्यर्थः॥ संकल्पविकल्पात्मकमनः स्पंदितद्वैतस्य संकल्पात्मके मनस्यंतर्भावात्तस्य च संकल्पस्याध्यवसायपारतंत्र्यदर्शनादध्यवसायात्मिकायां च बुद्धौ तद्विषयस्य पूर्ववदनुप्रवेशान्मनोविषय

सामान्यस्य बुद्धिविषयसामान्ये प्रविष्टस्य तद्व्यतिरेकेण सत्वमित्याह॥ एवमिति॥

187

सर्वंजगदुक्तेनन्यायेनबुद्धिमात्रंभूत्वायस्थेहाद्धनसीप्राज्ञइत्यादिःतथाचेतन्तआत्मनीतिश्रुत्याब्रह्मणिपर्यवस्यतीत्याह॥विज्ञानमात्रमिति॥ननुजगदिदंवि
लीयमानंशक्तिशेषमेवविलीयतेतत्तज्ज्ञानादृतेतस्यनिःशेषनाशानाश्रयणात्तथाचकुतोब्रह्मैकरसस्यप्रतिपत्तिरत आह॥एवमिति॥शक्तिशेषत्वेपि
तस्यादुर्निरूपत्वाद्ब्रह्मैकरसस्यधीरविरुद्धेतिभावः एकायनप्रक्रियातात्पर्यमुपसंहरति॥तस्मादिति॥घ्राणविषयसामान्यमित्यादावेकायनमितिसर्वत्रसंबंधः॥क

तस्मादात्मैवैकमद्वयमितिप्रतिपत्तव्यंतथासर्वेषांगंधानांपृथिवीविशेषाणांनासिकेघ्राणविशेषसामान्यंतथासर्वेषांरसानामप्
विशेषाणांजिह्वेंद्रियविषयसामान्यं॥तथारूपाणांतेजोविशेषाणांचक्षुर्विषयसामान्यंतथाशब्दानांश्रोत्रविषयसामान्यंपूर्ववत्तथा
श्रोत्रादिविषयसामान्यानांमनोविषयसामान्येसंकल्पेमनोविषयसामान्यस्यापिबुद्धिविषयसामान्येविज्ञानमात्रेविज्ञानमात्रंभूत्वाप

मेवः सर्वेषाः रूपाणांचक्षुरेकायनमेवः सर्वेषाः शब्दानाः श्रोत्रमेकायनमेवः सर्वेषाः संकल्पानांमनएकायनमेव
ः सर्वासांविद्यानांः हृदयमेकायनमेवः सर्वेषांकर्मणांः हस्तावेकायनमेवः सर्वेषामानंदानामुपस्थएकायनमेवः स
र्वेषांविसर्गाणांपायुरेकायनमेवः सर्वेषामध्वनांपादावेकायनमेवः सर्वेषांवेदानांवागेकायनं॥ ४ १॥ रश्मिन्प्रज्ञानघनेप्रलीय

तेतथाकर्मेंद्रियाणांविषयावदनादानगमनविसर्गानंदविशेषास्तेक्रियासामान्येष्वेवप्रविष्टानविभागयोग्याभवंतिसमुद्रइवअप्विशेषा
स्तानिच यंपुनरत्रप्रतिपर्यायंब्रह्मणिपर्यवसानंतत्राह॥तथेति॥यथासर्वेषुपर्यायेषुब्रह्मणिपर्यवसानंतथोच्यतइतियावत्॥पूर्ववदितिलयविषयसामा
न्यवदित्यर्थः॥संकल्पेलयइतिशेषः॥विज्ञानमात्रइत्यत्रापितथैव॥एवंसर्वेषांकर्मणामित्यादेरर्थमाह॥तथाकर्मेंद्रियाणामिति॥क्रियासामान्यानांसूत्रात्मसं
लयइतिशेषः१

अयमात्माब्रह्म १

नचदिंद्रियादिरूपेणात्मनएवाविद्ययाभानात्संबंधस्यकल्पितत्वान्नाद्वैतहानिरित्यर्थः॥इंद्रियानंत्येहेतुमाह॥प्राणिभेदस्येति॥वाक्यार्थमाख्यानार्थमि
त्यंगतेनतत्संदर्भेणभूमिकामारचय्यतत्परंवाक्यमवतार्यव्याकरोति॥किंबहुनेत्यादिना॥नकेवलमध्यायद्वयस्यैवार्थःसंक्षिप्योपसंहृतःकिंतुस

प्राणिभेदस्यानंत्यात्॥किंबहुनातदेतद्ब्रह्मयआत्माअपूर्वंनास्यकारणंपूर्वंविद्यतइत्यपूर्वंनास्यापरंकार्यंविद्यतइत्यनपरंनास्यजात्यंत
रमंतरालेविद्यतइत्यनंतरंअवाह्यंतथाबहिरस्यनविद्यतइत्यवाह्यंकिंपुनस्तन्निरंतरंब्रह्मायमात्माकोसौयःप्रत्यगात्माद्रष्टाश्रोतामंताबो

स्ययंवैहरयोयंवैदशचसहस्राणिबहूनिचानंतानिचतदेतद्ब्रह्मापूर्वमनपरमनंतरमबाह्यमयमात्माब्रह्मसर्वानुभूरित्यनुशा
सनं॥६३॥पंचमंब्राह्मणं॥अथवंशः पौतिमाष्योगौपवनाद्गौपवनःपौतिमाष्यात्पौतिमाष्योगौपवनाद्गौपवनःकौशिकात्कौ
शिकःकौंडिन्यात्कौंडिन्यःशांडिल्याच्छांडिल्यःकौशिकाच्चगौतमाच्चगौतमः॥६४॥आग्निवेश्यादाग्निवेश्यःशांडिल्याच्चानभि
म्लाताच्चानभिम्लातआनभिम्लातादानभिम्लातआनभिम्लातादानभिम्लातोगौतमाद्गौतमःसैतवप्राचीनयोग्याभ्यां२

द्धाविज्ञातासर्वानुभूःसर्वात्मनासर्वमनुभवतीतिसर्वानुभूरित्येतदनुशासनंसर्ववेदांतोपदेशःएषसर्ववेदांतानामुपसंहृतोर्थः॥ए
तदमृतमभयंपरिसमाप्तश्चशास्त्रार्थः॥ ॥इतिचतुर्थस्याध्यायस्यपंचमंब्राह्मणं॥ ॥अथेदानींब्रह्मविद्यार्थस्यमधुकांडस्यवंशः
स्तुत्यर्थोब्रह्मविद्यायाः र्ववेदांतानामित्याह॥एषइति॥तस्योभयविधपुरुषार्थरूपत्वमाह॥एतदिति॥वक्तव्यांतरपरिशेषशंकांपरिहरति॥
परिसमाप्तश्चेति॥इतिचतुर्थस्यपंचमंब्राह्मणं॥ ब्रह्मविद्यासंक्षेपविस्तराभ्यांप्रतिपाद्यवंशब्राह्मणतात्पर्यमाह॥अथेति॥महाजनपरिगृहीताहिब्रह्मवि

ब्राह्मणस्यार्थांतरमाह॥ मंत्रश्चेति॥ स्वाध्यायः स्वाधीनोच्चारणक्षमत्वे सत्यध्यापनं॥ जपस्तु प्रत्यहमावृत्तिरिति भेदः॥ यथोक्तरीत्या ब्राह्मणारंभे स्थि
ते वंशशब्दार्थमाह॥ तत्रेति॥ तदेव स्फुटयति॥ यथेति॥ शिष्यावसानोपलक्षणीभूतात्पौतिमाष्यादारभ्य तदादि वेदाख्यमूलपर्यंतोयं वंशः प
र्वणः पर्वणो भिद्यत इति संबंधः॥ वंशशब्देन निष्पन्नमर्थमाह॥ अध्यायचतुष्टयस्येति॥ अथात्र शिष्याचार्यवाचकशब्दाभावे कुतोव्यवस्थेति

मंत्रश्चायं स्वाध्यायार्थो जपार्थश्च तत्र वंश इव वंशो यथा वेणुर्वंशः पर्वणः पर्वणो हि भिद्यते तद्वदग्रात्प्रभृत्यामूलप्राप्तेरयं वंशोऽध्यायच

सैतव प्राचीनयोग्यो पाराशर्य्यात्पाराशर्यो भारद्वाजाद्भारद्वाजो भारद्वाजाच्च गौतमाच्च गौतमो भरद्वाजाद्भरद्वाजः पाराशर्या
त्पाराशर्यो वैजवापायनाद्वैजवापायनः कौशिकायनेः कौशिकायनिः॥ ६५॥ घृतकौशिकाद्घृतकौशिकः पाराशर्यायणात्पा
राशर्यायणः पाराशर्यात्पाराशर्यो जातूकर्ण्याज्जातूकर्ण्य आसुरायणाच्च यास्काच्चासुरायणस्त्रैवणेस्त्रैवणिरौपजंधनेरौपजंध
निरासुरेरासुरिर्भारद्वाजाद्भारद्वाज आत्रेयादात्रेयो मांटेर्मांटिर्गौतमाद्गौतमो गौतमाद्गौतमो वात्स्याद्वात्स्यः शांडिल्याच्छांडिल्यः
कैशोर्यात्काप्यात्कैशोर्यः काप्यः॥ कुमारहारितात्कुमारहारितो गालवाद्गालवो विदर्भीकौंडिन्याद्विदर्भीकौंडिन्यो वत्सनपा
तो बाभ्रवाद्वत्सनपाद्बाभ्रवः पथः सौभरात्पंथाः तुष्टयस्याचार्यपरंपराक्रमो वंश इत्युच्यते॥ तत्र प्रथमांतः शिष्यः पंचम्यंतः आचा
र्यः परमेष्ठी विराड्ब्रह्मणो हिरण्यगर्भात्ततः परमाचार्यपरंपरानास्ति तत्राह॥ तत्रेति॥ परमेष्ठीब्रह्मशब्दयोरेकार्थत्वमाशंक्याह॥ परमेष्ठी
ति॥ कुतस्तर्हि ब्रह्मणो विद्याप्राप्तिस्तत्राह॥ तत इति॥ स्वयंप्रतिभातवेदो हिरण्यगर्भो नाचार्यांतरमपेक्षते ईश्वरानुगृहीतस्य बुद्धावाविर्भूताद्वेदादेव विद्या

कुतस्तर्हि वेदो जायते तत्राह॥ यस्तु नरिति॥ परस्यैव ब्रह्मणो वेदरूपेणावस्थानात्तस्य नित्यत्वान्न हेत्वपेक्षेत्यर्थः॥ आदावंते च कृतमंगला ग्रंथाः प्र



यस्तु नर्ब्रह्म तन्नित्यं स्वयंभु तस्मै ब्रह्मणे स्वयंभुवे नमः॥ ॥ हरिः ओं तत्सदिति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्गोविंदभगव

सौभरो यास्यादांगिरसाद् यास्य आंगिरस आभूतेस्त्वाष्ट्राद् आभूतिस्त्वा
ष्ट्रो विश्वरूपात्त्वाष्ट्राद् विश्वरूपस्त्वाष्ट्रोऽश्विभ्यामश्विनौ दधीच आथर्वणाद्
ध्यङ्ङाथर्वणोऽथर्वणो दैवादथर्वा दैवो मृत्योः प्राध्वंसनान्मृत्युः प्रा
ध्वंसनः प्रध्वंसनात्प्रध्वंसन एकर्षेरेकर्षिर्विप्रचित्तेर्विप्रचित्तिर्व्य
ष्टेर्व्यष्टिः सनारोः सनारुः सनातनात्सनातनः सनगात्सनगः परमेष्ठिनः पर
मेष्ठी ब्रह्मणो ब्रह्म स्वयंभु ब्रह्मणे नमः॥६॥ इति द्वितीयोऽध्यायः॥ ॥

त्पूज्यपादशिष्यश्रीमच्छंकरभगवत्पूज्यपादकृतौ श्रीमद्बृहदारण्यभाष्ये चतुर्थोऽध्यायः॥ ॥

चारिणो भवंतीति द्योतयितुं मंते ब्रह्मणे नम इत्युप

कं व्याचष्टे॥ तस्मै इति॥ इति श्रीमद्बृहदारण्यभाष्यटीकायां चतुर्थोऽध्यायः समाप्तः॥४॥ मूलं २५ भाष्य १४०० टीका १५०० एकत्र श्लोकसंख्या ३१२५ ॥

श्रीगणेशाय नमः॥ ॐ मधुकांडे त्वाष्ट्रं कक्ष्यं चेति मधु हू यं व्याख्यातं संप्रति कांडांतरारंभं प्रतिजानीते॥ जनक इति॥ ननु पूर्वस्मिन्नध्याये व्याख्यातमेव तत्त्वं उत्तरत्रापि वक्ष्यते तेन तथा च पुनरुक्तेरलं मुनिकांडेनेति तत्राह॥ उपपत्तीति॥ तुल्यमुपपत्तिप्रधानत्वं मधुकांडस्यापीति चेन्नेत्याह॥ मधुकांडं ह्येति॥ ननु प्रमाणादागमादेव तत्त्वज्ञानमुत्पत्स्यते किमुपपत्त्या तत्प्रधानेन कांडेन चेति तत्राह॥ आगमेति॥ करणत्वेनागमस्य तत्त्वज्ञाने हेतुरुपपत्तिरुपकरणतया पदार्थपरिशोधनद्वारा तद्धेतुरित्यत्रागमकमाह॥ श्रोतव्य इति॥ करणोपकरणयोरागमोपपत्त्योस्तत्त्वज्ञानहेतुत्वे सिद्धे फलितमुपसंहरति॥ तस्मादिति॥ यथोक्तरीत्या कांडारंभेपि किमित्याख्यायिका प्रणीयते तत्राह॥ आख्यायिका त्विति॥ विज्ञानवतां पूजात्र प्रयुज्यमानादृश्यते तेन

हरिः ॐ जनको ह वैदेह इत्यादि याज्ञवल्कीयं कांडमारभ्यते उपपत्तिप्रधानत्वादतिक्रांतेन मधुकांडेन समानार्थत्वेपि सति न पुनरुक्तता मधुकांडं ह्यागमप्रधानमागमोपपत्ती ह्यात्मैकत्वप्रकाशनाय प्रवृत्ते शकुंतः करतलगतबिल्वमिव दर्शयितुं श्रोतव्यो मंतव्य इति ह्युक्तं तस्मादागमार्थस्यैव परीक्षापूर्वकं निर्धारणाय याज्ञवल्कीयं कांडमुपपत्तिप्रधानमारभ्यते आख्यायिका तु विज्ञानस्तुत्यर्थोपायविधिपरा वा प्रसिद्धो ह्युपायो विद्वद्भिः शास्त्रेषु च दृष्टो दानं॥ दानेन ह्युपनमंते प्राणिनः प्रभूतं हिरण्यं गोसहस्रदानं चेह उपलभ्यते याच विज्ञानं

महाभागधेयमिति स्तुतिरत्र विवक्षितेत्यर्थः॥ विद्याग्रहणे दानाख्योपायप्रकारज्ञापनपरा वाख्यायिकेत्यर्थांतरमाह॥ उपायेति॥ कथं पुनर्दानस्य विद्याग्रहणोपायत्वं तत्राह॥ प्रसिद्धो हीति॥ गुरुशुश्रूषया विद्या पुष्कलेन धनेन वेत्यादौ दानाख्यो विद्याग्रहणोपायो यस्मात्प्रसिद्धस्तस्माच्च तस्य तदुपायत्वे नास्ति वक्तव्यमित्यर्थः॥ दाने सर्वं प्रतिष्ठितमित्यादिश्रुतिषु विद्वद्भिरेव विद्याग्रहणोपायो दृष्टस्तस्मान्न तस्योपायत्वे विवदितव्यमित्याह॥ विद्वद्भिरिति॥ उपपन्नं च दानस्य विद्याग्रहणोपायत्वमित्याह॥ दानेनेति॥ भवतु दानं विद्याग्रहणोपायस्तथापीयमाख्यायिका कथं तत्प्रदर्शनपरेत्याशंक्याह॥ प्रभूतमि

ननु समुदितेषु ब्राह्मणेषु ब्रह्मिष्ठतमं निर्धारयितुं राजा प्रवृत्तस्तत्कथमन्यपरेण ग्रंथेन विद्याग्रहणोपायविधानाय आख्यायिकारभ्यते तत्राह॥ तस्मादिति॥ उपलंभोपयोक्तस्तत्कृब्द्यार्थः॥ इत्तमाख्यायिका विद्याप्राप्त्युपायप्रदर्शनपरेत्याह॥ अपिचेति॥ तस्मिन्नेवोर्थे विद्यायेवां तेत तद्विद्यास्ते: सह संबंधश्चते रेव प्रश्नप्रतिवचनद्वारा वादकरणं च विद्याप्राप्तावुपायइत्यत्र गमकमाह॥ न्यायविद्यायामिति॥ तत्र निर्णयफलां हि वीतरागकथामिच्छंति॥ तद्विद्य

तस्मादन्यपरेणापि शास्त्रेण विद्याप्राप्त्युपायदानप्रदर्शनार्थाख्यायिकारब्धा अपिच तद्विद्यसंयोगस्तैश्च सहवादकरणं विद्याप्राप्त्युपायोन्यायविद्यायां दृष्टस्तच्चास्मिन्नध्याये प्राबल्येन प्रदर्श्यते प्रत्यसा च विद्वत्संयोगे प्रज्ञावृद्धिस्तस्माद्विद्याप्राप्त्युपायप्रदर्शनार्थैवाख्यायिका॥ जन

ॐ जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेजे तत्र ह कुरुपंचालानां ब्राह्मणा अभिसमेता बभूवुस्तस्य ह जनकस्य वैदेहस्य विजिज्ञासा बभूव कः स्विदेषां ब्राह्मणानामनूचानतम इति स ह गवां सहस्रमवरुरोध दश दश पादा एकैकस्याः शृंगयोराबद्धा बभूवुः॥ १॥

को नाम ह किल संम्राड्राजा बभूव विदेहानां तत्र भवो वैदेहः स च बहुदक्षिणेन यज्ञेन शाखांतरप्रसिद्धो वा बहुदक्षिणो नाम यज्ञः अश्वमेधो वा दक्षिणाबाहुल्याद्बहुदक्षिण इहोच्यते तेनेजे अयजत तत्र तस्मिन्यज्ञे निमंत्रिता दर्शनकामा वा कुरूणां देशानां पंचालानां च ब्राह्मणाः॥ तेषु हि विदुषां बाहुल्यं प्रसिद्धमभिसमेता अभिसंगता बभूवुः संयोगादेर्विद्याप्राप्त्युपायत्वेपि कथं प्रकृते तत्प्रदर्शनपरत्वमत आह॥ तच्चेति॥ तद्विद्यसंयोगादीति यावत्॥ न केवलं तर्कशास्त्रवशादेव तद्विद्यसंयोगे प्रज्ञावृद्धिः किंतु स्वानुभववशादपीत्याह॥ प्रत्यसाचेति॥ आख्यायिकायास्तात्पर्यमुपसंहरति॥ तस्मादिति॥ राजसूयाभिषिक्तः सार्वभौमो राजा संम्राडित्युच्यते॥ बहुदक्षिणेन यज्ञेनायजदिति संबंधः अश्वमेधे दक्षिणाबाहुल्यमश्वमेधप्रकरणे स्थितं॥ ब्राह्मणा अभिसं

तत्रयज्ञशालायामितियावत्॥ विजिज्ञासामेधाकांक्षापूर्वकंप्रसादयति॥ कथमित्यादिना॥ अनूचानत्वमनुवचनसमर्थत्वं॥ एषांमध्येतिशयेनानूचानो
नूचानतमः सकः स्यादितियोजना॥ एकस्यपलस्यचत्वारोभागास्तेषामेकोभागः पादइत्युच्यते॥ प्रत्येकंशृंगयोर्दशदशपादाः संबध्येरन्नितिशंकांनिराकर्तुं



तत्रमहांतंविद्वत्समुदायंदृष्ट्वातस्यहकिलजनकस्यवैदेहस्ययजमानस्यकोनुखल्वत्रब्रह्मिष्ठइतिविशेषेणज्ञातुमिच्छाविजिज्ञासाबभूव॥ क
थंकःस्वित्कोनुखल्वेषांब्राह्मणानांअनूचानतमः सर्वइमेनूचानाः कःस्विदेषामतिशयेनानूचानइतिसहानूचानविषयोस्यजिज्ञासः संस्तद्वि
ज्ञानोपायार्थंगवांसहस्रंप्रथमवयसामवरुरोधगोष्ठेऽवरोधंकारयामासकिंविशिष्टास्तागावोऽवरुद्धाइत्युच्यतेपलचतुर्भागःपादःसुवर्णस्य

तान्होवाचब्राह्मणाभगवंतोयोवोब्रह्मिष्ठःसएतागाउदजतामितितेहब्राह्मणानदधृषुरथहयाज्ञवल्क्यःस्वमेवब्रह्मचारिण
मुवाचैताःसोम्योदजसामश्रवा३इतिताहोदाचकारतेहब्राह्मणाश्चुक्रुधुःकथंनोब्रह्मिष्ठोब्रवीतेत्यथह दशदशपादाःएकैकस्या
गोःशृंगयोराबद्धाबभूवुःपंचपंचपादाएकैकस्मिन्शृंगे॥१॥ गाएवमवरुध्यब्राह्मणांस्तान्होवाचहेब्राह्मणाभगवंतइत्यामंत्र्ययोवोयुष्मा
कंब्रह्मिष्ठःसर्वेयूयंब्राह्मणाअतिशयेनयुष्माकंब्रह्मिष्ठःसएतागाःउदजतांउत्कालयतुस्वगृहंप्रतितेहब्राह्मणानदधृषुःतेहकिलैवमुक्ता
ब्राह्मणाःब्रह्मिष्ठतामात्मनःप्रतिज्ञातुंनदधृषुःनप्रगल्भाःसंवृत्ताःअप्रगल्भभूतेषुब्राह्मणेष्वथहयाज्ञवल्क्यः विभजते॥ पंचेति॥ एकैकस्मि
न्शृंगेआबद्धाबभूवुरितिपूर्वेणसंबंधः॥१॥ ब्राह्मणाःवेदाध्ययनसंपन्नास्तदर्थनिष्ठाइतियावत्॥ उत्कालयतुउद्गमयतु॥ यतोयाज्ञवल्क्योयजुर्वेदविदःसकाशा
द्ब्रह्मचारीसामविधिंशृणोतिअतःसुवाध्यारूढंसामगीयते॥ त्रिष्वेवचवेदेष्वंतर्भूतोथर्ववेदस्तस्मादर्थाद्यजुर्वेदिनोमुनेःशिष्यस्यसामवेदाध्ययनानुपपत्तेर्वेदच

निमित्तनिवेदनपूर्वकंब्राह्मणानांसभ्यानांक्रोधप्राप्तिंदर्शयति॥याज्ञवल्क्येनेति॥क्रोधानंतर्यमथशब्दार्थंकथयति॥क्रुद्धेष्विति॥अश्वलप्रश्नस्यप्राथम्येहेतुः॥राजेति॥याज्ञवल्क्यमित्यनुवादोन्वयप्रदर्शनार्थः॥प्रश्नमेवप्रश्नपूर्वकंविशदयति॥कथमित्यादिना॥अनौद्धत्यंब्रह्मविदोलिंगमितिसूचयति॥

स्वमात्मीयमेवब्रह्मचारिणमंतेवासिनमुवाचएतागाहेसोम्यउदजउद्गमयास्मद्गृहान्प्रतिहेसामश्रवःसामविधिंहिशृणोत्यतोर्थाच्चतुर्वेदोयाज्ञवल्क्यस्तागाहउदाचकारउत्कालितवानाचार्यगृहंप्रतियाज्ञवल्क्येनब्रह्मिष्ठपणस्वीकरणेनात्मनोब्रह्मिष्ठताप्रतिज्ञातेतिहचुक्रुधुःक्रुद्धवंतःब्राह्मणाःतेषांक्रोधाभिप्रायमाचष्टेकथंनोस्माकमेकैकप्रधानानांब्रह्मिष्ठोस्मीतिब्रवीतेतिअथहैवं क्रुद्धेषुब्राह्मणेषुजनकस्ययज्ञ

जनकस्यवैदेहस्यहोताश्वलोबभूवसहैनंपप्रच्छत्वंनुखलुनोयाज्ञवल्क्यब्रह्मिष्ठोसी३इतिसहोवाचनमोवयंब्रह्मिष्ठायकुर्मोगोकामाएववयंस्मइतितंहततएवप्रष्टुंदध्रेहोताश्वलः॥२॥ मानस्यहोतर्त्विक्अश्वलोनामबभूवासीत्सएनंयाज्ञवल्क्यंब्रह्मिष्ठाभिमानीराजाश्रयत्वाच्चधृष्टोयाज्ञवल्क्यंपप्रच्छपृष्टवान्कथंयाज्ञवल्क्येतिहोवाचत्वंनुखलुनोयाज्ञवल्क्यब्रह्मिष्ठोसी३इतिप्लुतिर्भर्त्सनार्थासहोवाचयाज्ञवल्क्यःनमस्कुर्मोवयंब्रह्मिष्ठायइदानींगोकामाःस्मोवयमितितंब्रह्मिष्ठप्रतिज्ञंसंतंततएवब्रह्मिष्ठपणस्वीकरणात्प्रष्टुंदध्रेधृतवान्मनोहोताश्वलः॥२॥याज्ञवल्क्येतिहोवाचतत्रमधुकांडेपांक्तेनकर्मणादर्शनसमुच्चितेनयजमानस्यमृत्योरत्ययोभिहितःउद्गीथप्रकरणेसंक्षेपतः सहेति॥किमितितर्हिस्वगृहान्प्रतिगावोब्रह्मिष्ठपणभूतानीतास्तत्राह॥इदानीमिति॥नतस्यतादृशीप्रतिज्ञाप्रतिभातीत्याशंक्याह॥ततएवेति॥२॥तत्रप्रथमंमुनेराभिमुख्यमापादयितुंसंबोधयति॥याज्ञवल्क्येति॥उक्तरीत्याश्वलप्रश्नेप्रस्तुतेतस्योद्गीथाधिकारेणसंगतिमाह॥

मधुकांडे पूर्वत्र व्याख्यातं यदुद्गीथप्रकरणं तस्मिन्नासंगपाप्मनो मृत्योरत्ययः समुच्चितेन कर्मणा संक्षेपतो व्याख्यात इति संबंधः॥ तस्यैवोद्गीथदर्शनस्येति या
वत्॥ परीक्षाविषयो विचारभूमिरयं प्रश्नप्रतिवचनरूपो ग्रंथ इत्यर्थः॥ तच्छब्दः समनंतरनिर्दिष्टग्रंथविषयः॥ दर्शनमुद्गीथोपासनं॥ तस्य विशेषो वा
गादेरग्न्याद्यात्मकत्वविज्ञानं तत्सिध्यर्थोऽयं क्रमः॥ एवमवांतरसंगतिमुक्त्वा प्रश्नाक्षराणि व्याचष्टे॥ यदिदमिति॥ मृत्युनाप्तमित्यनेन मृत्युनाभिपन्नमित्य
स्य गतार्थत्वमाशंक्याह॥ न केवलमिति॥ कर्मणो मृत्युत्वात्तेन मृत्योरत्ययायोगात्तदत्ययसाधनं किंचिद्दर्शनमेव वाच्यमित्याशयेन पृच्छति॥ केनेति॥ दर्शन

तस्यैव परीक्षाविषयोऽयमिति तद्धि तद्दर्शनविशेषार्थोऽयं विस्तर आरभ्यते यदिदं साधनजातमस्य कर्मण ऋत्विगग्न्यादि मृत्युना कर्मलक्ष
णेन स्वाभाविकासंगसहितेनाप्तं व्याप्तं न केवलं व्याप्तमभिपन्नं च मृत्युना वशीकृतं च॥ केन दर्शनलक्षणेन साधनेन यजमानो मृत्योराप्ति

याज्ञवल्क्येति होवाच यदिदꣳ सर्वं मृत्युनाप्तꣳ सर्वं मृत्युनाभिपन्नं केन यजमानो मृत्योराप्तिमतिमुच्यत इति ॥

मतीत्य मृत्युगोचरत्वमतिक्रम्य मुच्यते स्वतंत्रो मृत्योरवशो भवतीत्यर्थः॥ ननूद्गीथ एवाभिहितं येनातिमुच्यते मुख्यप्राणात्मदर्शनेनेति वाढं
उक्तं योऽनुक्तो विशेषस्तन्न तदर्थोऽयमारंभ इत्यदोषः होत्रर्त्विजाग्निना वाचेत्याह याज्ञवल्क्यः एतस्यार्थं व्याचष्टे

विषयं प्रश्नमाक्षिपति॥ नन्वि
ति॥ येन मुख्यप्राणात्मदर्शनेनातिमुच्यते तदुद्गीथप्रक्रियायामेवोक्तं तथा च मृत्योरत्ययोपायस्य विज्ञानस्य निर्ज्ञातत्वात्केनेति प्रश्नानुपपत्तिरिति योजना
। तस्यैव परीक्षाविषयोऽयमित्यादावुक्तमादाय परिहरति॥ बाढमिति॥ उद्गीथप्रकरणे वागादेरग्न्याद्यात्मत्वदर्शनरूपो यो विशेषो वक्तव्योऽपि नोक्तस्तदु
क्त्यर्थोऽयं प्रश्नप्रतिवचनरूपो ग्रंथ इति कृत्वा केनेत्यादिप्रश्नोपपत्तिरित्यर्थः॥ कीदृक्पुनर्दर्शनं मृत्युजयसाधनं होत्रेत्यादावुक्तमित्याशंक्याह॥ एतस्येति॥

व्याचष्टे वाग्वै यज्ञस्येत्यादिनेति शेषः व्याख्यानमेव विशदयितुं पृच्छति ॥ कः पुनरिति ॥ दर्शनविषयं दर्शयन्नुत्तरमाह ॥ उच्यत इति ॥ यज्ञशब्दस्य यजमाने रूढप्रयोगो नास्तीत्याशंक्याह ॥ यज्ञ इति ॥ यजमानस्य या वागध्यात्मं सैवाधियज्ञे होतास्तु तथापि कथं तयोर्दैवतात्मना दर्शनमित्याह ॥ कथमिति ॥ तयोरग्न्यात्मना दर्शनमुत्तरवाक्यावष्टंभेन व्याचष्टे ॥ तत्त्वेति ॥ कथं पुनर्वागग्न्योरेकत्वं तदाह ॥ तदेतदिति ॥ तयोरेकत्वेपि कुतो होतुस्तदैक्यमि

कः पुनर्होता येन मृत्युमतिक्रामतीत्युच्यते वाग्वै यज्ञस्य यजमानस्य यज्ञो वै यजमान इति श्रुतेः यज्ञस्य यजमानस्य या वाक् सैव होताधियज्ञे कथं तत्तत्र या इयं वाग्यज्ञस्य यजमानस्य सोयं प्रसिद्धोग्निरधिदैवं तदेतन्मधुब्राह्मणे व्याख्यातं स चाग्निर्होताग्निर्वै होतेति श्रुतेः यदेतद्यज्ञस्य साधनद्वयं होता चर्त्विगधियज्ञमध्यात्मं च वागेतदुभयं साधनद्वयं परिच्छिन्नं मृत्युनासंस्वाभाविकाज्ञानासंगप्रयुक्तेन कर्मणा मृत्यु

होत्रर्त्विजाग्निना वाचा वाग्वै यज्ञस्य होता तद्येयं वाक् सोयमग्निः स होता ॥

नाप्रतिक्षणमन्यथात्वमापाद्यमानं वशीकृतं तदनेनाधिदैवतरूपेणाग्निना दृश्यमानं यजमानस्य यज्ञस्य मृत्योरतिमुक्तये भवति ॥ तदेतदाह स मुक्तिः स होताग्निर्मुक्तिरग्निस्वरूपदर्शनमेव मुक्तिर्यदैव साधनद्वयमग्निरूपेण पश्यति तदानीमेव हि स्वाभाविकादासंगान्मृत्योर्विमुच्यते आध्यात्मिकात्परिच्छिन्नरूपादाधिभौतिकाच्च त्याशंक्याह ॥ स चेति ॥ स मुक्तिरित्येतदवतारयितुं भूमिकां करोति ॥ यदेतदिति ॥ न केवलमेतदुभयं मृत्युनासंस्पृष्टमेव किंतु तेन वशीकृतं चेत्याह ॥ स्वाभाविकेति ॥ मृत्युनासंमृत्युनाभिपन्नमित्यनयोरर्थमनूद्य होत्रेत्यादेरर्थमनुवदति ॥ तदनेनेति ॥ साधनद्वयं तद्रूपार्थः ॥ यजमानग्रहणं होतुरुपलक्षणं उक्तेर्थे समनंतरवाक्यमवतार्य व्याकरोति ॥ तदेतदाहेति ॥ मुक्तिशब्दस्तु साधनविषयः ॥ पदार्थमुक्त्वा

३.२. ४

अग्निस्तद्रूपेतिवाक्ये होतुश्चाग्निस्वरूपेण दर्शनमेव मुक्तिहेतुरितियावत्॥ उक्तमर्थं प्रपंचयति॥ यदेवेति॥ समुक्तिरित्यस्यार्थमुपसंहरति॥ तस्मादिति॥ वाक्यांतरमुत्थाप्य व्याचष्टे॥ सातिमुक्तिरिति॥ मुक्त्यतिमुक्त्योरसंकीर्णत्वं दर्शयति॥ साधनद्वयस्येति॥ प्राप्तिरतिमुक्तिरितिसंबंधः तामेव संगृह्णाति॥ याफलभूतेति॥ फलभूतायामग्न्यादिदेवताप्राप्तौ कथमतिमुक्तिशब्दोपपत्तिरित्याशंक्याह॥ तस्मादिति॥ ननु वागादीनामग्न्यादिभावोत्र श्रूयते यज

तस्मात्तद्धोताग्निरूपेण दृष्टो मुक्तिर्मुक्तिसाधनं यजमानस्य सातिमुक्तिर्यैव च मुक्तिः सातिमुक्तिरतिमुक्तिसाधनमित्यर्थः॥ साधनद्वयस्य परिच्छिन्नस्य याधिदैवतरूपेणापरिच्छिन्नेनाग्निरूपेण दृष्टिः सा मुक्तिर्यो सो मुक्तिरधिदैवतादृष्टिः सैवाध्यात्माधिभूतपरिच्छेदविषयासं गास्पदं मृत्युमतिक्रम्याधिदेवतात्वस्याग्निभावस्य प्राप्तिर्या फलभूता सातिमुक्तिरित्युच्यते तस्मा अतिमुक्तेर्मुक्तिरेव साधनमिति कृत्वा सा

समुक्तिः सातिमुक्तिः॥ ३॥

तिमुक्तिरित्याह॥ यजमानस्य ह्यतिमुक्तिर्वागादीनामग्न्यादिभावः द्वयुद्गीथप्रकरणे व्याख्यातं तत्र सामान्येन मुख्यप्राणदर्शनमात्रं मुक्तिसा धनमुक्तं न तद्विशेषो वागादीनामग्न्यादिदर्शनमिह विशेषो वर्ण्यते मृत्युप्राप्त्यतिमुक्तिस्तु सैव फलभूता योद्गीथब्राह्मणे न व्याख्याता मृत्युम तिक्रांतो दीप्यत इत्याद्या॥ ३॥ याज्ञवल्क्येति होवाच स्वाभाविकाद्ज्ञानासंगप्रयुक्तात्कर्मलक्षणान्मृत्योरतिमुक्तिर्व्याख्याता तस्य कर्मणः सासंगस्य मृत्योराश्रयभूतानां दर्शपूर्णमासादि मानस्य न किंचिदुच्यते तत्राह॥ यजमानस्येति॥ तर्हि तेनैव गतार्थत्वादनर्थकमिदं ब्राह्मणमित्या शंक्याह मित्यादिनोक्तं स्मारयति॥ तत्रेति॥ दर्शनवत्फलेपि विशेषः स्यादित्याशंक्याह॥ मृत्युप्राप्तीति॥ प्रश्नांतरमवतारयंतास्य माह॥ याज्ञवल्क्येति॥ आ

अ. ५ ब्रा. १



रामः ४

प्रतिक्षणमन्यथात्वंविपरिणामः॥ अग्न्यादिसाधनान्याश्रित्यकार्यंकर्ममृत्युशब्दितमुत्पद्यतेतेषांसाधनानांविपरिणामहेतुत्वात्कालोमृत्युस्ततो
तिमुक्तिर्वक्तव्येत्युत्तरग्रंथारंभइत्यर्थः॥ कर्मणोमुक्तिरुक्ताचेत्कालादपिसोक्तैवतस्यकर्मात्मभावेनमृत्युत्वादित्याशंक्याह॥ पृथगिति॥ कर्मनिर्व
र्तकतयाकालस्यमृत्युत्वंप्रसाधयति॥ क्रियेति॥ कालस्यपृथग्मृत्युत्वेसिद्धेफलितमाह॥ तस्मादिति॥ उत्तरग्रंथस्यप्रश्नयोर्विषयभेदंकालंभिनत्ति॥ सचे

कर्मसाधनानांयोविपरिणामहेतुःकालस्तस्मात्कालात्पृथगतिमुक्तिर्वक्तव्येतीदमारभ्यतेक्रियानुष्ठानव्यतिरेकेणापिप्रागूर्ध्वंचक्रिया
याःसाधनविपरिणामहेतुत्वेनव्यापारदर्शनात्कालस्यतस्मात्पृथक्कालादतिमुक्तिर्वक्तव्येत्यतआह यदिदंसर्वमहोरात्राभ्यामाप्तंसचका

याज्ञवल्क्येतिहोवाचयदिदꣳसर्वं महोरात्राभ्यामाप्तꣳसर्वमहोरात्राभ्यामभिपन्नंकेनयजमानोहोरात्रयोराप्तिमतिमुच्य
तइत्यध्वर्युणर्त्विजाचक्षुषादित्येनचक्षुर्वैयज्ञस्याध्वर्युस्तद्यदिदंचक्षुःसोसावादित्यःसोध्वर्युःसमुक्तिःसातिमुक्तिः॥४॥ लोद्विरूपो

होरात्रादिलक्षणस्तिथ्यादिलक्षणश्चतत्राहोरात्रलक्षणात्तावदतिमुक्तिमाह॥ अहोरात्राभ्यांहिसर्वंजायतेवर्धतेविनश्यतिचतथायज्ञसाध
नंचयज्ञस्ययजमानस्यचक्षुरध्वर्युश्चशिष्टान्यक्षराणिपूर्ववन्नेयानियजमानस्यचक्षुरध्वर्युश्चसाधनद्वयमध्यात्माधिभूतपरिच्छेदंहित्वाधिदै
वतात्मनादृष्टंयत्तन्मुक्तिःसोध्वर्युरादित्यभावेनदृष्टोमुक्तिःसैवमुक्तिरेवातिमुक्तिरितिपूर्वव ति॥ आदित्यश्चंद्रश्चेतिकर्तृभेदाद्द्वैविध्यमुक्त्वेयं॥
कालस्यद्वैरूप्येसत्यावांतरकंडिकाविषयमाह॥ तत्रेति॥ अहोरात्रयोर्मृत्युत्वेसिद्धेताभ्यामतिमुक्तिर्वक्तव्यातदेवकथमित्याशंक्याह॥ अहोरात्राभ्यामिति॥
यज्ञसाधनंचतयाताभ्यांजायतेवर्धतेनश्यतिचेतिसंबंधः॥ प्रतिवचनव्याख्यानेयज्ञशब्दार्थमाह॥ यजमानस्येति॥ समुक्तिरित्यस्यतात्पर्यार्थमाह॥ यजमा

यथोक्तनीत्याऽदित्यात्मत्वेपि कथमहोरात्रलक्षणान्मृत्योरतिमुक्तिरत आह॥आदित्येति॥नोदेतानास्तमेतेत्यादिश्रुतेरादित्येवस्तुतोनाहोरात्रेस्त
स्तथाचतदात्मनिविदुष्यपितेनसंभवतइत्यर्थः॥४॥कंडिकांतरस्यतात्पर्यमाह॥इदानीमिति॥नन्वहोरात्रादिलक्षणेकालेतिथ्यादिलक्षणस्यकाल
स्यांतर्भावात्ततोतिमुक्तावुक्तायांतिथ्यादिलक्षणादपिकालादतिमुक्तेरुक्तैवेतिकृतंपृथगारंभेणेतितत्राह॥अहोरात्रयोरिति॥अविशिष्टयोर्हिस्वरूपभूत
योरितियावत्॥कथंतर्हितिथ्यादिलक्षणात्कालादतिमुक्तिरत आह॥अतस्तदापत्त्येति॥चंद्रप्राप्त्यातिथ्याद्यात्ययोमाध्यंदिनश्रुत्योच्यते॥काण्वश्रुत्यानुवा

दादित्यात्मभावमापन्नस्यहिनाहोरात्रेसंभवतः॥४॥इदानींतिथ्यादिलक्षणादतिमुक्तिरुच्यतेयदिदंसर्वमहोरात्रयोरविशिष्टयोरादित्यःक
र्तानप्रतिपदादीनांतिथीनांतासांतुवृद्धिक्षयोपगमनेनप्रतिपत्प्रभृतीनांचंद्रमाःकर्ताअतस्तदापत्त्यापूर्वपक्षापरपक्षात्ययः॥आदि

याज्ञवल्क्येतिहोवाचयदिदꣳसर्वंपूर्वपक्षापरपक्षाभ्यामाप्तꣳसर्वंपूर्वपक्षापरपक्षाभ्यामभिपन्नंकेनयजमानःपूर्वपक्षा
परपक्षयोराप्तिमतिमुच्यतइत्युद्गात्रर्त्विजावायुनाप्राणेनप्राणोवैयज्ञस्योद्गातातद्योयंप्राणःसवायुः स्यापत्त्याहोरात्रात्ययवत्॥

तत्रयजमानस्यप्राणोवायुःसएवोद्गातेत्युद्गीथब्राह्मणेवगतंवाचाचह्येवसप्राणेनचोदगायदितिचनिर्धारितमथैतस्यप्राणस्यापः
शरीरंज्योतीरूपमसौचंद्रइतिचप्राण प्रभावापत्त्यात्तदत्ययउक्तस्तथाचश्रुत्योर्विरोधेकःसमाधिरित्याशंक्याह॥तत्रेति॥काण्वश्रुतावितिया
वत्उद्गातुरपिप्राणात्मकवायुरूपत्वंश्रुतिद्वयानुसारेणदर्शयति॥सएवेति॥नकेवलमुद्गातुःप्राणत्वंप्रतिज्ञामात्रेणप्रतिपन्नंकिंतुविचार्यनिर्धारितंचे
त्याह॥वाचेति॥प्राणचंद्रमसोरप्येकत्वंसप्तान्नाधिकारेनिर्धारितमित्याह॥अथेति॥उक्तयारीत्याप्राणादीनामेकत्वेश्रुत्योरविरोधंफलितमाह॥प्राणेति॥

मनोब्रह्मणोश्चंद्रमसा प्राणोद्गात्रोश्च वायुनोपास्यत्वेनोपसंग्रहे मृत्युतरणे विशेषो नास्तीति मृत्युसोर्विकल्पेनोपपत्तिरित्यर्थः उपसंहरति प्राणंउद्गातारं
चतद्रूपेणोपास्यतयासंगृह्णातिकाण्वश्रुतिरित्यर्थः॥इत्थंश्चकाण्वश्रुतिरुपपन्नेत्याह॥अपिचेतिवायुःसूत्रात्मातन्निमित्तौस्वावयवस्यचंद्रमसोवृद्धिह्रा
सौसूत्राधीनाहिचंद्रादेर्जगतश्चेष्टेत्यर्थः॥वृध्यादिहेतुत्वेफलितमाह॥तेनेति॥कर्तृश्चंद्रस्येत्यर्थः॥वायोश्चंद्रमसिकारयितृत्वेपिश्रकृतेकिमायातंतदा

वायुचंद्रमसामेकत्वाच्चंद्रमसावायुनाचोपसंहारेनकश्चिद्विशेषएवंमन्यमानाश्रुतिर्वायुनाधिदैवतरूपेणोपसंहरतिअपिचवायुर्निमि
त्तौहिवृद्धिह्रासौचंद्रमसस्तेनतिथ्यादिलक्षणस्यकालस्यकर्तुरपिकारयितावायुः॥अतोवायुरूपापन्नस्तिथ्यादिकालादतीतोभवती
त्युपपन्नतरंभवतितेनश्रुत्यंतरेचंद्ररूपेणादृष्टिर्मुक्तिरतिमुक्तिश्चइहतुकाण्वानांसाधनद्वयस्यतत्कारणरूपेणवाय्वात्मनादृष्टिर्मुक्ति

सउद्गातासमुक्तिःसातिमुक्तिः॥५॥याज्ञवल्क्येतिहोवाचयदिदमंतरिक्षमनारंबणमिवकेनाक्रमेणयजमानःस्वर्गलोकमाक्र
मतइतिब्रह्मणर्त्विजामनसाचंद्रेण॥

रतिमुक्तिश्चेतिनश्रुत्योर्विरोधः॥५॥मृत्योःकालादतिमुक्तिर्व्याख्यातायजमानस्यसोतिमुच्यमानः
केनावष्टंभेनपरिच्छेद्यविषयंमृत्युमतीत्यफलंप्राप्नोत्यतिमुच्यतइत्युच्यतेयदिदंप्रसिद्धमंतरिक्षमाकाशोऽनारंबणमनालंबनमिवशब्दादस्त्येव
तत्रालंबनंतत्तुनज्ञायतइत्यभिप्रायः॥

ह॥अतइति॥उदितानुदितहोमवद्विकल्पमुपेत्याविरोधमुपसंहरति॥तेनेति॥श्रुत्यंतरंमाध्यंदिनश्रुतिः॥
साधनद्वयस्येत्युभयत्रसंबध्यते॥तत्रादौमनसोब्रह्मणश्चेत्यर्थः॥उत्तरस्यप्राणस्योद्गातुश्चेत्यर्थः॥तच्छब्दश्चंद्रविषयः॥५॥यदिदमंतरिक्षमित्यादिप्रश्नां
तरंवृत्तानुवादपूर्वकमुपादत्ते॥मृत्योरिति॥व्याख्यानव्याख्येयभावेनक्रियापदेनेतव्येइत्येतस्यस्वरूपमुच्यतेसमनंतरवाक्येनेतियावत्॥तद्व्याचष्टे॥य

प्रश्नविषयं प्रपंचयति॥ अन्यथेति॥ आलंबनमंतरेणेति यावत्॥ प्रश्नार्थं संक्षिप्योपसंहरति॥ केनेति॥ अक्षरन्यासोऽक्षराणामर्थे प्रवृत्तिरिति यावत्॥ मनो वै यज्ञस्येत्यादेरर्थमाह॥ तत्रेति॥ व्यवहारभूमिः सप्तम्यर्थः॥ वाक्यार्थमाह॥ तेनेति॥ तृतीया तृतीयाभ्यां संबध्यते॥ दर्शनफलमाह॥ तेनेति॥ वागादीनामग्न्यादिभावेन दर्शनमुक्तं त्वगादीनां तु वाय्वादिभावेन दर्शनं वक्तव्यं तत्कथं वक्तव्यशेषे सत्युपसंहारोपपत्तिरित्याशंक्याह॥ सर्वाणीति॥

यत्तु तद्दृश्यमानमालंबनं तत्सर्वं नास्माकेनेति पृच्छ्यते अन्यथा फलप्राप्तेरसंभवाद्येनावष्टंभेनाक्रमेण यजमानः कर्मफलं प्रतिपद्यमानोऽतिमुच्यते किं तदिति प्रश्नविषयः केनाक्रमेण यजमानः स्वर्गं लोकमाक्रमत इति स्वर्गं लोकं फलं प्राप्नोति अतिमुच्यत इत्यर्थः॥ ब्रह्मणर्त्विजा मनसा चंद्रेणेत्यक्षरन्यासः पूर्ववत्॥ तत्राध्यात्मं यज्ञस्य यजमानस्य यदिदं प्रसिद्धं मनः सोऽसौ चंद्रोऽधिदैवं मनोऽध्यात्मं चंद्रमा अधिदैवतमि

मनो वै यज्ञस्य ब्रह्मा तद्यदिदं मनः सोऽसौ चंद्रः स ब्रह्मा स मुक्तिः सातिमुक्तिरित्यतिमोक्षा अथ संपदः॥ ६॥

ति हि प्रसिद्धं स एव चंद्रमा ब्रह्मर्त्विक्तेनाधिभूतं ब्रह्मणः परिच्छिन्नं रूपमध्यात्मं च मनस एतद्द्वयमपरिच्छिन्नेन चंद्रमसो रूपेण पश्यति तेन चंद्रमसा मनसावलंबनेन कर्मफलं स्वर्गं लोकं प्राप्नोत्यतिमुच्यत इत्यभिप्राय इतीत्युपसंहारार्थं वचनमित्येवंप्रकारा मृत्योरतिमोक्षाः सर्वाणि हि दर्शनप्रकाराणि यज्ञांगविषयाण्यस्मिन्नवसर उक्तानीति कृत्वोपसंहार इत्यतिमोक्षा एवंप्रकारा अतिमोक्षा इत्यर्थः अथ संपदः अथाधुना संपद उच्यंते संपन्नाम केनचि

वागादावुक्तन्यायस्य त्वगादावतिदेशोऽत्र विवक्षित इत्याह॥ एवंप्रकारा इति॥ अथशब्दो दर्शनप्रभेदकथनानंतर्यार्थः॥ केयं संपन्नामेति पृच्छति॥ संपन्नामेति॥ उत्तरमाह॥ केनचिदिति॥ महतां फलवतामश्वमेधादिकर्मणां कर्मत्वादिना सामान्येनाल्पीयः सुकर्म सुविवक्षित

यथाशक्त्याग्निहोत्रादिनिर्वर्त्तनेनाश्वमेधादिमयानिर्वर्त्यतद्वृत्तिध्यानं संपदित्यर्थः॥ यद्वा॥ फलस्यैवदेवलोकादेरुज्वलत्वादिसामान्येनाज्याद्याहुति
प्रसंपादनं संपदित्याह॥ फलस्येति॥ संपदनुष्ठानावसरमादर्शयति॥ सर्वोत्साहेनेति॥ असंभवोऽनुष्ठानस्य यदेति शेषः॥ कर्मणामेवसंपदनुष्ठानेऽधिका
र इति दर्शयितुमाहिताग्निः सन्नित्युक्तं॥ अग्निहोत्रादीनामिति निर्धारणे षष्ठी॥ यथासंभवं वर्णाश्रमानुरूपमिति यावत्॥ आदायेत्यस्य व्याख्यानमालंब
नीकृत्येति॥ न केवलं कर्मित्वमेव संपदनुष्ठानुरपेक्ष्यते किंतु तत्फलविद्यावत्त्वमपीत्याह॥ कर्मेति॥ तदेव कर्मफलमेवेत्यर्थः॥ कर्माण्येव फलवंति न संपदस्त
त्कथं तासां कार्यतेत्याशंक्याह॥ अन्यथेति॥ विहिताध्ययनस्यार्थज्ञानानुष्ठानादिपरंपरया फलवत्त्वमिष्टं न चाश्वमेधादिषु सर्वेषामनुष्ठानसंभवः कर्मस्वधि

त्सामान्ये ऽनाग्निहोत्रादीनां कर्मणां फलवत्तां तत्फलाय संपादनं संपत् फलस्यैव वा॥ सर्वोत्साहेन फलसाधनानुष्ठाने प्रयततां केन चिद्वैगु
ण्येनासंभवः तदिदानीं आहिताग्निः सन्यत्किंचित्कर्माग्निहोत्रादीनां यथासंभवमादायालंबनीकृत्य कर्मफलविद्वत्तायां सत्यां यत्कर्मफलका
मो भवति तदेव संपादयति अन्यथा राजसूयाश्वमेधपुरुषमेधसर्वमेधलक्षणानामनधिकृतानां त्रैवर्णिकानां केषामप्यसंभवस्तेषां तत्पाठः
स्वाध्यायार्थ एव केवलः स्यात्॥ यदि तत्फलप्राप्त्युपायः कश्चन न स्यात्तस्मात्तेषां संपदैव तत्फलप्राप्तिः तस्मात्संपदामपि फलवत्त्वमतः संपद
आरभ्यंते॥ ६॥

कृतानामपि त्रैवर्णिकानां केषांचिदनुष्ठानासंभवादतस्तेषां तदध्ययनार्थवत्त्वानुपपत्त्या संपदामपि फलवत्त्वमेष्टव्यमित्यर्थः॥
महतोऽश्वमेधादिफलस्य कथमल्पीयसा संपदा प्राप्तिरित्याशंक्य शास्त्रप्रामाण्यादित्यभिप्रेत्याह॥ यदीति॥ तदा तत्पाठः स्वाध्यायार्थ एवेति पूर्वेण
संबंधः॥ अध्ययनस्य फलवत्त्वे वक्तव्ये फलितमाह॥ तस्मादिति॥ तेषां राजसूयादीनामिति यावत्॥ ब्राह्मणादीनां राजसूयाद्यध्ययनसामर्थ्यात्तेषां
संपदैव तत्फलप्राप्तावपि किं सिध्यति तदाह॥ तस्मात्संपदामिति॥ कर्मणामिवेति दृष्टांतार्थोऽपि शब्दः॥ तासां फलवत्त्वे फलितमाह॥ अत इति॥ ६॥

बृ.र. संपदामारंभमुपपाद्यप्रश्नवाक्यमुत्थापयति॥ याज्ञवल्क्येतीति॥ प्रतीकमादायव्याचष्टे॥ कतिभिरित्यादिना॥ कतिभिः कतमाइतिप्रश्नयोर्विषयभेदं अ.
७ दर्शयति॥ संख्येयेति॥ स्तोत्रियानामान्यापिकाचिदृग्जातिरस्तीत्याशंक्याह॥ सर्वास्त्विति॥ अन्यावेतिशस्त्रजातिग्रहः॥ विधेयभेदात्सर्वशब्दात्पुनरु ५.

याज्ञवल्क्येतिहोवाचाभिमुखीकरणायकतिभिरयमद्यास्मिन्यज्ञे कतिभि र्‌ग्भिः कतिसंख्याभिर्‌ऋग्जातिभिरयंहोतार्त्विगस्मिन्यज्ञेक रिष्यतिशस्त्रंशंसत्याहेतरस्तिसृभिः ऋग्जातिभिरित्युक्तवंतंप्रत्याहेतरः कतमास्तास्तिस्रइतिसंख्येयविषयोयंप्रश्नः पूर्वस्तुसंख्याविषयः पुरोनुवाक्याचप्राक्प्रयोगकालाद्याः प्रयुज्यंतेऋचः सर्ग्जातिः पुरोनुवाक्येत्युच्यतेयागार्थंयाः प्रयुज्यंतेऋचः सर्ग्जातिर्याज्या॥ शस्त्रार्थंयाः प्रयुज्यंतेऋचः सर्ग्जातिः शस्यासर्वास्तुयाः काश्चनर्चः तास्तोत्रियावाअन्यावासर्वाएतास्वेवतिसृषुऋग्जातिष्वंतर्भवंतिकिंताभिर्जयतीति

याज्ञवल्क्येतिहोवाचकतिभिरयमद्यर्ग्भिर्होतास्मिन्यज्ञेकरिष्यतीतितिसृभिरितिकतमास्तास्तिस्रइतिपुरोनुवाक्याचया ज्याचशस्यैवतृतीयाकिंताभिर्जयतीतियत्किंचेदंप्राणभृदिति॥ ७॥ यत्किंचेदंप्राणभृदितिअतश्चसंख्यासामान्याद्यत्किंचित्प्राण भृज्जातंतत्सर्वंजयतितत्सर्वंफलजातंसंपादयतिसंख्यादिसामान्येन॥ ७॥ याज्ञवल्केतिहोवाचेतिपूर्ववत् कत्ययमद्याध्वर्युरस्मिन्य ज्ञआहुतीर्होष्यतीतिकत्याहुतिप्रकारास्तिस्रइतिकतमास्तास्तिस्रइतिपूर्ववदितरआहयाहुताउज्वलंतिसमिदाज्याहुतयः याहुता अतिनेदंतेअतीवशब्दंकुर्वंतिमांसाद्याहुतयः याहुताअधिशेरतेअधिअधोगत्वाभूमेः त्तिः॥ अतश्चसंपत्तिकारणादित्यर्थः॥ संख्यासामा न्यान्निलाविशेषादनियावत्॥ प्राणभृज्जातंलोकत्रयंविवक्षितं॥ ७॥ प्रथमः संख्याविषयोद्वितीयस्तुसंख्येयविषयः प्रश्नइतिविभागंलक्षयति॥ पू

बृहदा॰ राम: ७

तेनसामान्येनोज्ज्वलत्वेनेतियावत्॥उक्तमर्थंसंक्षिप्याह॥देवलोकाख्यमितिकथंमांसाद्याहुतीनांपितृलोकेनसहयथोक्तंसामान्यमतआह॥पितृ

अधिशेरतेपयःसोमाहुतयःकिंताभिर्जयतीतिताभिरेवंनिर्वर्तिताभिराहुतिभिःकिंजयतीतियाआहुतयोहुताउज्ज्वलंतिउज्ज्वलनयुक्ताआहुतयोनिर्वर्तिताःफलंचदेवलोकाख्यंउज्ज्वलमेवतेनसामान्येनयाउज्ज्वलंत्यआहुतयोनिर्वर्त्यमानास्ताएनाःसाक्षाद्देवलोकस्यकर्मफलस्यरूपंदेवलोकाख्यंफलमेवमयानिर्वर्त्यतइत्येवंसंपादयतियाहुताअतिनेदंतेआहुतयःपितृलोकमेव

याज्ञवल्क्येतिहोवाचकत्ययमद्याध्वर्युरस्मिन्यज्ञआहुतीर्होष्यतीतितिस्रइतिकतमास्तास्तिस्रइतियाहुताउज्ज्वलंतियाहुताअतिनेदंतेयाहुताअधिशेरतेकिंताभिर्जयतीतियाहुताउज्ज्वलंतिदेवलोकमेवताभिर्जयतिदीप्यतइवहिदेवलोकोयाहुताअतिनेदंतेपितृलोकमेवताभिर्जयत्यतीवहिपितृलोकोयाहुताअधिशेरतेमनुष्यलोकमेवताभिर्जयत्यधइवहिमनुष्यलोकः॥८॥

ताभिर्जयतिकुत्सितशब्दकर्तृत्वसामान्येनपितृलोकसंबद्धायांहिसंयमिन्यांपुर्यांवैवस्वतेनयात्यमानानांहाहताःस्ममुंचमुंचेतिशब्दोभवतितथावदानाहुतयःतेनपितृलोकसामान्यात्पितृलोकएवमयानिर्वर्त्यतइतिसंपादयतियाहुताअधिशेरतेमनुष्यलोकमेवताभिर्जयतिभूम्युपरिसंबंधसामान्यादधइवहिअधएवमनुष्यलोकःउपरितनान्साध्याँल्लोकानपेक्ष्याथवाऽधोगमनमपेक्ष्यातोमनुष्यलोकएवमयानिर्वर्त्यतइतिसंपादयतिपयःसोमाहुतिनिर्वर्तनकाले॥८॥ लोकइति॥अधोगमनमपेक्ष्येति

अस्तिहिसोमाद्याहुतीनामधस्ताद्गमनमस्तिचमनुष्यलोकस्यपापप्रचुरस्यतादृग्गमनंतदपेक्ष्येत्यर्थः॥अतःसामान्यादितियावत्॥ ८ ॥ ॥

दक्षिणत आहवनीयस्येति शेषः प्रासंगिकं बहुवचनमित्युक्तं प्रकटयति॥ एकयाहीति॥ जल्पकथाप्रस्तुतेतिहृदि निधाय बहूक्ते गेस्यतरमाह॥ अथवेति॥ मनसो देवतात्वं साधयति॥ मनसेति॥ वर्तनी वर्त्मनी तयोर्वाङ्मनसयोर्वर्त्मनोरन्यतरां वाचं मनसा मौनेन ब्रह्मा संस्करोति वाग्विसर्गे प्रायश्चि

याज्ञवल्क्येति होवाचेति पूर्ववदयमृत्विग्ब्रह्मा दक्षिणतो ब्रह्मासने स्थितो यज्ञं गोपायति॥ कतिभिर्देवताभिर्गोपायतीति प्रासंगिकमेतद्बहुवचनं एकया हि देवतया गोपायत्यसौ एवं ज्ञाते बहुवचनेन प्रश्नो नोपपद्यते स्वयं जानतः तस्मात्पूर्वयोः कण्डिकयोः प्रश्नप्रतिवचनेषु कृतिभिः तिसृभिस्तिसृभिरिति प्रसंगं दृष्ट्वेहापि बहुवचनेनैव प्रश्नोपक्रमः क्रियते अथवात्र प्रतिवादिव्यामोहार्थं बहुवचनमितर आह एकयेत्येकासा देवता ययादक्षिणतः स्थितो ब्रह्मासने यज्ञं गोपायति कतमा सेकेति मन एवेति मनः सा देवता मनसा हि ब्रह्मा व्याप्रियते ध्यानेनैव तस्य यज्ञस्य म

याज्ञवल्क्येति होवाच कतिभिरयमद्य ब्रह्मा यज्ञं दक्षिणतो देवताभिर्गोपायतीत्येकयेति कतमा सेकेति मन एवेत्यनंतं वै मनोऽनंता विश्वेदेवा अनंतमेव स तेन लोकं जयति॥ ९॥

नश्च वाक्च वर्तनी तयोरन्यतरां मनसा संस्करोति ब्रह्मेति श्रुत्यंतरात्तेन मन एव देवता तया मनसा हि गोपायति ब्रह्मा यज्ञं तच्च मनो वृत्तिभेदेनानंतं वै शब्दः प्रसिद्धावद्योतकः प्रसिद्धं मनसः आनंत्यं तदानंत्यात्तदानंत्याभिमानिनो देवाः अनंता वै विश्वेदेवाः सर्वे देवा यत्रैकं भवंतीति श्रुत्यंतरात्तेनानंत्यसामान्यादनंतमेव स तेन लोकं जयति॥ ९॥ तद्विधानादिति श्रुत्यंतरस्यार्थः तथापि कथं संपदः सिद्धिस्तत्राह॥ तच्चेति॥ देवाः सर्वे यस्मिन्मनस्येकं भवंति॥ अभिन्नत्वं प्रतिपद्यंते तस्मिन्विश्वेदेवदृष्ट्या भवत्यनंतलोकप्राप्तिरिति श्रुत्यंतरस्यार्थः॥ अनंतमेवेत्यादि व्याचष्टे॥ तेनेति॥ उक्तेन प्रकारेणेति यावत्॥ तेन मनसि विश्वेदेवदृष्ट्यध्यासेनेत्यर्थः॥ सद्यस्तुपासकोक्तिः ॥ ९ ॥

पूर्ववदित्यभिमुखीकरणायेत्यर्थः॥ प्रतिवचनमुपादत्ते॥ स्तोत्रियाभेति॥ प्रगीतमंत्रजातं स्तोत्रं अप्रगीतं शस्त्रं॥ कतमास्तास्तिस्र इत्यादेस्तात्पर्यमाह॥ ता श्चेति॥ प्रश्नांतरं वृत्तमनूद्योपादत्ते॥ तत्रेति॥ यज्ञाधिकारः सप्तम्यर्थः॥ पुरोनुवाक्यादिना लोकत्रयजयलक्षणं फलं केन सामान्येनेत्यपेक्षायां संख्यावि शेषेणेत्युक्तं स्मारयति॥ तदिति॥ अधियज्ञेत्रयमुक्तं स्मारयित्वाध्यात्मविशेषं दर्शयितुमुत्तरो ग्रंथ इत्याह॥ उच्यत इति॥ प्राणादौ पुरोनुवाक्यादौ चदृष्टि

याज्ञवल्क्येति होवाच पूर्ववत् कतिस्तोत्रियाः स्तोष्यतीति अयमुद्गाता स्तोत्रियानामऋक्सामसमुदायः कति परिणामवतां स्तोत्रियावा शस्या वायाः काश्च नऋचस्ताः सर्वास्तिस्र एवेत्याह ताश्च व्याख्याताः पुरोनुवाक्या च याज्या च शस्यैव तृतीयेति तत्र पूर्वमुक्तं यत्किंचेदं प्राणभृत्सर्वं जय तीति॥ तत्केन सामान्येनेत्युच्यते कतमास्तास्तिस्र ऋचो या अध्यात्मं भवंतीति प्राण एव पुरोनुवाक्या पृशब्दसामान्यादपानो याज्या नंतर्याद्पा

याज्ञवल्क्येति होवाच कत्ययमद्योद्गातास्मिन्यज्ञे स्तोत्रियाः स्तोष्यतीति तिस्र इति कतमास्तास्तिस्र इति पुरोनुवाक्या च या ज्या च शस्यैव तृतीया कतमास्ता या अध्यात्ममिति प्राण एव पुरोनुवाक्यापानो याज्या॥ नेनहि प्रत्तं हविर्देवता ग्रसंति याराशस्त्रप्रदा नं॥ व्यानः शस्या अप्राणन्ननपानन्नृचमभिव्याहरतीति श्रुत्यंतरात्किं ताभिर्जयतीति व्याख्यातं तत्र विशेषसंबंधसामान्यमनुक्तमिहोच्यते सर्वमन्यद्व्याख्यातं लोकसंबंधसामान्येन पृथिवीलोकमेव पुरोनुवाक्यया जयत्यंतरिक्षलोकं याज्यया मध्यत्वसामान्यात् व्यादिलोकदृष्टिरितिप्र

श्नपूर्वकमाह॥ कतमा इति॥ अपाने याज्यादृष्टौ हेत्वंतरमाह॥ अपानेनहीति॥ हस्तादादानव्यापारेणेति यावत्॥ प्राणापानव्यापारव्यतिरेकेण शस्त्रप्रयो गस्य स्त्वंतरे सिद्धत्वाद्व्याने शस्यादृष्टिरित्याह॥ अप्राणन्निति॥ तत्र पुरोनुवाक्यादिष्विवेति यावत्॥ इहेत्यनंतरवाक्योक्तिः॥ सर्वमन्यदिति संख्यासामान्यो

पृथिवीलक्षणेन लोकेन सह प्रथमत्वेन संबंधसामान्यं पुरोनुवाक्यायामस्ति तेन तया पृथिवीलोकमेव प्राप्नोतीत्यर्थः॥ अश्वलस्य तूष्णींभावं भजतो भिप्र
यमाह॥ नायमिति॥१०॥ इत्यश्वलस्य प्रथमब्राह्मणं॥१ ॥ब्राह्मणांतरमवतारयन्नाख्यायिकाकिमर्थेतिशंकमानं प्रत्याह॥ आख्यायिकेति॥ याज्ञव
ल्क्यो हि विद्याप्रकर्षवशादत्र पूजाभागी लक्ष्यते नार्तभागस्तथा विद्यामांद्याद्दत्तो विद्यास्तुत्यर्थेयमाख्यायिकेत्यर्थः॥ इदानीं ब्राह्मणार्थं वक्तुं वृत्तं की
र्तयति॥ मृत्योरिति॥ मृत्युस्वरूपं पृच्छति॥ कः पुनरसाविति॥ तत्स्वरूपनिरूपणार्थं ब्राह्मणमुत्थापयति॥ स चेति॥ मृत्युरिति संबंधः॥ स्वाभाविकं ने

द्युलोकं शस्ययोर्धत्वसामान्यात्ततो ह तस्मादात्मनः प्रश्ननिर्णयाद्सौ होताश्वल उपरराम नायमस्माद्वोचरइति॥१०॥ इति श्रीमद्बृहदा
रण्यके पंचमप्रपाठके प्रथमब्राह्मणभाष्यं समाप्तं॥१॥ आख्यायिकासंबंधः प्रसिद्ध एव मृत्योरतिमुक्तिर्व्याख्याता काललक्षणात्कर्मलक्ष

ग्यानः शस्याकिंताभिर्जयतीति पृथिवीलोकमेव पुरोनुवाक्यया जयत्यंतरिक्षलोकं याज्यया द्युलोकं शस्यया ततो ह होताश्वल
उपरराम॥१०॥ प्रथमब्राह्मणं॥१॥

णाच्च॥ कः पुनरसौ मृत्युर्यस्मादतिमुक्तिर्व्याख्याता स च स्वाभाविकाज्ञानासंगास्पदो ध्यात्माधिभूतवि
षयपरिछिन्नो ग्रहातिग्रहलक्षणो मृत्युस्तस्मात्परिछिन्नरूपान्मृत्योरतिमुक्तस्वरूपाण्यग्न्यादित्यादीन्युद्गीथप्रकरणे व्याख्यातान्यश्वलप्रश्ने
च तद्गतो विशेषः कश्चित्तच्चैतत्कर्मणां ज्ञानसहितानां फलं

सर्गिकमनादिसिद्धमज्ञानं तस्मादासंगस्तस्यास्पदमिवास्पदं यस्य स तथेति विग्रहः॥ तस्य
विषयमुक्त्वा व्याप्तिमाह॥ अध्यात्मेति॥ तस्य स्वरूपमाह॥ ग्रहेति॥ यथोक्तमृत्युव्याप्तिमग्न्यादीनां कथयति॥ तस्मादिति॥ तान्यपि ग्रहातिग्रहगृहीतान्येवार्थे
द्विपसंसर्गित्वादित्यर्थः॥ तद्गतो विशेषोग्न्यादिगतो दृष्टिभेदइति यावत्॥ कश्चिद्व्याख्यातइति संबंधः॥ सूत्रस्यापि मृत्युग्रस्तत्वमभिप्रेत्याह॥ तच्चेति॥ अग्न्यादित्या

किमितिमृत्योर्बंधनरूपस्यस्वरूपमुच्यतेतत्राह॥एतस्मादिति॥ननुमोक्षेकर्त्तव्येबंधरूपोपवर्णनमनुपयुक्तमित्याशंक्याह॥बद्धस्यहीति॥अग्न्या
दीनांयथोक्तमृत्युव्याप्तिंउक्तांव्यक्तीकरोति॥यदपीति॥अविनिर्मुक्तएवातिमुक्तोपीतिशेषः॥तथापिकथंसूत्रस्ययथोक्तमृत्युव्याप्तिस्तत्राह॥तथा
चेति॥तथापिकथमग्न्यादीनांमृत्युव्याप्तिर्नहितत्रप्रमाणमस्तितत्राह॥एकइति॥बहवाइतिछांदसंतथापिविदुषोमृत्योरतिमुक्तस्यनतदा
प्तिरित्याशंक्याह॥तदात्मेति॥सौत्रेपदेमृत्युव्याप्तिंप्रकारांतरेणप्रकटयति॥नचेति॥मनसिकार्यकरणरूपेणदिवश्चादित्यस्यचैक्यमस्तुतथा

एतस्मात्साध्यसाधनरूपात्संसारान्मोक्षःकर्त्तव्यइत्यतोबंधनरूपस्यमृत्योःस्वरूपमुच्यतेबद्धस्यहिमोक्षःकर्त्तव्यः॥यदप्यतिमुक्तस्यस्व
रूपमुक्तंतत्रापिग्रहातिग्रहाभ्यामविनिर्मुक्तएवमृत्युरूपाभ्यां तथाचोक्तमशनायामृत्युरेषएवमृत्युरित्यादित्यस्थंपुरुषमंगीकृत्याह
एकोमृत्युर्बहवाइतिच तदात्मभावापन्नोहिमृत्योराप्तिमतिमुच्यतेइत्युच्यतेनचतत्रग्रहातिग्रहौमृत्युरूपौनस्तः अथैतस्यमनसोद्यौः
शरीरंज्योतीरूपमसावादित्यः मनश्चग्रहःसकामेनातिग्राहेणगृहीतइतिवक्ष्यतिप्राणोवैग्रहःसोपानेनातिग्राहेणेतिवाग्वैग्रहःसना
म्नातिग्राहेणेतिचतथान्नविभागेव्याख्यातमस्माभिःसुविचारितंचैतद्यदेवप्रवृत्तिकारणंतदेवनिवृत्तिकारणंनभवतीति केचित्तुस
र्वमेवनिवृत्तिकारणंमन्यंते॥ पिकथंग्रहातिग्रहगृहीतत्वंसूत्रस्येत्याशंक्याह॥मनश्चेति॥वागादेर्वक्तृत्वादेश्चग्रहत्वेतिग्रहत्वेचहिरण्यगर्भेकि
मायातमित्याशंक्याह॥तथेति॥कर्मफलस्यसंसारत्वात्तत्फलंसौत्रंपदंमृत्युग्रस्तमेवेत्याह॥सुविचारितंचेति॥यदेवकर्मबंधप्रवृत्तिप्रयोजकंत
देवबंधनिवृत्तेर्नकारणमतःकर्मफलंहैरण्यगर्भपदंबंधनमेवेत्यर्थः॥स्वमतमुक्त्वामतांतरमाह॥केचित्विति॥सर्वमेवकर्मेतिशेषः॥स्वर्गकामवाक्ये
देहात्मत्वनिवृत्तिर्गोदोहनवाक्येस्वतंत्राधिकारनिवृत्तिर्नित्यनैमित्तिकविधिष्वर्थांतरोपदेशेनस्वाभाविकप्रवृत्तिनिरोधोनिषेधेषुसाक्षादेवनैसर्गिकप्र

ननु शास्त्रीयात्कर्मणो हेतोरुत्तरमुत्तरं कार्यकरणसंघातमतिशयवंतमाप्रजास्प्रतिपद्यमानः संघातात्पूर्वस्मान्मुच्यते तत्कुतो निवृत्तिपरत्वं कर्मकांड
स्येत्याशंक्याह॥ अतः कारणादिति॥ यद्वीदमुत्तरमुत्तरं सातिशयं फलं प्राजापत्यं पदं तदपि प्रासादारोहणक्रमेणावृत्तिद्वारा मोक्षमवतारयितुं
मेव न तु तन्नैव प्राजापत्ये पदे श्रुतेस्तात्पर्यं तस्यापि निरतिशयफलत्वाभावादित्यर्थः॥ फलितमाह॥ इत्यतइति॥ यस्मात्पूर्वं पूर्वं परित्यज्योत्तरमुत्तरं
प्रतिपद्यमानस्तत्तन्निवृत्तिद्वारा मुक्त्यर्थमेव तत्तत्प्रतिपद्यते न तु तत्तत्पदप्राप्त्यर्थमेव वाक्यं पर्यवसितं तत्तस्यांतवत्त्वेनाफलत्वात्तस्मान्द्वैतक्षयपर्यंतं
सर्वोपि फलविशेषो मृत्युग्रस्तत्वात्प्रासादारोहणन्यायेन मोक्षार्थो वतिष्ठते हिरण्यगर्भपदप्राप्त्या द्वैतक्षये तु वस्तुतो मृत्योराप्तिमतीत्य परमात्मरूपेण स्थि

अतः कारणात्पूर्वस्मात्पूर्वस्मान्मृत्योर्मुच्यते उत्तरमुत्तरं प्रतिपद्यमानो व्यावृत्त्यर्थमेव प्रतिपद्यते न तु तादर्थ्यमित्यत आ द्वैतक्षयात्सर्वं मृत्युर्द्वैतक्ष
ये तु परमार्थतो मृत्योराप्तिमतिमुच्यते अतश्चापेक्षिकी गौणी मुक्तिरंतराले सर्वमेतदेवमबार्हदारण्यकं॥ ननु सर्वैकत्वं मोक्षस्तस्मात्तत्सर्वमभ
वदिति श्रुतेर्बाढं भवत्येतदपि॥ न तु ग्रामकामो यजेत पशुकामो यजेतेत्यादिश्रुतीनां तादर्थ्यं यदि ह्याद्वैतार्थत्वमेवासां ग्रामपशुस्वर्गाद्यर्थत्वं नास्तीति
ग्रामपशुस्वर्गादयो न गृह्येरन्गृह्यंते तु कर्मफलवैचित्र्यविशेषाः॥

तो मुक्तो भवति तथा च मनुष्यभावादूर्ध्वमर्वाक्परमात्मभावान्मध्ये यावत्तत्पद
प्राप्तिः सा खल्वापेक्षिकी सती गौणी मुक्तिर्मुख्या तु पूर्वोक्तैवेत्यर्थः॥ सर्वमेतदुत्प्रेक्षामात्रेण रचितं न तु बृहदारण्यकस्य श्रुत्यंतरस्य चार्थ इति दूषयति॥ स
र्वमेतदिति॥ सर्वैकत्वलक्षणो मोक्षो बृहदारण्यकार्थ एवास्माभिरुच्यते तत्कथमस्मदुक्तमबार्हदारण्यकमिति शंकते॥ नन्विति॥ अंगीकरोति॥ बाढमि
ति॥ अंगीकृतमंशं विशदयति भवतीति॥ एतत्सर्वैकत्वमारण्यकार्थो भवत्यपीति योजना॥ कथं तर्हि सर्वमेतदबार्हदारण्यकमित्युक्तं तत्राह॥ न त्विति॥ तदुक्त
रीत्या कर्मश्रुतीनां यथोक्तमोक्षार्थत्वं न घटते तेन सर्वमेतदौत्प्रेक्षिकं न श्रौतमित्युक्तमित्यर्थः॥ कर्मश्रुतीनां मोक्षार्थत्वाभावं समर्थयति॥ यदि हीति॥ तस्मात्ता

संसारस्तावद्धर्माधर्महेतुकस्तौ च विधिनिषेधाधीनौ तयोश्चैवद्दुक्करीत्या मोक्षार्थत्वं तदा हेत्वभावात्संसार एव न स्यादित्याह ॥ यदि चेति ॥ विधिनिषेधयो
र्निवृत्तिद्वारा मुक्त्यर्थत्वेपि विध्यादिज्ञानादनुनिष्पादितो यः कर्मपदार्थः तस्यायं स्वभावो यदुत कर्तारमनर्थेन संयुनक्तीति चोदयति ॥ अथेति ॥ मोक्षार्थम
पि कर्मकांडं संसारार्थं भवतीति सदृष्टांतमाह ॥ यथेति ॥ प्रमाणाभावेन परिहरति ॥ नेति ॥ तदेव व्यनक्ति ॥ अद्वैतार्थत्वइति ॥ अन्यस्य बंधस्येति यावत् ॥
अनुपपत्तिं स्फोरयति ॥ न प्रत्यक्षमिति ॥ कर्मश्रुतिवाक्यसावांतरंतात्पर्ये यथाश्रुतेऽर्थे गृह्यते निवृत्तिद्वारा मुक्तौ तु महातात्पर्यमित्यंगीकृत्य शं
कते ॥ उभयमिति ॥ कृत्रिमाः क्षुद्राः सरितः कुल्यास्तासां प्रणयनं शाल्यर्थं पानीयार्थमाचमनीयार्थं च प्रदीपश्च प्रासादशोभार्थं कृतो गमनादिहेतुर

यदि च वैदिकानां कर्मणां तादर्थ्यमेव संसार एव नाभविष्यत् अथ तादर्थ्येप्यनुनिष्पादितपदार्थस्वभावः संसार इति चेद्यथा च रूपदर्शनार्थ
आलोके सर्वोपि तत्रस्थः प्रकाश्यत एव न प्रमाणानुपपत्तेः ॥ अद्वैतार्थत्वे वैदिकानां कर्मणां विद्यासहितानामन्यस्यानुनिष्पादितत्वे प्रमा
णानुपपत्तिः ॥ न प्रत्यक्षं नानुमानमत एव च नागमः उभयमेकेन वाक्येन प्रदर्श्यत इति चेत् ॥ कुल्याप्रणयनालोकादिवत् तन्नैवं वाक्यध
र्मानुपपत्तेः न चैकवाक्यगतस्यार्थस्य प्रवृत्तिनिवृत्तिसाधनत्वमवगंतुं शक्यते कुल्याप्रणयनालोकादावर्थस्य प्रत्यक्षत्वाददोषः यदप्युच्यते म
न्त्रा अस्मिन्नर्थे दृष्टा इति

पि भवति ॥ वृक्षमूले च सेचनमनेकार्थं ॥ तथा कर्मकांडमनेकार्थमित्युपपादयति ॥ कुल्येति ॥ एकस्य वाक्यस्य यथाश्रुतेनार्थे
नार्थद्वये संभवति नान्यत्र तात्पर्यं कल्प्यं कल्पकाभावात् ॥ न च त्वदुक्तया रीत्यानेकार्थत्वलक्षणो धर्मो वाक्यस्यैकस्योपपद्यते ॥ अथैकत्वादेकं वाक्यमिति न्या
यादिति परिहरति ॥ तन्नैवमिति ॥ वाक्यस्यानेकार्थत्वाभावेपि तदर्थस्य कर्मणो बंधमोक्षाख्यानेकार्थत्वं स्यादित्याशंक्याह ॥ न चेति ॥ परोक्तं दृष्टांतं विघटय
ति ॥ कुल्येति ॥ विद्यां चाविद्यां चेत्यादयो मन्त्राः समुच्चयपरा दृष्टाः समुच्चये च यस्मात्कर्मकांडस्य निवृत्तिद्वारा मोक्षार्थत्वमित्यस्मिन्नर्थे सिध्यतीति शंकते ॥ यद

गी०टी०

७८

मृत्युमेः५

कर्मकांडस्योक्तरीत्यामोक्षार्थत्वेनास्तिप्रमाणमितिपरिहरति॥अयमेवेति॥मंत्राणांसमुच्चयपरत्वात्तस्यचयथोक्तार्थाक्षेपकत्वात्कुतोस्यार्थस्यप्रमाणा
गम्यत्वस्याशंक्याह॥मंत्राःपुनरिति॥तेषांनसमुच्चयपरत्वस्याग्रेव्यक्तीभविष्यतीत्यर्थः॥परमतासंभवेस्वमतमुपसंहरति॥तस्मादिति॥बंधनिरू
पणमनुपयोगीत्याशंक्याह॥तस्मान्मोक्षइति॥यत्तुकर्मकांडंबंधायमुक्तयेवानभवतिकिंत्वंतरालवस्थानकारणमितितत्दूषयति॥नचेति॥य
थानजाग्रन्निनस्वपितीतिविषयग्रहणच्छिद्रंतरालेवस्थानंदुर्घटंयथाचार्धकुक्कुट्याःपाकार्थमर्धंचप्रसवायेतिकौशलंनोपलभ्यतेतथाकर्मकांडंनबं

अयमेवतुतावदर्थःप्रमाणागम्योमंत्राःपुनःकिमस्मिन्नर्थेआहोस्विदन्यस्मिन्नर्थइतिनगम्यतेतस्माद्ग्रहातिग्रहलक्षणोमृत्युर्बंधस्तस्मान्मोक्षो
वक्तव्यइत्यतइदमारभ्यतेनचजानीमोविषयसंधाविवांतरालेवस्थानमर्धजरतीयंकौशलं॥यत्तुमृत्योरतिमुच्यतइत्युक्ताग्रहातिग्रहाव

अथहैनंजारत्कारवआर्तभागःपप्रच्छयाज्ञवल्क्येतिहोवाचकतिग्रहाःकत्यतिग्रहाइत्य

च्येतेतत्वर्थसंबंधात्सर्वोयंसाध्यसाधनलक्षणोबंधोग्रहातिग्रहाविनिर्मोकान्निगडेहिनिर्ज्ञातेनिगडितस्यमोक्षाययत्नःकर्तव्योभवतितस्मा
त्तादर्थ्येनारंभःअथहैनंहशब्दऐतिह्यार्थोथानंतरमश्वलेउपरतेप्रकृतंयाज्ञवल्क्यंजरत्कारुगोत्रोजारत्कारवःऋतभागस्यापत्यमार्तभागःपप्र
च्छयाज्ञवल्क्येतिहोवाचेसंमिमुखीकरणाय

धायनापिसाक्षान्मोक्षायेतिव्याख्यानंकर्तुंनजानीमइत्यर्थः॥यत्तुश्रुतिरेवोत्तरोत्तरपदप्राश्यभिधानव्याजेन
मोक्षेपुरुषमवतारयतीतितत्राह॥यत्विति॥मृत्योराप्तिमतीत्यमुच्यतइत्युक्त्वाथदेतद्ग्रहातिग्रहवचनंतदयंसर्वःसाध्यसाधनलक्षणोबंधइत्यनेनाभिप्राये
णोच्यतेतस्यार्थेनान्वयदर्शनादितियोजना॥अर्थसंबंधादित्युक्तंस्फुटयति॥ग्रहातिग्रहाविनिर्मोकादिति॥एषाहिश्रुतिर्बंधमेवप्रतिपादयतिनतुमोक्षेपुरुषमव

नन्नुपुरुषस्यापेक्षितोमोक्षः प्रतिपाद्यतां किमित्यनर्थात्मको बंधः प्रतिपाद्यते तत्राह॥ निगडेहीति॥ बंधज्ञानं विना ततो विश्लेषायोगान्मुमुक्षोः सप्रयोजकं
बंधज्ञानार्थत्वेनानंतरब्राह्मणप्रवृत्तिरित्युपसंहरति॥ तस्मादिति॥ कतिग्रहा इत्यादिः प्रथमः संख्याविषयः प्रश्नः कतमे त इति द्वितीयः संख्येयवि
षय इत्याह॥ पूर्ववदिति॥ संप्रति प्रश्नमाक्षिपति॥ तन्नेत्यादिना॥ आद्यं प्रश्नमाक्षिप्य द्वितीयमाक्षिपति॥ अपिचेति॥ विशेषतश्चाज्ञातेष्विति चशब्दा

पूर्ववत्प्रश्नः कतिग्रहाः कत्यतिग्रहा इतीद्रतिशब्दो वाक्यपरिसमाप्त्यर्थस्तत्र निर्ज्ञातेषु वा ग्रहातिग्रहेषु प्रश्नः स्यादनिर्ज्ञातेषु वा यदि ताव
द्ग्रहा अतिग्रहाश्च निर्ज्ञातास्तदा तद्गतस्यापि गुणस्य संख्याया निर्ज्ञातत्वात्कतिग्रहाः कत्यतिग्रहा इति संख्याविषयः प्रश्नो नोपपद्यते अथा
निर्ज्ञातास्तथापि संख्येयविषयः प्रश्न इति के ग्रहाः केऽतिग्रहा इति प्रष्टव्यं न तु कतिग्रहाः कत्यतिग्रहा इति प्रश्नः अपि च निर्ज्ञातसामान्येषु

ऽष्टौ ग्रहा अष्टावतिग्रहा इति ये तेऽष्टौ ग्रहा अष्टावतिग्रहाः कतमे त इति॥ १॥

विशेषविज्ञानाय प्रश्नो भवति॥ यथा कतमेऽत्र कठाः कतमेऽत्र कालापा इति न चात्र ग्रहातिग्रहा नाम पदार्थाः केचन लोके प्रसिद्धा येन विशेषार्थः
प्रश्नः स्यान्ननु चातिमुच्यत इत्युक्तं ग्रहगृहीतस्य हि मोक्षः सम्मुक्तिः सातिमुक्तिरिति हि ह्युक्तं तस्मात्स्वाप्ता ग्रहा अतिग्रहाश्च ननु तत्रापि च
त्वारो ग्रहा अतिग्रहाश्च निर्ज्ञाता वाक्चक्षुः प्राणमनांसि तत्र कतीति प्रश्नो नोपपद्यते निर्ज्ञातत्वान्नानवधारणार्थत्वात् थः॥ मुक्त्यतिमुक्तिपदार्थद्वय
प्रतियोगिनौ बंधनाख्यौ ग्रहातिग्रहौ सामान्येन प्राप्तौ प्रश्नस्तु विशेषबुभुत्सायामिति प्रष्टा चोदयति॥ ननु चेति॥ तथापि प्रश्नद्वयमनुपपन्नमित्याशे
त्रा ब्रूते॥ ननु तन्नेति॥ वाग्वै यज्ञस्य होतेत्यादावितियावत्॥ निर्ज्ञातत्वाद्विशेषस्येति शेषः॥ अतिमोक्षोपदेशेन त्वगादेरपि सञ्चितत्वात्तेषु च तु कस्यानि

बृ॰ उ॰ १२

बुभुत्सायां संख्यादिविषयत्वेन प्रश्नस्योपपन्नार्थत्वान्नाक्षेपोपपत्तिरिति समाधत्ते॥ नानवधारणार्थत्वादिति॥ तदेव स्पष्टयति॥ नहीति॥ तत्र पूर्वब्राह्मणे वागादिष्विति यावत्॥ फलितं प्रथमप्रश्नोपपत्तिं कथयति॥ इहेतीति॥ ननु ग्रहाणामेव पूर्वत्रोपदेशातिदेशाभ्यां प्रतिपन्नत्वात्तेषु विशेषबुभुत्सायां कति ग्रहा इति प्रश्नेऽप्यतिग्रहाणामप्रतिपन्नत्वात्कथं कत्यतिग्रहा इति प्रश्नः स्यादत आह॥ तस्मादिति॥ पूर्वस्माद्ब्राह्मणादिति यावत्॥ वागादयो वक्तव्यादयश्च चत्वारो ग्रहाश्चातिग्रहाश्च यद्यपि विशेषतो निर्ज्ञातास्तथाऽप्यतिदेशप्राप्ताश्चत्वारो विशेषतो न ज्ञायन्ते तेन तेषु विशेषतो ज्ञान

नहि चतुष्टयं तत्र विवक्षितमिह तु ग्रहातिग्रहदर्शने कृत्स्नगुणविवक्षया कतीति प्रश्न उपपद्यत एव तस्मात्सा मुक्तिः सातिमुक्तिरिति सुत्यतिमुक्ती हि रुक्ते ग्रहातिग्रहा अपि सिद्धाः अतः कतिसंख्याका ग्रहाः कति वा अतिग्रहा इति पृष्टवतीतर आह अष्टौ ग्रहा अष्टावतिग्र

प्राणो वै ग्रहः सोऽपानेनातिग्राहेण गृहीतोऽपानेन हि गन्धाञ्जिघ्रति॥ १२॥ वाग्वै ग्रहः स नाम्नातिग्राहेण गृहीतो वाचा हि नामान्यभिवदति॥ १३॥

हा इति ये तेऽष्टौ ग्रहा अभिहिताः कतमे ते नियमेन गृहीतव्या इति तत्राह॥ १॥ प्राणो वै ग्रहः प्राण इति घ्राणमुच्यते प्रकरणाद्वायुसहितः सोऽपानेनेति गन्धेनेत्येतदपानसचिवत्वादपानो गन्ध इत्युच्यते अपानोपहृतं हि गन्धं घ्राणेन सर्वो लोको जिघ्रति तदेतदुच्यते अपानेन हि गन्धाञ्जिघ्रतीति॥ २॥

सिद्धये प्रश्न इत्यभिप्रेत्य विशिनष्टि॥ नियमेनेति॥ १॥ द्वितीये प्रश्ने परिहारमुपपादयति॥ तत्राहेति॥ प्राणशब्दस्य घ्राणविषयत्वे पूर्वोत्तरग्रन्थयोर्वागादीनां प्रकृतत्वं हेतुमाह॥ प्रकरणादिति॥ तस्य गन्धेन गृहीतत्वसिध्यर्थं विशिनष्टि॥ वायुसहित इति॥ अपानशब्दस्य गन्धविषयत्वे गन्धस्यापानेनाविनाभावं हेतुमाह॥ अपानेति॥ तत्रैव हेत्वन्तरमाह॥ अपानोपहृतं हीति॥ अपानश्वासोऽत्रापान

अ॰ ५ ब्राह्मणम् १२

वाग्नोग्रहत्वमुपपादयति॥ वाचाहीति॥ आसंगस्यविषयः शब्दादिरेवास्पदंयस्यावाचस्तयेतिविग्रहः॥ तस्मिंध्यर्थमध्यात्मपरिच्छिन्नयेतिविशेषणं
असत्यंपरपीडाकरंमिथ्यावचनंतदेवसदृष्टमात्रविरोध्यनृतंविपरीतंवा॥ आदिपदेनेष्टानिष्टोक्तिग्रहः॥ वाचिप्रकृतायांसनाम्नेतिकथमुच्यतेतत्राह॥
वागारभ्यइति॥ वक्तव्येनवाचोवशीकृतत्वंसाधयति॥ वक्तव्यार्थेति॥ तादर्थ्येनवचनकरणत्वेनेतियावत्॥ वचनार्थवाचोवक्तव्येनवशीकृतत्वेफलितमा

वाग्वैग्रहोवाचाह्यध्यात्मपरिच्छिन्नयाआसंगविषयास्पदयाऽसत्याऽनृताःसभ्यबीभत्सादिवचनेषुव्याप्तयागृहीतोलोकोपहतःतेनवाग्ग्र
हःसनाम्नातिग्राहेणगृहीतःसवागारभ्योग्रहोनाम्नावक्तव्येनविषयेणातिग्रहेणातिग्राहेणेतिदैर्घ्यंछांदसंनामवक्तव्यार्थाहिवाक्तेनव

जिह्वावैग्रहःसरसेनातिग्राहेणगृहीतोजिह्वयाहिरसान्विजानाति॥१४॥चक्षुर्वैग्रहःसरूपेणातिग्राहेणगृहीतश्चक्षुषाहिरू
पाणिपश्यति॥१५॥श्रोत्रंवैग्रहःसशब्देनातिग्राहेणगृहीतःश्रोत्रेणहिशब्दान्शृणोति॥१६॥मनोवैग्रहःसकामेनाऽतिग्राहेणगृ
हीतोमनसाहिकामान्कामयते॥१७॥हस्तौवैग्रहःसकर्मणातिग्राहेणगृहीतोहस्ताभ्यांहिकर्मकरोति॥१८॥त्वग्वैग्रहःसस्पर्शे
नातिग्राहेणगृहीतस्त्वचाहिस्पर्शान्वेदयतइत्येतेष्टौग्रहाअष्टावतिग्रहाः॥१९॥ क्तव्येनार्थेनप्रयुक्तावाक्तेनवशीकृतातेनतत्कार्यमकृत्वा

नैवतस्यामोक्षोतोनाम्नातिग्रहेणगृहीतावागित्युच्यतेवक्तव्यासंगेनहिप्रवृत्तासर्वानर्थैर्युज्यते॥३॥ समानमन्यदित्येतेत्वक्पर्यंताअष्टौग्रहाः

ह॥ तेनेति॥ तत्कार्यंवचनंमोक्षश्चासाधारणेदेवतात्मनिपर्यवसानं॥ वक्तव्यार्थोक्तिंविनावाचोपर्यवसानेसिद्धमर्थमाह॥ अतइति॥ वाचोतिग्रहगृहीत
त्वमनुभवेनसाधयति॥ वक्तव्येति॥३॥ वाचाहीत्यादेरपानेनहीत्यादिनातुल्यार्थत्वाद्व्याख्येयत्वमाह॥ समानमिति॥ घ्राणंवाग्जिह्वाचक्षुःश्रोत्रंमनोहस्तौत्व

निगृहीतावागित्यामयति॥ इंद्रियेति॥

बृ.र.
१३

गंधो नाम रसो रूपं शब्दः कामः कर्म स्पर्श इत्यतिग्रहानपि निगमयति॥ स्पर्शपर्यंता इति॥ १०॥ प्रतीकमादाय व्याचष्टे यदिदमिति॥ यदिदं व्याकृतं जगत्सर्वं मृत्योरन्नमिति योजना॥ तत्र तदन्नत्वं साधयति॥ सर्वमिति॥ मृत्योरन्नत्वसंभावनायां श्रुत्यंतरं संवादयति॥ मृत्युरिति॥ मृत्योर्मृत्युमधिकृत्य प्रश्नस्य करदं तन्निरूपणवदप्रयोजनत्वमाशंक्याह॥ अथमिति॥ सत्येव ग्रहातिग्रहलक्षणे मृत्यो मोक्षो भविष्यतीति चेन्नेत्याह॥ ग्रहेति॥ अस्तु तर्हि

स्पर्शपर्यंताश्च एतेऽष्टावतिग्रहा इति॥ १०॥ उपसंहृतेषु ग्रहातिग्रहेषु आह पुनर्याज्ञवल्क्येति होवाच यदिदं सर्वं मृत्योरन्नं यदिदं व्याकृतं सर्वं मृत्योरन्नं सर्वं जायते विपद्यते च ग्रहातिग्रहलक्षणेन मृत्युना ग्रस्तं का स्वित्का नु स्यात्सा देवता यस्या देवताया मृत्युरप्यन्नं भवेन्मृत्युर्यस्योपसेचनमिति श्रुत्यंतरादयमभिप्रायः प्रष्टुः॥ यदि मृत्योर्मृत्युं वक्ष्यत्यनवस्था स्यादथ न वक्ष्यत्यस्माद्ग्रहातिग्रहल

याज्ञवल्क्येति होवाच यदिदꣳ सर्वं मृत्योरन्नं॥ का स्वित्सा देवता यस्या मृत्युरन्नमित्यग्निर्वै मृत्युः सोऽपामन्नमप पुनर्मृत्युं जयति॥ २०॥

क्षणान्मृत्योर्मोक्षो नोपपद्यते ग्रहातिग्रहमृत्युविनाशे हि मोक्षः स्यात्स यदि मृत्योरपि मृत्युः स्याद्भवेद्ग्रहातिग्रहलक्षणस्य मृत्योर्विनाशः अतो दुर्वचनं प्रश्नं मन्वानः पृच्छति का स्वित्सा देवतेत्यस्ति तावन्मृत्योर्मृत्युर्नन्वनवस्था स्यात्तस्याप्यन्यो मृत्युरिति नानवस्था सर्वमृत्योर्मृत्य्वंतरानुपपत्तेः

ग्रहातिग्रहनाशे मुक्तिरित्यत आह॥ स यदीति॥ न च मृत्योर्मृत्युरस्त्यनवस्थानादित्युक्तमिति भावः पक्षे नवस्थानात्पक्षे चामुक्तेरित्यतः शब्दार्थः अस्तिपक्षं परिगृह्णाति॥ अस्ति तावदिति॥ मृत्योर्मृत्युर्ब्रह्मात्मसाक्षात्कारो विवक्षितस्तस्याप्यन्यो मृत्युरस्ति चेदनवस्था॥ नास्ति चेत्तद्धेतुज्ञानस्यापि स्थितेरमुक्तिरिति शंकते॥ नन्विति॥ तत्रास्तिपक्षं परिगृह्य परिहरति॥ नानवस्थेति॥ यथोक्तस्य मृ

अ०
५

राम:
१३

उक्तं पक्षं प्रश्नद्वारा प्रमाणारूढं करोति॥ कथमिति॥ दृष्टत्वं स्पष्टयति॥ अग्निस्तावदिति॥ दृष्टफलमाचष्टे॥ गृह्यत इति॥ तस्य कार्यं कथयति॥ तेनेति
॥ अपपुनर्मृत्युं जयतीत्यस्य पातनिकां करोति॥ तस्मिन्निति॥ उक्तमेवमव्यक्तीकरोति॥ बंधनं हीति॥ प्रसाधितं मृत्योरपि मृत्युरस्तीति प्रदर्शनेनेति शे
षः॥ मोक्षोपपत्तौ फलितमाह॥ अत इति॥ पुरुषप्रयासः शमादिपूर्वकश्रवणादिः॥ तत्फलस्य ज्ञानस्य फलं दर्शयन्वाक्यं योजयति॥ अत इति॥ ज्ञानं

कथं पुनरवगम्यते स्ति मृत्योर्मृत्युरिति दृष्टत्वादग्निस्तावत्सर्वस्य दृष्टो मृत्युर्विनाशकत्वात्सोद्भिर्भक्ष्यते सोग्निरपां मन्नं ग्रहाणां तर्ह्यस्ति मृ
त्योर्मृत्युरिति तेन सर्वं ग्रहातिग्रहजातं भक्ष्यते मृत्योर्मृत्युना तस्मिन्बंधने नाशिते मृत्युना भक्षिते संसारान्मोक्ष उपपन्नो भवति बंधनं हि ग्रहा
तिग्रहलक्षणमुक्तं तस्माच्च मोक्ष उपपद्यत इति एतस्मसाधितमतो बंधमोक्षाय पुरुषप्रयासः सफलो भवत्यतोपजयति पुनर्मृत्युं॥ २०॥ परेण

याज्ञवल्क्येति होवाच यत्रायं पुरुषो म्रियत उदस्मात्प्राणाः क्रामंत्याहो३ नेति नेति होवाच याज्ञवल्क्योत्रैव समवनीयंते॥

मृत्युनाम्त्यैा भक्षिते परमात्मदर्शनेन यो सौ मुक्तो विद्वान्सोयं पुरुषो यत्र यस्मिन्काले म्रियते उदूर्ध्वमस्माद्ब्रह्मविदो म्रियमाणात्प्राणा वागाद
यो ग्रहाः नामाद्यश्चातिग्रहाः वासनारूपाः अंतस्थाः सप्रयोजकाः क्रामंत्यूर्ध्वमुत्क्रामंति आहोस्विन्नेति नेती ति होवाच याज्ञवल्क्यो नोत्क्रा
मंत्यत्रैवास्मिन्नेव परेणात्मना चमर्यर्थः॥ २०॥ सम्यक्ज्ञानस्यापपुनर्मृत्युं जयतीत्युक्तं फलं विशदीकर्तुं प्रश्नांतरमुत्थापयति॥ परेणेति॥ परेण मृत्युना
परमात्मदर्शनेनेति संबंधः॥ ग्रहातिग्रहलक्षणो बंधः सप्तम्यर्थः॥ ग्रहशब्देन प्रयोज्यराशिर्गृहीतः नामादीनां स्थूलानां बहिष्ठत्वेनस्वरसतस्त्यक्तत्वालयं तदु
त्क्रांतिः शक्यते तत्राह॥ वासनारूपा इति तेषामनुत्क्रांतौ मुक्त्यसंभवं सूचयति॥ सप्रयोजका इति॥ उत्क्रांतिपक्षे ध्रुवं जन्म मृतस्य चेति न्यायात्पुनरुत्पत्तिः स्याद

द्वितीयंपक्षंपरिगृह्यपरिहरति॥नेतिहोवाचेत्यादिना॥कार्याणिकरणानिवाःसर्वाणिपरेणात्मनासहाविभागंगच्छंतिसत्यस्मिन्नेवविदुषिसमवनी यंतइतिसंबंधः॥तेषांविदुषिविलयेहेतुमाह॥स्वयोनाविति॥विद्वानेवहिपूर्वमविद्ययातेषांयोनिरासीत्तस्मिन्विद्यादशायांतद्धूलादविद्यायामपनी तायांपरिपूर्णेतस्मिंस्तेषांपर्यवसानंसंभवतीत्यर्थः॥कारणेकार्याणांप्रविलयेदृष्टांतमाह॥ऊर्मयइति॥प्राणादीनांकारणसंसर्गात्स्योत्थानानांतेषुनरुत्प

ऽविभागंगच्छंतिविदुषिकरणानिस्वयोनौपरब्रह्मसतत्तेसमवनीयंतेएकीभावेनसमवसृज्यंतेप्रलीयंतइत्यर्थः॥ऊर्मयइवसमुद्रेतथा चक्षुरुत्यंतरंकलाशब्दवाच्यानांप्राणानांपरस्मिन्नात्मनिप्रलयंदर्शयतिएवमेवास्यपरिद्रष्टुरिमाःषोडशकलाःपुरुषायणाः॥पुरुषंप्रा प्यास्तंगच्छंतीतिपरेणात्मनाऽविभागंगच्छंतीतिदर्शितंननतर्हिमृतोनहिमृतस्त्रायंयस्मात्सउच्छ्वयत्युच्छूनतांप्रतिपद्यतेआध्मायतिबा

सउच्छ्वयत्याध्मायत्याध्मातोमृतःशेते॥२१॥याज्ञवल्क्येतिहोवाचयत्रायंपुरुषोम्रियतेकिमेनंनजहातीतिनामे

ह्येनवायुनापूर्यतेदृतिवदाध्मातोमृतःशेतेनिश्चेष्टोबंधननाशेमुक्तस्यनक्वचिद्गमनमितिवाक्यार्थः॥२१॥मुक्तस्यकिंप्राणाएव समवनीयंतेआहोस्वित्तत्प्रयोजकमपिसर्व त्तिःस्यादित्याशंक्यज्ञानेसत्यज्ञानध्वंसान्नैवमित्यभिप्रेत्याह॥तथाचेति॥सविषयाण्येका दशेंद्रियाणिवायवश्चपंचेतिषोडशकलास्तासांस्वातंत्र्यमाश्रयांतरंचवारयति॥पुरुषायणाइति॥तासांनिवृत्तिश्चपुरुषव्यतिरेकेणनास्ती तिसूचयति॥पुरुषंप्राप्येति॥प्राणाश्चेन्नोत्क्रामंतितर्हिमृतोनभवतीतिप्रतीतिविरोधंशंकितेपरिहरति॥नतर्हीत्यादिना॥दृतिशब्दोभ स्त्राविषयः॥प्रकृतंवाक्यंप्रत्यक्षसिद्धदेहमरणानुवादकमित्यभिप्रेत्याह॥बंधनेति॥२१॥प्राणानोत्क्रामंतीतिविशेषणमाश्रित्यप्रश्नांतरमादत्ते॥सु

पस्तद्वयेपिप्रयोजनंकथयति॥अथेत्यादिना॥यत्त्वत्रास्तेनाद्यभूत्तदधुनानाममात्रावशेषमित्युक्तेनावशिष्टंकिंचिदितियथावगम्यतेतथात्रापिनाम
मात्रंम्रियमाणंविद्वांसंनजहातीत्युक्तेनकिंचिदवशिष्टमितिदृष्टिःस्यादितिप्रत्युक्तितात्पर्यमाह॥सर्वमिति॥यथाश्रुतमर्थमाश्रित्यप्रत्युक्तिंव्या
चष्टे॥नाममात्रंत्विति॥विदुषोनामनित्यत्वेहेतुंतत्तरमुत्तरवाक्यावष्टंभेनदर्शयति॥नित्यंहीति॥अनंतशब्दान्नाम्नोव्यक्तिप्राचुर्यंप्रतिभातिकुतोनित्य

मथप्राणाएवनतत्प्रयोजकंसर्वेप्रयोजकेविद्यमानेपुनःप्राणानांप्रसंगोह्यसर्वमेवकामकर्मादिततोमोक्षउपपद्यतेइत्येवमर्थःउ
त्तरःप्रश्नः॥याज्ञवल्क्येतिहोवाचयत्रायंपुरुषोम्रियतेकिमेनंनजहातीतिआहेतरःनामेतिसर्वंसमवनीयतद्इत्यर्थः॥नाममात्रंतु
नलीयतेआकृतिसंबंधान्नित्यंहिनामानंतंवैनामनित्यत्वमेवानंत्यंनाम्नःतदानंत्याधिकृताअनंतावैविश्वेदेवाअनंतमेवसतेनलोकं

स्यनंतंवैनामानंताविश्वेदेवाअनंतमेवसतेनलोकंजयति॥२२॥

जयतितन्नामानंत्याधिकृतान्विश्वान्देवानात्मत्वेनोपेत्यतेनानंत्यदर्शनेनानंतमेवलोकंजयति॥२२॥१२॥ग्रहातिग्रहरूपंबंधनमुक्तं
मृत्युरूपंतस्यचमृत्योर्मृत्युसद्भावान्मोक्षश्चोपपद्यतेसचमोक्षोग्रहातिग्रहरूपाणामिहैवप्रलयःप्रदीपनिर्वाणव तेत्याशंक्याह॥नि
त्यत्वमेवेति॥व्यक्तिभेदस्यप्रसिद्धत्वान्नतदुक्तव्यं॥ब्रह्मविदःस्वदृष्ट्यानामापिनशिष्यतेपरदृष्ट्यातदवशेषोक्तिःशुकोमुक्तइत्यादिव्यपदेशदर्श
नादतोनामनित्यत्वंव्यावहारिकमितिभावः॥ब्रह्मास्मीतिदर्शनेनविश्वेदेवानात्मत्वेनोपगम्यानंतंलोकंजयतीतिसिद्धांतवादोब्रह्मविद्यांस्तोतुमित्यभि
प्रेत्यानंतरवाक्यमादत्ते॥तदानंत्येति॥तद्व्याचष्टे॥तन्नामेति॥२२॥१२॥यत्रास्येत्यादेस्तात्पर्यंवृत्तानुवादपूर्वकंकथयति॥ग्रहातिग्रहरूपमित्यादिना॥

किमेनमित्यादिवाक्यस्य व्याख्यामुक्त्वा यत्रेत्यादेस्तात्पर्यं चोक्तं॥इदानीं भर्तृप्रपंचप्रस्थानमुत्थापयति॥अत्रेति॥किमेनमित्यादाविति यावत्॥समु
च्चयानुष्ठानाद्देहयोः सप्रयोजकयोर्नाशेपि पुंसो मुक्तिर्न चेत्तर्हि तस्य बद्धत्वाद्योगात्कामसौदशामवलंबतामित्याशंक्याह॥नामावशिष्ट इति॥क्षि
तेरूखरवदवस्थितात्मा विद्यया परस्मात्परिच्छिन्नश्चेदात्मा न तर्हि बंधपक्षस्सैव स्यान्न तु भोज्याज्जगतोव्यावृत्तिरित्याशंक्याह॥उच्छिन्नेति॥सर्वस्य
कर्मादिफलस्य सूत्रात्मनः समुच्चयासादितस्य भोगादप्राप्तार्थाभावात्कामासिध्या कर्माभावात्सप्रयोजकराशेरुच्छित्तिरित्यर्थः॥किमेनमित्यादावंत

यत्तद्ग्रहातिग्रहाख्यं बंधनं मृत्युरूपं तस्य यत्प्रयोजकं तत्स्वरूपनिर्धारणार्थमिदमारभ्यते याज्ञवल्क्येति होवाच॥अत्र केचिद्वर्णयंति
ग्रहातिग्रहस्य सप्रयोजकस्य विनाशेपि किल न मुच्यते नाममात्रावशिष्टोऽविद्ययोषरस्थानीयया स्वात्मप्रभवया परमात्मनः परिच्छिन्नो
भोज्याच्च जगतो व्यावृत्त उच्छिन्नकामकर्मा तरालेव्यवतिष्ठते तस्य परमात्मैकत्वदर्शनेन नष्टं तद्दर्शनमपनेतव्यमित्यतः परं परमात्मदर्श
नमारभ्यत इत्येवमपवर्गाख्यामंतरालावस्थां परिकल्प्योत्तरग्रंथसंबंधं कुर्वंति तन्न वक्तव्यं॥विशीर्णेषु करणेषु विदेहस्य परमात्मद
र्शनश्रवणमनननिदिध्यासनानि कथमिति समवनीतप्राणस्य हि नाममात्रावशिष्टस्येति तैरुच्यते मृतः शेत इति ह्युक्तं न मनोरथेनाप्य
तदुपपादयितुं शक्यते  रालावस्थस्य विद्याधिकारिणो निर्धारणात्तदपेक्षितविद्याशेषत्वेनोषस्तप्रश्नादेरारंभं संभावयति॥तस्येति इति शब्दोव
र्णयंतीत्यनेन संबध्यते तर्हि यत्रोषस्तप्रश्नादौ ब्रह्मविद्योच्यते तस्यैवारंभा युक्तो यत्रास्येत्यादिस्तु वृथेत्याशंक्य फलवद्विद्याप्राप्तिशेषत्वेन निवर्त्यमृत्यु
प्रयोजकनिर्धारणार्थो यत्रेत्यादिरित्यभिप्रेत्याह॥एवमिति॥हिरण्यगर्भादन्यो नन्योवा विद्याधिकारी प्रथमे पि मृतस्य जीवतो वा विद्याधिकारो विवक्षि
तस्त्वयेति पृच्छति॥तत्रेति॥तत्राद्यमाक्षिपति॥विशीर्णेष्विति॥आक्षेपं स्फुटयितुं तदीयामुक्तिमनुवदति॥समवनीतेति॥नाममात्रावशिष्टस्याधि

समवनीतप्राणस्येत्यत्र श्रुतिं संवादयति॥ मृत इति॥ कथमेतावता यथोक्ताक्षेपसिद्धिस्तत्राह॥ न मनोरथेनेति॥ उपसंहृतप्राणस्य श्रवणाद्यधिकारि
त्वमेतच्छब्दार्थः॥ द्वितीयं शंकते॥ अथेति॥ अपावृत्तो विद्याधिकारीति शेषः॥ जीवतो भोग्याद्व्यावर्तनं सम्यग्धियं विना दुःशकमिति मत्वा पृच्छति॥ तर्हि
ति॥ अप्राप्ते कामो भवति प्राप्ते निवर्तत इति प्रसिद्धेः अपरविद्यया कर्मसमुच्चितया हैरण्यगर्भपदप्राप्तिरेव निवृत्तिकारणमिति शंकते॥ समस्तेति॥ अ

अथ जीवन्नेवाविद्यामात्रावशिष्टो भोज्यादपावृत्त इति परिकल्प्यते तत्तु किंनिमित्तमिति वक्तव्यं समस्तद्वैतैकत्वात्मप्राप्तिनिमित्तमिति यद्युच्येत
तत्पूर्वमेव निराकृतं कर्मसहितेन द्वैतैकत्वात्मदर्शनेन संपन्नो विद्वान्मृतः समवनीतप्राणो जगदात्मत्वं हिरण्यगर्भस्वरूपं वा प्राप्नुयात्सम
वनीतप्राणो भोज्याज्जीवन्नेव वा व्यावृत्तो विरक्तः परमात्मदर्शनाभिमुखः स्यान्नत्वोभयमेकप्रयत्ननिष्पाद्येन साधनेन लभ्यं हिरण्यगर्भप्रा
प्तिसाधनं चेन्न ततो व्यावृत्तिसाधनं परमात्माभिमुखीकरणस्य भोज्याद्व्यावृत्तेः साधनं चेन्न हिरण्यगर्भप्राप्तिसाधनं नहि यद्गतिसाधनं तद्ग
तिनिवृत्तेरपि॥ अथ मत्वा हिरण्यगर्भं प्राप्य ततः समवनीतप्राणो नामावशिष्टः परमात्मज्ञानेऽधिक्रियते ततोऽस्मदाद्यर्थं परमात्मज्ञानोपदेशो
नर्थकः स्यात्सर्वेषां हि ब्रह्मविद्या पुरुषार्थायोपदेक्ष्यते तद्यो यो देवानामित्याद्यया श्रुत्या

परविद्यासमुच्चितं कर्म हैरण्यगर्भभोगप्रापकं न भोग्याद्विर
त्तिसाधनमिति तत्तीयेऽप्युत्सादितमिति परिहरति॥ तत्पूर्वमेवेति॥ उक्तमेव व्यक्तीकुर्वन्विभजते॥ कर्मसहितेनेति॥ अथैकमेव समुच्चितं कर्मोभयार्थं किं न
स्यादत आह॥ न चेति॥ उभयार्थत्वाभावं समर्थयति॥ हिरण्यगर्भेत्यादिना॥ समुच्चितं कर्म नोभयार्थमित्यत्र दृष्टांतमाह॥ नहीति॥ हिरण्यगर्भो विद्याधिकारी
तिपक्षं निक्षिपति॥ अथेति॥ दूषयति॥ तत इति॥ ननु महानुभावानामस्मद्विशिष्टानामेव ब्रह्मविद्योपदिश्यमाना मोक्षं फलयति नास्माकमित्याशंक्याह॥ सर्वेषां हीति॥ न

१= ननु सर्वत्रात्मन एकत्वात्कस्मिंश्चिच्छरीरे श्रवणादिना विद्योदये तयैव विद्यया तस्यैकस्यात्मनो मुक्तिसिद्धेरात्मांतरस्य वस्तुत्वाभावाद्देहांतरे श्रवणादिना विद्योदयस्य निष्फलत्वं प्राप्त
मेतदस्त्विति चेन्न विद्योदयानां यो यो देवानामित्यत्र बहुत्वश्रवणाद्देवमनुष्यादिदेहोपाधिभेदादुपहितभेदे सत्स्वकाल्पनिकविद्योदयबहुत्वस्यायमज्ञोऽयमज्ञोऽयं विज्ञोऽयं विज्ञ इति यथाप्र
तीत्यव्यवस्थोपपत्तेश्च वस्तुगत्या तु निर्विशेषचिन्मात्रेऽविद्यादीनामसंभव एव तथा च न निरोधो न चोत्पत्तिरित्यादिश्रुतिभ्यः शंकानिरासात्= १

बृ.र.
१६

द्वारैवचिदात्मनोमुक्तिसिद्धौकृतमितरत्रश्रवणादिनेतिवाच्यं द्वारभेदस्यानुष्ठानविभागाधीनप्रवृत्तिप्रयुक्तप्रयोजनवद्विद्योदयस्यचकाल्पनि कत्वेनयथाप्रतीतिमवस्थोपपत्तेर्वस्तुतोनिर्विशेषेचिन्मात्रेनाविद्याविद्येबंधमुक्तीचेत्यभिप्रेत्यपरपक्षनिराकरणमुपसंहरत्यश्रुतिव्याख्यानंप्रस्तौति ॥तस्मादिति॥कर्त्तव्येश्रुतिव्याख्यानेयत्नेत्याद्याकांक्षापूर्वकमवतारयति॥तत्रेति॥तत्रपुरुषशब्देनविद्वानुक्तोनंतरवाक्येतत्सन्निधेरित्याशंक्यवक्ष्यमा

तस्माद्वयंतकष्टशास्त्रबाह्यैवेयंकल्पनाप्रकृतंतुवर्त्तयिष्यामः तत्रकेनप्रयुक्तंग्रहातिग्रहलक्षणंबंधनमित्येतन्निर्द्धारयिषयाहयत्रास्यपुरुषस्यअसम्यग्दर्शिनःशिरःपाण्यादिमतोमृतस्यवागग्निमप्येतिवातंप्राणोप्येतिचक्षुरादित्यमप्येतिइतिसर्वत्रसंबध्यतेमनःचं

याज्ञवल्क्येतिहोवाचयत्रास्यपुरुषस्यमृतस्याग्निंवागप्येतिवातंप्राणश्चक्षुरादित्यंमनश्चंद्रंदिशःश्रोत्रंपृथिवींशरीरमा काशमात्मौषधीर्लोमानिवनस्पतीन्केशाअप्सुलोहितंचरेतश्चनिधीयते॥

द्रंदिशःश्रोत्रंपृथिवींशरीरमाकाशमात्मेत्यत्रात्मा धिष्ठानंहृदयाकाशमुच्यतेसआकाशमप्येतिओषधीरपियंतिलोमानिवनस्पतीनपियंतिकेशाःअप्सुलोहितंरेतश्चनिधीयतेनि धीयतइतिपुनरादानलिंगं॥सर्वत्रहिवागादिशब्देनदेवताःपरिगृह्यंतेनतुकरणान्येनापक्रामंतिवाङ्गोक्षाःतत्र णकर्माश्रयत्वलिंगेनबाध्यःस न्निधिरित्यभिप्रेत्याह॥असम्यग्दर्शिनइति॥सन्निधिबाधेलिंगांतरमाह॥निधीयनइति॥तस्यहिपुनरादानयोग्यद्रव्यनिधानेप्रयोगदर्शनादिहापिपुनरा दानंलोहितादेराभात्यतःप्रसिद्धसंसारिगोचरएवायंप्रश्नइत्यर्थः॥आविदुषोवागादिलयाभावाद्वाङ्मनसिदर्शनादिन्यायात्तस्यचात्रश्रुतेर्विद्वानेवपुरुषस्तदा पकलाविलयस्यश्रुतिप्रसिद्धत्वादित्याशंक्याह॥सर्वत्रहीति॥अग्न्याद्यंशानांवागादिशब्दितानामपक्रमणेपिकरणानांतदभावेतदधिष्ठानस्यदेहस्यापिभावेन

अ.
५

रामः
१६

कुंडारभ्यतिरेकपुरुषवत्=४

देवतांशेषूपसंहृतेष्विति यावत्॥ तेषां ताभिरनधिष्ठितत्वे सत्यर्थक्रियाऽसमर्थत्वं फलतीत्याह॥ न्यस्तेति॥ करणानामधिष्ठातृहीनानां भोगहेतुत्वाभावेपि कथमाश्रयप्रश्नो भोक्तुः स्यादित्याशंक्याह॥ विदेहस्येति॥ प्रश्नं विवृणोति॥ यमाश्रयमिति॥ आहरेत्यादि परिहारमवतारयति॥ अत्रेति॥ मीमांसकालोकायतज्योतिर्विदो वैदिका देवताकांडीया विज्ञानवादिनो माध्यमिकाश्चेत्यनेके विप्रतिपत्तारो जल्पन्यायेन परस्परप्रचलितमात्रपर्यंतेन विचारेणेति यावत्॥

देवताभिरनधिष्ठितानि करणानि न्यस्तदात्राण्युपमानानि विदेहस्य कर्ता पुरुषोऽस्वतंत्रः किमाश्रितो भवतीति पृष्टव्यं नेत् क्वायं तदा पुरुषो भवतीति किमाश्रितस्तदा पुरुषो भवतीति यमाश्रयमाश्रित्य पुनः कार्यकरणसंघातमुपादत्ते येन ग्रहातिग्रहलक्षणं बंधनं प्रयुज्यते तत्किमिति प्रश्नः अत्रोच्यते स्वभावयदृच्छाकालकर्मदैवविज्ञानमात्रशून्यानि वादिभिः परिकल्पितान्यतोऽनेकविप्रतिपत्तिस्थानत्वान्नैव जल्पन्यायेन

क्वायं तदा पुरुषो भवतीत्याहर सोम्य हस्तमार्त्तभागावामेवैतस्य वेदिष्यावो न नावेतत्सजन इति॥

वस्तुनिर्णयोऽत्र वस्तुनिर्णयं चेदिच्छसि आहर सोम्य हस्तमार्त्तभाग हे आवामेवैतस्य त्वत्पृष्टस्य वेदितव्यं यत्तद्वेदिष्यावो निरूपयिष्यावः कस्मान्नावावयोरेतद्वस्तु सजने जनसमुदाये निर्णेतुं शक्यतेऽतएकांतं गमिष्यावो विचारणाय॥ तौ हेत्यादि श्रुतिवचनं तौ याज्ञवल्क्यार्त्तभागावेकांतं गत्वा किं चक्रतुरित्युच्यते तौ ह उत्क्रम्य सजनाद्देशान्मंत्रयांचक्राते आदौ लौकिकवादिपक्षाणामेकैकं परिगृह्य विचारितवंतौ तौ ह विचार्य यदूचतुरपोह्य पूर्वपक्षान्सर्वानेवं तच्छृणु कर्म हैवाश्रयं पुनः पुनः कार्यकरणोपादानहेतुं तत्तत्रोचतुरुक्तवंतौ॥ अत्रेति प्रश्नोक्तिः॥ ननु प्रश्नार्त्तभागो याज्ञवल्क्यस्य प्रतिवक्तेति ह्याविहोपलभ्येते तथा च तौ हेत्यादि वचनमयुक्तं तृतीयस्यात्राभावादत आह॥ तौ हेत्यादीति॥ तत्रेत्येकांते स्थि

नकेवलंकर्मकारणमूचतुः किंतुतदेवकालादिषुहेतुष्वभ्युपगतेषुसत्सुप्रशशंसतुरतः प्रशंसावचनात्कर्मणः प्राधान्यंगम्यतेनतुकालादीनामहेतुत्वं तेषांकर्मस्वरूपनिष्पत्तौकारकत्वयागुणभावदर्शनात्फलकालेपितत्प्राधान्येनैवतद्धेतुत्वसंभवादित्याह॥नकेवलमिति॥पुण्योवैपुण्येनेत्यादिव्याचष्टे॥यस्मादित्यादिना॥१३॥इत्यार्तभागब्राह्मणंद्वितीयं॥२॥ब्राह्मणांतरमवतार्यंरत्नंकीर्तयति॥अथेत्यादिना॥उक्तमेवतस्यमृत्युत्वंव्यक्तीकरोति

नकेवलंकालकर्मदैवेश्वरेष्वभ्युपगतेषुहेतुषुयत्प्रशशंसतुस्तौकर्महैवतत्प्रशशंसतुर्यस्मान्निर्धारितमेतत्कर्मप्रयुक्तंग्रहातिग्रहादि कार्यकरणोपादानंपुनः पुनस्तस्मात्पुण्योवैशास्त्रविहितेनपुण्येनकर्मणाभवतितद्विपरीतेनविपरीतोभवतिपापः पापेनेत्येवंया ज्ञवल्क्येनप्रश्नेषुनिर्णीतेषुततोऽशाक्यप्रकंप्यत्वाद्याज्ञवल्क्यस्यहजारत्कारवआर्तभागउपरराम॥१३॥इतिश्रीमद्बृहदारण्यपंचमेप्रपाठ

तौहोत्क्रम्यमंत्रयांचक्रातेतौहयदूचतुः कर्महैवतदूचतुरथयत्प्रशशꣳसतुः कर्महैवतत्प्रशशꣳसतुः पुण्योवैपुण्येनकर्मणा भवतिपापः पापेनेतिततोहजारत्कारवआर्तभागउपरराम॥२३॥द्वितीयंब्राह्मणं॥२॥ केद्वितीयंब्राह्मणं॥२॥अथहैनंभुज्युर्लाह्याय

निः पप्रच्छग्रहातिग्रहलक्षणंबंधनमुक्तंयस्मात्सप्रयोजकान्मुक्तोमुच्यतेयेनचाबद्धः संसरतिसमृत्युस्तस्माच्चमोक्षउपपद्यतेयस्मान्मृत्योर्मृत्युर स्तिमुक्तस्यचनगतिः क्वचित्सर्वोत्सादोनामसमात्रावशेषः प्रदीपनिर्वाणवदित्तिचावधृतंतत्रसंसरतांमुच्यमानानांचकार्यकरणानांस्वकारणसंसर्गे समानेमुक्तानामत्यंतमेवपुनरनुपादानंसंसरतांतुपुनः पुनरुपादानंयेनप्रयुक्तानांभवतितत्कर्मेत्यवधारितंविचारणापूर्वकं ॥यस्मादिति॥अग्निर्वैमृ त्युरित्यादावुक्तंस्मारयति॥तस्मादिति॥यत्रायमित्यादावुक्तमनुद्रवति॥मुक्तस्यचेति॥यत्रास्येत्यादौनिर्णीतमनुभाषते॥तत्रेति॥पूर्वब्राह्मणस्योग्रंथः सप्तम्यर्थः॥

संसरतां मुच्यमानानां च यानि कार्यकरणानि तेषामिति वैयधिकरण्यमुपादानमनुपादानमित्युभयत्र कार्यकरणानामिति संबंधः॥ कर्मणो भावाभावाभ्यां
बंधमोक्षावुक्तौ तत्राभावद्वारा कर्मणो मोक्षहेतुत्वं स्फुटयति॥ तस्येति॥ तस्य भावद्वारा बंधहेतुत्वं प्रकटयति॥ तच्चेति॥ पुण्यपापयोरुभयोरपि संसा
रफलत्वाविशेषात्पुण्यफलत्वस्यापफलमित्यत्र वक्तव्यं॥ अन्यथा ततो विरागायोगादित्याशंक्य वर्तिष्यमाणस्य तात्पर्यं वक्तुं भूमिकां करोति॥ तत्रेति॥ पुण्ये
ष्वपुण्येषु च निर्धारणार्था सप्तमी॥ स्वभावदुःखबहुलेष्वित्युभयतः संबध्यते॥ तर्हि पुण्यफलमपि सर्वलोकप्रसिद्धत्वान्नात्र वक्तव्यमित्याशंक्याह॥ यस्त्वि

तस्यैव चनामावशेषेण सर्वोत्पादो मोक्षस्तच्च पुण्यपापाख्यं कर्म पुण्यो वै पुण्येन कर्मणा भवति पापः पापेनेत्यवधारितत्वादेतत्कृतः संसारस्त
त्रापुण्येन स्थावरजंगमेषु स्वभावदुःखबहुलेषु नरकतिर्यक्प्रेतादिषु च दुःखमनुभवति पुनः पुनर्जायमानो म्रियमाणश्चेत्येतद्राजवर्त्मव
त्सर्वलोकप्रसिद्धं॥ यस्तु शास्त्रीयः पुण्यो वै पुण्येन कर्मणा भवतीति तत्रैवादरः क्रियत इह श्रुत्या पुण्यमेव च कर्म सर्वपुरुषार्थसाधनमि
ति सर्वे श्रुतिस्मृतिवादाः मोक्षस्यापि पुरुषार्थत्वात्तत्साध्यता प्राप्ता यावद्यावत्पुण्योत्कर्षस्तावत्तावत्फलोत्कर्षप्राप्तिस्तस्मादुत्तमेन पु
ण्योत्कर्षेण मोक्षो भविष्यतीत्याशंका स्यात्तां निवर्तयितव्यां ज्ञानसहितस्य च प्रकृष्टस्य कर्मण एतावती गतिः व्याकृतनामरूपास्पदत्वात्क
र्मणस्तत्फलस्य च नत्वकार्ये नित्येऽव्याकृतधर्मिण्यनामरूपात्मके

ति॥ शास्त्रीयः सुखानुभवद्गतिशेषः॥ इहेति ब्राह्मणोक्तिः शास्त्रीयं कर्म सर्व
मपि संसारफलमेवेति वक्तुं ब्राह्मणमित्युक्ताशंकोत्तरत्वेनापि तदवतारयति॥ पुण्यमेवेत्यादिना॥ मोक्षस्य पुण्यसाध्यत्वं विधांतरेण साधयति॥ याव
द्यावदिति॥ कथं तस्या निवर्तनमित्याशंक्याह॥ ज्ञानसहितस्येति॥ समुच्चितमपि कर्म संसारफलमेवेत्यत्र हेतुमाह॥ व्याकृतेति॥ मोक्षेपि स्वर्गादाविव पुरु
षार्थत्वाविशेषात्कर्मणो व्यापारः स्यादित्याशंक्याह॥ नत्विति॥ अकार्यत्वमुत्पत्तिहीनत्वं नित्यत्वं नाशशून्यत्वं अव्याकृतधर्मित्वं व्याकृतनामरूपराहित्यं॥ अ

उत्पाद्य आप्य संस्कार्य विकार्य=१

बृ.र.
१८

निष्कलंनिष्क्रियमित्यादिश्रुतिमाश्रित्याह॥क्रियेति॥चतुर्विधंक्रियाफलविलक्षणेमोक्षेकर्मणोव्यापारोनसंभवतीतिभावः॥नन्वास्याणोराच्चप्रजापतेः
सर्वत्रकर्मव्यापारात्कथंमोक्षेप्रजापतिभावलक्षणेतत्व्यापारोनास्तितत्राह॥यत्रचेति॥कर्मफलस्यसर्वस्यसंसारत्वमेवेतिकुतःसिध्यतितत्राह॥
इत्यस्येति॥विद्यासहितमपिकर्मसंसारफलंविद्येवमोक्षार्थेतिस्वपक्षशुध्यर्थंविचारयन्पूर्वपक्षयति॥यत्विति॥यथाकेवलंविषदध्यादिमरणज्वरादि
कारणमपिमंत्रशर्करादियुक्तंजीवनपुष्ट्याद्यारभतेतथास्वतोबंधफलमपिकर्मफलाभिलाषमंतरेणानुष्ठितंविद्यासमुच्चितंमोक्षायक्षममित्यर्थः॥
मुक्तेःसाध्यत्वांगीकारेसमुच्चितकर्मसाध्यत्वंस्यान्नतुतस्याःसाध्यत्वंधीमात्रायत्तत्वादित्युत्तरमाह॥तन्नेति॥हेतुमेवसाधयति॥बंधनेति॥किंतद्बंधनं

क्रियाकारकफलस्वभाववर्जितेकर्मणोव्यापारोस्ति॥यत्रचव्यापारःससंसारएवेत्यस्यार्थस्यप्रदर्शनायब्राह्मणमारभ्यतेयत्तुकेचिदुच्य
तेविद्यासहितंकर्मनिरभिसंधिविषदध्यादिवत्कार्यांतरमारभतइतितन्नानारभ्यत्वान्मोक्षस्यबंधननाशएवहिमोक्षःनकार्यभूतोबंधनं
चाविद्येत्यवोचामअविद्यायाश्चनकर्मणानाशउपपद्यतेदृष्टविषयत्वाच्चकर्मसामर्थ्यस्यउत्पत्त्याप्तिविकारसंस्काराहिकर्मसामर्थ्यस्यविष
याःउत्पादयितुंआप्तुंविकर्तुंसंस्कर्तुंसामर्थ्यंचकर्मणोनातोव्यतिरिक्तोविषयोस्तिकर्मसामर्थ्यस्यलोकेऽप्रसिद्धत्वान्नचमोक्षएषांपदार्थो
नामन्यतमोऽविद्यामात्रव्यवहितइत्यवोचाम॥ तदाह॥बंधनंचेति॥अविद्यानाशोपिकर्मारभ्योभविष्यतीतिचेन्नेत्याह॥अविद्यायाश्चेति॥मोक्षो
नकर्मसाध्योऽविद्यास्तमयत्वाद्रज्जुविद्यास्तमयवदित्यर्थः॥तत्रैवहेत्वंतरमाह॥दृष्टविषयत्वाच्चेति॥नकर्मसाध्यामुक्तिरितिशेषः॥तदेवस्पष्टयति॥उ
त्पत्तीति॥उक्तमेवकर्मसामर्थ्यविषयमन्वयव्यतिरेकाभ्यांसाधयति॥उत्पादयितुमिति॥अप्रसिद्धत्वादितिच्छेदः॥उत्पत्त्यादीनामन्यतमत्वान्मोक्षस्यापिकर्म
सामर्थ्यविषयतास्यादितिचेन्नेत्याह॥नचेति॥नित्यत्वादात्मत्वात्कूटस्थत्वान्नित्यशुद्धत्वान्निर्गुणत्वाच्चेत्यर्थः॥आत्मभूतोयथोक्तोमोक्षस्तर्हिकिमितिसर्वेषांनप्र

अ.
५

राम:
१८

वादमिति॥अंगीकारमेवस्फोरयति॥भवत्विति॥एवंस्वभावतोत्पादनादौसमर्थता॥कातर्हिविप्रतिपत्तिस्तत्राह॥विद्यासंयुक्तस्येति॥अन्यथास्वभा
वस्यतुर्विधक्रियाफलविलक्षणेपिमोक्षेसमर्थतेतियावत्॥उत्पत्त्यादौसमर्थस्यकर्मणोविद्यासंयुक्तस्यतद्विलक्षणेपिमोक्षेसामर्थ्यमस्तीत्यत्रदृष्टांतमा
ह॥दृष्टंहीति॥उक्तदृष्टांतवशात्कर्मणोपिकेवलस्यसंसारफलस्यविद्यासंयोगान्मुक्तिफलत्वमपिस्यादित्याह॥तथेति॥समाधत्ते॥नेत्यादिना॥अतींद्रि
यत्वात्कर्मणोमुक्तिसाधनत्वेप्रत्यक्षाद्यसंभवेप्यर्थापत्तिरस्तीतिशंकते॥नन्विति॥नित्येषुकर्मसुमोक्षातिरिक्तस्यफलस्याश्रुतस्याभावेसतितदुपलभ्यमा
नचोदनायामोक्षफलत्वंविनानुपपत्तिस्तेषांतत्साधनत्वेमानमित्यर्थः॥ननुविश्वजितायजेतेत्यत्रयागकर्तव्यतारूपोनियोगोवगम्यतेतस्यनियोज्यसा

वादंभवतुकेवलस्यैवकर्मणएवंस्वभावताविद्यासंयुक्तस्यतुनिरभिसंधेर्भवत्यन्यथास्वभावोदृष्टंह्यन्यशक्तित्वेननिर्ज्ञातानामपिपदा
र्थानांविषदध्यादीनांविद्यामंत्रशर्करादिसंयुक्तानामन्यविषयेसामर्थ्यंतथाकर्मणोप्यस्त्वितिचेन्नप्रमाणाभावात्तत्रहिकर्मणउक्तवि
षयव्यतिरेकेणविषयांतरेसामर्थ्यास्तित्वेप्रमाणंनप्रत्यक्षंनानुमानंनोपमानंनार्थापत्तिर्नशब्दोस्तिननुफलांतराभावेचोदनान्यथानु
पपत्तिःप्रमाणमितिनहिनित्यानांकर्मणांविश्वजिन्न्यायेनफलंकल्प्यतेनापिश्रुतंफलमस्तिचोद्यंतेचतानिपारिशेष्यान्मोक्षस्तेषांफ
लमितिगम्यते॥ पेक्षत्वात्सस्वर्गः स्यात्सर्वान्प्रत्यविशिष्टत्वादितिन्यायेनस्वर्गकामोनियोज्योंगीकृतस्तथानित्येष्वपिकर्मसुभविष्यतिस्व
र्गोनियोज्यविशेषणमतआह॥नहीति॥जीवनजुहुयादितिजीवनविशिष्टस्यनियोज्यस्यलाभान्ननित्येषुस्वर्गोनियोज्यविशेषणमित्यर्थः॥ननुजीवन
विशिष्टेपिफलाभावेननियोज्यःस्यात्तथाचकर्मणापितृलोकइतिश्रुतंफलंतेषुकल्पयिष्यतेनेत्याह॥नापीति॥नित्यविधिप्रकरणेपितृलोकवाक्यस्या
श्रवणादित्यर्थः॥तर्हिफलाभावाच्चोदनैवमाभूदितिचेन्नेत्याह॥चोद्यंतेचेति॥तथापिफलांतरंकल्प्यतामित्याशंक्यकल्पकाभावान्नैवमित्यभिप्रेत्याह॥पा

22

मुक्तेर्यत्कल्पकं तदेव फलांतरस्यापि किं न स्यादित्याशंक्य तस्य निरतिशयफलविषयत्वान्मुक्तिकल्पकमेवेत्यभिप्रेत्याह॥ अन्यथेति॥ अनुपपत्त्या चेन्नि
योज्यलाभाय नित्येषु फलं कल्प्यते कथं तर्हि विश्वजिन्न्यायो न प्राप्नोतीति सिद्धांती प्रत्याह॥ नन्विति॥ उक्तमेव विवृणोति॥ मोक्षे वेति॥ अकल्पिते सतीति
छेदः॥ श्रुतार्थापत्त्या विधेः श्रुतस्य प्रवर्तकत्वानुपपत्त्येति यावत् विश्वजितीव नित्येषु मोक्षे फले कल्प्यमाने सति फलितमाह॥ नन्वेवमिति॥ कथमित्युक्तामनु
पपत्तिमेव स्फुटयति॥ फलं चेति॥ फलकल्पनायां विश्वजिन्न्यायो वतरति मोक्षस्तु स्वरूपस्थितित्वेनानुत्पाद्यत्वात्फलमेव न भवतीति शंकते॥ मोक्ष इ

अन्यथा हि पुरुषा न प्रवर्तेरन्नतु विश्वजिन्न्याय एवायातो मोक्षस्य कल्पितत्वान्मोक्षे वान्यस्मिन्वा फले कल्पिते पुरुषा न प्रवर्तेरन्निति मोक्षः
फलं कल्प्यते श्रुतार्थापत्त्या यथा विश्वजिति नन्वेवं सति कथमुच्यते विश्वजिन्न्यायो न भवतीति फलं च कल्प्यते विश्वजिन्न्यायश्च न भवती
ति विप्रतिषिद्धमभिधीयते मोक्षः फलमेव न भवतीति चेन्न प्रतिज्ञाहानात्कर्मकार्यांतरं विषदध्यादिवदारभत इति हि प्रतिज्ञातं स चे
न्मोक्षः कर्मणः कार्यं फलमेव न भवति सा प्रतिज्ञा हीयेत कर्मकार्यत्वे च मोक्षस्य स्वर्गादिफलेभ्यो विशेषो वक्तव्यः अथ कर्मकार्यं न भव
ति नित्यानां कर्मणां फलं मोक्ष इत्यस्याः वचनव्यक्तेः कोर्थ इति वक्तव्यं न च कार्यफलशब्दभेदमात्रेण विशेषः शक्यः कल्पयितुं अफलं
च मोक्षो नित्यैश्च कर्मभिः क्रियते॥ नित्यानां कर्मणां फलं न कार्यमिति चैषोर्थो विप्रतिषिद्धोभिधीयते यथाग्निः शीत इति

ति॥ निग्रहमुद्रावश्य
मुत्तरमाह॥ नेति॥ प्रतिज्ञाहानिं प्रकटयति॥ कर्मेत्यादिना॥ कर्मकार्यत्वं मुक्तेरुपेत्योक्तं तदेवायुक्तमित्याह॥ कर्मकार्यत्वे चेति॥ फलत्वेपि कर्मकार्य
त्वं न मुक्तेरस्तीत्युक्तं दोषं परिहर्तुं चोदयति॥ अथेति॥ प्रतिज्ञाविरोधेन प्रतिविधत्ते॥ नित्यानामिति॥ फलत्वमंगीकृत्य कार्यत्वेऽनंगीकृते कथं व्याघात इत्या
शंक्याह॥ न चेति॥ विशेषार्थ गत इति शेषः॥ फलत्वमंगीकृत्य कार्यत्वानंगीकारे व्याघातमुक्त्वा वैपरीत्येपि तमुत्पादयति॥ अफलं चेति॥ आद्यं व्याघातं दृष्टां

दृष्टांतेनव्याघातं परिहरन्नाशंकते॥ज्ञानवदितिचेदिति॥तदेवस्फुटयति॥यथेति॥दृष्टांतंविघटयति॥नेति॥ज्ञानस्यमोक्षस्याव्यवधिभूताज्ञाननिवर्त
कत्वान्मोक्षस्तेनाक्रियमाणोपितत्कार्यमितिव्यपदेशभाग्भवतीत्यर्थः॥तदेवस्फुटयति॥अज्ञानेति॥दार्ष्टांतिकंनिराचष्टे॥नत्विति॥यत्कर्मणानिवर्त्य
तत्तन्मोक्षस्याव्यवधानांतरंकल्पयितुंनशक्यमितिसंबंधः॥अवधानध्वंसेकर्मणोऽप्रवेशेपिमुक्तावेवतत्प्रवेशःस्यादितिचेन्नेत्याह॥ ॥ ॥नि
त्यत्वादिति॥नित्यकर्मनिवर्त्यव्यवधानांतरंमाभूदज्ञानमेवतन्निवर्त्यंभविष्यतितथाचमोक्षस्यकर्मकार्यत्वंशक्यमुपचरितुमितिशंकते॥अज्ञान

ज्ञानवदितिचेद्यथाज्ञानस्यकार्यंमोक्षोज्ञानेनाक्रियमाणोप्युच्यतेतद्वत्कर्मकार्यत्वमितिचेन्नाज्ञाननिवर्तकत्वाज्ज्ञानस्यअज्ञानव्यव
धाननिवर्तकत्वात्ज्ञानस्यमोक्षोज्ञानकार्यमित्युपचर्यते नतुकर्मणानिवर्तयितव्यमज्ञानंनचाज्ञानव्यतिरेकेणमोक्षस्यव्यवधानां
तरंकल्पयितुंशक्यंनित्यत्वान्मोक्षस्यसाधकस्वरूपाव्यतिरेकाच्चयत्कर्मणानिवर्त्येतअज्ञानमेवनिवर्तयतीतिचेन्नविलक्षणत्वाद
नभिव्यक्तिरज्ञानमभिव्यक्तिलक्षणेनज्ञानेनविरुध्यतेकर्मतुनाज्ञानेनविरुध्यतेतेनज्ञानविलक्षणंकर्मयदिज्ञानाभावोयदिसंशयज्ञा
नंयदिविपरीतज्ञानंवोच्यतेऽज्ञानमेवनिसर्वंहितज्ज्ञानेनैवनिवर्त्यतेनतुकर्मणान्यतमेनापिविरोधाभावात्॥अथादृष्टंकर्मणामज्ञाननि
वर्तकत्वंकल्प्यमितिचेन्नज्ञानेनाज्ञाननिवृत्तौगम्यमानायामदृष्टंनिवृत्तिकल्पनानुपपत्तेः यथां मेवेति॥कर्मणोज्ञानाद्विलक्षणत्वान्नाज्ञान
निवर्तकत्वमित्युत्तरमाह॥नविलक्षणत्वादिति॥वैलक्षण्यमेवप्रकटयति॥अनभिव्यक्तिरिति॥इतश्चज्ञाननिवर्त्यमेवाज्ञानमित्याह॥यदीति॥अन्यत
मेननित्यादिनान्यस्तेनसमस्तेनवाश्रौतेनस्मार्तेनचेत्यर्थः॥कर्माज्ञानयोरविरोधोहेत्वर्थः॥अज्ञाननिवर्तकत्वंकर्मणोनान्वयव्यतिरेकसिद्धंकिंत्वदृष्टमे
वकल्प्यमितिशंकते॥अथेति॥दृष्टेसत्यदृष्टकल्पनानन्याय्येतिपरिहरति॥नज्ञानेनेति॥उक्तमर्थंदृष्टांतेनबुद्धावारोपयति॥यथेत्यादिना॥अदृष्टेति

९२८

बृ.१.
२०

अ.
५

अस्तु ज्ञानादज्ञानध्वस्तिः किंतु कर्मसमुच्चितादित्याशंक्याह॥ ज्ञानेनेति॥ ननु कर्मभिरविरुद्धमपि हिरण्यगर्भादिविज्ञानमस्ति तथा च समुच्चितं ज्ञा
नमज्ञानध्वंसि भविष्यतीनेत्याह॥ यदविरुद्धमिति॥ नित्यानां कर्मणां समुच्चितानामसमुच्चितानां च स्वरूपस्थितौ मोक्षे तत्प्रतिबंधकाज्ञानध्व
स्तौ वा नादृष्टं सामर्थ्यं कल्प्यमित्युक्तमिदानीं तत्कल्पनामंगीकृत्यापि दूषयति॥ किं चेति॥ कर्मणोस्ति मोक्षे सामर्थ्यमित्येतदुक्तादेव कारणान्न भवति
किं त्वन्यच्च कारणं तत्रास्तीत्यर्थः॥ तदेव दर्शयितुं विचारयति॥ कल्प्यं चेति॥ विरोधमभिनयति॥ दूष्येति॥ कार्यत्वाभावं समर्थयते॥ यस्मिन्निति॥ पक्षां

ऽवघातेन व्रीहीणां तुषनिवृत्तौ गम्यमानायामग्निहोत्रादिनित्यकर्मकार्यः दृष्टान्न कल्प्यते तुषनिवृत्तिस्तद्वदज्ञाननिवृत्तिरपि नित्य
कर्मकार्यः दृष्टान्न कल्प्यते ज्ञानेन विरुद्धत्वं चास्य कृत्स्नकर्मणामवोचाम यदविरुद्धं ज्ञानं कर्मभिस्तद्देवलोकप्राप्तिनिमित्तमित्युक्तं विद्यया
देवलोकइति श्रुतेः किं चान्यत्कल्प्ये च फले नित्यानां कर्मणां श्रुतानां यत्कर्मभिर्न विरुध्यते तत्कल्प्यतां न मोक्षः फलं तन्मोक्षः फलं द्रव्य
गुणकर्मणां कार्यमेव न भवति किं तत्कल्प्यतां यस्मिन्कर्मणः सामर्थ्यमेव न दृष्टं किं वा यस्मिन्दृष्टं सामर्थ्यं यच्च कर्मणां फलमविरुद्धं तत्क
ल्प्यतामिति॥ पुरुषप्रवृत्तिजननायावश्यं चेत्कर्मफलं कल्पयितव्यं कर्माविरुद्धविषयएवश्रुतार्थापत्तेः क्षीणत्वान्नित्यो मोक्षः फलं क
ल्पयितुं न शक्यस्तद्वद्व्यवधानाज्ञाननिवृत्तिर्वा विरुद्धत्वात् दृष्टसामर्थ्यविषयता चेति तस्माह॥ किं चेति॥ सामर्थ्यविषयं विशदयति॥ यच्चेति॥

कथमिह निर्णयस्तत्राह॥ पुरुषेति॥ कल्पयितव्यं फलमिति संबंधः॥ उत्पत्त्यादीनामन्यतमो हि कर्मभिरविरुद्धो विषयस्तेनैव नित्यकर्मचोदनानुपपत्ते
रुपशांतत्वान्नित्यकर्मफलत्वेन मोक्षस्तद्वद्व्यवधानाज्ञाननिवृत्तिर्वा न शक्यते कल्पयितुं कर्मज्ञानयोर्विरोधाभावाद्दृष्टसामर्थ्यं यस्मिन्नुत्पत्त्यादौ तद्विष
यत्वाच्च कर्मणस्तद्विलक्षणे मोक्षे नव्यापारस्तथा च नित्यकर्मविधिवशात्पुरुषप्रवृत्तिसंपादनाय फलं चेत्कल्पयितव्यं तर्हि तदुत्पत्त्यादीनामन्यतमदेव तद

राम:
२०

विरुद्धं कल्प्यमित्यर्थः इतिशब्दः श्रुतार्थापत्तिपरिहारसमाप्त्यर्थः॥ मोक्षएवनित्यानांकर्मणांफलत्वेनकल्पयितव्यःपारिशेष्यन्यायादितिशंकते
॥पारिशेष्येति॥पारिशेष्यन्यायमेवविशदयति॥सर्वेषामिति॥ सर्वंचस्वर्गपशुपुत्रादीतियावत्॥तथापिमोक्षादन्यदेवनित्यकर्मफलंकिंनस्यात्तत्रा
ह॥नचेति॥मोक्षस्यापीतरकर्मफलविशेषमाशंक्याह॥परिशिष्टश्चेति॥तस्यफलत्वमेवकथंसिद्धंतत्राह॥सचेति॥ परिशेषायातमर्थंनिगमयति॥त
स्मादिति॥पारिशेष्यासिध्यादूषयति॥नेति॥कर्मफलव्यक्त्यानंत्यमुक्तंव्यनक्ति॥नहीति॥फलवत्फलसाधनानांफलविषयेच्छानांचानंत्यंकथयति॥त

पारिशेष्यन्यायान्मोक्षएवकल्पयितव्यइतिचेत्सर्वेषांहिकर्मणांसर्वंफलंनचान्यदितरकर्मफलव्यतिरेकेणफलंकल्पनायोग्यमस्तिप
रिशिष्टश्चमोक्षःसचेष्टोवेदविदांफलंतस्मात्सएवकल्पयितव्यइतिचेन्नकर्मफलव्यक्तीनामानंत्यात्पारिशेष्यन्यायानुपपत्तेःनहिपुरु
षेच्छाविषयाणांकर्मफलानामेतावत्त्वंनामकेनचित्सर्वज्ञेनावधृतंतत्साधनानांवापुरुषेच्छानांवाऽनियतदेशकालनिमित्तत्वात्पुरुषेच्छा
विषयसाधनानांचपुरुषेष्टफलप्रयुक्तत्वात्॥प्रतिप्राणिचेच्छावैचित्र्यात्फलानांतत्साधनानांचानंत्यसिद्धिस्तदानंत्याच्चाशक्यमेताव
त्त्वंपुरुषैर्ज्ञातुमज्ञातेचसाधनफलेतावत्त्वेकथंमोक्षस्यपरिशेषसिद्धिरिति॥कर्मफलजातिपारिशेष्यमितिचेत्तस्यपीच्छाविषयाणां
तत्साधनानांचानंत्येकर्मफलजातित्वंनामसर्वेषांतुल्यंमोक्षस्त्वकर्मफलत्वात्परिशिष्टःस्यात् साधनानामिति॥तदानंत्येहेतुमाह॥अनिय

तेति॥इच्छाद्यानंत्येहेत्वंतरमाह॥पुरुषेति॥एतावत्त्वंनामनास्तीत्युभयत्रसंबंधः॥पुरुषस्येष्टंफलंशोभनाध्यासविषयभूतंतत्रविषयिणांशोभनाध्या
सेनप्रयुक्तत्वादितिहेत्वर्थः॥इच्छाद्यानंत्यंप्राणिभेदेषुदर्शयित्वातदानंत्यमेकैकस्मिन्नपिप्राणिनिदर्शयति॥प्रतिप्राणिचेति॥इच्छाद्यानंत्येफलितमाह॥
तदानंत्याच्चेति॥साधनादिष्वेतावत्त्वाज्ञानेपिकिंस्यात्तदाह॥अज्ञातेचेति॥इतिशब्दःपारिशेष्यानुपपत्तिसमाप्त्यर्थः॥प्रकारांतरेणपारिशेष्यंशंकते॥कर्म

बृ॰र॰ २१

तथापिकथंमोक्षस्यपरिशिष्टत्वंतदाह॥ मोक्षस्त्विति॥ परिशेषफलमाह॥ तस्मादिति॥ शंकितंपरिशेषंदूषयति॥ नेत्यादिना॥ अर्थापत्तिपरि
शेषौपराकृत्यार्थापत्तिपराकरणंप्रपंचयितुंप्रस्तौति॥ तस्मादिति॥ अन्यथाप्युपपत्तिंप्रकटयति॥ उत्पत्तीति॥ नित्यानामुत्पत्त्यादिफलत्वेपिमोक्ष
स्यतत्फलत्वंसिध्यतीतिशंकते॥ चतुर्णामिति॥ तत्रमोक्षस्योत्पाद्यत्वंदूषयति॥ नतावदिति॥ उभयत्रातःशब्दोनित्यत्वपरामर्शी॥ असंस्कार्यत्वेहेतं
तरमाह॥ असाधनेति॥ तदेवव्यतिरेकमुखेनविवृणोति॥ साधनात्मकंहीति॥ इतश्चमोक्षस्यासंस्क्रियमाणत्वमित्याह॥ नचेति॥ यथायूपस्त्व

तस्मात्परिशेषात्सएवयुक्तःकल्पयितुमितिचेन्नतस्यापिनित्यकर्मफलत्वाभ्युपगमेकर्मफलसमानजातीयत्वोपपत्तेःपरिशेषानु
पपत्तिःतस्मादन्यथाप्युपपत्तेःक्षीणाश्रुतार्थापत्तिरुत्पत्त्याप्तिविकारसंस्काराणामन्यतमदपिनित्यानांकर्मणांफलमुपपद्यतइति
क्षीणाश्रुतार्थापत्तिःचतुर्णामन्यतमएवमोक्षइतिचेन्नतावदुत्पाद्योनित्यत्वात्॥ अतएवनाविकार्यःसंस्कार्यश्चातएवासाधनद्रव्यात्मक
त्वाच्चसाधनात्मकंहिद्रव्यंसंस्क्रियतेयथापात्राज्यादिप्रोक्षणादिनानचसंस्क्रियमाणःसंस्कारनिर्वर्त्योवायूपादिवत्पारिशेष्यादाप्यः
स्यान्नाप्योव्याप्त्यसभावत्वादेकत्वाच्च॥ इतरैःकर्मभिर्वैलक्षण्यान्नित्यानांकर्मणांतत्फलेनापिविलक्षणेनभवितव्यमितिचेन्नकर्मवैलक्ष
क्षण्यात्तल्लक्षणंकस्मात्फलंनभवतीतरकर्मफलैर्निमित्तवैलक्षण्यादितिचेन्नक्षामवत्यादिभिःसमानत्वात् ताष्टास्त्रीकरणाभ्यंजनादिनासंस्क्रि
यतेयथाचाहवनीयःसंस्कारेणनिष्पाद्यतेनतथामोक्षोनित्यशुद्धत्वान्निर्गुणत्वाच्चेत्यर्थः॥ पक्षांतरमनुभाष्यदूषयति॥ पारिशेष्यादित्यादिना॥ एकत्वंपू
र्णत्वंसाधनवैलक्षण्यंफलवैलक्षण्यंकल्पयतीतिशंकते॥ इतरैरिति॥ हेतुवैलक्षण्यासिद्धौकल्पकाभावात्फलवैलक्षण्यासिद्धिरितिदूषयति॥ नकर्म
त्वेति॥ निमित्तकृतहेतुवैलक्षण्यवशात्फलवैलक्षण्यसिद्धिरितिशंकते॥ निमित्तेति॥ निमित्तवैलक्षण्यंफलवैलक्षण्यस्यानिमित्तमितिपरिहरति॥

तदेवप्रपंचयति॥ यथाहीति॥ यस्याहिताग्नेरग्निर्गृहान्दहेदग्नयेक्षामवते पुरोडाशमष्टाकपालंनिर्वपेदित्यत्र दहेदिति विधिविभक्त्याप्रसिद्धार्थ यक्तु
त्तोपहितयाग,गृहदाहाख्यनिमित्तपरामर्शेनाग्नयेक्षामवते पुरोडाशमित्यादिना क्षामवती विधीयते यस्योभयंहविरार्तिमार्छेत्ऐन्द्रंपंचशरावमो
दनंनिर्वपेदित्यत्रचार्छेदिति विधिविभक्त्यानिर्वपेदितिविधास्यमाननिर्वापनिमित्तंहविरार्तिमनूद्यनिर्वापो विधीयते भिन्नेजुहोतिस्कन्नेजुहोतिस
र्थयस्यपुरोडाशौक्षीयतस्तंयज्ञंवरुणोगृह्णातियदातद्धविस्तिष्ठेताथतदेवहविर्निर्वपेद्यज्ञोहियज्ञस्यप्रायश्चित्तमितिचभेदनादिनिमित्तंप्रायश्चि
त्तप्रयुक्तंनचततत्प्रयुक्तिफलं॥ तथानिमित्तभेदेपिननित्यंकर्मप्रयुक्तिफलमित्यर्थः॥ क्षामवत्यादितुल्यत्वंनित्यकर्मणांकुतोलब्धमित्याशंक्याह॥ तेष्विति

यथाहिगृहदाहादौनिमित्तेक्षामवत्यादीष्टिर्यथाभिन्नेजुहोतिस्कन्नेजुहोतीत्येवमादौनैमित्तिकेषुकर्मसुनमोक्षःफलंकल्प्यतेतेष्वावि
शेषान्नैमित्तिकत्वेनजीवनादिनिमित्तेचश्रवणात्॥ तथानित्यानामपिनमोक्षःफलं॥ आलोकस्यसर्वेषांरूपदर्शनसाधनत्वेउलूका
दयआलोकेनरूपंनपश्यंतीतिउलूकादिचक्षुषोवैलक्षण्यादितरलोकचक्षुर्भिर्नरसादिविषयत्वंपरिकल्प्यतेरसादिविषयेसाम
र्थ्यसारहृष्टत्वात्सुदूरमपिगत्वायद्विषयेदृष्टंसामर्थ्यंतत्रैवकश्चिद्विशेषःकल्पयितव्योयस्तुनरुक्तंविद्यामंत्रशर्करादिसंसक्तविषदध्या
दिवन्नित्यानिकार्यांतरमारभंतइतिआरभ्यतांविशिष्टंकार्यंतदिष्टत्वादविरोधो ॥ क्षामवत्यादिभिरितियावत्॥ अविशेषेहेतुःनैमित्तिकत्वे
नेति॥ तदेवकथमितिचेत्तत्राह॥ जीवनादीति॥ दार्ष्टांतिकंस्पष्टयति॥ तथेति॥ नित्यंकर्मकर्मांतराद्विलक्षणमपिनमोक्षफलमित्यत्रदृष्टांतमाह॥
आलोकस्येति॥ चक्षुरंतरैरुलूकादिचक्षुषोवैलक्षण्येपिनरसादिविषयत्वमित्यत्रहेतुमाह॥ रसादीति॥ वैलक्षण्यंतर्हिकुत्रोपयुज्यतेतत्राह॥ सुदूर
मपीति॥ मनुष्यान्विहायोलूकादौगत्वापीतियावत्॥ यद्विषयेरूपादावित्यर्थः॥ विशेषोदूरसूक्ष्मादिरतिशयः॥ दार्ष्टांतिकंपूर्ववादानुवादपूर्वकमाचष्टे॥ य

तदेव विवृणोति॥ निरभिसंधेरिति॥ विद्यासंयुक्तं कर्म विशिष्टकार्यकरमित्यत्र शतपथश्रुतिं प्रमाणयति॥ देवयाजीति॥ तदाहुरित्युपक्रम्य देवयाजी श्रेयानित्यादौ काम्यकर्तुर्देवयाजिनः सकाशादात्मशुद्ध्यर्थं कर्म कुर्वन्नात्मयाजी श्रेयानित्यात्मयाजिनो देवयाजिनो विशेषश्रवणात्सर्वं कर्मक्रतुयाजिनामात्मयाजी विशिष्यत इति स्मृतेश्च विशिष्टस्य कर्मणो विशिष्टकार्यारंभकत्वमविरुद्धमित्यर्थः॥ छांदोग्येपि विद्यासंयुक्तस्य कर्मणो विशिष्टकार्यारंभकत्वं दृष्टमित्याह॥ यदेवेति॥ नन्वात्मयाजीशब्दो नित्यकर्मानुष्ठायिविषयो न भवति॥ सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि॥ संपश्यन्नात्मयाजी वै स्वाराज्यमधिगच्छतीत्यत्र परात्मदर्शनविषये तस्य प्रयुक्तत्वादत आह॥ यस्त्विति॥ यदि सम्यक् पश्यन्भवेत्तदा परेणात्मनैकीभूतः स्वराड्भवती

निरभिसंधेः कर्मणो विद्यासंयुक्तस्य विशिष्टकार्यांतरारंभे न कश्चिद्विरोधो देवयाज्यात्मयाजिनोरात्मयाजिनो विशेषश्रवणाद्देवयाजिनः श्रेयानात्मयाजीत्यादौ यदेव विद्यया करोतीत्यादौ च यस्तु परमार्थदर्शनविषये मनुनोक्त आत्मयाजीशब्दः स संपश्यन्नात्मयाजीत्यत्र सम्यक् पश्यन्नात्मयाजी भवतीत्यर्थः॥ अथवा भूतपूर्वगत्यात्मयाज्यात्मसंस्कारार्थं हि नित्यानि कर्माणि करोतीदं मेऽनेनांगं संस्क्रियत इति श्रुतेस्तथा गार्भैर्होमैरित्यादिप्रकरणे कार्यकरणसंस्कारार्थत्वं नित्यानां कर्मणां दर्शयति संस्कृतश्च य आत्मयाजी तैः कर्मभिः समं द्रष्टुं समर्थो भवति



सात्मज्ञानस्तुतिरत्र विवक्षिता महती हीयं ब्रह्मविद्या यद्ब्रह्मविदेवात्मयाजी भवति न हि तस्य तदनुष्ठानं पृथगपेक्षते ब्रह्मविसुण्यकृदिति च वक्ष्यतीत्यर्थः॥ परदर्शनवत्यात्मयाजीशब्दस्य गत्यंतरमाह॥ अथवेति॥ भूतया पूर्वं स्थितिस्तामपेक्ष्यात्मयाजिशब्दो विदुषीत्यर्थः॥ तदेव प्रपंचयति॥ आत्मेति॥ तेषां तत्संस्कारार्थत्वे प्रमाणमाह॥ इदमिति॥ तत्रैव स्मृतिं प्रमाणयति॥ तथेति॥ गर्भसंबंधिभिर्होमैर्मौंजीनिबंधनादिभिश्च वैदिकमेवैनः शमयतीत्यस्मिन्प्रकरणे नित्यकर्मणां संस्कारार्थत्वं निश्चितमित्यर्थः॥ संस्कारोपि कुत्रोपयुज्यते तत्राह॥ संस्कृतश्चेति॥ ॥

योहिनित्यकर्मानुष्ठायीसतदनुष्ठानजनितापूर्ववशात्परिशुद्धबुद्धिः सम्यग्धीर्योग्योभवति महायज्ञैश्चयज्ञैश्चब्राह्मीयंक्रियतेतनुरितिमनुस्मृतेरि
त्यर्थः॥कदापुनरेषासम्यग्धीरुत्पद्यतेतत्राह॥तस्येति॥उत्पन्नस्यसम्यग्ज्ञानस्यफलमाह॥सममिति॥कथंपुनःसम्यग्ज्ञानवत्यात्मयाजिशब्दइत्याशं
क्यपूर्वोक्तंस्मारयति॥आत्मेति॥किमितीहभूतपूर्वगतिराश्रितेतितत्राह॥ज्ञानयुक्तानामिति॥ऐहिकैरामुष्मिकैर्वाकर्मभिः शुद्धबुद्धेःश्रवणादिवशा
दैक्यज्ञानंमुक्तिफलमुदेति॥कर्मतुविद्यासंयुक्तमपिसंसारफलमेवेतिभावः॥तत्रैवहेत्वंतरमाह॥किंचेति॥विद्यायुक्तमपिकर्मबंधायैवेत्यत्रनकेवल
मुक्तमेवकारणंकिंत्वन्यच्चतदुपपादकमस्तीत्यर्थःतदेवदर्शयति॥ब्रह्मेति॥सात्विकींसत्वगुणप्रसूतज्ञानसमुच्चितकर्मफलभूतामितियाव

तस्येहवाजन्मांतरेवासममात्मदर्शनमुत्पद्यतेसमंपश्यन्स्वाराज्यमधिगच्छतीत्येषोर्थःआत्मयाजीशब्दस्तुभूतपूर्वगत्याप्रयु
ज्यतेज्ञानप्रयुक्तानांनित्यानांकर्मणांज्ञानोत्पत्तिसाधनत्वप्रदर्शनार्थं॥किंचअन्यत्ब्रह्माविश्वसृजोधर्मोमहानव्यक्तमेवच॥उत्तमां
सात्विकीमेतांगतिमाहुर्मनीषिणइतिचदेवसार्ष्टिव्यतिरेकेणभूतान्ययंदर्शयतिभूतान्यप्येतिपंचवैभूतान्यत्येतीतिपाठंयेकुर्वंति
तेषांवेदविषयेपरिखिन्नबुद्धित्वाद्दोषः॥ त॥अत्रहिविद्यायुक्तमपिकर्मसंसारफलमेवेतिसूच्यते॥एषसर्वःसमुद्दिष्टस्त्रिःप्रकारस्यक
र्मणःत्रिविधःत्रिविधःकर्मसंसारःसार्वभौतिकइत्युपसंहारादितिचकारार्थः॥किंचप्रवृत्तंकर्मसंसेव्यदेवानामेतिसार्ष्टितामितिकर्मफलभूतदेवता
सदृशैश्वर्यप्राप्तिमुक्त्वातदतिरेकेणनिवृत्तंसेवमानस्तुभूतान्यप्येतिपंचवेतिभूतेषप्यपवचनान्नसमुच्चयस्यमुक्तिफलतेत्याह॥देवसार्ष्टीति॥निवृ
त्तंसेवमानस्तुभूतान्यत्येतिपंचवेतिपाठान्मुक्तिरेवसमुच्चयानुष्ठानाद्विवक्षितेतिचेन्नेत्याह॥भूतानीति॥ज्ञानमेवमुक्तिहेतुरितिप्रतिपादकोपनिषद्वि
रोधान्नायंपाठःसाधीयानित्यर्थः॥ननुविग्रहवतीदेवतैवनास्तिमंत्रमयीहिसादेवताशब्दप्रत्ययालंबनंअतोब्रह्माविश्वसृजइत्यादेरर्थेनाद्दत्वान्नतत्

कु.र.
२३

बलेन नित्यकर्मणां मुक्तिसाधनत्वं निराकर्तुं शक्यमत आह॥ न चेति॥ ज्ञानार्थस्य संपश्यन्नात्मयाजी स्यादेरिति शेषः॥ किंच॥ अकुर्वन्विहितं कर्म निंदितं च समाचरन्॥ प्रसज्जंश्चेंद्रियार्थेषु नरः पतनमृच्छति॥ शरीरजैः कर्मदोषैर्याति स्थावरतां नरः॥ वाचिकैः पक्षिमृगतां मानसैरंत्यजातितां॥ श्वसूकरखरोष्ट्राणां गोजाविमृगपक्षिणां॥ चंडालपुल्कसानां च ब्रह्महा योनिमृच्छतीत्यादिवाक्यैः प्रतिपादितफलानां प्रत्यक्षेणापि दर्शनाद्यथा तत्र नाभूतार्थवादत्वं तथा यथोक्ताध्यायस्यापि नाभूतार्थवादत्वेत्याह॥ विहितेति॥ किंच॥ बंगादिदेशे क्षुद्दीनाश्यादिप्रेतानां प्रत्यक्षत्वाद्ध्ययनरहितानामपि स्त्रीशूद्रादीनां वेदोच्चारणदर्शनेन ब्रह्मग्रहसद्भावावगमाच्च न ब्रह्मादिवाक्यस्यार्थवादत्वेत्याह॥ वांतेति॥ ननु स्थावरादीनां श्रौतस्मार्तकर्मफलत्वा

न चार्थवादत्वमध्यायस्य ब्रह्मांतकर्मविपाकार्थस्य तद्व्यतिरिक्तात्मज्ञानार्थस्य च कर्मकांडोपनिषद्भ्यां तुल्यार्थत्वदर्शना द्विहिताकरणप्रतिषिद्धकर्मणां च स्थावरश्वसूकरादिफलदर्शनात्॥ वांताश्यादिप्रेतदर्शनाच्च न च श्रुतिस्मृतिविहितप्रतिषिद्धव्यतिरेकेण विहितानि वा प्रतिषिद्धानि वा कर्माणि केनचिद्वगंतुं शक्यं तेषामकरणादनुष्ठानाच्च प्रेतश्वसूकरस्थावरादीनि कर्मफलानि प्रत्यक्षानुमानाभ्यामुपलभ्यन्ते न चैषामकर्मफलत्वं केनचिदभ्युपगम्यते तस्माद्विहिताकरणप्रतिषिद्धसेवानां यथैते कर्मविपाकाः प्रेततिर्यक्स्थावरादयस्तथोत्कृष्टपवित्रह्मांतेषु कर्मविपाकत्वं वेदितव्यं

भावान्नतद्दर्शनेन वचनानां भूतार्थत्वं शक्यं कल्पयितुमत आह॥ न चेति॥ सेवादिदृष्टकारणसाम्येपि फलवैषम्योपलंभाद्वश्यमतींद्रियं कारणं वाच्यं॥ न च तत्र श्रुतिस्मृती विहायान्यन्मानमस्ति तथा च श्रौतस्मार्तकर्मकृतान्येव स्थावरादीनि फलानीत्यर्थः॥ सन्निहितासन्निहितेषु स्थावरादिषु प्रत्यक्षानुमानयोर्यथायोगं प्रवृत्तिरुन्नेया॥ स्थावराणां जीवशून्यत्वात्कर्मफलत्वमिति केचित्तान्प्रत्याह॥ न चैषामिति॥ अस्मदादिवद्देवरक्षादीनां वध्यादिदर्शनादजीवत्वप्रसिद्धेस्तस्मात्सर्पतिपादपाद्यत्यादिप्रयोगाच्च तेषां कर्मफलत्वसिद्धिरित्यर्थः॥ स्थावरादीनां कर्मफलत्वे सिद्धे फलितमा

अ.
५

राम:
२३

ब्रह्मादीनां पुण्यकर्मफलत्वेपि प्रकृते किं स्यात्तदाह॥ तस्मादिति॥ कर्मविपाकप्रकरणस्याभूतार्थवादत्वाभावे दृष्टांतेपि तन्न स्यादिति शंकते॥ तत्रापीति॥
अंगीकरोति॥ भवत्विति॥ कथं तर्हि वैधर्म्यदृष्टांतसिद्धिरत आह॥ न चेति॥ वैधर्म्यदृष्टांताभावमात्रेण कर्मविपाकाध्यायस्यानाभूतार्थवादत्वेतस्य
स्य न्यायस्य नैव बाधः॥ साधर्म्यदृष्टांतादपि तत्सिद्धेरित्यर्थः॥ ननु प्रजापतिरात्मनो वपामुदखिददित्यादीनामभूतार्थवादत्वाभावे कथमर्थवादा
धिकरणं घटिष्यते तत्राह॥ न चेति॥ तदघटनायामपि नास्माकं क्षतिस्तत्रैव तदभूतार्थवादत्वस्य जनस्तद्विरोधादित्यर्थः॥ ननु कर्मविपाकप्रकरण
स्यार्थवादत्वाभावेपि ब्रह्मादीनां काम्यकर्मफलत्वान्न ज्ञानसंयुक्तनित्यकर्मफलत्वं ततो मोक्ष एव तत्फलमित्यत आह॥ न चेति॥ तेषां काम्यानां कर्मणा

तस्मात्स आत्मनो वपामुदखिदत्सोरोदीदित्यादिवन्नाभूतार्थवादत्वं तत्राप्यभूतार्थवादत्वं माभूदिति चेद्भवत्वेवं न चैतावतास्य न्यायस्य
बाधो भवति॥ न चास्मत्पक्षो वाद्ध्यति न च ब्रह्मा विश्वसृज इत्यादीनां काम्यकर्मफलत्वं शक्यं वक्तुं तेषां देवसार्ष्टितायाः फलस्योक्तत्वात्सा
त्साभिसंधीनां नित्यानां कर्मणां सर्वमेधाश्वमेधादीनां च ब्रह्मत्वादीनि फलानि येषां पुनर्नित्यानि निरभिसंधीन्यात्मसंस्कारार्थानि क्रियंते ते
षां ज्ञानोत्पत्त्यर्थानि तानि ब्राह्मीयं क्रियते तनुरित्यादिस्मरणात्॥ तेषामारादुपकारकत्वान्मोक्षसाधनान्यपि कर्माणि भवंतीति न विरुध्यते

मिति यावत्॥ देवसार्ष्टितायाः देवैरिंद्रादिभिः समानैश्वर्यप्राप्तेरित्यर्थः॥ उक्तत्वात्प्रवृत्तं कर्म संसेव्य देवानामेति सार्ष्टितामित्यत्रेति शेषः ननु विद्यासं
युक्तानां नित्यानां कर्मणां फलं ब्रह्मादिभावश्चेत्कथं तानि ज्ञानोत्पत्त्यर्थान्यास्थीयंते तत्राह॥ तस्मादिति॥ कर्मणां मुक्तिफलत्वाभावस्तच्छब्दार्थः॥ साभि
संधीनां देवताभावे फलेनुरागवतामिति यावत्॥ नित्यानि कर्माणि श्रौतानि स्मार्तानि चाग्निहोत्रसंध्योपासनप्रभृतीनि निरभिसंधीनि फलाभिलाष
विकलानि परमेश्वरार्पणबुध्या क्रियमाणानि॥ आत्मशब्दो मनोविषयः कर्मणां चित्तशुद्धिद्वारा ज्ञानोत्पत्त्यर्थत्वे प्रमाणमाह॥ ब्राह्मीति॥ कथं तर्हि कर्मणां

कर्मणापरंपरयामोक्षसाधनत्वंकथंसिद्धवदुच्यतेतत्राह॥यथाचेति॥अयमर्थस्तथेतिशेषः॥निरस्तमप्यधिकविवक्षयापुनरनुवदति॥यत्त्विति॥वि
षादेर्मन्त्रादिसहितस्यज्ञानादिहेतुत्वंप्रत्यक्षादिसिद्धमतोदृष्टांतेकार्यारंभकत्वेविरोधोनास्तीत्याह॥तत्रेति॥कर्मणोविद्यासंयुक्तस्यकार्यां
तरारंभकत्वलक्षणोर्थःशब्देनैवगम्यतेनचतत्रमानांतरमस्तिनचसमुच्चितस्यकर्मणोमोक्षारंभकत्वप्रतिपादकंवाक्यमुपलभ्यतेतदभावे
कर्मणिविद्यायुक्तेपिविषदध्यादिसाधर्म्यंकल्पयितुंनशक्यमित्याह॥यत्त्विति॥कर्मसाध्यत्वेचमोक्षस्यानित्यतास्यादितिभावः॥अपाम
सोमममृताअभूमेत्यादिश्रुतेर्मोक्षस्यकर्मसाध्यस्यापिनित्यत्वमितिचेन्नेत्याह॥नचेति॥यत्कृतकंतदनित्यमित्यनुमानानुगृहीतंतदर्थेहेत्यादि

यथाचायमर्थःषष्ठेजनकारब्धाधिकारसमाप्तौवक्ष्यामोयत्तुविषदध्यादिवदित्युक्तंतत्रप्रत्यक्षानुमानविषयत्वादविरोधः॥यस्त्वयंत
शब्दगम्योर्थस्तत्रवाक्यस्याभावेतदर्थप्रतिपादकस्यनशक्यंकल्पयितुंविषदध्यादिसाधर्म्यंनचप्रमाणांतरंविरुद्धार्थविषयेश्रुतेः
प्रामाण्यंकल्प्यते॥यथाशीतोग्निःक्लेदयतीतिश्रुतेस्तुतादर्थ्येवाक्यस्यप्रमाणांतरस्याभासत्वंयथाखद्योतोग्निरितितलमलिनमंतरि
क्षमितिबालानांयत्प्रत्यक्षमपितद्विषयप्रमाणांतरस्ययथार्थत्वेनिश्चितेनिश्चितार्थमपिबालप्रत्यक्षमाभासीभवति वाक्यंतद्विरोधेनार्थ

वादश्रुतेः॥स्वार्थेप्रामाण्यमित्यर्थःप्रमाणांतरविरुद्धेर्थेप्रामाण्यंश्रुतेर्नोच्यतेचेदद्वैतश्रुतेरपिकथंप्रत्यक्षादिविरुद्धेस्वार्थेप्रामाण्यमित्याशंक्याह॥
श्रुतेस्त्विति॥तत्त्वमस्यादिवाक्यस्यषड्विधतात्पर्यलिंगैःसदद्वैतपरत्वेनिर्धारितेसद्वैतविषयस्यप्रत्यक्षादेराभासत्वंभवतीत्यर्थः॥तदेवदृष्टांतेनसाध
यति॥यथेत्यादिना॥यदविवेकिनांयथोक्तंप्रत्यक्षंतद्यद्यपिप्रथमभावित्वेनप्रबलंनिश्चितार्थंचतथापितस्मिन्नेवाकाशादौविषयेप्रवृत्तस्याप्तवा
क्यादेर्मानांतरस्ययथार्थत्वेसतितद्विरुद्धंपूर्वोक्तमविवेकिप्रत्यक्षमप्याभासीभवतितथेदमद्वैतविषयंप्रत्यक्षाद्यद्वैतागमविरोधेभवत्याभासइत्य

ननु तात्पर्यं नाम पुरुषस्य मनोधर्मस्तद्दृशाच्चेद्देदेहे तस्मुते यथार्थत्वं तर्हि प्रतिपुरुषमन्यथैव तात्पर्यदर्शनात्तद्दृशादन्यथैव श्रुत्यर्थः स्यादित्याशंक्य
दार्ष्टांतिकं निगमयन्नुत्तरमाह॥ तस्मादित्यादिना॥ तादर्थ्यमर्थपरत्वं तथात्वं याथार्थ्यं शब्दधर्मः तात्पर्यं तच्च षड्विधलिंगगम्यं तथा च शब्दस्य पुरु
षाभिप्रायवशान्नान्यथार्थत्वमित्यर्थः॥ उक्तमर्थं दृष्टांतेन स्पष्टयति॥ नहीति॥ विचारार्थमुपसंहरति॥ तस्मादिति॥ विद्यासंयुक्तस्यापि कर्मणो मोक्षा
रंभकत्वासंभवस्तच्छब्दार्थः॥ माभूत्कर्मणां मोक्षार्थत्वं किं तावतेत्याशंक्य ब्राह्मणारंभं निगमयति॥ अत इति॥ ब्राह्मणारंभमेवं प्रतिपाद्य तदक्षराणि

तस्माद्वेदप्रामाण्यस्याव्यभिचारात्तादर्थ्ये सति वाक्यस्य तथात्वं स्यान्न तु पुरुषमतिकौशलं नहि पुरुषमतिकौशलात्सविता रूपं न प्रका
शयति तथा वेदवाक्यान्यपि नान्यार्थानि भवंति तस्मान्न मोक्षार्थानि कर्माणीति सिद्धमतः कर्मफलानां संसारत्वप्रदर्शनायैव ब्राह्मणमा

अथ हैनं भुज्युर्लाह्यायनिः पप्रच्छ याज्ञवल्क्येति होवाच॥

रभ्यते॥ अथानंतरमुपरते जारत्कारवे भुज्युरिति नामतो लह्यस्यापत्यं लाह्यस्तदपत्यं लाह्यायनिः पप्रच्छ याज्ञवल्क्येति होवाच आदावु
क्तमश्वमेधदर्शनं समष्टिव्यष्टिफलश्चाश्वमेधः क्रतुर्ज्ञानसमुच्चितो वा केवलज्ञानसंपादितो वा सर्वकर्मणां पराकाष्ठा भ्रूणहत्याश्वमेधा
भ्यां न परं पुण्यपापयोरिति हि स्मरंति तेन हि समष्टिं व्यष्टीश्च प्राप्नोति व्याकरोति॥ अथेति॥ याज्ञवल्क्यमभिमुखीकृत्य भुज्युः स्वस्य पूर्वनिर्वृत्तां क
थां कथयन् तामवतारयितुमश्वमेधस्वरूपं तत्फलं च विभज्य दर्शयति॥ आदाविति॥ क्रतुरुक्त इति पूर्वेण संबंधः॥ क्रतोर्द्वैविध्यमाह॥ ज्ञानेति॥
अश्वमेधस्य द्विधा विभक्तस्य सर्वकर्मोत्कर्षमुद्गिरति॥ सर्वकर्मणामिति॥ तस्य पुण्यश्रेष्ठत्वे मानमाह॥ भ्रूणहत्येति॥ समष्टिव्यष्टिफलश्चेत्युक्तं स्पष्ट

बृ·र·
२५

अश्वमेधेनसहकारिकामनाभेदेनसमष्टिंसमनुगतरूपांव्यष्टीश्चव्यावृत्तरूपादेवताःप्राप्नोतीत्यर्थः॥कापुनर्व्यष्टयोविवक्ष्यंतेतत्राह॥तत्रेति॥अग्नि
रादित्योवायुरित्याद्याव्यष्टयोदेवताः॥सोग्निरभवदित्यादावंडांतर्वर्तिन्योश्वमेधफलभूतादर्शिताइत्यर्थः॥कातर्हिसमष्टिर्देवतेत्युक्तेतत्रैवोक्तंस्मा
रयति॥मृत्युरिति॥तामेवसमष्टिरूपांदेवतांप्रपंचयितुमिदंब्राह्मणमितिवक्तुंपातनिकांकरोति॥मृत्युश्चेति॥प्राणात्मकबुद्धिधर्मोशनायाक
र्थंमृत्योर्लक्षणंतत्राह॥बुध्यात्मेति॥तर्हिबुद्धेर्व्यष्टित्वान्मृत्युरपितथास्यादित्याशंक्याह॥समष्टिरिति॥प्रागेवव्यष्ट्युत्पत्तेरुत्पन्नत्वेनसमष्टित्वंसाध
यति॥प्रथमजइति॥सर्वाश्रयत्वंदर्शयति॥सूत्रमिति॥तत्रवायुर्वैगौतमेत्यादिवाक्यंप्रमाणमितिसूचयति॥वायुरिति॥तथापिकथंप्रथमजत्वंभू

तत्रव्यष्टयोनिर्ज्ञाताअंडांतरविषयाःअश्वमेधयागफलभूताःमृत्युरस्यात्माभवत्येतासांदेवतानामेकोभवतीत्युक्तंमृत्युश्चाशना
यालक्षणोबुध्यात्मा॥समष्टिःप्रथमजोवायुःसूत्रंसत्यंहिरण्यगर्भस्तस्यव्याकृतोविषयोयदात्मकंसर्वंद्वैतैकत्वंयःसर्वभूतांतरात्मा
लिंगममूर्तरसोयदाश्रितानिसर्वभूतकर्माणियःकर्मणांकर्मसंबंधिनांचविज्ञानानांपरागतिःपरंफलंतस्यक्रियानुगोचरःक्रिय
तीव्याप्तिःसर्वतःपरिमंडलीभूतासावक्तव्या

ज्ञानांप्रथममुत्पत्तेरित्याशंक्याह॥सत्यमिति॥हिरण्यगर्भस्योक्तलक्षणत्वेपिकिमायातंमृत्यो
रित्याशंक्याह॥हिरण्यगर्भइति॥जगदेवसमष्टिव्यष्टिरूपंनसूत्रमित्याशंक्याह॥यदात्मकमिति॥द्वैतंव्यष्टिरूपमेकत्वंसमष्टिरूपंतत्सर्वंयदा
त्मकंतस्येतिसंबंधः॥तस्योक्तप्रमाणत्वंप्रकटयति॥यःसर्वेति॥विज्ञानात्मानंव्यावर्त्तयतिलिंगमिति॥यस्यहोषरसइतिश्रुतिमनुसृत्याह॥अ
मूर्तेति॥तस्यसाधनाश्रयत्वंदर्शयति॥यदाश्रितानीति॥तस्यैवफलाश्रयत्वमाह॥यःकर्मणामिति॥परागतिरित्यस्यैवव्याख्यानं॥परंफलमिति
॥एवंभूमिकामारचय्यानंतरंब्राह्मणमवतारयति॥तस्येति॥प्रश्नमेवप्रकटयति॥कियतीति॥सर्वतःपरितोमंडलभावमासाद्यस्थितेतिया

अ·
५

॥
रामः
२५

हैंयिष्यामी ४ यैज्ञः प्राखाध्यायिनः ४

नन्नु किमितिसावक्तव्यातस्यामुक्तायामपिवक्तव्यसंसाराविशेषादाकांक्षाविश्रांत्यभावादतआह॥तस्यामिति॥इयान्वंधोनाधिकोन्यूनोवेत्यस्यव्य
वच्छेदेनबंधपरिमाणपरिच्छेदार्थंकर्मफलव्याप्तिरन्नोच्यतेतत्परिच्छेदश्चवैराग्यद्वारामुक्तिहेतुरितिभावः॥ब्राह्मणस्यैवंप्रवृत्तावपिकिमितिभ

तस्यामुक्तायांसर्वसंसारोबंधगोचरउक्तोभवतितस्यचसमष्टिव्यष्ट्यात्मदर्शनस्यालौकिकत्वप्रदर्शनार्थमाख्यायिकामात्मनोव
ताप्रकुरुतेतेनचप्रतिवादिबुद्धिंव्यामोहयामीतिमन्यते॥मद्रेषुमद्रानामजनपदास्तेषुचरकाअध्ययनार्थंव्रतचरणाच्चरकाअध्व
र्यवोवापर्यव्रजामपर्यटितवंतस्तेपतंचलस्यतेवयंपर्यटंतःपतंचलस्यनामतःकाप्यस्यकपिगोत्रस्यगृहानैमगतवंतस्तस्यासीद्दु

मद्रेषुचरकाःपर्यव्रजामतेपतंचलस्यकाप्यस्यगृहानैमतस्यासीत्दुहितागंधर्वगृहीतातमपृच्छामकोसीतिसोब्रवीत्सु
धन्वांगिरसइतितंयदालोकानामंतानपृच्छामाथैनमब्रूमक्वपारिक्षिताअभवन्निति क्वपारिक्षिताअभवन्सत्वापृच्छामियाज्ञ
वल्क्यक्वपारिक्षिताअभवन्निति॥२४॥ हितागंधर्वगृहीतागंधर्वेणामानुषेणसत्वेनकेनचिदाविष्टागंधर्वोवाधिष्ण्योग्निःऋत्वि
ग्देवताविशिष्टविज्ञानत्वादवसीयतेनहिसत्वमात्रस्येदृशंविज्ञानमुपपद्यतेतंसर्वेवयंपरिवारिताःसंतोपृच्छामकोसीतिकस्त्वमसि
किंनामाकिंसंतत्त्वःसोब्रवीद्गंधर्वःसुधन्वानामतःआंगिरसोगोत्रतस्तंयदायस्मिन्कालेलोकानामंतान्पर्यवसानान्यपृच्छामाथैनंगंधर्वम

न्युःस्वस्यपूर्वनिर्वृत्तांकथामाहेत्याशंक्याह॥तस्यचेति॥समष्टिव्यष्ट्यात्मदर्शनस्यालौकिकत्वप्रदर्शनेनवाकिंस्यात्तदाह॥तेनचेति॥इतिमन्यतेभुज्युरि
तिशेषः॥जल्पेपरपराजयेनात्मजयस्येष्टत्वादित्यर्थः॥धिष्ण्यत्वंअग्नेरुपास्यत्वं॥अग्निर्वैदेवानांहोतेतिश्रुतिमाश्रित्याह॥ऋत्विगिति॥यथोक्तगंधर्व
सोमादिव्रतस्थानस्थां दिशिमंडलेषुस्थापितोग्निःधिष्ण्योग्निः=५

अथैनमित्यादेरर्थं विवृणोति॥ भुवनेति॥ भवतेवंगंधर्वं प्रति भवतः प्रश्नस्तथापि किमायातं तदाह॥ सचेति॥ तेन गंधर्ववचनेनेति यावत्॥ दिव्येभ्यो गंधर्वेभ्यः सकाशादित्येतत्॥ एतत् ज्ञानाभावेत्व ज्ञानमप्रतिभा ब्रह्मिष्ठत्वप्रतिज्ञाहानिश्चेत्याह॥ अतइति॥ प्रष्टुरभिप्रायमुक्त्वा प्रश्नाक्षराणि व्याचष्टे॥ सोहमिति॥ प्रच्छमानानत्क पारिक्षिता अभवन्नित्युक्ति गंधर्वं प्रश्नार्था द्वितीया तदनुरूपप्रतिवचनार्थायो हि क्व पारिक्षिता अभवन्निति प्रश्नो गंधर्वं प्र

भुवनकोशपरिमाणज्ञानाय प्रवृत्तेषु सर्वेषात्मानं श्लाघयंतः पृष्टवंतो वयं कथं क्व पारिक्षिता अभवन्निति स च गंधर्वः सर्वमस्म भ्यमब्रवीत्तेन दिव्येभ्यो मया लब्धं ज्ञानं तत्त्वं नास्यतो निगृहीतोसीत्यभिप्रायः सोहं विद्यासंपन्नो लब्धागमो गंधर्वात्त्वां पृच्छामि या ज्ञवल्क्य क्व पारिक्षिता अभवन्नत्वं किं जानासि हे याज्ञवल्क्य कथय पृच्छामि क्व पारिक्षिता अभवन्निति॥ २५॥ सहोवाच याज्ञवल्क्यः उ

सहोवाचोवाच वै सोगच्छन्वै ते तद्यत्राश्वमेधयाजिनो गच्छंतीति क्वन्वश्वमेधयाजिनो गच्छंतीति द्वात्रिंशतं वै देवरथा ह्यान्ययं लोकस्तं समंतं पृथिवी द्विस्तावत्पर्येति तां वाचवैसः वै शब्दः स्मरणार्थ उवाच वै स गंधर्वस्तुभ्यमगच्छन्वै ते पा रिक्षितास्तत्र क्व यत्र यस्मिन्नश्वमेधयाजिनो गच्छंतीति निर्णीते प्रश्न आह क्व नु कस्मिन्नश्वमेधयाजिनो गच्छंतीति तेषां गतिविव क्षया भुवनकोशपरिमाणमाह॥ तिकृतस्तस्य प्रत्युक्तिं सर्वासोस्मभ्यमब्रवीदिति तत्र विवक्ष्यते तृतीयातु मुनिं प्रति प्रश्नार्थेति विभागः॥ ॥१॥ अज्ञानादिनिग्रहं परिहरन्नुत्तरमाह॥ सहोवाचेति॥ स्मरणार्थो गंधर्वाल्लब्धस्य ज्ञानस्येति शेषः॥ किमुवाचेत्यपेक्षायामाह॥ अगच्छन्निति ॥ अहोरात्रमादित्यरथगत्या यावान्पंथा मितस्तावान्देशो द्वात्रिंशद्गुणितस्तत्किरणव्याप्तः स च चंद्ररश्मिव्याप्तेन देशेन साकं पृथिवी स्यात् तेसुच्यते रविचं

ससमुद्रसरिच्छैला तावती पृथिवी स्मृतेति स्मृतेरित्याह॥ द्वात्रिंशतमित्यादिना॥ अयंलोक इत्यस्यार्थमाह॥ तावदिति॥ तत्र लोकभागं विभजते॥ यत्रेति॥ उक्तं लोकमनूद्य अवशिष्टस्यालोकत्वमाह॥ एतावानिति॥ प्रतीकमादाय व्याचष्टे॥ लोकमित्यादिना॥ अन्वयं दर्शयितुं तं लोकमिति पुनरुक्तिः॥ तत्र पौराणिकसंमतिमाह॥ यं घनोदमिति॥ उक्तं हि॥ अंडस्यास्य समंतात्तु सन्निविष्टो घनोदधिः॥ समंताद्धनतोयेन धार्यमाणः स तिष्ठतीति तद्या

द्वात्रिंशतं वै द्वे अधिके त्रिंशतं वै देवरथाह्न्यानि देव आदित्यस्तस्य रथो देवरथस्तस्य रथस्य गत्या अह्ना यावत्परिच्छिद्यते देशपरिमाणं तद्देवरथाह्न्यं तद्द्वात्रिंशद्गुणितं देवरथाह्न्यानि तावत्परिमाणो यं लोको लोकालोकगिरिणा परिक्षिप्तः यत्र वैराजं शरीरं यत्र च कर्मफलोपभोगः प्राणिनां स एष लोक एतावांल्लोकोऽतः परमलोकस्तं लोकं समंतं समंततो लोकविस्ताराद्द्विगुणपरिमाणविस्तारेण परिमाणेन तं लोकं परि

समंतं पृथिवीं द्विस्तावत्समुद्रः पर्येति तद्यावती क्षुरस्य धारा यावद्वा मक्षिकायाः पत्रं॥ तावानंतरेणाकाशस्तानिंद्रः सुपर्णो भूत्वा वायवे प्रायच्छत्तान्वायुरात्मनि धित्वा तत्रागमयद्यत्राश्वमेधयाजिनो भवन्नित्येवमिव वै स वायुमेव प्रशशंस ६ क्षिप्ता पर्येति पृथि

वीतां पृथिवीं तथैव समंतं द्विस्तावद्द्विगुणेन परिमाणेन समुद्रः पर्येति यं घनोदमाचक्षते पौराणिकास्तत्रांडकपालयोर्विवरपरिमाणमुच्यते येन विवरेण मार्गेण बहिर्निर्गच्छंतो व्याप्नुवंत्यश्वमेधयाजिनस्तत्र यावती यावत्परिमाणा क्षुरस्य धाराग्रं यावद्वा सौक्ष्म्येण युक्तं मक्षिकायाः पत्रं॥ तावांस्तावत्परिमाणोंऽतरेण मध्ये अंडकपालयोराकाशः छिद्रं तेनाकाशेनेत्येतत्तान्पारिक्षितानश्वमेधयाजिनः प्राप्तानिंद्रः परमेश्व

वतीत्यादेस्तात्पर्यमाह॥ तत्रेति॥ लोकादिपरिमाणे यथोक्तरीत्या स्थिते सतीति यावत्॥ कपालविवरस्यातुपयुक्तत्वात्किं तत्परिमाणचिंतयेत्याशंक्याह॥ येने

सुपर्णशब्दस्यश्येनसादृश्यमाश्रित्यविशेषेणोपप्रवृत्तिं दर्शयति॥ यद्विषयमिति॥ उक्तार्थे पदमनुवदति सुपर्णइति॥ भूत्वेत्यस्यार्थमाह॥ पक्षेति॥
नन्वग्निचित्योऽग्निरंडाद्बहिरश्वमेधयाजिनो गताः ते स्वयमेव गच्छन्तु किमिति तान्वायवे प्रयच्छतीत्यत्राह॥ मूर्त्तत्वादिति॥ आत्मनश्चित्यस्याग्नेरितियावत्॥

श्चितः सुपर्णो यद्विषयं दर्शनमुक्तं तस्य प्राचीदिक्शिर इत्यादिना सुपर्णः पक्षी भूत्वा पक्षपुच्छाद्यात्मकः सुपर्णो भूत्वा वायवे प्रायच्छत् मूर्त
त्वान्नास्यात्मनो गतिस्तत्रेति तान्पारिक्षितान्वायुरात्मनि धित्वा स्थापयित्वा स्वात्मभूतान्कृत्वा तत्र तस्मिन्नगमयत् कुत्र यत्र पूर्वे तिक्रां
ताः पारिक्षिता अश्वमेधयाजिनोऽभवन्निति एवमिव वै एवमेव स गंधर्वो वायुमेव प्रशशंस पारिक्षितानां गतिं समाप्ताख्यायिका तन्नि

स्तस्माद्वायुरेव व्यष्टिर्वायुः समष्टिरप पुनर्मृत्युं जयति य एवं वेद ततो ह भुज्युर्लाह्यायनिरुपरराम॥२५॥ तृतीयं ब्राह्मणं॥३॥

ईत्तमर्थमाख्यायिकातोपसृत्य स्वेन श्रुतिरूपेणैवाचष्टे स्म ध्यं यस्माद्वायुः स्थावरजंगमानां भूतानामंतरात्मा बहिश्च स एव तस्माद्ध्यात्माधिभूताधिदैवभावेन विविधा याष्टिर्व्याप्तिः स वायुरेव तथा समष्टिः केवलेन सूत्रात्मना वायुरेव एवं वायुमात्मानं समष्टिव्यष्टिरूपात्मकत्वेनोपगच्छति य एवं वेद तस्य किं फलमित्याह अप पुनर्मृत्युं जयति सकृन्मृत्वा पुनर्न म्रियते ततः आत्मनः प्रश्ननिर्णयाद्भुज्युर्लाह्यायनिरुपरराम॥२५॥ ॥इति श्रीमद्बृहदारण्यके पंचमप्रपाठके तृतीयं ब्राह्मणं॥३॥

तत्रेत्यंडाद्बाह्यदेशोक्तिः॥ इति युक्तं वायवे प्रदानमिति शेषः॥
आख्यायिकासमाप्ताविति शब्दः॥ परितो दुरितं क्षीयते येन स परीक्षिदश्वमेधस्तद्याजिनः पारिक्षितास्तेषां गतिं वायुमिति संबंधः॥ मुनिवचने वर्त्तमाने कथमा
ख्यायिकासमाप्तिस्तत्राह॥ समाप्तेति॥ वायुप्रशंसायां हेतुमाह॥ यस्मादिति॥ किं पुनर्यथोक्तवायुतत्वविज्ञानफलं तदाह॥ एवमिति॥२॥ इति बृहदारण्यकेभु

ब्राह्मणांतरमवतारयति॥ अथेति॥ तस्यापुनरुक्तमर्थं वक्तुमार्त्तभागप्रश्नेवृत्तंकीर्त्तयति॥ पुण्येति॥ भुज्युप्रश्नांतेसिद्धमर्थमनुद्रवति॥ पुण्यस्य चेति॥ नामरूपाभ्यांव्याकृतंजगद्धिरण्यगर्भात्मकंतद्विषयमुत्कर्षंनिर्दिशिनष्टि॥ समष्टीति॥ कथंयथोक्तोत्कर्षस्यपुण्यकर्मफलत्वंतत्राह॥ द्वैतेति॥ संप्रत्यनंतरब्राह्मणस्यविषयंदर्शयति॥ यस्त्विति॥ माध्यमिकानामन्येषांचोद्योविवादः किंलक्षणोदेहादीनामन्यतमस्तेभ्योविलक्षणोवेतियावत्॥ इत्येवंविमृश्यात्मनोदेहादिभ्योविवेकेनाधिगमायेदंब्राह्मणमित्याह॥ इत्यात्मनइति॥ विवेकाधिगमस्यभेदज्ञानत्वेनानर्थकरत्वमाशंक्याकहोलप्रश्न

अथहैनमुषस्तश्चाक्रायणःपप्रच्छपुण्यपापप्रयुक्तेग्रहातिग्रहेगृहीतःपुनःपुनर्ग्रहातिग्रहांस्त्यजन्नुपाददत्संसरतीत्युक्तंपुण्यस्यचप रउत्कर्षोव्याख्यातोव्याकृतविषयःसमष्टिव्यष्टिरूपोद्वैतेकृतात्मप्राप्तिर्यस्तुग्रहातिग्रहेर्ग्रस्तःसंसरतिसोस्तिवानास्तिअस्तित्वेचकिंल क्षणइत्यात्मनएवविवेकावगमायोषस्तप्रश्नआरभ्यते॥ तस्यनिरुपाधिस्वरूपस्यक्रियाकारकविनिर्मुक्तस्वभावस्याधिगमाद्यथोक्ता द्बंधनात्प्रमुच्यतेसप्रयोजकादाख्यायिकासंबंधस्तुप्रसिद्धः॥ अथहएनंप्रकृतंयाज्ञवल्क्यंउषस्तोनामतश्चक्रस्यापत्यंचाक्रायणः पप्रच्छयद्ब्रह्मसाक्षादव्यवहितंकेनचितद्द्रष्टुरपरोक्षाद्गौणंनश्रोत्रंब्रह्मादिवत्किंतद्यआत्मात्मशब्देनप्रत्यगात्मोच्यतेतत्रात्मशब्द स्यप्रसिद्धत्वात्सर्वस्या      तात्पर्यंसंगृह्णाति॥ तस्यचेति॥ ब्राह्मणसंबंधमुक्त्वाख्यायिकासंबंधमाह॥ आख्यायिकेति॥ विद्यास्तुत्यर्थासुखावबो धार्थाचाख्यायिकेत्यर्थः॥ भुज्युप्रश्ननिर्णयानंतर्यमथशब्दार्थः॥ संबोधनमभिमुखीकरणार्थं॥ द्रष्टुरव्यवहितमित्युक्तेघटादिवदव्यवधानंगौणमि तिशंकेततन्निराकर्तुंअपरोक्षादित्युक्तं॥ मुख्यमेवद्रष्टुरव्यवहितंस्वरूपंब्रह्मतथाचद्रष्टृधीनसिद्धत्वाभावात्ततोपरोक्षमित्यर्थः श्रोत्रंब्रह्ममनोब्रह्मे त्यादियथागौणंनतथागौणंद्रष्टुरव्यवहितंब्रह्मद्वितीयत्वादित्याह॥ नश्रोत्रेति॥ उक्तमव्यवधानमाकांक्षाद्वारा अनंतरवाक्येनसाधयति॥ किंतदित्यादि

ना॥ तस्यपरिछिन्नत्वशंकांवारयति॥ सर्वेति॥

बृ.र. २९

सर्वनामभ्यां प्रत्यग्ब्रह्मविशेष्यं समर्प्यते॥ इतरैस्तु शब्दैर्विशेषणानीति विभागमभिप्रेत्याह॥ यद्यः शब्दाभ्यामिति इति उच्यते इत्यनेन संबध्यते॥ इ
तिशब्दो द्वितीयप्रश्नसमाप्त्यर्थः॥ तमेव प्रश्नं विवृणोति॥ विस्पष्टमिति॥ तमर्थं वाक्यार्थान्वययोग्यं पृष्टे तस्य दर्शनार्थं प्रवृत्तिमवतारयति॥ एवमुक्त
इति सर्वान्तर इति विशेषोक्त्या प्रश्नस्य विशेषणान्तराणामनास्थामाशंक्याह॥ सर्वविशेषणेति॥ एष सर्वान्तर इति भागस्यार्थं विवृणोति॥ यत्साक्षादि

अ. ५

भ्यंतरः सर्वान्तरो यद्यःशब्दाभ्यां प्रसिद्ध आत्मा ब्रह्मेति तमात्मानं मे मह्यं व्याचक्ष्वेति विस्पष्टं शृंगे गृहीत्वा यथा गां दर्शयति तथाच
क्ष्व सोयमित्येवं कथयस्वेत्यर्थः इति एवमुक्तः प्रत्याह याज्ञवल्क्यः एष ते तव आत्मा सर्वान्तरः सर्वस्याभ्यंतरः सर्वविशेषणोपलक्ष
णार्थं सर्वान्तरग्रहणं यत्साक्षादव्यवहितं अपरोक्षाद्गौणं ब्रह्म बृहत्तममात्मा सर्वस्याभ्यंतरः एतैर्गुणैः समस्तैर्युक्त एषः कोसौ त

अथ हैनमुषस्तश्चाक्रायणः पप्रच्छ याज्ञवल्क्येति होवाच यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्वेत्येष त
आत्मा सर्वान्तरः कतमो याज्ञवल्क्य सर्वान्तरो

वात्मा योयं कार्यकरणसंघातस्तवात्मा येनात्मनात्मवान्स एष तवात्मा तव
कार्यकरणसंघातस्येत्यर्थः॥ तत्र पिंडस्तस्याभ्यंतरे लिंगात्मा करणसंघातस्तृतीयो यश्च संदिह्यमानस्तेषु कतमो मे ममात्मा सर्वा
न्तरस्त्वया विवक्षित इत्युक्तः इतर आह॥ यः प्राणेन मुखनासिकासंचारिणा प्राणिति प्राणचेष्टां करोति येन प्राणः प्रणीयत इत्यर्थः स ते
तव कार्यकरणसंघातस्यात्मा विज्ञानमयः समानमन्यद्यो पानेनापानिति व्यानेन व्यानीतीति काण्वसंदर्भे

ति॥ एष शब्दार्थं प्रश्नपूर्वकमाह
॥ कोसाविति॥ आत्मशब्दार्थं विवृणोति॥ योयमिति॥ येनेत्यत्र स शब्दो द्रष्टव्यः॥ षष्ठ्यर्थं स्पष्टयति॥ तवेति॥ प्रश्नान्तरमुत्थाप्य प्रतिवक्ति॥ तत्रेत्यादिना॥ सर्वान्त

रामः २९

तृतीयोमात्साक्षीप्रणीयतेप्राणनविशिष्टःक्रियतेइतियावत्॥कथमेतावतासंदेहोपाकृतइत्याशंक्यविवक्षितमनुमानंवक्तुंव्याप्तिमाह॥सर्वाइति॥
याखल्वचेतनप्रवृत्तिःसाचेतनाधिष्ठानपूर्विकायथारथादिप्रवृत्तिरित्यर्थः॥येनक्रियंतेसोस्तीतिसंबंधः॥दृष्टांतस्यसाध्यवैकल्यंपरिहरति॥नहीति॥संप्रत्यनुमानमारचयति॥तस्मादिति॥विमताचेष्टाचेतनाधिष्ठानपूर्विकाऽचेतनप्रवृत्तित्वाद्रथादिचेष्टावदित्यर्थः॥प्रतिपद्यतेप्राणादीतिशेषः

सर्वाःकार्यकरणसंघातगताःप्राणनादिचेष्टादारुयंत्रस्येवयेनक्रियंतेनहिचेतनावदनधिष्ठितस्यदारुयंत्रस्येवप्राणनादिचेष्टा
विद्यतेतस्माद्धिज्ञानमयेनाधिष्ठितंविलक्षणेनदारुयंत्रवत्प्राणनादिचेष्टांप्रतिपद्यतेतस्मात्सोस्तिकार्यकरणसंघातविलक्षणो
यश्चेष्टयति॥२६॥१॥सहोवाचोषस्तश्चाक्रायणोयथाकश्चिदन्यथाप्रतिज्ञायपूर्वंपुनर्विप्रतिपन्नोब्रूयादन्यथासौगौरसावश्वोयश्चलति

यःप्राणेनप्राणितिसतआत्मासर्वांतरोयोपानेनापानितिसतआत्मासर्वांतरोयोव्यानेनव्यानीतिसतआत्मासर्वांतरोयउदा
नेनोदानितिसतआत्मासर्वांतरएषतआत्मासर्वांतरः॥२६॥ धावतीतिवापूर्वंप्रत्यक्षंदर्शयामीतिप्रतिज्ञायपश्चाच्चलनादिलिंगै
र्व्यपदिशत्येवमेवैतद्ब्रह्मप्राणनादिलिंगैर्व्यपदिष्टंभवतित्वया॥किंबहुनायत्साक्षागोत्वानिमित्तंव्याजंयदेवसाक्षादपरोक्षाद्ब्रह्मयआ
त्मासर्वांतरस्तंमेव्याचक्ष्वेतीतरआह ॥अनुमानफलमाह॥तस्मात्सोस्तीति॥चेष्टयतिकार्यकरणसंघातमितिशेषः॥२६॥प्रश्नप्रतिवचनयोरनृजु
रूपत्वमाशंकते॥सहोवाचेति॥दृष्टांतमेवस्पष्टयति॥असावित्यादिना॥प्रत्यक्षंगामश्वंवादर्शयामीतिपूर्वंप्रतिज्ञायपश्चाद्यश्चलत्यसौगौर्योवाधावतिसोश्व
इतिचलनादिलिंगैर्यथागवादिव्यपदिशतिएवमेवब्रह्मप्रत्यक्षंदर्शयामीतिमत्प्रश्नानुसारेणप्रतिज्ञायप्राणनादिलिंगैस्तद्व्यपदिशतस्तेप्रतिज्ञाहानिरनव

प्रत्युक्तितात्पर्यमाह॥ यथेति॥ प्रतिज्ञानुवर्त्तनमेवाभिनयति॥ तत्तथेति॥ कतमो याज्ञवल्क्येत्यादिप्रश्नस्य तात्पर्यमाह॥ यस्तु नरिति॥ न दृष्टेरित्यादिवाक्यस्य तात्पर्यं वदन्नुत्तरमाह॥ न दशक्यत्वादिति॥ आत्मनो वस्तुत्वाद्घटादिवद्विषयीकरणं नाशक्यमिति शंकते॥ कस्मादिति॥ वस्तुस्वरूपमनुसृत्य परिहरति॥ आहेति॥ घटादेरपि तर्हि वस्तुस्वाभाव्यान्माभूद्विषयीकरणमिति मन्वानः शंकते॥ किंपुनरिति॥ दृष्ट्यादिसाक्षित्वं वस्तुस्वाभाव्यं तत्रा

यथा मया प्रथमं प्रतिज्ञातस्तव आत्मा एवंलक्षण इति तां प्रतिज्ञामनुवर्तेएव तत्तथैव यथोक्तं मया यत्पुनरुक्तं तमात्मानं घटादिवद्विषयीकुर्विति तदशक्यत्वान्न क्रियते कस्मात्पुनस्तदशक्यमित्याह वस्तुस्वाभाव्यात्॥ किंपुनस्तद्वस्तुस्वाभाव्यं दृष्ट्यादिद्रष्टृत्वं दृष्टेर्द्रष्टा ह्यात्मा दृष्टिरिति हि द्विविधा भवति॥ लौकिकी पारमार्थिकी चेति तत्र लौकिकी चक्षुःसंयुक्तान्तःकरणवृत्तिः सा क्रियत इति जायते विनश्यति

सहोवाचोषस्तश्चाक्रायणो यथा विब्रूयादसौ गौरसावश्व इत्येवमेवैतद्व्यपदिष्टं भवति यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्वेत्येष त आत्मा सर्वान्तरः कतमो याज्ञवल्क्य

च या त्वात्मनो दृष्टिरग्न्युष्णत्वप्रकाशादिवत्सा च द्रष्टुः स्वरूपत्वान्न जायते न विनश्यति च॥ सा क्रियमाणयोपाधिभूतया संसृष्टेवेति व्यपदिश्यते द्रष्टेति भेदवच्च द्रष्टा दृष्टिरिति च विषयत्वं नचैवं वस्तु

स्वाभाव्यं घटादेरस्तीत्युत्तरमाह॥ दृष्ट्यादीति॥ दृष्ट्यादिसाक्षिणोपि दृष्टिविषयत्वं किं न स्यादित्याशंक्याह॥ दृष्टेरिति॥ यथा प्रदीपो लौकिकज्ञानेन प्रकाश्यो न स्वप्रकाशकं ज्ञानं प्रकाशयति तथा दृष्टिसाक्षी दृष्ट्या न प्रकाश्यत इत्यर्थः॥ दृष्टेर्द्रष्टेव नास्तीति सौगतास्तान्प्रत्याह॥ दृष्टिरितीति॥ लौकिकीं व्याचष्टे॥ तत्रेति॥ पारमार्थिकीं दृष्टिं व्याकरोति॥ या त्विति॥ नन्वात्मा नित्यदृष्टिस्वभावश्चेत्कथं द्रष्टेत्यादिव्यपदेशः सिध्यति तत्राह॥ सा क्रियमाणेति॥ साक्ष्यबुद्धितद्वृत्तिगतं

आत्मनो नित्यदृष्टिस्वभावत्वेऽकथं पश्यति न पश्यति चेति कादाचित्को व्यवहार इत्याशंक्याह॥ यासाविति॥ या बहुविशेषणा लौकिकी दृष्टिरसौ तत्प्रतिच्छायेति संबंधः॥ तथा तत्प्रतिच्छाया व्याप्तैवेति यावत्॥ किमित्यौपचारिको व्यपदेशो मुख्यस्तु किं न स्यादित्याशंक्याह॥ नत्विति॥ दृष्टेर्वस्तुतो न विक्रिया यावतेत्यत्र वाक्यशेषमनुकूलयति॥ तथा चेति॥ उक्तेऽर्थे न दृष्टेरित्यादिश्रुतिमवतार्य व्याचष्टे॥ तमिममित्यादिना॥ उक्तमेव प्रपंचयति॥ यासाविति॥ न दृष्टेरि

यासौ लौकिकी दृष्टिश्चक्षुर्द्वारा रूपोपरक्ता जायमानैव नित्यया आत्मदृष्ट्या संसृष्टैव तत्प्रतिच्छाया व्याप्तैव जायते तथा विनश्यति च तेनोपचर्यते द्रष्टा सदा पश्यन्नपि पश्यति न पश्यति चेति न तु पुनर्द्रष्टुर्दृष्टेः कदाचिदपि अन्यथात्वं तथा च वक्ष्यति षष्ठे ध्यायतीव लेलायतीव न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यत इति च तमिममर्थमाह लौकिक्या दृष्टेः कर्मभूताया द्रष्टारं स्वकीयया नित्यया दृष्ट्या व्याप्तारं न पश्येः यासौ

सर्वांतरो न दृष्टेर्द्रष्टारं पश्येर्न श्रुतेः श्रोतारꣳ शृणुया न मतेर्मंतारं मन्वीथा न विज्ञातेर्विज्ञातारं विजानीया

लौकिकी दृष्टिः कर्मभूता सा रूपोपरक्ता रूपाभिव्यंजिका नात्मानं स्वात्मनो व्याप्तारं प्रत्यंचं व्याप्नोति॥ तस्मात्तं प्रत्यगात्मानं दृष्टेर्द्रष्टारं न पश्येः तथा श्रुतेः श्रोतारं न शृणुयाः तथा मतेर्मनोवृत्तेः केवलायाः व्याप्तारं न मन्वीथाः तथा विज्ञातेः केवलाया बुद्धिवृत्तेर्व्याप्तारं न विजानीयाः एष वस्तुनः स्वभावोऽतो नैव दर्शयितुं शक्यते गवादिवन्न दृष्टेर्द्रष्टारमित्यत्राक्षराण्यन्यथा व्याचक्षते केचित्॥ न दृष्टेर्द्रष्टारं दृष्टेः

सादिवाक्यार्थं निगमयति॥ तस्मादिति॥ उक्तन्यायमुत्तरवाक्येष्वतिदिशति॥ तथेति॥ उक्तं वस्तुस्वाभाव्यमुपसंहृत्य फलितमाह॥ एष इति॥ न दृष्टेरित्यत्र स्वपक्षमुक्त्वा भर्तृप्रपंचपक्षमाह॥ न दृष्टेरिति॥ कथमक्षराणामन्यथा व्याख्येत्याशंक्य तदिष्टमक्षरार्थमाह॥ दृष्टेरिति॥ इतिशब्दो व्या

सू·र·
३०

एवंव्याकुर्वतामभिप्रायमाह॥ दृष्टेरिति॥ कर्मणि षष्ठीमेव स्फुटयति॥ सा दृष्टिरिति॥ षष्ठीं व्याख्याय द्वितीयां व्याचष्टे॥ द्रष्टारमितीति पदार्थमु-
क्त्वा वाक्यार्थमाह॥ तेनेति॥ उक्तां परकीयव्याख्यां दूषयति॥ तत्रेति॥ दृष्टिकर्तृत्वविवक्षायां तृजंतेनैव तत्सिद्धेः षष्ठी निरर्थिकेत्यर्थः॥ कथं पुन-
र्व्याख्यातारो यथोक्तं दोषं न पश्यंतीति तत्राह॥ पश्यतां चेति॥ षष्ठीनैरर्थक्यं प्रागुक्तमाकांक्षाद्वारा समर्थयते॥ कथमित्यादिना॥ किं यत्तर्हि इहार्थवदि-
त्याशंक्याह॥ तदेति॥ तत्र हेतुमाह॥ यस्मादिति॥ क्रियाधात्वर्थः कर्तृप्रत्ययार्थस्तथा चैकेनैव पदेनोभयलाभात्पृथक्क्रियाग्रहणमनर्थकमित्यर्थः॥

अ·
५

कर्तारं दृष्टिभेदस्य कृत्वा दृष्टिमात्रस्य कर्तारं न पश्येरिति — दृष्टेरिति कर्मणि षष्ठी सा दृष्टिः क्रियमाणा घटवत्कर्म भवति द्रष्टारमि-
ति तृजंतेन द्रष्टुर्दृष्टिकर्तृत्वमाचष्टे तेनासौ दृष्टेर्द्रष्टा दृष्टेः कर्तेति व्याख्यातॄणामभिप्रायः तत्र दृष्टेरिति षष्ठ्यंतेन दृष्टिग्रहणं निरर्थक-
मिति दोषं न पश्यंति पश्यतां वा पुनरुक्तमसारः प्रमादपाठ इति वानादरः कथं पुनरानर्थक्यं तृजंतेनैव दृष्टिकर्तृत्वस्य सिद्धत्वाद्दृष्टेरिति
निरर्थकं तदा द्रष्टारं न पश्येरित्येतावदेव वक्तव्यं यस्माद्धातोः परस्तृच् श्रूयते तद्धात्वर्थकर्तरि हि तृच् स्मर्यते॥ गंतारं भेत्तारं वा नयतीत्येता-
वानेव हि शब्दः प्रयुज्यते न तु गतेर्गंतारं भिदेर्भेत्तारमित्यस्त्यर्थविशेषप्रयोक्तव्यः न चार्थवादत्वेन हातव्यं सत्यां गतौ न च प्रमादपाठः स-
र्वेषामविगानात्तस्माद्व्याख्यातॄणामेव बुद्धिदौर्बल्यं नाध्येतृप्रमादो यथा तस्मादभिन्नव्याख्यातं लौकिकदृष्टेर्विविच्य नित्यदृष्टिं विशिष्ट दृष्टेरित्य-

स्यानर्थकत्वं दृष्टांतेन साधयति॥ गंतारमित्यादिना॥ अर्थवादत्वेन तर्हीदमुपात्तमित्याशंक्याह॥ न चेति॥ विधिशेषत्वाभावादस्मदुक्तगत्या चार्थवत्त्वसंभ-
वादित्यर्थः॥ अथ परपक्षे निरर्थकमेवेदं पदं प्रमादात्पठितमिति चेन्नेत्याह॥ न चेति॥ सर्वेषां काण्वमाध्यंदिनानामिति यावत्॥ कथं तर्हीदं पदमनर्थकमि-
ति परेषां प्रतीतिस्तत्राह॥ तस्मादिति॥ कथं पुनर्भवतामपि दृशेर्द्विरुपादानमुपपद्यते तत्राह॥ यथात्विति॥ प्रदर्शयितव्यपदादुपरिष्टादितिशब्दो द्रष्टव्यः॥

राम:
३०

कर्तृकर्मविशेषणत्वेनसाक्षिसाक्ष्यसमर्पकत्वेनेतियावत्॥समर्पणमपिकुतोपयुज्यतेतत्राह॥आत्मेति॥दृष्ट्यादिसाक्ष्यात्मानंतद्विषयइतितत्स्वरूपनि
श्चयार्थंसाक्ष्यादिसमर्पणमित्यर्थः आत्मानित्यदृष्टिस्वभावोनदृश्यायादृष्टेर्विषयइत्येवचेन्नदृष्टेरित्यादिवाक्यस्यार्थस्तदानहीत्यादिनाऽस्यैक
वाक्यत्वंसिध्यतितस्माद्यथोक्तार्थत्वमेवनदृष्टेरित्यादिवाक्यस्येत्याह॥नहीति॥आत्माकूटस्थदृष्टिरित्यत्रतलवकारश्रुतिंसंवादयति॥तथाचेति॥

आत्माप्रदर्शयितव्यःतथाकर्मकर्तृविशेषणत्वेनदृष्टिशब्दस्यद्विःप्रयोगउपपद्यतेआत्मस्वरूपनिर्धारणायनहिद्रष्टुर्द्रष्टेरितिच
प्रदेशांतरवाक्येनैकवाक्यतोपपन्नाभवति॥तथाचचक्षूंषिपश्यतिश्रोत्रमिदंश्रुतमितिश्रुत्यंतरेणैकवाक्यतोपपन्नान्यायाच्चैवमेव
ह्यात्मनोनित्यत्वमुपपद्यतेविक्रियाभावेविक्रियावच्चनित्यमितिचविप्रतिषिद्धंध्यायतीवलेलायतीवनहिद्रष्टुर्दृष्टेर्विपरिलोपोविद्यते

एषतआत्मासर्वांतरोतोन्यदार्तंततोहोषस्तश्चाक्रायणउपरराम॥२७॥चतुर्थंब्राह्मणं॥४॥

एषनित्योमहिमाब्राह्मणस्येतिचश्रुत्यक्षराण्यन्यथानगच्छंतिनन्तुद्रष्टाश्रोतामंताविज्ञातेत्येवमादीन्यप्यक्षराण्यात्मनोऽविक्रियत्वेन
गच्छंतीतिनयथाप्राप्तलौकिकवाक्यानुवादित्वात्तेषांनात्मतत्त्वनिर्धारणार्थानितानिनदृष्टेर्द्रष्टारमित्येवमादीनामन्यार्थासंभवाद्यथो

तस्यकूटस्थदृष्टित्वेहेत्वंतरमाह॥न्यायाच्चेति॥तमेवन्यायंविशदयति॥एवमेवेति॥विपक्षेदोषमाह॥विक्रियावच्चेति॥इतश्चात्मनोनास्तिविक्रियावत्त्व
मित्याह॥ध्यायतीवेति॥अन्यथाक्रियावत्त्वेसतीतियावत्॥अविक्रियत्वेपिश्रुत्यक्षराण्यनुपपन्नानीतिशंकते॥नन्विति॥नतेषांविरोधोदृष्टंदृष्ट्यादिक
र्तृत्वमनूद्यप्रवृत्तेलौकिकेवाक्येतदर्थानुवादित्वादुक्तश्रुत्यक्षराणांस्वार्थेप्रामाण्याभावादितिपरिहरति॥नेत्यादिना॥नदृष्टेरित्यादीन्यपितर्हिश्रुत्यक्षरा

अन्यार्थो दृष्ट्यादिकर्त्ता यथोक्तोर्थो दृष्ट्यादिसाक्षी द्रष्टृपदस्य साक्षिविषयत्वे सिद्धे दृष्टेरिति साक्ष्यसमर्पणात्तदर्थवत्त्वोपपत्तिरित्युपसंहरति॥ तस्मादि
ति॥ पक्षांतरं निराकृत्य स्वपक्षमुपपाद्यानंतरं वाक्यं विभजते॥ एष इति॥ अन्यदार्त्तमिति विशेषणसामर्थ्यसिद्धमर्थमाह॥ एतदेवेति॥ इति बृहदार
ण्यके उषस्तब्राह्मणं चतुर्थं॥४॥ ब्राह्मणत्रयार्थसंगतिं वक्तुमनुवदति॥ बंधनमिति॥ चतुर्थब्राह्मणार्थं संक्षिपति॥ यश्चेति॥ उत्तरब्राह्मणतात्पर्यमा

तस्मादनवबोधादेव हि विशेषणं परित्यक्तं दृष्टेरिति एष ते तव आत्मा सर्वैरुक्तैर्विशेषणैर्विशिष्टः। तस्मात् तस्मादात्मनः अन्यदार्त्तं कार्यं वा
शरीरं करणात्मकं वा लिंगमेतदेवैकमनार्त्तमविनाशि कूटस्थं ततो होषस्तश्चाक्रायण उपरराम॥ इति श्रीमद्बृहदारण्यके पंचमे प्रपाठ
के चतुर्थं ब्राह्मणभाष्यं॥४॥ बंधनं सप्रयोजकमुक्तं यश्च बद्धस्तस्याप्यस्तित्वमधिगतं व्यतिरिक्तत्वं च तस्येदानीं बंधमोक्षसाधनं सस

अथ हैनं कहोलः कौषीतकेयः पप्रच्छ याज्ञवल्क्येति होवाच यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वांतरस्तं मे व्याचक्ष्वे
त्येष त आत्मा सर्वांतरः कतमो याज्ञवल्क्य

न्यासमात्मज्ञानं वक्तव्यमिति कहोलप्रश्न आरभ्यते अथ हैनं कहोलो नामतः कु
षीतकस्यापत्यं कौषीतकेयः पप्रच्छ याज्ञवल्क्येति होवाचेति पूर्ववद्यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वांतरस्तं मे व्याचक्ष्वेति यं
विदित्वा बंधनात्प्रमुच्यते याज्ञवल्क्य आह एष ते तवात्मा किमुषस्तकहोलाभ्यामेक आत्मा पृष्टः किं वा भिन्नावात्मानौ तुल्यलक्षणाविति

ह॥ तस्येति॥ उषस्तप्रश्नानंतर्यमथशब्दः॥ पूर्ववदित्यभिमुखीकरणार्थं संबोधितवानित्यर्थः॥ बंधध्वंसिज्ञानप्रश्नो नात्र प्रतिभाति॥ किं त्वनुवादमा
त्रमित्याशंक्याह॥ यं विदित्वेति॥ तं व्याचक्ष्वेति पूर्वेण संबंधः॥ प्रश्नयोरवांतरविशेषप्रदर्शनार्थं परामृशति॥ किमुषस्तेति॥ तत्र पूर्वपक्षं गृह्णाति॥

उक्तमर्थं व्यतिरेकद्वारा विवृणोति॥ यदिहीत्यादिना॥ अथैकं वाक्यं वस्तुपरं तस्यार्थवादो द्वितीयं वाक्यं नेत्याह॥ न चेति॥ द्वयोर्वाक्ययोस्तुल्यलक्षण
त्वे फलितमाह॥ तस्मादिति॥ तत्राद्यं वाक्यं क्षेत्रज्ञमधिकरोति द्वितीयं परमात्मानमित्यभिप्रेत्याह॥ क्षेत्रज्ञेति॥ ब्राह्मणद्वयेनार्थद्वयं विवक्षितमिति
भेदप्रपंचप्रस्थानं प्रत्याह॥ तन्नेति प्रश्नप्रतिवचनयोरेकरूपत्वान्नार्थभेदोस्तीत्युक्तमुपपादयति॥ एष त इति॥ तथाप्यर्थभेदेकानुपपत्तिस्तत्राह॥ न
चेति॥ तदेवोपपादयति॥ एको हीति॥ कार्यकरणसंघातभेदादात्मभेदमाशंक्याह॥ न चेति॥ जातितः स्वभावतोहमहमित्येकाकारस्फुरणादि

युक्तं प्रश्नयोरपुनरुक्तत्वोपपत्तेर्यदि ह्येक आत्मा उषस्तकहोलप्रश्नयोर्विवक्षितस्तत्रैकेनैव प्रश्नेनाधिगतत्वात्तद्विषयो द्वितीयः
प्रश्नोऽनर्थकः स्यान्न चार्थवादरूपत्वं वाक्यस्य तस्माद्भिन्नावेतावात्मानौ क्षेत्रज्ञपरमात्माख्याविति केचिद्व्याचक्षते॥ तन्न॥ न वेति
प्रतिज्ञानादेष त आत्मेति हि प्रतिवचने प्रतिज्ञानादेष त आत्मैष त आत्मेति हि प्रतिवचने प्रतिज्ञातं न चैकस्य कार्यकरणसंघातस्य
द्वावात्मानावुपपद्येते एको हि कार्यकरणसंघात एकेनात्मनात्मवान्न चोषस्तस्यान्यः कहोलस्यान्यो जातितो भिन्न आत्मा भवति द्वयो
र्गौणत्वात्मत्वसर्वांतरत्वानुपपत्तेर्यद्येकमगौणं ब्रह्म द्वयोरितरेणावश्यं गौणेन भवितव्यं तथात्मत्वं सर्वांतरत्वं च विरुद्धत्वात्पदार्था
नां यद्येकं सर्वांतरं ब्रह्मात्मा मुख्यः इतरेणात्मनाऽमुख्येनावश्यं भवितव्यं तस्मादेकस्यैव द्विः श्रवणं विशेषविवक्षयायत्तु
सर्थः॥ इतश्च न तत्त्वभे

द इत्याह॥ द्वयोरिति॥ तदेव स्फुटयति॥ यदीति॥ द्वयोर्मध्ये यद्येकं ब्रह्मागौणं तदेतरेण गौणेनावश्यं भवितव्यं तथात्मत्वादि यद्येकस्येष्टं तदेतरस्यानात्म
त्वादिकृतः स्यादिति चेत्तत्राह॥ विरुद्धत्वादिति॥ उक्तोपपादनपूर्वकं द्विः श्रवणस्याभिप्रायमाह॥ यदीत्यादिना॥ अनेकमुख्यत्वासंभवाद्वस्तुतः परिच्छि
न्नस्य घटवदब्रह्मत्वादनात्मत्वाच्चैकमेव मुख्यं प्रत्यग्भूतं ब्रह्मेत्यर्थः॥ यदि जीवेश्वरभेदाभावात्प्रश्नयोर्नार्थभेदस्तर्हि पुनरुक्तिरनर्थिकेत्याशंक्याह॥ तस्मादिति॥

अनुक्तविशेषकथनार्थमुक्तपरिमाणंनिर्णेतुमुक्तानुवादश्चेदनुक्तोविशेषस्तर्हि प्रदर्श्यतामितिपृच्छति॥कः पुनरिति॥बुभुत्सितंविशेषंदर्शयति॥ उच्यतइति॥इतिशब्दः क्रियापदेनसंबध्यते॥किमित्येषविशेषोनिर्दिश्यतेतत्राह॥यद्विशेषेति॥अर्थभेदासंभवेफलितमाह॥तस्मादिति॥योऽशनायेत्यादिनानुविवक्षितविशेषोक्तिरितिशेषः॥एकमेवात्मतत्त्वमधिकृत्यप्रश्नावित्यन्नचोदयति॥नन्विति॥विरुद्धधर्मवत्त्वान्मिथोभिन्नौप्रश्नार्थावित्येतत्दूषयति॥नेति॥परिहृतत्वमेवप्रकटयति॥नामरूपेति॥तयोर्विकारः कार्यकरणलक्षणः संघातः सएवोपाधिभेदस्तेनसंपर्क

पूर्वोक्तेनसमानंद्वितीयेप्रश्नोत्तरेउक्तंतावन्मात्रंपूर्वस्यैवानुवादस्तस्यैवानुक्तः कश्चिद्विशेषोवक्तव्यइतिकः पुनरसौविशेषइत्युच्यतेपूर्वस्मिन्प्रश्नेअस्तिव्यतिरिक्तआत्मायस्यायंसप्रयोजकोबंधउक्तइतिद्वितीयेतुतस्यैवात्मनोऽशनायादिसंसारधर्मातीतत्वंविशेषउच्यते॥यद्विशेषपरिज्ञानात्संन्याससहितात्पूर्वोक्ताद्बंधनाद्विमुच्यतेतस्मात्प्रश्नप्रतिवचनयोरेषतआत्मेत्येवमंतयोस्तुल्यार्थतैवननुकथमेकस्यैवात्मनोऽशनायाद्यतीतत्वंतद्वत्त्वंचेतिविरुद्धधर्मसमवायित्वमितिनपरिहृतत्वान्नामरूपविकारकार्यकरणलक्षणसंघातोपाधिभेदसंपर्कजनितभ्रांतिमात्रंहिसंसारित्वंइत्यसकृदवोचामविरुद्धश्रुतिव्याख्यानप्रसंगेनचयथारज्जुशुक्तिकागगनादयः सर्परजतमलिनाभवंतिपराध्यारोपितधर्मविशिष्टाः स्वतश्चकेवलाएवरज्जुशुक्तिकागगनादयः नचैवंविरुद्धधर्मसमवायित्वेपदार्थानांकश्चनविरोधो स्तस्मिन्नहंममाध्यासस्तेनजनिताभ्रांतिरहंकर्तेत्याद्यातावन्मात्रंसंसारित्वमित्यनेकशोऽभ्युसादितंतस्मान्नास्तिवस्तुतोविरुद्धधर्मवत्त्वमित्यर्थः॥किंच॥सविशेषत्वनिर्विशेषत्वश्रुत्योर्विषयविभागोक्तिप्रसंगेनसंसारित्वस्यमिथ्यात्वंमधुब्राह्मणांतेऽवोचामेत्याह॥विरुद्धेति॥कथंतर्हिविरुद्धधर्मवत्त्वप्रतीतिरित्याशंक्याह॥यथेति॥परेणपुरुषेणाज्ञानेनवाध्यारोपितैः सर्पादिभिर्धर्मैर्विशिष्टाइतियावत्॥स्वतश्चाध्या

प्रतिभासतोविरुद्धधर्मवत्वेपिक्षेत्रज्ञेश्वरयोर्भिन्नत्वाद्भिन्नार्थावेवप्रश्नावितिचेन्नेत्याह॥नचैवमिति॥निरुपाधिकरूपेणासंसारित्वंसोपाधिरूपेणसं
सारित्वमित्यविरोधउक्तः॥इदानीमुपाध्यभ्युपगमेसद्द्वयत्वंसतश्चैवघटादेरुपाधित्वदृष्टेरितिशंकते॥नान्येति॥सलिलातिरेकेणनसंतिफेनाद
योविकारानापिमृदाद्यतिरेकेणतद्विकाराःशरावादयःसंतीतिदृष्टांतात्तस्ययुक्तिबलादविद्यानामरूपरचितकार्यकरणसंघातस्याविद्यामात्रत्वा
त्तस्याश्चाविद्यायानिरासान्नैवमितिपरिहरति॥नेत्यादिना॥कार्यसत्वमभ्युपगम्योक्तमिदानींतदपिनिरूप्यमाणेनास्तीत्याह॥यदात्विति॥नेहना

नामरूपोपाध्यस्तित्वेएकमेवाद्वितीयंब्रह्मनेहनानास्तिकिंचनेतिश्रुत्योर्विरुध्येरन्नितिचेन्नसलिलफेनदृष्टांतेनपरिहृतत्वान्मृदादि
दृष्टांतेश्चयदातुपरमात्मदृष्ट्यापरमात्मतत्वानुसारिभिरन्यत्वेनानिरूप्यमाणेनामरूपेमृदादिविकारवद्वस्त्वंतरेतत्वतोनस्तः
सलिलफेनघटादिविकारवदेवतदातदपेक्ष्यैकमेवाद्वितीयंनेहनानास्तिकिंचनेत्यादिपरमार्थदर्शनगोचरत्वंप्रतिपद्यतेयदातुस्वा
भाविक्याविद्ययाब्रह्मस्वरूपंरज्जुशुक्तिकागगनस्वरूपवदेवस्वेनैवरूपेणवर्तमानंकेनचिदस्पृष्टस्वभावमपिसन्नामरूपकृतका
र्यकरणोपाधिभ्योविवेकेननावधार्यतेनामरूपोपाधिदृष्टिरेवचभवतिस्वाभाविकीतदासर्वोयंवस्त्वंतरास्तित्वव्यवहारोस्तिचा
यंभेदकृतोमिथ्याव्यवहारोयेषांब्रह्मतत्वादन्यत्वेनवस्तुविद्यतेयेषांचनास्ति॥ नास्तिकिंचनेत्यादिश्रुत्यनुसारिभिर्वस्तुदृष्ट्यानिरूप्यमाणे
नामरूपेपरमात्मतत्वादन्यत्वेनानन्यत्वेनवानिरूप्यमाणेतत्वतोवस्त्वंतरेयदातुनस्तइतिसंबंधः॥मृदादिविकारवदित्युक्तंप्रकटयति॥सलिलेति
॥तदातत्सर्वमात्मतत्वमपेक्ष्येतियोजनीयं॥कदातर्हिलौकिकोव्यवहारस्तत्राह॥यदात्विति॥अविद्ययास्वाभाविक्याब्रह्मयदोपाधिभ्योविवेकेननावधा
र्यतेतदालौकिकोव्यवहारश्चेत्तर्हिविवेकिनांनासौस्यादित्याशंक्याह॥अस्तिचेति॥भेदभानप्रयुक्तोव्यवहारोविवेकिनांअविवेकिनांचतुल्यएववस्त्वंतरा

बृ॰ ६॰ ३३

ननुयथाप्रतिभासंवस्त्वंतरंपारमार्थिकमेवकिंनस्यात्तत्राह॥ परमेति॥ किंद्वितीयंवस्तुतत्त्वतोस्तिकिंवानास्तीतिवस्तुनिनिरूप्यमाणेसतिश्रुत्यनु
सारेणतत्त्वदर्शिभिरेकमेवाद्वितीयंब्रह्माव्यवहार्यमितिनिर्धार्यते॥ तेनव्यवहारदृष्ट्याश्रयणेनभेदकृतोमिथ्याव्यवहारस्तत्त्वदृष्ट्याश्रयणेनचतत्
दभावविषयःशास्त्रीयोव्यवहारइत्युभयविधव्यवहारसिद्धिरित्यर्थः॥ तत्रशास्त्रीयव्यवहारोपपत्तिंप्रपंचयति॥ नहीति॥ तथाचविद्यावस्थायांशा
स्त्रीयोभेदव्यवहारस्तदितरव्यवहारस्त्वाभासमात्रमितिशेषः॥ अविद्यावस्थायांलौकिकव्यवहारोपपत्तिंविवृणोति॥ नचनामेति॥ उभयविधव्य

परमार्थवादिभिस्तुश्रुत्यनुसारेणनिरूप्यमाणेवस्तुनिकिंतत्त्वतोस्तिकिंवानास्तीतिब्रह्मैकमेवाद्वितीयंअनंतरमबाह्यंसर्वसंव्यव
हारशून्यमितिनिर्धार्यतेतेननकश्चिद्विरोधःनहिपरमार्थावधारणनिष्ठायांवस्त्वंतरास्तित्वंप्रतिपद्यामहेएकमेवाद्वितीयमनंत
रमबाह्यमितिश्रुतेर्नचनामरूपव्यवहारकालेत्वविवेकिनांक्रियाकारकफलादिसंव्यवहारोनास्तीतिप्रतिषिध्यतेतस्मात्ज्ञाना
ज्ञानेअपेक्ष्यसर्वःसंव्यवहारःशास्त्रीयोलौकिकश्चातोनकाचनविरोधशंका॥ सर्ववादिनामप्यपरिहार्यःपरमार्थसंव्यवहारकृतोव्य
वहारस्तत्रपरमार्थात्मस्वरूपमपेक्ष्यप्रश्नः॥ पुनःकतमोयाज्ञवल्क्यसर्वांतरइतिप्रत्याहेतरोयोऽशनायापिपासेअशितुमिच्छाअशना
यापातुमिच्छापिपासातेअशनायापिपासेयोत्येतीतिवक्ष्यमाणेनसंबंधः॥

वहारोपपत्तिमुपसंहरति॥ तस्मादिति॥ उक्तरीत्याव्यवहारद्वयोपप
त्तौफलितमाह॥ अतइति॥ प्रत्यक्षादिषुवेदांतेषुचेतिशेषः॥ ज्ञानाज्ञानेपुरस्कृत्यव्यवहारःशास्त्रीयोलौकिकश्चेतिनास्माभिरेवोच्यतेकिंतुसर्वेषामपिपरी
क्षकाणामेतत्संमतंसंसारदशायांक्रियाकारकव्यवहारस्यमोक्षावस्थायांचतदभावस्येष्टत्वादित्याह॥ सर्ववादिनामिति॥ निरुपाधिकेपरस्मिन्नात्मनिचिद्धा
तावनाद्यविद्याकल्पितोपाधिकृतमशनायादिमत्त्वंवस्तुतस्तुतद्राहित्यमित्युपपाद्यानंतरप्रश्नमुत्थाप्यप्रतिवक्ति॥ तत्रेत्यादिना॥ कल्पिताकल्पितयोरात्मरू

अ॰ ५

राम: ३३

ननुपरोनाशनायादिमानप्रसिद्धेर्नापिजीवस्तथातस्यपरस्माद्व्यतिरेकाद्तआह॥अविवेकिभिरिति॥परमार्थतद्व्युभयतःसंबध्यतेब्रह्मैवाखंडस
च्चिदानंदमनाद्यविद्यातत्कार्यबुध्यादिसंबद्धमाभासद्वारात्वानुभवादशनायादिमद्गम्यते॥तच्चवस्तुतोऽविद्याद्यसंबंधादशनायाद्यतीतंनित्यमुक्तं
तिष्ठतीत्यर्थः॥अशनायापिपासादिमद्ब्रह्मगम्यमानमितिवदन्नाचार्योनानाजीववादस्यानिष्टत्वंसूचयति॥परमार्थतोब्रह्मण्यशनायाद्यसंबंधेमा
नमाह॥नलिप्यतइति॥बाह्यत्वमसंगत्वं॥लोकदुःखेनेत्ययुक्तंलोकस्यानात्मनोदुःखसंबंधानभ्युपगमादित्याशंक्याह॥अविद्वदिति॥अशनायापि

अविवेकिभिस्तलमलवदिवगगनंगम्यमानमेवतलमलेअस्येतिपरमार्थतस्ताभ्याममसंस्पृष्टस्वभावत्वात्तथासूढैरशनायापिपा
सादिमद्ब्रह्मगम्यमानमपिक्षुधितोहंपिपासितोहमितितेअस्येत्येवपरमार्थतस्ताभ्याममसंस्पृष्टस्वभावत्वान्नलिप्यतेलोकदुःखे

## सर्वांतरोयोशनायापिपासे

नबाह्यइतिश्रुतेरविद्वल्लोकाध्यारोपितदुःखेनेत्यर्थः॥प्राणैकधर्मत्वात्समासकरणंअशनायापिपासयोःशोकंमोहंशोकइतिकाम
इष्टंवस्तूद्दिश्यचिंतयतोयदरमणंतत्तृष्णाभिभूतस्यकामबीजंतेनहिकामोदीप्यतेमोहस्तुविपरीतप्रत्ययप्रभवो पासयोःसमस्यो

पादानेहेतुमाह॥प्राणेति॥अरतिवाचीशोकशब्दोनकामविषयइत्याशंक्याह॥इष्टमिति॥कामबीजत्वमरतेरनुभवेनाभिव्यनक्तितेनहीति॥
कामस्यशोकोबीजमितिसकामतयाव्याख्यातःअनित्याशुचिदुःखानात्मसुनित्यशुचिसुखात्मख्यातिर्विपरीतप्रत्ययस्तस्मान्मनसिप्रभवतिकर्त
व्याकर्तव्याविवेकःसलौकिकःसम्यग्ज्ञानविरोधाद्भ्रमोऽविद्येत्युच्यतेतस्याःसर्वानर्थोत्पत्तौनिमित्तत्वंमूलाविद्यायास्तूपादानत्वंतदेतदाह॥मोहस्त्विति॥

२३७

कामस्य शोको मोहो दुःखस्य हेतुरिति भिन्नकार्यत्वं तद्विच्छेद इत्यत्र कार्यकरणसंघातस्तच्छब्दार्थः ॥ संसाराद्विरक्तस्य पारिव्राज्यं वक्तुमुत्तरं वा
क्यमित्यभिप्रेत्य संक्षेपतः संसारस्वरूपमाह ॥ एतदित्यादिना ॥ तेषामात्मधर्मत्वं व्यावर्तयितुं विशिनष्टि ॥ प्राणेति ॥ तेषां स्वरसतो विच्छेदशंकां वा
रयति ॥ प्राणिष्विति ॥ प्रवाहरूपेणानैरंतर्ये दृष्टांतमाह ॥ अहोरात्रादिवदिति ॥ तेषामपि चपलत्वे दृष्टांतः ॥ समुद्रोर्मिवदिति ॥ तेषां हेयत्वं द्योतयति

ऽविवेको भ्रमः स चाविद्या सर्वस्यानर्थस्य प्रसवबीजं भिन्नकार्यत्वात्तयोः शोकमोहयोरसमासकरणं तौ मनोधिकरणौ तथा शरीराधिक
रणौ जरां मृत्युं चात्येति जरेति कार्यकरणसंघातविपरिणामो वलीपलितादिलिंगो मृत्युरिति तद्विच्छेदो विपरिणामावसानस्तौ जरामृ
त्यू शरीराधिकरणावत्येति एते ऽशनायादयः प्राणमनःशरीराधिकरणाः प्राणिष्वनवरतं वर्त्तमानाः अहोरात्रादिवत्समुद्रोर्मिवच्च ॥ प्रा

शोकं मोहं जरां मृत्युमत्येत्येतं वै

णिषु संसार इत्युच्यते यो ऽसौ दृष्टेर्द्रष्टेत्यादिलक्षणः साक्षादव्यवहितो ऽपरोक्षाद्गौणः सर्वांतर आत्मा ब्रह्मादिस्तंबपर्यंतानां भू
तानामशनायापिपासादिभिः संसारधर्मैः सदा न स्पृश्यते आकाश इव घनादिमलैस्तमेतं वै आत्मानं स्वं तत्त्वं विदित्वा ज्ञात्वा ऽयं
महमस्मि परं ब्रह्म सदा सर्वसंसारविनिर्मुक्तं नित्यतृप्तमिति ब्राह्मणाः ॥ प्राणिष्विति ॥ ये यथोक्ताः प्राणिष्वशनायादयस्ते तेषु संसार
इत्युच्यंत इति योजना ॥ एतं वैतमित्यत्र तच्छब्दार्थमुषस्तप्रश्नोक्तं त्वंपदार्थं कथयति ॥ यो ऽसाविति ॥ एतच्छब्दार्थं कहोलप्र ॰ क्तं तत्पदार्थं दर्शय
ति ॥ अशनायेति ॥ तयोरैक्यं सामानाधिकरण्येन सूचितमित्याह ॥ तमेतमिति ॥ ज्ञानमेव विशदयति ॥ अयमित्यादिना श्रो ॥ ॥

ज्ञात्वा ब्राह्मणा व्युत्थाय भिक्षाचर्यं चरंतीति संबंधः॥ सन्यासविधायके वाक्ये किमित्यधिकारिणि ब्राह्मणपदं तत्राह॥ ब्राह्मणानामिति॥ पुत्रार्थमे षणामेव विरणोति॥ पुत्रेणेति॥ ततो व्युत्थानं संगृह्णाति॥ दारसंग्रहमिति॥ वित्तैषणायाश्च व्युत्थानं कर्तव्यमित्याह॥ वित्तेति॥ वित्तं हि द्विविधं मानुषं दैवं च मानुषं गवादि तस्य कर्मसाधनस्योपादानमुपार्जनं तेन कर्म कृत्वा केवलेन कर्मणा पितृलोकं जेष्यामि दैवं वित्तं विद्या तत्संयुक्तेन कर्म

ब्राह्मणानामेवाधिकारो व्युत्थानेऽतो ब्राह्मणग्रहणं व्युत्थाय वै परीत्येनोत्थानं कृत्वा कुत इत्याह॥ पुत्रैषणायाः पुत्रार्थीएषणा पुत्रैषणा पुत्रेणेमं लोकं जयेयमिति लोकजयसाधनं पुत्रं प्रतीच्छा एषणा दारसंग्रहमकृत्वेत्यर्थः॥ वित्तैषणायाश्च कर्मसाधनस्य गवादेरुपादानं अनेन कर्म कृत्वा पितृलोकं जेष्यामीति विद्यासंयुक्तेन वा देवलोकं केवलया वा हिरण्यगर्भविद्यया दैवेन वित्तेन देवलोकं

तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च॥

वा हित्वा व्युत्थानमेव नास्तीति केचित्तस्मात्तद्बलेन हि किल व्युत्थानमिति॥ तदसदेतावान्वै काम इति पठितत्वादेषणामध्ये दैवस्य वित्तस्य हिरण्यगर्भादिदेवताविषयैव विद्या विद्येत्युच्यते देवलोकहेतुत्वान्न हि निरुपाधिकप्रज्ञानघनविषया ब्रह्मविद्या देवलोकप्राप्तिहेतुः

णा देवलोकं केवलया च विद्यया तमेव जेष्यामीति इच्छा वित्तैषणा ततश्च व्युत्थानं कर्तव्यमित्याचष्टे॥ कर्मसाधनस्येति॥ एतेन लोकैषणायाश्च व्युत्थानमुक्तं वेदितव्यं॥ दैवाद्वित्ताद्व्युत्थानमाक्षिपति॥ दैवादिति॥ तस्यापि कामत्वात्ततो व्युत्थातव्यमिति परिहरति॥ तदसदिति॥ तर्हि ब्रह्मविद्यायाः सकाशादपि व्युत्थानात्तन्मूलध्वंसे तद्व्याघातः स्यादित्याशंक्याह॥ हिरण्यगर्भादीति॥ देवतोपासनया वित्तशब्दितविद्यात्वे हेतुमाह॥ देवलोकेति॥ तत्प्राप्तिहे

बृ·र
३५

अ·
५

तत्र फलांतरश्रवणं हेतूकरोति॥ तस्मादिति॥ इतश्च ब्रह्मविद्यादेर्बाह्मित्वाद्बहिरेवेत्याह॥ तद्बलेनेति॥ प्रागेव वेदनं सिद्धं चेत्किं पुनर्व्युत्थानेनेत्या
शंक्य प्रयोजकं ज्ञानं तत्प्रयोजकमुद्देश्यं तु तत्साक्षात्करणमिति विवक्षित्वाह॥ तस्मादिति॥ प्रयोजकं ज्ञानं पंचम्यर्थः॥ व्युत्थाय भिक्षाच
र्यं चरंतीति संबंधः॥ व्युत्थानस्वरूपप्रदर्शनार्थमेषणास्वरूपमाह॥ एषणेति॥ किमेतावतेत्याशंक्य व्युत्थानस्वरूपमाह॥ एतस्मिन्निति॥

तस्मात्सर्वमभवदात्मा ह्येषां स भवतीति श्रुतेस्तद्बलेन हि व्युत्थानमेतं वै तमात्मानं विदित्वेति विशेषवचनात्तस्मात्त्रिभ्यो ह्येते
भ्योऽनात्मलोकप्राप्तिसाधनेभ्यः एषणाविषयेभ्यो व्युत्थाय एषणाकामः एतावान्वै काम इति श्रुतेरेतस्मिंस्त्रिविधेऽनात्मलोकप्राप्ति
साधने तृष्णामकृत्वेत्यर्थः सर्वा हि साधनेच्छा फलेच्छैवातो व्याचष्टे श्रुतिरेकैवैषणेति॥ कथं या ह्येव पुत्रैषणा सा वित्तैषणा दृष्टफलसाधन

व्युत्थायाथ भिक्षाचर्यं चरंति॥

त्वतुल्यत्वाद्या वित्तैषणा कर्मभूता सा लोकैषणा फलार्थैव सा सर्वः फलार्थप्रयुक्त एव हि सर्वं साधनमुपादत्ते अत एकैवैषणा लोकैष
णाया सा साधनमंतरेण संपादयितुं न शक्यत इति साध्यसाधनभेदेनोभे हि यस्मादेते एषणे एव भवतस्तस्माद्ब्रह्मविदो नास्ति कर्म कर्म
साधनं वाऽतो ये संबंधस्तु पूर्ववत्॥ यो ह्येवेत्यादिश्रुतेस्तात्पर्यमाह॥ सर्वो हीति॥ फलं नेच्छति साधनं चिकीर्षतीति व्याघातात्फलेच्छांतर्भूतैव
साधनेच्छा तद्युक्तमेषणैकेत्यर्थः॥ श्रुतेस्तदेकत्वमुत्पादकत्वं प्रश्नपूर्वकमुत्पादयति॥ कथमित्यादिना॥ फलैषणांतर्भावं साधनैषणायाः समर्थयते॥
सर्व इति॥ उभे हीत्यादिश्रुतिमवतार्य व्याचष्टे॥ लोकैषणेति॥ प्रयोजकज्ञानवतः साध्यसाधनरूपात्संसाराद्विरक्तस्य कर्मतत्साधनयोरसंभवे साक्षात्कार

रामः
३५

अतिक्रांता ब्राह्मणाः किंप्रजयेत्यादि प्रकाशितास्तेषां कर्मकर्मसाधनं च यज्ञोपवीतादि नास्तीति पूर्वेण संबंधः॥ देवपितृमानुषनिमित्तमिति वि
शेषणं विशदयति॥ तेन हीति॥ प्राचीनावीतं पितॄणां उपवीतं देवानामित्यादि शब्दार्थः॥ यस्मात्पूर्वे विचारप्रयोजकज्ञानवंतो ब्राह्मणा विरक्ताः
संन्यस्यतस्त्वयुक्तं धर्ममन्वतिष्ठंस्तस्मादधुनातनोपि प्रयोजकज्ञानो विरक्तो ब्राह्मणस्तथा कुर्यादित्याह॥ तस्मादिति॥ त्रिदंडेन यतिश्चैवेत्यादि स्मृतेर्नप

ऽतिक्रांता ब्राह्मणाः सर्वं कर्मसाधनं च सर्वं देवपितृमानुषनिमित्तं यज्ञोपवीतादि तेन हि दैवं पित्र्यं मानुषं च कर्म क्रियते निवीतं मनुष्याणामि
त्यादिश्रुतेस्तस्मात्पूर्वे ब्राह्मणा वेदविदो व्युत्थाय कर्मभ्यः कर्मसाधनेभ्यश्च यज्ञोपवीतादिभ्यः परमहंसपारिव्राज्यं प्रतिपद्य भिक्षाचर्यं चरंति
भिक्षार्थं चरणं भिक्षाचरणं चरंति स्म त्यक्त्वा स्मार्तं लिंगं केवलमाश्रममात्रशरणानां जीवनसाधनं पारिव्राज्यव्यंजकं विद्वान्लिंगवर्जितः तस्मात्

याह्येव पुत्रैषणा सा वित्तैषणा या वित्तैषणा सा लोकैषणोभे ह्येते एषणे एव भवत

लिंगो धर्मज्ञोऽव्यक्तलिंगोऽव्यक्ताचार इति स्मृतिभ्यः अथ पारिव्राड्विवर्णवासा मुंडोऽपरिग्रह इत्यादिश्रुतेः सशिखान्केशान्निकृत्य विसृ
ज्य यज्ञोपवीतमिति च लिंगत्यागः ननु व्युत्थायाथ भिक्षाचर्यं चरंतीति वर्तमानापदेशादर्थवादोयं न विधायकः प्रत्ययः कश्चिच्छ्रूयते लिङ् लो
ड्तव्यानामन्यतमोपि तस्मादर्थवादमात्रेण श्रुतिस्मृतिविहितानां यज्ञोपवीतादीनां साधनानां न शक्यते परित्यागः कारयितुं रमहंसपारिव्राज्यमत्र वि
वक्षितमित्याशंक्याह॥ स होति॥ तस्य दृष्टार्थत्वान्मुमुक्षुभिस्त्याज्यत्वं सूचयति॥ केवलमिति॥ अमुख्यत्वाच्चतस्य त्याज्यतेत्याह॥ पारिव्राज्येति॥ तथापि तद्दृष्टः स
न्यासो न स्मृतिकारैर्निबद्ध इति चेन्नेत्याह॥ विद्वानिति॥ प्रत्यक्षश्रुतिविरोधाच्च स्मार्तसंन्यासो मुख्यो न भवतीत्याह॥ अथेति॥ एतं वैतमित्यादिवाक्यस्य विधायकत्वमु

७४१

इतश्च यज्ञोपवीतमपरित्याज्यमित्याह॥ यज्ञोपवीत्येवेति॥ याजनादिसमभिव्याहाराद्‌संन्यासिविषयमेतदित्याशंक्याह॥ पारिव्राज्ये तावदिति ॥ वेदत्यागे दोषश्रुतेस्तद्‌त्यागेपि कथं पारिव्राज्ये यज्ञोपवीतित्वमित्याशंक्याह॥ उपासन इति॥ इत्यनेन वाक्येन गुर्वाद्युपासनांगत्वेन यज्ञोपवीतस्य विहितत्वात्सपरिव्राजकधर्मेषु गुरूपासनादीनां कर्तव्यतया श्रुतिस्मृतिषु चोदितत्वाद्यज्ञोपवीतपरित्यागो वगंतुं नैव शक्यत इत्यन्वयः॥



यज्ञोपवीत्येवाधीयीत याजयेद्यजेत वा पारिव्राज्ये तावदध्ययनं विहितं वेदसंन्यसनाच्छूद्रस्तस्माद्वेदं न संन्यसेदिति स्वाध्याय एवोत्सृज्यमानो वाचमिति चापस्तंबः ब्रह्मोज्झं वेदनिंदा च कौटसाक्ष्यं सुहृद्वधः॥ गर्हितान्नाद्ययोर्जग्धिः सुरापानसमानि षडिति वेदपरित्यागे दोषश्रवणादुपासने गुरूणां वृद्धानां अतिथीनां होमे जप्यकर्मणि भोजने आचमने स्वाध्याये च यज्ञोपवीती स्यादिति परिव्राजकधर्मेषु च गुरूपासनस्वाध्यायभोजनाचमनादीनां कर्मणां श्रुतिस्मृतिषु कर्तव्यतया चोदितत्वाद्गुर्वाद्युपासनांगत्वेन यज्ञोपवीतस्य विहितत्वात्तत्परित्यागो नैवावगंतुं शक्यते ननु यद्यप्येषणाभ्यो व्युत्थानं विधीयते एवं तथापि पुत्राद्येषणाभ्य स्तिसभ्य एव व्युत्थानं न तु सर्वस्मात्कर्मणः कर्मसाधनाच्च व्युत्थानं सर्वपरित्यागे वाश्रुतं कृतं स्यात्कुतं च यज्ञोपवीतादि हापितं स्यात्॥ तथा च महानपराधो विहिताकरणप्रतिषिद्धाचरणनिमित्तः कृतः स्यात्तस्माद्यज्ञोपवीतादिलिंगपरित्यागोंधपरंपरैव न यज्ञोपवीतं वेदांश्च सर्वं तद्वर्जयेद्यति

संप्रति प्रौढिमारूढो व्युत्थाने विधिमंगीकृत्यापि दूषयति॥ यद्यपीत्यादिना॥ एषणाभ्यो व्युत्थाने सति एषणात्वाविशेषात्कर्मणस्तत्साधनाच्च व्युत्थानं सेत्स्यतीत्याशंक्य यज्ञोपवीतादेरेषणात्वमसिद्धमित्याशयेनाह॥ सर्वेति॥ अश्रुतकरणे श्रुतत्यागे चाकुर्वन्विहितं कर्मेत्यादिस्मृतिमाश्रित्य दूषणमाह॥ तथा चेति॥ ननु दृश्यते यज्ञोपवीतादिलिंगत्यागः स कस्मान्निराक्रियते तत्राह॥ तस्मादिति॥ नेयमंधपरंपरेति परिहरति॥ नेत्यादिना ॥ ॥ ॥

ब्रह्मचर्यादेव प्रव्रजेदित्यादिविध्युपलंभेपिप्रौढवादेनात्मज्ञानविधिबलादेवसंन्यासंसाधयितुमात्मज्ञानपरत्वंतावदुपनिषदामुपन्यस्यति॥अपि
चेति॥इतश्चास्तिसंन्यासेविधिरितियावत् तद्विधिबलादेवसंन्याससिद्धिरितिशेषः॥कथंसर्वोपनिषदात्मज्ञानपरेष्यतेकर्त्तस्तुतिद्वाराकर्मवि
धिशेषत्वेनार्थवादत्वादित्याशंक्याह॥आत्मेत्यादिना॥अस्तुयथोक्तंवस्तुविज्ञेयंतथापिप्रस्तुतेकिंजातंतदाह॥सर्वाहीति॥ननुतस्यकर्त्तव्यत्वेपिकथं
कर्मतत्साधनत्यागसिद्धिरतआह॥आत्माचेति॥विपक्षेदोषमाह॥अतइति॥साधनफलांतर्भूतत्वेनात्मनोज्ञानमविद्येत्यत्रप्रमाणमाह॥अन्योसावित्या

रपिचात्मज्ञानपरत्वात्सर्वस्याउपनिषदः आत्माद्रष्टव्यः श्रोतव्योमंतव्यइतिहिप्रस्तुतंसचात्मैवसाक्षादपरोक्षात्सर्वांतरोऽशनाया दि
संसारधर्मवर्जितइत्येवंविज्ञेयंइतितावत्प्रसिद्धं सर्वाहीयमुपनिषदेवंपरेतिविध्यंतरशेषत्वंतावन्नास्त्यतोनार्थवादः आत्मज्ञान
स्यकर्तव्यत्वादात्माचाशनायादिधर्मवान्नभवतीतिसाधनफलविलक्षणोज्ञातव्योऽतोव्यतिरेकेणात्मनोज्ञानमविद्यान्योसावन्योहम
स्मीतिनसवेदमृत्योःसमृत्युमाप्नोतियइहनानेवपश्यत्येकधैवानुद्रष्टव्यमेकमेवाद्वितीयंतत्त्वमसीत्यादिश्रुतिभ्यःक्रियाकारकफलं
साधनंवाशनायादिसंसारधर्मातीतादात्मनोन्यदविद्याविषयंयत्रहिद्वैतमिवभवत्यन्योसावन्योहमस्मीतिनसवेदाथयेन्यथातोवि
दुरित्यादिवाक्यशतेभ्यःनचविद्याविद्येएकस्यपुरुषस्यसहभवतोविरोधात्तमःप्रकाशाविव॥तस्मादात्मविदोऽविद्याविषयोधिकारोनद्र
ष्टव्यःक्रियाकारकफलभेदरूपोमृत्योःसमृत्युमाप्नोतीत्यादिनिंदितत्वात् दिना॥क्रियाकारकफलविलक्षणस्यात्मज्ञोज्ञानंकर्तव्यंतत्सामर्थ्यात्साध्य
साधनत्यागःसिध्यतीत्युक्तं॥संप्रत्यविद्याविषयत्वात्साध्यसाधनयोर्विद्यावतात्याज्यतेत्याह॥क्रियेति॥तस्याविद्याविषयत्वेश्रुतीरुदाहरति॥यत्रेति
॥अविद्याविषयत्वेपिसाधनादिविद्यावतएवभविष्यतिविद्याविद्ययोरस्मदादिषुसाहित्योपलंभादित्याशंक्याह॥नचेति॥विद्याविद्ययोःसाहित्यासंभवे

इतश्च प्रयोजकज्ञानवतां साध्यसाधनभेदो न द्रष्टव्यो विवक्षिततत्त्वसाक्षात्कारविरोधित्वादित्याह॥ सर्वेति॥ भवतु विद्याविषयाणां विद्यावतां त्या-
गस्तथापि कुतो यज्ञोपवीतादीनां त्यागस्तत्राह॥ यज्ञोपवीतादीति॥ तद्विषयत्वादित्यत्र तच्छब्दोऽविद्याविषयः एषणात्वाच्च यज्ञोपवीतादीनां त्या-
ज्यत्वेत्याह॥ तस्मादिति॥ ज्ञेयत्वेन प्रस्तुतादिति यावत्॥ साध्यसाधनविषयान्तरात्मिकैषणा त्याज्येति तत्र हेतुमाह॥ विलक्षणेति॥ पुरुषार्थरूपा-
द्विपरीता साहेयेत्यर्थः॥ साध्यसाधनयोरेषणात्वं साधयति॥ उभे हीति॥ तथापि यज्ञोपवीतादीनां कर्मणां च कथमेषणात्वमित्याशंक्य साधनांतर्भावा-

सर्वं क्रियासाधनफलानां चाविद्याविषयाणां तद्विपरीतात्मविद्यया हातव्यत्वेनेष्टत्वाद्यज्ञोपवीतादिसाधनानां च तद्विषयत्वात्तस्मा-
त्साधनफलस्वभावादात्मनोऽन्यविषया विलक्षणा उभे ह्येते साधनफले एषणे एव भवतो यज्ञोपवीतादेस्तत्साध्यकर्मणां च साधन-
त्वादुभे ह्येते एषणे एवेति हेतुवचनेनावधारणात् यज्ञोपवीतादिसाधनात्तत्साध्येभ्यश्च कर्मभ्योऽविद्याविषयत्वादेषणारूपत्वा-
च्च जिहासितत्वरूपत्वाच्च व्युत्थानं विधित्सितमेव ननूपनिषदः आत्मज्ञानपरत्वाद्व्युत्थानश्रुतिस्तत्स्तुत्यर्था न विधिः॥ न विधित्सि-
तं विज्ञानेन समानकर्तृत्वश्रवणात् नह्यकर्तव्यत्वेन कर्तव्यस्य समानकर्तृकत्वेन वेदे कदाचिदपि श्रवणं संभवति॥ कर्तव्यानामेव ह्य-
भिषवहोमभक्षणानां यथा श्रवणम् अभिषुत्य हुत्वा भक्षयन्तीति तद्वदात्मज्ञानैषणाव्युत्थानभिक्षाचर्याणां कर्तव्यानामेव समानकर्तृकत्व-

दित्याह॥ यज्ञोपवीतादेरिति॥ तयोरेषणात्वं कथं प्रतिज्ञामात्रेण सेत्स्यतीत्याशंक्याह॥ उभे हीति॥ तयोरेषणात्वे सिद्धे फलितमाह॥ यज्ञोपवीतादीति॥
आत्मज्ञानविधिरेव संन्यासविधिरित्युक्तत्वाद्व्युत्थायेत्यस्य नास्ति विधित्वमिति शंकते॥ नन्विति॥ व्युत्थाय विदित्वेति पाठक्रममतिक्रम्य व्याख्याने भवत्येवा-
यं विविदिषोर्विधिरिति परिहरति॥ न विधित्सितेति॥ पाठक्रमेऽपि प्रयोजकज्ञानवतो विरक्तस्य भवत्येवायं विधिरित्यभिप्रेत्याह॥ न हीति॥ उक्तमेवान्वयमुखे-

अभिषुत्यसोमस्यकंडनंकृत्वारसमादायेत्यर्थः॥पाठक्रममेवमाश्रित्यशंकते॥अविद्येति॥प्रयोजकज्ञानवतोविरक्तस्यात्मज्ञानविधिसामर्थ्येन
ब्धस्ययज्ञोपवीतादित्यागस्यकर्तव्यात्मज्ञानेनसमानकर्तृकत्वश्रवणादतिशयेनावश्यकत्वसिद्धिरित्युत्तरमाह॥नसुतरामिति॥व्युत्थानेदर्शित
न्यायंभिक्षाचर्यैप्यतिदिशति॥तथेति॥भिक्षाचर्यस्यचात्मज्ञानविधिनैकवाक्यस्यतथैवदार्ढ्योपपत्तिरितिसंबंधः॥व्युत्थानादिवाक्यस्यार्थवाद
त्वमुक्तमनूद्यदूषयति॥यस्त्वनरित्यादिना॥औदुंबरोयूपोभवतीत्यादौलेट्परिग्रहेणविधित्वीकारवदत्रापिपंचमलकारेणविधिसिद्धेर्नार्थ

वादविद्याविषयत्वाच्चार्थप्राप्तएवआत्मज्ञानविधेरेवयज्ञोपवीतादिपरित्यागोनतुविधातव्यइतिचेन्नसुतरामात्मज्ञानविधिनैव
विहितस्यसमानकर्तृकत्वश्रवणेनतत्रदार्ढ्योपपत्तिस्तथाभिक्षाचर्यस्यपस्तुनरुक्तंवर्तमानापदेशादर्थवादमात्रमितिनऔदुं
बरयूपादिविधिसमानत्वाददोषः व्युत्थायभिक्षाचर्यंचरंतीत्यनेननपारिव्राज्यंविधीयतेपारिव्राज्याश्रमेचयज्ञोपवीतादिसाधनानिलिं
गंचश्रुतिभिःस्मृतिभिश्चातस्तद्धर्मेपित्वान्यस्माद्व्युत्थानमेषणात्वेपीतिचेत्॥नविज्ञानसमानकर्तृकात्पारिव्राज्यादेषणाव्युत्थानलक्ष
णात्पारिव्राज्यांतरोपपत्तेः॥यद्धितदेषणाभ्योव्युत्थानलक्षणंपारिव्राज्यंतदात्मज्ञानांगमात्मज्ञानविरोध्येषणापरित्यागरूप
त्वादविद्याविषयत्वाच्चैषणाया वादत्वशंकेत्यर्थः॥संप्रतिप्रकृतेवाक्येपारिव्राज्यविधिमंगीकृत्यस्वयूथ्यःशंकते॥व्युत्थायेति॥कान
र्हिविप्रतिपत्तिस्तत्राह॥पारिव्राज्येति॥लिंगंत्रिदंडित्वादि॥पुराणेयज्ञोपवीतेविसृज्यनवमुपादायाश्रमंप्रविशेत्त्रिदंडीकमंडलुमानित्याद्याःश्रु
तयःस्मृतयश्चैषणात्वाद्यज्ञोपवीतादीनामपित्याज्यत्वमुक्तमित्याशंक्यश्रुतिस्मृतिवशाद्व्युत्थानेसंकोचमभिप्रेत्याह॥अतइति॥उदाहृतश्रुतिस्मृ
तीनांविषयांतरंदर्शयन्नुत्तरमाह॥नेत्यादिना॥तदेवविवृणोति॥यद्धीत्यादिना॥तस्यात्मज्ञानांगत्वेहेतुमाह॥आत्मज्ञानेति॥एषणायास्तद्विरोधित्व

२१३

तर्हियथोक्तानांश्रुतिस्मृतीनांकिमालंबनंतदाह॥तद्व्यतिरेकेणेति॥आश्रमत्वेननिरूप्यतेवस्तुतस्तुनाश्रमस्तदाभासइतियावत्॥तस्यात्मज्ञा
नांगत्वंवारयति॥ब्रह्मेति॥अथव्युत्थानवाक्योक्तमुख्यपारिव्राज्यविषयत्वमेवलिंगादिविधानस्यकिंनस्यात्तत्राह॥नचेति॥एषणारूपाणिसाध
नानियज्ञोपवीतादीनितेषामुपादानमनुष्ठानंतस्याश्रमधर्ममात्रेणोक्तस्ययथोक्तेसंन्यासाभासेविषयेसतिप्रधानबाधेनमुख्यपारिव्राज्यविषयत्व
मयुक्तमित्यर्थः॥कथंपुनर्मुख्यपारिव्राज्यविषयत्वेयज्ञोपवीतादेरिष्टप्रधानबाधनंतदाह॥यज्ञोपवीतादीति॥साध्यसाधनयोरासंगेतद्विलक्ष

स्तद्व्यतिरेकेणचास्त्याश्रमरूपंपारिव्राज्यंब्रह्मलोकादिफलप्राप्तिसाधनंयद्विषयंयज्ञोपवीतादिसाधनविधानंलिंगविधानंचन
चैषणारूपसाधनोपादानस्याश्रमधर्ममात्रेणपारिव्राज्यांतरेविषयेसंभवतिसतिसर्वोपनिषद्विहितस्यात्मज्ञानस्यबाधनंयुक्तंयज्ञो
पवीताद्यविद्याविषयैषणारूपसाधनोपादित्सायांचावश्यमसाधनफलरूपस्याशनायादिसंसारधर्मवर्जितस्याहंब्रह्मास्मीति
विज्ञानंबाध्यते॥नचतद्बाधनंयुक्तंसर्वोपनिषदांतदर्थपरत्वाद्भिक्षाचर्यंचरंतीत्येषणांग्राहयंतीश्रुतिःस्वयमेवबाधतइतिचेद्यथा
पिस्यादेषणाभ्योव्युत्थानंविधायपुनरेषणैकदेशंभिक्षाचर्यंग्राहयंतीतत्संबंधमन्यदपिग्राहयतीतिचेन्नभिक्षाचर्यस्याप्रयोज
कत्वात्हुतोत्तरकालभक्षणवच्छेषप्रतिपत्तिकर्मत्वादप्रयोजकंहित

यस्यात्मनोज्ञानंबाध्यतेचेत्कानोहानिरित्याशंक्याह॥नचेति॥भि
क्षाचर्यंतावद्विहितंविहितानुष्ठानंचयज्ञोपवीतादिविनानसंभवतीतिश्रुत्यैवात्मज्ञानंयज्ञोपवीतादिविरोधिबाधितमितिशंकते॥भिक्षाचर्यमि
ति॥शंकामेवविशदयति॥अथापीत्यादिना॥यथाहुतशेषस्यभक्षणंविहितमपिनद्रव्याक्षेपकंपरिशिष्टद्रव्योपादानेनप्रवृत्तेस्तथासर्वत्या
गेविहितेपरिशिष्टभिक्षोपादानेनविहितमपिभिक्षाचरणमुपवीताद्यनाक्षेपकमित्युत्तरमाह॥नेत्यादिना॥दृष्टांतमेवस्पष्टयति॥शेषेति॥त

अप्रयोजकं द्रव्यविशेषस्यानाक्षेपकमिति यावत्॥ यद्वा दार्ष्टांतिकमेव स्फुटयति॥ शेषेति॥ सर्वस्वत्यागे विहिते शेषस्य कालस्य शरीरपाततां तस्य
प्रतिपत्तिकर्ममात्रं भिक्षाचर्यमतो न तदुपवीतादिप्रापकमित्यर्थः॥ किंच॥ भिक्षाचर्यस्य शरीरस्थित्यैवाक्षिप्तत्वान्न तत्रापि विधिर्दूरे तद्द्वारा दुपवी
तादिसिद्धिरित्याह॥ असंस्कारत्वाच्चेति॥ तदेव स्फुट्यते॥ भक्षणमिति॥ एककालं चरेद्भैक्ष्यमित्यादिनियमवशाददृष्टं सिध्यदुपवीतादिकमप्याक्षिपती
ति चेन्नेत्याह॥ नियमेति विविदिषोस्तदृष्टमपि नोपवीताद्याक्षेपकं ज्ञानोत्पादकश्रवणाद्युपयोगिदेहस्थित्यर्थत्वेनैव चरितार्थत्वादिति भावः॥ तर्हि य
थाकथंचिदुपनतेनान्नेन शरीरस्थितिसंभवाद्भिक्षाचर्यं चरंतीति वाक्यमनर्थमिति शंकते॥ नियमादृष्टस्येति॥ भिक्षाचर्यानुवादेन प्रतिग्रहादिनिवृत्त्य

दसंस्कारकत्वाच्च भक्षणं पुरुषसंस्कारार्थमपि स्यान्न तु भिक्षाचर्ये नियमादृष्टस्यापि ब्रह्मविदोऽनिष्टत्वान्नियमादृष्टस्यानिष्टत्वे किं भिक्षा
चर्येणेति चेत्॥ नान्यसाधनाद्युत्थानस्य विहितत्वात्तथापि किं तेनेति चेद्यदिस्याद्द्वाढमभ्युपगम्यते हि तत्॥ यानि पारिव्राज्येऽभिहिता
नि वचनानि यज्ञोपवीत्येवाधीयीतेत्यादीनि तान्यविद्वत्पारिव्राज्यमात्रविषयाणीति परिहृतानि द्वितरथात्मज्ञानबाधः स्यादिति ह्यु
क्तं॥ निराशिषमनारंभं निर्नमस्कारमस्तुतिं॥ अक्षीणं क्षीणकर्माणं तं देवा ब्राह्मणं विदुरिति सर्वकर्माभावं दर्शयति स्मृतिर्विदुषः॥ वि
द्वान् लिंगविवर्जितस्तस्मादलिंगो धर्मज्ञ इति च

र्थत्वाद्वाक्यस्यानार्थक्यमित्युत्तरमाह॥ नान्येति॥ निवृत्त्युपदेशेन वाक्यस्यार्थवत्त्वेपि तदुप
देशस्यानार्थवत्त्वं कूटस्थात्मज्ञानेनैव सर्वनिवृत्तेः सिद्धेरिति शंकते॥ तथापीति॥ यदि निष्क्रियात्मज्ञानाद्दोषनिवृत्तिः स्यात्तर्हि तदभ्यासाभिरपि सा क्रियतेऽस्य
मित्यंगीकरोति॥ यदीति॥ यदि तु क्षुधादिदोषप्राबल्यादात्मानं निष्क्रियमपि विस्मृत्य प्रार्थनादिपरो भवति तदा निवृत्त्युपदेशोपि भवत्यर्थवानिति भावः॥ प्रा
गुक्तवाक्यविरोधान्निवृत्त्युपदेशोऽशक्य इति चेत्तत्राह॥ यानीति॥ मुख्यपरिव्राड्विषयत्वेदोषं स्मारयति॥ इतरथेति॥ निवृत्त्युपदेशानुग्राहकत्वेन स्मृतीरु

अमुख्यसंन्यासिविषयत्वासंभवान्मुख्यपरिव्राड्विषयं व्युत्थानवाक्यमित्युपसंहरति॥ तस्मादिति॥ इतिशब्दो व्युत्थानवाक्यव्याख्यानसमा
प्त्यर्थः॥ तस्मादित्यादिवाक्यमवतार्य व्याचष्टे॥ यस्मादित्यादिना॥ उक्तमेव व्युत्थानं स्पष्टयति॥ दृष्टेति॥ विवेकवैराग्याभ्यामेषणाभ्यो व्युत्थाय मु
साचार्याभ्यां कृतं यज्ज्ञानं निःशेषं कृत्वा बाल्येन तिष्ठासेदिति व्यवहितेन संबंधः पांडित्यं निर्विद्येत्यनेनैव व्युत्थानं विहितमित्याह॥ एषणेति॥

तस्मात्परमहंसपारिव्राज्यमेव व्युत्थानलक्षणं प्रतिपद्येतात्मवित्सर्वकर्मसाधनपरित्यागरूपमिति यस्मात्पूर्वे ब्राह्मणा एतमात्मा
नमसाधनफलस्वभावं विदित्वा सर्वस्मात्साधनफलस्वरूपादेषणालक्षणाद्व्युत्थाय भिक्षाचर्यं चरन्ति स्म॥ दृष्टादृष्टार्थं कर्म तत्साध
नं च हित्वा तस्मादद्यत्वेऽपि ब्राह्मणो ब्रह्मवित्पांडित्यं पंडितभावमेतदात्मविज्ञानं पांडित्यं तन्निर्विद्य निःशेषं विदित्वात्मविज्ञानं निरव

स्तस्माद्ब्राह्मणः पांडित्यं निर्विद्य

शेषं कृत्वेत्यर्थः आचार्यत आगमतश्चैषणाभ्यो व्युत्थाय एषणाव्युत्थानावसानमेव हि पांडित्यमेषणातिरस्कारोद्भवत्वादेषणाविरु
द्धत्वादेषणामतिरस्कृत्य न ह्यात्मविषयस्य पांडित्यस्योद्भव इत्यात्मज्ञानेनैव विहितमेषणाव्युत्थानमात्मज्ञानसमानकर्तृकत्वेनाप्र
त्ययोपादानलिंगश्रुत्या दृढीकृतं॥ तद्धि पांडित्यमेषणाभ्यो व्युत्थानस्यावसाने संभवति॥ तदत्र व्युत्थानविधिरित्यर्थः॥ तदेव स्फुटयति॥ एषणेत्या
दिना॥ तासां तिरस्कारेण पांडित्यमुद्भवति तस्यैषणाभ्यो विरुद्धत्वात्तथा च पांडित्यं निर्विद्येत्यत्र ताभ्यो व्युत्थानविधानमुचितमित्यर्थः॥ विनापि व्युत्थानं पां
डित्यमुद्भविष्यतीति चेन्नेत्याह॥ नहीति॥ पांडित्यं निर्विद्येत्यत्र व्युत्थानविधिमुक्तमुपसंहरति॥ इत्यात्मज्ञानेनेति॥ तर्हि किमिति विदित्वा व्युत्थायेत्यत्र

तेनव्युत्थानस्य समानकर्तृत्वेच्छाप्रत्ययस्योपादानमेव लिंगभूताश्रुतिस्तया दृढीकृतं नियमेन प्रापितं व्युत्थानमित्यर्थः॥ बाल्येनेत्यादिवाक्यमुत्था
प्यव्याकरोति॥ तस्मादिति॥ विवेकादिवशादेषणाभ्यो व्युत्थाय पांडित्यं संपाद्य तस्मात्पांडित्यात् ज्ञानबलभावेन स्थातुमिच्छेदिति योजना केयं ज्ञान
बलभावेन स्थितिरित्याशंक्य तां व्युत्पादयति॥ साधनेत्यादिना विद्वानिति विवेकित्वोक्तिः॥ यथोक्तबलभावावष्टंभेकरणानां विषयपारवश्यनिवृ

तस्मादेषणाभ्यो व्युत्थाय ज्ञानबलभावेन बाल्येन तिष्ठासेत् स्थातुमिच्छेत् साधनफलाश्रयणं हि बलमितरेषामनात्मविदां तद्बलं हित्वा वि
द्वान् साधनफलस्वरूपात्मविज्ञानमेव बलं तद्भावमेव केवलमाश्रयेत् तदाश्रयणेन हि करणान्येषणाविषयेरन्नं हन्तास्यापयितुमुत्स
हंते ज्ञानबलहीनं हि मूढं दृष्टादृष्टविषयायामेषणायामेवैनं करणानि योजयंति बलं नामात्मविद्यया अशेषविषयदृष्टितिरस्करणमत

बाल्येन तिष्ठासेद्बाल्यं च पांडित्यं च निर्विद्याथ मुनिरमौनं च मौनं च निर्विद्याथ ब्राह्मणः॥

स्तद्भावेन बाल्येन तिष्ठासेत्तथात्मना विंदते वीर्यमिति श्रुत्यंतरान्नायमात्मा बलहीनेन लभ्य इति च बाल्यं च पांडित्यं च निर्विद्य निःशेषं कृ
त्वाथ मननान्मुनिर्योगी भवति एतावद्धि ब्राह्मणेन कर्तव्यं यदुत सर्वानात्मप्रत्ययतिरस्कारः एतत्कृत्वा कृतकृत्यो योगी भवति॥ त्यापुरुष

स्यापितस्य पारवश्यनिवृत्तिः फलतीत्याह॥ नहीति॥ उक्तमेवार्थं व्यतिरेकमुखेन विशदयति॥ ज्ञानबलेनेति॥ नन्वद्यापि ज्ञानस्य बलं कीदृगिति न ज्ञाय
ते तत्राह॥ बलं नामेति॥ बाल्यवाक्यार्थमुपसंहरति॥ अतइति॥ यथा ज्ञानबलेन विषयाभिमुखी दृष्टिस्तिरस्क्रियते तथेति यावत् आत्मना तद्धि ज्ञाना
तिशयेनेत्यर्थः॥ वीर्यं विषयदृष्टितिरस्करणसामर्थ्यमित्येतत् बलहीनेन विषयदृष्टितिरस्करणसामर्थ्यरहितेनायमात्मा न लभ्यो न शक्यः साक्षात्कर्तुमि

पूर्वोक्तयोरुत्तरत्नहेतुत्वद्योतनार्थोऽथशब्दः॥ तदेवोपपादयति॥ एतावद्धीति॥ वाक्यांतरमुत्थाप्यव्याकरोति॥ अमौनंचेत्यादिना॥ मौनामौनयोर्ब्रा
ह्मण्यंप्रतिसामग्रीत्वद्योतकोऽथशब्दः॥ ब्राह्मण्यमुपपादयति॥ ब्रह्मैवेति॥ आचार्यपरिचर्यापूर्वकंवेदांतानांतात्पर्यावधारणंपांडित्यंयुक्तितो
ऽनात्मदृष्टितिरस्कारोबाल्यं॥ अहमात्मापरंब्रह्मनमत्तोऽन्यदस्तिकिंचनेतिमननंसैवानुसंधानंमौनंमहावाक्यार्थावगतिर्ब्राह्मण्यमितिविभागः॥ प्रा

अमौनंचात्मज्ञानानात्मप्रत्ययतिरस्कारौपांडित्यबाल्यसंज्ञकौनिःशेषंकृत्वामौनंनामानात्मप्रत्ययतिरस्करणस्यपर्यवसानंफ
लंतच्चनिर्विद्याथब्राह्मणःकृतकृत्योभवति॥ ब्रह्मैवसर्वमितिप्रत्ययउपजायतेसब्राह्मणःकृतकृत्योतोब्राह्मणोनिरुपचरितं
हितदातस्यब्राह्मण्यंप्राप्तमतआहसब्राह्मणःकेनस्यात्केनचरणेनभवेद्येनस्याद्येनचरणेनभवेत्तेनेदृशएवायंयेनकेनचिच्चर.

सब्राह्मणःकेनस्याद्येनस्यात्तेनेदृशएवातोऽन्यदार्त्तंततोहकहोलःकौषीतकेयउपरराम॥२८॥ पंचमंब्राह्मणं॥५॥

णेनभवेत्तेनेदृशएवउक्तलक्षणएवब्राह्मणोभवति॥ येनकेनचिच्चरणेनेतिस्तुत्यर्थंयेयंब्राह्मण्यावस्थासाद्दृष्टस्तुत्यतेनतुचरणेऽ
नादरोऽतएतस्माद्ब्राह्मण्यावस्थानादशनायाद्यतीतात्मस्वरूपान्नित्यतृप्तादन्यदविद्याविषयमेषणालक्षणंवस्त्वंतरमार्त्तंविनाश्या
गपिप्रसिद्धंब्राह्मण्यमितिचेत्तत्राह॥ निरुपचरितमिति॥ ब्रह्मविदःसमाचारंदृष्टोति॥ सदिति अनियतंतस्यचरणमित्युत्तरमाह॥ येनेति॥ उक्तलक्ष
णत्वंकृतकृत्यत्वंअन्यवस्थितंचरणमित्युक्ताब्रह्मविदोयथेष्टचेष्टाऽभीष्टास्यात्तथाचयद्यदाचरतिश्रेष्ठइतिस्मृतेरितरेषामप्याचारेऽनादरःस्यादित्या
शंक्याह॥ येनकेनचिदिति॥ विहितमाचरतोनिषिद्धंचत्यजतःशुद्धबुद्धेःश्रुताद्वाक्यात्सम्यग्धीरुत्पद्यतेतस्यचवासनावशाद्व्यवस्थितैवचेष्टानाम्यव

अतोन्यदित्यादि व्याकरोति॥ अत इति॥ स्वप्नेत्यादि बहुदृष्टांतोपादानं दार्ष्टांतिकस्य बहुरूपत्वद्योतनार्थं॥ अतोन्यदिति कुतो विशेषणमित्याशं
क्याह॥ आत्मैवेति॥ २९॥ इति श्रीमद्बृहदारण्यके पंचमप्रपाठके कहोलब्राह्मणं पंचमं॥ ५॥ पूर्वब्राह्मणयोरात्मनः सर्वांतरत्वमुक्तं तन्निर्णयार्थ
मुत्तरं ब्राह्मणत्रयमिति संगतिमाह॥ यत्साक्षादिति॥ उक्तमेव संबंधं विवृणोति॥ पृथिव्यादीनीति॥ अंतर्बहिर्भावेन सूक्ष्मस्थूलतारतम्यक्रमेणाय

स्वप्नमायामरीच्युदकसममसारमात्मैवैकः केवलो नित्यमुक्त इति ततो कहोलः कौषीतकेय उपरराम॥ १॥ बृहदारण्यके पंचमप्रपाठ
केकहोलब्राह्मणं पंचमं॥ ५॥ यत्साक्षादपरोक्षाद्ब्रह्म सर्वांतर आत्मेत्युक्तं तस्य सर्वांतरस्य स्वरूपाधिगमाय शाकल्यब्राह्मणांतमथ आ
रभ्यते॥ पृथिव्यादीनि आकाशांतानि भूतान्यंतर्बहिर्भावेन व्यवस्थितानि तेषां यद्बाह्यं बाह्यमधिगम्याधिगम्य निराकुर्वन्द्रष्टुः साक्षा

अथ हैनं गार्गी वाचक्नवी पप्रच्छ याज्ञवल्क्येति होवाच यदिदꣳ सर्वमप्स्वोतं च प्रोतं च॥

त्सर्वांतरोऽगौणः आत्मा सर्वसंसारधर्मविनिर्मुक्तो दर्शयितव्य इत्यारंभः॥ अथ ह एनं गार्गी नामतो वाचक्नवी वचक्नोर्दुहिता पप्रच्छ याज्ञ
वल्क्येति होवाच यदिदं सर्वं पार्थिवं धातुजातमप्सूदके ओतं च दीर्घपटतंतुवत्प्रोतं तिर्यक्तंतुवद्विपरीतं वा अद्भिः सर्वतोंतर्बहिर्भूताभि
र्व्याप्तमित्यर्थः॥ अन्यथा सक्तुमुष्टिवद्विशीर्येत इदं तावदनुमानमुपन्यस्तं र्थः॥ बाह्यं बाह्यमिति वीप्सोपरिष्टात्तद्व्याप्टृत्वोपपत्तिद्योतनार्थं नित्यसंबंधा
त॥ निराकुर्वन्मुमुक्षुः सर्वांतरमात्मानं प्रतिपद्यते तथा सप्रयोक्तविशेषणो दर्शयितव्य इत्युत्तरग्रंथारंभ इति योजना॥ कहोलप्रश्ननिर्णयानंतर्य
मथशब्दार्थः॥ यत्पार्थिवं धातुजातं तदिदं सर्वमप्स्वित्यादि योजनीयं॥ पदार्थमुक्त्वा वाक्यार्थमाह॥ अद्भिरिति॥ पार्थिवस्य धातुजातस्याद्भिर्व्याप्त्यभावे दोषमाह

तदेवंदर्शयितुंव्याप्तिमाह॥ यत्कार्यमिति॥ कारणेनव्यापकेनेतिशेषः॥ यत्कार्यंतत्कारणेनव्याप्तंपरिच्छिन्नंतद्व्यापकेनव्याप्तंयच्चस्थूलंतत्सूक्ष्मे
णव्याप्तमितित्रिःप्रकाराव्याप्तिः॥ इतिशब्दस्तत्समाप्त्यर्थः॥ व्याप्तिभूमिमाह॥ यथेति॥ संप्रत्यनुमानमाह॥ तथेति॥ पूर्वंपूर्वमित्यबादेर्धर्मिणोनिर्देशः
॥ उत्तरेणोत्तरेणवाय्वादिकारणेनापरिच्छिन्नेनसूक्ष्मेणव्याप्तमितिशेषः॥ विमतंकारणेनव्यापकेनसूक्ष्मेणव्याप्तंकार्यत्वात्परिच्छिन्नत्वात्स्थूलत्वा
च्चपृथिवीवदित्यर्थः॥ सर्वांतरादात्मनोर्वागुक्तन्यायंसर्वत्रसंचारयति॥ इत्येषइति॥ ननुतथापिभूतपंचकव्यतिरिक्तानांगंधर्वलोकादीनामप्यंत

यत्कार्यंपरिच्छिन्नंस्थूलंकारणेनापरिच्छिन्नेनसूक्ष्मेणव्याप्तमितिदृष्टंयथापृथिव्यद्भिः॥ तथापूर्वंपूर्वमुत्तरेणोत्तरेणव्यापिनाभवितव्य
मित्येषआत्मसर्वांतरादात्मनःप्रश्नार्थःतत्रभूतानिपंचसंहतान्येवोत्तरोत्तरेणसूक्ष्मभावेनव्यापकेनकारणरूपेणव्यवतिष्ठंतेन

कस्मिन्नुखल्वापओताश्चप्रोताश्चेति॥

चपरमात्मनोवृक्षाद्यतिरेकेणावस्त्वंतरमस्तिसत्यस्यसत्यमितिश्रुतेःसत्यंचभूतपंचकंसत्यस्यसत्यंसचपरआत्माकस्मिन्नुख
ल्वापओताश्चप्रोताश्चेतितासामपिकार्यत्वात्स्थूलत्वात्परिच्छिन्नत्वाच्चक्वचिदोतप्रोतभावेनभवितव्यंतत्रक्वतासामोतप्रोतभा
वइत्येवमुत्तरोत्तरंप्रश्नप्रसंगोयोजितव्यःवायोगार्गीति॥ एतेनोपदेशात्कथंभूतपंचकमुदासेनसर्वांतरप्रतिपत्तिर्विवक्ष्यतेतत्राह॥ त
त्रेति॥ उक्तरीत्याप्रश्नार्थेस्थितेसतीतियावत्॥ भूतात्मस्थितिनिर्धारणेवासप्तमी॥ अथपरमात्मानंभूतानिचहित्वापृथगेवगंधर्वलोकादीनि
वस्त्वंतराणिभविष्यंतिनेत्याह॥ नचेति॥ गंधर्वलोकादीन्यपिभूतानामेवावस्थाविशेषास्ततःसत्यंभूतपंचकंतस्यसत्यंपरंब्रह्मनान्यदंतरालेप्रति

तात्पर्यमुक्त्वा प्रश्नमुत्थाप्य तदक्षराणि व्याकरोति॥ कस्मिन्नित्यादिना कस्मिन्नु खलु वायुरित्यादावुक्तन्यायमतिदिशति॥ एवमिति॥ वायावित्ययु
क्ता प्रत्युक्तिरपामग्निकार्यत्वादग्नाविति वक्तव्यत्वादिति शंकते॥ नन्विति॥ अग्नेरुदकव्यापकत्वेपि काष्ठविद्युदादिपारतंत्र्यात्स्वतंत्रेण केन

नन्वग्नाविति वक्तव्यं नैष दोषोऽग्नेः पार्थिवं वाऽप्यं वा धातुमनाश्रित्येतरभूतवत्स्वातंत्र्येणात्मलाभो नास्तीति तस्मिन्नोतप्रोतभावो नो
पदिश्यते कस्मिन्नु खलु वायुरोतश्च प्रोतश्चेत्यंतरिक्षलोकेषु गार्गीति तान्येव भूतानि संहतान्यंतरिक्षलोकास्तान्यपि गंधर्वलोकेषु

वायौ गार्गीति कस्मिन्नु खलु वायुरोतश्च प्रोतश्चेत्यंतरिक्षलोकेषु गार्गीति कस्मिन्नु खल्वंतरिक्षलोका ओताश्च प्रोताश्चेति
गंधर्वलोकेषु गार्गीति कस्मिन्नु खलु गंधर्वलोका ओताश्च प्रोताश्चेत्यादित्यलोकेषु गार्गीति कस्मिन्नु खल्वादित्यलोका ओ
ताश्च प्रोताश्चेति चंद्रलोकेषु गार्गीति कस्मिन्नु खलु चंद्रलोका ओताश्च प्रोताश्चेति नक्षत्रलोकेषु गार्गीति कस्मिन्नु खलु नक्ष
त्रलोका ओताश्च प्रोताश्चेति देवलोकेषु गार्गीति कस्मिन्नु खलु देवलोका ओताश्च प्रोताश्चेतींद्रलोकेषु गार्गीति कस्मिन्नु ख
ल्विंद्रलोका ओताश्च प्रोताश्चेति प्रजापतिलोकेषु गार्गीति कस्मिन्नु खलु प्रजापतिलोका ओताश्च प्रोताश्चेति ब्रह्मलोकेषु

गंधर्वलोका आदित्यलोकेष्वादित्यलोकाश्चंद्रलोकेषु चंद्रलोका नक्षत्रलोकेषु नक्षत्रलोका देवलोकेषु देवलोका इंद्रलोकेष्विंद्रलोका
विराट्शरीरारंभकेषु भूतेषु प्रजापतिलोकेषु प्रजापतिलोकाः ब्रह्मलोकेषु ब्रह्मलोका नामांडारंभकाणि भूतानि॥ त्विदपांव्याप्तिर्वक्तव्यस्य
ग्निं हित्वा तत्कारणे वायावित्युक्तं॥ वायोश्च स्वकारणतंत्रत्वेपि नोदकतंत्रतेति तद्व्यापकत्वसिद्धिरित्युत्तरमाह॥ नैष दोष इत्यादिना॥ अंतरिक्षलोक

अंतरिक्षलोकादीनांप्रत्येकमेकत्वात्कुतोबहुवचनमित्याशंक्याह॥सर्वत्रहीति॥पूर्ववदनुमानेनसूत्रंपृष्टवतींगार्गींप्रतिषेधति॥सहोवा
चेत्यादिना॥उक्तमेवस्पष्टयन्वाक्यार्थमाह॥आगमेनेति॥प्रतिषेधातिक्रमेदोषमाह॥पृष्टंत्वाश्चेति॥मूर्धपातप्रसंगंप्रकटयन्प्रतिषेधमु



सर्वत्रहिसूक्ष्मतारतम्यक्रमेणप्राण्युपभोगाश्रयाकारपरिणतानिभूतानिसंहतानितान्येवपंचेतिबहुवचनंआजिकस्मिन्नु
खलुब्रह्मलोकाओताश्चप्रोताश्चेतिसहोवाचयाज्ञवल्क्योहेगार्गिमातिप्राक्षीःस्वप्रश्नन्यायप्रकारमतीत्यागमेनप्रष्टव्यांदेव
तामनुमानेनमाप्राक्षीरित्यर्थः॥पृष्टंत्वाश्चमातेतवमूर्धाशिरोव्यपप्तद्धिस्पष्टंमापतेद्देवतायाःस्वप्रश्नआगमविषयस्तंप्रश्नवि

कस्मिन्नुखलुब्रह्मलोकाओताश्चप्रोताश्चेतिसहोवाचगार्गिमातिप्राक्षीर्मातेमूर्धाव्यपप्तदनतिप्रश्न्यांवैदेवतामतिपृ
च्छसिगार्गिमातिप्राक्षीरितिततोहगार्गीवाचक्नव्युपरराम॥२९॥षष्ठंब्राह्मणं॥६॥

षयमतिक्रांतोगार्ग्याःप्रश्नआनुमानिकत्वात्स
यस्याःदेवतायाःप्रश्नःसातिप्रश्न्यानअतिप्रश्न्याअनतिप्रश्न्यास्वप्रश्नविषयैवकेवलागमगम्येत्यर्थः॥तामनतिप्रश्न्यांवैदेवतामतिपृ
च्छसिअतोगार्गिमातिप्राक्षीर्मर्तुंचेन्नेच्छसिततोहगार्गीवाचक्नव्युपरराम॥इतिश्रीमद्बृहदारण्यकेभाष्येपंचमप्रपाठकेषष्ठंब्राह्म
णं॥६॥इदानींब्रह्मलोकानामंतरतमंसूत्रंचवक्तव्यमितितदर्थआरंभःतच्चागमेनैवप्रष्टव्यमितीतिहासेनागमोपन्यासःक्रियते

पसंहरति॥देवतायाइत्यादिना॥२९॥इतिश्रीमद्बृहदारण्यकेपंचमप्रपाठकेषष्ठंब्राह्मणं॥६॥पूर्वस्मिन्ब्राह्मणेसूत्रादर्वाक्तनंव्यापकमुक्तमिदानींसू
त्रंतदंतर्गतमंतर्यामिणंचनिर्वक्तुमुत्तरंब्राह्मणमितिसंगतिमाह॥इदानीमिति॥ब्राह्मणतात्पर्यमुक्त्वाऽऽख्यायिकातात्पर्यमाह॥तच्चागमेनैवेति॥आ

गार्ग्या मूर्द्धपातभयादुपरतेरनंतरमथशब्दार्थः॥ सोब्रवीदितिप्रतीकोपादानं॥ तस्यार्थमाह॥ सूत्रमिति॥ इतिशब्दार्थमाह॥ एवमिति॥

अथहैनमुद्दालकोनामतोरुणस्यापत्यमारुणिः पप्रच्छयाज्ञवल्क्येतिहोवाचमद्रेषुदेशेषवसामोषितवंतः पतंचलस्यपतंचलोनामतस्तस्यैवकपिगोत्रस्यकाप्यस्यगृहेषुयज्ञमधीयानाः यज्ञशास्त्राध्ययनंकुर्वाणास्तस्यासीद्भार्यागंधर्वगृहीतातमपृच्छामकोसीतिसोब्रवीत्कबंधोनामतोथर्वणोपत्यमाथर्वणइतिसोब्रवीद्गंधर्वः पतंचलंकाप्ययाज्ञिकांश्चतच्छिष्यांश्चास्मांश्चवेत्थनुत्वं

अथहैनमुद्दालकआरुणिः पप्रच्छयाज्ञवल्क्येतिहोवाचमद्रेष्ववसामपतंचलस्यकाप्यस्यगृहेषुयज्ञमधीयानास्तस्यासीद्भार्यागंधर्वगृहीतातमपृच्छामकोसीतिसोब्रवीत्कबंधआथर्वणइतिसोब्रवीत्पतंचलंकाप्यंयाज्ञिकांश्चवेत्थनुत्वंकाप्यतत्सूत्रंयेनायंचलोकः परश्चलोकः सर्वाणिचभूतानिसंदृब्धानिभवंतीतिसोब्रवीत्पतंचलः काप्योनाहंतत्भगवन्वेदेतिसोब्रवीत्पतंचलंकाप्यंयाज्ञिकांश्चवेत्थनुत्वंकाप्यतमंतर्यामिणंयइमंचलोकंपरंचलोकंसर्वाणिचभूतानियोंतरोयमयतीति॥

हेकाप्यजानीषेतत्सूत्रं॥ किंतद्येनसूत्रेणायंचलोकः इदंचजन्मपरश्चलोकः परंचप्रतिपत्तव्यंजन्मसर्वाणिचभूतानिब्रह्मादिस्तंबपर्यंतानिसंदृब्धानिसंग्रथितानिस्रगिवसूत्रेणविष्टब्धानिभवंतियेनतत्किंसूत्रंवेत्थसोब्रवीदेवंपृष्टः काप्योनाहंतद्भगवन्वेदेतितत्सूत्रंनाहंजानेहेभगवन्नितिसंपूजयन्नाहसोब्रवीत्पुनर्गंधर्वउपाध्यायमस्मांश्चवेत्थनुत्वंकाप्यतमंतर्यामिणमंतर्यामीतिविशेष्यतेयइमंचलोकंपरंचलोकंसर्वाणिचभूतानियोंतरोभ्यंतरःसन्यमयतिनियमयतिदारुयंत्रमिवभ्रामयतिस्वंस्वमुचितंव्यापारंकारयतीति॥

येनायं चेत्यादिरुक्तः प्रकारः स सर्वलोकांश्च वेत्तीति संबंधः॥ विशेषणोक्तिपूर्वकं तानेव लोकाननुवदति॥ भूरादीनिति॥ स ब्रह्मविदित्यादिनोक्तं सं
सोऽब्रवीदेवमुक्तः पतंचलः काप्योनाहं तज्जाने भगवन्निति सं पूजयन्नाह सोऽब्रवीत्पुनर्गंधर्वः सूत्रं तदंतर्गतांतर्यामिणो विज्ञानं त्वं यतेयः
कश्चिद्वै तत्सूत्रं हे काप्य विद्याद्विजानीयात्तं चांतर्यामिणं सूत्रांतर्गतं तस्यैव सूत्रस्य नियंतारं विद्याद्य इत्येवमुक्तेन प्रकारेण स हि ब्रह्म
वित्परमात्मवित्स लोकांश्च भूरादीनंतर्यामिणा नियम्यमानांल्लोकान्वेत्ति स देवांश्चाग्न्यादीन्लोकिनो जानाति वेदांश्च सर्वप्रमाणभू
तान्वेत्ति भूतानि च ब्रह्मादीनि सूत्रेण ध्रियमाणानि तदंतर्गतेनांतर्यामिणा नियम्यमानानि वेत्ति स आत्मानं च कर्तृत्वभोक्तृत्वविशिष्टं ते

सोऽब्रवीत्तं चलः काप्योनाहं तं भगवन्वेदेति सोऽब्रवीत्पतंचलं काप्यं याज्ञिकांश्च यो वै तत्काप्य सूत्रं विद्यात्तं चांतर्या
मिणमिति स ब्रह्मवित्स लोकवित्स देववित्स वेदवित्स भूतवित्स आत्मवित्स सर्वविदिति तेभ्योऽब्रवीत्तदहं वेद तच्चेत्त्वं या
ज्ञवल्क्य सूत्रमविद्वांस्तं चांतर्यामिणं ब्रह्मगवीरुदजसे मूर्धा ते विपतिष्यतीति वेद वा अहं गौतम तत्सूत्रं तं चांतर्यामि
णमिति यो वा इदं कश्चिद्ब्रूयाद्वेद वेदेति यथा वेत्थ तथा ब्रूहीति॥ ३॥ नैवांतर्यामिणा नियम्यमानं वेत्ति सर्वं च जगत्तथाभूतं वेत्तीत्ये
वं स्तुते सूत्रांतर्यामिविज्ञाने प्रलुब्धः काप्योऽभिमुखीभूतो वयं च तेभ्योऽब्रवीद्गंधर्वः सूत्रमंतर्यामिणं च तदहं सूत्रांतर्यामिविज्ञानं वेद गंध
र्वाल्लब्धागमः संस्तच्चेद्याज्ञवल्क्य सूत्रं तं चांतर्यामिणमविद्वांश्चेद्ब्रह्मवित्स्वन्यद्ब्रह्मगवीरुदजसे ब्रह्मविदां स्वभूता गा उदजसे उन्न
यसि त्वमन्यायेन ततो मच्छापदग्धस्य मूर्धा शिरस्ते तव विस्पष्टं पतिष्यति क्षिपतिं॥ सर्वं चेति॥ तथाभूतं सूत्रेण विधृतमंतर्यामिणा च नियम्यमा

भवत्वेवं तत्सूत्रादिज्ञानं मम किमायातमित्याशंक्याह ॥ तच्चेदिति ॥ किं तेनेत्यत्र तस्येत्यध्याहारः ॥ कार्येण दर्शयेत्युक्तं विवृणोति ॥ यथेति ॥ ३० ॥
याज्ञवल्क्योक्तेऽस्मासर्यमाह ॥ ब्रह्मलोकाइति ॥ इत्यभीष्टमागमविदामित्यध्याहृत्याद्यस्येतिशब्दस्य योजना ॥ प्रश्नांतरं सूत्रविषयं गौतमवाक्यं ॥ वेश

एवमुक्तो याज्ञवल्क्य आह वेद जानाम्यहं हे गौतमेति गोत्रतः तत्सूत्रं यत् गंधर्वस्तुभ्यमुक्तवान्यं चांतर्यामिणं गंधर्वाद्विदितवंतो यूयं तं चां
तर्यामिणं वेदाहमित्येवमुक्ते प्रत्याह गौतमो यः कश्चित्प्राकृत इदं यत्त्वयोक्तं ब्रूयात्कथं वेद वेदेत्यात्मानं श्लाघयन् किं तेन गर्जितेन कार्येण द
र्शय यथा वेत्थ तथा ब्रूहीति ॥ ३० ॥ १ ॥ स होवाच याज्ञवल्क्यो ब्रह्मलोका यस्मिन्नोताश्च प्रोताश्च वर्त्तमानकाले यथा ह्यथ व्यस्तु तत्सूत्रमागम

स होवाच वायुर्वै गौतम तत्सूत्रं वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि भवंति तस्माद्वै
गौतम पुरुषं प्रेतमाहुर्व्यस्रंसिषतास्यांगानीति वायुना हि गौतम सूत्रेण संदृब्धानि भवंतीत्येवमेवैतद्याज्ञवल्क्यांतर्यामिणं
ब्रूहीति ॥ ३१ ॥

गम्यं वक्तव्यमिति तदर्थं प्रश्नांतरमुत्थापितं अतस्तन्निर्णयायाह वायुर्वै गौतम तत्सूत्रं नान्यद्वायुरिति सूक्ष्ममाकाशव
द्विष्टंभकं पृथिव्यादीनां यदात्मकं सप्तदशविधं लिंगं कर्मवासनासमवायि प्राणिनां यत्तत्समष्टिव्यष्ट्यात्मकं यस्य बाह्या भेदाः सप्त सप्त मरु
द्गणाः समुद्रस्येवोर्मयस्तदेतद्वायव्यं तत्त्वं सूत्रमित्यभिधीयते वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि भ

व्याख्यामाह ॥ नान्यदिति ॥ सूक्ष्मत्वे दृष्टांतमाह ॥ आकाशवदिति ॥ वायुमेव विशिनष्टि ॥ यदात्मकमिति ॥ पंचभूतानि दश बाह्यानींद्रियाणि पंचवृत्तिः प्राणश्चेत
विंधमंतःकरणमिति सप्तदशविधत्वं ॥ कर्मणां वासनानां चोत्तरसृष्टिहेतूनां प्राणिभिरर्जितानामाश्रयत्वादपेक्षितमेव लिंगमित्याह ॥ कर्मेति ॥ तस्यैवसा

४५५

बृ.र. तस्य सूत्रत्वं साधयति॥ वायुनेति॥ प्रसिद्धमेतत्सूत्रं विदामिति शेषः॥ लौकिकीं प्रसिद्धिमेव प्रश्नपूर्वकमनंतरश्रुत्यवष्टंभेन स्पष्टयति॥ कथमित्या अ.
४४ दिना॥ उक्तमेव दृष्टांतेन व्यनक्ति॥ सूत्रेत्यादिना॥ वायोः सूत्रत्वे सिद्धे फलितमाह॥ अत इति॥ नियंतुरीश्वरस्य लौकिकनियंतृवत्कार्यकरणवत्त्वमा ५

प्रसिद्धमेतदस्ति च लोके प्रसिद्धिः कथं यस्माद्वायुः सूत्रं वायुना विधृतं सर्वं तस्माद्वै गौतम पुरुषं प्रेतमाहुः कथयंति व्यस्रंसिषत वि
स्रस्तान्यस्य पुरुषस्यांगानीति सूत्रापगमे हि मण्यादीनां प्रोतानामवस्रंसनं दृष्टमेवं वायुः सूत्रं तस्मिन्मणिवत्प्रोतानि यद्यस्यांगानि
स्युस्ततो युक्तमेतद्वाय्वपगमे विस्रंसनमंगानामतो वायुना हि गौतम सूत्रेण संदृब्धानि भवंतीति निगमयति एवमेवैतद्याज्ञवल्क्य सम्य
गुक्तं सूत्रं तदंतर्गतं त्विदानीं तस्यैव सूत्रस्य नियंतारमंतर्यामिणं ब्रूहीत्युक्त आह॥ ३१॥ यः पृथिव्यां तिष्ठन्भवति सोंतर्यामी सर्वः पृथिव्यां

यः पृथिव्यां तिष्ठन्पृथिव्या अंतरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमंतरो यमयत्येष त आत्मांतर्याम्यमृतः॥ ३२॥

तिष्ठतीति सर्वत्र प्रसंगो माभूदिति विशिनष्टि पृथिव्या अंतरोऽभ्यंतरस्तत्रैतत्स्यात्पृथिवी देवतैवांतर्यामीत्यत आह यमंतर्यामिणं पृथिवी
देवतापि न वेद मय्यन्यः कश्चिद्वर्तत इति यस्य पृथिवी शरीरं यस्य च पृथिव्येव शरीरं नान्यत्पृथिवीदेवताया यच्छरीरं तदेव शरीरं यस्य शरीर १८
ग्रहणं चोपलक्षणार्थं करणं च पृथिव्यास्तस्याः स्वकर्मप्रयुक्तं हि कार्यकरणं च पृथिवीदेवतायास्तदस्य स्वकर्माभावादंतर्यामिणो नित्यमुक्तत्वा

शंक्याह॥ यस्य चेति॥ पृथिव्याः शरीरत्वमेव न तु शरीरवत्त्वमित्याशंक्याह॥ पृथिवीति॥ पृथिव्या यत्करणं तदेव तस्य करणं चेति योजना॥ कथं पृथिव्याः राम:
शरीरेंद्रियवत्त्वं तदाह॥ स्वकर्मेति॥ अंतर्यामिणोऽपि तथा किं न स्यात्तत्राह॥ तदस्येति॥ अस्यांतर्यामिणस्तदेव कार्यकरणं च नान्यदित्यत्र हेतुमाह॥ स्वकर्मेति॥ ४४

तदेव हेत्वंतरेण स्फोरयति ॥ परार्थेति ॥ यः पृथिवीमित्यादिवाक्यस्य तात्पर्यमाह ॥ देवतेति ॥ तत्र वाक्यमवतार्य व्याचष्टे ॥ य ईदृग् इति ॥ यस्य पृथिवी देव

परार्थकर्तव्यतास्वभावत्वात्परस्य यत्कार्यकरणं च तदेवास्य न स्वतस्तदाह यस्य पृथिवी शरीरमिति देवताकार्यकरणस्येश्वरसाक्षिमात्र
सांनिध्येन हि नियमेन प्रवृत्तिनिवृत्ती स्यातां य ईदृगीश्वरो नारायणाख्यः पृथिवीं पृथिवीदेवतां यमयति नियमयति स्वव्यापारेंतरोभ्यंत

योप्सु तिष्ठन्नद्भ्योंतरो यमापो न विदुर्यस्यापः शरीरं योपोंतरो यमयत्येष त आत्मांतर्याम्यमृतः ॥ ३३ ॥ योग्नौ तिष्ठन्नग्नेरंतरो यम
ग्निर्न वेद यस्याग्निः शरीरं योऽग्निमंतरो यमयत्येष त आत्मांतर्याम्यमृतः ॥ ३४ ॥ योंतरिक्षे तिष्ठन्नंतरिक्षादंतरो यमंतरिक्षं न
वेद यस्यांतरिक्षं शरीरं योंतरिक्षमंतरो यमयत्येष त आत्मांतर्याम्यमृतः ॥ ३५ ॥ यो वायौ तिष्ठन्वायोरंतरो यं वायुर्न वेद यस्य वा
युः शरीरं यो वायुमंतरो यमयत्येष त आत्मांतर्याम्यमृतः ॥ ३६ ॥ यो दिवि तिष्ठन्दिवोंतरो यं द्यौर्न वेद यस्य द्यौः शरीरं यो दिवमं
तरो यमयत्येष त आत्मांतर्याम्यमृतः ॥ ३७ ॥ य आदित्ये तिष्ठन्नादित्यादंतरो यमादित्यो न वेद यस्यादित्यः शरीरं य आदित्यमंत
रो यमयत्येष त आत्मांतर्याम्यमृतः ॥ ३८ ॥ यो दिक्षु तिष्ठन्दिग्भ्योंतरो यं दिशो न विदुर्यस्य दिशः शरीरं यो दिशोंतरो यमयत्येष त
आत्मांतर्याम्यमृतः ॥ ३९ ॥ यश्चंद्रतारके तिष्ठंश्चंद्रतारकादंतरो यं चंद्रतारकं न वेद यस्य चंद्रतारकं शरीरं यश्चंद्रतारकमंतरो
यमयत्येष त आत्मांतर्याम्यमृतः ॥ ४० ॥ य आकाशे तिष्ठन्नाकाशादंतरो यमाकाशो न वेद यस्याकाशः शरीरं य आकाशमंतरो यमय

रस्तिष्ठन्नेष त आत्मा तेतव मम च सर्वभूतानां चेत्युपलक्षणार्थं एतदंतर्यामी यः त्वया पृष्टोऽमृतः सर्वसंसारधर्मवर्जित इत्येतत् ॥ ३२ ॥ ३ ॥ ताकार्यक

ऽथिवीपर्याये दर्शितन्यायं पर्यायांतरेष्वतिदिशति॥ समानमिति॥ सर्वत्र प्राणादौ तिष्ठन्नंतर्यामीत्यात्मेति संबंधः॥४३॥ वाक्यांतरं प्रश्नपूर्वकमुत्थाप्य



समानमन्यद्यो ऽप्सु तिष्ठन्नग्नावंतरिक्षे वायौ दिव्यादित्ये दिक्षु चंद्रतारके आकाशे यस्तमसि आवरणात्मके बाह्ये तमसि तेजसि तद्विपरीते

यस्तमसि तिष्ठꣳस्तमसोंतरो यं तमो न वेद यस्य तमः शरीरं यस्तमोंतरो यमयत्येष त आत्मांतर्याम्यमृतः॥४२॥ यस्तेजसि तिष्ठꣳस्तेजसोंतरो यं तेजो न वेद यस्य तेजः शरीरं यस्तेजोंतरो यमयत्येष त आत्मांतर्याम्यमृत इत्यधिदैवतमथाधिभूतं॥४३॥ यः सर्वेषु भूतेषु तिष्ठन्सर्वेभ्यो भूतेभ्योंतरो यꣳसर्वाणि भूतानि न विदुर्यस्य सर्वाणि भूतानि शरीरं यः सर्वाणि भूतान्यंतरो यमयत्येष त आत्मांतर्याम्यमृत इत्यधिभूतमथाध्यात्मं॥४४॥ यः प्राणे तिष्ठन्प्राणादंतरो यं प्राणो न वेद यस्य प्राणः शरीरं यः प्राणमंतरो यमयत्येष त आत्मांतर्याम्यमृतः॥४५॥ यो वाचि तिष्ठन्वाचोंतरो यं वाङ्न वेद यस्य वाक् शरीरं यो वाचमंतरो यमयत्येष त आत्मांतर्याम्यमृतः॥४६॥ यश्चक्षुषि तिष्ठꣳश्चक्षुषोंतरो यं चक्षुर्न वेद यस्य चक्षुः शरीरं यश्चक्षुरंतरो यमयत्येष त आत्मांतर्याम्यमृतः॥४७॥ यः श्रोत्रे तिष्ठन्श्रोत्रादंतरो यꣳश्रोत्रं न वेद यस्य श्रोत्रꣳशरीरं यः श्रोत्रमंतरो यमयत्येष त आत्मांतर्याम्यमृतः॥४८॥ यो मनसि तिष्ठन्मनसोंतरो यं मनो न वेद यस्य मनः शरीरं यो मनोंतरो यमयत्येष त आत्मांतर्याम्यमृतः॥४९॥ यस्त्वचि तिष्ठꣳस्त्वचोंतरो यं त्वङ्न वेद यस्य त्वक् शरीरं यस्त्वचमंतरो यमयत्येष त आत्मांतर्याम्यमृतः॥५०॥

प्रकाशसामान्यादृत्येदमधिदैवतमंतर्यामिविषयं दर्शनं देवतासु॥४३॥ अथाधिभूतं भूतेषु ब्रह्मादिस्तंबपर्यंतेष्वंतर्यामिदर्शनमधिभूतं॥४४॥ माचष्टे॥ कस्मादित्यादिना॥ यथा मनसि तथा बुद्धावपि सन्निधानात्तात्ते

तत्रेति पूर्वसंदर्भोक्तिः॥ अन्वयमुपलक्षयितुमतोन्य इत्युक्तं॥ पदार्थान्व्याकरोति॥ अत इति॥ अन्योद्रष्टानास्तीति संबंधः॥ एष त इत्यादि वा

अथाध्यात्मं यः प्राणे प्राणवायुसहिते घ्राणे यो वाचि चक्षुषि श्रोत्रे मनसि त्वचि विज्ञाने बुद्धौ॥ ५१॥ रेतसि प्रजनने कस्मात् पुनः कारणात् पृथिव्यादिदेवता महाभागाः सत्योमनुष्यादिवदात्मनि तिष्ठंतमात्मनो नियंतारमंतर्यामिणं न विदुरित्यत आह अदृष्टो न दृष्टो न विषयीभूतश्चक्षुर्दर्शनस्य कस्यचित्स्वयं तु चक्षुषि संनिहितत्वाद्दृशिस्वरूप इति द्रष्टा तथाऽश्रुतः श्रोत्रगोचरत्वमनापन्नः कस्यचित्स्वयं त्वलुप्त

यो विज्ञाने तिष्ठन्विज्ञानादंतरो यं विज्ञानं न वेद यस्य विज्ञानं शरीरं यो विज्ञानमंतरो यमयत्येष त आत्मांतर्याम्यमृतः॥ ५१॥
यो रेतसि तिष्ठन्रेतसोंतरो यं रेतो न वेद यस्य रेतः शरीरं यो रेतोंतरो यमयत्येष त आत्मांतर्याम्यमृतोऽदृष्टो द्रष्टाऽश्रुतः श्रोताऽमतो मंता विज्ञातो विज्ञाता नान्योतोस्ति द्रष्टा नान्योतोस्ति श्रोता नान्योतोस्ति मंता नान्योतोस्ति विज्ञातैष त आत्मांतर्याम्यमृतोऽतोन्यदार्तं ततो होद्दालक आरुणिरुपरराम॥ ५२॥ सप्तमं ब्राह्मणं॥ ७॥

श्रवणशक्तिः सर्वश्रोत्रेषु संनिहितत्वाच्छ्रोता तथाऽमतो मनःसंकल्पविषयमनापन्नः दृष्टश्रुते एव हि सर्वः संकल्पयत्यदृष्टत्वादश्रुतत्वादेवामतोऽलुप्तमननशक्तित्वात्सर्वमनःसु संनिहितत्वाच्च मंता तथाऽविज्ञातो निश्चयगोचरमनापन्नो रूपादिवत्सुखादिवद्वा स्वयं त्वलुप्तविज्ञानशक्तित्वात्तत्संनिधानाच्च विज्ञाता तत्र यं पृथिवी न वेद यं सर्वाणि भूतानि न विदुरिति चान्ये नियंतव्या विज्ञातारोन्यो नियंतांतर्यामीति प्राप्तं तदन्यत्वाशंकानिरासार्थमुच्यते नान्योतो नअन्यः अतः अस्मादंतर्यामिणो नान्योऽस्ति द्रष्टा तथा नान्योतोस्ति श्रोता नान्योतोस्ति मंता नान्योतोस्ति विज्ञाता कस्यार्थमाह॥ ॥ ॥ ॥ ॥

यस्मादित्यादिना॥२३॥ ॥इत्यंतर्यामिब्राह्मणं सप्तमं॥७॥ पूर्वस्मिन्ब्राह्मणे सूत्रांतर्यामिणो प्रश्नप्रत्युक्तिभ्यां निर्धारितौ संप्रत्युत्तरब्राह्मणतात्पर्यमाह ॥अत:परमिति॥ सोपाधिकवस्तुनिर्धारणानंतर्यमथशब्दार्थ: ननु यस्माद्भयाद्गार्गी पूर्वमुपरता तस्य तदवस्थत्वात्कथं पुन: सा प्रष्टुं प्रवर्तते तत्राह॥

यस्मात्परो नास्ति द्रष्टा श्रोता मंता विज्ञाता योऽदृष्टो द्रष्टाऽश्रुत: श्रोताऽमतो मंताऽविज्ञातो विज्ञाताऽमृत: सर्वसंसारधर्मवर्जित: सर्वसंसारिणां कर्मफलविभागकर्तैष त आत्मांतर्याम्यमृतोतोऽस्मादीश्वरादात्मनोन्यदार्तं ततो होद्दालक आरुणिरुपरराम॥५२॥ ॥इति श्रीमद्बृहदारण्यके पंचमप्रपाठके भाष्ये सप्तमं ब्राह्मणं॥७॥ अत: परमशनायादिविनिर्मुक्तं निरुपाधिकं साक्षादपरोक्षात्सर्वांतरं ब्रह्म वक्तव्यमित्यत आरंभ:॥ अथ ह वाचक्नव्युवाच पूर्वं याज्ञवल्क्येन निषिद्धा मूर्धपातभयादुपरता सती पुन: प्रष्टुं ब्राह्मणानुज्ञां प्रार्थयते हे ब्राह्म

अथ ह वाचक्नव्युवाच ब्राह्मणा भगवंतो हंताहमिमं द्वौ प्रश्नौ प्रक्ष्यामि तौ चेन्मे वक्ष्यति न वै जातु युष्माकमिमं कश्चिद्ब्रह्मोद्यं जेतेति पृच्छ गार्गीति॥५३॥

णा भगवंत: पूजावंत: शृणुत मम वचो हंत अहमिमं याज्ञवल्क्यं पुनर्द्वौ प्रश्नौ प्रक्ष्यामि यद्यनुमतिर्भवतामस्ति तौ प्रश्नौ चेद्यदि वक्ष्यति कथयिष्यति मे कथंचिन्न वै जातु कदाचिद्युष्माकं मध्ये इमं याज्ञवल्क्यं कश्चिद्ब्रह्मोद्यं ब्रह्मवादं प्रति जेता न वै कश्चिद्भवेदित्येवमुक्ता ब्राह्मणाश्चानुज्ञां प्रददु: पृच्छ गार्गीति लब्धानुज्ञाह याज्ञवल्क्यं॥५३॥ सा होवाचाहं वै त्वा द्वौ प्रश्नौ प्रक्ष्यामीत्यनुषज्जते कौ ताविति जिज्ञासायां तयोर्दुरुत्तरत्वं द्योतयितुं दृष्टांतपूर्वकं तावाह॥ हे याज्ञवल्क्य यथा लोके काश्य: काशिषु भव: प्रसिद्धं शौर्यं काश्ये वैदेहो वा विदेहानां वा राजा उग्रपुत्र: शूरान्वय इत्यर्थ:॥ पूर्वमिति॥ हंतेत्यस्यार्थमाह॥ यदीति॥ न वै जात्विति प्रतीकमादाय व्याचष्टे॥

संधीयते स उच्यत इति शेषः॥ प्रश्नयोरवश्यं प्रत्युत्तरणीयत्वे ब्रह्मिष्ठत्वांगीकारो हेतुरित्याह॥ ब्रह्मविद्ये इति॥५७॥ सूत्रस्याधारे प्रष्टव्ये किमिति सर्वं जगदन्

उज्यमवतारितज्याकं धनुः पुनरधिज्यमारोपितज्याकं कृत्वा द्वौ बाणवंतौ बाणशब्देन शराग्रे यो वंशखंडः संधीयते तेन विनापि शरो भवतीत्यतो विशिनष्टि बाणवंताविति तौ द्वौ बाणवंतौ शरौ तयोरेव विशेषणं सपत्नातिव्याधिनौ शत्रोः पीडाकरावतिशयेन हस्ते कृत्वोपोत्तिष्ठेत्समीपत आत्मानं दर्शयेदेवमेवाहं त्वा त्वां शरस्थानीयाभ्यां प्रश्नाभ्यां द्वाभ्यामुपोदस्थामुत्थितवत्यस्मि त्वत्समीपे तौ मे ब्रूहीति ब्रह्मविद्ये

साहोवाचाहं वै त्वा याज्ञवल्क्य यथा काश्यो वा वैदेहो वोग्रपुत्र उज्ज्यं धनुरधिज्यं कृत्वा द्वौ बाणवंतौ सपत्नातिव्याधिनौ हस्ते कृत्वोपोत्तिष्ठेदेवमेवाहं त्वा द्वाभ्यां प्रश्नाभ्यामुपोदस्थां तौ मे ब्रूहीति पृच्छ गार्गीति॥५४॥ साहोवाच यदूर्ध्वं याज्ञवल्क्य दिवो यदवाक् पृथिव्या यदंतरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते कस्मिंस्तदोतं च प्रोतं चेति॥५५॥ स होवाच यदूर्ध्वं गार्गि दिवो यदवाक् पृथिव्या यदंतरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षत आकाशे तदोतं च प्रोतं चेति॥५६॥ दाहेतरः पृच्छ गार्गीति॥५७॥ साहोवाच यद्वस्तूर्ध्वमुपरि दिवोंऽडकपालादर्वाग्वागधः पृथिव्या अधोंऽडकपालादर्वाक् अंतरामध्ये द्यावापृथिवी द्यावापृथिव्योरंडकपालयोरिमे च द्यावापृथिवी यद्भूतं यच्चातीतं भवच्च वर्तमानं स्वव्यापारस्थं भविष्यच्च वर्तमानादूर्ध्वकालभावि लिंगगम्यं यत्सर्वमेतदाचक्षते कथयंत्यागमतस्तत्सर्वं द्वैतजातं यस्मिन्नेकीभवतीत्यर्थः॥ तत्सूत्रसंज्ञं पूर्वोक्तं कस्मिन्नोतं च पृथिवीधातुरिवाप्सु॥५५॥ स होवाचेतरो हे गार्गि यत्त्वयोक्तमूर्ध्वं दिव इत्यादि तत्सर्वं यत्सूत्रमाचक्षते तत्सूत्रमाकाशे तदोतं च प्रोतं च यतेतत्राह॥ तत्सर्वमिति॥ पूर्वोक्तं सर्वं जगदात्मकमिति यावत्॥५५

णीपाकृतवानसि २

यज्जगत्स्याकृतं सूत्रात्मकमेतदव्याकृताकाशे वर्तत इति संबंधः॥ त्रिष्वपि कालेष्विति यदुक्तं तद्व्यनक्ति॥ उत्पत्ताविति॥ ५६॥ वक्ष्यमाणं वाक्य



यदेतद्व्याकृतं सूत्रात्मकं जगदव्याकृताकाशेऽन्तर्वत्पृथिवीधातुस्त्रिष्वपि कालेषु वर्तते उत्पत्तौ स्थितौ लये च॥ ५६॥ पुनः सा होवाच नमस्तेऽस्त्वित्यादि प्रश्नस्य दुर्वचत्वप्रदर्शनार्थं यो मे ममैतं प्रश्नं व्यवोचो विशेषेणोक्तवानसि एतदस्य दुर्वचत्वे कारणं सूत्रमेव तावदगम्यमितरैर्दुर्वाच्यं किमुत तद्यस्मिन्नोतं च प्रोतं चेत्यतो नमोऽस्तु ते तुभ्यमपरस्मै द्वितीयाय प्रश्नाय धारयस्व दृढीकुर्वात्मानमित्यर्थः॥ पृच्छ गार्गीति॥

सा होवाच नमस्तेऽस्तु याज्ञवल्क्य यो म एतं व्यवोचोऽपरस्मै धारयस्वेति पृच्छ गार्गीति॥ ५७॥ सा होवाच यदूर्ध्वं याज्ञवल्क्य दिवो यदवाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते कस्मिंस्तदोतं च प्रोतं चेति॥ ५८॥ स होवाच यदूर्ध्वं गार्गि दिवो यदवाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षत आकाश एव तदोतं च प्रोतं चेति कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति॥ ५९॥

नीतरआह॥ ५७॥ व्याख्यातमन्यत्सा होवाच यदूर्ध्वं याज्ञवल्क्येत्यादि प्रश्नः प्रतिवचनं चोक्तस्यैवार्थस्यावधारणार्थं पुनरुच्यते न किंचिदपूर्वमर्थान्तरमुच्यते सर्वं यथोक्तं गार्ग्या प्रत्युच्चार्यं तमेव पूर्वोक्तमर्थमवधारितवानाकाश एवेति याज्ञवल्क्यः। गार्ग्याह कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति आकाशमेव तावत्कालत्रयातीतत्वाद्दुर्वाच्यं ततोऽपि कष्टतरमक्षरं यस्मिन्नाकाशमोतं च प्रोतं चातोऽवाच्यमिति कृत्वा न प्रतिपद्यते साऽप्रतिपत्तिर्नाम निग्रहस्थानं तार्किकसमये

मन्यदित्युच्यते॥ तदेव प्रश्नप्रतिवचनरूपमनुवदति॥ सा हेति॥ ५८॥ पुनरुक्तेरकिंचित्करत्वमावर्तयति॥ उक्तस्यैवेति॥ प्रतिवचनानुवादतात्पर्यमाह॥ गार्ग्येति॥ प्रश्नाभिप्रायं प्रकटयति॥ आकाशं

अप्रतिपत्तिर्विप्रतिपत्तिश्चेति दोषद्वयं सामान्येनोक्तं विशेषतो ज्ञातुमिच्छति॥ किं तदिति॥ अस्थूलादिवाक्यमवतार्य व्याकरोति॥ एवमित्यादिना॥ य

ऽथावाच्यमपि वदति तथापि विप्रतिपत्तिर्नाम निग्रहस्थानं विरुद्धा प्रतिपत्तिर्हि सा यदवाच्यस्य वदनमतो दुर्वचनं प्रश्नं मन्यते गार्गीति दोषद्वयमपि परिजिहीर्षन्नाह॥ ८॥ स होवाच याज्ञवल्क्यः एतद्वै तद्यत्त्वं पृच्छसि कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति किं तदक्षरं यन्नक्षीयते न क्षरतीति वाक्षरं तदक्षरं हे गार्गि ब्राह्मणा ब्रह्मविदोऽभिवदन्ति ब्राह्मणाभिवदनकथनेन नाहमवाच्यं वक्ष्यामि न च प्रतिपद्ये यमिस्येवं दोषद्वयं परिहरत्येवमपाकृते प्रश्ने पुनर्गार्ग्याः प्रतिवचनं द्रष्टव्यं ब्रूहि किं तदक्षरं यद्ब्राह्मणा अभिवदन्तीत्युक्त आह अस्थूलं तत्स्थूलादन्यदेवं तर्हि अणु अनणु अस्तु तर्हि ह्रस्वमह्रस्वमेवं तर्हि दीर्घमदीर्घमेतैश्चतुर्भिः परिमाणप्रतिषेधैर्द्रव्यधर्मः प्रतिषिद्धो न द्रव्यं तदक्ष

स होवाचैतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घ

रमित्यर्थः॥ अस्तु तर्हि लोहितो गुणस्ततोऽप्यन्यदलोहितं आग्नेयो गुणो लोहितो भवतु तर्ह्यपां स्नेहनं न अस्नेहमस्तु तर्हि छाया सर्वथाप्यनिर्देश्यत्वाच्छायाया अप्यन्यदच्छायमस्तु तर्हि तमोऽतमो भवतु वायुस्तर्ह्यवायुर्भवेत्तर्ह्याकाशमनाकाशं भवतु तर्हि संगात्मकं जतुवदसंगं रसोऽस्तु तर्ह्यरसं तथागंधमस्त्वगंधमस्तु तर्हि चक्षुष्कं न हि चक्षुरस्य करणं विद्यतेऽतो चक्षुष्कं पश्यत्यचक्षुरिति मंत्रवर्णात्तथाऽश्रोत्रं स शृणोत्यकर्ण इति भवतु तर्हि वागवाक्तथाऽमनस्तथाऽतेजस्कमविद्यमानं तेजोऽस्य तदतेजस्कं न हि तेजोऽग्न्यादिप्रकाशवदस्य विद्यते अप्राणं आध्यात्मिको वायुः प्रतिषिध्यते

दग्नेर्लोहितं रूपमित्यादिश्रुतिमाश्रित्याह॥ आग्नेय इति॥ अवायुविशेषणेनाप्राणवि

आमात्रमितिमानमेयान्वयोनिराक्रियते॥ तस्येत्यात्मोक्तिः॥ संपिंडितमर्थमाह॥ सर्वेति॥ तदुपपादमति॥ एकमिति॥ ६॰॥ ८॥ अथयथोक्तपारीत्याश्रुत्यैवास्यास्तित्वेज्ञापितेवक्तव्याभावादुत्तरोग्रंथोवृथेतितत्राह॥ अनेकेति॥ यदक्षितत्त्वविशेषणमेवेतिलौकिकीबुद्धिराशंक्यते नास्यक्षरंनिर्विशेषणमितिशेषः॥ अंतर्यामिणिजगत्कारणेपरस्मिन्ननुमानसिद्धेविवक्षितंनिरुपाध्यक्षरंसेत्स्यति॥ जगत्कारणतस्योपलक्ष

ऽप्राणमितिमुखंतर्हिद्वारंतद्मुखंअमात्रंमीयतेयेनतन्मात्रंअमात्रंमात्रारूपंतन्नभवतिनतेनकिंचिन्मीयतेअस्तुतर्हिछिद्रवदंतरवदनंतरंनास्यांतरमस्तिसंभवेत्तर्हिबहिस्तस्याबाह्यमस्तुतर्हिभक्षयितृतन्नतदश्नातिकिंचनभवेत्तर्हिभक्ष्यंकस्यचिन्नतदश्नातिकश्चनसर्वविशेषणरहितमित्यर्थः॥ एकमेवाद्वितीयंहितत्केनकिंविशिष्यते॥ ६॰॥ ८॥ अनेकविशेषणप्रतिषेधप्रयासादस्तित्वं

मलोहितमस्नेहमच्छायमतमोवाय्वनाकाशमसंगमरसमगंधमचक्षुष्कमश्रोत्रमवागमनोतेजस्कमप्राणममुखममात्रमनंतरमबाह्यंनतदश्नातिकिंचननतदश्नातिकश्चन॥ ६॰॥

तावदक्षरस्योपगमितंश्रुत्यातथापिलोकबुद्धिमपेक्ष्याशंक्यते यतोऽतोस्तित्वयानुमानंप्रमाणमुपन्यस्यसेतस्यवाअक्षरस्यपदेतदधिगतमक्षरंसर्वांतरंसाक्षादपरोक्षाद्ब्रह्मयआत्माशनायादिधर्मातीतःएतस्यवेअक्षरस्यप्रशासनेयथाराज्ञःप्रशासनेराज्यमस्फुटितंनियतंवर्ततेएवमेतस्यअक्षरस्यप्रशासनेहेगार्गिसूर्याचंद्रमसौ

णतयाजन्मादिसूत्रेस्थितत्वादुपलक्षणद्वाराब्रह्मणिस्वरूपलक्षणप्रवृत्तेरंतर्यामिण्यनुमानंप्रकृतोपयुक्तमितिभावः अनुमानमुत्पसराणिव्याकरोति ॥ यदेतदिति॥ प्रशासनेसूर्याचंद्रमसौविधृतौस्यातामितिसंबंधः॥ उक्तमर्थंदृष्टांतेनस्फोरयति॥ यथेति॥ अत्रापिपूर्ववदन्वयः जगद्व्यवस्थाप्रशासि

सूर्याचंद्रमसाविस्यादौ विवक्षितमनुमानमाह ॥ सूर्यश्चेत्यादिना ॥ तादर्थ्येन लोकप्रकाशार्थत्वेन प्रशासित्रा निर्मिताविति संबंधः ॥ निर्मातु-
र्विशिष्टविज्ञानवत्त्वमाचष्टे ॥ तत्निर्वर्त्यमानेति ॥ सूर्याचंद्रमसौ तत्कुब्दवाच्यौ ॥ विमतौ विशिष्टविज्ञानवता निर्मितौ प्रकाशत्वात्प्रदीपवदित्य-
र्थः ॥ विमतौ नियंतृपूर्वकौ विशिष्टचेष्टावत्त्वाद्भृत्यादिवदित्यभिप्रेत्याह ॥ विधृताविति ॥ प्रकाशोपकारकत्वं तज्जनकत्वं ॥ निर्मातुर्विशिष्टविज्ञाने संभा-
वनार्थं साधारणेति विशेषणं ॥ साधारणः सर्वेषां प्राणिनां यः प्रकाशस्तस्य जनकत्वादित्यावत् ॥ दृष्टांते लौकिकविशेषणं प्रासादादिविशिष्टदेशनिविष्ट

सूर्यश्च चंद्रमाश्च सूर्याचंद्रमसौ अहोरात्रयोर्लोकप्रदीपौ तादर्थ्येन प्रशासित्रा तन्निर्वर्त्यमानलोकप्रयोजनविज्ञानवता निर्मितौ विधृतौ
च स्यातां साधारणसर्वप्राणिप्रकाशोपकारकत्वाल्लौकिकप्रदीपवत् । तस्मादस्ति तद्येन विधृतावीश्वरौ स्वतंत्रौ संतौ निर्मितौ तिष्ठतः नियं

एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचंद्रमसौ विधृतौ तिष्ठत ॥

तद्देशकालनिमित्तोदयास्तमयवृद्धिक्षयाभ्यां वर्तेते तदस्यैवमेतयोः प्रशासित्रक्षरं प्रदीपकर्तृ विधारयितृ वदेतस्य वा अक्षरस्य प्रशा-
सने गार्गि द्यावापृथिव्यौ द्यौश्च पृथिवी च सावयवत्वात्स्फुटनस्वभावे अपि सत्यौ गुरुत्वात्पतनस्वभावे संयुक्तत्वाद्वियोगस्वभावे चेतनावदभिमा-
नि देवताधिष्ठितत्वात्स्वतंत्रे अप्येतस्याक्षरस्य प्रशासने वर्तेते विधृते तिष्ठत

त्वसिध्यर्थं ॥ अनुमानफलमुपसंहरति ॥ तस्मादिति ॥ विशिष्टचेष्टावत्त्वा-
दिसुपदिष्टं हेतुं स्पष्टयति ॥ नियतेति ॥ नियतौ देशकालौ नियतं च निमित्तं प्राणयदृष्टं तद्वृत्तौ सूर्याचंद्रमसावुद्यंतावस्तयंतौ च येन विधृतावुदयास्तम-
याभ्यां वृद्धिक्षयाभ्यां च वर्तेते ॥ उदयश्चास्तमयश्चोदयास्तमयं ॥ वृद्धिश्च क्षयश्च वृद्धिक्षयमिति द्वंद्वैकवद्भावः । ग्रहीतत्वाद्द्विवचनं ॥ एवं कर्तृत्वेन विधायितृत्वेन च

बृ॰ टी॰

विमते प्रयत्नवताधृते सावयवत्वेप्यस्फुटितत्वाद्गुरुत्वेप्यपातित्वात्संयुक्तत्वेप्यस्वतंत्रत्वाद्वहस्तन्यस्तपाषाणादिवदिति द्वितीयपर्यायस्य तात्पर्यं माह॥ सावयवत्वादिना॥ किमित्येतस्य प्रशासने द्यावापृथिव्यौ वर्तेते तत्राह॥ एतद्वीति॥ पृथिव्यादिव्यवस्थानियंतारं विनानुपपन्नातत्कल्पिकेत्यर्थः॥ तथापि किमित्येतेन विधृते द्यावापृथिव्याविति तत्राह॥ सर्वमर्यादेति॥ एष सेतुर्विधरण इति श्रुत्यंतरमाश्रित्य फलितमाह॥ अतो नास्येति॥ द्वितीयपर्यायार्थमुपसंहरति॥ तस्मादिति॥ तच्छब्दोपात्तमर्थं स्फोरयति॥ अव्यभिचारीति॥ अव्यभिचारित्वं प्रकटयति॥ चेतनावंतमिति पृथिव्यादे

एतद्व्यक्षरं सर्वव्यवस्थासेतुः सर्वमर्यादाविधरणं अतो नास्याक्षरस्य प्रशासनं द्यावापृथिव्यौ अतिक्रामतस्तस्मात्सिद्धमस्यास्तित्वमक्षरस्य अव्यभिचारि हि तल्लिंगं यत् द्यावापृथिव्यौ नियते वर्तेते चेतनावंतं प्रशासितारमसंसारिणमंतरेण नैतद्युक्तं॥ येन द्यौरुग्रा पृथिवी च दृ

एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठत ॥

ढेति च मंत्रवर्णात् एतस्य वा अक्षरस्य निमेषा मुहूर्ता इत्येते कालावयवाः सर्वस्यातीतानागतवर्तमानस्य जनिमतः कलयितारो यथा लोके प्रभुणा नियतो गणकः सर्वमायं व्ययं चाप्रमत्तो गणयति तथा प्रभुस्थानीय एषां कालावयवानां नियंता नियंतृत्वमेत

च्छब्दार्थः॥ नियंतृसिद्धावपि कथमीश्वरस्य सिद्धिरित्याशंक्याह॥ येनेति॥ उग्रत्वं पृथिव्यादेश्चेतनावदभिमानिदेवतावलेन स्वातंत्र्यं॥ येन स्वः स्तभितं येन नाकः॥ यो अंतरिक्षे रजसो विमानः कस्मै देवाय हविषा विधेमेत्यत्र हिरण्यगर्भाधिष्ठातेश्वरः पृथिव्यादेर्नियंतोच्यते॥ न हि हिरण्यगर्भमात्रस्यास्मिन्प्रकरणे पूर्वापरग्रंथयोरुच्यमानं निरंकुशं सर्वनियंतृत्वं संभवतीति भावः॥ एते कालावयवा विधृतास्तिष्ठंतीति संबंधः॥ तत्रानुमानं वक्तुं हेतुमाह॥ सर्वस्ये

दार्ष्टांतिकं दर्शयन्ननुमानमाह॥ तथेति॥ निमेषाद्यो नियंतृपूर्वकाः कलयितृत्वात्संप्रतिप्रपन्नवदित्यर्थः॥ कास्ता नद्य इत्यपेक्षायामाह॥ गंगाद्या इति
॥ अन्यथा प्रवर्तितुमुत्सहमानत्वे तत्तद्देवतानां चेतनत्वेन स्वातंत्र्यं॥ विमता नियंतृपूर्विका नियतप्रवृत्तित्वाद्भृत्यादिप्रवृत्तिवदिति चतुर्थपर्यायार्थः
॥ नियतप्रवृत्तिमत्त्वं तद्देतदित्युच्यते॥ तच्चेत्यव्यभिचारिलोक्तिः विमतं विशिष्टज्ञानवदात्तृकं कर्मफलत्वात्सेवाफलवदित्यभिप्रेत्य पंचमं पर्यायमुत्था

तथा प्राच्यः प्रागंचनाः पूर्वदिग्गमना नद्यः स्यंदंते स्रवंति श्वेतेभ्यो हिमवदादिभ्यः पर्वतेभ्यो गिरिभ्यः गंगाद्या नद्यः ताश्च यथा प्रवर्तिता
एव नियताः प्रवर्तंते नान्यथापि प्रवर्तितुमुत्सहंत्यस्तदेतल्लिंगं प्रशास्तुः प्रतीच्योऽन्याः प्रतीचीं दिशमंचंति सिंध्वाद्या नद्यः अन्याश्च यां

एतस्य वा अक्षरस्य प्रशासने गार्गि निमेषा मुहूर्ता अहोरात्राण्यर्द्धमासा मासा ऋतवः संवत्सरा इति विधृतास्तिष्ठंत्येतस्य वा
अक्षरस्य प्रशासने गार्गि प्राच्योऽन्या नद्यः स्यंदंते श्वेतेभ्यः पर्वतेभ्यः प्रतीच्योऽन्या यां यां च दिशमन्वेतस्य वा अक्षरस्य प्रशासने गा
र्गि ददतो मनुष्याः प्रशंसंति॥

यां दिशमनुप्रवृत्तास्तां तां नव्यभिचरंति तच्च लिंगं एतस्य वा अक्षरस्य किंच ददतो हिरण्यादीन्नप
कृतः स्वात्मपीडां कुर्वतोऽपि प्रमाणज्ञा अपि मनुष्याः प्रशंसंति तत्र यच्च दीयते ये च ददति प्रतिगृह्णंति तेषामिहैव समागमो विलयश्चान्व
क्षो दृश्यते अदृष्टस्तु परः समागमः॥ तथापि मनुष्याः ददतां दानफलेन संयोगं पश्यंतः

पयति॥ किंचेति॥ दानाप्रतिगृहीता दानं देयं फलं दास्य
तिकिमीश्वरेणेत्याशंक्याह॥ तत्रेति॥ दात्रादीनामिहैव प्रत्यक्षो नाशो दृश्यते तेन न तत्स्वप्रयुक्तो दृष्टः पुरुषार्थो न कश्चिदस्तीत्यर्थः॥ अदृष्टं पुरुषार्थं प्रत्याह॥ अ
दृष्टस्त्विति॥ समागमः फलप्रतिलंभः स खल्विहैव न भवति किंतु पारलौकिकस्तथा च नासाविहैव नष्टदात्रादिप्रयुक्तः संभवतीत्यर्थः॥ तर्हि फलदातुरभा

फलसंयोगदृष्टौ हेतुमाह॥ प्रमाणज्ञतयेति॥ हिरण्यदा अमृतत्वं भजंत इत्यादि प्रमाणं॥ तथापि कथमीश्वरसिद्धिस्तत्राह॥ कर्त्तुरिति॥ तद्विदा
त्प्रशंसनं विशिष्टे नियंतरि असत्यनुपपन्नं तत्कल्पकमित्यर्थः॥ दानक्रियावशादेव तत्फलसिद्धौ कृतं नियंत्रेति चेन्नेत्याह॥ दानेति॥ कर्मणः
क्षणिकत्वात्फलस्य च कालांतरभावित्वान्न साधनत्वोपपत्तिरित्यर्थः॥ अनुमानार्थापत्तिभ्यां सिद्धमर्थमुपसंहरति॥ तस्मादिति॥ अपूर्वस्यैव फलदा
तृत्वात्कृतमीश्वरेणेति शंकते॥ अपूर्वमिति चेदिति॥ स्वयमचेतनं चेतनानधिष्ठितं वाऽपूर्वं फलदातृ न कल्प्यमप्रामाणिकत्वादिति परिहरति॥ नेति॥
ईश्वरद्वेषी शंकते॥ प्रशास्तुरिति॥ सद्भावे प्रमाणानुपपत्तिरिति शेषः॥ परिहरति॥ नागमेति॥ कथं कार्यपरस्यागमस्य वस्तुपरत्वमित्याशंक्याह॥ अ

प्रमाणज्ञतया प्रशंसंति तत्र तत्र कर्मफलेन संयोजयितरि कर्त्तुः कर्मफलविभागज्ञे प्रशास्तर्यसति न स्याद्दानक्रियायाः प्रत्यक्षवि
नाशित्वात्तस्मादस्ति दानकर्तॄणां फलेन संयोजयिता अपूर्वमिति चेन्न तत्सद्भावे प्रमाणानुपपत्तेः॥ प्रशास्तुरपीति चेन्नागमतास्य
र्थसिद्धत्वादवोचाम ह्यागमस्य वस्तुपरत्वं किंचान्यत् अपूर्वकल्पनायां चार्थापत्तेः क्षयोऽन्यथैवोपपत्तेः सेवाफलस्य सेव्यात्प्राप्तिद
र्शनात्सेवायाश्च क्रियात्वात्तत्सामान्याच्च यागदानहोमादौ नासेव्यादीश्वरादेः फलप्राप्तिरुपपद्यते॥

वोचामेति॥ कर्मविधिर्हि फलदा
त्रतिरेकेणानोपपद्यते॥ न च कर्माशुतरविनाशि कालांतरभाविफलानुकूलं॥ तदर्थापत्तिसिद्धेऽपूर्वे कथं मानासिद्धिरित्याशंक्याह॥ किंचे
ति॥ न केवलं सद्भावे प्रमाणासत्वमेवापूर्वे दूषणं किंत्वन्यच्च किंचिदस्तीति योजना॥ तदेव प्रकटयति॥ अपूर्वेति॥ अपूर्वस्य कल्पनायां या र्थो
पत्तिः शंक्यते तस्याः कल्पितमपूर्वमंतरेणाप्युपपत्तेः क्षयः स्यादिति योजना॥ अन्यथाप्युपपत्तिं विवृणोति॥ सेवेति॥ यागादिफलमपीश्वरात्सं
भवतीति शेषः॥ कथमीश्वराधीना यागादिफलप्राप्तिस्तत्राह॥ सेवायाश्चेति॥ आदिपदेनेंद्रादिदेवता गृह्यंते॥ विमता विशिष्टज्ञानवतारीयमानफ

इतश्चापूर्वकल्पनानयुक्तेत्याह॥ दृष्टेति॥ दृष्टंसेवायाधर्मत्वेनसामर्थ्यंसेव्यात्फलप्रापकत्वंतदनुसत्यदानादौफलप्राप्तिसंभवेतन्निरासेनापूर्व
तत्कल्पनानन्याय्यादृष्टानुसारिण्यांकल्पनायांतद्धिरोधिकल्पनायोगादित्यर्थः॥अपूर्वस्यफलहेतुत्वेदोषांतरमाह॥कल्पनेति॥तद्दाधिक्यंव
क्तुंपरामृशति॥ईश्वरइति॥नापूर्वंकल्प्यंक्लृप्तत्वात्तत्रकल्पनाधिक्यमित्याशंक्याह॥तत्रेति॥व्यवहारभूमिःसप्तम्यर्थः॥भूमिकांकृत्वाकल्पनाधि

दृष्टक्रियाधर्मसामर्थ्यमपरित्यज्यैवफलप्राप्तिकल्पनोपपत्तौदृष्टक्रियाधर्मसामर्थ्यपरित्यागोनन्याय्यःकल्पनाधिक्याच्चईश्वरःक
ल्प्यःपूर्वंवातत्रक्रियायाश्चस्वभावःसेव्यात्फलप्राप्तिर्दृष्टानत्वपूर्वान्नचापूर्वंदृष्टंतत्रापूर्वमदृष्टंकल्पयितव्यंतस्यचफलदातृत्वेसाम
र्थ्यंसामर्थ्येचसतिदानंचाभ्यधिकमितिइहत्वीश्वरस्यसेव्यस्यसद्भावमात्रंकल्प्यंनतुफलदानसामर्थ्यंदातृत्वंचसेव्यात्फलप्राप्तिदर्श

यजमानंदेवादर्वीपितरोन्वायत्ताः॥६२॥

नादनुमानंचदर्शितंद्यावापृथिव्यौविधृतेतिष्ठतइत्यादितथाचयजमानंदेवाईश्वराःसंतोजीवनार्थेनुगताश्चरुपुरोडाशाद्युप
जीवनप्रयोजनेनान्यथापिजीवितुमुत्सहंतःकृपणांहीनांवृत्तिमाश्रित्यस्थितास्तच्चप्रशास्तुःप्रशासनात्स्यात्तथापितरः॥ कंस्कुटय

ति॥तत्रेत्यादिना॥अपूर्वस्यादृष्टत्वेसतीतियावत्॥इतिकल्पनाधिक्यमितिशेषः नन्वन्यत्रापितुल्याकल्पनेत्याशंक्याह॥इहत्विति॥स्वपक्षे
धर्मिमात्रंकल्प्यंपरपक्षेधर्मिधर्मश्चेत्याधिक्यंतस्मात्फलमतउपपत्तेरितिन्यायेनपरस्यैवफलदातृतेतिभावः॥धर्मिणोपिप्रामाणिकत्वंनकल्प्य
त्वमित्यभिप्रेत्याह॥अनुमानंचेति॥ईश्वरास्तित्वेहेत्वंतरमाह॥तथाचेति॥देवायजमानमन्वायत्ताइतिसंबंधः॥जीवनार्थेजीवनंनिमित्तीकृत्येतियावत्दे

ष्टोनकस्यचित्स्वकृतित्वेनविकृतित्वेनवावर्त्ततेसदर्विहोमः॥ ६१॥ ईश्वरास्तित्वे हेत्वंतरमाह॥ इतश्चेति॥ मोक्षहेतुज्ञानविषयत्वेनापितदस्ती त्याह॥ भवितव्यमिति॥ यदज्ञानात्स्ववृत्तिर्यातत्ज्ञानात्सानिवर्त्ततइतिन्यायः॥ कर्त्तवशादेवमोक्षसिद्धेस्तद्धेतुज्ञानविषयत्वेनाक्षरंनाभ्युपे

पितरोपितदर्थंदर्वीदर्विहोममन्वायत्ताअनुगताइत्यर्थः समानंसर्वमन्यत्॥ ६१॥ ९॥ ईतश्चास्तितदक्षरं यस्मात्तदज्ञानेनियतासं सारोपपत्तिर्भवितव्यंतुतेनयद्विज्ञानात्तद्विच्छेदोन्यायोपपत्तेर्ननुक्रियातएवतद्विच्छित्तिः स्यादितिचेन्नयोवाएतदक्षरंहेगार्ग्यविदि त्वाःविज्ञायास्मिन्लोकेजुहोतियजतेतपस्तप्यतेयद्यपिबहूनिवर्षसहस्राण्यंतवदेवास्यतत्फलंभवतितत्फलोपभोगांतेक्षीयंतएवा

योवाएतदक्षरंगार्ग्यविदित्वास्मिंल्लोकेजुहोतियजतेतपस्तप्यतेबहूनिवर्षसहस्राण्यंतवदेवास्यतद्भवतियोवाएतदक्षरंगा र्ग्यविदित्वास्माल्लोकात्प्रैतिसकृपणोथयएतदक्षरंगार्गिविदित्वास्माल्लोकात्प्रैतिसब्राह्मणः॥ ६२॥ ण्यकर्माणिअपिचयद्विज्ञाना

त्कार्पण्यात्ययः संसारविच्छेदोयद्विज्ञानाभावाच्चकर्मकृतत्कृपणः कृतफलस्यैवोपभोक्ताजननमरणप्रबंधारूढः संसरतितदक्षस्य रंप्रशासितृतदेतदुच्यतेयोवाएतदक्षरंगार्ग्यविदित्वास्माल्लोकात्प्रैतिसकृपणः पणक्रीतइवदासादिः अथयएतदक्षरंगार्गिविदित्वास्मा ल्लोकात्प्रैतिसब्राह्मणः॥ ६२॥ यमितिशंकते॥ नन्विति॥ उत्तरवाक्येनोत्तरमाह॥ नेत्यादियस्याज्ञानादसकृदनुष्ठितानिविशिष्टफलान्यपि सर्वाणिकर्माणिसंसारमेवफलयंतितदज्ञातमक्षरंनास्तीत्ययुक्तंसंसाराभावप्रसंगादितिभावः॥ अक्षरास्तित्वेहेत्वंतरमाह॥ अपिचेति॥ पू र्ववाक्यंजीवदवस्थपुरुषविषयमिदंतुपरलोकविषयमितिविशेषंमत्वोत्तरवाक्यमवतार्यव्याचष्टे॥ तदेतदित्यादिना ॥ ६२ ॥ ॥ ॥

प्रधानवादिनःशंकामनूद्योत्तरवाक्येननिराकरोति॥अग्नेरित्यादिना॥इतश्चाक्षरस्यनाचेतनत्वमित्याह॥किंचेति॥नास्तीत्यन्वयप्रदर्शनंअतोन्य
दितिविशेषणसिद्धमर्थमाह॥एतदिति॥अन्यद्वापूर्वोक्तमव्याकृतादिपृथिव्यंतंनिगमनवाक्यमुदाहृत्यतस्यतात्पर्यमाह॥एतस्मिन्निति पराका

अग्नेर्दहनप्रकाशकत्ववत्स्वाभाविकमस्यप्रशास्तृत्वमचेतनस्यैवेत्यतआहतद्वाएतदक्षरंगार्ग्यदृष्टंनकेनचित्दृष्टमविषयत्वात्स्व
यंतुद्रष्टृदृष्टिस्वरूपत्वात्तथाऽश्रुतंश्रोत्राद्यविषयत्वात्स्वयंश्रोतृश्रुतिस्वरूपत्वात्तथाऽमतंमनसोऽविषयत्वात्स्वयंमंतृमतिस्व
रूपत्वात्तथाऽविज्ञातंबुद्धेरविषयत्वात्स्वयंविज्ञातृविज्ञानस्वरूपत्वात्॥किंच॥न॥अन्यदतोऽस्मादक्षरादस्तिनास्तिकिंचित्द्र

तद्वाएतदक्षरंगार्ग्यदृष्टंद्रष्टृअश्रुतंश्रोत्रमतंमंत्रविज्ञातंविज्ञातृनान्यदतोऽस्तिद्रष्टृनान्यदतोऽस्तिश्रोतृनान्यदतोऽस्ति
मंतृनान्यदतोऽस्तिविज्ञात्रेतस्मिन्नुखल्वक्षरेगार्ग्याकाशओतश्चप्रोतश्चेति॥६३॥ ष्टृदर्शनक्रियाकर्तृएतदेवाक्षरंदर्शनक्रि

याकर्तृसर्वत्रतथानान्यदतोऽस्तिश्रोतृतदेवाक्षरंश्रोतृसर्वत्रनान्यदतोऽस्तिमंतृतदेवाक्षरंमंतृसर्वत्रसर्वमनोद्वारेणनान्यदतो
ऽस्तिविज्ञातृविज्ञानक्रियाकर्तृतदेवाक्षरंसर्वबुद्धिद्वारेणविज्ञानक्रियाकर्तृनाचेतनंप्रधानमन्यद्वाएतस्मिन्नुखल्वक्षरेगार्ग्याका
शओतश्चप्रोतश्चेतियदेवसाक्षादपरोक्षाद्ब्रह्मयआत्मासर्वांतरोऽशनायादिसंसारधर्मातीतोयस्मिन्नाकाशओतश्चप्रोतश्चैषापराकाष्ठै
षापरागतिरेतत्परंब्रह्मैतत्पृथिव्यादेराकाशांतस्यसत्यस्यसत्यं॥६३॥ ष्ठापरंपर्यवसानंनास्मादुपरिष्टादधिष्ठानंकिंचिदस्तीत्यर्थः॥तस्यैवपरम
पुरुषार्थत्वमाह॥एषेति॥पुरुषान्नपरंकिंचित्साकाष्ठासापरागतिरितिहिश्रुत्यंतरं॥ब्रह्मास्मादक्षरादन्यदस्तीतिचेन्नेत्याह॥एतदिति॥ननुचतुर्थे

किंतद्वचनंतदाह॥तदेवेति॥बहुमानविषयभूतंवस्तुपृच्छति॥किंतदिति॥यदादौमदीयंवचनंतदेवबहुमानयोग्यमित्याह॥यदिति॥तद्व्याकरोति
॥अस्मादिति॥नमस्कारंकृत्वास्मादनुज्ञांप्राप्येतिशेषः॥तदेवेति॥प्राथमिकवचनोक्तिः किमितित्वदीयंपूर्ववचोबहुमन्यामहेजेतुंपुनरिममा
शास्महे नेत्याह॥जयस्त्विति॥तत्रप्रश्नपूर्वकंपूर्वोक्तमेवबहुमानविषयभूतंवाक्यमवतारयन्व्याचष्टे॥कस्मादित्यादिना॥पराजितायागार्ग्यावचनो

साहोवाचहेब्राह्मणाभगवंतः शृणुतमदीयंवचस्तदेवबहुमन्येध्वंमन्यध्वंकिंतद्यदस्माद्याज्ञवल्क्यान्नमस्कारेणमुच्येध्वमस्मैनमस्कारं
कृत्वातदेवबहुमन्यध्वमित्यर्थः जयस्त्वस्यमनसापिनाशंकनीयः किमुतकार्यतः कस्मान्नवैयुष्माकंमध्येजातुकदाचिदपिइमंयाज्ञ

साहोवाचब्राह्मणाभगवंतस्तदेवबहुमन्येध्वंयदस्मान्नमस्कारेणमुच्येध्वंनवैजातुयुष्माकमिमंकश्चिद्ब्रह्मोद्यंजेतेतित
तोहवाचक्नव्युपरराम॥१४॥अष्टमंब्राह्मणं॥८॥ वल्क्यंब्रह्मोद्यंप्रतिजेता प्रश्नौचेन्मह्यंवक्ष्यतिनवैजेताभवितेतिपूर्वमेवमया
प्रतिज्ञातंअद्यापिममायमेवनिश्चयोब्रह्मोद्यंप्रत्येतत्तुल्योनकश्चिद्विद्यतइतिततोहवाचक्नव्युपरराम॥अत्रांतर्यामिब्राह्मणेएतदुक्तं
यंपृथिवीनवेदयंसर्वाणिभूतानिनविदुरितिचयमंतर्यामिणंनविदुर्येचनविदुर्यश्चतदक्षरंदर्शनादिक्रियाकर्तृत्वेनसर्वेषांचेतनाधातु
पादेयमित्याशंक्याह॥प्रश्नौचेदिति॥ततस्तत्प्रश्ननिर्णयाद्याज्ञवल्क्यस्यास्यप्रकंप्यत्वंप्रतिपाद्यब्राह्मणान्प्रतिहितंचोक्तेत्यर्थः॥अंतर्यामीक्षेत्र
ज्ञोक्षरमित्येतेषामवांतरविशेषप्रदर्शनार्थंप्रकृतत्वंदर्शयति॥अंतर्यामीति॥तत्रांतर्यामिणःप्रकृतत्वंप्रकटयति॥यमिति॥क्षेत्रज्ञस्यप्रकृ
तत्वंस्फुटयति॥येचेति॥अक्षरस्यप्रस्तुतत्वंप्रत्यापयति॥यश्चेति॥सर्वेषांविषयाणांदर्शनश्रवणादिक्रियाकर्तृत्वेनचेतनाधातुरितियत्तदक्षरम

तेषु विचारमवतारयति॥ कस्त्विति॥ तस्मिन्विचारे स्वयूथ्यमतमुत्थापयति॥ तत्रेति॥ क्षेत्रज्ञस्याप्रस्तुतत्वशंकां वारयति॥ यस्तमिति॥ यथाप
रमात्मनोंतर्यामीजीवश्चेत्यवस्थे द्वे कल्प्येते तथात्रैवान्याः पंचावस्थाः पिंडो जातिर्विराड्सूत्रं दैवमित्येवंलक्षणा महाभूतसंस्थानभेदेन कल्पयं
तीत्याह॥ तथेति॥ उक्तरीत्या कल्पनायां पिंडो जातिर्विराड्सूत्रं दैवमव्याकृतं साक्षी क्षेत्रज्ञश्चेत्यष्टावस्थाः ब्रह्मणो भवंतीति वदंतः कल्पयंतीति संबं
धः॥ अवस्थापक्षमुक्त्वा शक्तिपक्षमाह॥ अन्यइति॥ तुशब्देनावयवपक्षं दर्शयन्विकारपक्षं निक्षिपति॥ अन्येत्विति॥ तत्र पक्षद्वयं प्रत्याह॥ अव

कस्त्वेषां विशेषः किं वा सामान्यमिति तत्र केचिदाचक्षते परस्य महासमुद्रस्थानीयस्य ब्रह्मणोक्षरस्याप्रचलितस्वरूपस्येषत्प्रचलिताव
स्थांतर्यामी अत्यंतप्रचलितावस्थाः क्षेत्रज्ञो यस्तं न वेदांतर्यामिणं तथान्याः पंचावस्थाः परिकल्पयंति तथाष्टावस्था ब्रह्मणो भवंतीति व
दंति अन्ये अक्षरस्य शक्तय एता इति वदंति अनंतशक्तिमदक्षरमिति चान्ये त्वक्षरस्य विकारा इति वदंत्यवस्थाशक्ती तावन्नोपपद्येते अक्ष
रस्याशनायादिसंसारधर्मातीतत्वश्रुतेः॥ नह्यशनायाद्यतीतत्वमशनायादिधर्मवदवस्थावत्त्वं चैकस्य युगपदुपपद्यते तथा शक्तिम
त्त्वं च विकारावयववत्त्वे च दोषाः प्रदर्शिताश्चतुर्थे तस्मादेता असत्याः सर्वाः कल्पनाः कस्तर्हि भेद एषामुपाधिकृत इति ब्रूमो न स्वत एषां
भेदोऽभेदो वा सैंधवघनवत्प्रज्ञानघनैकरसस्वाभाव्यादपूर्वमनपरमबाह्यमयमात्मा ब्रह्मेति च श्रुतेः सबाह्याभ्यंतरो ह्यज इति चाथर्वणे

श्चेति॥ अंतर्यामिप्रभृतीनामिति शेषः॥ तस्य सांसारिकधर्मातीतत्वश्रुतावपि कथमवस्थावत्त्वं शक्तिमत्त्वं वा न सिध्यतीत्याशंक्याह॥ नहीति॥ अवशि
ष्टपक्षद्वयनिराकरणं प्रागेव प्रवृत्तं स्मारयति॥ विकारेति॥ परपक्षनिराकरणमुपसंहरति॥ तस्मादिति॥ परकीयकल्पनासंभवे पृच्छति॥ कस्तर्ही
ति॥ उत्तरमाह॥ उपाधीति॥ आत्मनि स्वतो विशेषाभावे हेतुमाह॥ सैंधवेति॥ तत्रैव हेत्वंतरमाह॥ अपूर्वमिति॥ ॥

बाह्यं कार्यमाभ्यंतरं कारणं ताभ्यां कल्पिताभ्यां सहाधिष्ठानत्वेन सत्तास्फूर्तिप्रदत्तया वर्त्तते ब्रह्म स्वभावतस्तु जन्मादिसर्वक्रियाशून्यं कूटस्थं तदि
त्याथर्वणश्रुतेरर्थः आत्मनिस्तत्तो विशेषानवगमे फलितमाह॥ तस्मादिति॥ निरुपाख्यत्वं वाचां मनसां चागोचरत्वं तत्र निर्विशेषत्वमेकत्वं च हेतुः
॥ निरुपाधिकस्येति निर्विशेषत्वं साधयितुमुक्तं तत्र च वीप्सावाक्यं प्रमाणं कृतं॥ कथं पुनरेवंविधस्य वस्तुनः संसारित्वं तदाह॥ अविद्येति
॥ तैर्विशिष्टं यत्कार्यकरणं तेनोपाधिनोपहितः परमात्मा जीवः संसारीति च व्यपदेशभाग्भवतीत्यर्थः तथापि कथं तस्यांतर्यामित्वं तदाह
॥ नित्येति॥ नित्यं निरतिशयं सर्वत्राप्रतिबद्धं ज्ञानं तस्मिन्सत्वपरिणामे सत्वप्रधाना मायाशक्तिरुपाधिस्तेन विशिष्टः सन्नात्माईश्वरोंतर्यामी

तस्मान्निरुपाधिकस्यात्मनो निरुपाख्यत्वान्निर्विशेषत्वादेकत्वाच्च नेति नेतीति व्यपदेशो भवत्यविद्याकामकर्मविशिष्टकार्यक
रणोपाधिरात्मा संसारी जीव उच्यते नित्यनिरतिशयज्ञानशक्त्युपाधिरात्मांतर्यामीश्वर उच्यते स एव निरुपाधिः केवलः शुद्धः
स्वेन स्वभावेनाक्षरं पर उच्यते॥ तथा हिरण्यगर्भाऽव्याकृतदेवताजातिपिंडमनुष्यतिर्यक्प्रेतादिकार्यकरणोपाधिभिर्विशिष्ट
स्तदाख्यस्तद्रूपो भवति तथा तदेजति तन्नैजतीति व्याख्यातं तथेषु आत्मेषु सर्वभूतांतरात्मेष सर्वेषु भूतेषु गूढस्तत्त्वमस्यह
मेवेदं सर्वमात्मैवेदं सर्वं नान्योतोस्ति द्रष्टेत्यादिश्रुतयो न विरुध्यंते कल्पनांतरेष्वेताः श्रुतयो न गच्छंति तिचोच्यतेइत्यर्थः॥ कथं त
र्हि तस्मिन्नक्षरशब्दप्रवृत्तिस्तत्राह॥ स एवेति॥ निरुपाधित्वं शुद्धत्वे हेतुः केवलत्वमद्वयत्वं॥ तथापि कथं तत्र हिरण्यगर्भादिशब्दप्रत्ययावित्या
शंक्याह॥ तथेति॥ यथैकस्मिन्नेव परस्मिन्नात्मनि कल्पितोपाधिप्रयुक्तं नानात्वं तथा तदेजति तन्नैजतीत्यादिवाक्यमाश्रित्य प्रागेवोक्तमि
त्याह॥ तथेति॥ कल्पनया परस्य नानात्वं वस्तुतस्त्वेकरस्यमित्यत्र श्रुतीरुदाहरति॥ तथेत्यादिना॥ अवस्थाशक्तिविकारावयवपक्षेष्वपि यथोक्तश्रुती

औपाधिकोंतर्यास्यादिभेदोनस्वाभाविकइत्युपसंहरति॥तस्मादिति॥स्वतोवस्तुनिनास्तिभेदः किंत्वेकरस्यमेवेत्यत्र हेतुमाह॥एकमेवेति॥
इत्यंतरब्राह्मणमष्टमं॥८॥ब्राह्मणांतरमुत्थापयति॥अथेति॥गार्गिप्रश्नेनिर्णीतेतयाब्रह्मवदनंप्रत्येतत्तुल्योनास्तीतिसर्वान्प्रतिकथनानंतर
मथशब्दार्थः॥संगतिंवक्तुंवृत्तंकीर्तयति॥पृथिव्यादीनामिति॥यत्साक्षादितिप्रस्तुत्यसर्वांतरत्वनिरूपणद्वारासाक्षात्त्वादिकमार्थिकंब्राह्मणत्र
येनिर्धारितमित्यर्थः॥अंतर्यामिब्राह्मणेमुखतोनिर्दिष्टमर्थमनुद्रवति॥तस्यचेति॥नामरूपाभ्यांव्याकृतोविषयोद्वैतप्रपंचस्तत्रसूत्रस्यभेदाये

तस्मादुपाधिभेदेनैवैषांभेदोनान्यथैकमेवाद्वितीयमित्यवधारणात्सर्वोपनिषत्सु॥६४॥इतिश्रीमद्बृहदारण्यकेपंचमेप्रपाठकेअष्ट
मब्राह्मणभाष्यं॥८॥ॐ॥अथहैनंविदग्धःशाकल्यःपप्रच्छ पृथिव्यादीनांसूक्ष्मतारतम्यक्रमेणपूर्वपूर्वस्योत्तरोत्तरस्मिन्नोतप्रो
तभावंकथयन्सर्वांतरंब्रह्मप्रकाशितवान्॥तस्यचब्रह्मणोव्याकृतविषयेसूत्रभेदेषुनियंतृत्वमुक्तंव्याकृतविषयेव्यक्ततरंलिंग
मितितस्यैवब्रह्मणःसाक्षादपरोक्षत्वेनियंतव्यदेवताभेदसंकोचद्वारेणाधिगंतव्यइतितदर्थंशाकल्यब्राह्मणमारभ्यते॥अथहैनं
विदग्धइतिनामतःशकलस्यापत्यंशाकल्यःपप्रच्छकतिसंख्याकादेवाहेयाज्ञवल्क्येतिसयाज्ञवल्क्योहकिलएतयैववक्ष्यमाणयानि
विदाप्रतिपेदेसंख्यांयांपृष्टवांश्शाकल्योयावंतोयावत्संख्याकादेवावैश्वदेवस्यशस्त्रेनिविदि

पृथिव्यादयस्तेषुनियम्येषुनियंतृत्वंतस्योक्त
मितियोजना॥किमितिंव्याकृतविषयेनियंतृत्वमुक्तमितितत्राह॥व्याकृतेति॥तत्रहिपरतंत्रस्यपृथिव्यादेर्ग्रहणंनियम्यत्वेस्पष्टतरंलिंगमिति
तत्रैवनियंतृत्वमुक्तमित्यर्थः॥वृत्तमनूद्यउत्तरब्राह्मणस्यतात्पर्यमाह॥तस्यैवेति॥नियंतव्यानांदेवताभेदानांप्राणांततःसंकोचोविकासश्चानंत्यपर्यं
तस्तद्द्वाराप्रकृतस्यैवब्रह्मणःसाक्षात्त्वापरोक्षत्वेसएषनेतिनेत्यात्मेत्यादिनाधिगंतव्यइतिकृत्वाप्रथमंदेवतासंकोचविकासोक्तिरनंतरंवस्तुनिर्दे

ब्राह्मणारंभमेवमुक्त्वातदक्षराणिव्याकरोति॥अथेत्यादिना॥निविदिश्रूयंतेतावंतोदेवाइत्युत्तरत्रसंबंधः॥केयंनिविदितिपृच्छति॥निविन्नामेतिउत्तरमाह॥देवतेति॥पदार्थमुक्त्वावाक्यार्थंकथयति॥तस्यामिति॥यद्यपिभाष्येनिविद्व्याख्यातातथापिप्रश्नद्वारास्पष्टत्वात्तांव्याख्याति॥कापुनरित्या

निविन्नामदेवतासंख्यावाचकानिमंत्रपदानिकानिचिद्वैश्वदेवेशस्त्रेशस्यंतेतानिनिवित्संज्ञकानिस्युःतस्यांनिविदियावंतोदेवाःश्रूयंतेतावंतोदेवाइतिकापुनःसानिविदितितानिनिवित्पदानिप्रदर्श्यंतेत्रयश्चत्रीचशतात्रयश्चदेवानांत्रीणिचशतानिपुनरप्येवंत्र

अथहैनंविदग्धःशाकल्यःपप्रच्छकतिदेवायाज्ञवल्क्येतिसहैतयैवनिविदाप्रतिपेदेयावंतोवैश्वदेवस्यनिविद्युच्यंतेत्रयश्चत्रीचशतात्रयश्चत्रीचसहस्रेत्योमितिहोवाचकत्येवदेवायाज्ञवल्क्येतित्रयस्त्रिंशदित्योमितिहोवाचकत्येवदेवायाज्ञवल्क्येतिषडित्योमितिहोवाचकत्येवदेवायाज्ञवल्क्येतित्रयइत्योमितिहोवाचकत्येवदेवायाज्ञवल्क्येतिद्वावित्योमितिहोवाचकत्येवदेवायाज्ञवल्क्येत्यध्यर्धइत्योमितिहोवाचकत्येवदेवायाज्ञवल्क्येत्येकइत्योमितिहोवाचकतमेतेत्रयश्चत्रीचशतात्रयश्चत्रीचसहस्रेति॥१॥

यश्चत्रीचसहस्रासहस्राण्येतावंतोदेवाइतिशाकल्योप्योमितिहोवाचएवमेषांमध्यमासंख्यास्पष्टतयाज्ञातापुनस्तेषामेवदेवानांसंकोचविषयांसंख्यांपृच्छतिकत्येवदेवायाज्ञवल्क्येतित्रयस्त्रिंशत्षट्त्रयोद्वावध्यर्धएकइतिदेवतासंकोचविकासविषयांसंख्यांपृष्ट्वापुनःसंख्येयस्वरूपंपृच्छतिकतमेतेत्रयश्चत्रीचशतात्रयश्चत्रीचसहस्रेति॥१॥

दिना॥अनुज्ञावाक्यंव्याकरोति॥एवमिति॥मध्यमासंख्याषडधिकत्रिंशताधिकत्रिसहस्रलक्षणा॥कत्येवेत्यादिप्रश्नानांपूर्वप्रश्नेनपौनरुक्त्यमाशंक्यपरिहरति॥पुनरित्या

कतमेतेत्रयेस्यादिप्रश्नस्यविषयभेदंदर्शयति॥देवतेति॥६५॥कतितर्हिदेवानिविदिभवंतितत्राह॥परमार्थतस्त्विति॥त्रयस्त्रिंशत्तो
देवानांस्वरूपंप्रश्नद्वारानिर्धारयति॥कतमइति॥६६॥उत्तरप्रश्नप्रपंचप्रतीकंगृहीत्वातस्यतात्पर्यमाह॥कतमइति॥तेषांवस्वादीनां
प्रत्येकंवस्वादित्रयेप्रतिवर्णइंद्रप्रजापतीचैकैकस्येत्यर्थः॥तेषांवसुत्वमेतेषुहीत्यादिवाक्यावष्टंभेनस्पष्टयति॥प्राणिनामिति॥तेषांकर्मण

सहोवाचेतरोमहिमानोविभूतयःएषांत्रयस्त्रिंशत्तांदेवानामेतेत्रयश्चत्रीचशतेत्यादयःपरमार्थतस्तुत्रयस्त्रिंशत्त्वेवदेवा
इतिकतमेतेत्रयस्त्रिंशदित्युच्यते अष्टौवसवएकादशरुद्राद्वादशादित्यास्तएकत्रिंशदिंद्रश्चैवप्रजापतिश्चत्रयस्त्रिंशावि

सहोवाचमहिमानएवैषामेतेत्रयस्त्रिंशत्त्वेवदेवाइतिकतमेतेत्रयस्त्रिꣳशदित्यष्टौवसवएकादशरुद्राद्वादशादि
त्यास्तएकत्रिꣳशदिंद्रश्चैवप्रजापतिश्चत्रयस्त्रिꣳशाविति॥६६॥कतमेवसवइत्यग्निश्चपृथिवीचवायुश्चांतरिक्षंचा
दित्यश्चद्यौश्चचंद्रमाश्चनक्षत्राणिचैतेवसवएतेषुहीदꣳवसुसर्वꣳहितमितितस्माद्वसवइति॥६७॥कतमेरुद्राइतिदशे
मेपुरुषेप्राणाआत्मैकादशस्तेयदास्माच्छरीरान्मर्त्यादुत्क्रामंत्यथरोदयंतितद्यद्रोदयंतितस्माद्रुद्राइति॥६८॥ तित्रयस्त्रिंश

तांपूरणौ॥६६॥कतमेवसवइतितेषांस्वरूपंप्रत्येकंपृच्छ्यतेअग्निश्चपृथिवीचेत्यग्न्याद्यानक्षत्रांताएतेवसवः॥प्राणिनांकर्मफ
लाश्रयत्वेनकार्यकरणसंघातरूपेणतन्निवासत्वेनचविपरिणमंतोजगदिदंसर्वंवासयंतिवसंतिचतेयस्माद्वासयंतितस्माद्वसवइति

स्वफलस्याश्रयत्वेनतेषामेवनिवासत्वेनचशरीरेंद्रियसमुदायाकारेणविपरिणमंतोग्न्यादयोजगदेतदाश्रयंतिस्वयंचतत्रवसंतितस्माद्युक्तंतेषां

बृ.उ. ५५

प्राणशब्दार्थमाह॥ कर्मेति॥ ते यदास्मादित्यादिवाक्यमनुसरन्तेषां रुद्रत्वमुपपादयति॥ तत एते प्राणा इति मरणकालः सप्तम्यर्थः॥ ६८॥ तेषा
मादित्यत्वमप्रसिद्धमिति शंकते॥ कथमिति॥ एते हीत्यादिवाक्येनोत्तरमाह॥ एते हीति॥ ६९॥ प्रसिद्धं वज्रं आवर्तयति॥ वीर्यमिति॥ तदेव संघा

कतमे रुद्रा इति दशेमे पुरुषे कर्मबुद्धीन्द्रियाणि प्राणाः आत्मा मनः एकादशः एकादशानां पूरणः त एते प्राणाः यदा अस्माच्छरीरान्मर्त्यात्प्रा
णिनां कर्मफलोपभोगक्षये उत्क्रामन्ति अथ तदा रोदयन्ति तत्र यस्माद्रोदयन्ति संबंधिनस्तस्माद्रुद्रा इति॥ ६८॥ कतम आदित्या इति द्वादश वै
मासाः संवत्सरस्य कालस्यावयवाः प्रसिद्धा एत आदित्याः कथमेते हि यस्मात्पुनः पुनः परिवर्तमानाः प्राणिनामपि आयूंषि कर्मफलं चाददा

कतम आदित्या इति द्वादश वै मासाः संवत्सरस्यैत आदित्या एते हीदꣳ सर्वमाददाना यन्ति ते यदिदꣳ सर्वमाददाना यन्ति तस्मा
दादित्या इति॥ ६९॥ कतम इन्द्रः कतमः प्रजापतिरिति स्तनयित्नुरेवेन्द्रो यज्ञः प्रजापतिरिति कतमः स्तनयित्नुरित्यशनिरि
ति कतमो यज्ञ इति पशव इति॥ ७०॥ कतमे षडित्यग्निश्च पृथिवी च वायुश्चान्तरिक्षं चादित्यश्च द्यौश्चैते षडेते हीदꣳ सर्वꣳ ष
डिति॥ ७१॥

नाः गृह्णन्त उपाददतो यन्ति गच्छन्ति ते यद्यस्मादेवमिदं सर्वमाददाना यन्ति यस्माच्चैवं तस्मादादित्या इति॥ ६९॥ कतम
इन्द्रः कतमः प्रजापतिरिति स्तनयित्नुरेवेन्द्रो यज्ञः प्रजापतिरिति कतमः स्तनयित्नुरित्यशनिर्वज्रं वीर्यं बलं यत्प्राणिनः प्रमापयति
स इन्द्रः इन्द्रस्य हि तत्कर्म कतमो यज्ञ इति पशव इति यज्ञस्य हि साधनानि पशवः यज्ञस्यारूपत्वात्सप्रसाधनाश्रयत्वाच्च पशवो यज्ञ इत्युच्य

तनिविष्टत्वेन स्फुटयति॥ बलमिति॥ किं तदिति चेत्तदाह॥ यत्प्राणिन इति॥ प्रमापणं हिंसनं॥ कथं तस्येन्द्रत्वमुपचारादित्याह॥ इन्द्रस्य हीति॥ पशू

अमूर्तत्वात्साधनव्यतिरिक्तरूपाभावाद्यज्ञस्य पश्वाश्रयत्वाच्च पशवो यज्ञ इत्युच्यत इत्यर्थः॥७०॥ एते हीति प्रतीकमादाय व्याचष्टे॥ यस्मादि
ति॥ त्रयस्त्रिंशदाद्युक्तं तत्सर्वमेत एव यस्मादेते षड्भवंतीति योजना॥ अक्षरार्थमुक्त्वा वाक्यार्थमाह॥ सर्वो हीति॥७१॥ प्रतिज्ञासमाप्ताविति श
ब्दः॥ तत्र हेतुः॥ एष हीति॥ वेदलक्षणकृतां केषांचिद्विषपक्षोद्दर्शितोन्येषांतु त्रयो लोका इत्यस्य यथाश्रुतोर्थ इत्याह॥ इत्येष इति॥७२॥ एकस्या

कतमे षडिति त एवाग्न्यादयो वसुत्वेन पठिताश्चंद्रमसं नक्षत्राणि च वर्जयित्वा षड्भवंति षड्ढं ज्ञाविशिष्टा एते हि यस्मात्त्रयस्त्रिंश
दादि यदुक्तमिदं सर्वं एत एव षड्भवंति सर्वो हि वस्वादिविस्तरः एतेष्वेव षट्सु तर्भवतीत्यर्थः॥७१॥ कतमे ते त्रयो देवा इतीम एव त्र
यो लोका इति पृथिवीमग्निं चैकीकृत्यैको देवोंतरिक्षं वायुं चैकीकृत्य द्वितीयो दिवमादित्यं चैकीकृत्य तृतीयस्त एव त्रयो देवा इति एषु

कतमे ते त्रयो देवा इतीम एव त्रयो लोका एषु हीमे सर्वे देवा इति कतमौ तौ द्वौ देवावित्यन्नं चैव प्राणश्चेति कतमोऽध्यर्ध
इति योयं पवत इति॥७२॥ हि यस्मात्त्रिषु देवेषु सर्वे देवा अंतर्भवंति तेनैत एव देवास्त्रय इत्येष नैरुक्तानां केषांचित्पक्षः क
तमौ तौ द्वौ देवाविति अन्नं चैव प्राणश्चेतौ द्वौ देवावनयोः सर्वेषामुक्तानामंतर्भावः कतमोऽध्यर्ध इति योयं पवते वायुः॥७२॥ तत्तत्राहुः
योयं पवत इति यदयं वायुरेक इवैक एव पवते अथ कथमध्यर्ध इति यदस्मिन्निदं सर्वमध्यार्ध्नोत् यस्मिन्वायौ सतीदं सर्वमधि आर्ध्नोदृधिं प्रा
प्नोति तेनाध्यर्ध इति कतम एको देव इति प्राण इति स प्राणो ब्रह्म सर्वदेवात्मकत्वान्महद्ब्रह्म तेन स ब्रह्म त्यदित्याचक्षते त्यदिति ध्यर्धत्वमाप्ति
पत्ति॥ तत्रेति इव शब्दस्तु कथमित्यत्र संबध्यते॥ परिहरति॥ यदस्मिन्निति॥ प्राणस्य ब्रह्मत्वं साधयति॥ सर्वेति॥ तेन महत्त्वेनेति यावत्॥ तस्य परोक्ष

उक्तमर्थं प्रतिपत्तिसौकर्यार्थं संगृह्णाति॥ देवानामिति॥ एकत्वं प्राणे पर्यवसानं॥ नानात्वमानंत्यं॥ षडधिकत्रिशताधिकत्रिसहस्रसंख्याकानामेव देवानामनंतोक्तत्वात्कथं तदानंत्यमित्याशंक्य शतसहस्रशब्दाभ्यामनंतताप्युक्तैवेत्याशयेनाह॥ अनंतानामिति॥ एकस्मिन्प्राणे पर्यवसानं यावद्भवति तावत्पर्यंतमुत्तरोत्तरेषु त्रयस्त्रिंशदादिषु तेषामप्यंतर्भावं दर्शयन्नाह॥ तेषामपीति॥ प्राणस्यैकस्मिन्नंतर्भावस्तन्नाह॥ प्राणस्यैवेति॥

तद्व्याचष्टे परोक्षाभिधायकेन शब्देन देवानामेतदेकत्वं नानात्वं चानंतानां देवानां निवित्संख्याविशिष्टेष्वंतर्भावस्तेषामपि त्रयस्त्रिंशदादिषूत्तरोत्तरेषु यावदेकस्मिन्प्राणे प्राणस्यैवैकस्य सर्वोऽनंतसंख्यातो विस्तर एवमेकश्चानंतश्चावांतरसंख्याविशिष्टश्च प्राण एव॥ तत्र च देवस्यैकस्य नामरूपकर्मगुणशक्तिभेदोऽधिकारभेदात्॥ ९॥ इदानीं तस्यैव प्राणस्य ब्रह्मणः पुनरष्टधा भेद उपदिश्यते॥

तदाहुर्यदयमेक इवैव पवतेऽथ कथमध्यर्ध इति यदस्मिन्निदꣳ सर्वमध्यार्ध्नोत्तेनाध्यर्ध इति कतम एको देव इति प्राण इति स ब्रह्म त्यदित्याचक्षते॥ ९॥ पृथिवी एव यस्य देवस्यायतनमाश्रयः अग्निर्लोको यस्य लोकयत्यनेनेति लोकः पश्यतीत्यग्निना पश्यतीत्यर्थः मनोज्योतिर्मनसा ज्योतिषा संकल्पादिकार्यं करोति यः सोऽयं मनोज्योतिः पृथिवीशरीरोऽग्निदर्शनो मनसा संकल्पयिता पृथिव्यभिमानी कार्यकरणसंघातवान्देव इत्यर्थः य एवं विशिष्टं वै

संगृहीतमर्थमुपसंहरति॥ एवमिति॥ एकस्यानेकधाभावे किं निमित्तमित्याशंक्याह॥ तत्रेति॥ उक्तरीत्या प्राणस्वरूपे स्थिते सतीति यावत्॥ देवस्यैकस्य प्रकृतस्य प्राणस्यैवेत्यर्थः॥ प्राणिनां ज्ञाने कर्मणि चाधिकारस्य स्वामित्वस्य भेदोऽधिकारभेदस्तन्निमित्तत्वेन देवस्यानेकसंस्थानपरिणामसिद्धिः॥ प्राणिनो हि ज्ञानं कर्म चानुष्ठाय तत्तत्स्थानगम्यादिरूपमापद्यंते तद्युक्तो यथोक्तो

उपदिश्यते ध्यानार्थमिति शेषः॥ अवयवशो वाक्यं योजयति॥ पृथिवीति॥ संपिंडितं वाक्यन्त्र यार्थं कथयति॥ पृथिवीत्यादिना वे शब्दो वधारणार्थः॥ तं परायणं य एव विजानीयात्स एव वेदिता स्यादिति संबंधः॥ अथ केन रूपेण पृथिवीदेवस्य कार्यकरणसंघातं प्रत्याश्रयत्वं तदाह॥ मातृजेनेति॥ पृथिव्या मातृ शब्दवाच्यत्वात्स एव देवोहं पृथिव्यस्मीति मन्यते स एव शरीरारंभकमातृजकोशत्रयाभिमानितया वर्तते तथा च तस्य तेन रूपेण पितृज त्रि

तं पुरुषं यो विद्याद्विजानीयात्सर्वस्यात्मनः आध्यात्मिकस्य कार्यकरणसंघातस्यात्मनः परमयनं परः आश्रयस्तं परायणं मातृजेन त्वङ्मांसरुधिररूपेण क्षेत्रस्थानीयेन बीजस्थानीयस्य पितृजस्यास्थिमज्जाशुक्ररूपस्य परमयनं करणात्मनश्च स वै वेदिता स्याद्यस्तं देवं वेत्ति स वै वेदिता पंडितः स्यादित्यभिप्रायः॥ याज्ञवल्क्य त्वं तमज्ञानन्नेव पंडिताभिमानीत्यभिप्रायो यदि तद्विज्ञानेन पांडित्यं लभ्य

पृथिव्येव यस्यायतनमग्निर्लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायण ँ स वै वेदिता स्या

त्वेद वा अहं तं पुरुषं सर्वस्यात्मनः परायणं यमात्थ यं कथयसि तमहं वेद तत्र शाकल्यस्य वचनं दृष्ट्वा यदि त्वं वेत्थ तं पुरुषं ब्रूहि किं विशेषणोसौ शृणु यद्विशेषणः स य एवायं शारीरः पार्थिवांशः शरीरे भवः शारीरो मातृजकोशत्रयरूप इत्यर्थः स एष देवो यस्त्वया पृष्टो हे शाकल्य किं त्वस्ति तत्र वक्तव्यं विशेषणांतरं तद्वद देव

तयं कार्यलिंगं च करणं प्रत्याश्रयत्वं संभवतीत्यर्थः॥ पृथिवीदेवस्य परायणत्वमुपपाद्यानंतरं वाक्यमुत्थाप्य व्याचष्टे॥ स वै वेदितेति॥ तथापि मम किमायातमित्याशंक्याह॥ याज्ञवल्क्येति॥ स पुरुषो येन विशेषणेन विशिष्टस्तद्विशेषणमुच्यमानं शृण्विति सुत्क्वा तदेवाह॥ य एवेति॥ शरीरं हि पंचभूतात्मकं तत्र पार्थिवांशेन जनकत्वेन स्थितः शारीर इति यावत्॥ तस्य जीवत्वं च

स्पति॥ मातृजेति॥ पृथिवीदेवस्य निर्णीतत्व शंकां वारयति॥ किं त्विति॥

याज्ञवल्क्यो वक्तासन्प्रष्टारं शाकल्यं प्रति कथं वदेवेति कथयति तत्राह॥ एष्ठेति॥ क्षोभितस्यामर्षवशगत्वे दृष्टांतः तोत्रेति॥ प्राकरणिकं देवताशब्दार्थमाह॥ यस्मादिति॥ पुरुषो निष्पत्तिकर्त्ता पक्ष्यो अतेलोहितनिष्पत्तिहेतुत्वमन्नरसस्यानुभवेन साधयति॥ तस्माद्धेति॥ तस्य कार्यमाह॥ ततश्चेति॥ लोहितात् द्वितीयपदार्थनिष्ठात्तत्कार्यं तद्मांसरुधिररूपं बीजस्यास्थिमज्जाशुक्रात्मकस्याश्रयभूतं भवतीत्य

एष्ठैवेत्यर्थः हे शाकल्य सर्वं क्षोभितोमर्षवशगः आहतो त्रार्दितद्वगजस्तस्य देवस्य शारीरस्य का देवता यस्मान्निष्पद्यते यः सा तस्य देवतेत सस्मिन्प्रकरणे विवक्षितं अमृतमिति होवाच॥ अमृतमिति योभुक्तस्यान्नस्य रसो मात्तजसं लोहितस्य निष्पत्तिहेतुस्त

याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्वस्यात्मनः परायणं यमात्थ य एवायꣳ शारीरः पुरुषः स एष वदेव शाकल्य तस्य का देवेतेत्यमृतमिति होवाच॥ ७४॥ काम एव यस्यायतनꣳ हृदयं लोको मनो ज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणꣳ स वै वेदिता स्याद्याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्वस्यात्मनः परायणं यमात्थ य एवायं काममयः पुरुषः स एष वदेव शाकल्य तस्य का देवतेति स्त्रिय इति होवाच॥ ७५॥

स्यात्स्यन्नरसाल्लोहितं निष्पद्यते स्त्रियां तत्तस्य लोहितमयं शरीरं वीजाश्रयं॥ ७४॥ समानमन्यत्॥ काम एव यस्यायतनं स्त्रीव्यतिकराभिलाषः कामः कामशरीर इत्यर्थः हृदयं लोको हृदयेन बुध्या पश्यति॥ य एवायं काममयः पुरुषो ध्यात्ममपि काममय एव र्थः॥ ७४॥ पर्यायसप्तकमाद्यपर्यायेण तुल्यार्थत्वान्न पृथग्व्याख्यानापेक्षमित्याह॥ समानमिति॥ उत्तरपर्यायेषु येषां पदानामर्थभेदस्तेषां तत्कलनार्थं प्रतीकं गृह्णाति॥ कामइति॥ वाक्यार्थमाह॥ कामशरीर इत्यर्थ इति स च हृदय

आध्यात्मिकस्य काममयस्य पुरुषस्य कारणं स्त्रीष्विति ॥ तस्येति ॥ तस्मात्त्कारणात्त्वमनुभवेनमन्तः ॥ स्त्रीतो हीति ॥ १५ ॥ रूपशरीरस्य चक्षुर्दर्शनस्य मनसा संकल्पयितुर्देवस्य कथमादित्ये पुरुषो विशेषणमित्याशंक्याह ॥ सर्वेषांहीति ॥ रूपमात्राभिमानिनो देवस्यादित्यपुरुषो विशेषावच्छेदः स च सर्वरूपप्रकाशकत्वात्सर्वैरूपैः स्वप्रकाशनाया रब्धस्तस्माद्युक्तं यथोक्तं विशेषणमित्यर्थः ॥ कथं च क्षुषः सकाशा

तस्य का देवतेति स्त्रिय इति होवाच स्त्रीतो हि कामस्य दीप्तिर्जायते रूपाण्येव यस्यायतनं रूपाणि शुक्लकृष्णादीनि य एवासावादित्ये पुरुषः सर्वेषां हि रूपाणां विशिष्टकार्यमादित्यपुरुषस्तस्य का देवतेति सत्यमिति होवाच सत्यमिति चक्षुरुच्यते चक्षुषो ह्यध्यात्मनः

रूपाण्येव यस्यायतनं चक्षुर्लोको मनो ज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणꣳ स वै वेदिता स्याद्याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्वस्यात्मनः परायणं यमात्थ य एवासावादित्ये पुरुषः स एष वद देव शाकल्य तस्य का देवतेति सत्यमिति होवाच ॥ १६ ॥ आकाश एव यस्यायतनꣳ श्रोत्रं लोको मनो ज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणꣳ स वै वेदिता स्याद्याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्वस्यात्मनः परायणं यमात्थ य एवायꣳ श्रौत्रः प्रातिश्रुत्कः पुरुषः स एष वद देव शाकल्य तस्य का देवतेति दिश इति होवाच ॥ १७ ॥

आदित्यस्याधिदैवस्य निष्पत्तिः ॥ १६ ॥ आकाश एव यस्यायतनं य एवायं श्रोत्रे भवः श्रोत्रस्तत्रापि प्रतिश्रवणवेलायां विशेषतो भवतीति प्रातिश्रुत्कः तस्य का देवतेति दिश इति होवाच ॥ दिग्भ्यो ह्य दित्यस्योत्पत्तिरित्याशंक्य चक्षोः सूर्यो अजायतेति श्रुतिमाश्रित्याह ॥ चक्षुषो हीति ॥ १७ ॥ तत्राधीति श्रोत्रशक्तिः प्रतिश्रवणसंवादः ॥ प्रतिविषयं श्रवणं वा सर्वाणि श्रवणानि वा ॥ तद्दृशायामिति यावत् ॥ दिशस्त

अधिदैवतंमृत्युरीश्वरः॥मृत्युनैवेदमावृतमासीदितिश्रुतेः॥सचतस्याज्ञानमयस्याध्यात्मिकस्यपुरुषस्योत्पत्तिकारणमविवेकिप्रवृत्तेरीश्वराधीन
त्वादीश्वरप्रेरितोगच्छेत्स्वर्गंवाश्वभ्रमेववेतिहिपठंतितदाह॥मृत्युरिति॥७८॥पुनरुक्तिंपरिहरन्नाह॥पूर्वमिति॥आधारशब्दोभावप्रधानः॥तथाचप्र

सावाध्यात्मिकोनिष्पद्यतेतमसएवयस्यायतनंतमइतिशार्वराद्यंधकारःपरिगृह्यतेआध्यात्मिकश्छायामयोऽज्ञानमयःपुरुषस्तस्यका
देवतेतिमृत्युरितिहोवाचमृत्युरधिदैवतंतस्यनिष्पत्तिकारणं॥७८॥रूपाण्येवयस्यायतनंपूर्वंसाधारणानिरूपाण्युक्तानीहतुप्र

तमसएवयस्यायतन१हृदयंलोकोमनोज्योतिर्योवैतंपुरुषंविद्यात्सर्वस्यात्मनःपरायण१सवैवेदितास्याद्याज्ञवल्क्यवे
दवाअहंतंपुरुष१सर्वस्यात्मनःपरायणंयमात्थयएवायंछायामयःपुरुषःसएषदेवशाकल्यतस्यकादेवतेतिमृत्यु
रितिहोवाच॥७८॥रूपाण्येवयस्यायतनंचक्षुर्लोकोमनोज्योतिर्योवैतंपुरुषंविद्यात्सर्वस्यात्मनःपरायण१सवैवेदि
तास्याद्याज्ञवल्क्यवेदवाअहंतंपुरुष१सर्वस्यात्मनःपरायणंयमात्थयएवायमादर्शेपुरुषःसएषदेवशाकल्यतस्य
कादेवतेत्यसुरितिहोवाच॥७९॥

काशकानिविशिष्टानिरूपाणिगृह्यंतेरूपायतनस्यदेवस्यविशेषायतनंप्रतिबिंबाधारमाद
र्शादितस्यकादेवतेत्यसुरितिहोवाचतस्यप्रतिबिंबाख्यस्यपुरुषस्यनिष्पत्तिरसोःप्राणात्॥७९॥आपएवयस्यायतनं

तिबिंबस्याधारत्वंयत्रतदित्युक्तंभवति॥आदिशब्देनस्वच्छस्वभावंखड्गादिगृह्यते॥प्राणेनहिघृष्यमाणेदर्पणादौप्रतिबिंबाभिव्यक्तियोग्यरू
पविशेषोनिष्पद्यतेततोयुक्तंप्राणस्यप्रतिबिंबकारणत्वमित्यभिप्रेत्याह॥तस्येति॥७९॥आपएवयस्यायतनंयएवायमप्सुपुरुषइत्युभयत्रसामान्यवि

साधारण इति॥ कथं पुनर्वापीकूपविशेषायतनस्य वरुणो देवता न हि देवतात्मनो वरुणस्य तदधिष्ठातुस्तत्कारणत्वं तत्राह॥ वरुणादिति॥ आपो वापीकूपाद्याः पीताः सत्यो ध्यात्मं शरीरे मूत्रादिसंघातं कुर्वन्ति ताश्च वरुणाद्भवन्ति वरुणशब्देनाप एव रश्मिद्वारा भूमिं पतन्त्यो ऽभिधीयन्ते तथा च ता एव वरुणात्मिका वाप्याद्यपां पीयमानानामुत्पत्तिकारणमिति युक्तं वरुणस्य वापीतडागाद्यायतनं पुरुषप्रतिकारणत्वमित्यर्थः॥ १०॥ वाक्यद्वयं गृहीत्वा

साधारणाः सर्वा आपः आयतनं वापीकूपतडागाद्याश्रयास्त्वपु विशेषावस्थानं तस्य का देवतेति वरुण इति वरुणात्संघातकर्त्र्यो ध्यात्ममाप एव वाप्याद्यपां निष्पत्तिकारणं॥ १०॥ रेत एव यस्यायतनं यस्य वा यं पुत्रमयो विशेषायतनं रेत आयतनस्य पुत्रमय इति चास्मिन्मज्जा

आप एव यस्यायतनꣳ हृदयं लोको मनो ज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणꣳ स वै वेदिता स्याद्याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्वस्यात्मनः परायणं यमात्थ य एवायमप्सु पुरुषः स एष वदैव शाकल्य तस्य का देवतेति वरुण इति होवाच॥ १०॥ रेत एव यस्यायतनꣳ हृदयं लोको मनो ज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणꣳ स वै वेदिता स्याद्याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्वस्यात्मनः परायणं यमात्थ य एवायं पुत्रमयः पुरुषः स एष वदैव शाकल्य तस्य का देवतेति प्रजापतिरिति होवाच॥ ११॥ शुक्राणि पितुर्जीतानि तस्य का देवतेति प्रजापतिरिति होवाच प्रजापतिः पिता उच्यते पित्तो हि पुत्रस्योत्पत्तिः॥ ११॥ अष्टधा देवलोकपुरुषभेदेन त्रिधा त्रिधात्मानं विभज्यावस्थितः एक एको देवः॥ तात्पर्यमाह॥ त्रिधैवेति॥ पुत्रमयशब्दार्थं व्याचष्टे॥ पुत्रमय इति॥ ११॥ शाकल्येति होवाचेत्यादिग्रंथस्य तात्पर्यं वक्तुं वृत्तं कीर्तयति॥ अष्टधेति॥ लोकः सामान्याकारः पुरुषो विशेषावच्छेदो देवस्तत्कारणमनेन प्रकारेण त्रिधा

सप्राणएवसूत्रात्मातद्भेदत्वात्पूर्वोक्तस्यसर्वस्यसचोपासनार्थमध्योपदिष्टोऽधस्तादित्यर्थः॥उत्तरस्यतात्पर्यंदर्शयति॥अधुनेति॥प्रविभक्तस्यज
गतःसर्वस्येतिशेषः॥आत्मशब्दोहृदयविषयः॥याज्ञवल्क्यवाक्यस्यशाकल्येप्रष्टर्यबुद्धिपूर्वकारित्वापादकत्वंदर्शयति॥ग्रहेणेति॥८२॥सर्वेषा
मेवब्राह्मणानांप्रायेणाहंतव्यत्वेनसंमतोभवानितिमुनेरभिसंहितंशाकल्यस्तुकालचोदितत्वात्तदनुरोधिनीमस्यथाप्रतिपत्तिमेवाश्रयचोदयति॥

प्राणभेदस्योपासनार्थंव्यपदिष्टोदिगादिविभागेनपंचधाप्रविभक्तस्यात्मन्युपसंहारार्थमाहतूष्णींभूतंशाकल्यंयाज्ञवल्क्यो
ग्रहेणावेशयन्नाह॥शाकल्येतिहोवाचयाज्ञवल्क्यस्त्वांस्विदितित्विदर्थेइमेनूनंब्राह्मणाःअंगारावक्षयणमंगाराअवक्षीयंतेय
स्मिंस्तंसंदेशादितदंगारावक्षयणंतन्नूनंत्वामक्रताकृतवंतोब्राह्मणास्त्वंतुतन्नबुध्यसेआत्मानंदह्यमानमित्यभिप्रायः॥८२॥

शाकल्येतिहोवाचयाज्ञवल्क्यस्त्वाꣳस्विदिमेब्राह्मणाअंगारावक्षयणमक्रताउइति॥८२॥याज्ञवल्क्येतिहोवाचशाक
ल्योयदिदंकुरुपंचालानांब्राह्मणानत्यवादीः किंब्रह्मविद्वानितिदिशोवेदसदेवाःसप्रतिष्ठाइतियद्दिशोवेत्थसदेवाः
सप्रतिष्ठाः॥८३॥किंदेवतोस्यां

याज्ञवल्क्येतिहोवाचशाकल्योयदिदंकुरुपंचालानांब्राह्मणानत्यवादीरत्युक्तवानसिस्वयंभीता
स्त्वामंगारावक्षयणंकृतवंतइतिकिंब्रह्मविद्वान्सन्नेवमधिक्षिपसिब्राह्मणान्याज्ञवल्क्यआहब्रह्मविज्ञानंतावदिदंममकिंतद्दिशोवेद
दिग्विषयंविज्ञानंजानेतच्चनकेवलंदिशएवसदेवादेवैःसहदिगधिष्ठातृभिःकिंचसप्रतिष्ठाभिश्चसहइतरआहयद्यदिदिशोवेत्थसदेवाःस

सप्रतिष्ठाः

साह॥यदिदमिति॥दिग्विषयंविज्ञानंजानेतन्नाश्रास्तीत्यर्थः॥तच्चविज्ञानंकेवलंदिङ्मात्रस्यनभवतिकिंतुदेवैःसहप्रतिष्ठाभिश्चसहितादिशोवेदत्याह॥

अवतारितस्यवाक्यस्यार्थंसंक्षिपति॥सफलमिति॥प्राच्यांदिशिकादेवतेतिवक्तव्येकथमन्यथापृच्छ्यतेतत्राह॥असौहीति॥आत्मानमात्मीयमितिया
वत्॥यथोक्तंहृदयमात्मत्वेनोपगम्येतिसंबंधः॥तथापिप्रथमंप्राचींदिशमधिकृत्यप्रश्नेकोहेतुरितिचेत्तत्राह॥पूर्वाभिमुखइति॥यद्यपिदिगात्मा
हमस्मीतिस्थितस्तथापिकथंसर्वंजगदात्मत्वेनोपगम्यतिष्ठतीत्यवगम्यतेतत्राह॥सप्रतिष्ठेति॥सप्रतिष्ठादिशोवेदेतिवचनात्सर्वमपिहृदयद्वारा

सफलंयदिविज्ञानंत्वयाप्रतिज्ञातं॥किंदेवतःकादेवताअस्यतवदिग्भूतस्यासौहियाज्ञवल्क्योहृदयमात्मानंदिक्षुपंचधाविभक्तंदिगात्म
भूतंतत्द्वारेणसर्वंजगदात्मत्वेनोपगम्याहमस्मिदिगात्मेतिव्यवस्थितः॥पूर्वाभिमुखःसप्रतिष्ठावचनात्यथायाज्ञवल्क्यस्यप्रतिज्ञातंतथै
वपृच्छतिकिंदेवतस्त्वमस्यांप्राच्यांदिश्यसीतिसर्वत्रहिवेदेयांयांदेवतामुपास्तेइहैवतद्भूतस्तांतांप्रतिपद्यतइति॥तथाचवक्ष्यतिदेवोभूत्वा

प्राच्यांदिश्यसीत्यादित्यदेवतइतिसआदित्यःकस्मिन्प्रतिष्ठितइतिचक्षुषीतिकस्मिन्नुचक्षुःप्रतिष्ठितमितिरूपेष्वितिचक्षुषा
हिरूपाणिपश्यतिकस्मिन्नुरूपाणिप्रतिष्ठितानीतिहृदयइतिहोवाच॥ देवानप्येतीत्यस्यांकादेवतादिगात्मनस्तवाधिष्ठात्रीकयादे
वतयात्वंप्राचीदिग्रूपेणसंपन्नइत्यर्थः इतरआहादित्यदेवतइतिप्राच्यांदिशिममादित्योदेवतासोहमादित्यदेवतःसदेवाइत्येतदुक्तंसप्र
तिष्ठाइतितुवक्तव्यमित्याह॥सआदित्यःकस्मिन्प्रतिष्ठितइतिचक्षुषीति जगदात्मत्वेनोपगम्यस्थितोमुनिरितिप्रतिभातीत्यर्थःप्रतिज्ञानुसारि
त्वाच्चायंप्रश्नोयुक्तिमानित्याह॥यथेति॥अहमस्मिदिगात्मेतिप्रतिज्ञानुसारिण्यपिप्रश्नेदेहपातोत्तरभावीदेवताभावःपृच्छ्यतेसतिदेहेध्यातुस्तद्भावाःयोगा
दित्याशंक्याह॥सर्वत्रहीति॥इतिनभाविदेवताभावःप्रश्नगोचरइतिशेषः॥उक्तेर्थेवाक्यशेषमनुकूलयति॥तथाचेति॥प्रश्नार्थमुपसंहरति॥अस्यामिति॥

भ

९६५

आदित्यस्य चक्षुषि प्रतिष्ठितत्वं प्रकटयितुं कार्यकारणभावं तयोर्दर्शयति॥ अध्यात्मनश्चक्षुषइति॥ चक्षोः सूर्यो अजायतेत्यादयो मंत्रवा
दास्तदनुसारिणश्च ब्राह्मणवादाः॥ भवतु कार्यकारणभावस्तथापि कथं चक्षुष्यादित्यस्य प्रतिष्ठितत्वं तत्राह॥ कार्यंहीति॥ कथं चक्षुषो रूपेषु
प्रतिष्ठितत्वं तत्राह॥ रूपग्रहणायेति॥ तथापि कथं यथोक्तमाधाराधेयत्वमत आह॥ येहीति॥ चक्षुषो रूपाधारत्वे फलितमाह॥ तस्मादिति॥ उ



अध्यात्मनश्चक्षुष आदित्यो निष्पन्न इति हि मंत्रब्राह्मणवादाः चक्षोः सूर्यो अजायत चक्षुष आदित्य इत्यादयः कार्यं हि कारणे प्रतिष्ठि
तं भवति कस्मिन्नु चक्षुः प्रतिष्ठितमिति रूपेषु प्रतिष्ठितं रूपग्रहणाय हि रूपात्मकं चक्षुः रूपेण प्रयुक्तं यैर्हि रूपैः प्रयुक्तं ते
रात्मग्रहणायारब्धं चक्षुः तस्मात्सादित्यं चक्षुः सह प्राच्या दिशा सह तत्स्थैः सर्वै रूपेषु प्रतिष्ठितं चक्षुषा सह प्राची दिक्सर्वा रूपभू

हृदयेन हि रूपाणि जानाति हृदये ह्येव रूपाणि प्रतिष्ठितानि भवंतीत्येवमेवैतद्याज्ञवल्क्य॥ २४॥

ता तानि च कस्मिन्नु रूपाणि प्रतिष्ठितानीति हृदय इति होवाच॥ हृदयारब्धानि रूपाणि रूपाकारेण हि हृदयं परिणतं यस्माद्धृदये
न हि रूपाणि सर्वो लोको जानाति हृदयमिति बुद्धिमनसी एकीकृत्य निर्देशः तस्माद्धृदये ह्येव रूपाणि प्रतिष्ठितानि हृदयेन हि य
स्मात्स्मरणं भवति रूपाणां वासनात्मनां तस्मात् हृदये रूपाणि प्रतिष्ठितानीत्यर्थः॥ एवमेवैतद्याज्ञवल्क्य॥ २४॥ पसंहृतमर्थं सं

गृह्णाति॥ चक्षुषेति॥ हृदयारब्धत्वं रूपाणां स्फुटयति॥ रूपाकारेणेति॥ हृदये रूपाणां प्रतिष्ठितत्वे हेत्वंतरमाह॥ यस्मादिति॥ हृदयशब्दस्य मांस
खंडविषयत्वं व्यावर्तयति॥ हृदयमिति॥ कथं पुनर्बाह्यैरारब्धानि रूपाणि अंतर्हृदये स्थातुं पारयंति तत्राह॥ हृदयेन हीति॥ तथापि कथं तेषां हृदये प्रतिष्ठि

पूर्ववदित्युक्तमेवव्यनक्ति॥दक्षिणायामिति॥यमस्ययज्ञकार्यत्वमप्रसिद्धमितिशंकितान्नुत्पादयति॥कथमित्यादिना॥तस्ययज्ञकार्यत्वेफलि
तमाह॥तेनेति॥यज्ञस्यदक्षिणायांप्रतिष्ठितत्वंसाधयति॥दक्षिणयेति॥कार्यंचकारणेप्रतिष्ठितमितिशेषः॥दक्षिणायाःश्रद्धायांप्रतिष्ठितत्वंप्र

किंदेवतोऽस्यांदक्षिणायांदिश्यसीतिपूर्ववद्दक्षिणायांदिशिकादेवतात्वयमदेवतेतियमोदेवताममदक्षिणादिग्भूतस्यसयमःक
स्मिन्प्रतिष्ठितइतियज्ञइतियज्ञेकारणेप्रतिष्ठितोयमःसहदिशाकथंपुनर्यज्ञस्यकार्यंयमइत्युच्यतेऋत्विग्भिर्निष्पादितोयज्ञोदक्षि
णयायजमानस्तेभ्योयज्ञंनिष्क्रीयतेनयज्ञेनदक्षिणांदिशंसहयमेनाभिजयतितेनयज्ञेयमःकार्यत्वात्प्रतिष्ठितःसहदक्षिणयादिशा

किंदेवतोऽस्यांदक्षिणायांदिश्यसीतियमदेवतइतिसयमःकस्मिन्प्रतिष्ठितइतियज्ञइतिकस्मिन्नुयज्ञःप्रतिष्ठितइतिदक्षि
णायामितिकस्मिन्नुदक्षिणाप्रतिष्ठितेतिश्रद्धायामितियदाह्येवश्रद्धत्तेऽथदक्षिणांददातिश्रद्धायांह्येवदक्षिणाप्रतिष्ठितेति
कस्मिन्नुश्रद्धाप्रतिष्ठितेतिहृदयइतिहोवाचहृदयेनहिश्रद्धांजानातिहृदयेह्येवश्रद्धाप्रतिष्ठिताभवतीत्येवमेवैतद्याज्ञवल्क्य॥२१॥

कस्मिन्नुयज्ञःप्रतिष्ठितइतिदक्षिणायामितिदक्षिणयासनिष्क्रीयतेतेनदक्षिणाकार्यंयज्ञःकस्मिन्नुदक्षिणाप्रतिष्ठितेतिश्र
द्धायामितिश्रद्धानामदित्सुत्वमास्तिक्यबुद्धिर्भक्तिसहिताकथंतस्यांप्रतिष्ठितादक्षिणायस्माद्यदाह्येवश्रद्धत्तेऽथदक्षिणांददातिनाश्र
द्दधद्दक्षिणांददातितस्माच्छ्रद्धायांह्येवदक्षिणाप्रतिष्ठितेतिकस्मिन्नुश्रद्धाप्रतिष्ठितेतिहृदयइतिहोवाचहृदयस्यहिवृत्तिःश्रद्धायस्मा
द्धृदयेनहि

कदयति॥यस्मादिति॥हृदयेसाप्रतिष्ठितेत्यत्रहेतुमाह॥हृदयस्येति॥हृदयमाप्यत्वाच्चश्रद्धायास्तत्प्रतिष्ठितत्वमित्याह॥हृदये

बृ·र· ६०

हृदयस्यश्रद्धावृत्तिरस्तुतथापिप्रकृतेकिमायातंतत्राह॥वृत्तिश्चेति॥८५॥रेतसोहृदयकार्यत्वंसाधयति॥कामइति॥तथापिकथंरेतोहृदय

अ· ५

श्रद्धांजानातिवृत्तिश्चवृत्तिमतिप्रतिष्ठिताभवतितस्माद्धृदयेह्येवश्रद्धाप्रतिष्ठिताभवतीत्येवमेवैतद्याज्ञवल्क्य॥८५॥किंदेवतोऽस्यांप्र
तीच्यांदिश्यसीतितस्यांवरुणोदेवताममसवरुणःकस्मिन्प्रतिष्ठितइत्यप्स्वित्यपांहिवरुणःकार्यंश्रद्धावाआपःश्रद्धातोवरुणमस
सृजतेतिश्रुतेःकस्मिन्न्वापःप्रतिष्ठिताइतिरेतसीतिरेतसोह्यापःसृष्टाइतिश्रुतेःकस्मिन्नुरेतःप्रतिष्ठितमितिहृदयइतियस्माद्धृद
यस्यकार्यंरेतःकामोहृदयस्यवृत्तिःकामिनोहिहृदयाद्रेतोऽधिस्कंदतितस्मादपिप्रतिरूपमनुरूपंपुत्रंजातमाहुर्लौकिकाःअस्यपितुर्हृ

किंदेवतोऽस्यांप्रतीच्यांदिश्यसीतिवरुणदेवतइतिसवरुणःकस्मिन्प्रतिष्ठितइत्यप्स्वितिकस्मिन्न्वापःप्रतिष्ठिताइतिरेतसी
तिकस्मिन्नुरेतःप्रतिष्ठितमितिहृदयइतितस्मादपिप्रतिरूपंजातमाहुर्हृदयादिवसृप्तोहृदयादिवनिर्मितइतिहृदये
ह्येवरेतःप्रतिष्ठितंभवतीत्येवमेवैतद्याज्ञवल्क्य॥८६॥ हृदयादिवायंपुत्रःसृप्तोविनिःसृतोहृदयादिवनिर्मितोयथासुवर्णेननि
र्मितःकुंडलस्तस्माद्धृदयेह्येवरेतःप्रतिष्ठितंभवतीत्येवमेवैतद्याज्ञवल्क्य॥८६॥किंदेवतोऽस्यामुदीच्यांदिश्यसीतिसोमदेवतइतिसोम
इतिलतांसोमदेवतांचैकीकृत्यनिर्देशःससोमःकस्मिन्प्रतिष्ठितइतिदीक्षायामितिदीक्षितोहियजमानःसोमंक्रीणातिसोमेनेष्ट्वाज्ञानवा
नुत्तरांदिशंप्रतिपद्यतेसोमदेवताधिष्ठितांसौम्यांकस्मिन्नुदीक्षाप्रतिष्ठितेतिसत्यइति स्यकार्यंतदाह॥कामिनोहीति॥तत्रैवलोकप्रसिद्धिंप्र

रामः

माणयति॥तस्मादिति॥अपिशब्दःसंभावनार्थः॥अवधारणार्थोवा॥८६॥दीक्षायांसोमस्यप्रतिष्ठितत्वंसाधयति॥दीक्षितोहीत्यादिना ॥ ॥

६१

दीक्षायाः सत्ये प्रतिष्ठितत्वमसिद्धमिति शंकित्वा समाधत्ते ॥ कथमित्यादिना ॥ अपिशब्दोवधारणार्थः सत्यं वदेति वदतामभिप्रायमाह ॥ कारणेति ॥ भ्रेषो भ्रंशो नाशः इति तेषामभिप्राय इति शेषः ॥ प्रकृतोपसंहारः ॥ सत्ये हीति ॥ ८७ ॥ २३ ॥ कथं पुनरूर्ध्वा दिगवस्थिता ध्रुवेत्युच्यते तत्राह ॥ मेरोरि

कथं यस्मात्सत्ये दीक्षा प्रतिष्ठिता तस्मादपि दीक्षितमाहुः सत्यं वदेति ॥ कारणभ्रेषे कार्यभ्रेषो मा भूदिति सत्ये ह्येव दीक्षा प्रतिष्ठितेति कस्मिन्नु सत्यं प्रतिष्ठितमिति हृदय इति होवाच हृदयेन हि सत्यं जानाति तस्माद्धृदये ह्येव सत्यं प्रतिष्ठितं भवतीत्येवमेवैतद्याज्ञवल्क्य ॥ ८७ ॥ किंदेवतोस्यां ध्रुवायां दिश्यसीति मेरोः समन्ततो वसतामव्यभिचारादूर्ध्वा दिग्ध्रुवेत्युच्यते ॥ अग्निदेवत इत्यूर्ध्वायां हि प्रकाशभूय

किंदेवतोस्यामुदीच्यां दिश्यसीति सोमदेवत इति स सोमः कस्मिन्प्रतिष्ठित इति दीक्षायामिति कस्मिन्नु दीक्षा प्रतिष्ठितेति सत्य इति तस्मादपि दीक्षितमाहुः सत्यं वदेति सत्ये ह्येव दीक्षा प्रतिष्ठितेति कस्मिन्नु सत्यं प्रतिष्ठितमिति हृदय इति होवाच हृदयेन हि सत्यं जानाति हृदये ह्येव सत्यं प्रतिष्ठितं भवतीत्येवमेवैतद्याज्ञवल्क्य ॥ ८७ ॥ स्त्वं प्रकाशश्चाग्निः सोग्निः कस्मिन्प्रति

ष्ठित इति वाचीति कस्मिन्नु वाक्प्रतिष्ठितेति हृदय इति ॥ तत्र याज्ञवल्क्यः सर्वासु दिक्षु विप्रसृतेन हृदयेन सर्वा दिश आत्मत्वेनाभिसंपन्नः सदेवाः सप्रतिष्ठा दिश आत्मभूतास्तस्य नामरूपकर्मात्मभूतस्य याज्ञवल्क्यस्य यद्रूपं तत्प्राच्या दिशा सह हृदयभूतं याज्ञ

ति ॥ तत्राग्नेर्देवतात्वं प्रकटयति ॥ ऊर्ध्वायां हीति दिशो वेदेत्यादिश्रुत्या जगतो विभागेन पंचधात्वं ध्यानार्थमुक्तं ॥ इदानीं विभागवादिन्याः श्रुतेरभिप्रायमाह ॥ तत्रेति ॥ यथोक्ते विभागे सतीति यावत् ॥ उक्तमर्थं संक्षिपति ॥ सदेवा इति तत्रावांतरविभागमाह ॥ यद्रूपमिति ॥ आद्यपर्याये हृदये रूपप्र

बृ·टी· ६२

दक्षिणायामित्यादिपर्यायत्रयेण तत्रैव कर्मोपसंहार उक्त इत्याह॥ यत्केवलमिति॥ यद्धि केवलं कर्म तत्फलादिभिः सह दक्षिणदिगात्मकं हृद्युपसंह्रियते यज्ञस्य दक्षिणाद्वारा हृदये प्रतिष्ठितत्वोक्तेर्दक्षिणस्या दिशस्तत्फलत्वात्तत्रजन्मारम्भकं कर्म प्रतीच्यात्मकं तत्रैवोपसंहृतं हृदये ह्येव रेतः प्रतिष्ठितमिति श्रुतेः पुत्रजन्मनश्च तत्कार्यत्वात्॥ ज्ञानसहितमपि कर्म फलप्रतिष्ठादेवताभिः सहोदीच्यात्मकं तत्रैवोपसंहृतं सोमदेवताया दीक्षादिद्वारा

यत्केवलं कर्म पुत्रोत्पादनलक्षणं च ज्ञानसहितं च सह फलेनाधिष्ठात्रीभिश्च देवताभिर्दक्षिणाप्रतीच्युदीच्यः कर्मफलात्मिका हृदयमेवापन्नास्तस्य ध्रुवया दिशा सह नाम सर्वं वाग्द्वारेण हृदयमेवापन्नमेतावद्धीदं सर्वं यदुत रूपं वा कर्म वा नाम वेति तत्सर्वं हृदयमेव त

किं देवतोऽस्यां ध्रुवायां दिश्यसीत्यग्निदेवत इति सोऽग्निः कस्मिन्प्रतिष्ठित इति वाचीति कस्मिन्नु वाक्प्रतिष्ठितेति हृदय इति कस्मि न्नु हृदयं प्रतिष्ठितमिति॥ ८८॥ अहल्लिकेति होवाच याज्ञवल्क्यो यत्रैतदन्यत्रास्मन्मन्यासै यद्ध्येतदन्यत्रास्मत्स्याच्छ्वानो वैनच्छुर्वयांसि वैनद्विमथ्नीरन्निति॥ ८९॥ सर्वात्मकं हृदयं पृच्छ्यते कस्मिन्नु हृदयं प्रतिष्ठितमिति॥ ८८॥ अहल्लिकेति होवाच याज्ञवल्क्यो नामांतरेण संबोधनं कृतवान्॥ यत्र यस्मिन्काले एतत् हृदयमात्मास्य शरीरस्यान्यत्र क्वचिद्देशांतरे अस्मदस्मत्तो वर्त्तत इति मन्यासै मन्यसे एतद्देवं विशदयति तत्प्रतिष्ठितत्वश्रुतेरेवं दिक्त्रयेप सर्वं कर्म हृदि संहृतमित्यर्थः॥ पंचमपर्यायस्य तात्पर्यमाह॥ ध्रुवयेति॥ नामरूपकर्मसु पसंहृतेष्वपि किंचिदुपसंहर्तव्यांतरमवशिष्टमस्ती त्याशंक्य निराकरोति॥ एतावद्धीति॥ प्रश्नांतरमुत्थापयति॥ तत्सर्वात्मकमिति॥ ८८॥ हृदयपदेन नामाद्याधारवद्दहल्लिकशब्देनापि हृदयाधिकरणं विवक्ष्यते वाक्यच्छायासामान्यादित्याशंक्याह॥ नामांतरेणेति॥ अहनि लीयत

अ· ५

॥ बृहदारण्यकोपनिषद्भाष्यटीका॥

ब्रा· ९ ६२

देहे हृदयं प्रतिष्ठितमिति मनुत्पादयति॥ यन्नेत्यादिना॥ तस्मिन्काले शरीरं मृतं स्यादिति शेषः॥ शरीरस्य हृदयाश्रयत्वं विशदयति॥ यद्धीत्यादिना॥ देहादन्यत्र हृदयस्यावस्थाने यथोक्तं दोषमिति शब्देन परामृश्य फलितमाह॥ इतीत्यादिना॥ देहस्तर्हि कुत्र प्रतिष्ठित इत्यत आह॥ श

यद्धि यदि ह्येतद्धृदयमन्यत्रास्मत्स्याद्वेव क्वानो वा एतच्छरीरं तदाद्युर्वयांसि वा पक्षिणो वा एतद्विमथ्नीरन्निति लोडयेयुर्विकर्षेरन्निति तस्मान्मयि शरीरे हृदयं प्रतिष्ठितमित्यर्थः शरीरस्यापि नामरूपकर्मात्मकत्वाद्धृदये प्रतिष्ठितत्वं॥ ८९॥ हृदयशरीरयोरेवमन्योन्यप्रतिष्ठाकार्यकरणयोरलत्वात्पृच्छामि कस्मिन्नु त्वं च शरीरमात्मा च तव हृदयं प्रतिष्ठितौ स्थ इति प्राण इति देहात्मानौ प्राणे प्रतिष्ठितौ स्यातां प्रा

कस्मिन्नु त्वं चात्मा च प्रतिष्ठितौ स्थ इति प्राण इति कस्मिन्नु प्राणः प्रतिष्ठित इत्यपान इति॥ कस्मिन्वपानः प्रतिष्ठित इति व्यान इति कस्मिन्नु व्यानः प्रतिष्ठित इत्युदान इति कस्मिन्नूदानः प्रतिष्ठित इति समान इति स एष नेति नेत्या॥ णवृत्तौ कस्मिन्नु प्राणः प्रतिष्ठित इति अपान इति साऽपि प्राणवृत्तिः प्रागेव प्रेयादपानवृत्त्या चेन्न निगृह्यते॥ कस्मिन्वपानः प्रतिष्ठित इति व्यान इति साप्यपानवृत्तिरधएव यायात्प्राणवृत्तिश्च प्रागेव मध्यस्थया चेद्व्यानवृत्त्या न निगृह्यते कस्मिन्नु व्यानः प्रतिष्ठित इति उदान इति सर्वा अस्तिस्रोऽपि वृत्तयः उदाने कीलस्थानीये चेन्न निबद्धा विष्वगेवेयुः कस्मिन्नूदानः प्रतिष्ठित इति समान इति समानप्रतिष्ठा ह्येताः सर्वा वृत्तयः एतदुक्तं शरीरस्येति॥ ८९

॥वृत्तमनूद्य प्रश्नान्तरमुपादत्ते॥ हृदयेति॥ प्राणशब्दस्य सूत्रविषयत्वं व्यवच्छेत्तुं वृत्तिविशेषणं॥ प्राणस्यापाने प्रतिष्ठितत्वं व्यतिरेकद्वारा स्फोरयति॥ साऽपीति॥ प्राणापानयोरुभयोरपि व्यानाधीनत्वं साधयति॥ साऽप्यपानेति॥ तिसृणां वृत्तीनामुक्तानामुदाने निबद्धत्वं दर्शयति॥ सर्वा इति॥ विष्वगिति नानागति

बृ॰ टी॰ ६३

तेषांप्रवर्त्तकंदर्शयति॥विज्ञानमयेति॥सएषइत्यादेस्तात्पर्यमाह॥सर्वमिति॥यस्यकूटस्थदृष्टिमात्रस्यांतर्यामित्वकल्पनाधिष्ठानस्याज्ञानवशात्स्व
शासनेद्यावापृथिव्यादिस्थितंसपरमात्मैषप्रत्यगात्मैवेतिपदयोरर्थंविवक्षितमाह॥सएषइति॥निषेधद्वयंमूर्तामूर्तब्राह्मणेव्याख्यातमित्याह॥
सयोनेति॥योमधुकांडेचतुर्थेनेतिनेतीतिनिषेधमुखेननिर्दिष्टःसएषकूर्चब्राह्मणेतन्मुखेनैववक्ष्यतइतियोजना॥निषेधद्वारानिर्दिष्टमेवस्पष्ट

भवतिशरीरहृदयवायवोन्योन्यप्रतिष्ठाःसंघातेननियतावर्तंते विज्ञानमयार्थंप्रयुक्ताइति॥सर्वमेतद्येननियतंयस्मिन्प्रतिष्ठितमाकाशां
तमोतंचप्रोतंचतस्य निरुपाधिकस्यसाक्षादपरोक्षाद्ब्रह्मणोनिर्देशःकर्तव्यइत्ययमारंभःसएषःसयोनेतिनेतीतिनिर्दिष्टोमधुकांडेस
एषसोयमात्माऽगृह्योनगृह्यःकथंयस्मात्सर्वकार्यधर्मातीतस्तस्मादगृह्यःकुतोयस्मान्नहिगृह्यतेयद्धिकरणगोचरंव्याकृतंतत्स्वग्र

त्माऽगृह्योनहिगृह्यतेशीर्योनहिशीर्यतेसंगोनहिसज्जतेसितोनव्यथतेनरिष्यत्येतान्यष्टावायतनान्यष्टौलोकाअष्टौदेवा
अष्टौपुरुषाः॥

हणगोचरमिदंतुतद्विपरीतमात्मतत्त्वंतथाअशीर्योयद्धिमूर्तंसंहतंशरीरादितच्छीर्यतेऽयंतुतद्विपरीतोतोनहि
शीर्यतेतथाऽसंगोमूर्तोमूर्तांतरेणसंबध्यमानःसज्जतेऽयंचतद्विपरीतोतोनहिसज्जतेतथाऽसितःअबद्धोयद्धिमूर्तंसंहतंतद्व्यथ
तेइदंतुतद्विपरीतत्वादसितोऽबद्धत्वान्नव्यथतेऽतोनरिष्यतिग्रहणविशरणसंगबंधकार्यधर्मरहितत्वान्नरिष्यतिनहिंसामापद्य
ते

पति॥सोयमिति॥कार्यधर्माःशब्दादयोऽशनायादयश्चश्रुत्युक्तंहेतुमवतार्यव्याचष्टे॥कुतइत्यादिना॥तद्विपरीतत्वंकरणागोचरत्वंनचक्षुषेत्या
दिश्रुतेः॥तद्विपरीतत्वादमूर्तत्वादितियावत्॥पूर्वत्राप्यभयंतद्विपरीतत्वमेतदेवातःशब्दार्थंस्फुटयन्नुक्तमुपपादयति॥ग्रहणेति॥कार्यधर्माः

अ॰ ५ रामः ६३

ननु शाकल्ययाज्ञवल्क्ययोः संवादात्मिकेयमाख्यायिका तत्र कथं शाकल्येनापृष्टमात्मानं याज्ञवल्क्यो व्याचष्टे तत्राह ॥ क्रममिति ॥ विज्ञा
नादिवाक्ये वक्ष्यमाणत्वात्किमित्यत्र निर्देश इत्याशंक्याह ॥ त्वरयेति ॥ एतान्यष्टावित्यादिवाक्यस्य पूर्वेण संगतिमाशंक्याह ॥ ततः पुनरि

क्रममतिक्रम्यौपनिषदस्य पुरुषस्याख्यायिकातोऽपसृत्य श्रुत्या स्वेन रूपेण त्वरया निर्देशः कृतः ततः पुनराख्यायिकामेवाश्रि
त्याह एतानि यान्युक्तान्यष्टावायतनानि पृथिव्येव यस्यायतनमित्येवमादीन्यष्टौ लोका अग्निर्लोका दयोऽष्टौ देवा अमृतं इति हो
वाचेत्येवमादयः अष्टौ पुरुषाः शारीरः पुरुष इत्यादयः ॥ स यः कश्चित्तान्पुरुषाञ्छारीरप्रभृतीन्निरुह्य निश्चयेनोह्य गमयित्वाऽ
ष्टचतुष्कभेदेन लोकस्थितिमुपपाद्य पुनः प्राचीदिगादिद्वारेण प्रत्युह्य उपसंहृत्य स्वात्मनि हृदये यः समक्रामदतिक्रान्तवानुपाधिधर्मं

स यस्तान्पुरुषान्निरुह्य प्रत्युह्यात्यक्रामत्तं त्वौपनिषदं पुरुषं पृच्छामि तं चेन्मे न विवक्ष्यसि मूर्धा ते विपतिष्यतीति तं
ह न मेने शाकल्यस्तस्य ह मूर्धा विपपातापि हास्य परिमोषिणोऽस्थीन्यपजह्रुरन्यन्मन्यमानाः ॥ २० ॥ हृदयाद्यात्मत्वं स्वेनैवात्म

नात्यन्तस्थितो यः स औपनिषदः पुरुषोऽशनायादिवर्जितः उपनिषत्स्वेव विज्ञेयो नान्यप्रमाणगम्यस्तं त्वा त्वां विद्याभिमानिनं पुरुषं पृ
च्छामि तं चेद्यदि मे न विवक्ष्यसि विस्पष्टं न कथयिष्यसि मूर्धा ते विपतिष्यतीति आह याज्ञवल्क्यः तं त्वौपनिषदं पुरुषं शाकल्यो न मेने
न विज्ञातवान्किल तस्य ह मूर्धा विपपात विपतितः ति ॥ निश्चयेन गमयित्वेत्येतदेव स्पष्टयति ॥ अष्टेति ॥ प्रत्युह्योपसंहृत्येति यावत् ॥ औ
पनिषदत्वं पुरुषस्य व्युत्पादयति ॥ उपनिषत्स्वेवेति ॥ तं हेत्यादि याज्ञवल्क्यस्य वा मध्यमस्य वा वाक्यमिति शंकां वारयति ॥ समाप्तेति ॥ ब्रह्मवि

मूर्धा ते विपतिष्यतीति मूर्ध्नि पतिते शापेन किमित्यग्निहोत्राग्निसंस्कारमपि शाकल्यो न प्राप्तवानित्याशंक्याह॥पूर्ववृत्तेति॥तामेवाख्यायि कामनुक्रामति॥अष्टाध्याय्यामिति॥अष्टाध्यायी बृहदारण्यकात्प्राचीना कर्मविषया पुरे पुण्यक्षेत्रातिरिक्ते देशेऽतिथ्ये पुण्यतिथिशून्ये काले अस्थीनि च नेति चन शब्दोऽप्यर्थः॥उपवादीपरिभवकर्तेति तच्छब्दार्थमाह॥उतहीति॥किमितीयमाख्यायिकात्र विद्याप्रकरणे सूचितेत्याशंक्या

समाप्ताख्यायिकाश्रुतेर्वचनं तं ह न मेनेइत्यादि किंचापि ह्यस्य परिमोषिणस्तस्कराः अस्थीन्यपि संस्कारार्थं शिष्यैर्नीयमानानि गृहा ण्यतिअपजह्रुरपहृतवंतः किं निमित्तमन्यद्धनं नीयमानं मन्यमानाः पूर्ववृत्ताख्यायिके ह सूचिताष्टाध्याय्यां किल शाकल्येन याज्ञ वल्क्यस्य समानांत एव किल संवादो निर्वृत्तस्तत्र याज्ञवल्क्येन शापो दत्तः पुरेऽतिथ्ये मरिष्यसि न तेऽस्थीनि च न गृहान्प्राप्स्यंतीति स

अथ होवाच ब्राह्मणा भगवंतो यो वः कामयते स मा पृच्छतु सर्वे वा मा पृच्छत यो वः कामयते तं वः पृच्छामि सर्वान्वा वः पृच्छामी ति ते ह ब्राह्मणा न दधृषुः॥११॥

ह तथैव ममार तस्य ह्यप्यन्यन्मन्यमानाः परिमोषिणोऽस्थीन्यपजह्रुस्तस्मान्नोपवादी स्यादुत ह्येवंवित्प रो भवतीति॥सैषाख्यायिकाचारार्थं सूचिता विद्यास्तुतये चेह॥१०॥यस्य नेति नेतीत्यन्यप्रतिषेधद्वारेण ब्रह्मणो निर्देशः कृतस्तस्य विधि मुखेन कथं निर्देशः कर्तव्य इति पुनराख्यायिकामेवाश्रित्याह मूलं च जगतो वक्तव्यमिति आख्यायिकासंबंधस्त्व ब्रह्मविदो ब्राह्मणाञ्जित्वा गोधनं हर्तव्यमिति न्यायमत्वाह॥

ह॥सैषेति॥ब्रह्मविदि विनीतेन भवितव्यमित्याचारः॥महतीयं ब्रह्मविद्या यत्तन्निष्ठावज्ञायामेहिकामुष्मि कविरोधः स्यादितिविद्यास्तुतिः॥१०॥अथहेत्यादि उत्तरग्रंथमवतारयति॥यस्येत्यादिना॥जगतो मूलं च वक्तव्यमित्याख्यायिकामेवाश्रित्याहेतिसंबं

आख्यायिकाकिमर्थेत्यत आह॥आख्यायिकेति॥इतिशब्दः संबंधसमाप्त्यर्थः॥ननुब्राह्मणेषु तूष्णींभूतेषु प्रतिषेद्धुरभावाद्बोधनं हर्तव्यं किमिति
तान्प्रतियाज्ञवल्क्यो वदतीत्यत आह॥न्यायं मन्वेति॥ब्रह्मस्वं हि ब्राह्मणात्तु मितिमना पाद्यनीयमानमनर्थायस्यादिति न्यायः॥संबोध्यो वा चेतिसं

अथहोवाच अथानंतरं तूष्णींभूतेषु ब्राह्मणेषु ह उवाच हे ब्राह्मणाः भगवंत इत्येवं संबोध्य यो वो युष्माकं मध्ये कामयते इच्छति याज्ञवल्क्यं
पृच्छामीति स मा मामागत्य पृच्छतु सर्वे वा मा पृच्छत सर्वे वा यूयं मां मां पृच्छत यो वः कामयते याज्ञवल्क्यो मां पृच्छत्विति तं वः पृच्छामि सर्वा
न्वा वो युष्मानहं पृच्छामि ते ह ब्राह्मणा न दधृषुस्ते ब्राह्मणा एवमुक्ता अपि न प्रगल्भाः संवृत्ताः किंचिदपि प्रत्युत्तरं वक्तुं॥२१॥तेषु प्रगल्भ

तान्हैतैः श्लोकैः पप्रच्छ यथा वृक्षो वनस्पतिस्तथैव पुरुषोऽमृषा॥तस्य लोमानि पर्णानि त्वगस्योत्पाटिका बहिः॥त्वच एवा
स्य रुधिरं प्रस्यंदि त्वच उत्पटः॥तस्मात्तदातृण्णात्प्रैति रसो वृक्षादिवाहतात्॥मांसान्यस्य शकराणि किनाटं स्नावत
स्थिरं॥अस्थीन्यंतरतो दारूणि मज्जा मज्जोपमा कृता॥ भूतेषु ब्राह्मणेषु तान्ह रएतैर्वक्ष्यमाणैः श्लोकैः पप्रच्छ पृष्टवान्यथा लोके
वृक्षो वनस्पतिर्वृक्षस्य विशेषणं वनस्पतिरिति तथैव पुरुषोऽमृषा मृषा सत्यमेतत्तस्य लोमानि तस्य पुरुषस्य लोमानीतरस्य वनस्पतेः प
र्णानि त्वगस्योत्पाटिका बहिस्त्वगस्य पुरुषस्येतरस्योत्पाटिका वनस्पतेस्त्वच एवास्य काशाद्स्य पुरुषस्य रुधिरं प्रस्यंदि वनस्पतेस्त्वचः

बंधः॥यो व इति प्रतीकमादाय व्याचष्टे॥युष्माकमिति॥व्याख्यातभागमनूद्य व्याख्येयमादाय व्याकरोति॥यो व इत्यादिना॥यथोक्तप्रश्नांतरं ब्राह्मणा
नामप्रतिभां दर्शयति ते हेति॥२१॥२७॥स्वकीयज्ञानप्रकर्षप्रकटनार्थमेव प्रश्नांतरमवतारयति॥तेषिति॥वृक्षो वनस्पतिरिति पर्यायत्वात्पुनरु

२७०

पुरुषस्य च समसाधर्म्यमेतदित्युच्यते॥साधर्म्यमेवस्पष्टयति॥तस्येत्यादिना॥नीरसात्वगुत्पाटिकेत्युच्यते॥उत्पटोवृक्षनिर्यासः॥विशेषाभावमेवा

उत्पटस्त्वचएवोत्स्फुरतियस्मादेवंसर्वंसमानमेववनस्पतेःपुरुषस्यचतस्मात्तदातृण्णाद्धिंसितात्प्रैतितद्रुधिरंनिर्गच्छतिवृक्षादिवा
हतात्छिन्नाद्रसइवएवंमांसानिअस्यपुरुषस्यवनस्पतेस्तानिशकराणिशकलानीत्यर्थःकीनाटंवृक्षस्यकीनाटंनामशकलेभ्योऽभ्यं
तरंवल्कलरूपंकाष्ठसंलग्नंतत्स्नाववत्पुरुषस्यतत्स्थिरंतच्चकीनाटंस्नाववद्दृढंहितदस्थीनिपुरुषस्यस्नावभ्यांतरतोऽस्थीनिभवं
तितथाकीनाटस्याभ्यंतरतोदारूणिकाष्ठानिमज्जामज्जैववनस्पतेःपुरुषस्यमज्जोपमाकृतामज्जायाउपमामज्जोपमानान्योवि

यद्वृक्षोवृक्णोरोहतिमूलान्नवतरःपुनःमर्त्यःस्विन्मृत्युनावृक्णःकस्मान्मूलात्प्ररोहतिरेतसइतिमावोचतजीवतस्त
त्प्रजायतेधानारुहइववैवृक्षोञ्जसाप्रेत्यसंभवःयत्समूलमावृहेयुर्वृक्षंनपुनराभवेत्मर्त्यःस्विन्मृत्युनावृक्णःक
स्मान्मूलात्प्ररोहति॥ शेषोऽस्तीत्यर्थः॥यथावनस्पतेर्मज्जातथापुरुषस्ययथापुरुषस्यतथावनस्पतेर्यद्यदिवृक्षोवृक्णश्छि
न्नोरोहतिपुनःप्ररोहतिप्रादुर्भवतिमूलात्पुनर्नवतरःपूर्वस्मादभिनवतरोयदेतस्माद्विशेषणात्प्राग्वनस्पतेःपुरुषस्यचसर्वं
सामान्यमवगतमयंतुवनस्पतौविशेषोदृश्यतेयच्छिन्नस्यप्ररोहणंनतुपुरुषेमृत्युनावृक्णेपुनःप्ररोहणंदृश्यतेभवितव्यंच

भिनयति॥यथेति॥साधर्म्येसतिवैधर्म्यंवक्तुमशक्यमित्याशयेनाह॥यद्यदीति॥इदमपिसाधर्म्यमेवकिंनस्यादित्याशंक्याह॥यदेतस्मादि
ति॥एतस्माद्विशेषणात्प्राग्यद्विशेषणमुक्तंतत्सर्वमुभयोःसामान्यमवगतमितिसंबंधः॥वृक्णस्यांगस्येतिशेषः॥माभूत्तस्यप्ररोहणमितिचेन्ने

२=अयंभावः नचात्रमृतपुरुषशब्देनैकःशरीरीअभिधीयतेकिंतुप्रलयकालेविलीनंसर्वमेवशरीरजातंजगदभिधीयते=२

ध्रुवंजन्ममृतस्यचेतिस्मृतिरित्यर्थः॥जीवतोहिरेतोजायतेसएवकृतोभवतीतिविचार्यतेनचासिद्धेनासिद्धस्यसाधनंनचपुरुषांतरादितिवा च्यमेकासिद्धावन्यतरप्रयोगानुपपत्तेरितिमन्वानोहेतुमाह॥यस्मादिति॥वैधर्म्यांतरमाह॥अपिचेति॥कांडरुहोपीत्यपेरर्थोवेशब्दःप्रसिद्धिद्यो तकइत्यभिप्रेत्याह॥वैवृक्षइतिअंजसेत्यादेरर्थमुक्त्वावाक्यार्थमाह॥धानातोपीति॥तथापिकथंवैधर्म्यमित्याशंक्याह॥यद्यपीति॥पुरुषस्यापि

कुतश्चित्प्ररोहणेनतस्मादुःपृच्छामिमर्त्योमनुष्यःखिन्नमृत्युनावृक्णःकस्मान्मूलात्प्ररोहतिमृतस्यपुरुषस्यकुतःप्ररोहणमित्यर्थःयदि चेदेवंवदथरेतसःप्ररोहतीतिमावोचतमैवंवक्तुमर्हथकस्माद्यस्माज्जीवतःपुरुषात्तद्रेतःप्रजायतेनमृतादपिचधानारुहोधानाबीजे बीजरुहोपिवृक्षोभवतिनकेवलंकांडरुहएवद्वशब्दोनर्थकःवैवृक्षोंजसासासाक्षात्प्रेत्यमृत्वासंभवोधानातोपिप्रेत्यसंभवोभवेदंजसा

जातएवनजायतेकोन्वेनंजनयेत्पुनः॥विज्ञानमानंदंब्रह्मरातिर्दातुःपरायणं॥तिष्ठमानस्यतद्विदइति॥ इतिबृहदारण्य केतृतीयोऽध्यायः॥३॥नवमंब्राह्मणं॥९॥ पुनर्वनस्पतेःयद्यदिसहमूलेनधानयावावृहेयुरुद्यच्छेयुरुत्पाटयेयुर्वृक्षंनपुनराभवे त्पुनरागत्यनभवेत्तस्मादुःपृच्छामिसर्वस्यैवजगतोमूलंमर्त्यःखिन्नमृत्युनावृक्णःकस्मान्मूलात्प्ररोहति॥जातएवेतिमन्यध्वंयदिकिमत्रप्र ष्टव्यमितिजनिष्यतोहिसंभवःप्रष्टव्योनजातस्यायंतुजातएवातोस्मिन्विषयेप्रश्नएवनोपपद्यतइतिचेतन्नकिंतर्हिमृतःपुनरपिजाय तएवान्यथाऽकृताभ्यागमकृतविप्रनाशप्रसंगात्तोवःपृच्छामिकोन्वेनंमृतंपुनर्जनयेत्तन्नविजज्ञुर्ब्राह्मणायतोमृतःपुनःप्ररोहति पुनरुत्प

त्तिर्माभूदित्याशंक्यपूर्वोक्तंनिगमयति॥तस्मादिति॥स्वभाववादमुत्थापयति॥जातइति॥इतिशब्दश्चोद्यसमाप्त्यर्थः॥तदेवस्फुटयति॥जनिष्यतोहि

यदिप्रपंचोजातएवेतिकिमत्रप्रष्टव्यमितिभोब्राह्मणायूयंमन्यध्वं=४

ति॥नजायतइतिभागेनोत्तरमाह॥नेस्मादिना॥स्वभा ववादेदोषमाह॥अन्यथेति॥

बृ.टी.
६६

स्वभावासंभवे फलितमाह॥ अत इति॥ उक्तमेव स्फुटयति॥ जगत इति॥ ब्रह्मविदां श्रेष्ठत्वेन याज्ञवल्क्यस्य सिद्धं फलितमाह॥ अत इति॥ समाप्ताख्या-
यिकेति॥ ब्राह्मणाश्च सर्वे यथायथं जग्मुरित्यर्थः॥ विज्ञानादिवाक्यमुत्थापयति॥ यज्जगत इत्यादिना॥ विज्ञानशब्दस्य करणादिविषयत्वं वारय-
ति॥ विज्ञप्तिरिति॥ आनंदविशेषणस्य कृत्यं दर्शयति॥ नेत्यादिना॥ प्रसन्नं दुःखहेतुना कामक्रोधादिना संबंधरहितं शिवं कामादिकारणेनाज्ञाने-
नापि संबंधशून्यं सातिशयत्वप्रयुक्तदुःखराहित्यमाह॥ अतुलमिति॥ साधनसाध्यत्वाधीनदुःखवैधुर्यमाह॥ अनायासमिति॥ दुःखनिवृत्तिमात्रं

अ.
५

जगतो मूलं न विज्ञातं ब्राह्मणैरतो ब्रह्मिष्ठत्वाद्धृता गावो याज्ञवल्क्येन जिता ब्राह्मणाः समाप्ताख्यायिका यज्जगतो मूलं येन च शब्देन साक्षाद्व्य-
पदिश्यते ब्रह्म यद्याज्ञवल्क्यो ब्राह्मणान्पृष्टवान्स्वेन रूपेण श्रुतिरस्मभ्यमाह॥ विज्ञानं विज्ञप्तिर्विज्ञानं तच्चानंदं न विषयविज्ञानवद्दुः-
खानुविद्धं किं तर्हि प्रसन्नं शिवमतुलमनायासं नित्यतृप्तमेकरसमित्यर्थः किं तद्ब्रह्मोभयविशेषणवद्रातिः रातेः षष्ठ्यर्थे प्रथमा धन-
स्य दातुः कर्मकृतो यजमानस्य परायणं परा गतिः कर्मफलस्य प्रदातृ॥ किं च॥ व्युत्थायैषणाभ्यस्तस्मिन्नेव ब्रह्मणि तिष्ठत्य-
कर्मकृत्तद्ब्रह्म वेत्तीति तद्विच्च तस्य तिष्ठमानस्य तद्विदो ब्रह्मविद इत्यर्थः॥ परायणमिति॥ २८॥ अत्रेदं विचार्यते॥ आनंदशब्दो लोके सुख-
वाची प्रसिद्धोऽत्र च ब्रह्मणो विशेषणत्वेनानंदशब्दः श्रूयते आनंदं ब्रह्मेति श्रुत्यंतरे

सुखमिति पक्षं प्रतिक्षिपति॥ नित्यतृप्तमिति॥ आनंदो ज्ञा-
नमिति ब्रह्मण्याकारभेदमाशंक्याह॥ एकरसमिति॥ फलमत उपपत्तेरिति न्यायेन ब्रह्मणो जगन्मूलत्वमाह॥ रातेरित्यादिना॥ ब्रह्मसंस्थोऽमृतत्वमेती-
ति श्रुत्यंतरमाश्रित्य तस्यैव मुक्तोपसृप्यत्वमुपदिशति॥ किंचेति॥ अक्षरव्याख्यासमाप्ताविति शब्दः॥ २८॥ सच्चिदानंदात्मकं ब्रह्म विद्याविद्याभ्यां बंध-
मोक्षास्पदमित्युक्तं॥ इदानीं ब्रह्मानंदे विचारमवतारयन्न विगीतमर्थमाह॥ अत्रेति॥ तथापि प्रकृते वाक्ये किमायातमिति तदाह॥ अत्रेति॥ ॥

राम:
६६

नचकेवलमत्रैवानंदशब्दोब्रह्मविशेषणार्थकत्वेनश्रुतःकिंतुतैत्तिरीयकादावपीत्याह॥श्रुत्यंतरेचेति॥ब्रह्मविशेषणत्वेनानंदशब्दःश्रूयतइति
संबंधः॥अन्याःश्रुतीरेवोदाहरति॥आनंदइत्यादिना॥एवमाद्याःश्रुतयइतिशेषः॥तथापिकथंविचारसिद्धिस्तत्राह॥संवेद्येति॥लोकप्रसिद्धे
रद्वैतश्रुतेश्चब्रह्मण्यानंदःसंवेद्योऽसंवेद्योवेतिविचारःकर्तव्यइत्यर्थः॥उभयत्रफलंदर्शयति॥ब्रह्मानंदश्चेति॥अन्यथालोकवेदयोःशब्दार्थ
भेदादविशिष्टस्तुवाक्यार्थइतिन्यायविरोधःसंवेद्यत्वेपुनरद्वैतश्रुतिरविरुद्धेतिभावः॥विचारमाक्षिपति॥नन्विति॥विरुद्धश्रुत्यर्थनिर्णयार्थं

चानंदोब्रह्मेतिव्यजानादानंदंब्रह्मणोविद्वान्यदेषआकाशआनंदोयोवैभूमातत्सुखमितिचएषोस्यपरमआनंदइत्येवमाद्याः॥
संवेद्येचसुखेआनंदशब्दःप्रसिद्धो ब्रह्मानंदश्चयदिसंवेद्यःस्यात्ततोयुक्ताएतेब्रह्मण्यानंदशब्दाःनन्तुचश्रुतिप्रामाण्यात्संवेद्यानंदस्व
रूपमेवब्रह्मकिंतत्रविचार्यमितिन विरुद्धश्रुतिवाक्यदर्शनात्सत्यमानंदशब्दोब्रह्मणिश्रूयतेविज्ञानप्रतिषेधश्चैकत्वेयत्रत्वस्यसर्व
मात्मैवाभूत्तत्केनकंपश्येद्विजानीयाद्यत्रनान्यत्पश्यतिनान्यद्विजानातिप्राज्ञेनात्मनासंपरिष्वक्तोनबाह्यंकिंचनवेदेत्यादिविरुद्धश्रुति
वाक्यदर्शनात्तेनकर्तव्योविचारस्तस्माद्युक्तंवेदवाक्यार्थनिर्णयायविचारयितुं॥मोक्षवादिविप्रतिपत्तेश्चसांख्यावैशेषिकाश्चमोक्षवादि
नोनास्तिमोक्षेसुखंसंवेद्यमित्येवंप्रतिपन्नाअन्येनिरतिशयसुखंस्वसंवेद्यमितिएवंविप्रतिपत्तौकिंतावद्युक्तमानंदादिश्रवणा

विचारकर्तव्यतांदर्शयति॥नेति॥संग्रहवाक्यंविवृणोति॥सत्यमित्यादिना॥एकत्वेसतिविज्ञानप्रतिषेधश्रुतिमेवोदाहरति॥यत्रेत्यादिना॥इ
त्यादिश्रवणमितिविशेषः॥फलितमाह॥विरुद्धश्रुतीति॥श्रुतिविप्रतिपत्तेर्विचारकर्तव्यतामुपसंहरति॥तस्मादिति॥तत्रैवहेत्वंतरमाह॥मोक्षे
ति॥तामेवविप्रतिपत्तिंविवृणोति॥सांख्यादीति॥विमर्शपूर्वकंपूर्वपक्षंगृह्णाति॥किंतावदित्यादिना॥आनंदादिश्रवणाद्विज्ञानमानंदंब्रह्मेतिश्रुतेर्मोक्षेसु

८२

तन्नैव वाक्यांतराण्युदाहरति ॥ जक्षन्नित्यादिना ॥ पूर्वपक्षमाक्षिपति ॥ नन्विति ॥ मोक्षे चेदिष्यते सुखज्ञानं तर्हि तदानेककारकसाध्यं वाच्यं क्रियात्वा
त्साक्षादिवत्तस्यैकत्वे च मोक्षे कारकविभागाभावान्न सुखसंवेदनं संभवतीत्यर्थः ॥ जन्यस्य कारकापेक्षायामपि सुखज्ञानस्याजन्यत्वान्न तदपेक्षेत्या
शंक्याह ॥ क्रियायाश्चेति ॥ यान्क्रियानेककारकसाध्येतिव्याप्तेर्गमनादावुवगतत्वात् ॥ ज्ञानस्यापि धात्वर्थत्वेन क्रियात्वादनेककारकसाध्यतासि
द्धेवेत्यर्थः ॥ श्रुतिप्रामाण्यमाश्रित्य पूर्ववादी परिहरति ॥ नैष दोष इति ॥ तदेव स्फुटयति ॥ विज्ञानमिति ॥ अद्वये ब्रह्मणि श्रुतिप्रामाण्यादानंदज्ञानम्

जक्षन्क्रीडन्रममाणः स यदि पितृलोककामो भवति स सर्वज्ञः सर्वविन्सर्वान्कामान्समश्नुत इत्यादिश्रुतिभ्यो मोक्षे सुखं संवेद्यमि
ति नन्वेकत्वे कारकविभागाभावाद्धि ज्ञानानुपपत्तिः ॥ क्रियायाश्चानेककारकसाध्यत्वाद्धि ज्ञानस्य च क्रियात्वान्नैष दोषः शब्द
प्रामाण्याद्भवेद्धि ज्ञानमानंदविषये विज्ञानमानंदमित्यादीन्यानंदस्वरूपस्यासंवेद्यत्वेऽनुपपन्नानि वचनानीत्यत्रोच्यते नानु व
चनेनाप्यग्नेः शैत्यमुदकस्य चोष्ण्यं न क्रियत एव ॥ ज्ञापकत्वाद्वचनानां ॥ न च देशांतरेऽग्निः शीत इति शक्यं ते ज्ञापयितुमगम्ये वा
देशांतरे उष्णमुदकमिति न ॥ प्रत्यगात्मन्यानंदविज्ञानदर्शनात् ॥ न विज्ञानमानंदमित्येवमादीनां वचनानां शीतोऽग्निरित्यादिवाक्य
वत्प्रत्यक्षादिविरुद्धार्थप्रतिपादकत्व

क्षमाक्षिपति ॥ नन्विति ॥ अद्वैते श्रुतिविरोधाद्ब्रह्मणि विज्ञानक्रियाकारकविभागापेक्षा नोपपद्यते ॥ न
हि विज्ञानमानंदमित्यादिवचनानि मानांतरविरोधेन विज्ञानक्रियां ब्रह्मण्युत्पादयंति तेषां ज्ञापकत्वात् ज्ञापकस्य चाविरोधापेक्षत्वादन्यथातिप्रसं
गादित्यर्थः ॥ लौकिकज्ञानस्य क्रियात्वेऽपि मोक्षे सुखज्ञानं क्रियैव न भवति तन्न विज्ञानादिवाक्यस्याद्वैतश्रुतिविरोधोऽस्तीत्याशंक्याह ॥ न चेति ॥ पयःपावकयोः
सर्वत्रैकरूप्यवद्धि ज्ञानस्यापि लोकवेदयोरेकरूपत्वमेवेति भावः ॥ मानांतरविरोधादात्मन्यानंदज्ञानस्य सत्त्वमेव वा निषिध्यते तस्य क्रियात्वं वा निराक्रिय

वचनानामस्यादकत्वांगीकारे कर्तर्यतिप्रसंगात् २

आनंदज्ञानस्य गुणत्वांगीकारेण=२ २प्रकृतगुणनिषेधत्वेन=३ ३=सगुणागमस्य यःसर्वज्ञःसर्वविदित्यादेः=२ तेत्वेनकं पर्यंत १

सुखज्ञानस्य गुणत्वांगीकाराक्रियात्वनिराकरणमिष्टमेवेतिमत्वाह॥ अनुभूयते त्विति॥ अनुभवमेवाभिनयति॥ सुख्यहमिति॥ तथापि श्रुतिविरोधः स्यादित्याशंक्य प्रत्यक्षानुसारेण सापि नेतव्येत्याशयेनाह॥ तस्मादिति॥ आत्मन्यानंदज्ञानस्य क्रियात्वानंगीकारात्कारकभेदापेक्षाभावादित्यर्थः॥ गुणत्वपक्षे च प्रत्यक्षानुगुणत्वादागमविरोधिनस्तदनुसारेण नेयत्वादविरुद्धागमस्य भूयस्त्वादित्यतिशयः॥ अविरुद्धार्थता विज्ञानादिश्रुतेरितिशेषः गुणगुणिभावेपि नाद्वैतश्रुतिः शक्या नेतुमित्याशंक्य स्ववेद्यत्वपक्षमाश्रित्याह॥ तस्मादानंदमिति॥ यथाकथंचिद्ब्रह्मण्यानंदस्य वेद्यत्वेश्रुतीनामा

२कर्त्तापि प्रत्यक्षे गुणस्य कारकापेक्षा नास्ति=२ निर्गुणश्रुतेः२

मनुभूयते त्वविरुद्धार्थता सुख्यहमिति सुखात्मकमात्मानं स्वयमेव वेदयते तस्मात्सुतरां प्रत्यक्षाद्यविरुद्धार्थता तस्मादानंदं ब्रह्मविज्ञानात्मकं सत्स्वयमेव वेदयते तथानंदप्रतिपादिकाः श्रुतयः समंजसाः स्युर्जक्षन्क्रीडन्रममाण इत्येवमाद्याः पूर्वोक्ताः न कार्यकरणाभावेनुपपत्तेर्विज्ञानस्य शरीरवियोगो हि मोक्ष आत्यंतिकः शरीराभावे च करणानुपपत्तिराश्रयाभावात्ततश्च विज्ञानानुपपत्तिरकार्यकरणत्वाद्देहाद्यभावे च विज्ञानोत्पत्तौ सर्वेषां कार्यकरणोपादानानर्थक्यप्रसंगः एकत्वविरोधाच्च॥ परं चेद्ब्रह्मानंदात्मकमात्मानं नित्यविज्ञानत्वान्नित्यमेव विजानीयात्॥ तन्न॥ नुगुण्यमस्तीत्याह॥ तथेति॥ आनंदो वेद्यो ब्रह्मणीति चोदिते सिद्धांतमाह॥ नेति॥ आगंतुकमनागंतुकं वा ज्ञानं मुक्तावानंदं गोचरयतिनाद्य इत्याह॥ कार्येति॥ अनुपपत्तिमेव स्फोरयति॥ शरीरेति॥ कार्यकरणयोरभावेपि मोक्षे ब्रह्मानंदज्ञानं जनिष्यते संसारे हि हेत्वपेक्षेत्याशंक्याह॥ देहादीति॥ द्वितीयं दूषयति॥ एकत्वेति॥ न हि ब्रह्मस्वरूपज्ञानेनैव वेद्यानंदस्वरूपं भवितुमर्हति विषयविषयिणोरेकत्वविरोधात्तथाचानागंतुकमपि ज्ञानं मुक्तौ नानंदमधिकरोतीत्यर्थः॥ किंच॥ ब्रह्मवा मुक्तो वा संसारी वा ब्रह्मानंदगोचरयेत्तत्राद्यमनुवदति॥ परं चेदिति॥ तस्मिन्पक्षे न ब्रह्मस्वरूपानंदं वेत्ति तेनैक्यादेकत्र विषयविषयित्वानुपपत्तेरुक्तत्वादिति दूषयति॥ न

नापि संसारी ब्रह्मानंदं गोचरयति स खल्वनिवृत्ते संसारे संसारिणमात्मानमभिमन्यमानो न ब्रह्मानंदमाकलयितुमलं संसारे निवृत्ते तु ततो विनिर्मु क्तो ब्रह्मस्वाभाव्यं प्रतिपद्यमानस्तदानंदं तद्वदेव विषयीकर्तुं नार्हतीति तृतीयं प्रत्याह ॥ संसार्यपीति ॥ मुक्तोपि ब्रह्मणो भिन्नोऽभिन्नो वेति विक ल्प्याभेदपक्षमनुभाषते जलेति ॥ ब्रह्माभिन्नस्य मुक्तस्य तदानंदविषयीकरणमुक्तन्यायेन निरस्यति ॥ तदेति ॥ भेदपक्षमनुवदति ॥ अथेति ॥ ब्र ह्मानंदं प्रत्यगात्मानमिति संबंधः ॥ वेदनप्रकारमभिनयति ॥ अहमिति ॥ तत्त्वमस्यादिश्रुतिविरोधेन निराकरोति ॥ तदेति ॥ मुक्तो ब्रह्मणः सकाशा

संसार्यपि संसारविनिर्मुक्तः तत्स्वाभाव्यं प्रतिपद्यते जलाशय इवोदकांजलिः क्षिप्तो न पृथक्त्वेन व्यवतिष्ठते आनंदात्मकब्रह्मविज्ञाना यतदा मुक्त आनंदात्मकमात्मानं वेदयत इत्येतदनर्थकं वाक्यमथ ब्रह्मानंदमन्यः सन्मुक्तो वेदयते प्रत्यगात्मानं वाहमस्मानंदस्वरूप इ ति तदैकत्वविरोधस्तथा च सति सर्वश्रुतिविरोधस्तृतीयात्र कल्पना नोपपद्यते किंचान्यद्ब्रह्मणश्च निरंतरात्मानंदविज्ञाने विज्ञानाविज्ञा नकल्पनानर्थक्यं ॥ निरंतरं चेदात्मानंदविषयं ब्रह्मणो विज्ञानं तदेव तस्य स्वभाव इत्यात्मानंदं विजानातीति कल्पनानुपपन्ना अतद्वि ज्ञानप्रसंगे हि कल्पनाया अर्थवत्त्वं यथात्मानं परं च वेत्तीति ॥ न ह्यौपाद्यासक्तमनसो नैरंतर्येण पुज्ञानकल्पनाया अर्थवत्त्वमथ विच्छिन्न मात्मानंदं विजानातीति

=विजानातीतितिङंतप्रयोगस्य=

द्विन्नोऽभिन्नो वा मा भूद्भिन्नाभिन्नत्वमस्त्वित्यादि त्याशंक्याह ॥ तृतीयेति ॥ सर्वत्र भेदाभेदवादस्य दूषितत्वादित्यर्थः ॥ ब्रह्मणः स्वानंदस्यावेद्यत्वे हेत्वंतरमाह ॥ किंचान्यदिति ॥ तदेवोपपादयति ॥ निरंतरं चेदिति ॥ आख्यातप्रयोगस्य तर्हि कुत्रार्थवत्त्वं तत्राह ॥ अतद्विज्ञानेति ॥ दे वदत्तो हि अबुद्धिपूर्वकारित्वावस्थायां स्वात्मानमन्यं च विविच्य जानाति नान्यदेत्युभयं पश्चात्तद्दर्शनात्तत्राख्यातप्रयोगो युज्यते नैवं ब्रह्मण्यज्ञानप्रसंगो स्ति नित्यज्ञानस्वभावत्वात्तथा च तत्राख्यातप्रयोगो नार्थवानित्यर्थः ॥ ब्रह्मण्याख्यातप्रयोगानर्थक्यं दृष्टांतेन स्पष्टयति ॥ न हीति ॥ प्रत्यगात्मनि नित्यज्ञान

=२आख्यातप्रयोगस्याभावप्रयुक्तत्वानंगीकारे आख्यातप्रयोगवैयर्थ्यादभावप्रयुक्तत्वदर्शनात्=२

बृ. र. ३८ | अ. ५ | राम: ३८

विछिन्नमितिक्रियाविशेषणं॥परिहरति॥विज्ञानस्येति॥आत्मनो विज्ञानस्यछिद्रमंतरालमसत्तावस्था तदापि विज्ञानमस्ति चेत्तस्यान्यविषयत्व
प्रसंगस्तथा च यत्रान्यत्पश्यतीत्यादिश्रुतेरात्मनो मर्त्यत्वापत्तेर्न चेत्तदा विज्ञानं तदा पाषाणवदचेतनत्वं विज्ञप्तिरूपत्वानंगीकारादित्यर्थः॥आ
त्मनोः नित्यज्ञानवत्वे दोषांतरमाह॥आत्मनश्चेति॥आनंदज्ञानेब्रह्माणि विषय विषयित्वाप्रयोगश्चेत् कथं विज्ञानादिवाक्यमित्याशंक्योप
संहरति॥तस्मादिति॥ब्रह्मण्यानंदस्यावेद्यत्वेश्रुतिविरोधमुक्तं स्मारयति॥जक्षदिति॥सर्वत्रात्मनोमुक्तस्यैकत्वे सति योग्यादिषु यथा ज
क्षणादि प्राप्तं तथैव तदनुवादित्वादस्याः श्रुतेर्न विरोधोस्तीति परिहरति॥नेत्यादिना॥तदेव प्रपंचयति॥मुक्तस्येति॥किमनुवादे फलमिति

विज्ञानस्यात्मविज्ञानछिद्रेऽन्यविषयत्वप्रसंगः आत्मनश्चविक्रियावत्वं ततश्चानित्यत्वप्रसंगस्तस्माद्विज्ञानमानंदमिति स्वरूपा
न्वाख्यानपरैव श्रुतिर्नात्मानंदसंवेद्यत्वार्था॥जक्षत्क्रीडन्नित्यादिश्रुतिविरोधः संवेद्यत्वइति चेन्न सर्वात्मैकत्वे यथाप्राप्तानुवा
दित्वान्मुक्तस्य सर्वात्मभावे सति यन्न क्वचिद्योगिषु देवेषु वा जक्षणादि प्राप्तं तद्यथाप्राप्तमनूद्यते तत्तस्यैव सर्वात्मभावादिति स
र्वात्मभावमोक्षस्तुतये यथाप्राप्तानुवादित्वे दुःखित्वमपीति चेद्योग्यादिषु यथाप्राप्तजक्षणादिवत्स्थावरादिषु यथाप्राप्तदुःखि
त्वमपीति चेत्॥न॥चेत्तदाह॥तत्तस्येति॥मुक्तस्य योग्यादिषु सर्वत्रात्मभावादेव तत्र प्राप्तं जक्षणाद्यत्र मुक्तिस्तुतये नूद्यते तन्नानुवादवैय
र्थ्यमित्यर्थः॥विदुषः सार्वात्म्येन योग्यादिषु प्राप्तजक्षणाद्यनुवादेस्यादिति प्रसक्तिरिति शंकते॥यथाप्राप्तेति॥अतिप्रसंगमेव प्रकटयति॥यो
ग्यादिष्विति॥अविद्यात्मकनामरूपविरचितोपाधिद्वयसंबंधनिबंधनमिथ्याज्ञानाधीनत्वादात्मनि दुःखित्वादिप्रतीतेर्न तत्र वस्तुतो दुःखित्वं
न जक्षणाद्यपि वास्तवमाविद्यस्यैव मुक्तिस्तुतये नुवादात् दुःखित्वस्य हिनानुवादइति हीनत्वप्राप्तेरिति परिहरति॥नेत्यादिना॥ ॥ ॥ ॥

यत्तु विरुद्धश्रुतिदृष्टेर्नागमार्थो निर्णीतो भवतीति तत्राह ॥ विरुद्धेति ॥ वेद्यत्वावेद्यत्वादिश्रुतीनां सोपाधिकनिरुपाधिकविषयत्वेन मधुकांडे
व्यवस्थोक्तेरित्यर्थः ॥ ब्राह्मणार्थमुपसंहरति ॥ तस्मादिति ॥ ब्रह्मण्यानंदवेद्यताया दुर्निरूपत्वं तच्छब्दार्थः ॥ यथैषोस्येत्यत्र भेदो न विवक्षितः स
र्वात्मभावस्य प्रकृतत्वात्तथा विज्ञानादिवाक्येष्वानंदस्य वेद्यता न विवक्षितेत्यक्तरीत्या सद्वेद्यतायाः दुष्प्रतिपादकत्वात्तस्मादनतिशयानंदं चि



नामरूपकृतकार्यकरणोपाधिसंपर्कजनितभ्रांत्यध्यारोपितत्वात्तु खिलदुःखित्वादिविशेषवत्त्वेति परिहृतमेतत्स
र्वं विरुद्धश्रुतीनां च विषयमवोचाम ॥ तस्मादेषोस्य परम आनंद इति च सर्वाण्यानंदवाक्यानि द्रष्टव्यानि ॥ १२ ॥
हरिः ॐ तत्सदिति श्रीमद्गोविंदभगवत्पूज्यपादशिष्यश्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरभगवत्पूज्य
कृतौ बृहदारण्यके पंचमप्रपाठके नवमब्राह्मणभाष्यं ॥ ९ ॥ समाप्तोयं पंचमः प्रपाठकः ॥ मूल २२५ भाष्य १२००
टीका १५००

देकतानंदं वस्तु सिद्धमित्यर्थः ॥ १२ ॥ ९ ॥ हरिः ॐ तत्सदिति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानंदपूज्यपादशिष्यश्रीमद्भगवदानं
दज्ञानकृतायां श्रीमद्बृहदारण्यकभाष्यटीकायां पंचमे प्रपाठके नवमं ब्राह्मणं ॥ ९ ॥ समाप्तश्चायमध्यायः ॥ ॥ ॥ ॥ ॥

बृ.उ. श्रीगणेशायनमः॥ ॐतत्सत्॥ ॐपूर्वस्मिन्नध्यायेजल्पन्यायेनसच्चिदानंदंब्रह्मनिर्धारितंइदानींवादन्यायेनतदेवनिर्धारयितुमध्यायांतरमवता अ.
१ रयति॥ जनकइति॥ तत्रब्राह्मणद्वयस्यावांतरसंबंधंप्रतिजानीते॥ अस्येति॥ तमेववक्तुंवृत्तंकीर्त्तयति॥ शारीराद्यानिति॥ निरुह्यप्रत्युह्येतिविस्तार्यस्य ६

हरिः ॐ ३म्॥ जनकोहवैदेहआसांचक्रेऽस्यसंबंधःशारीराद्यानष्टौपुरुषान्निरुह्यप्रत्युह्यपुनर्हृदयेदिग्भेदेनचपुनःपंचधाव्यूह्यहृदयेप्रत्यु ह्यहृदयंशरीरंचपुनरन्योन्यप्रतिष्ठंप्राणादिपंचवृत्त्यात्मकेसमानाख्येजगदात्मनिसूत्रउपसंहृत्यजगदात्मानंशरीरहृदयसूत्रावस्थमतिक्रांत वान्यःऔपनिषदःपुरुषोनेतिनेतीतिव्यपदिष्टःससाक्षाच्चोपादानकारणस्वरूपेणचनिर्दिष्टोविज्ञानमानंदमितितस्यैववागादिदेवताद्वारेणपुनर धिगमःकर्तव्यइत्यधिगमनोपायांतरार्थोयमारंभोब्राह्मणद्वयस्याख्यायिकात्वाचारदर्शनार्थाजनकोहवैदेहआसांचक्रेआसनंकृतवानाख्यायिका

ॐजनकोहवैदेहआसांचक्रेऽथहयाज्ञवल्क्यआवव्राजतꣳहोवाचयाज्ञवल्क्यकिमर्थमचारीःपशूनिच्छन्नण्वंतानित्युभयमेव सम्राडितिहोवाच॥१॥ दत्तवानित्यर्थः॥ दर्शनकामेभ्योराज्ञोथहतस्मिन्नवसरेयाज्ञवल्क्यआवव्राजागतवानात्मनोयोगक्षेमार्थंराज्ञोवावि विदिषांदृष्ट्वाऽनुग्रहार्थंतमागतंयाज्ञवल्क्यंयथावत्पूजांकृत्वोवाचहउक्तवान्जनकोहेयाज्ञवल्क्यकिमर्थमचारीरागतोसिकिंपशूनिच्छन्नरण्याहो स्विदण्वंतान्सूक्ष्मांतान्सूक्ष्मवस्तुनिर्णयांतान्प्रश्नान्मत्तः वहारमापाद्येत्यर्थः॥ प्रत्युह्यहृदयेपुनरुपसंहृत्येतियावत्॥ जगदात्मनीत्यव्याकृतोक्तिः ॥ सूत्रशब्देनतत्कारणंगृह्यते॥ अतिक्रमणंतद्गुणदोषासंस्पृष्टत्वं॥ अनंतरंब्राह्मणद्वयतात्पर्यमाह॥ तस्यैवेति॥ वागाद्यधिष्ठात्रीष्वग्न्यादिदेवतासुब्रह्म राम:
दृष्टिद्वारेत्यर्थः॥ पूर्वोक्तान्वयव्यतिरेकादिसाधनापेक्षायांतरशब्दः॥ आचार्यवताश्रद्धादिसंपन्नेनविद्यालब्धव्येत्याचारः॥ अप्राप्तप्राप्तिर्योगः ॥ १

प्राप्तस्य रक्षणं क्षेम इति विभागः॥ भारतस्य वर्षस्य हिमवत्सेतुपर्यंतस्य देशस्येति यावत्॥१॥ तत्र राजानं प्रति प्रश्नमुत्थापयति॥ किंस्विति॥ कश्चिदिति वि
शेषणस्य तात्पर्यमाह॥ अनेकेति॥ प्रामाण्यप्राप्तत्वे॥ यथोक्तार्थानुमोदने युक्तिमाह॥ नहीति॥ यथोक्तब्रह्मविद्यया कृतकृत्यत्वं मन्वानं राजानं प्रत्याह॥ किं

श्रोतुमिच्छन्निति उभयमेव पशून्प्रश्नांश्च हे सम्राट् सम्राडिति वाजपेययाजिनो लिंगं यश्चाज्ञया राज्ञां प्रशास्ति स सम्राट् तस्यामंत्रणं हे सम्राडिति
समस्तस्य वा भारतस्य वर्षस्य राजा॥१॥ किं तु यत्ते तुभ्यं कश्चिदब्रवीदाचार्योऽनेकाचार्यसेवी हि भवान् तच्छृणवामेति इतर आह अब्रवीदुक्तवान्मम
माचार्यो जित्वा नामतः शिलिनस्यापत्यं शैलिनिर्वाग्वै ब्रह्मेति वाग्देवता ब्रह्मेत्याह इतरो यथा मातृमान्माता यस्य विद्यते पुत्रस्य सम्यगनुशास्त्री
यमनुशासितवती स मातृमान् तत ऊर्ध्वं पिता यस्यानुशास्ता स पितृमानुपनयनादूर्ध्वं आसमावर्तनादाचार्यो यस्यानुशास्ता स आचार्यवानेवं सु

यत्ते कश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मे जित्वा शैलिनिर्वाग्वै ब्रह्मेति यथा मातृमान्पितृमानाचार्यवान्ब्रूयात्तथा तच्छैलिनिरब्रवी
द्वाग्वै ब्रह्मेत्यवदतो हि किं स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मेऽब्रवीदित्येकपाद्वा एतत्सम्राडिति स वै नो ब्रूहि याज्ञव
ल्क्य वागेवायतनमाकाशः प्रतिष्ठा प्रज्ञेत्येनदुपासीत का प्रज्ञता याज्ञवल्क्य

ष्टित्रयहेतुसंयुक्तः स साक्षादाचार्यः स्वयं न कदाचिदपि
प्रामाण्याद्व्यभिचरतीति स यथा ब्रूयाच्छिष्याय तथासौ जित्वा शैलिनिरुक्तवान् वाग्वै ब्रह्मेति अवदतो हि किं स्यादिति॥ नहि मूकस्येहार्थममुत्रार्थं वा
किंचन स्यात्॥ किं त्वब्रवीदुक्तवांस्ते तुभ्यं तस्य ब्रह्मण आयतनं प्रतिष्ठां च आयतनं नाम शरीरं प्रतिष्ठा त्रिष्वपि कालेषु य आश्रयः आह इतरो न मेऽब्रवीदिति इ
तर आह यद्येवमेकपाद्वा एतदेकः पादो यस्य ब्रह्मणस्तदिदमेकपाद्ब्रह्म

त्विति॥ आयतनप्रतिष्ठयोरेकत्वात्पुनरुक्तिमाशंक्य विभजते॥ आयत

सकपालेपिब्रह्मणस्तदुपासनादिष्टसिद्धिरितिचेन्नेत्याह॥त्रिभिरिति॥ब्रूहिप्रतिष्ठामायतनंचेतिशेषः॥प्रश्नमेवविवृणोति॥किंस्वयमेवेति॥प्रज्ञानिमि

त्रिभिःपादैःशून्यमुपास्यमानमपिनफलायभवतीत्यर्थः॥यद्येवंसत्वंविद्वानस्मानोऽस्मभ्यंब्रूहिहेयाज्ञवल्क्येतिसचाहवागेवायतनंवाग्देवस्यब्रह्मणो
वागेवकरणमायतनंशरीरमाकाशोऽव्याकृताख्यःप्रतिष्ठाउत्पत्तिस्थितिलयकालेषुप्रज्ञेत्येनदुपासीतप्रज्ञेतीयमुपनिषत्ब्रह्मणश्चतुर्थःपादः
प्रज्ञेतिकृत्वाएतद्ब्रह्मोपासीतकाप्रज्ञतायाज्ञवल्क्यकिंस्वयमेवप्रज्ञोतप्रज्ञानिमित्तायथायतनप्रतिष्ठेब्रह्मणोव्यतिरिक्तेतद्वल्किं॥न॥कथंतत्
र्हिवागेवसम्राडितिहोवाचवागेवप्रज्ञेतिहोवाचोक्तवान्नव्यतिरिक्ताप्रज्ञेतिकथंपुनर्वागेवप्रज्ञेत्युच्यतेवाचावैसम्राड्बंधुःप्रज्ञायतेअस्माकं

वागेवसम्राडितिहोवाचवाचावैसम्राड्बंधुःप्रज्ञायतऋग्वेदोयजुर्वेदःसामवेदोथर्वांगिरसइतिहासःपुराणंविद्याउपनिष
दःश्लोकाःसूत्राण्यनुव्याख्यानानिव्याख्यानानीष्टꣳहुतमाशितंपायितमयंचलोकःपरश्चलोकःसर्वाणिचभूतानिवाचैव
सम्राट्प्रज्ञायंतेवाग्वैसम्राट्परमंब्रह्मनैनंवाग्जहातिसर्वाण्येनंभूतान्यभिक्षरंतिदेवोभूत्वादेवानप्येतियएवंविद्वानेतदुपा
स्तेहस्त्यृषभꣳसहस्रंददामीतिहोवाचजनकोवैदेहःसहोवाचयाज्ञवल्क्यःपितामेमन्यतनाननुशिष्यहरेतेति॥२॥

बंधुरित्यु
क्तेप्रज्ञायतेबंधुस्तथर्ग्वेदादीष्टंयागनिमित्तंधर्मजातंहुतंहोमनिमित्तंचाशितमन्नदाननिमित्तंपायितंपानदाननिमित्तमयंचलोकःइदंचज
न्मपरश्चलोकःप्रतिपत्तव्यंचजन्मसर्वाणिचभूतानिवाचावैसम्राट्प्रज्ञायंतेअतोवाग्वैसम्राड्परमंब्रह्मनैनंयथोक्तब्रह्मविदंवाग्जहातिसर्वा
ण्येनंभूतान्यभिक्षरंति तंयस्यावाचःसातथा॥द्वितीयंपक्षंविशदयति॥यथेति॥व्यतिरेकपक्षंनिषेधति॥नेति॥आकांक्षापूर्वकंपक्षांतरंगृह्णाति॥

बलिदानमुपहारसमर्पणं॥ आदिशब्देनस्रक्चंदनवस्त्रालंकारादिग्रहः॥ विद्यानिष्क्रियार्थमुवाचेतिसंबंधः॥ पितुरेतन्मतमस्तुतवकिमायातंतदाह॥

बलिदानादिभिरिहदेवोभूत्वापुनःशरीरपातोत्तरकालंदेवानप्येतिअपिगच्छतियएवंविद्वानेतदुपास्तेविद्यानिष्क्रयार्थंहस्तितुल्यऋषभो हस्त्यृषभोयस्मिन्तोसहस्रेतत्सहस्रंहस्त्यृषभंसहस्रंददामीतिहोवाचजनकोहवैदेहःसहोवाचयाज्ञवल्क्यःअननुशिष्यशिष्यंकृतार्थमकृ त्वाशिष्याद्धनंनहरेतेतिममपितामन्यतममाप्ययमेवाभिप्रायः॥२॥ यदेवतेकश्चिदब्रवीदुदंकोनामतःशुल्वस्यापत्यंशौल्वायनोब्रवीत्प्राणोवै

यदेवतेकश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मउदंकःशौल्वायनःप्राणोवैब्रह्मेतियथामातृमान्पितृमानाचार्यवान्ब्रूयात्तथातच्छौल्वा यनोब्रवीत्प्राणोवैब्रह्मेत्यप्राणतोहिकिंस्यादित्यब्रवीत्तुतेतस्यायतनंप्रतिष्ठांनमेब्रवीदित्येकपाद्वाएतत्सम्राडितिसवैनोब्रूहिया ज्ञवल्क्यप्राणएवायतनमाकाशःप्रतिष्ठाप्रियमित्येनदुपासीतकाप्रियतायाज्ञवल्क्यप्राणएवसम्राडितिहोवाचप्राणस्यवैस म्राट्कामायायाज्यंयाजयत्यप्रतिगृह्यस्यप्रतिगृह्णात्यपितत्रवधाशंकंभवतियांदिशमेतिप्राणस्यैवसम्राट्कामायप्राणोवैसम्रा ट्परमंब्रह्मनैनंप्राणोजहातिसर्वाण्येनंभूतान्यभिक्षरंतिदेवोभूत्वादेवानप्येतियएवंविद्वानेतदुपास्तेहस्त्यृषभंसहस्रंददामीति होवाचजनकोवैदेहःसहोवाचयाज्ञवल्क्यःपितामेमन्यतनाननुशिष्यहरेतेति॥३॥ ब्रह्मेतिप्राणोवायुर्देवतापूर्ववत्प्राणएवायतनमा काशःप्रतिष्ठाउपनिषत्प्रियमित्येनदुपासीतकथंपुनःप्रियत्वंप्राणस्यवैहेसम्राट्कामायप्राणस्यार्थायायाज्यंयाजयतिपतितादिकमप्यप्रति गृह्यस्याप्युग्रादेः ममापीति॥२॥ यथावागग्निर्देवतातद्वदित्याह॥ पूर्ववदिति॥ प्राणएवा[illegible]तनमित्यत्रप्राणशब्दःकरणविषयः॥ पतितादिकमित्या

बृ·र· ३ आदिशब्देनस्येकृगणोयगृह्यते॥३॥चक्षुर्ब्रह्मणःसत्यत्वंसाधयति॥यस्मादिति॥उक्तमेवोपपादयति॥यत्विति॥४॥ अ· ६

प्रतिगृह्णात्यपितन्नतस्यांदिशिवधनिमित्तमाशंकंवधाशंकेत्यर्थोयांदिशमेतितस्करादयाकीर्णांचतस्यांदिशिवधाशंकातच्चैतत्सर्वंप्राण
स्यप्रियत्वेभवतिप्राणस्यैवसम्राट्कामायतस्मात्प्राणोवैसम्राट्परमंब्रह्मनैनंप्राणोजहातिसमानमन्यत्॥३॥यदेवतेकश्चिदब्रवीदिति
नामतः वृष्णस्यापत्यंवार्ष्णश्चक्षुर्वैब्रह्मेत्यादिसोदेवताचक्षुरुपनिषत्सत्यं यस्माच्छ्रोत्रेणश्रुतमनृतमपिस्यान्नतुचक्षुषादृष्टंतस्माद्वैसम्राट्

यदेवतेकश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मेवर्कुर्वार्ष्णश्चक्षुर्वैब्रह्मेतियथामातृमान्पितृमानाचार्यवान्ब्रूयात्तथातद्वार्ष्णोब्र
वीच्चक्षुर्वैब्रह्मेत्यपश्यतोहि किꣳस्यादित्यब्रवीत्तुतेतस्यायतनंप्रतिष्ठांनमेब्रवीदित्येकपाद्वाएतत्सम्राडिति सवैनोब्रूहियाज्ञ
वल्क्यचक्षुरेवायतनमाकाशःप्रतिष्ठासत्यमित्येनदुपासीतकासत्यतायाज्ञवल्क्यचक्षुरेवसम्राडितिहोवाचचक्षुषावैस
म्राट्पश्यंतमाहुरद्राक्षीरितिसआहाद्राक्षमितितत्सत्यंभवतिचक्षुर्वैसम्राट्परमंब्रह्मनैनंचक्षुर्जहातिसर्वाण्येनंभूता
न्यभिक्षरंतिदेवोभूत्वादेवानप्येतियएवंविद्वानेतदुपास्तेहस्त्यृषभꣳसहस्रंददामीतिहोवाचजनकोवैदेहः सहोवाचयाज्ञव
ल्क्यःपितामेमन्यतनाननुशिष्यहरेतेति॥४॥यदेवतेकश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मेगर्दभीविपीतोभारद्वाजःश्रोत्रंवैब्रह्मेति
यथामातृमान्पितृमानाचार्यवान्ब्रूयात्तथातद्भारद्वाजोब्रवीच्छ्रोत्रंवैब्रह्मेत्यशृण्वतोहिकिꣳ

पश्यंतमाहुरद्राक्षीस्त्वंहस्तिनमितिस
चेदद्राक्षमित्याहतत्सत्यमेवभवतियस्त्वन्योब्रूयादहमश्रौषमितितद्व्यभिचरतियत्तुचक्षुषादृष्टंतदव्यभिचारित्वात्सत्यमेवभवति॥ ४ ॥

दिशामानंत्येपिश्रोत्रस्यकिमायातंतदाह॥दिशोवाइति॥५॥ ६ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥

यदेवतेगर्दभीविपीतइतिनामतोभारद्वाजोगोत्रतःश्रोत्रंवैब्रह्मेतिश्रोत्रेदिग्देवतानंतइत्येनदुपासीतकानंतताश्रोत्रस्यदिशएवश्रोत्र
स्यानंत्यंयस्मात्तस्माद्वैसम्राट्प्राचीमुदीचींवायांकांचिदपिदिशंगच्छतिनैवास्याअंतंगच्छतिकश्चिदप्यतोनंताहिदिशोदिशोवैसम्राट्

स्यादित्यब्रवीत्तुतेतस्यायतनंप्रतिष्ठांनमेब्रवीदित्येकपाद्वाएतत्सम्राळितिसवैनोब्रूहियाज्ञवल्क्यश्रोत्रमेवायतनमाकाशः
प्रतिष्ठानंतइत्येनदुपासीतकानंतताथाज्ञवल्क्यदिशएवसम्राळितिहोवाचतस्माद्वैसम्राळपियांकांचदिशंगच्छतिनैवास्या
अंतंगच्छत्यनंताहिदिशोदिशोवैसम्राट्श्रोत्रंश्रोत्रंवैसम्राट्परमंब्रह्मनैनंश्रोत्रंजहातिसर्वाण्येनंभूतान्यभिक्षरंतिदेवोभू
त्वादेवानप्येतियएवंविद्वानेतदुपास्तेहस्त्यृषभंसहस्रंददामीतिहोवाचजनकोवैदेहःसहोवाचयाज्ञवल्क्यःपितामेमन्यतना
ननुशिष्यहरेतेति॥५॥यदेवतेकश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मेसत्यकामोजाबालोमनोवैब्रह्मेतियथामातृमान्पितृमानाचा
र्यवान्ब्रूयात्तथातज्जाबालोब्रवीन्मनोवैब्रह्मात्यमनसोहिकिंस्यादित्यब्रवीत्तुतेतस्यायतनंप्रतिष्ठांनमेब्रवीदित्येकपाद्वाएतत्सम्राळि
तिसवैनोब्रूहियाज्ञवल्क्यमनएवायतनमाकाशःप्रतिष्ठानंदइत्येनदुपासीतकानंदतायाज्ञवल्क्यमनएवसम्राळितिहोवाचमनसा
वैसम्राट्स्त्रियमभिहार्यतेतस्यांप्रतिरूपःपुत्रोजायतेसआनंदोमनोवैसम्राट् श्रोत्रंतस्माद्दिगानंत्यमेवश्रोत्रस्यानंत्यं॥५॥सत्यका
मइतिनामतोजबालायाअपत्यंजाबालश्चंद्रमामनसिदेवतानंदइत्युपनिषद्यस्मान्मनएवानंदस्तस्मान्मनसावैसम्राट्

बृ॰ र॰ ४

तथापिकथमानंदत्वंमनसःसंभवतितत्राह॥सयेनेति॥६॥कथंहृदयस्यसर्वभूतायतनत्वंतत्प्रतिष्ठात्वंचतदाह॥नामरूपेति॥ ॥८॥

स्त्रियमभिकामयमानोभिहार्यतेप्रार्थयतइत्यर्थस्तस्माद्यांस्त्रियमभिकामयमानोभिहार्यतेतस्यांप्रतिरूपोनुरूपःपुत्रोजायतेसआनंदहेतुःपु
त्रःसयेनमनसानिर्वर्त्यतेतन्मनःआनंदः॥६॥विदग्धःशाकल्योहृदयंवैब्रह्मेतिहृदयंवैसम्राट्सर्वेषांभूतानामायतनंनामरूपकर्मात्मका

परमंब्रह्मनैनंमनोजहातिसर्वाण्येनंभूतान्यभिक्षरंतिदेवोभूत्वादेवानप्येतियएवंविद्वानेतदुपास्तेहस्त्यृषभꣳसहस्रंददा
मीतिहोवाचजनकोवैदेहःसहोवाचयाज्ञवल्क्यःपितामेमन्यतनाननुशिष्यहरेतेति॥६॥यदेवतेकश्चिदब्रवीत्तच्छृणवामे
त्यब्रवीन्मेविदग्धःशाकल्योहृदयंवैब्रह्मेतियथामातृमान्पितृमानाचार्यवान्ब्रूयात्तथातच्छाकल्योब्रवीद्धृदयंवैब्रह्मेत्य
हृदयस्यहिकिꣳस्यादित्यब्रवीत्तुतेतस्यायतनंप्रतिष्ठांनमेब्रवीदित्येकपाद्वाएतत्सम्राडितिसवैनोब्रूहियाज्ञवल्क्यहृदय
मेवायतनमाकाशःप्रतिष्ठास्थितिरित्येनदुपासीतकास्थिततायाज्ञवल्क्यहृदयमेवसम्राडितिहोवाचहृदयंवैसम्राट्सर्वे
षांभूतानामायतनꣳहृदयंवैसम्राट्सर्वेषांभूतानांप्रतिष्ठाहृदयेह्येवसम्राट्सर्वाणिभूतानिप्रतिष्ठितानिभवंतिहृदयंवैसम्राट्
परंब्रह्मनैनꣳहृदयंजहातिसर्वाण्येनंभूतान्यभिक्षरंतिदेवोभूत्वादेवानप्येतियएवंविद्वानेतदुपास्तेहस्त्यृषभꣳसहस्रंददामी
तिहोवाचजनकोवैदेहःसहोवाचयाज्ञवल्क्यःपितामेमन्यतनाननुशिष्यहरेतेति॥७॥प्रथमंब्राह्मणं॥१॥ निहिभूतानिहृदयाश्रयाणीत्य

वोचामशाकल्यब्राह्मणेहृदयप्रतिष्ठानिचेतितस्माद्धृदयेह्येवसम्राट्सर्वाणिभूतानिप्रतिष्ठितानिभवंतितस्माद्धृदयंस्थितिरित्युपासीतहृदयेचप्र

राम॰ ४

तस्मादितिशाकल्यन्यायपरामर्शः॥भूतानांहृदयप्रतिष्ठितत्वेफलितमाह॥तस्माद्धृदयमिति॥७॥इतिबृहदारण्यकेषष्टेप्रपाठकेप्रथमंब्राह्मणं॥१॥पूर्वस्मिन्ब्राह्मणेकानिचिदुपासनानिज्ञानसाधनानीत्युक्तानि॥इदानींब्रह्मणस्तैर्ज्ञेयस्यजागरादिद्वाराज्ञानार्थंब्राह्मणांतरमवतारयति॥जनकोहेति॥राज्ञो

जनकोहवैदेहोयस्मात्सविशेषणानिसर्वाणिब्रह्मणिजानातियाज्ञवल्क्यःतस्मादाचार्यत्वंहित्वाजनकःकूर्चादासनविशेषादुत्थायोपसमीपमवसर्पन्यादयोरिपतन्नित्यर्थः॥उवाचोक्तवान्नमस्तेतुभ्यमस्तुहेयाज्ञवल्क्यअनुमाशाधिअनुशाधिमामित्यर्थः इतिशब्दोवाक्यपरिसमाप्त्यर्थः॥सहोवाचयाज्ञवल्क्योयथावैलोकेदेशेहेसम्राट्महांतंदीर्घमध्वानमेष्यन्गमिष्यन्रथंवास्थलेनगमिष्यन्नावंवाजलेनसमाददीत

जनकोहवैदेहःकूर्चादुपावसर्पन्नुवाचनमस्तेस्तुयाज्ञवल्क्यानुमाशाधीतिसहोवाचयथावैसम्राण्महांतमध्वानमेष्यन्रथंवानावंवासमाददीतै

॥एवमेवैतानिब्रह्माणिएताभिरुपनिषद्भिर्युक्तान्युपासीनःसमाहितात्मासिअत्यंतमेताभिरुपनिषद्भिःसंयुक्तात्मासिनकेवलमुपनिषत्समाहितएववृंदारकःपूज्यश्चाढ्यश्चेश्वरोनदरिद्रइत्यर्थोधीतवेदोअधीतोवेदोयस्यसोयमधीतवेदःउक्ताश्चोपनिषदआचार्यैस्तुभ्यंसत्वमुक्तोपनिषत्कःएवंसर्वविभूतिसंपन्नोपिसन्भयमध्यस्थएवपरमात्मज्ञानेनविनाऽकृतार्थएवतावदित्यर्थः॥यावत्परंब्रह्मनवेत्सिइतोस्मा

ज्ञानिलाभिमानेशिष्यत्वविरोधिन्यपनीतेमुनिंप्रतितस्यशिष्यत्वेनोपसंपत्तिंदर्शयति॥यस्मादिति॥नमस्कारोक्तेरुद्देश्यमुपन्यस्यति॥अनुमेति॥अभीष्टमनुशासनंकर्तुंप्राचीनज्ञानस्यफलाभासहेतुत्वोक्तिद्वारापरमफलहेतुरात्मज्ञानमेवेतिविवक्षितात्तत्रराज्ञोजिज्ञासामापादयति॥सहेत्यादिना॥यथोक्तगुणसंपन्नश्चेदहंतर्हिकृतार्थत्वान्नमेकर्त्तव्यमस्तीत्याशंक्याह॥एवमिति॥याज्ञवल्क्योराज्ञोजिज्ञासामापाद्यपृच्छति॥इतइ

४३०

परवस्तुविषयेगतेरयोगात्स्वप्नविषयंविवक्षितंसंक्षिपति॥किंवस्त्विति॥राज्ञास्वकीयमज्ञत्वमुपेत्यशिष्यत्वेस्वीकृतेप्रश्नमुक्तिमवतारयति॥अथेति॥तन्नापे
क्षितमथशब्दसूचितंपूरयति॥यद्येवमिति॥आज्ञापनमनुचितमितिशंकांवारयति॥यदीति॥प्रसादाभिमुख्यमात्मनःसूचयति॥शृण्विति॥१॥विश्वतैजस

देहाद्विमुच्यमानएताभिर्नौरथस्थानीयाभिःसमाहितःकृकस्मिन्नामिष्यसिकिंवस्तुप्राप्स्यसीतिनाहंतद्भगवन्स्नूजावन्वेदजानेयत्रगमिष्या
मीत्यथयद्येवंनजानीषेयत्रगतःकृतार्थःस्याःअहंवैतत्तुभ्यंतद्वक्ष्यामियत्रगमिष्यसीतिब्रवीतुमेभगवानितियदिप्रसन्नोमांप्रतिशृणु॥१॥इंधोहवै

वमेवैताभिरुपनिषद्भिःसमाहितात्मास्येवंरंदारकआढ्यःसन्नधीतवेदउक्तोपनिषत्कइतोविमुच्यमानःक्वगमिष्यसीतिना
हंतद्भगवन्वेदयत्रगमिष्यामीत्यथवैतेहंतद्वक्ष्यामियत्रगमिष्यसीतिब्रवीतुमेभगवानिति॥८॥१॥इंधोहवैनामैषयोयंदक्षिणेक्षन्पु
रुषस्तंवाएतमिंधंसंतमिंद्रइत्याचक्षतेपरोक्षेणैवपरोक्षप्रियाइवहिदेवाःप्रत्यक्षद्विषः॥२॥ नामइंधइत्येवंनामायश्चक्षुर्ब्रह्मेतिपुरोक्त
आदित्यांतर्गतःपुरुषःएषयोयंदक्षिणेक्षन्नक्षिणिविशेषेणव्यवस्थितःसचसत्यनामातंवाएतंपुरुषंदीप्तिगुणत्वात्प्रत्यक्षंनामास्येंधइतितमिंधं
संतमिंद्रइत्याचक्षतेपरोक्षेणयस्मात्परोक्षप्रियाइवहिदेवाःप्रत्यक्षद्विषःप्रत्यक्षनामग्रहणंद्विषंतिएषत्वंवैश्वानरमात्मानंसंपन्नोसि॥२॥अथैतद्वा
मेक्षिणिपुरुषरूपमेषास्यपत्नीयंत्वंवैश्वानरमात्मानंसंपन्नोसितस्यास्येंद्रस्यभोक्तुर्भोग्यैषापत्नीविराडन्नंभोग्यत्वा प्राज्ञानुवादेनतुरीयंब्रह्मदर्शयितुमादौ
विश्वमनुवदति॥इंधइति॥कोसाविंधनामेतिचेत्तमाह॥यश्चक्षुरिति॥अधिदैवतंपुरुषमुक्त्वाध्यात्मंतंदर्शयति॥योयमिति॥तस्यपूर्वस्मिन्नपिब्राह्मणेप्रस्तुतत्वमा
ह॥सचेति॥प्रकृतेपुरुषेविदुषांसंमतिमाह॥तंवाएतमिति॥इंधत्वंसाधयति॥दीप्तीति॥प्रत्यक्षस्यपरोक्षेणाख्यानेहेतुमाह॥यस्मादिति॥२॥एकस्यैववैश्वानरस्योप

प्रासंगिकध्यानाधिकारार्थोथशब्दः॥यदेतन्मिथुनंजागरितेविश्वशब्दितंतदेवैकंस्वप्नेतैजसशब्दवाच्यमित्याह॥तदेतदिति॥तच्छब्दितंतैज
समधिकृत्यपृच्छति॥कथमिति॥किंतस्यस्थानंपृच्छ्यतेत्वंवाप्रावरणंवामार्गोवेतिविकल्प्याद्यंप्रत्याह॥तयोरिति॥संस्तवंसंगतिमितियावत्॥

तदेतदन्नंचात्ताचैकंमिथुनंस्वप्नेकथंतयोरेषइंद्राण्याइंद्रस्यचैषसंस्तावः संभूययत्रसंस्तवंकुर्वातेअन्योन्यंसएषसंस्तावःकोसौयएष
षोंतर्हृदयेआकाशोंतर्हृदयेहृदयस्यमांसपिंडस्यमध्येअथैनयोरेतदन्नस्यमाणमन्नंभोज्यंस्थितिहेतुःकिंतद्यएषोंतर्हृदयेलोहितपिंडो
लोहितएवपिंडाकारापन्नोलोहितपिंडो ऽन्नंजग्धंद्वेधापरिणमतेयत्स्थूलंतदधोगच्छतियदन्यत्तत्पुनरग्निनापच्यमानंद्वेधापरिणम

अथैतद्वामेक्षिणिपुरुषरूपमेषास्यपत्नीविराट्तयोरेषसंस्तावोयएषोंतर्हृदयआकाशोथैनयोरेत दन्नंयएषोंतर्हृ
दयेलोहितपिंडोथैनयोरेतत्प्रावरणंयदेतदंतर्हृदयेजालकमिवाथैनयोरेषासृतिःसंचरणीयैषाहृदयादूर्ध्वानाड्युच्चर
ति॥ तेयोयंमध्यमोरसःसलोहितादिक्रमेणपांचभौतिकंपिंडंशरीरमुपचिनोतियोणिष्ठोरसःसएषलोहितपिंडःइंद्रस्यलिंगात्मनोहृदये
मिथुनीभूतस्ययंतैजसमाचक्षते॥सतयोरिंद्रेंद्राण्योर्हृदयेमिथुनीभूतयोःसूक्ष्मासुनाडीष्वनुप्रविष्टःस्थितिहेतुर्भवति॥तदेतदुच्यतेथैनयो
रेतदन्नमित्यादि॥किंच॥अन्यदथैनयोरेतत्प्रावरणं द्वितीयंप्रत्याह॥अथेति॥अन्नातिरेकेणास्थितेरसंभवात्तस्यवक्तव्यत्वादित्यथशब्दार्थः॥लोहि
तपिंडंसूक्ष्मान्नरसंव्याख्यातुंभक्षितस्यान्नस्यतावद्विभागमाह॥अन्नमिति॥यदन्यत्पुनरितियोजनीयं॥तत्रेत्यध्याहृत्ययोयंमध्यमइत्यादिग्रंथोयोज्यः॥उपा
ध्युपहितयोरेकत्वमाश्रित्याह॥यंतैजसमिति॥तस्यान्नत्वमुपपादयति॥सतयोरिति॥व्याख्यातेर्थेवाक्यस्यान्वितावयवत्वमाह॥तदेतदिति॥यदिप्रावरणंपृ

प्रावरणप्रदर्शनस्यप्रयोजनमाह॥भुक्तवतोरिति॥इहेतिभोक्तृभोग्ययोरिंद्रेंद्राण्योरुक्तिः॥हृदयजालकयोराधाराधेयत्वमविवक्षितंतस्यैवतद्वाग्वान्मा
र्गश्चेत्यपेक्ष्यतेतत्राह॥अथेति॥नाडीभिःशरीरंव्याप्तस्यान्नस्यप्रयोजनमाह॥तदेतदिति॥तस्मादित्यादिवाक्यमादायव्याचष्टे॥यस्मादिति॥तथापिप्रवि

भुक्तवतोःस्वपतोश्चप्रावरणंभवतिलोकेतत्सामान्यमिहकल्पयतिश्रुतिःकिंतदिहप्रावरणंयदेतदंतर्हृदयेजालकमिवानेकनाडीछिद्र
बहुलत्वात्जालकमिवाथैनयोरेषास्रुतिर्मार्गःसंचरतोर्नयतिसंचरणीस्वप्नाज्जागरितदेशागमनमार्गःकासास्रुतिर्याएषाहृदयाद्धृदय
देशादूर्ध्वाभिमुखीसत्युच्चरतिनाडीतस्याःपरिमाणमिदमुच्यते॥यथालोकेकेशःसहस्रधाभिन्नोत्यंतसूक्ष्मोभवत्येवंसूक्ष्माअस्यदेहस्यसंबं
धिन्योहितानामहिताइत्येवंख्याताःनाड्यस्ताश्चांतर्हृदयेमांसपिंडेप्रतिष्ठिताभवंतिहृदयाद्धिप्ररूढास्ताःसर्वत्रकदंबकेसरवदेताभिर्नाडीभि

यथाकेशःसहस्रधाभिन्नएवमस्यैताहितानामनाड्योंतर्हृदयेप्रतिष्ठिताभवंत्येताभिर्वाएतदास्रवदास्रवतितस्मादेषप्रवि
विक्ताहारतरइवैवभवत्यस्माच्छरीरादात्मनः॥१०॥

रत्यंतसूक्ष्माभिरेतदन्नमास्रवद्गच्छदास्रवतिगच्छतितदेतद्देवताशरीरमनेनान्ने
नदामभूतेनोपचीयमानंतिष्ठतितस्माद्यस्मात्स्थूलेनान्नेनोपचितःपिंडःइदंतुदेवताशरीरंलिंगंसूक्ष्मेणान्नेनोपचितंपिंडोपचयकरमप्यन्नंप्रविवि
क्तमेवमूत्रपुरीषादिस्थूलमपेक्ष्यलिंगस्थितिकरंत्वन्नंततोपिसूक्ष्मतरंअतःप्रविविक्ताहारःपिंडस्तस्मात्प्रविविक्ताहारादपिप्रविविक्ताहारतरएषलिं
गात्माइवएवभवत्यस्माच्छरीराच्छरीरमेवशारीरंतस्माच्छरीरादात्मनोवैश्वानरात्तैजसःसूक्ष्मान्नोपचितोभवति॥१०॥

विक्ताहारइत्येववक्तव्येप्रविविक्ताहा
रतरइतिकस्मादुच्यतेतत्राह॥पिंडेति॥यस्मादित्यस्यापेक्षितंकथयति॥अतइति॥शारीरादितिश्रूयतेकथंशरीरादित्युच्यतेतत्राह॥शरीरमेवेति॥उक्तमर्थंसं

तस्य प्राचीदिगित्याद्यवतारयितुं भूमिकां करोति॥ स एष इति॥ प्राणशब्देनाज्ञातः प्रत्यगात्मा प्राज्ञो गृह्यते॥ एवं भूमिकां कृत्वा वाक्यमादाय व्याकरोति॥ तस्येत्यादिना॥ तैजसं प्राप्तस्येत्यस्य व्याख्यानं॥ हृदयात्मानमापन्नस्येति॥ उक्तमर्थं संक्षिप्याह॥ एवं विद्वानिति॥ विश्वस्य जागरिताभिमानिनस्तैजसे तस्य च स्व

स एष हृदयभूतस्तैजसः सूक्ष्मभूतेन प्राणेन विध्रियमाणः प्राण एव भवति॥ तस्यास्य विदुषः क्रमेण वैश्वानरात्तैजसं प्राप्तस्य हृदयात्मानमापन्नस्य हृदयात्मनश्च प्राणात्मानमापन्नस्य प्राचीदिक्प्राञ्चः प्राग्गताः प्राणास्तथा दक्षिणा दिक् दक्षिणे प्राणास्तथा प्रतीची दिक्प्रत्यञ्चः प्राणा उदीची दिगुदञ्चः प्राणा ऊर्ध्वा दिगूर्ध्वाः प्राणा अवाची दिगवाञ्चः प्राणाः सर्वा दिशः सर्वे प्राणा एवं विद्वान्क्रमेण सर्वात्मकं प्राणमात्मत्वेनोपगतो

तस्य प्राची दिक्प्राञ्चः प्राणा दक्षिणा दिग्दक्षिणे प्राणाः प्रतीची दिक्प्रत्यञ्चः प्राणा उदीची दिगुदञ्चः प्राणा ऊर्ध्वा दिगूर्ध्वाः प्राणा अवाची दिगवाञ्चः प्राणाः सर्वा दिशः सर्वे प्राणाः॥ भवति तं सर्वात्मानं प्रत्यगात्मन्युपसंहृत्य द्रष्टुर्हि द्रष्टृभावं नेति नेत्यात्मानं तुरीयं प्रतिपद्यते यमेष विद्वाननेन क्रमेण प्रतिपद्यते स एष नेति नेत्यात्मेत्यादि निर्दिष्टो व्याख्यातमेतदभयं वै जन्ममरणादिनिमित्तभयशून्यं हे जनक प्राप्तोऽसीति ह एवं किलोवाचोक्तवान्याज्ञवल्क्यस्तदेतदुक्तमथ वै तेऽहं तद्वक्ष्यामि यत्र गमिष्यसीति स होवाच जनको वैदेहोऽभयं त्वा गच्छतादित्यादि सत्त्वात्। स एषेत्यादि सत्त्वात्। ... 

तामपि गच्छतादागच्छतु यस्त्वं नोऽस्मान्हे भगवन्नभयं ब्रह्म वेदयसे ज्ञापयसि प्रापयसि तवा प्राभिमानिनः सुषुप्त्यभिमानिनि प्राज्ञे क्रमेणा तर्भावं जानन्निसर्थः स एष नेति॥ नेत्यादेर्भूमिकां करोति॥ तं सर्वात्मानमिति॥ तत्र वाक्यमवतार्य पूर्वोक्तं व्याख्यानं स्मारयति॥ यमेष इति॥ तुरीयादपि प्राप्तव्यमन्यदभयमस्तीत्याशंक्याह॥ अभयमिति॥ गंतव्यं वक्ष्यामीत्युपक्रम्यावस्थात्रयातीतं तुरीयमुपदिशन्नाऽस्मान्प्रष्टः कोविदारानाचष्ट इति न्यायविषयतां न

बृ. र.
७

कथंपुनरन्यस्यस्थितस्यनष्टस्यवान्यस्याप्रापणमित्याशंक्याह॥उपाधीति॥पश्चादिकंदक्षिणांतरंसंभवतीत्याशंक्यतस्योक्तविद्यानुरूपत्वंनास्तीत्याह॥किमन्य
दिति॥वस्तुतोदक्षिणांतराभावमुक्त्वाप्रतीतिमाश्रित्याह॥अतइति॥अक्षरार्थमुक्त्वावाक्यार्थमाह॥यथेष्टमिति॥ इतिबृहदारण्यकेषष्ठप्रपाठकेद्वितीयंब्राह्म
णं॥२॥पूर्वस्मिन्ब्राह्मणेजागरादिद्वारातत्वंनिर्धारितंसंप्रतिब्राह्मणांतरमवतार्यतस्यपूर्वेणसंबंधंप्रतिजानीते॥जनकमिति॥तमेववक्तुंतनीयेरत्नंकीर्ते

भू.

नुपाधिकृताज्ञानव्यवधानापनयनेनेत्यर्थः॥किमन्यदहंविद्यानिष्क्रयार्थंप्रयच्छामिसाक्षादात्मानमेवदत्तवतेःतोनमस्तेस्त्वियेविदेहास्त
वयथेष्टंभुज्यंतांअयंचाहमस्मिदासभावेनस्थितोयथेष्टंमाराज्यंचप्रतिपद्यस्वेत्यर्थः॥इतिबृहदारण्यकेषष्ठस्यद्वितीयंब्राह्मणं॥२॥जनकंह

सएषनेतिनेत्यात्मागृह्योनहिगृह्यतेशीर्योनहिशीर्यतेसंगोनहिसज्जतेसितोनव्यथतेनरिष्यत्यभयंवैजनकप्राप्तोसीतिहोवा
चयाज्ञवल्क्यःसहोवाचजनकोवैदेहोभयंत्वागच्छतायाज्ञवल्क्ययोनोभगवन्नभयंवेदयसेनमस्तेस्त्विमेविदेहाअयमहम
स्मि॥११॥द्वितीयंब्राह्मणं॥२॥ वैदेहंयाज्ञवल्क्योजगामेत्यस्याभिसंबंधोविज्ञानमयआत्मासाक्षादपरोक्षाद्ब्रह्मसर्वांतरःपरएव
नान्योतोस्तिद्रष्टानान्यदतोस्तिद्रष्टृइत्यादिश्रुतिभ्यःसएषइहप्रविष्टोवदनादिलिंगोस्तिव्यतिरिक्तइतिमधुकांडेजातशत्रुसंवादेप्राणा
दिकर्तृत्वभोक्तृत्वप्रत्याख्यानेनाधिगतोपिसन्पुनः यति॥विज्ञानमयइति॥यद्ब्रह्मसाक्षादपरोक्षात्सर्वांतरआत्मासपरएवविज्ञानमयआत्मेत्यत्र
हेतुमाह॥नान्यइति॥विज्ञानमयःपरएवेत्यत्रवाक्यांतरंपठति॥सएषइति॥वदन्वागित्यादावुक्तमनुवदति॥वदनादीति॥तार्तीयमर्थमनूद्यचातुर्थिकम
र्थमनुवदति॥अस्तीति॥यदिमधुकांडेगार्ग्यकाश्यसंवादेप्राणादीनांकर्तृत्वादिनिराकरणेनतेभ्योव्यतिरिक्तोस्तिविज्ञानात्मेतिसोधिगतस्तर्हिकिमितिपंच

रामः
७

यद्यपि विज्ञानमयसद्भावश्चतुर्थे स्थितस्तथापि पुनरौषस्त्ये प्रश्ने यः प्राणेन प्राणितीत्यादिना प्राणनादिलिंगमुपन्यस्य तल्लिंगगम्यः सामान्येनाधिगतः स दृष्टे द्रष्टेत्यादिना कूटस्थदृष्टिस्वभावो विशेषतो निश्चितस्तथा च पंचमे पि तद्युत्पादनमुचितमित्यर्थः॥ आत्मा कूटस्थदृष्टिस्वभावश्चेत्कथं तस्य संसारस्तत्राह॥ तस्येति॥ अज्ञानं तत्कार्यं चांतःकरणादि परोपाधिशब्दार्थः॥ संसारस्यात्मन्यौपाधिकत्वे दृष्टांतमाह॥ यथेति॥ दार्ष्टांतिकस्यानेकरूपत्वादनेकदृष्टांतोपादानमभिप्रेत्य दार्ष्टांतिकमाह॥ तथेति॥ तथोक्तदृष्टांतानुसारेणात्मन्यपि परोपाधिः संसार इति यावत्॥ सोपाधिकस्यात्मनः संसारित्वमुक्त्वा निरुपाधिकस्य नित्यमुक्तत्वमाह॥ निरुपाधिक इति॥ निरुपाख्यत्वं वाचां मनसां चागोचरत्वं॥ कथं तर्हि तत्रागमप्रामाण्यं तत्राह॥ नेति नेतीति व्यपदेश्य इति॥ कहोलप्र

प्राणनादिप्रमाणमुपन्यस्यौषस्त्ये प्रश्ने प्राणनादिलिंगो यः सामान्येनाधिगतः प्राणेन प्राणितीत्यादिना दृष्टेर्द्रष्टेत्यादिनाऽलुप्तशक्तिस्वभावोधिगतः॥ तस्य च परोपाधिनिमित्तः संसारो यथा रज्जूखरशुक्तिकागगनादिषु सर्पोदकरजतमलिनत्वादि पराध्यारोपणनिमित्तमेव न स्वतस्तथा निरुपाधिको निरुपाख्यो नेति नेतीति व्यपदेश्यः साक्षादपरोक्षात्सर्वांतर आत्मा ब्रह्माक्षरमंतर्यामी प्रशास्तौपनिषदः पुरुषो विज्ञानमानंदं ब्रह्मेत्यधिगतं तदेव पुनरिंधसंज्ञः प्रविविक्ताहारस्ततोंतर्हृदये यो लिंगात्मा स प्रविविक्ताहारतरः॥ ततः परेण जगदात्मा प्राणोपाधिस्ततोपि प्रविलाप्य जगदात्मानमुपाधिभूतं

श्वोक्तमनुवदति साक्षादिति॥ अक्षरब्राह्मणोक्तं स्मारयति॥ अक्षरमिति॥ अंतर्यामिब्राह्मणोक्तं स्मारयति॥ अंतर्यामीति॥ शाकल्यब्राह्मणोक्तमनुसंदधाति॥ औपनिषद इति॥ पांचमिकमर्थमित्थमनूद्यातीते ब्राह्मणद्वये वृत्तमनुभाषते॥ तदेवेति॥ यत्साक्षादपरोक्षात्सर्वांतरं ब्रह्म तदेवाधिगमनोपायविशेषोपदर्शनपुरःसरं पुनरधिगतमिति संबंधः॥ षष्ठाचार्यब्राह्मणार्थं संक्षिप्य कूर्चब्राह्मणार्थं संक्षिपति॥ इंध इत्यादिना॥ इंधस्य विशेषणं प्रविविक्ताहार इति॥ हृदयेंतर्यो लिंगात्मा स ततो वैश्वानरादिंधात्प्रविविक्ताहारतर इति योजना॥ विश्वतैजसावुक्तौ प्राज्ञतुरीये प्रदर्शयति॥ ततः

ततस्तस्माद्विश्वात्तैजसाच्च परेणाव्यवस्थितो यो जगदात्मा प्राणोपाधिरव्याकृताख्यः प्राज्ञस्ततोपि तमप्युपाधिभूतं जगदात्मानं केवले प्रतीचि विद्यया प्रविलाप्य स एष नेति नेतीति यत्तुरीयं ब्रह्म तदधिगतमिति संबंधः॥ विद्ययोपाधिविलापने दृष्टांतमाह॥ रज्वादाविति॥ अभयं वै जनक प्राप्तोसीत्यादावुक्तमनुवदति॥ एवमिति॥ कूर्चब्राह्मणोक्तमर्थमनुभाषितं संक्षिप्याह॥ अत्र चेति॥ अन्यप्रसंगेनोपासकानां क्रममुक्तिफलत्वप्रदर्शनप्रसंगेनेति यावत्॥ तेषामुपन्यासमेवाभिनयति॥ इंध इत्यादिना॥ वृत्तमनूद्योत्तरब्राह्मणस्य तात्पर्यमाह॥ इदानीमिति॥ आदिशब्दः सुषुप्तितुरीयसंग्रहार्थः॥ तर्कस्य महत्त्वं चतुर्विधदोषराहित्येनाबाधितत्वं॥ अधिगमस्तस्यैव प्रस्तुतस्य ब्रह्मण इति शेषः॥ कर्तव्य इतीदमिदानीमारभ्यत इति संबंधः॥ किमिदं ब्र

रज्वादाविव सर्पादिकं विद्यया स एष नेति नेतीति साक्षात्सर्वांतरं ब्रह्म समधिगतमेवमभयं परिप्रापितो जनको याज्ञवल्क्येनागमतः संक्षेपतोत्र च जाग्रत्स्वप्नसुषुप्ततुरीयाण्युपन्यस्तान्यन्यप्रसंगेनेंधः प्रविविक्ताहारतरः सर्वे प्राणाः स एष नेति नेतीति इदानीं जाग्रत्स्वप्नादिद्वारेणैवमहता तर्केण विस्तरतोधिगमः कर्त्तव्योऽभयं परिप्रापयितव्यं॥ सद्भावश्चात्मनो विप्रतिपत्त्याशंकानिराकरणद्वारेण व्यतिरिक्तत्वं शुद्धत्वं स्वयंज्योतिष्ट्वमलुप्तशक्तिस्वरूपत्वं निरतिशयानंदस्वाभाव्यमद्वैतत्वं चाधिगंतव्यमितीदमारभ्यते

ह्मणोधिगमस्य कर्त्तव्यत्वं नामतदाह॥ अभयमिति॥ अधिगंतव्यमर्थांतरमाह॥ सद्भावश्चेति॥ प्रागपि सद्भावस्तस्याधिगमस्तत्किमर्थं पुनस्तादर्थ्येन प्रयस्यते तत्राह॥ विप्रतिपत्तीति॥ बाह्यानां विप्रतिपत्त्या नास्तित्वशंकायां तन्निरासद्वारात्मनः सद्भावोऽधिगंतव्य इत्यर्थः॥ आत्मनोस्तित्वेपि केचिद्देहादौ तदंतर्भावमभ्युपयंति तान्प्रत्याह॥ व्यतिरिक्तत्वमिति॥ देहादिव्यतिरिक्तोप्यात्मा कर्त्ता भोक्ता चेत्येके भोक्तैव केवलमित्यपरे तान्प्रत्युक्तं॥ शुद्धत्वमिति॥ तस्य जडत्वपक्षं प्रत्याचष्टे॥ स्वयंज्योतिष्ट्वमिति॥ तत्र कूटस्थदृष्टिस्वभावत्वं हेतुमाह॥ अलुप्तेति॥ एतेन विज्ञानस्य गुणत्वपक्षोपि प्रतिवेदितव्यः॥ ये त्वानंदमात्मगुणमाहुस्तान्प्रत्याह॥ निरतिशयेति॥ आत्मनः सप्रपंचत्वप

ब्राह्मणतात्पर्यमभिधायाख्यायिकातात्पर्यमाह ॥ आख्यायिकात्विति ॥ विद्यायाः संप्रदानं शिष्यस्तस्य ग्रहणविधिः श्रद्धादिप्रकारस्तस्य प्रकाशनार्थेयमाख्यायिकेति यावत् ॥ प्रयोजनांतरं तस्या दर्शयति ॥ विद्येति ॥ कथं कर्मभ्यो विशेषतो विद्यायास्तुतिरत्र लभ्यते तत्राह ॥ वरेति ॥ कामप्रश्नाख्यस्य वरस्य याज्ञवल्क्येन राज्ञे दत्तत्वात्तेन चावसरे ब्रह्मज्ञानस्यैव पृष्टत्वादनेन विधिना विद्यास्तुतेः सूचनात्साप्यत्र विवक्षितेत्यर्थः ॥ तात्पर्यमेवमुक्त्वाख्याख्यामक्षराणामारभते ॥

आख्यायिका तु विद्यासंप्रदानग्रहणविधिप्रकाशनार्था विद्यास्तुतये च विशेषतो वरदानादिसूचनात् ॥ जनकं ह वैदेहं याज्ञवल्क्यो जगाम स च गच्छन्नेवं मेने चिंतितवान्न वदिष्ये किंचिदपि राज्ञे गमनप्रयोजनं तु योगक्षेमार्थं न च वदिष्य इत्येवं संकल्पोपि याज्ञवल्क्यो यद्यज्जनकः पृष्टवान्तत्तत्प्रतिपेदे तत्र को हेतुः संकल्पितस्यान्यथाकरण इत्यत्राख्यायिकामाचष्टे पूर्वत्र किल जनकयाज्ञवल्क्ययोः संवाद आसीदग्निहोत्रे निमित्ते

जनकꣳ ह वैदेहं याज्ञवल्क्यो जगाम स मेने न वदिष्य इत्यथ ह यज्जनकश्च वैदेहो याज्ञवल्क्यश्चाग्निहोत्रे समूदाते तस्मै ह याज्ञवल्क्यो वरं ददौ स ह कामप्रश्नमेव वव्रे तꣳ हास्मै ददौ तꣳ ह सम्राडेव पूर्वः पप्रच्छ ॥१२॥१॥ तत्र जनकस्याग्निहोत्रविषयं विज्ञानमुपलभ्य परितुष्टो याज्ञवल्क्यस्तस्मै जनकाय ह किल वरं ददौ स च जनको ह कामप्रश्नमेव वरं वव्रे वृतवांस्तं च वरं हास्मै ददौ याज्ञवल्क्यस्तेन वरप्रदानसामर्थ्येनानाचिख्यासुमपि याज्ञवल्क्यं तूष्णीं स्थितमपि सम्राडेव जनकः पूर्वं पप्रच्छ तत्रैवानुक्तिर्ब्रह्मविद्यायाः कर्मणा विरुद्धत्वाद्विद्यायाः प्रशस्तत्वात् ॥ जनकमि

त्यादिना ॥ संवादं न करोमीति व्रतं चेत्किमिति गच्छतीत्याशंक्यते ॥ गमनेति ॥ उत्तरमाह योगेति ॥ अथ हेत्याद्यवतारयति ॥ नेत्यादिना ॥ अत्रोत्तरत्वेनेति शेषः ॥ पूर्वत्रेति कर्मकांडोक्तिः ॥ नन्वग्निहोत्रप्रकरणे कामप्रश्नो वरो दत्तस्तत्किमिति तत्रैवात्मयाथात्म्यप्रश्नप्रतिवचनेनासूचिषातां तत्राह ॥ तत्रैवेति ॥ कर्मनिरपेक्षाया ब्रह्मविद्याया मोक्ष

सर्वापेक्षाधिकरणन्यायान्नतस्याः स्वातंत्र्यमित्याशंक्याह॥ स्वतंत्राहीति॥ साहिस्वोत्पत्तौस्वफलेवाकर्माण्यपेक्षते॥ नाद्यः॥ अभ्युपगमात्॥ नद्वितीयः॥ अतएव
चाग्नींधनाद्यनपेक्षेतिन्यायविरोधादित्यभिप्रेत्याह॥ सहकारीति॥ इत्यस्माच्चहेतोस्तत्रैवानुक्तिरितिसंबंधः॥१॥ याज्ञवल्क्यस्यव्रतभंगहेतुमुक्त्वाजनकस्यप्रश्न
मुत्थापयति॥ हेयाज्ञवल्क्येति॥ अक्षरार्थमुक्त्वाप्रश्नवाक्येविवक्षितमर्थमाह॥ किमयमित्यादिना॥ स्वशब्दोयथोक्तपुरुषविषयः॥ ज्योतिःकार्यमित्यासनादि
व्यवहारोक्तिः॥ इत्येतदितिकल्पद्वयंपरामृश्यते॥ पक्षद्वयेपिफलंपृच्छति॥ किंचेति॥ सप्तम्यर्थेतसिः॥ उत्तरमाह॥ शृण्विति॥ तत्रेतिपक्षद्वयोक्तिः॥ कारणंफल

स्वतंत्राहिब्रह्मविद्यासहकारिसाधनांतरनिरपेक्षापुरुषार्थसाधनेतिच॥१२॥१॥ हेयाज्ञवल्क्येत्येवंसंबोध्याभिमुखीकरणायकिंज्योतिरयंपुरु
षइतिकिमस्यपुरुषस्यज्योतिर्येनज्योतिषाव्यवहरतिसोयंकिंज्योतिरयंप्राकृतःकार्यकरणसंघातरूपःशिरःपाण्यादिमान्पुरुषःपृ
च्छ्यतेकिमयंस्वावयवसंघातबाह्येनज्योतिरंतरेणव्यवहरत्याहोस्वित्स्वावयवसंघातमध्यपातिनाज्योतिषाज्योतिःकार्यमयंपुरुषो
निर्वर्तयतीत्येतदभिप्रेत्यपृच्छति किंचातोयदिव्यतिरिक्तेनयदिवाऽव्यतिरिक्तेनज्योतिषाज्योतिःकार्यंनिर्वर्तयतिशृणुतत्रकारणंयदि
व्यतिरिक्तेनैवज्योतिषाज्योतिःकार्यनिर्वर्तकत्वमस्यस्वभावोनिर्धारितोभवतिततोऽदृष्टज्योतिःकार्यविशेषविषयेप्यनुमंस्यामहेव्यतिरिक्त
ज्योतिर्निमित्तमेवेदंकार्यमित्यथाव्यतिरिक्तेनैवस्वात्मनोज्योतिषाव्यवहरति॥ ततोऽप्रत्यक्षेपिज्योतिषिज्योतिःकार्यदर्शनेऽव्यतिरिक्तमेव
ज्योतिरनुमेयमथानियमएवव्यतिरिक्तम् मितियावत्॥ प्रथमपक्षमनूद्यस्वपक्षसिद्धिफलमाह॥ यदीत्यादिना॥ षष्ठीपुरुषमधिकरोति॥ कारणभू
तंज्योतिर्नदृश्यतेतत्कार्यंत्वासनाद्युपलभ्यतेतत्रापिविषयेस्वप्नादावितियावत्॥ अनुमानमेवाभिनयति॥ व्यतिरिक्तेति॥ विमतमतिरिक्तज्योतिरधीनंव्यवहारत्वा
त्संमतवदित्यर्थः॥ पक्षांतरमनूद्यलोकायतपक्षसिद्धिफलमाह॥ अथेत्यादिना॥ अप्रत्यक्षेपीत्यव्यतिरिक्तमितिच्छेदः॥ कल्पांतरमाह॥ अथेति॥ अनियमंव्याकरोति॥

तस्मिन्नसत्येव्यवहारहेतौज्योतिष्यनिश्चयात्तद्विकारोव्यवहारोपिनस्थैर्यमालंबेतेत्याह॥ततइति॥व्याख्यातंप्रश्नमुपसंहरति॥इत्येवमिति॥प्रश्नमाक्षिपति॥नन्विति॥व्यतिरिक्तज्योतिर्बुभुत्सयाप्रश्नोभविष्यतीतिचेत्तत्राह॥स्वयमेवेति॥राज्ञोनुमानकौशलमंगीकरोति॥सत्यमिति॥किमितितर्हिपृच्छतीत्याशंक्याह॥तथापीति॥व्याप्यव्यापकयोस्तत्संबंधस्यचातिसूक्ष्मत्वादेकेनदुर्ज्ञानत्वात्तज्ज्ञानेयाज्ञवल्क्योप्यपेक्षितइत्यर्थः॥कथंतेषामतिसूक्ष्मत्वंतत्राह॥बहूनामपीति॥लिंगादिष्वनेकेषामपिविवेकिनांदुर्बोधतास्तिकिमुतैकस्यतेषुदुर्बोधतावाच्येत्यर्थः॥तेषामत्यंतसौक्ष्म्येमानवीसम्मतिंप्रमाणयति॥अतएवेति॥

अव्यतिरिक्तंवाज्योतिःपुरुषस्यव्यवहारहेतुस्ततोःनव्यवसायएवज्योतिर्विषयइत्येवंमन्वानःपृच्छतिजनकोयाज्ञवल्क्यंकिंज्योतिरयंपुरुष इतिनन्वेवमनुमानकौशलेजनकस्यकिंप्रश्नेनस्वयमेवकस्मान्नप्रतिपद्यतइतिसत्यमेवमेतत्तथापिलिंगलिंगिसंबंधविशेषाणामत्यंतसौ

याज्ञवल्क्यकिंज्योतिरयंपुरुष

क्ष्म्यात्दुरवबोध्यतांमन्यतेबहूनामपिपंडितानांकिमुतैकस्यातएवहिधर्मसूक्ष्मनिर्णयेपरिषद्व्यापारइष्यतेपुरुषविशेषश्चापेक्ष्यते॥दशावरापरिषत्त्रयोवैकोवेतितस्माद्यद्यप्यनुमानकौशलंराज्ञस्तथापितद्युक्तोयाज्ञवल्क्यःप्रष्टुं कुशलस्यापिपुरुषार्थनिर्णयेपुरुषांतरापेक्षायाःसत्त्वादेवेतियावत्॥पुरुषविशेषोवेदविदध्यात्मविदित्यादि॥तत्रस्मृत्यर्थंसंक्षिपति॥दशेति॥उक्तंहि॥धर्मेणाधिगतोयैस्तुवेदःसपरिबृंहणः॥तेशिष्टाब्राह्मणाज्ञेयाःश्रुतिप्रत्यक्षहेतवः॥दशावरावापरिषद्यंधर्मंपरिचक्षते॥त्र्यवरावापिवृत्तस्थास्तंधर्मंनविचारयेत्॥त्रैविद्योहेतुकस्तर्कीनैरुक्तोधर्मपाठकः॥त्रयश्चाश्रमिणःपूर्वेपरिषत्स्याद्दशावरा॥ऋग्वेदविद्यजुर्विच्चसामवेदविदेवच॥त्र्यवरापरिषज्ज्ञेयाधर्मसंशयनिर्णयइति॥एकोवेत्यध्यात्मविदुच्यते॥कुशलस्यापिराज्ञोयाज्ञ

वल्क्यंप्रतिप्रश्नोपपत्तिप्रसंगंसंहरति॥तस्मादिति॥

सूक्ष्मार्थनिर्णये पुरुषांतरापेक्षायावद्बुद्धसंमतत्वादितियावत्॥ तत्रैवहेत्वंतरमाह॥ विज्ञानेति॥ राज्ञोयाज्ञवल्क्यापेक्षामुपपाद्यपक्षांतरमाह॥ अथवेति॥ तथाचात्रराज्ञोमुनेर्वाविवक्षितत्वाभावात्किमितिराजामुनिमनुसरतीतिचोद्यंनिरवकाशमितिशेषः॥ प्रश्नोपपत्तौप्रतिवचनमुपपन्नमेवेतिमन्वानस्तदुत्थापयति॥ याज्ञवल्क्योपीति॥ अतिरिक्तेज्योतिषिप्रष्टुःराज्ञोभिप्रायस्तदभिप्रायःतदभिज्ञतयातथाविधंज्योतीराजानंबोधयिष्यन्यथातिरिक्तज्योतिरावेदकंवक्ष्यमाणंलिंगंगृहीतव्याप्तिकंप्रसिद्धंभवतितथातद्व्याप्तिग्रहणस्थलमादित्यज्योतिरित्यादिनामुनिरपिप्रतिपन्नवानित्यर्थः॥ व्याप्तिंद्युत्समानःएकवि

विज्ञानकौशलतारतम्योपपत्तेःपुरुषाणामथवाश्रुतिःस्वयमेवाख्यायिकाव्याजेनानुमानमार्गमुपन्यस्यास्मान्बोधयतिपुरुषमतिमनुसरंतीयाज्ञवल्क्योपिजनकाभिप्रायाभिज्ञतयाव्यतिरिक्तमात्मज्योतिर्बोधयिष्यन्जनकंव्यतिरिक्तप्रतिपादकमेवलिंगंप्रतिपेदेयथाप्रसिद्धमा

इत्यादित्यज्योतिःसम्राडितिहोवाचादित्येनैवायंज्योतिषास्तेपल्ययतेकर्मकुरुतेविपल्येतीत्येवमेवैतद्याज्ञवल्क्य॥१३॥२

दित्यज्योतिःसम्राडितिहोवाच॥ कथमादित्येनैवस्वावयवसंघातव्यतिरिक्तेनचक्षुषोनुग्राहकेणज्योतिषायंप्राकृतःपुरुषआस्तेउपविशति पल्ययतेपर्येतिक्षेत्रमरण्यंवातत्रगत्वाकर्मकुरुतेविपल्येतिविपर्येतिचयथागतमस्तंतव्यतिरिक्तज्योतिष्ट्वप्रसिद्धताप्रदर्शनार्थमनेकविशे

ति॥ कथमित्यादिना॥ योव्यवहारःसोतिरिक्तज्योतिरधीनोयथासवित्रधीनोजाग्रद्व्यवहारइतिव्याप्तिंव्याकरोति॥ आदित्येनेति॥ एवकारंव्याचष्टे॥ स्वावयवेति॥ आदित्यापेक्षामंतरेणचक्षुर्वशादेवायंव्यवहारःसेत्स्यतीत्याशंक्याह॥ चक्षुषइति॥ आसनाद्यन्यतमव्यापारव्यपदेशोव्याप्तिसिद्धेर्यथाविशेषणबहुत्वमित्याशंक्याह॥ अस्तंतेति॥ आसनादीनामेकैकव्यभिचारेदेहस्यान्यथाभावेपिनानुग्राहकंज्योतिरन्यथाभवतिअतस्तदनुग्राह्याद्देहसंघातविलक्षणमितिविवक्षित्वा

तथापि किमर्थमादित्याद्यनेकपर्यायोपादानमेकेनैवव्याप्तिग्रहसंभवादित्याशंक्याह॥ बाह्येति॥ देहेंद्रियमनोव्यापाररूपं कर्मलिंगं तस्यव्यतिरि
क्तज्योतिरव्यभिचारसाधनार्थमनेकपर्यायोपन्यासो बहवो हि दृष्टांताव्याप्तिं दृढयंतीत्यर्थः॥ इंद्रियं व्यावर्तयति॥ वागितीति॥ शब्दस्य ज्योतिष्ट्वे स्व

बाह्यानेकज्योतिःप्रदर्शनं च लिंगस्याव्यभिचारित्वप्रदर्शनार्थमेवमेवैतद्याज्ञवल्क्य॥ २॥ तथास्तमित आदित्ये याज्ञवल्क्य किंज्योति
रेवायं पुरुष इति चंद्रमा एवास्य ज्योतिः॥ १४॥ अस्तमित आदित्ये चंद्रमस्यस्तमिते किंज्योतिः अग्निर्ज्योतिः॥ १५॥ शांतेग्नौ वाग्ज्योतिर्वा

अस्तमित आदित्ये याज्ञवल्क्य किंज्योतिरेवायं पुरुष इति चंद्रमा एवास्य ज्योतिर्भवतीति चंद्रमसैवायं ज्योतिषास्ते प
ल्ययते कर्म कुरुते विपल्येतीत्येवमेवैतद्याज्ञवल्क्य॥ १४॥ अस्तमित आदित्ये याज्ञवल्क्य चंद्रमस्यस्तमिते किंज्योतिरेवायं
पुरुष इत्यग्निरेवास्य ज्योतिर्भवतीत्यग्निनैवायं ज्योतिषास्ते पल्ययते कर्म कुरुते विपल्येतीत्येवमेवैतद्याज्ञवल्क्य॥ १५॥ अ
स्तमित आदित्ये याज्ञवल्क्य चंद्रमस्यस्तमिते शांतेग्नौ किंज्योतिरेवायं पुरुष इति वागेवास्य ज्योतिर्भवतीति वाचैवायं ज्योतिषा
स्ते पल्ययते कर्म कुरुते विपल्येतीति॥ गितिशब्दः परिगृह्यते शब्देन विषयेण श्रोत्रमिंद्रियं दीप्यते श्रोत्रेंद्रिये संप्रदीप्ते मनसि विवेक उ
पजायते तेन मनसा बाह्यां चेष्टां प्रतिपद्यते मनसा ह्येव पश्यति मनसा शृणोतीति ब्राह्मणं॥ कथं पुनर्वाग्ज्योतिरिति वाचो ज्योतिष्ट्वमप्रसिद्ध
मित्यत आह ष्टयितुं पातनिकां करोति॥ शब्देनेति॥ तद्दीपनकार्यमाह॥ श्रोत्रेति॥ मनसि विषयाकारे परिणामे सतिं किं स्यात्तदाह॥ तेनेति॥ तत्र
प्रमाणमाह॥ मनसा हीति॥ एवं पातनिकां कृत्वा वाचो ज्योतिष्ट्वसाधनार्थं प्रकृति॥ कथमिति॥ का पुनरत्रानुपपत्तिस्तत्राह॥ वाच इति॥ तत्रानंतरवाक्यमुत्त

प्रसिद्धिमेवाकांक्षापूर्वकंस्फुटयति॥कथमित्यादिना॥उपैवेत्यादिव्याचष्टे॥तेनशब्देनेति॥ज्योतिःकार्यवत्वंतज्जन्यव्यवहाररूपकार्यवत्वमितिया
वत्॥तत्रवाग्ज्योतिषइत्यत्रचतुर्थपर्यायःसप्तम्यर्थः॥किमितिगंधादयःशब्देनोपलक्ष्यंतेतत्राह॥गंधादिभिरिति॥प्रश्नांतरमुत्थापयति॥एवमेवेति॥
तथापिस्वप्नादौतस्यप्रवृत्तिदर्शनात्तत्कारणीभूतंज्योतिर्वक्तव्यमितिशेषः॥१६॥कथंपुनरत्रपृच्छ्यतेज्योतिरंतरमित्याशंक्यप्रष्टुरभिप्रायमाह॥एतद्

तस्माद्धेसम्राडयस्माद्वाचाज्योतिषानुगृहीतोयंपुरुषोव्यवहरतितस्मात्प्रसिद्धमेतद्वाचोज्योतिष्ट्वंकथमपियत्रयस्मिन्कालेप्रावृषिप्रायेणमे
घांधकारेसर्वज्योतिःप्रत्यस्तमयेस्वोपिपाणिर्हस्तोनविस्पष्टंनिर्ज्ञायतेऽथतस्मिन्कालेसर्वचेष्टानिरोधेप्राप्तेबाह्यज्योतिषोऽभावाद्यत्रवागुच्चर
तिश्वावाभषतिगर्दभोवारौतिउपैवतत्रन्येतितेनशब्देनज्योतिषाश्रोत्रमनसोर्नैरंतर्यंभवतितेनज्योतिःकार्यत्वंवाक्प्रतिपद्यतेतेनवाचाज्योति

तस्माद्वैसम्राडपियत्रस्वःपाणिर्नविनिर्ज्ञायतेयत्रवागुच्चरत्युपैवतत्रन्येतीत्येवमेवैतद्याज्ञवल्क्य ॥१६॥

षाउपन्येत्येवउपगच्छत्येवतत्रसंनिहितोभवतीत्यर्थः॥तत्रचकर्मकुरुतेविपल्येतितत्रवाग्ज्योतिषोग्रहणंगंधादीनामुपलक्षणार्थंगंधादिभि
र्पिहिघ्राणादिष्वनुगृहीतेषुप्रवृत्तिनिवृत्त्यादयोभवंतितेनतैरप्यनुग्रहोभवतिकार्यकरणसंघातस्यएवमेवैतद्याज्ञवल्क्य॥१६॥शांतायांपुनर्वा
चिगंधादिष्वपिचशांतेषुबाह्येष्वनुग्राहकेषुसर्वप्रवृत्तिनिरोधःप्राप्तोस्यपुरुषस्य॥एतदुक्तंभवति॥जाग्रद्विषयेबहिर्मुखानिकरणानिचक्षुरादीन्या
दित्यादिज्योतिर्भिरनुगृह्यमाणानियदातदास्फुटतरःसंव्यवहारोस्यपुरुषस्यभवतीत्येवंतावज्जागरितेस्वावयवसंघातव्यतिरिक्तेनैवज्योतिषाज्योतिःकार्य

त्कंभवतीति॥योव्यवहारःसोतिरिक्तज्योतिर्निमित्तोयथादित्यादिनिमित्तोजाग्रद्व्यवहारइतिव्याप्तिमुक्तांनिगमयति॥एवंतावदिति॥व्याप्तिज्ञानकार्यमनुमानमा

तादृगवस्थायांसर्वज्योतिःप्रत्यस्तमयदशायामितियावत्॥विमतोव्यवहारोऽतिरिक्तज्योतिरधीनोव्यवहारत्वात्संप्रतिपन्नवदित्यधस्तादेवानुमानमावे
दितमितिभावः॥हेतोराश्रयासिद्धिमाशंक्यपरिहरति॥दृश्यतेचेति॥आदिशब्देनदेशांतरादौकर्मकरणंगृह्यते॥आश्रयैकदेशासिद्धिमाशंक्याह॥सुषु
प्ताच्चेति॥ध्यानदशायामिष्टदेवतादर्शनंचकारार्थः॥अनुमानफलंनिगमयति॥तस्मादिति॥यथोक्तानुमानाज्ज्योतिःसिद्धंचेत्किंप्रश्नेनेत्याशंक्याह॥किं

वयंमन्यामहेसर्वबाह्यज्योतिःप्रत्यस्तमयेपिस्वप्नसुषुप्तकालेजागरितेचतादृगवस्थायांस्वावयवसंघातव्यतिरिक्तेनैवज्योतिषाज्योतिःका
र्यसिद्धिरस्येतिदृश्यतेचस्वप्नेज्योतिःकार्यसिद्धिःबंधुसंगमनवियोगदर्शनदेशांतरगमनादिचसुषुप्ताच्चोत्थानंसुखमहमस्वाप्संनकिंचि
द्वेदिषं॥तस्मादस्तिव्यतिरिक्तंकिमपिज्योतिः॥किंपुनस्तच्छांतायांवाचिज्योतिर्भवतीतिउच्यतेआत्मैवास्यज्योतिर्भवतीत्यात्मेतिकार्यकर

अस्तमितआदित्येयाज्ञवल्क्यचंद्रमस्यस्तमितेशांतेऽग्नौशांतायांवाचिकिंज्योतिरेवायंपुरुषइत्यात्मैवास्यज्योतिर्भवतीत्या
त्मनैवायंज्योतिषास्तेपल्ययतेकर्मकुरुतेविपल्येतीति॥१७॥६॥ णस्वावयवसंघातव्यतिरिक्तंकार्यकरणावभासकमादि

त्यादिबाह्यज्योतिर्वत्स्वयमन्येनानवभास्यमानमभिधीयतेज्योतिरंतस्थंचतत्पारिशेष्यात्कार्यकरणव्यतिरिक्तंतदितितावत्सिद्धं॥य
च्चकार्यकरणव्यतिरिक्तंकार्यकरणसंघातानुग्राहकंचज्योतिस्तद्बाह्यैश्चक्षुरादिकरणैरुपलभ्यमानंदृष्टंनतुतथातच्चक्षुरादिभिरुपलभ्य
तेआदित्यादिज्योतिष्षूपरतेषुकार्यंतुज्योतिषोदृश्यते

पुनरिति॥सर्वज्योतिरुपरमेदृश्यमानस्यव्यवहारस्यकारणतयानुमानतोज्योतिर्मात्रसिद्धा
वपितद्विशेषबुभुत्सायांप्रश्नोपपत्तिरित्यर्थः॥प्रतिवचनमवतार्यव्याकरोति॥उच्यतइत्यादिना॥अवभासकत्वेदृष्टांतमाह॥आदित्यादीति॥तत्रव्यतिरिक्त

तच्चांतस्थंपारिशेष्यादित्युक्तमुपपादयति॥ यच्चेति॥ उपरते षात्मज्योतिरितिशेषः॥ तदेवतर्हिमाभूदितिचेन्नेत्याह॥ कार्यैरिति॥ स्वप्नादौ दृश्यमानंव्यवहारंहेतूकृत्यफलितमाह॥ यस्मादित्यादिना॥ विमतमंतस्थमतींद्रियत्वादादित्यवद्व्यतिरेकीत्यर्थः॥ व्यतिरेकंतरमाह॥ किंचेति॥ संप्रतिलोकायतश्चोदयति॥ नेत्यादिना॥ तत्रनञर्थंव्याचष्टे॥ यदिति॥ उक्तंहेतुंप्रश्नपूर्वकंविभजते॥ कस्मादित्यादिना॥ यद्यपिदेहादेरुपकार्यादुपकारकमादित्यादिसजातीयंदृष्टंतथापिनात्मज्योतिरुपकार्यसजातीयमनुमेयमित्याशंक्याह॥ यथादृष्टंचेति॥ तदेवस्पष्टयति॥ यदिनामेति॥ विमतमंतस्थमतिरिक्तंचातींद्रिय

यस्मात्तस्मादात्मनैवायंज्योतिषास्तेपल्ययतेकर्मकुरुतेविपल्येतीतितस्मान्नूनमंतस्थंज्योतिरित्यवगम्यते॥ किंचआदित्यादिज्योतिर्विलक्षणंतद्भौतिकंचसएवहेतुर्यच्चक्षुराद्यग्राह्यमादित्यादिवन्नसमानजातीयेनैवोपकारदर्शनाद्यदादित्यादिविलक्षणंज्योतिरंतरंसिद्धमित्येतदसत्कस्मादुपक्रियमाणसमानजातीयेनैवादित्यादिज्योतिषाकार्यकरणसंघातस्यभौतिकस्यभौतिकेनैवोपकारःक्रियमाणोदृश्यते यथादृष्टंचेदनुमेयं यदिनामकार्यकरणादर्थांतरंतदुपकारकमादित्यादिवज्ज्योतिस्तथापिकार्यकरणसंघातसमानजातीयमेवानुमेयंकार्यकरणसंघातोपकारकत्वादादित्यादिज्योतिर्वद्यत्पुनरंतस्थत्वात्प्रत्यक्षत्वाच्चवैलक्षण्यमुच्यतेतच्चक्षुरादिज्योतिर्भिरनैकांतिकं यतःप्रत्यक्षाण्यंतस्थानिचचक्षुरादिज्योतींषिभौतिकान्येवतस्मात्तवमनोरथमात्रंविलक्षणमात्मज्योतिःसिद्धमितिकार्यकरणसंघातभावभावित्वाच्चसंघातधर्मत्वमनुमीयतेज्योतिषःसामान्यतोदृष्टस्यचानुमानस्यव्यभिचारित्वादप्रामाण्यं॥ त्वादादित्यवदितिपरोक्तंव्यतिरेक्यनुमानमनूद्यदूषयति॥ यत्पुनरित्यादिना॥ अनैकांतिकत्वंव्यनक्ति॥ यतइति॥ अंतस्थान्यप्यतिरिक्तानिचसंघातादितिद्रष्टव्यंव्यभिचारफलमाह॥ तस्मादिति॥ विलक्षणमंतस्थंचेतिमंतव्यं॥ किंच॥ चैतन्यंशरीरधर्मस्तद्भावभावित्वाद्रूपादिवदित्याह॥ कार्यकरणेति॥ निमतंसंघाताद्भिन्नंतद्भासकत्वादादित्यवदित्यनुमानान्नसं

लोकायतस्यदेहात्मभासकमपिचसुस्त्वतोनभिद्यते।।तथाचव्यभिचारान्नत्वदनुमानप्रामाण्यमित्यर्थः।।मनुष्योहंजानामीतिप्रत्यक्षविरोधाच्चतदनुमा
नमप्रमाणमित्याह।।सामान्यतोदृष्टेति।।ननुतेनप्रत्यक्षमुत्सार्यतामितिचेन्नेत्याह।।नचेति।।इतश्चदेहस्यैवचैतन्यमित्याह।।अयमेवेति।।ज्योतिषोदेह
व्यतिरेकमंगीकृत्यापिदूषयति।।यदिनामेति।।विमतंज्योतिरनात्मादेहोपकारकत्वादादित्यवदित्यर्थः।।आत्मत्वंतर्हिकस्येत्याशंक्याह।।यएवत्विति
अनुमानादात्मनोदेहव्यतिरिक्तत्वमुक्तमित्याशंक्याह।।प्रत्यक्षेति।।नान्यआत्मेतिपूर्वेणसंबंधः।।देहस्यात्मत्वेकादाचित्कंदृष्टत्वश्रोतृत्वाद्ययुक्तमितिशं

सामान्यतोदृष्टबलेनहिभवानादित्यादिवद्व्यतिरिक्तंज्योतिःसाधयतिकार्यकरणेभ्योनचप्रत्यक्षमनुमानेनबाधितुंशक्यतेऽयमेवतुकार्य
करणसंघातःप्रत्यक्षंपश्यतिशृणोतिमनुतेविजानातिचयदिनामज्योतिरंतरमस्योपकारकंस्यादादित्यादिवन्ततदासावात्मास्याज्ज्योतिरंत
रमादित्यादिवदेवयएवतुप्रत्यक्षंदर्शनादिक्रियांकरोतिसएवात्मास्यात्कार्यकरणसंघातोनान्यःप्रत्यक्षविरोधेऽनुमानस्याप्रामाण्यात्।।न
न्वयमेवचेद्दर्शनादिक्रियाकर्त्तात्मासंघातःकथमविकलस्यैवास्यदर्शनादिक्रियाकर्तृत्वंकदाचिद्भवतिकदाचिन्नेति।।नैषदोषोदृष्टत्वान्नहि
दृष्टेऽनुपपन्नंनामनहिखद्योतेप्रकाशाप्रकाशकत्वेनदृश्यमानेकारणांतरमनुमेयंअनुमेयत्वेचकेनचित्सामान्यात्सर्वंसर्वत्रानुमेयंस्यात्तच्चानि
ष्टंनचपदार्थस्वभावोनास्तिनह्यग्नेरुष्णस्वाभाव्यमन्यनिमित्तमुदकस्यवाशैत्यं।।प्राणिधर्माधर्माद्यपेक्षमितिचेत्

कते।।नन्विति।।स्वभाववादीपरि
हरति।।नैषदोषइति।।कादाचित्केदर्शनादर्शनेसंभवतोदेहस्वाभाव्यादित्यत्रदृष्टांतमाह।।नहीति।।विमतंकारणांतरपूर्वकंकादाचित्कत्वाद्धटवदित्यनुमानेदृ
ष्टांतेभविष्यतीत्याशंक्याग्निरुष्णइतिवदुष्णमुदकमित्यपिद्रव्यत्वादिनानुमीयेतेत्यतिप्रसंगमाह।।अनुमेयत्वेचेति।।ननुयद्भवतितत्सनिमित्तमेवनस्वभावा
द्भवेत्किंचिदस्माकंप्रसिद्धंतत्राह।।नचेति।।अग्नेरौष्ण्यमुदकस्यशैत्यमित्याद्यपिननिर्निमित्तंकिंतुप्राण्यदृष्टापेक्षमितिशंकते।।प्राणीति।।आदिशब्देनेश्वरादिग्र

२८४

गूढाभिसंधिः स्वभाववाद्याह॥ धर्मेति॥ प्रसंगस्येष्टत्वं शंकित्वा तत्राभिप्रायमाह॥ अस्त्वित्यादिना॥ सिद्धांती स्वप्नादिसिध्यनुपपत्त्या देहातिरिक्तमात्मानमभ्युप
गमयन्नुत्तरमाह॥ नेत्यादिना॥ तन्न न अर्थं विभजते॥ यदुक्तमिति॥ स्वप्ने दृष्टस्यैव दर्शनादितिहेतुभागं व्यतिरेकद्वारा विवृणोति॥ यदि हीति॥ जाग्रद्देहस्य द्र
ष्टुः स्वप्ने नष्टत्वादतींद्रियस्य संस्कारस्य चानिष्टत्वादन्यदृष्टे चान्यस्य स्वप्नायोगान्न स्वप्ने दृष्टस्यैव दर्शनं देहात्मवादे संभवतीत्यर्थः॥ माभूद्दृष्टस्यैव स्वप्ने दृष्टिरं
धस्यापि स्वप्नदृष्टेरित्याशंक्याह॥ अंध इति॥ अपिशब्दोऽध्याहर्तव्यः॥ पूर्वदृष्टस्यैव स्वप्ने दृष्टत्वेऽपि कुतो देहव्यतिरिक्तो द्रष्टा सिध्यतीत्याशंक्याह॥ ततश्चेति॥ अ

धर्माधर्मादेर्निमित्तांतरापेक्षस्वभावप्रसंगोऽस्त्विति चेन्न तदनवस्थाप्रसंगः स चानिष्टो न स्वप्नस्मृत्योर्दृष्टस्यैव दर्शनाद्यदुक्तं स्वभाववादिना देह
स्यैव दर्शनादिक्रिया नव्यतिरिक्तस्येति तन्न यदि हि देहस्यैव दर्शनादिक्रिया स्वप्ने दृष्टस्यैव दर्शनं न स्यादंधः स्वप्नं पश्यन्दृष्टपूर्वमेव पश्यति न श्रा
कद्वीपादिगतमदृष्टरूपं ततश्चैतत्सिद्धं भवति यः स्वप्ने पश्यति दृष्टपूर्वं वस्तु स एव पूर्वं विद्यमाने चक्षुष्यद्राक्षीन्न देह इति देहश्चेत् द्रष्टा स ये
नाद्राक्षीत्तस्मिन्नुद्धृते चक्षुषि स्वप्ने तदेव दृष्टपूर्वं न पश्येदस्ति च लोके प्रसिद्धिः पूर्वं दृष्टं मया हिमवतः शृंगमद्याहं स्वप्नेऽद्राक्षमिति उद्धृतचक्षु
षामंधानामपि॥ तस्मादनुद्धृतेऽपि चक्षुषि यः स्वप्नदृक्स एव द्रष्टा न देह इत्यवगम्यते तथा स्मृतौ द्रष्टृस्मर्त्रोरेकत्वे सति य एव द्रष्टा स एव स्मर्ता
यदा चैवं तदा निमीलिताक्षोऽपि स्मरन्दृष्टपूर्वं यद्रूपं तद्दृष्टवदेव पश्यतीति

योऽभयत्र देहस्यैव द्रष्टृत्वे का हानिरिति चेदत आह॥ देहश्चेति॥ तत्र
सहकारिचक्षुरभावाच्चक्षुरंतरस्यैवोत्पत्तौ देहांतरस्यापि समुत्पत्तिसंभवादन्यदृष्टेऽन्यस्य न स्वप्नः स्यादित्यर्थः॥ माभूत्पूर्वदृष्टे स्वप्नोऽहेत्वभावा
दित्याशंक्याह॥ अस्ति चेति॥ कथं तेजात्यंधानामीदृग्दर्शनमिति चेज्जन्मांतरानुभववशादिति ब्रूमोंऽधस्य देहस्याद्रष्टृत्वेऽपि चक्षुष्मतस्तस्य स्यादेवद्र
ष्टृत्वमित्याशंक्याह॥ तस्मादिति॥ स्वप्ने दृष्टस्यैव दर्शनादिति हेतुं व्याख्याय स्मृतौ दृष्टस्यैव दर्शनादिति हेतुं व्याचष्टे॥ तथेति॥ द्रष्टृस्मर्त्रोरेकत्वेऽपि कुतो देहाति

देहातिरिक्तस्य स्मर्तृत्वेपि कुतो द्रष्टृत्वमित्याशंक्याह॥ तस्मादिति॥ द्रष्टृस्मर्त्रोरेकत्वस्योक्तत्वाद्देहातिरिक्तः स्मर्ता चेद्द्रष्टापि तथा सिध्यतीति भावः॥ देह स्याद्रष्टृत्वे हेत्वंतरमाह॥ मृते चेति॥ न तस्य द्रष्टृतेति शेषः॥ तदेवोपपादयति॥ देहस्यैवेति॥ देहव्यतिरिक्तमात्मानमुपपादितमुपसंहरति॥ तस्मा दिति॥ चैतन्यं यत्तदोरर्थः॥ माभूद्देहस्यात्मत्वं इंद्रियाणांतु स्यादिति शंकते च सुरादीनीति॥ अन्यदृष्टस्येतरेणाप्रत्यभिज्ञानादिति न्यायेन परिहरति॥ नेत्यादिना॥ आत्मप्रतिपत्तिहेतूनां मनसि संभवादिति न्यायेन शंकते॥ मन इति॥ ज्ञातुर्ज्ञानसाधनोपपत्तेः संज्ञाभेदमात्रमिति न्यायेन परिहरति॥ नम

तस्माद्यन्निमीलितं तन्न द्रष्टृ यन्निमीलिते चक्षुषि स्मरन्रूपं पश्यतीत देवानिमीलितेपि चक्षुषि द्रष्टासीदित्यवगम्यते मृते च देहे विकल स्यैव च रूपादिदर्शनाभावाद्देहस्यैव द्रष्टृत्वे मृतेपि दर्शनादिक्रिया स्यात्तस्माद्यदपाये देहे दर्शनं न भवति यस्य भावे भवति तद्दर्शनादिक्रि याकर्तृ न देह इत्यवगम्यते चक्षुरादीन्येव दर्शनादिक्रियाकर्तृणीति चेन्न यदहमद्राक्षं तत्स्पृशामीति भिन्नकर्तृकत्वे प्रतिसंधानानुपपत्ते र्मनस्तर्हीति चेन्न मनसोपि विषयत्वाद्रूपादिवद्द्रष्टृत्वाद्यनुपपत्तिः॥ तस्मादंतस्थं व्यतिरिक्तमादित्यादिवदिति सिद्धं यदुक्तं कार्यकरणसंघातस मानजातीयमेव ज्योतिरंतरमनुमेयमादित्यादिभिस्तत्समानजातीयैरेवोपक्रियमाणत्वादिति तदसदुपकार्योपकारकभावस्यानियमदर्श नात्कथं पार्थिवैरिंधनैः पार्थिवत्वसमानजातीयैस्तृणोलपादिभिरग्नेः प्रज्वलनोपकारः क्रियमाणो दृश्यते न च तावता तत्समानजातीयैरेवाग्नेः प्रज्वलनोपकारः सर्वत्रानुमेयः स्यात् न सोपीति॥ देहादेरनात्मत्वे फलितमाह॥ तस्मादिति॥ आत्मज्योतिः संघातादिति शेषः॥ परोक्तमनुवदति॥ यदुक्त मिति॥ अनुग्राह्यसजातीयमनुग्राहकमित्यत्र हेतुमाह॥ आदित्यादिभिरिति॥ उपकार्योपकारकत्वसाजात्यनियमं दूषयति॥ तदसदिति॥ अनियमदर्शनमाकां क्षापूर्वकमुदाहरति॥ कथं पार्थिवैरिति॥ उलपं बालतृणं॥ पार्थिवस्याग्निं प्रत्युपकारकत्वनियमं वारयति॥ न चेति॥ तावता पार्थिवेनाग्नेरुपक्रियमाणत्वदर्शनेन

नियावत्॥ तत्समानजातीयैरिति तकुब्दः पार्थिवत्वविषयः॥

तत्रहेतुमाह॥येनेति॥दर्शनफलंनिगमयति॥तस्मादिति॥उपकार्योपकारकभावेसाजात्यानियमवदपकार्यापकारकभावेपिवैजात्यनियमोनास्तीत्य
र्थः॥तत्रोपकार्योपकारकत्वेसाजात्यनियमाभावंउदाहरणांतरेणदर्शयति॥कदाचिदिति॥अंभसाग्निनावाग्नेरुपशांत्युपलंभादपकार्यापकारकत्वे
वैजात्यनियमोनास्तीतिमत्वोपसंहरति॥तस्मादिति॥उक्तानियमदर्शनंतच्छब्दार्थः॥अहेतुरात्मज्योतिषःसंघातेनसमानजातीयतायामितिशेषः॥अनु

येनोदकेनापिप्रज्वलनोपकारोभिन्नजातीयेनवैद्युतस्याग्नेर्जाठरस्यचक्रियमाणोदृश्यतेतस्मादुपकार्योपकारकभावेसमानजातीयनि
यमोनास्तिकदाचित्समानजातीयामनुष्यामनुष्यैरेवोपक्रियंतेकदाचित्स्थावरपश्वादिभिश्चभिन्नजातीयैस्तस्मादहेतुःकार्यकरणसंघा
तस्यसमानजातीयैरेवादित्यादिज्योतिर्भिरुपक्रियमाणत्वादितियत्पुनरात्थचक्षुरादिभिरादित्यादिज्योतिर्वद्दृश्यत्वादित्ययंहेतुर्ज्योतिरंतर
स्यांतस्थत्वंवैलक्षण्यंचनसाधयतिचक्षुरादिभिरनैकांतिकत्वादितितदसच्चक्षुरादिकरणेष्वान्यत्वेसतीतिहेतोर्विशेषणत्वोपपत्तेःकार्य
करणसंघातधर्मत्वंज्योतिषइतियदुक्तंतन्न॥अनुमानविरोधात्॥आदित्यादिज्योतिर्वत्कार्यकरणसंघातादर्थांतरंज्योतिरिति
ह्यनुमानमुक्तंतेनविरुध्यतइयंप्रतिज्ञाकार्यकरणसंघातधर्मत्वंज्योतिषइतितद्भावभावित्वंत्वसिद्धंमृतेदेहेज्योतिषोऽदर्शनात्सामा
न्यतोदृष्टस्यानुमानस्याप्रामाण्येसतिपानभोजनादिसर्वव्यवहारलोपप्रसंगःसचानिष्टः॥ ग्राहकमनुग्राह्यसजातीयमनुग्राहकत्वादादि

त्यवदित्यपास्तं॥संप्रत्यतींद्रियत्वहेतोरनैकांत्यंपरोक्तमनुभाष्यदूषयति॥यत्पुनरित्यादिना॥विमतंज्योतिःसंघातधर्मस्तद्भावभावित्वाद्रूपादिवदि
त्युक्तमनूद्यनिराकरोति॥कार्येति॥अनुमानविरोधमेवसाधयति॥आदित्यादीति॥कालात्ययापदेशमुक्त्वाहेत्वसिद्धिंदोषांतरमाह॥तद्भावेति॥अद
र्शनादितिच्छेदः॥यत्पुनर्विशेषेनुगमाभावःसामान्येसिद्धसाध्यतेत्यनुमानदूषणमभिप्रेत्यसामान्यतोदृष्टस्यचेत्याद्युक्तंतद्दूषयति॥सामान्यतोदृष्टस्येति॥

किमित्यनुमानाप्रामाण्ये सर्वव्यवहारहानिरित्याशंक्याह॥ पानेति॥ तत्सामान्यात्पानत्वभोजनत्वादिसादृश्यादितियावत्॥ पानभोजनाद्युपादानं दृश्यमान मित्युक्तं विशदयति॥ दृश्यंते हीति॥ तादर्थ्येन क्षुत्पिपासादिनिवृत्त्युपायभोजनपानाद्यर्थत्वेनेतियावत्॥ देहस्यैव द्रष्टृत्वमित्युक्तमनूद्य पूर्वोक्तं परिहारं स्मारयति॥ यदुक्तमित्यादिना॥ ज्योतिरंतरमादित्यादिवदनात्मेत्युक्तं प्रत्याह॥ अनेनेति॥ संघातादेर्द्रष्टृत्वनिराकरणेनेतियावत्॥ देहस्य कादाचित्कं दर्शनादिमत्वं स्वाभाविकमित्यत्र परोक्तं दृष्टांतमनुभाष्य निराचष्टे॥ यत्तु नरित्यादिना॥ सिद्धांतिनापि स्वभाववादस्य क्वचिदेष्टव्यत्वमुपदिष्टमनूद्य दू

पानभोजनादिषु हि क्षुत्पिपासादिनिवृत्तिमुपलब्धवतस्तत्सामान्यात्पानभोजनाद्युपादानं दृश्यमानं लोके न प्राप्नोति॥ दृश्यंते ह्युपलब्धपानभोजनाः सामान्यतः पुनः पानभोजनांतरैः क्षुत्पिपासादिनिवृत्तिमनुमिन्वंतस्तादर्थ्येन प्रवर्त्तमानाः। यदुक्तमयमेव तु देहो दर्शनादिक्रियाकर्त्तेति तत्स्वप्नेऽयमेव परिहृतः। स्वप्नस्मृत्योर्देहाद्व्यतिरिक्तभूताद्द्रष्टेत्यनेनैव ज्योतिरंतरस्यानात्मत्वमपि प्रत्युक्तं॥ यत्तु नः खद्योतादेः कादाचित्कं प्रकाशाप्रकाशकत्वं तदस्त्यस्यावयवसंकोचविकासनिमित्तत्वात्प्रकाशाप्रकाशकत्वस्य यत्तु नरुक्तं धर्माधर्मयोरवश्यं फलदातृत्वं स्वभावोऽभ्युपगंतव्य इति तदभ्युपगमे भवतः सिद्धांतहानादेतेनानवस्थादोषः प्रत्युक्तस्तस्मादस्ति व्यतिरिक्तं चांतःस्थं ज्योतिरात्मेति॥ ६॥ १७॥ यद्यपि व्यतिरिक्तत्वादि सिद्धं तथापि समानजातीयानुग्राहकत्वदर्शननिमित्तभ्रांत्याकरणानामेवान्यतमो व्यतिरिक्तो वेत्यविवेकतः पृच्छतिकतमइ ८

षयति॥ यत्तु नरिति॥ धर्मादेर्यदि हेत्वंतराधीनं फलदातृत्वं तदा हेत्वंतरस्यापि हेत्वंतराधीनफलदातृत्वमित्यनवस्थेत्युक्तं प्रत्याह॥ एतेनेति॥ सिद्धांतविरोधप्रसंजनेनेतियावत्॥ लोकायतमतासंभवे स्वपक्षमुपसंहरति॥ तस्मादिति॥ ६॥ नन्वात्मज्योतिः संघाताद्व्यतिरिक्तमंतःस्थं चेति साधितं तथा च कथं कतम आत्मेति पृच्छ्यतेतत्राह॥ यद्यपीति॥ अनुग्राह्येण देहादिना समानजातीयस्यादित्यादेरनुग्राहकत्वदर्शनान्निमित्तादनुग्राहकत्वाविशेषादात्मज्योतिरपि समानजातीयं देहादिने

अविवेकिनो निरूढदृष्ट्यभावादित्यर्थः॥ व्यतिरेकसाधकस्य न्यायस्य दर्शितत्वात्कुतो भ्रांतिरित्याशंक्याह॥ न्यायेति॥ भ्रांतिनिमित्ताविवेककृतं प्रश्नमुक्त्वा प्रकारांतरेण प्रश्नमुत्थापयति॥ अथवेति॥ प्रश्नाक्षराणि व्याचष्टे॥ कतमोसावितिति॥ ननु ज्योतिर्निमित्तो व्यवहारो मयोक्तो न त्वात्मेत्याशंक्याह॥ येनेति॥ आत्मनैवायं ज्योतिषेत्युक्तत्वादासनादिनिमित्तं ज्योतिरात्मेत्यर्थः॥ प्रकारांतरेण प्रश्नं व्याकरोति॥ अथवेति॥ संप्रश्नमर्थं कथयति॥ सर्वइति॥ योयंत्वयाभिप्रेतो विज्ञानमयः स प्रा

न्यायसूक्ष्मतायादुर्विज्ञेयत्वादुपपद्यते भ्रांतिरथवा शरीरव्यतिरिक्ते सिद्धेपि करणानि सर्वाणि विज्ञानवंतीव विवेकत आत्मनोऽनुपलब्धत्वादतो हं पृच्छामि कतम आत्मेति कतमोसौ देहेंद्रियप्राणमनःसु यस्त्वयोक्त आत्मा येन ज्योतिषास्त इत्युक्तमथवा योयमात्मा त्वयाभिप्रेतो विज्ञानमयः सर्व इमे प्राणा विज्ञानमया इवैषु प्राणेषु कतमो यथा समुदितेषु ब्राह्मणेषु सर्वे इमे तेजस्विनः कतम एषु षडंगविदिति पूर्वस्मिन्व्याख्याने कतम आत्मे

कतम आत्मेति योयं विज्ञानमयः प्राणेषु ॥

त्येतावदेव प्रश्नवाक्यं योयं विज्ञानमय इति प्रतिवचनं द्वितीये तु व्याख्याने प्राणेष्वित्येवमंतं प्रश्नवाक्यमथवा सर्वमेव प्रश्नवाक्यं विज्ञानमयो हृद्यंतर्ज्योतिः पुरुषः कतम इत्येतदंतं योयं विज्ञानमय इत्येतस्य शब्दस्य निर्धारितार्थविशेषविषयत्वं कतम आत्मेति चेतिशब्दस्य प्रश्नवाक्यपरिसमाप्त्यर्थत्वं व्यवहितसंबंधमंतरेण युक्तमिति कृत्वा कतम आत्मेत्येवमंतमेव प्रश्नवाक्यं

णेषु मध्ये कतमः स्यात्तेपि हि विज्ञानमया इव भांतीतीति योजना॥ उक्तमर्थं दृष्टांतेन बुद्धावारोपयति॥ यथेति॥ व्याख्यानयोरवांतरविभागमाह॥ पूर्वस्मिन्नित्यादिना॥ हृदीत्यादि प्रतिवचनमिति शेषः॥ पक्षांतरमाह॥ अथवेति॥ सर्वस्य प्रश्नत्वेवाक्यं योजयति॥ विज्ञानेति॥ स समानः सन्नित्यादि प्रतिवचनमिति शेषः॥ द्वितीयतृतीयपक्षयोरस्रुचिं सूचयन्नाद्यं पक्षमंगीकरोति॥ योयमिति॥ यस्त्वया पृष्टः सोयमित्यात्म

देहद्वयवच्छेदार्थंविशिनष्टि॥विज्ञानमयइति॥विज्ञानशब्दार्थमाचक्षाणस्तस्यायत्वंप्रकटयति॥बुद्धीति॥बुद्धिरेवविज्ञानंविज्ञायतेनेनेतिव्युत्पत्तेस्तेनोपाधि
नासंपर्कएवाविवेकस्तस्मादितियावत्॥तत्संपर्केप्रमाणमाह॥बुद्धिविज्ञानेति॥तस्माद्विज्ञानमयइतिशेषः॥ननुचसुमेयःश्रोत्रमयइत्यादिहित्वाविज्ञानम
यइत्येवकस्मादुपदिश्यतेतत्राह॥बुद्धिर्हीति॥तस्याःसाधारणकरणत्वेप्रमाणमाह॥मनसाहीति॥मनसःसर्वार्थत्वंसमर्थयते॥बुद्धीति॥किमर्थानित
र्हिचक्षुरादीनिकरणानीत्याशंक्याह॥द्वारमात्राणीति॥बुद्धेःसतिप्राधान्येफलितमाह॥तस्मादिति॥विज्ञानंपरंब्रह्मतत्स्वकृत्तिकोजीवोविज्ञानमयइतिभ

योयमित्यादिपरंसर्वमेवप्रतिवचनमितिनिश्चीयते योयमित्ययमित्यात्मनःप्रत्यक्षत्वान्निर्देशोविज्ञानमयोविज्ञानप्रायोबुद्धिविज्ञानोपाधिसं
पर्काविवेकाद्विज्ञानमयइत्युच्यते॥बुद्धिविज्ञानसंयुक्तएवहियस्मादुपलभ्यतेराहुरिवचंद्रादित्यसंपृक्तोबुद्धिर्हिसर्वार्थकरणंतमसीवप्रदी
पःपुरोवस्थितोमनसाह्येवपश्यतिमनसाशृणोतीतिह्युक्तंबुद्धिविज्ञानालोकविशिष्टमेवहिसर्वंविषयजातमुपलभ्यतेपुरोवस्थितप्रदी
पालोकविशिष्टमिवहितमसिद्वारमात्राणित्वन्यानिकरणानिबुद्धेः॥तस्मात्तेनैवविशेष्यतेविज्ञानमयइतियेषांपरमात्मविज्ञप्तिविकार
इतिव्याख्यानंतेषांविज्ञानमयोमनोमयइत्यादौविज्ञानमयशब्दस्यान्यार्थदर्शनादश्रौतार्थतावसीयतेसंदिग्धश्चपदार्थोन्यत्रनिश्चितप्र
योगदर्शनान्निर्धारयितुंशक्योवाक्यशेषा

त्प्रपंचैरुक्तमनुवदति॥येषामिति विज्ञानमयादिग्रंथेमयटोनविकारार्थतेतितैरेवोच्यतेतत्रमनः
समभिव्याहाराद्विज्ञानंबुद्धिर्नचात्मातद्विकारस्तस्मादस्मिन्प्रयोगेमयटोविकारार्थत्वंवदतांस्वोक्तिविरोधःस्यादितिदूषयति॥तेषामिति॥कथंविज्ञान
मयपदार्थनिर्णयार्थंप्रयोगांतरमनुश्रीयतेतत्राह॥संदिग्धश्चेति॥यथापुरोडाशंचतुर्धाकृत्वाबर्हिषदंकरोतीतिपुरोडाशमात्रचतुर्धाकरणवाक्यमेकार्थसं
बंधिनाशास्त्रांतरीयेणाग्नेयंचतुर्धाकरोतीत्यनेनविशेषविषयतयानिश्चितार्थेनाग्नेयएवपुरोडाशेव्यवस्थाप्यते यथाचाक्ताःशर्कराउपदधातीत्यत्रकेनाक्तेत्यस

आत्मविकारत्वेमोक्षानुपपत्त्याह्यबाधितन्यायाद्यविज्ञानमयपदार्थेनिश्चयइत्याह॥निश्चितेति॥यदुक्तंनिर्णयोवाक्यशेषादितितदेवव्यनक्ति॥सधीरिति
चेति॥आधाराद्यर्थासप्तमीदृष्टासाकथंव्यतिरेकप्रदर्शनार्थेत्याशंक्याह॥यथेति॥भवत्वत्रापिसामीप्यलक्षणासप्तमीतथापिकथंव्यतिरेकप्रदर्शनमित्या
शंक्याह॥प्राणेषुहीति॥फलितंसप्तम्यर्थमभिनयति॥प्राणेष्विति॥तेषुसमीपस्थोपिकथंतेभ्योव्यतिरिच्यतेतत्राह॥योहीति॥विशेषणांतरमादायव्याव
र्त्यांशंकामुक्त्वापुनरवतार्यव्याकरोति॥हृदीत्यादिना॥विशेषणांतरस्यतात्पर्यमाह॥अंतरितीति॥ज्योतिःशब्दार्थमाह॥ज्योतिरिति॥तस्यज्योतिष्ट्वंस्पष्ट

निश्चितन्यायबलाद्धसधीरितिचोत्तरत्रपाठाद्धृद्यंतरितिचवचनाद्युक्तंविज्ञानप्रायत्वमेवप्राणेष्वितिव्यतिरेकप्रदर्शनार्थासप्तमीयथावृक्षेषु
पाषाणइतिसामीप्यलक्षणाइतिप्राणेषुहिव्यतिरेकाव्यतिरेकतासंदिह्यतेआत्मनःप्राणेषुप्राणेभ्योव्यतिरिक्तइत्यर्थःयोहियेषुभवतिस
तद्व्यतिरिक्तोभवत्येवयथापाषाणेषुवृक्षः॥हृदितत्रैतत्स्यात्प्राणेषुप्राणजातीयैवबुद्धिःस्यादित्यतआहहृद्यंतरितिहृच्छब्देनपुंडरीका
कारोमांसपिंडस्तात्स्थ्यात्बुद्धिर्हृत्तस्यांहृदिबुद्धौअंतरितिबुद्धिवृत्तिव्यतिरेकप्रदर्शनार्थंज्योतिरवभासात्मकत्वादात्मोच्यतेतेनह्यव
भासकेनात्मनाज्योतिषास्तेपल्ययतेकर्मकुरुतेचेतनावानिवह्ययंकार्यकरणपिंडोयथादित्यप्रकाशस्थोघटोयथावामरकतादिमणिःक्षी
रादिद्रव्येप्रक्षिप्तःपरीक्षणायात्मच्छायमेवतत्क्षीरादिद्रव्यंकरोतितादृगेतदात्मज्योतिर्बुद्धेरपिहृदयात्सूक्ष्मत्वाद्धृद्यंतरस्थमपिहृदयादिकंका
र्यकरणसंघातंचैकीकृत्यात्मज्योतिश्छायंकरोति॥पारंपर्येण

यति॥तेनेति॥आत्मज्योतिषाव्याप्तस्यकार्यकरणसंघातस्यव्यवहारक्षमत्वेदृष्टांतमाह
॥यथेति॥चेतनावानिवेत्युक्तंदृष्टांतेनोपपादयति॥यथावेति॥हृदयंबुद्धिस्ततोपिसूक्ष्मत्वादात्मज्योतिस्तदंतस्थमपिहृदयादिकंसंघातंचसर्वमेकी
कृत्यस्वच्छायंकरोतीतिकृत्वायथोक्तमणिसादृश्यमुचितमितिदार्ष्टांतिकेयोजना॥कथमिदमात्मज्योतिःसर्वमात्मच्छायंकरोतितत्राह॥पारंपर्येणेति॥

विषयादिषुप्रत्यगात्मांतेषूत्तरोत्तरसूक्ष्मतारतम्यात्तेष्वेवात्मादिविषयांतेषुस्थूलतारतम्याच्चप्रतीचःसर्वस्मादंतरतमत्वात्तत्रतत्रस्वाकारहेतुत्वमस्ती
त्यर्थः॥बुद्धेरात्मछायत्वंसमर्थयते॥बुद्धिस्तावदिति॥लौकिकपरीक्षकाणांबुद्धावात्माभिमानभ्रांतिमुक्तेर्थेप्रमाणयति॥तेनहीति॥बुद्धेःपश्चान्मनस्य
पिच्छायतेत्यत्रहेतुमाह॥बुद्धीति॥आत्मनःसर्वावभासकत्वमुक्तमुपसंहरति॥एवमिति॥आत्मनःसर्वावभासकत्वेकिमितिकस्यचित्क्वचिदेवात्मधीरि

सूक्ष्मस्थूलतारतम्यात्सर्वांतरतमत्वाद्बुद्धिस्तावत्स्वच्छत्वादानंतर्याच्चात्मचैतन्यज्योतिःप्रतिच्छायाभवतितेनहिविवेकिनामपितत्रात्मा
भिमानबुद्धिःप्रथमंततोप्यानंतर्यान्मनसिचैतन्यावभासता॥बुद्धिसंपर्कात्ततइंद्रियेषुमनःसंयोगात्ततोनंतरंशरीरेइंद्रियसंपर्कादेवंपा
रंपर्येणकृत्स्नंकार्यकरणसंघातमात्मचैतन्यंस्वरूपज्योतिषावभासयतितेनहिसर्वस्यलोकस्यकार्यकरणसंघातेतद्वृत्तिषुवाऽनियता

हृद्यंतर्ज्योतिः पुरुषः ॥

त्माभिमानबुद्धिर्यथाविवेकंजायते॥तथाचभगवतोक्तंगीतासु॥यथाप्रकाशयत्येकःकृत्स्नंलोकमिमंरविः॥क्षेत्रंक्षेत्रीतथाकृत्स्नंप्रकाशय
तिभारत॥यदादित्यगतंतेजइत्यादिच॥नित्योनित्यानांचेतनश्चेतनानामितिचकाठके॥तमेवभांतमनुभातिसर्वंतस्यभासासर्वमिदंविभा
तीतिच॥येनसूर्यस्तपतितेजसेद्धइतिचमंत्रवर्णात्स्याशंक्याह॥तेनहीति॥बुध्यादेरुक्तक्रमेणात्मछायत्वंतच्छब्दार्थः॥आत्मज्योतिषःसर्वावभासक
त्वेलोकप्रसिद्धिरेवनप्रमाणंकिंतुभगवद्वाक्यमपीत्याह॥तथाचेति॥अनाशिनामयमनाशीचेतनश्चेतयितारोब्रह्मादयस्तेषामयमेवचेतनोयथोदकादीनामन
ग्नीनामग्निनिमित्तंदाहकत्वंतथात्मनिमित्तमेवचेतयितृत्वमन्येषामित्याह॥नित्यइति॥अनुगमनवदनुभानंस्वगतयाभासास्यादितिशंकांप्रत्याह॥तस्येति॥ये

ज्योतिःशब्दव्याख्यानमुपसंहरति॥तेनेति॥हृद्यंतःस्थितोयमात्मासर्वावभासकत्वेनज्योतिर्भवतीतियोजना॥पदांतरमादायव्याचष्टे॥पुरुषइति॥आदित्या दिज्योतिषःसकाशादात्मज्योतिषिविशेषमाह॥निरतिशयंचेति॥प्रतिवचनवाक्यार्थमुपसंहरति॥सएषइति॥ससमानःसन्नित्याद्यवतारयितुंवृत्तंकी र्तयति॥बाह्यानामिति॥तर्हिबाह्यज्योतिःसद्भावावस्थायामकिंचित्करमात्मज्योतिरित्याशंक्याह॥यदात्विति॥व्यतिरेकमुखेनोक्तमर्थमन्वयमुखेनक थयति॥आत्मज्योतिरिति॥आत्मज्योतिषःसर्वानुग्राहकत्वेप्रमाणमाह॥यदेतदिति॥सर्वमंतःकरणादिप्रज्ञानेत्रमित्यैतरेयकेश्रवणाद्युक्तमात्मज्योति

तेनायंहृद्यंतर्ज्योतिःपुरुषआकाशवत्सर्वगतत्वात्पूर्णइतिपुरुषोनिरतिशयंचास्यस्वयंज्योतिष्ट्वंसर्वावभासात्मकत्वात्स्वयमन्यानवभा स्यत्वाच्चसएषपुरुषःस्वयमेवज्योतिःस्वभावोयंत्वएकसिकतमआत्मेतिबाह्यानांज्योतिषांसर्वकरणानुग्राहकाणांप्रत्यस्तमयेंतःकरणद्वा रेणहृद्यंतर्ज्योतिःपुरुषोऽनुग्राहकःकरणानामित्युक्तंयदात्वपिबाह्यकरणानुग्राहकाणामादित्यादिज्योतिषांसद्भावस्तदाप्यादित्यादिज्योति षांपरार्थत्वात्कार्यकरणसंघातस्यचैतन्येनस्वार्थानुपपत्तिःस्वार्थज्योतिषआत्मनोनुग्रहाभावेऽयंकार्यकरणसंघातोनव्यवहारायकल्पते आत्मज्योतिरनुग्रहेणैवहिसर्वदासर्वःसंव्यवहारोयदेतत्हृदयंमनश्चैतत्संज्ञानमित्यादिश्रुत्यंतरात्साभिमानोहिसर्वःप्राणिसंव्यवहारोभि मानहेतुंचसरकृतमणिरष्टातेनावोचामयद्यप्येवमेतत्तथापिजाग्रद्विषयेसर्वकरणगोचरत्वादात्मज्योतिषोबुध्यादिबाह्याभ्यंतरकार्यक रणव्यवहारसन्निपातव्याकुलत्वान्नशक्यतेंतर्ज्योतिरात्माख्यंमुंजेषीकावन्निष्कृष्यदर्शयितुमित्यतःस्वप्नदिदर्शयिषुःप्रक्रमते॥

षःसर्वानुग्राह कत्वमित्यर्थः॥किंच॥अचेतनानांकार्यकरणानांचेतनत्वसिध्यनुपपत्त्यासदाचिदात्मव्याप्तिरेष्टव्येत्याह॥साभिमानोहीति॥कथमसंगस्यप्रतीचःसर्वत्रबु ध्यादावहंमानइत्याशंक्याह॥अभिमानेति॥वृत्तमनूद्योत्तरवाक्यमवतारयति॥यद्यपीति॥यथोक्तमपिप्रत्यग्ज्योतिर्जागरितेदर्शयितुमशक्यमितिश्रुतिःस्व

स्वप्नेनिष्कृष्टंज्योतिरितिशेषः॥सदृशःसन्ननुसंचरतीतिसंबंधः॥सादृश्यस्यप्रतियोगिसापेक्षत्वमपेक्ष्यपृच्छति॥केनेति॥उत्तरं॥प्रकृतत्वादिति॥प्राणाना मपितुल्यंतदितिचेत्तत्राह॥सन्निहितत्वाच्चेति॥हेतुद्वयंसाधयति॥हृदीत्यादिना॥प्रकृतत्वादिफलमाह॥तस्मादिति॥सामान्यंप्रश्नपूर्वकंविशदयति ॥किंपुनरित्यादिना॥विवेकतोऽनुपलब्धिंव्यक्तीकर्तुंबुद्धिज्योतिषोःस्वरूपमाह॥अवभास्येति॥अवभासकत्वेदृष्टांतमाह॥आलोकवदिति॥तथापिकथं

सस्समानःसन्नुभौलोकावनुसंचरतियःपुरुषःस्वयमेवज्योतिरात्मासस्समानःसदृशःसन्केनप्रकृतत्वात्संनिहितत्वाच्चहृदयेनहृदितिहृ च्छब्दवाच्याबुद्धिःप्रकृतासन्निहिताचतस्मात्तयैवसामान्यंकिंपुनःसामान्यमस्यमहिषवद्विवेकतोऽनुपलब्धिरवभास्याबुद्धिरवभासकंत दात्मज्योतिरालोकवदवभास्यावभासकयोर्विवेकतोऽनुपलब्धिःप्रसिद्धाविशुद्धत्वाद्ध्यालोकोऽवभास्येनसदृशोभवतियथारक्तमवभासय

सस्समानः

न्रक्तसदृशोरक्ताकारोभवतियथाहरितंनीलंलोहितंवावभासयन्नालोकस्तत्सदृशस्तत्समानोभवतितथाबुद्धिमवभासयन्बुद्धिद्वारेणकृ त्स्नंक्षेत्रमवभासयतीत्युक्तंमरकतमणिनिदर्शनेन॥तेनसर्वेणसमानोबुद्धिसामान्यद्वारेणसर्वमयइतिचात्तएववक्ष्यतितेनासौकुतश्चित्प्र विभज्यमुंजेषीकावत्स्वेनज्योतीरूपेणदर्शयितुंनशक्यते विवेकतोऽनुपलब्धिस्तत्राह॥अवभास्येति॥प्रसिद्धिमेवप्रकटयति॥विशुद्धत्वाद्धीति॥उक्तम र्थंदृष्टांतेनबुद्धावारोपयति॥यथेत्यादिना॥दृष्टांतगतमर्थंदार्ष्टांतिकेयोजयति॥तथेति॥पुनरुक्तिंपरिहरति॥इत्युक्तमिति॥सर्वावभासकत्वेकथंबुध्यैवसाम्य मित्याशंक्याह॥तेनेति॥सर्वावभासकत्वंतच्छब्दार्थः॥किमर्थंतर्हिबुध्यासामान्यमुक्तमित्याशंक्यद्वारत्वेनेत्याह॥बुद्धीति॥आत्मनःसर्वेणसमानत्वेवाक्यशेष

वाक्यशेषसिद्धेर्थेलोकभ्रांतेर्गमकत्वमाह॥तेनेति॥सर्वमयत्वेनेति यावत्॥आत्मानात्मनोर्विवेकदर्शनस्याशक्यत्वेपरस्पराध्यासस्तद्धर्माध्यासश्चस्याततश्चलोकानांमोहोभवेदित्याह॥इतिसर्वेति॥धर्मिविषयंमोहमभिनयति॥अयमिति॥धर्मविषयंमोहंदर्शयति॥एवंधर्मेति॥तदेवस्फुटयति॥कर्तेत्यादिना॥विकल्पैः सर्वोलोकोमोमुह्यतेइतिसंबंधः॥ससमानःसन्नित्यस्यार्थमुक्त्वाऽवशिष्टंभागंव्याकरोति॥अतइत्यादिना॥आत्मनःस्वाभाविकमुभयलोकसंचरणमित्याशं

इतिसर्वव्यापारंतन्नाध्यारोप्यनामरूपगतंज्योतिर्धर्मंचनामरूपयोर्नामरूपेचात्मज्योतिषिसर्वोलोकोमोमुह्यतेऽयमात्मानायमात्माएवंधर्मानैवंधर्माकर्ताऽकर्ताशुद्धोऽशुद्धोबुद्धोमुक्तःस्थितोगतआगतोस्तिनास्तीत्यादिविकल्पैरतःसमानःसन्नुभौलोकौप्रतिपन्नप्रतिपन्नव्याविहलोकपरलोकावनुपात्तदेहेंद्रियादिसंघातत्यागान्योपादानसंतानप्रबंधशतसंन्निपातैरनुक्रमेणसंचरतिधीसादृश्यमेवोभयलोकसंचरणहेतुर्नस्वतइतितत्र

सन्नुभौलोकावनुसंचरतिध्यायतीवलेलायतीव॥

तावन्नामरूपोपाधिसादृश्यंभ्रांतिनिमित्तंयत्तदेवहेतुर्नस्वतइत्येतदुच्यते॥यस्मात्ससमानःसन्नुभौलोकावनुक्रमेणसंचरतितदेवप्रत्यक्षमित्येतद्दर्शयतियतोध्यायतीवध्यानव्यापारंकरोतीवचिंतयतीवध्यानव्यापारवतींबुद्धिंसतात्स्थ्येनचित्स्वभावज्योतीरूपेणावभासयंस्तत्सदृशस्तत्समानःसन्ध्यायतीवालोकवदेवातोभवतिचिंतयतीवेतिभ्रांतिर्लोकस्यनतुपरमार्थतोध्यायति॥ व्यानंतरंवाक्यमादत्ते॥तत्रेति॥आत्मासप्रम्यर्थः॥यतःशब्दोवस्यमाणतःशब्देनसंबध्यते॥असत्रोस्यमर्थमुक्त्वावाक्यार्थमाह॥ध्यानेति॥ध्यानवतींबुद्धिंव्याप्तश्चिदात्माध्यायतीवेत्यत्रदृष्टांतमाह॥आलोकवदिति॥यथाखल्वालोकोनीलंपीतंवाविषयंव्याप्नुवानस्तदाकारोदृश्यतेतथायमपिध्यानवतींबुद्धिंभासयन्ध्यानवानिवभवतीत्यर्थः॥यथोक्तबुध्यवभासकत्वमुक्तंहेतुमनू

अँवभासयन्१

बुद्धिधर्माणामात्मन्यौपाधिकत्वेन मिथ्यात्वमुक्त्वा प्राणधर्माणामपि तत्र तथात्वं कथयति॥ तथेति॥ आत्मनि चलनस्यौपाधिकत्वं साधयति॥ तेष्विति॥ इवशब्दसामर्थ्यसिद्धमर्थमाह॥ नत्विति॥ सहीत्याद्यनंतरवाक्यमाकांक्षाद्वारेणोत्थापयति॥ कथमित्यादिना॥ तच्छब्दो बुद्धिविषयः॥ संचरणादीत्यादिशब्दो ध्यानादि

तथा लेलायतीवात्यर्थं चलतीव तेष्वेव करणेषु बुध्यादिषु वायुषु वा चलत्सु तदवभासकत्वात्तत्सदृशं तदिति लेलायतीव न तु परमार्थतश्चलनधर्मकं तदात्मज्योतिः कथं पुनरेतदवगम्यते तत्समानत्वं भ्रांतिरेवोभयलोकसंचरणादिहेतुर्न स्वत इत्यस्यार्थस्य प्रदर्शनाय हेतुरुपदिश्यते स आत्मा हि यस्मात्स्वप्नो भूत्वा स यया धिया समानः सा धीर्यद्यद्भवति तत्तदेवासावपि भवतीव॥ तस्माद्यदासौ स्वप्नो भवति स्वापवृत्तिं प्रतिपद्यते धीस्तदा सोपि स्वप्नवृत्तिं प्रतिपद्यते यदा धीर्जिजागरिषति तदासावप्यत आह स्वप्नो भूत्वा स्वप्नवृत्तिमवभासयन्धियः स्वापवृत्त्याकारो भूत्वा इमं लोकं जागरि

सहि स्वप्नो भूत्वेमं लोकमतिक्रामति मृत्यो रूपाणि॥१८॥

तव्यवहारलक्षणं कार्यकरणसंघातात्मकं लौकिकशास्त्रीयव्यवहारास्पदमतिक्रामत्यतीत्य क्रामति विविक्तेन स्वेनात्मज्योतिषा स्वप्नात्मिकां धीवृत्तिमवभासयन्नवतिष्ठते यस्मात्तस्मात्स्वयंज्योतिःस्वभावत एवासौ विशुद्धः सन्कर्तृक्रियाकारकफलशून्यः परमार्थतो धीसादृश्यमेवतूभयलोकसंचारादिसंव्यवहारभ्रांतिहेतुर्मृत्यो रूपाणि मृत्युः कर्माविद्यादिर्न तस्यान्यद्रूपं स्वतः कार्यकरणान्येवास्य रूपाण्यतस्तानि मृत्यो रूपाण्यतिक्रामति क्रियाफलाश्रयाणि॥ व्यापारसंग्रहार्थः॥ स्वप्नो भूत्वा लोकमतिक्रामतीति संबंधः॥ कथमात्मा स्वप्नो भवतीति तत्राह॥ सययेति॥ उक्तेर्थे वाक्यमवतार्य व्याकरोति॥ आहेति॥ उक्तहेतुमनूद्य फलितमाह॥ यस्मादित्यादिना॥ कार्यकरणातीतत्वात्स्वयमात्मनो न स्वतः संचारित्वमित्यत आह॥ मृत्योरिति॥

रूपाण्यतिक्रामतीति वृत्तं॥

ध्य

क्रियास्तत्फलानि चाश्रयो येषां यानि वा क्रियाणां तत्फलानां चाश्रयस्तानीति यावत्॥ बुध्यवभासकं ज्योतिरात्मेत्युक्तमयुक्तं शाक्यः शंकते॥ नन्विति॥ प्रमाणादति रिक्तात्मोपलब्धिरित्याशंक्य प्रत्यक्षमनुमानं चेति प्रमाणद्वैविध्यनियममभिप्रेत्य ताभ्यामतिरिक्तात्मानुपलंभान्नासावस्तीत्याह॥ धीव्यतिरेकेणेति॥ तत्र दृ ष्टांतमाह॥ यथेति॥ घटादिरालोकश्चेत्युभयोर्मिथः संसृष्टयोर्विवेकेनानुपलंभवदवभास्यावभासकयोर्बुध्यात्मनोर्भेदेऽपि पृथगनुपलंभादैक्यमवभास ते॥ वस्तुतस्तु तयोरन्यत्वमेवेति शंकामनुवदति यद्यपीति॥ वैषम्यप्रदर्शनेनोत्तरमाह॥ तत्रेति॥ दृष्टांतः सप्तम्यर्थः॥ घटादेरन्यत्वेनेति संबंधः॥ ज्योतिरंतरंना

ननु नास्त्येव धिया समानमन्यद्धियोवभासकमात्मज्योतिर्धीव्यतिरेकेण प्रत्यक्षेण वाऽनुमानेन वानुपलंभाद्यथान्यात्कालएव हि तौ या धीर्यत्ववभास्यावभासकयोरन्यत्वेऽपि विवेकानुपलंभात्सादृश्यमिति घटाद्यालोकयोस्तत्र भवत्वन्यत्वेनालोकस्योपलंभाद्घटादेः संश्लिष्टयोः सादृश्यं भिन्नयोरेव॥ न च तथेह घटादेरिव धियोवभासकं ज्योतिरंतरं प्रत्यक्षेण वानुमानेन वोपलभामहे धीरेव हि चित्स्वरूपावभासकत्वेन स्वाकारविषयाकारा च तस्मान्नानुमानतो नापि प्रत्यक्षतो धियोवभासकं ज्योतिः शक्यते प्रतिपादयितुं व्यतिरिक्तं यदपि दृष्टांतरूपमभिहितं अवभास्यावभासकयोर्भिन्नयोरेव घटाद्यालोकयोः संयुक्तयोः सादृश्यमिति तत्राप्यभ्युपगममात्रमस्माभिरुक्तं न तु तत्र घटाद्यवभास्यावभासकौ भिन्नौ परमार्थतस्तु घटादिरेवावभासात्मकः सालोकोऽन्योन्यो हि घटादिरुत्पद्यते॥ विज्ञानमात्रमेव सालोकघटादिविषयाकारमवभासते

स्ति चेत्कुतो ग्राह्यग्राहकसंवित्तिरित्याशंक्याह॥ धीरेवेति॥ बाह्यार्थवादिनोः सौत्रांतिकवैभाषिकयोरभिप्रायमुपसंहरति॥ तस्मान्नेति॥ इदानीं विज्ञानवादि बाह्या र्थवादिभ्यामभ्युपगतं दृष्टांतमनुवदति॥ यदपीति॥ बाह्यार्थवादप्रक्रिया न सुगताभिप्रेतेति दूषयति॥ तत्रेति॥ उभयदृष्टांतस्वरूपं सप्तम्यर्थः॥ ननु घटादेरवभा स्यादालोकोवभासको भिन्नोलक्ष्यते नेत्याह॥ परमार्थतस्त्विति॥ तस्यस्थायित्वं व्यावर्तयति॥ अन्योन्य इति॥ प्रतीतं विषयप्राधान्यं व्यावर्त्तयन्नुक्तमेव व्यनक्ति॥ विज्ञा

विज्ञानवादेयथोक्तदृष्टांतराहित्यंफलतीत्याह॥यदेति॥शिष्यबुध्यनुसारेणत्रिविधंबुद्धाभिप्रायमुपसंहरति॥एवमित्यादिना॥परिकल्प्येत्यंतेनबाह्यार्थवाद
मुपसंहृत्यतस्यैवेत्यादिनाविज्ञानवादमुपसंजहार॥तत्रविज्ञानवादोपसंहारंविवृणोतितदाह्येति॥शून्यवादिमतमाह॥तस्यापीति॥तदेवस्फुटयति॥तदपी
ति॥पक्षत्रयेपिदोषंसंभावयति॥सर्वाइति॥कथममूषांकल्पनानांदूषणमित्याशंक्यप्रथमंबाह्यार्थवादिनंप्रत्याह॥तत्रेति॥निर्धारणेसप्तमी॥यत्तुधीरेवाव

यदैवंतदानबाह्योदृष्टांतोस्तिविज्ञानस्वलक्षणमात्रत्वात्सर्वस्यएवंतस्यैवविज्ञानस्यग्राह्यग्राहकाकारतामलंपरिकल्प्यतस्यैवपुनर्विशुद्धिं
परिकल्पयंति॥तद्ग्राह्यग्राहकविनिर्मुक्तंविज्ञानंस्वच्छीभूतंक्षणिकंव्यवतिष्ठतइतिकेचित्॥तस्यापिशांतिंकेचिदिच्छंतिअन्येतदपिविज्ञानं
संवृतंग्राह्यग्राहकांशविनिर्मुक्तंशून्यमेवघटादिबाह्यवस्तुवदित्यपरेमाध्यमिकाआचक्षतेसर्वाएताःकल्पनाबुद्धिविज्ञानावभासकस्यव्यति
रिक्तस्यात्मज्योतिषोऽपन्हवादस्यश्रेयोमार्गस्यप्रतिपक्षभूताःवैदिकस्यतत्रयेषांबाह्योर्थोस्तितान्प्रत्युच्यतेनतावत्स्वात्मानवभासकत्वाद्दृष्टा
देस्तमस्यवस्थितोघटादिस्तावन्नकदाचिदपिस्वात्मनावभास्यतेप्रदीपाद्यालोकसंयोगेनतुनियमेनैवावभास्यमानोदृष्टः॥सालोकोघटइति
संश्लिष्टयोरपिघटालोकयोरन्यत्वमेवपुनःपुनःसंश्लेषेविश्लेषेचविशेषदर्शनाद्रज्जुघटयोरिवअन्यत्वेचव्यतिरिक्तावभासकत्वंनस्वात्मनैव
स्वमात्मानमवभासयति॥ननुप्रदीपःस्वात्मानमेवभासयन्दृष्टइति भासकत्वेनस्वाकारेतितत्राह॥नेति॥यदवभास्यंतत्स्वातिरिक्तावभास्यंअवभास्यत्वा
द्यथाघटादिअवभास्याचेयंबुद्धिरित्यनुमानाद्बुध्यतिरिक्तःसाक्षीसिध्यतीत्यर्थः॥दृष्टांतंसाधयति॥तमसीति॥तस्यावभासकापेक्षांदर्शयितुंविशेषणं॥सालो
कोघटइति॥संश्लेषावगमान्नास्तिघटस्यव्यतिरिक्तावभास्यमित्याशंक्याह॥संश्लिष्टयोरपीति॥भवत्वन्यत्वंकिंतावतेत्याशंक्याह॥अन्यत्वेचेति॥व्यति
रिक्तावभासकत्वंतादृशावभासकसाहित्यमितियावत्॥अवभासयतिघटादिरितिशेषः॥दृष्टांतस्यसाध्यविकलत्वेपरिहृतेव्यभिचारमाशंकते॥नन्वि

तदेवव्यतिरेकमुखेनाह॥नहीति॥अनैकांतिकत्वंनिगमयति॥तस्मादिति॥प्रदीपस्यपक्षतुल्यत्वान्नव्यभिचारोस्तीतिपरिहरति॥नावभास्यत्वेति॥अथान्या
वभासकत्वात्तस्यनान्यावभास्यत्वमितिचेत्तत्राह॥यद्यपीति॥अवभास्यत्वहेतोरव्यभिचारेफलितमाह॥यदाचेति॥व्यतिरिक्तावभास्यत्वंबुद्धेरितिशेषः॥अ
वभास्यत्वेसत्यपिप्रदीपेस्वातिरिक्तेनैवावभास्यत्वमितिनियमासिद्धेर्व्यभिचारतादवस्थ्यमितिशंकते॥नन्विति॥यदिप्रदीपस्यस्वावभासनात्पूर्वमसन्वि
शेषःसमनंतरकालेस्यात्तदास्वात्मानंभासयतीतिवक्तुंयुक्तंनचसोस्तीतिदूषयति॥नेत्यादिना॥तदेवविवृणोति॥यथेति॥अवभास्यत्वाविशेषादित्यर्थः॥

नहिघटादिवत्प्रदीपदर्शनायप्रकाशांतरमुपाददते लौकिकास्तस्मात्प्रदीपःस्वात्मानंप्रकाशयतिनावभास्यत्वाविशेषाद्यद्यपिप्रदीपोन्यस्याव
भासकःस्वयमवभासात्मकत्वात्तथापिव्यतिरिक्तचैतन्यावभास्यत्वंनव्यभिचरतिघटादिवदेवयदाचैवंतदाव्यतिरिक्तावभास्यत्वंतावदवश्यंभा
विननुयथाघटश्चैतन्यावभास्यत्वेपिव्यतिरिक्तमालोकांतरमपेक्षतेनत्वेवंप्रदीपोन्यदालोकांतरमपेक्षतेतस्मात्प्रदीपोन्यावभास्योपि
सन्नात्मानंघटंचावभासयतिनस्वतःपरतोवाविशेषाभावाद्यथाचैतन्यावभास्यत्वंघटस्यतथाप्रदीपस्यापिचैतन्यावभास्यत्वमविशिष्टं
॥यत्तूच्यतेप्रदीपआत्मानंघटंचावभासयतीतितदसत्॥कस्माद्यस्मादात्मानंनावभासयतितदाकीदृशःस्यान्नहितदाप्रदीपस्यस्वतोवा
परतोवाविशेषःकश्चिदुपलभ्यतेसह्यवभास्योभवतियस्यावभासकसन्निधावसन्निधौचविशेषउपलभ्यतेनहिप्रदीपस्यस्वात्मसन्निधि
रसन्निधिर्वाशक्यःकल्पयितुं॥असतिचकादाचित्केविशेषेआत्मानंप्रदीपःप्रकाशयतीतिमृषैवोच्यते॥ प्रदीपेपरोक्तंविशेषमनुभाष्यदूषयति॥

यत्त्वित्यादिना॥यदाप्रदीपोनस्वात्मानंभासयतितदाऽनवभासमानःस्यादित्याशंक्याह॥नहीति॥विशेषाभावेपिदीपस्यस्वेनैवावभास्यत्वंकिंनस्यादितिचे
त्तत्राह॥सहीति॥प्रदीपस्यविशेषांतराभावेपिस्वात्मसन्निध्यसंनिधीविशेषावित्याशंक्याह॥नहीति॥दीपस्यस्वेनान्येनवास्वस्मिन्विशेषाभावेफलितमा

व्यभिचारनिरासपूर्वकंभास्यत्वानुमानमुपपाद्यानुमानांतरमाह॥चैतन्येति॥यद्व्यंजकंतत्स्वविजातीयव्यंग्यंसूर्यादिव्यंजकंचविज्ञानंतस्माद्विज्ञानव्यतिरि
क्तश्चिदात्मासिध्यतीत्यर्थः॥प्रदीपस्यनस्वावभास्यत्वंकिंतुविजातीयचैतन्यावभास्यत्वमितिस्थितेफलितमाह॥तस्मादिति॥यद्ग्राह्यंतद्ग्राहकांतरग्रा
ह्यंयथादीपोग्राह्यंचेदंविज्ञानमित्यनुमानांतरमाह॥चैतन्येति॥तथापिकथंतद्दिष्टग्राहकसिद्धिरित्याशंक्यविमृशति॥चैतन्यग्राह्यत्वेचेति॥कथंतर्हि
निर्णयस्तत्राह॥इतिसंदिह्यमानइति॥अस्तुलोकानुसारीनिश्चयोलोकस्तुकथमित्याशंक्याह॥तथाचेति॥तथापिकुतोविवक्षितात्मज्योतिस्तत्राह॥

चैतन्यग्राह्यत्वंचघटादिभिरविशिष्टंप्रदीपस्य॥तस्माद्विज्ञानस्यात्मग्राह्यग्राहकत्वे॥नप्रदीपोदृष्टांतः॥चैतन्यग्राह्यत्वंचविज्ञानस्यबाह्य
विषयैरविशिष्टंचैतन्यग्राह्यत्वेचविज्ञानस्यकिंग्राह्यविज्ञानग्राह्यत्वेवकिंवाग्राहकविज्ञानंग्राह्यतेतिसंदिह्यमानेवस्तुनियथान्यत्रदृष्टो
न्यायःकल्पयितुंयुक्तोनतुदृष्टविपरीतः तथाचसतियथाव्यतिरिक्तेनैवग्राहकेणबाह्यानांप्रदीपानांग्राह्यत्वंदृष्टंतथाविज्ञानस्यापिचैतन्यग्रा
ह्यत्वात्प्रकाशकत्वेसत्यपिप्रदीपवद्व्यतिरिक्तचैतन्यग्राह्यत्वंयुक्तंकल्पयितुंनतत्त्वनन्यग्राह्यत्वंयश्चान्योविज्ञानस्यग्रहीतासआत्माज्योतिरंत
रंविज्ञानात्तदानवस्थेतिचेन्नग्राह्यत्वमात्रंहितद्ग्राहकस्यवस्त्वंतरत्वेलिंगमुक्तंन्यायतः॥नत्वेकांततोग्राहकत्वेतद्ग्राहकांतरास्तित्वेवाकदाचि
दपिलिंगंसंभवतितस्मान्नतदनवस्थाप्रसंगः

यश्चेति॥विज्ञानस्यग्राहकांतरग्राह्यत्वेतस्यापिग्राहकांतरापेक्षायामनवस्थाप्रसक्तिरितिशंकते॥त
दानवस्थेतिचेदिति॥कूटस्थबोधस्यविज्ञानसाक्षिणोऽविषयत्वान्नानवस्थेतिपरिहरति॥नेति॥यद्ग्राह्यंतत्स्वातिरिक्तग्राह्यंयथाघटादीतिग्राह्यत्वमात्रंबुद्धि
ग्राहकस्यततोवस्त्वंतरत्वेप्रदीपस्यस्वानवभास्यत्वन्यायेनलिंगमुक्तं॥नचबुद्धिसाक्षिणोग्राह्यत्वमस्तिकूटस्थदृष्टिस्वाभाव्यात्तत्कुतोऽनवस्थेतिउपपादयति॥ग्रा
ह्यत्वमात्रंहीति॥साक्षीस्वातिरिक्तग्राह्योग्राहकत्वाद्बुद्धिवदित्याशंक्याह॥नत्विति॥ग्राहकत्वंहिग्रहणकर्तृत्वंवातत्साक्षित्वंवाआद्येबुद्धिसाक्षिणोऽसमत्वस्याग्रह

द्वितीयेनतस्यग्राहकांतरास्त्वेनकदाचिदपिप्रमाणमस्तितत्कुतोनवस्थेत्यर्थः॥ग्राहकानवस्थांपरिहृत्यकरणानवस्थामाशंकते॥विज्ञानस्येति॥तस्यग्राह्यत्वेचक्षुरादिस्थानीयेनकरणेनभवितव्यंतस्यापिग्राह्यत्वेन्यत्करणमित्यनवस्थांदूषयति॥ननियमाभावादिति॥नियमाभावंसाधयति॥नहीत्यादिना॥वैचित्र्यदर्शनमाकांक्षापूर्वकंस्फुटयति॥कथमित्यादिना॥उभयव्यतिरेकंदर्शयति॥नहीति॥तथापिकथंवैचित्र्यंतत्राह॥घटवदिति॥नियमाभावमुपसंहरति॥तस्मा

विज्ञानस्यव्यतिरिक्तग्राह्यत्वेकरणांतरापेक्षायामनवस्थेतिचेन्ननियमाभावान्नहिसर्वत्रायंनियमोभवतियत्रवस्त्वंतरेणगृह्यतेवस्त्वंतरंतत्र ग्राह्यग्राहकव्यतिरिक्तंकरणांतरंस्यादिति नैकांतेननियंतुंशक्यतेवैचित्र्यदर्शनात्कथंघटस्तावत्स्वात्मव्यतिरिक्तेनात्मनागृह्यतेतत्रप्रदीपादिरालोकोग्राह्यग्राहकव्यतिरिक्तंकरणंनहिप्रदीपाद्यालोकोघटांशश्चक्षुरंशोवाघटवच्चक्षुर्ग्राह्यत्वेपिप्रदीपस्यचक्षुःप्रदीपव्यतिरेकेणान बाह्यमालोकस्थानीयंकिंचित्करणांतरमपेक्षतेतस्मान्नैवनियंतुंशक्यतेयत्रयत्रव्यतिरिक्तग्राह्यत्वंतत्रतत्रकरणांतरंस्यादेवेतितस्माद्विज्ञानस्यव्यतिरिक्तग्राहकग्राह्यत्वेनकरणद्वारानवस्थानापिग्राहकद्वाराकदाचिदप्युपपादयितुंशक्यतेतस्मात्सिद्धंविज्ञानव्यतिरिक्तंआत्मज्योतिरंतरमिति॥ननुनास्त्येवबाह्योर्थोघटादिःप्रदीपोवाविज्ञानव्यतिरिक्तोयद्धियद्व्यतिरेकेणनोपलभ्यतेतत्तावन्मात्रंवस्तुदृष्टंयथास्वप्नविज्ञानग्राह्यंघटपटादिवस्तुस्वप्नविज्ञानव्यतिरेकेणानुपलंभात्स्वप्नघटप्रदीपादेःस्वप्नविज्ञानमात्रतावगम्यतेतथाजागरितेपिघटप्रदीपादेर्जाग्रद्विज्ञानव्यतिरेकेणानुपलंभाज्जाग्रद्विज्ञानमात्रतैवयुक्ताभवितुंतस्मान्नास्तिबाह्योर्थोघटप्रदीपादिर्विज्ञान

दिति॥अवस्थाद्वयनिराकरणंनिगमयति॥तस्माद्विज्ञानस्येति॥बाह्यार्थवादिमतनिराकरणमुपसंहरति॥तस्मात्सिद्धमिति॥बाह्यार्थवादिनिध्वस्तेविज्ञानवादीचोदयति॥नन्विति॥बाह्यार्थोविज्ञानातिरिक्तोनास्तीत्यत्रप्रमाणमाह॥यद्धीति॥नोपलभ्यतेचजाग्रद्वस्तुजाग्रद्विज्ञानव्यतिरेकेणेतिशेषः॥दृष्टांतंस

उक्तमनुमानमुपसंहरति॥तस्मादिति॥सर्वंविज्ञानमात्रमितिस्थितेफलितमाह॥तत्रेति॥किमितितस्यमिथ्यात्वंतत्राह॥सर्वस्येति॥बाह्यार्थापलापवा
दिनंदूषयति॥नेत्यादिना॥हेतुंविशदयति॥नत्विति॥विज्ञानमात्रवादित्वादेकांतेनबाह्यार्थानभ्युपगतिरितिशंकते॥नन्विति॥बाह्यार्थंहठादंगीकार
यति॥नेत्यादिना॥अन्वयमुखेनोक्तमर्थंव्यतिरेकमुखेनविशदयति॥विज्ञानादिति॥ज्ञानज्ञेययोरैक्येदोषांतरमाह॥तथेति॥अनर्थकंशास्त्रमुपदिश
तोबुद्धस्यसर्वज्ञत्वंनस्यादित्याह॥तत्कर्तुरिति॥वाशब्दश्चार्थः॥इतश्चसर्वस्यनास्तिविज्ञानमात्रत्वमित्याह॥किंचान्यदिति॥नकेवलंपूर्वोक्तोपपत्तिव

तत्रयदुक्तंविज्ञानस्यव्यतिरिक्तावभासत्वाद्धिज्ञानव्यतिरिक्तमस्तिज्योतिरंतरंघटादेरिवेतितन्मिथ्यासर्वस्यविज्ञानमात्रत्वेदृष्टांताभावा
त्वयावत्तावदभ्युपगमान्नतुबाह्यार्थोभवतैकांतेनैवनाभ्युपगम्यतेनत्वनुमयानाभ्युपगम्यतएवनविज्ञानंघटःप्रदीपइतिचशब्दार्थस्य
त्वाद्यावत्तावदपिबाह्यमर्थांतरमवश्यमभ्युपगंतव्यंविज्ञानादर्थांतरंवस्तुनचेदभ्युपगम्यतेविज्ञानंघटःपटइत्येवमादीनांशब्दानामे
कार्थत्वेपर्यायशब्दत्वंप्राप्नोति॥तथासाधनानांफलस्यचैकत्वेसाध्यसाधनभेदोपदेशशास्त्रानर्थक्यप्रसंगस्तत्कर्तुरज्ञानप्रसंगोवा॥किंचा
न्यद्विज्ञानव्यतिरेकेणवादिप्रतिवादिवाददोषाभ्युपगमात्॥नह्यात्मविज्ञानमात्रमेववादिप्रतिवादिवादस्तद्दोषोवाभ्युपगम्यतेनिराकु
र्तव्यत्वात्प्रतिवाद्यादीनांनह्यात्मीयंविज्ञानंनिराकर्त्तव्यमभ्युपगम्यतेस्वयंवात्माकस्यचित्॥तथाचसतिसर्वसंव्यवहारलोपप्रसंगोनच

शादेवबाह्यार्थोऽभ्युपेयःकिंतुतत्रैवान्यदपिकारणमुच्यतइति॥तदेवस्फुटयति॥विज्ञानेति॥यद्ग्राह्यंतत्स्वव्यतिरिक्तग्राह्यंयथाप्रतिवाद्यादिजाग्रहस्तुचेदं
ग्राह्यमितिअनुमानान्नबाह्यार्थापलापसिद्धिरित्यर्थः॥दृष्टांतेविप्रतिपत्तिंप्रत्याह॥नहीति॥निराकर्तव्यत्वेपितेषांज्ञानमात्रत्वंकिंनस्यादित्याशंक्यात्मीयज्ञान
त्वमात्मज्ञानत्वंवातेषामितिविकल्प्यक्रमेणदूषयति॥नहीत्यादिना॥स्वकीयनिषेधेस्वनिषेधेचानिष्टापत्तिमाचष्टे॥तथाचेति॥त्वदंगीकारालोचनायामपिप्रतिवा

मैत्रः संतानवान्संतानवद्व्यवहारत्वात्चैत्रवत् ॥२

नीलपीतादिकं विज्ञानव्यतिरिक्तं विज्ञानविषयत्वान्मैत्रसंतानवत् ॥२

अन्यथाविवादाभावापातादितिभावः॥ कथंतर्हितेषामंगीकारस्तत्राह॥ व्यतिरिक्तेति॥ सिद्धेदृष्टांतेफलितमनुमानंनिगमयति॥ तस्मादिति॥ किंच॥ चैत्र
संतानेनमैत्रसंतानोव्यवहारादनुमीयतेसर्वज्ञज्ञानेनचासर्वज्ञज्ञानानिज्ञायंतेतत्रभेदस्यतेपिसिद्धेस्तद्दृष्टांतान्नीलादेस्तद्धियश्चभेदः शक्योनुमातुमित्याह॥
संतत्यंतरवदिति॥ इतिनबाह्यार्थापलापसिद्धिरितिशेषः॥ तदपलापासंभवेफलितमाह॥ तस्मादिति॥ विज्ञानार्थभेदोक्त्याप्रत्यगात्माविज्ञानातिरिक्तउक्तः
॥ संप्रतिभिन्नमतंज्ञानाभिन्नंग्राह्यत्वात्स्वप्नग्राह्यवदित्युक्तमनुवदति॥ स्वप्नइति॥ अयुक्तंविज्ञानातिरिक्तत्वमर्थस्येतिशेषः॥ दृष्टांतस्यसाध्यविकलतामभिप्रे

प्रतिवाद्यादयःस्वात्मनैवगृह्यंतेइत्यभ्युपगमोव्यतिरिक्तग्राह्याहितेअभ्युपगम्यंतेतस्मात्तद्वत्सर्वमेवव्यतिरिक्तग्राह्यंवस्तु॥ जाग्रद्विषयत्वा
ज्जाग्रद्वस्तुप्रतिवाद्यादिवदितिसुलभोदृष्टांतःसंतत्यंतरवद्विज्ञानांतरवच्चेति॥ तस्माद्विज्ञानवादिनापिनशक्यंविज्ञानव्यतिरिक्तंज्योतिरं
तरंनिराकर्तुंस्वप्नेविज्ञानव्यतिरेकाभावाद्युक्तमितिचेन्नाभावादपिभावस्यवस्त्वंतरत्वोपपत्तेः॥ भवतैवतावत्स्वप्नेघटादिविज्ञानस्यभावभू
तत्वमभ्युपगतंतदभ्युपगम्यतद्व्यतिरेकेणघटाद्यभावउच्यतेसविज्ञानविषयोघटादिर्यद्यभावोयदिवाभावःस्यादुभयथापिघटादिविज्ञानस्य
भावभूतत्वमभ्युपगतमेवनतुतन्निवर्तयितुंशक्यतेतन्निवर्तकन्यायाभावात्तेनसर्वस्यशून्यताप्रत्युक्ताप्रत्यगात्मग्राह्यताचात्मनोहमितिमीमांसकप
क्षः प्रत्युक्तः यत्तूक्तंसालोकोन्यश्चान्यश्चघटोजायतइति॥ सपरिहरति॥ नाभावादपीति॥ संग्रहवाक्यंविवृणोति॥ भवतैवेति॥ बाह्यार्थवादिभ्योविशेष
माह॥ तदभ्युपगम्येति॥ तथापिकथंदृष्टांतस्यसाध्यविकलतेत्याशंक्याह॥ सइति॥ घटादिविज्ञानस्यभावभूतस्याभ्युपगतस्यघटादेर्भावादभावाद्वाविषयादर्थां
तरत्वादयस्यकस्यचिद्बाह्यार्थस्योपगमाद्दृष्टांतस्यसाध्यविकलतासुप्रसिद्धेत्यर्थः॥ माध्यमिकमतमतिदेशेननिराकरोति॥ एतेनेति॥ ज्ञानज्ञेययोर्निराकर्तुमश
क्यत्ववचनेनेतियावत्॥ आत्मनोग्राह्यस्याहमितिप्रत्यगात्मनैवग्राह्यतेतिमीमांसकमतमपिप्रत्युक्तमेकस्यैवग्राह्यग्राहकतायानिरस्तत्वादित्याह॥ प्रत्यगात्मेति॥

क्षणभंगवादिनोक्तमनूद्यप्रत्यभिज्ञाविरोधेननिराकरोति॥ यत्तूक्तमित्यादिना॥ स्वपक्षेपिप्रत्यभिज्ञोपपत्तिंशाक्यः शंक्यते॥ सादृश्यादिति॥ दृष्टांतंविघट
यन्नुत्तरमाह॥ नतत्रापीति॥ तथापिकथंतत्रप्रत्यभिज्ञेत्याशंक्याह॥ जातीति॥ तन्निमित्तातेषुप्रत्यभिज्ञेतिशेषः॥ तदेवप्रपंचयति॥ कृत्तेष्विति॥ अभ्रां
तइतिछेदः॥ किमितिजातिनिमित्तैषाधीर्व्यक्तिनिमित्ताकिंनस्यादतआह॥ नहीति॥ ननुसादृश्यवशाद्व्यक्तिमेवविषयीकृत्यप्रत्यभिज्ञानंकेशादिषुकिं

तदसत्क्षणांतरेपिसएवायंघटइतिप्रत्यभिज्ञानात्सादृश्यात्प्रत्यभिज्ञानंकृत्तोत्थितकेशनखादिष्विवेतिचेन्नतत्रापिक्षणिकत्वस्यासिद्धत्वा
ज्जात्येकत्वाच्चकृत्तेषुपुनरुत्थितेषुचकेशनखादिषुकेशत्वनखत्वजातेरेकत्वात्केशनखप्रत्ययस्तन्निमित्तोऽभ्रांतएवनहिदृश्यमानलू
नोत्थितकेशनखादिषुव्यक्तिनिमित्तस्तएवेतिप्रत्ययोभवति॥ कस्यचिद्दीर्घकालव्यवहितेषुदृष्टेषुतुल्यपरिमाणेषुतत्कालीनबालादिषुतुल्या
इमेकेशनखाद्याइतिप्रत्ययोभवतिनतुतएवेतिघटादिषुपुनर्भवतिसएवेतिप्रत्ययस्तस्मान्नसमोदृष्टांतः॥ प्रत्यक्षेणहिप्रत्यभिज्ञायमानेवस्तुनित
देवेतिनचान्यत्वमनुमातुंयुक्तंप्रत्यक्षविरोधेलिंगस्याभासत्वोपपत्तेः सादृश्यप्रत्ययानुपपत्तेश्च ज्ञानस्यक्षणिकत्वादेकस्यहिवस्तुदर्शिनोवस्त्वंतर
दर्शनेसादृश्यप्रत्ययःस्यात्नतुवस्तुदर्श्येकोवस्त्वंतरदर्शनायक्षणांतरमवतिष्ठतेविज्ञानस्यक्षणिकत्वात्सकृद्वस्तुदर्शनेनैवक्षययोपपत्तेः
तेनेदंसदृशमितिहिसादृश्यप्रत्ययोभवतितेनेतिदृष्टस्मरणमिदमितिवर्त्तमानप्रत्ययस्तेनेतिदृष्टंस्मृत्वायावदिदमितिवर्तमान —
क्षणकालमवतिष्ठेततत:क्षणवादहानिरथतेनेत्येवोपक्षीणःस्मार्तप्रत्ययइदमितिचान्यएववार्तमानिकःप्रत्ययःक्षीयतेततःसादृश्यप्रत्य
यानुपपत्तिस्तेनेदंसदृशमितिअनेकदर्शिनः॥ नस्यात्तत्राह॥ कस्यचिदिति॥ अभ्रांतस्येतियावत्॥ दार्ष्टांतिकेवैषम्यमाह॥ घटादिष्विति॥ वैषम्यमु
पसंहरति॥ तस्मादिति॥ तत्सत्तत्क्षणिकंयथाप्रदीपादिसंतश्चामीभावाइत्यनुमानविरोधाद्भ्रांतंप्रत्यभिज्ञानमित्याशंक्याह॥ प्रत्यक्षेणेति॥ अनुसतानुमा

१५४

नवस्वत्वक्षविरोधेक्षणिकत्वानुमानेनोद्देस्यबाधितविषयत्वस्याप्यनुमित्यंगत्वादितिभावः॥

ब॰स॰ २३

इतश्च प्रत्यभिज्ञानं सादृश्यनिबंधनो भ्रमो न भवतीत्याह॥ सादृश्येति॥ तदनुपपत्तौ हेतुमाह॥ ज्ञानस्येति॥ तस्य क्षणिकत्वेपि किमिति सादृश्यप्रत्ययो न सिध्यतीत्याशंक्याह॥ एकस्येति॥ अस्तु तर्हि वस्तुद्वयदर्शित्वमेकस्येति चेन्नेत्याह॥ नत्विति॥ उक्तमेवार्थं प्रपंचयति॥ तेनेत्यादिना॥ भवतु किं तावते तितत्राह॥ तेनेति॥ दृष्टमिति अवतिष्ठेत यदीति शेषः॥ क्षणिकत्वहानिपरिहारं शंकित्वा परिहरति॥ अथेत्यादिना॥ तत्र हेतुमाह॥ अनेकेति॥ परपक्षे दोषांतरमाह॥ व्यपदेशेति॥ तदेव विवृणोति॥ इदमिति॥ व्यपदेशक्षणे अनवस्थानासिद्धिं शंकित्वा दूषयति॥ अथेत्यादिना॥ अन्यो दृष्टान्यश्च व्यपदेष्टेत्याशंक्य

अ॰ २

एकस्याभावाद्व्यपदेशानुपपत्तिश्च दृष्टव्यदर्शनेनैवोपक्षयाद्विज्ञानस्येदं पश्याम्यदोद्राक्षमिति व्यपदेशानुपपत्तिर्दृष्टवतो व्यपदेशक्षणानवस्थानाद्यावतिष्ठेत क्षणवादहानिरथा दृष्टवतो व्यपदेशः सादृश्यप्रत्ययश्च तदानीं जात्यंधस्येव रूपविशेषव्यपदेशस्तत्सादृश्यप्रत्ययश्च सर्वं संधपरंपरेति प्रसज्येत सर्वज्ञशास्त्रप्रणयनादि न चैतदिष्यतेऽकृताभ्यागमकृतविप्रणाशदोषौ तु प्रसिद्धतरौ क्षणवादे दृष्टव्यपदेशहेतुः पूर्वोत्तरसहित एक एव शृंखलावत्प्रत्ययो जायत इति चेत्तेनेदं सदृशमिति॥ न॥ वर्त्तमानातीतयोर्भिन्नकालत्वात्तत्र वर्त्तमानप्रत्ययएकः शृंखलावयवस्थानीयोऽतीतश्चापरस्तौ प्रत्ययौ भिन्नकालौ तदेतदुभयप्रत्ययविषयस्पृक्कंकं स्वलाप्रत्ययस्ततः क्षणद्वयव्यापित्वादेकस्य विज्ञानस्य पुनः क्षणवादहानिर्ममत्ववतादि विशेषानुपपत्तेश्च सर्वसंव्यवहारलोपप्रसंगः सर्वस्य च

परिहरति॥ अथेत्यादिना॥ शास्त्रप्रणयनादीत्यादिशब्देन शास्त्रीयं साध्यसाधनादि गृह्यते॥ क्षणिकत्वपक्षे दूषणांतरमाह॥ अकृतेति॥ व्यपदेशानुपपत्तिमुक्तां समाद्धानः शंकते॥ दृष्टेति॥ सादृश्यप्रत्ययश्च शृंखलास्थानीयेनैव सेत्स्यतीत्याह॥ तेनेदमिति॥ अपसिद्धांतप्रसक्त्या प्रत्याचष्टे॥ नेत्यादिना॥ तावेवोभौ प्रत्ययौ विषयौ तदवगाही चेन्मध्यवर्ती शृंखलावयवस्थानीयः प्रत्यय इति यावत्॥ क्षणानां मिथः संबंधस्तर्हि मा भूदिति चेत्तत्राह॥ ममेति॥ व्यपदेशसादृश्यप्रत्ययानुपपत्तिस्तु स्थितैवेति चकारार्थः॥ यत्तु विज्ञानस्य दुःखाद्युप

राम: २३

शुद्धत्वात्तत्संसर्गादृष्टाभावाच्च नज्ञानस्य दुःखादिसंप्लवः॥ स्वसंवेद्यत्वांगीकारादित्यर्थः॥ ज्ञानस्य शुद्धबोधैकस्वाभाव्यमसिद्धं दाडिमादिवन्नानाविधदुःखाद्यं शबलत्वश्र
वणादित्याशंक्याह॥ नचेति॥ तत्रैव हेत्वंतरमाह॥ अनित्येति॥ तेषां तद्धर्मत्वे सत्यनुभूयमानत्वात्ततो तिरिक्तत्वस्याद्धर्माणां धर्मिमात्रस्वाभाव्याच्चेयानां च मानादर्थांतर
त्वात्तोयचैयं न तज्ज्ञानांशो यथा घटादिरेवं च दुःखादीत्यर्थः॥ ज्ञानस्य दुःखादिधर्मो न भवति किंतु स्वरूपमेवेति शंकामनुभाष्य दोषमाह॥ अथेत्यादिना॥ अनु
पपत्तिमेव प्रकटयति॥ स्वसंयोगीत्यादिना॥ स्वाभाविकस्यापि वियोगोस्ति पुष्परक्तत्वादीनां तथोपलंभादित्याशंक्याह॥ यदपीति॥ द्रव्यांतरशब्देन पुष्पसंबंधिनो

स्वसंवेद्यविज्ञानमात्रत्वे विज्ञानस्य च स्वच्छावबोधावभासमात्रस्वाभाव्याभ्युपगमात्तद्दर्शिनश्चान्यस्याभावेः नित्यदुःखशून्यानात्मत्वाद्यनेककल्प
नानुपपत्तिर्न च दाडिमादेरिव विरुद्धानेकांशत्वं विज्ञानस्य स्वच्छावभासस्वाभाव्याद् नित्यदुःखादीनां विज्ञानांशत्वे च स्वसत्यनुभूयमानत्वाद्व्यतिरिक्त
विषयत्वप्रसंगः॥ अथानित्यदुःखाद्यात्मकत्वमेव विज्ञानस्य तदा तत्तद्वियोगाद्विशुद्धिकल्पनानुपपत्तिः स्वसंयोगिमलवियोगाद्विशुद्धिर्भवति यथा
ऽऽदर्शप्रभृतीनां॥ ननु स्वाभाविकेन धर्मेण कस्यचिद्वियोगो दृष्टो न ह्यग्नेः स्वाभाविकेन प्रकाशेनौष्ण्येन वा वियोगो दृष्टो यदपि पुष्पगुणानां रक्तत्वादी
नां द्रव्यांतरयोगेन वियोजनं दृश्यते तत्रापि संयोगपूर्वत्वमनुमीयते बीजभावनया पुष्पफलादीनां गुणांतरोत्पत्तिदर्शनात्ततो विज्ञानस्य विशुद्धिक
ल्पनानुपपत्तिर्विषयविषय्याभासत्वं च यन्मलं परिकल्प्यते विज्ञानस्य तदप्यन्यसंसर्गाभावादनुपपन्नं न ह्य वयवाश्लद्रूतरक्तत्वाद्यारंभका विवक्षिताः

॥ विमतं संयोगपूर्वकं विभागवत्त्वान्मेषादिवदित्यनुमानात्स्वाभाविकस्य सति वस्तुनि नाशोस्तीत्यर्थः अनुमानानुगुणं प्रत्यक्षं दर्शयति॥ बीजेति॥ कार्पा
सादिबीजे द्रव्यविशेषसंपर्काद्रक्तादिवासनया तत्पुष्पादीनां रक्तादिगुणोदयोपलंभात्तत्संयोगिद्रव्यापगमादेव तत्पुष्पादिषु रक्तत्वाद्यपगतिरित्यर्थः॥
विशुध्यनुपपत्तिमुपसंहरति॥ अत इति॥ कल्पनांतरमनूद्य दूषयति॥ विषयविषयीति॥ कथं पुनर्ज्ञानस्यान्येन संसर्गाभावस्तस्य विषयेण संसर्गादित्याशंक्य।

अथान्यसंसर्गमंतरेणापिविज्ञानस्यविषयविषय्याभासत्वंमलंस्यादितिचेत्तत्राह॥असतिचेति॥कल्पनाद्वयमप्रामाणिकमनादेयमित्युपसंहरति॥तस्मा
दिति॥कल्पनांतरमुत्थापयति॥यदपीति॥उपशांतिर्निर्वाणशब्दार्थः॥दूषयतितत्रापीति॥फलभावेपिफलंस्यादितिचेन्नेत्याह॥कंटकेति॥दार्ष्टांतिकंविवृणो
ति॥यस्यहीति॥नन्वात्ममतेपिवस्तुनोद्वयत्वात्तस्यासंगस्यकेनचिदपिसंयोगवियोगयोगात्फलित्वासंभवेमोक्षासंभवादितुल्यमित्याशंक्याह॥यस्यपुनरिति॥यद्यपि

विद्यमानेनविद्यमानस्यसंसर्गःस्यादसतिचान्यसंसर्गेयोधर्मोयस्यदृष्टःसतत्स्वभावत्वान्नतेनवियोगमर्हतियथाग्नेरौष्ण्यंसवितुर्वाप्रभा॥तस्माद
न्यसंसर्गेणमलिनत्वंतद्विशुद्धिश्चविज्ञानस्येतीयंकल्पनांधपरंपरेवप्रमाणशून्येत्यवगम्यतेयदपितस्यविज्ञानस्यनिर्वाणंपुरुषार्थंकल्पयंतितत्रा
पिफलाश्रयानुपपत्तिःकंटकविद्धस्यहिकंटकवेधजनितदुःखनिवृत्तिःफलंनतुकंटकविद्धमरणेतद्दुःखनिवृत्तिफलस्याश्रयउपपद्यतेतद्वत्त्व
न्निर्वाणेसतिचफलाश्रयेपुरुषार्थकल्पनाव्यर्थैव॥यस्यहिपुरुषशब्दवाच्यस्यसत्त्वस्यात्मनोविज्ञानस्यवार्थःपरिकल्प्यतेतस्यपुनःपुरुषस्यनि
र्वाणेकस्यार्थःपुरुषार्थइतिस्याद्यस्यपुनरस्त्यनेकार्थदर्शीविज्ञानव्यतिरिक्तआत्मातस्यदृष्टस्मरणदुःखसंयोगवियोगादिसर्वमेवोपपन्नमन्यसंयो
गनिमित्तंकालुष्यंतद्वियोगनिमित्ताचविशुद्धिरितिशून्यवादिपक्षस्तुसर्वप्रमाणविप्रतिषिद्धइतितन्निराकरणायनादरःक्रियते॥ ७॥ ॥ ॥

पूर्णवस्त्ववस्तुतोऽसंगमंगीक्रियतेतथापिक्रियाकारकफलभेदस्याविद्यमानकृतत्वादस्मन्मतेसर्वव्यवहारसंभवान्नसाम्यमितिभावः॥ननुबाह्यार्थवादोविज्ञानवादश्च
निराकृतौशून्यवादोपिनिराकर्तव्योपिकस्मान्ननिराक्रियतेतत्राह॥शून्यवादीति॥समस्तस्यवस्तुनःसत्त्वेनभानान्मानानांचसर्वेषांसद्विषयत्वाच्छून्यस्यवाविषयतया
प्राप्त्यभावेननिराकरणानर्हत्वात्तद्विषयत्वेचशून्यवादिनैवविषयनिराकरणोक्त्याशून्यस्यापन्हवात्तस्यचस्फुरणास्फुरणयोःसर्वशून्यत्वायोगात्तद्वादिनश्चसत्त्वास
त्त्वयोस्तदनुपपत्तेःसंवृतेश्चाश्रयाभावादसंभवात्तदाश्रयत्वेचशून्यस्यस्वरूपहानान्निराश्रयत्वेचासंवृत्तित्वान्नास्माभिस्तद्वादनिरासायादरःक्रियतेतत्सिद्धंब्रह्माद्यति

प्रसंगागतं परपक्षं निराकृत्य श्रुतिव्याख्यानमेवानुवर्त्तयन्नुत्तरवाक्यतात्पर्यमाह॥ यथेति॥ एवमात्मा देहभेदेपि वर्त्तमानं जन्मत्यज्य जन्मांतरं चोपाददानः कार्यकर णान्यतिक्रामतीति शेषः॥ अतः स्वप्नजागरितसंचाराद्देहाद्यतिरेकवदिहलोकपरलोकसंचारोक्त्यापि तदतिरेकस्तस्योच्यतेऽनंतरवाक्येनेत्यर्थः॥ संप्रत्युत्तरं वाक्यं गृ हीत्वाव्याकरोति॥ सवाइत्यादिना॥ पाप्मशब्दस्य लक्षणया तत्कार्यविषयत्वं दर्शयति॥ पाप्मसमवायिभिरिति॥ पाप्मशब्दस्य पापवाचित्वेपि कार्यसाम्याद्धर्मेपि वृत्तिः

यथैवैहैकस्मिन्देहे स्वप्नेभूत्वा मृत्यो रूपाणि कार्यकरणान्यतिक्रम्य स्वप्ने आत्मज्योतिषास्ते एवं सवै प्रकृतः पुरुषोऽयं जायमानः कथं जायमान इत्युच्य ते शरीरं देहेंद्रियसंघातमभिसंपद्यमानः शरीर आत्मभावमापद्यमान इत्यर्थः॥ पाप्मभिः पाप्मसमवायिभिर्धर्माधर्माश्रयैः कार्यकरणैरित्यर्थः॥ संसृ ज्यते संयुज्यते स एवोत्क्रामन्छरीरांतरमूर्ध्वं क्रामन्नुपगच्छन्म्रियमाण इत्येतस्य व्याख्यानमुत्क्रामन्निति तानेव संसृष्टान्पाप्मरूपान्कार्यकरणलक्ष

सवा अयं पुरुषो जायमानः शरीरमभिसंपद्यमानः पाप्मभिः सꣳसृज्यते स उत्क्रामन्म्रियमाणः पाप्मनो विजहाति॥ १९ ॥

णान्विजहातीति तैर्वियुज्यते तान्परित्यजति यथायं स्वप्नजाग्रद्धयोर्वर्त्तमान एवैकस्मिन्देहे पाप्मरूपकार्यकरणोपादानपरित्यागाभ्यामनवरतं सं चरति धियासमानः संस्तथासोयं पुरुष उभाविहलोकपरलोकौ जन्ममरणाभ्यां कार्यकरणोपादानपरित्यागाभ्यामनवरतं प्रतिपद्यमान आसं सारमोक्षात्संचरति तस्मात्सिद्धमस्यात्मज्योतिषोन्यत्वं कार्यकरणरूपेभ्यः पाप्मभ्यः

चयति॥ धर्माधर्मेति॥ उक्तमर्थं दृष्टांतत्वेनानुवदति॥ यथेति॥ अवस्थाद्वयसंचारस्य लोकद्वयसंचारं दार्ष्टांतिकमाह॥ तथेति॥ इहलोकपरलोकावनवरतं संचरतीति संबंधः॥ संचरणप्रकारं प्रकटयति॥ जन्मेति॥ जन्मना कार्यकरणयोरुपादानं मरणेन च तयोस्त्यागमविच्छेदेन लभमानो मोक्षादर्वागनवरतं संचरन्दुःखी भवतीत्यर्थः॥ सवा इत्यादिवाक्यतात्पर्यमुपसंहरति॥

तच्छब्दार्थमेवस्फुटयति॥संयोगेति॥कथमेतावतातेभ्योन्यत्वंतत्राह॥नहीति॥स्वाभाविकस्यहिधर्मस्यसतिस्वभावेकुतःसंयोगवियोगौवन्ह्यौष्ण्यादिष्वदर्शनात्कार्यकरणयोश्चसंयोगविभागवशादस्वाभाविकत्वेसिद्धमात्मनस्तदन्यत्वमित्यर्थः॥८॥तस्येत्यादिवाक्यस्यव्यावर्त्यांशंकामाह॥नन्विति॥अवस्थाद्वयवल्लोकद्वयसिद्धिरित्याशंक्याह॥स्वप्नेति॥कथंतर्हिलोकद्वयप्रसिद्धिरतआह॥तस्मादिति॥तत्रोत्तरत्वेनोत्तरवाक्यमुत्थाप्यव्याकरोति॥उच्यतइति॥स्था

संयोगवियोगाभ्यांनहितद्धर्मत्वेसतितैरेवसंयोगोवियोगोवायुक्तः॥१०॥८॥ननुनस्तोस्योभौलोकौयौजन्ममरणाभ्यामनुक्रमेणसंचरतिस्वप्नजागरितेइवस्वप्नजागरितेतुप्रत्यक्षमवगम्येतेनत्विहलोकपरलोकौकेनचित्प्रमाणेनतस्मादेतेएवस्वप्नजागरितेइहलोकपरलोकाविति उच्यतेतस्यैतस्यपुरुषस्यवैद्वेएवस्थानेभवतोनतृतीयंवाचतुर्थंवाकेतेइदंचयत्प्रतिपन्नंवर्तमानंजन्मशरीरेंद्रियविषयवेदनाविशिष्टंस्थानं

तस्यवाएतस्यपुरुषस्यद्वेएवस्थानेभवतइदंचपरलोकस्थानंचसंध्यंतृतीयंस्वप्नस्थानंतस्मिन्संध्येस्थानेतिष्ठन्नेतेउभेस्थानेपश्यती

प्रत्यक्षतोनुभूयमानंपरलोकएवस्थानंपरलोकस्थानंतच्चशरीरादिवियोगादुत्तरकालानुभाव्यं॥ननुस्वप्नोपिपरलोकस्तथाचसति द्वेएवेत्यवधारणमयुक्तंनकथंतर्हिसंध्यंतदिहलोकपरलोकयोर्यःसंधिस्तस्मिन्भवंसंध्यंयत्तृतीयंतत्स्वप्नस्थानंतेनस्थानद्वित्वावधारणं नद्वय

प्रसिद्धिद्योतनार्थोवैशब्दः॥अवधारणंविवृणोति॥नेति॥वेदनासुखादिलक्षणाआगमस्य॥परलोकसाधकत्वमभिप्रेत्याह॥तच्चेति॥अवधारणमाक्षिपति॥नन्विति॥तस्यस्थानांतरत्वंदूषयति॥नेति॥स्वप्नस्यलोकद्वयातिरिक्तस्थानत्वाभावेकथंतृतीयत्वप्रसिद्धिरित्याह॥कथमित्यादिना॥तस्यसंध्यत्वान्नस्थानांतरत्वमित्युत्तरमाह॥संध्यंतदिति॥संध्यत्वंव्युत्पादयति॥इहेति॥यत्स्वप्नस्थानंतृतीयंमन्यसेतदिहलोकपरलोकयोःसंध्यमितिसंबंधः॥तस्यसंध्यत्वेफलि

पूरणप्रत्ययश्रुत्यास्थानांतरत्वमेवस्वप्नस्यकिंनस्यादित्याशंक्यप्रथमश्रुतसंध्यशब्दविरोधान्नैवमित्याह॥नहीति॥परलोकास्तित्वेप्रमाणांतरजिज्ञासयापृ
च्छति॥कथमिति॥प्रत्यक्षंप्रमाणयन्नुत्तरमाह॥यतइत्यादिना॥स्वप्नप्रत्यक्षंपरलोकास्तित्वेप्रमाणमित्युक्तंतदेवोत्तरवाक्येनस्फुटयितुंपृच्छतिकथमिति॥

नहिग्रामयोःसंधिस्तावेवग्रामावपेक्ष्यतृतीयत्वपरिगणनमर्हतिकथंपुनस्तस्यपरलोकस्थानस्यास्तित्वमवगम्यतेयदपेक्ष्यस्वप्नस्थानंसंध्यं
भवेद्यतस्तस्मिन्संध्येस्वप्नस्थानेतिष्ठन्भवन्वर्तमानएतेउभेस्थानेपश्यति॥केतेउभेइदंचपरलोकस्थानंचतस्मात्स्वप्नजागरितव्यतिरेकेणोभौ
लोकौयोधियासमानःसन्ननुसंचरतिजन्ममरणसंतानप्रबंधेनकथंपुनःस्वप्नेस्थितःसन्नुभौलोकौपश्यतिकिमाश्रयःकेनविधिनेत्युच्यते॥अ
थकथंपश्यतीतिशृणु॥यथाक्रमआक्रमत्यनेनेत्याक्रमआश्रयोवष्टंभइत्यर्थोयादृशआक्रमोस्यसोयंयथाक्रमः अयंपुरुषःपरलोकस्थानेप्र

दंचपरलोकस्थानंचाथयथाक्रमोयंपरलोकस्थानेभवतितमाक्रममाक्रम्योभयान्पाप्मनआनंदांश्चपश्यति॥

तिपत्तव्येनिमित्तेयथाक्रमोभवतितादृशेनपरलोकप्रतिपत्तिसाधनेनाविद्याकर्मपूर्वप्रज्ञालक्षणेनयुक्तोभवतीत्यर्थः तमाक्रमंपरलोकस्था
नायोन्मुखीभूतंप्राप्तांकुरीभावबीजंतमाक्रममाक्रम्यावष्टभ्याश्रित्योभयान्पश्यतिबहुवचनंधर्माधर्मफलानेकत्वादुभयानुभयप्रकाराणि
त्यर्थः॥कांस्तान्पाप्मनःपापफलानिनतुपुनःसाक्षादेवपाप्म

कथंशब्दार्थमेवप्रकटयति॥किमित्यादिना॥उत्तरवाक्यमुत्तरत्वेनोत्थापयतिउच्य
तइति॥तत्राथशब्दमुक्तप्रश्नार्थतयाव्याकरोति॥अथेति॥उत्तरभागमुत्तरत्वेनव्याचष्टे॥शृण्विति॥यदुक्तंकिमाश्रयइतितत्राह॥यथाक्रमइति॥यदुक्तं
केनविधिनेतितत्राह॥तमाक्रममिति॥पाप्मशब्दस्ययथार्थत्वेसंभवतिकिमितिफलविषयत्वंतत्राह॥नत्विति॥साक्षादागमादृतेप्रत्यक्षेणेतियावत्॥पाप्म

नामेवसाक्षाद्दर्शनासंभवस्तच्छब्दार्थः॥ कथंपुनराद्येवयसिपापानामानंदानांचस्वप्नेदर्शनंतत्राह॥ जन्मांतरेति॥ यद्यपिमध्यमेवयसिकरणपाटवाद्देहिकवा
सनयास्वप्नोदृश्यतेतथापिकथमंतिमेवयसिस्वप्नदर्शनंतदाह॥ यानिचेति॥ फलानांसुदुर्लमत्रलेशतोभुक्तत्वं॥ यानीत्युपक्रमात्तानीत्युपसंख्यातव्यं॥ ऐहिक
वासनावशाद्देहिकानामेवपापानामानंदानांचस्वप्नेदर्शनसंभवान्नस्वप्नप्रत्ययस्यपरलोकसाधकमितिशंकते॥ तत्कथमिति॥ परिहरति॥ उच्यतइति॥ यद्यपिस्व
प्नेमनुष्याणामिंद्रादिभावोऽननुभूतोपिभातितथापितदपूर्वमेवदर्शनमित्याशंक्याह॥ नचेति॥ स्वप्नधियाभाविजन्मभाविनोपिस्वप्नेदर्शनात्स्वायेणेत्युक्तं॥ नच

नांदर्शनंसंभवतितस्मात्पापफलानिदुःखानीत्यर्थः आनंदांश्चधर्मफलानिसुखानीत्येतत्तानुभयान्पाप्मन आनंदांश्चपश्यतिजन्मांतरदृष्टवास
नामयान्यानिचप्रतिपत्तव्यजन्मविषयाणिसुदूर्धर्माधर्मफलानिधर्माधर्मप्रयुक्तोदेवतानुग्रहाद्वापश्यति॥ तत्कथमवगम्यतेपरलोकस्थानसं
बंधितस्याप्यानंददर्शनंस्वप्नेइति॥ उच्यतेयस्मादिहजन्मन्यननुभूतमपिपश्यतिबहुनचस्वप्नोनामाऽपूर्वदर्शनंपूर्वदृष्टस्मृतिर्हिस्वप्नःप्रायेण
तेनस्वप्नजागरितस्थानव्यतिरेकेणस्तउभौलोकौ॥ यदुक्तमादित्यादिबाह्यज्योतिषामभावेऽयंकार्यकरणसंघातःपुरुषोयेनव्यतिरिक्तेना
त्मज्योतिषाव्यवहरतीत्युक्तंतदेवनास्तियदादित्यादिज्योतिषामभावगमनंयत्रेदंविविक्तंस्वयंज्योतीरूपलभ्येतयेनसर्वदैवायंकार्यकरण
संघातःसंसृष्टएवोपलभ्यते

तदपूर्वदर्शनमपिसम्यगज्ञानमुत्थानप्रत्ययबाधान्नैवंस्वप्नधियाभाविजन्मासिद्धिर्यथाज्ञानमर्थागीकारादितिभावः
॥प्रमाणफलमुपसंहरति॥ तेनेति॥ अयमित्यादिवाक्यस्याव्यवहितेनसंबंधंवक्तुंवृत्तमनूद्याक्षिपति॥ यदित्यादिना॥ बाह्यज्योतिरभावेसत्ययंपुरुषःकार्यक
रणसंघातोयेनसंघातातिरिक्तेनात्मज्योतिषागमनादिनिर्वर्त्तयतितदात्मज्योतिरस्तीतियदुक्तमित्यनुवादार्थः॥ विशिष्टस्थानाभावंवक्तुंविशेषणाभावंतावद्द
र्शयति॥ तदेवेति॥ आदित्यादिज्योतिरभावविशिष्टस्थानंयत्रेत्युक्तं॥ तदेवस्थानंनास्तिविशेषणाभावादितिशेषः॥ यथोक्तस्थानाभावेहेतुमाह॥ येनेति॥ संसृष्टेबाह्ये

व्यवहारभूमौ बाह्यज्योतिरभावाभावे फलितमाह॥ तस्मादिति॥ उत्तरग्रंथमुत्तरत्वेनावतारयति॥ अथेत्यादिना॥ यथोक्तं सर्वं व्यतिरिक्तत्वं स्वयंज्योतिष्ट्वमित्या
दि॥ आह स्वप्नं प्रस्तोतीतियावत्॥ उपादानशब्दः परिग्रहविषयः॥ कथमस्य सर्वावत्त्वं तदाह॥ सर्वावत्त्वमिति॥ संसर्गकारणभूताः सहाध्यात्मादिविभागेनेति शे

तस्माद्यस्तस्मोऽस्वप्नेववास्वप्ने स्वेनविविक्तस्वभावेन ज्योतीरूपेणात्मेति अथकविद्धि विक्तः स्वेन ज्योतीरूपेणोपलभ्येत बाह्याध्यात्मिकभूतभौ
तिकसंसर्गशून्यस्ततो यथोक्तं सर्वं भविष्यतीत्येतदर्थमाह॥ स यः प्रकृत आत्मा यत्र यस्मिन्काले प्रस्वपिति प्रकर्षेण स्वापमनुभवति तदा किमुपादानः
केन विधिना प्रस्वपितिसंध्यंस्थानं प्रतिपद्यत इत्युच्यते॥ स्यदृष्टस्य लोकस्य जागरितलक्षणस्य सर्वावतः सर्वमवतीति सर्वावानयं लोकः कार्यकरणसं
घातो विषयवेदनासंयुक्तः सर्वावत्त्वमस्य व्याख्यातमन्नत्रयप्रकरणेऽथो अयं वा आत्मेत्यादिना सर्वावाभूतभौतिकमात्रा अस्य संसर्गकारणभूता विद्यं

स यत्र प्रस्वपित्यस्य लोकस्य सर्वावतो मात्रामपादाय स्वयं विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपि

त इति सर्वं वान्सर्वं वानेव हि सर्वावांस्तस्य सर्वावतो मात्रामेकदेशमवयवमपादायापच्छिद्यादाय गृहीत्वा दृष्टजन्मवासनावासितः सन्नित्यर्थः॥ स्वय
मात्मनैव विहत्य देहं पातयित्वा निःसंबोधमापाद्य जागरिते ह्यादित्यादीनां चक्षुरादिष्वनुग्रहो देहव्यवहारार्थो देहव्यवहारश्चात्मनो धर्माधर्मफलोप
भोगप्रयुक्तस्तद्धर्माधर्मफलोपभोगोपरमणमस्मिन्देहे आत्मकर्मोपरमकृतमित्यात्मास्य विहंतेत्युच्यते स्वयं निर्मायनिर्माणं कृत्वा वासनामयं स्वप्नदे
हं मायामयमिव

ष॥ किमुपादानमित्यस्योत्तरमुक्त्वा केन विधिनेत्यस्योत्तरमाह॥ स यमित्यादिना॥ आपाद्य प्रस्वपितीत्युत्तरत्र संबंधः कथं पुनरात्मनो देह
विहंतृत्वं जाग्रद्धेतुकर्मफलोपभोगोपरमणाद्धि सविहन्यते तत्राह॥ जागरिते हीत्यादिना॥ निर्माणविषयं दर्शयति॥ वासनामयमिति॥ यथा मायावी मायामयं देहं

निर्मितेत्यहद्दिश्याह॥ मायामयमिवेति॥

३०२

कथं पुनरात्मनो यथोक्तदेहनिर्माणकर्तृत्वं कर्मकृतत्वात्तन्निर्माणस्येत्याशंक्याह ॥ निर्माणमपीति ॥ स्वेन भासेत्यत्रेत्थंभावे तृतीया ॥ करणे तृतीयां व्यावर्तयति ॥ सा हीति ॥ तत्रेति स्वप्नोक्तिः ॥ यथोक्तांतःकरणवृत्तेर्विषयत्वेन प्रकाशमानत्वेपि स्वभासो भवतु करणत्वमित्याशंक्याह ॥ सा तत्रेति ॥ स्वेन ज्योतिषेति कर्तरि तृतीया ॥ स्वशब्दोत्रात्मविषयः ॥ कोयं प्रस्वापो नामेत्यत्राह ॥ यदेवमिति ॥ विविक्तविशेषणं विवृणोति ॥ बाह्येति ॥ स्वप्ने स्वयंज्योतिरात्मे

निर्माणमपि तत्कर्मसापेक्षत्वात्स्वयं कर्तृकमुच्यते स्वेन भासा स्वेनात्मीयेन भासा मात्रोपादानलक्षणेन भासा दीप्त्या प्रकाशेन सर्ववासनात्मकेनांतःकरणवृत्तिप्रकाशेनेत्यर्थः ॥ सा हि तत्र विषयभूता सर्ववासनामयी प्रकाशते सा तत्र स्वयं भा उच्यते तेन स्वेन भासा विषयभूतेन स्वेन च ज्योतिषा तद्विषयिणा विविक्तरूपेणालुप्तदृक्स्वभावेन तद्भारूपं वासनात्मकं विषयीकुर्वन्प्रस्वपिति ॥ यदेवं वर्तनं तत्प्रस्वपितीत्युच्य

स्वप्नायं पुरुषः स्वयंज्योतिर्भवति ॥ २० ॥ तेऽत्रैतस्यामवस्थायामेतस्मिन्कालेऽयं पुरुष आत्मा स्वयमेव विविक्तज्योतिर्भवति बाह्याध्यात्मिकभूतभौतिकसंसर्गरहितं ज्योतिर्भवति नन्वस्य लोकस्य मात्रोपादानं कृतं कथं तस्मिन्सत्यत्रायं पुरुषः स्वयंज्योतिर्भवतीत्युच्यते नैष दोषो विषयभूतमेव हि तत्तेनैव चात्रायं पुरुषः स्वयंज्योतिर्दर्शयितुं शक्यो न त्वन्यथाऽसति विषये कस्मिंश्चित्सुषुप्त

त्युक्तमाक्षिपति ॥ नन्वस्येति ॥ वासनापरिग्रहस्य मनोवृत्तिरूपस्य विषयतया विषयित्वाभावादविरुद्धमात्मनः स्वप्ने स्वयंज्योतिष्ट्वमिति समाधत्ते ॥ नैष दोष इति ॥ कुतो वासनोपादानस्य विषयत्वमित्याशंक्य स्वयंज्योतिष्ट्वश्रुतिसामर्थ्यादित्याह ॥ तेनेति ॥ मात्रादानस्य विषयत्वेनेति यावत् ॥ तदेव व्यतिरेकमुखेनाह ॥ नत्विति ॥ यथा सुषुप्तिकाले व्यक्तस्य विषयस्याभावे स्वयंज्योतिरात्मा दर्शयितुं न शक्यते तथा स्वप्नेपि तस्मात्तत्र स्वयंज्योतिष्ट्वश्रुत्या मात्रादानस्य विषयित्वं प्रकाशि

भवतुस्वप्नेवासनात्मनस्स्वविषयत्वंतथापिकथंस्वयंज्योतिरात्माशक्यतेविविच्यदर्शयितुमित्याशंक्याह॥ यदापुनरिति॥ अवभासयदवभासयंवासना
त्मकमंतःकरणमितिशेषः॥स्वप्नावस्थायामात्मनोवभासकांतराभावेफलितमाह॥ तेनेति॥२०॥९॥ यदुक्तंस्वप्नेस्वयंज्योतिरात्मेतितत्प्रकारांतरेणाक्षि
पति॥ नन्विति॥ अवस्थाद्वयेविशेषाभावकृतंचोद्यंदूषयति॥ उच्यतइति॥ वैलक्षण्यंस्फुटयति॥ जागरितेहीति॥ मनस्तुस्वप्नेसदपिविषयत्वान्नस्वयंज्यो

यदापुनःसाभासावासनात्मिकाविषयभूतोपलभ्यमानाभवतितदासिःकोशादिवनिष्कृष्टंसर्वसंसर्गरहितंचक्षुरादिकार्यकरणाव्यावृत्तस्वरू
पमलुप्तदृगात्मज्योतिःस्वेनरूपेणावभासयद्गृह्यतेतेनात्रायंपुरुषःस्वयंज्योतिर्भवतीतिसिद्धं॥२०॥९॥ नन्वत्रकथंपुरुषःस्वयंज्योतिर्येनजाग
रितइवग्राह्यग्राहकादिलक्षणःसर्वोव्यवहारोदृश्यतेचक्षुराद्यनुग्राहकाश्चादित्याद्यालोकास्तथैवदृश्यंतेयथाजागरितेतत्रकथंविशेषावधार

नतत्ररथानरथयोगानपंथानोभवंत्यथरथान्रथयोगान्पथःसृजते ॥

णंक्रियतेऽत्रायंपुरुषःस्वयंज्योतिर्भवतीत्युच्यतेवैलक्षण्यात्स्वप्नदर्शनस्यजागरितेहींद्रियबुद्धिमनआलोकादिव्यापारसंकीर्णमात्मज्योतिरि
हतुस्वप्नेइंद्रियाभावात्तदनुग्राहकादित्याद्यालोकाभावाच्चविविक्तंकेवलंभवतितस्माद्विलक्षणंननुतथैवविषयाउपलभ्यंतेस्वप्नेपियथाजागरि
तेतत्रकथमिंद्रियाभावाद्वैलक्षण्यमुच्यतइति शृणुनतत्रविषयाःस्वप्नेरथादिलक्षणाःतथानरथयोगाःरथेषुयुज्यंतइतिरथयोगाअश्वादयस्तत्र
नविद्यंतेनचपंथानोरथमार्गाभवंत्यथचरथान्रथयोगान्पथश्चसृजतेस्वयंकथंपुनः तिष्ठविघातीतिभावः॥ उक्तंवैलक्षण्यंप्रतीतिमाश्रित्या
क्षिपति॥ नन्विति॥ नतत्रेत्यादिवाक्यंव्याकुर्वन्नुत्तरमाह॥ शृण्विति॥ प्रतीतिंघटयति॥ अथेति॥ रथादिसृष्टिमाक्षिपति॥ कथंपुनरिति ॥

वासनामयीसृष्टिःक्लिष्टेत्युत्तरमाह॥उच्यतइति॥तदुपलब्धिनिमित्तेनेत्यत्रतच्छब्देनवासनाख्यिकामनोवृत्तिरेवोक्ता॥उक्तमेवप्रपंचयति॥नत्रेत्यादिना॥तदुपलब्धिर्वासनोपलब्धिस्तत्रयत्कर्मनिमित्तंतेनचोदितातयायोद्भूतांतःकरणवृत्तिग्राहकावस्थातदाश्रयंतदात्मकंतद्वासनारूपंदृश्यतइतियोजना॥तथापिकथमात्मज्योतिःस्वप्नेकेवलंसिध्यतितत्राह॥तद्यस्येति॥यथाकोशादसिर्विविक्तोभवतितथादृश्यायाःबुद्धेर्विविक्तमात्मज्योतिरित्तिकेवलत्वंसाध



सृजतेरथादिसाधनानांवृक्षादीनामभावेननूक्तमस्यलोकस्यसर्वावतोमात्रामपादायस्वयंविहत्यस्वयंनिर्माययेत्यंतःकरणवृत्तिरस्यलोकस्यवासनामात्रातामपादायरथादिवासनारूपांतःकरणवृत्तिस्तदुपलब्धिनिमित्तेनकर्मणाचोद्यमानादृश्यत्वेनव्यवतिष्ठतेतदुच्यतेस्वयंनिर्माययेतितदेवाहरथादीन्सृजतइति॥ननुतत्रकरणंवाकरणानुग्राहकाणिवादित्यादिज्योतींषितदवभास्यावारथादयोविषयाविद्यंतेतद्वासना

नतत्रानंदामुदःप्रमुदोभवंत्यथानंदान्मुदःप्रमुदःसृजतेनतत्रवेशांताःपुष्करिण्यःस्रवंत्योभवंत्यथवेशांतान्पुष्करिण्यःस्रवंत्यःसृजतेसहिकर्त्ता॥२१॥

मात्रंतुकेवलंतदुपलब्धिकर्मनिमित्तचोदितोद्भूतांतःकरणवृत्त्याश्रयंदृश्यतेतद्यस्यज्योतिषोदृश्यतेऽलुप्तदृशस्तदात्मज्योतिरत्रकेवलमसिरिवकोशाद्विविक्तंतथानतत्रानंदाःसुखविशेषाःमुदोहर्षाःपुत्रादिलाभनिमित्ताःप्रमुदस्तएवप्रकर्षोपेताअथवानंदादीन्सृजतेतथानतत्रवेशांताःपल्वलाःपुष्करिण्यस्तडागाःस्रवंत्योनद्योभवंत्यथवेशांतादीन्सृजतेवासनामात्ररूपाण्यस्मात्सहिकर्त्ता॥ यति॥असिरिवेति॥तथारथाद्यभाववदितियावत्॥सुखमेवविशिष्यतइतिविशेषाःसुखसामान्यानीत्यर्थः॥तयेत्यानंदाद्यभावोदृष्टांतिनः अल्पीयांसिसरांसिपल्वलशब्देनोच्यंते॥सहिकर्त्तेत्यत्रहिशब्दोयस्मादित्युक्तस्तस्मात्सृजतीतिशेषः ॥

कुतोस्य कर्त्तृत्वं सहकार्यभावादित्याशंक्याह॥ तद्वासनेति॥ तच्छब्देन वेशांतादिग्रहणं तदीयवासनाधारश्चित्तपरिणामस्तेनोद्भवति यत्कर्म तस्य सृज्य मानस्य निदानत्वेनेत्यिया वत्॥ मुख्यं कर्तृत्वं वारयति नत्विति॥ तत्रेति स्वप्नोक्तिः साधनाभावेपि स्वप्ने क्रिया किं न स्यादित्याशंक्याह॥ नहीति॥ तर्हि स्वप्ने कारकाण्यपि भविष्यंतिनेत्याह॥ नचेति॥ तर्हि पूर्वोक्तमपि कर्तृत्वं कथमिति चेत्तत्राह॥ यत्रत्विति॥ उक्तेर्थे वाक्योपक्रममनुकूलयति॥ तदुक्तमिति॥ उपक्रमे मुख्यं कर्तृत्वं इहत्वौपचारिकमिति विशेषमाशंक्याह॥ तत्रापीति॥ परमार्थतश्चैतन्यज्योतिषो व्यापारवदुपाध्यवभासकत्वव्यतिरेके

तद्वासनाश्रयचित्तवृत्त्युद्भवनिमित्तकर्महेतुत्वेनेत्यवोचाम तस्य कर्त्तृत्वं॥ नतु साक्षादेव तत्र क्रिया संभवति साधनाभावान्नहि कारकमंतरेण क्रिया संभवति न च तत्र हस्तपादादीनि क्रियाकारकाणि संभवंति यत्र तु तानि विद्यंते जागरिते तत्रात्मज्योतिरवभासितैः कार्यकरणैः रथादिवासनाश्रयांतःकरणवृत्त्युद्भवनिमित्तं कर्म निर्वर्त्यते तेनोच्यते स हि कर्तेति तदुक्तमात्मनैवायं ज्योतिषास्ते पल्ययते कर्म कुरुतइति तत्रापि न परमार्थतः स्वतः कर्त्तृत्वं चैतन्यज्योतिषोऽवभासकत्वव्यतिरेकेण यत् चैतन्यात्मज्योतिषांतःकरणद्वारेणावभासयति कार्यकरणानि तदवभासितानि कर्मसु व्याप्रियंते कार्यकरणानि तत्र कर्त्तृत्वमुपचर्यते आत्मनः तदुक्तं ध्यायतीव लेलायतीवेति तदेवानूद्यते स हि कर्तेति इह हि हेत्वर्थः॥ २१॥ १०॥ तदेतस्मिन्नुक्तेर्थे एते श्लोका मंत्रा भवंति॥ स्वप्नेन स्वप्नभावेन शारीरं शरीरमभिप्रहत्य निश्चेष्टमापाद्यासुप्तः स्वयमलुप्तदृगादिशक्तिस्वाभाव्यात् पास्ततो न कर्त्तृत्वं वाक्योपक्रमेपि विवक्षितमित्यर्थः॥ आत्मनो वाक्योपक्रमे कर्त्तृत्वमौपचारिकमित्युपसंहरति॥ यदिति॥ स हि कर्त्तेत्यौपचारिकं कर्तृत्वमित्युच्यते चेत्तस्य ध्यायतीवेत्यादिनोक्तत्वात्सनरुक्तिरित्याशंक्याह॥ तदुक्तमिति॥ अनुवादे प्रयोजनमाह॥ हेत्वर्थमिति॥ स्वप्नेरथ्यादिसृष्टाविति शेषः॥ १०॥ तदेते श्लोका भवंतीत्येतत्प्रतीकं गृहीत्वा व्याचष्टे॥ तदेतस्मिन्निति॥ उक्तोर्थः स्वयंज्योतिष्ट्वादिः॥ शारीरमिति सोर्थं वद्धिः॥ स्वय

व्याख्येयं पदमादाय व्याचष्टे॥ सुप्तानित्यादिना॥ उक्तमनूद्य पदांतरमवतार्य व्याकरोति॥ सुप्तानभिचाकशीतीति॥ २२॥ तथा शब्दः स्वप्नगतविशेषसमु

सुप्तान्वासनाकारोद्भूतानंतःकरणवृत्त्याश्रयान्बाह्याध्यात्मिकान्सर्वानेव भावान्स्वेन रूपेण प्रत्यस्तमितान्सुप्तानभिचाकशीति स्वयमलुप्तयात्म दृष्ट्या पश्यत्यवभासयतीत्यर्थः॥ शुक्रं शुद्धं ज्योतिष्मदिंद्रियमात्रारूपमादाय गृहीत्वा पुनः कर्मणे जागरितस्थानमेत्यागच्छति हिरण्मयश्चै चैतन्यज्योतिःस्वभावः पुरुषः एकहंसः एक एव हंतीत्येकहंसः एको जाग्रत्स्वप्नेहलोकपरलोकादीन्गच्छतीत्येकहंसः॥ २२॥ तथा प्राणेन प चवृत्तिना रक्षन्परिपालयन्नन्यथा मृत भ्रांतिः स्यादवरं निकृष्टमनेकाशुद्धिसंघातत्वादत्यंतबीभत्सं कुलायं नीडं शरीरं स्वयं तु बहिस्तस्मात्कु

तदेते श्लोका भवंति॥ स्वप्नेन शारीरमभिप्रहत्यासुप्तः सुप्तानभिचाकशीति। शुक्रमादाय पुनरैति स्थानं हिरण्मयः पुरुष एकहंसः॥ २२॥ प्राणेन रक्षन्नवरं कुलायं बहिः कुलायादमृतश्चरित्वा स ईयतेऽमृतो यत्र कामं हिरण्मयः पुरुष एकहंसः॥ २३॥ स्वप्नान्त उच्चावचमीयमानो रूपाणि देवः कुरुते बहूनि॥ उतेव स्त्रीभिः सह मोदमानो जक्षदुतेवापि भयानि पश्यन्॥ २४॥

लायाच्चरित्वा यद्यपि शरीरस्थ एव स्वप्नं पश्यति तथापि तत्संबंधाभावात्तत्स्थ इवाकाशो बहिश्चरित्वेत्युच्यते। अमृतः स्वयममरणधर्मा ईयते गच्छति यत्र कामं यत्र यत्र कामो विषयेषु उद्भूतवृत्तिर्भवति तं तं कामं वासनारूपेणोद्भूतं गच्छति॥ २३॥ किंच॥ स्वप्नान्ते स्वप्नस्थाने उच्चावचमुच्चं देवादिभावमवचं तिर्यगादिभावं निकृष्टं तदुच्चावचमीयमानो गम्यमानः प्राप्नुवन्रूपाणि देवो द्योतनवान्कुरुते निर्वर्तयति वासनारूपाणि बहून्यसंख्येयानि उत अपि स्त्रीभिः सह मोदमान इव जक्षदिव हसन्निव वयस्यैः॥

चयार्थः॥ किमिति स्वप्ने प्राणेन शरीरमात्मा पालयति तत्राह॥ अन्यथेति॥ बहिश्चरित्वेत्ययुक्तं शरीरस्थ

तत्संबंधाभावाद्बहिश्चरित्येत्युच्यत इति संबंधः॥ देहस्थस्यैव तदसंबंधे दृष्टांतमाह॥ तत्स्थ इति॥ २३॥ स्वप्नस्थं विशेषांतरमाह॥ किंचेति॥ उच्चावचं विष यीकृत्य तेन तेनात्मना स्वेनैव स्वयं गम्यमान इति यावत्॥ २४॥ १३॥ आरामं विवृणोति॥ ग्राममित्यादिना॥ न तमित्यादेस्तात्पर्यमाह॥ कष्टमिति॥ दृष्टिगोच रापन्नमपि न पश्यतीति संबंधः॥ कष्टमित्यादिनोक्तं प्रपंचयति॥ अहो इति॥ श्लोकानां तात्पर्यमुपसंहरति॥ अत्यंतेति॥ वाक्यांतरमादाय तात्पर्यमुक्त्वाऽकां

उतद्व अपि भयानि बिभेत्येभ्य इति भयानि सिंहव्याघ्रादीनि पश्यन्निव॥ २४॥ १३॥ आराममारमणमाक्रीडामनेन निर्मितां वासनारूपामस्या त्मनः पश्यंति सर्वे जनाः ग्रामं नगरं स्त्रियमन्नाद्यमित्यादिवासनानिर्मितमाक्रीडनरूपं न तं पश्यति तं न पश्यति कश्चन कष्टं भो वर्त्तते ऽत्यंत विविक्तं दृष्टिगोचरापन्नमपि अहो भाग्यहीनता लोकस्य यच्छक्यदर्शनमप्यात्मानं न पश्यतीति लोकं प्रत्यनुक्रोशं दर्शयति श्रुतिरत्यंतविवि

आराममस्य पश्यंति न तं पश्यति कश्चनेति तं नायतं बोधयेदित्याहु

क्तः स्वयंज्योतिरात्मा स्वप्ने भवतीत्यभिप्रायस्तं नायतं बोधयेदित्याहुः॥ प्रसिद्धिरपि लोके विद्यते स्वप्ने आत्मज्योतिषो व्यतिरिक्तत्वे का सौ तमात्मा नं सुप्तमायतं सहसा भृशं न बोधयेदित्याहुरेवं कथयंति चिकित्सकादयो जनालोके नूनं ते पश्यंति जाग्रद्देहादिंद्रियद्वारतोपसृत्य केवलो बहि र्वर्त्तत इति यत आहुस्तं नायतं बोधयेदिति तत्र च दोषं पश्यंति॥ भृशं ह्यसौ बोध्यमानस्तानींद्रियद्वाराणि सहसा प्रतिबोध्यमानो न प्रतिपद्यत इति तदेतदाह॥ क्ष्मापूर्वकमक्षराणि व्याकरोति॥ तं नेत्यादिना॥ तेषामभिप्रायमाह॥ नूनमिति॥ इंद्रियाण्येव द्वाराण्यस्येतींद्रियद्वारो जाग्रद्देहस्तस्मा दिति यावत्॥ तथापि सहसा सौ बोध्यतां का हानिरित्याशंक्याह॥ तच्चेति॥ सहसा बोध्यमानत्वं सप्तम्यर्थः॥ किमत्र प्रमाणमित्याशंक्यानंतरवाक्यमवतार्यं व्या

पुनरप्रतिपत्तौ दोषप्रसंगं दर्शयति॥ कदाचिदिति॥ व्यस्तासप्रवेशस्य कार्यं दर्शयन्दुर्भिषज्यमित्यादिव्याचष्टे॥ ततइति॥ उक्तांप्रसिद्धिमुपसंहरति॥ तस्मा
दिति॥ वृत्तमनूद्यमतांतरमुत्थापयति॥ स्वप्नोभूत्वेत्यादिना॥ इतिशब्दोयस्मादर्थे॥ तदेवमतांतरंस्फोरयति॥ नेत्यादिना॥ उक्तमंगीकृत्यफलंपृच्छति॥
यद्येवमिति॥ स्वप्नोजागरितदेशइत्येवंयदीष्टमतश्चकिंस्यादितिप्रश्नार्थः॥ फलंप्रतिज्ञापयन्प्रकटयति॥ शृण्विति॥ मतांतरोपन्यासस्यस्वमतविरोधि

दुर्भिषज्यंहास्मैभवतियमेषनप्रतिपद्यतेयमिंद्रियद्वारदेशंयस्माद्देशात्क्रमादायापसृतस्तस्मिंद्रियदेशमेषआत्मापुनर्नप्रतिपद्यतेकदाचि
द्व्यत्यासेनेंद्रियमात्राःप्रवेशयति॥ ततआंध्यबाधिर्यादिदोषप्राप्तौदुर्भिषज्यंदुःखंभिषक्कर्मताहास्मैदेहायभवतिदुःखेनचिकित्सनीयोसौदे
होभवतीत्यर्थः तस्मात्प्रसिद्ध्यापिस्वप्नेस्वयंज्योतिष्ट्वंदेहादिव्यतिरिक्तत्वमस्यगम्यतेस्वप्नोभूत्वातिक्रांतोमृत्योरूपाणीतितस्मात्स्वप्नेस्वयंज्यो

दुर्भिषज्यꣳहास्मैभवतियमेषनप्रतिपद्यतेऽथोखल्वाहु र्जागरितदेशएवास्यैषइतियानिह्येवजाग्रत्पश्यतितानिसुप्तइत्यत्रायं
पुरुषःस्वयंज्योतिर्भवति तिरात्माथोअपिखल्वन्यआहुर्जागरितदेशएवास्यैषःयःस्वप्नोनसंध्यंस्थानांतरमिहलोकपरलोकाभ्यांव्यतिरि
क्तं॥ किंतर्हिइहलोकएवजागरितदेशोयद्येवंकिंचातःशृण्वतोयद्भवतियदाजागरितदेशएवायंस्वप्नस्तदाऽयमात्माकार्यकरणेभ्योनव्या
वृत्तस्तैर्मिश्रीभूतोऽतोनस्वयंज्योतिरात्मेत्यतःस्वयंज्योतिष्ट्वबाधनायान्यआहुर्जागरितदेशएवास्यैषइतितत्रचहेतुमाचक्षतेजागरितदे
शत्वेयानिहियस्माद्धस्त्यादीनिपदार्थजातानिजाग्रज्जागरितदेशेपश्यतिलौकिकस्तान्येवसुप्तोपिपश्यतीतितदसत्इंद्रियोपरमादुपरते

त्वमाह॥ इत्यतइति॥ स्वप्नस्यजाग्रद्देशत्वंदूषयति॥ तदसदिति॥ तस्यजाग्रद्देशत्वाभावेफलितमाह॥ तस्मादिति॥ स्वप्नेबाह्यज्योतिषःसंभवोना

बाह्यज्योतिरभावेपिस्वप्नेव्यवहारदर्शनात्तत्रस्वयंज्योतिष्ट्वमाक्षेप्तुमशक्यमित्युपसंहरति॥तस्मादिति॥कथंपुनर्विद्यायामनुक्तायांसहस्रदान
वचनमित्याशंक्यवृत्तंकीर्त्तयति॥स्वयंज्योतिरिति॥मृत्योरूपाण्यतिक्रामतीत्यत्रचकार्यकरणव्यतिरिक्तत्वमात्मनोदर्शितमित्याह॥अतिक्रामती
ति॥लोकद्वयसंचारवशादुक्तमर्थमनुद्रवति॥क्रमेणेति॥आदिशब्दस्तत्तद्देहादिविषयः॥स्थानद्वयसंचारवशादुक्तमनुभाषते॥तथेति॥इहलो
कपरलोकाभ्यामिवेतियावत्॥लोकद्वयेस्थानद्वयेचक्रमसंचारप्रयुक्तमर्थांतरमाह॥तत्रचेति॥आत्मनःस्वयंज्योतिषोदेहादिव्यतिरिक्तस्यनित्य

न्यस्यज्योतिषस्तत्रसंभवोस्तितदुक्तंनतत्ररथानरथयोगाइत्यादितस्मादत्रायंपुरुषःस्वयंज्योतिर्भवत्येव॥स्वयंज्योतिरात्मास्तीतिस्वप्न
निदर्शनेनप्रदर्शितमतिक्रामतिमृत्योरूपाणीतिचक्रमेणसंचरन्निहलोकपरलोकादीनिहलोकपरलोकादिव्यतिरिक्तस्तथाजाग्रत्स्व

सोहंभगवतेसहस्रंददाम्यतऊर्ध्वंविमोक्षायब्रूहीति ॥ २५ ॥

प्नकुलायाभ्यांव्यतिरिक्तस्तत्रचक्रमसंचारान्नित्यश्चेत्येतत्प्रतिपादितंयाज्ञवल्क्येनातोविद्यानिष्क्रयार्थंसहस्रंददामीत्याहजनकःसोह
मेवंबोधितस्त्वयाभगवतेतुभ्यंसहस्रंददामिविमोक्षश्चकामप्रश्नोममाभिप्रेतस्तदुपयोगयंतादर्थ्यात्तदेकदेशएवातस्त्वांनियोक्ष्यामिसम
स्तकामप्रश्ननिर्णयश्रवणेनविमोक्षायातऊर्ध्वंब्रूहि स्यज्ञापितत्वादित्येतत्शब्दार्थः॥कामप्रश्नस्यनिर्णीतत्वान्निराकांक्षत्वमितिशंकांवारयति॥
विमोक्षश्चेति॥सम्यग्बोधस्तद्धेतुरितियावत्॥ननुसएवप्रागुक्तोनासौवक्तव्योस्तितत्राह॥तदुपयोगीति॥अयमित्युक्तात्मप्रत्ययोक्तिः॥तादर्थ्यात्पदार्थ
ज्ञानस्यवाक्यार्थज्ञानशेषत्वादितियावत्॥पदार्थस्यवाक्यार्थंबहिर्भावंदूषयति॥तदेकदेशएवेति॥कामप्रश्नोनाद्यापिनिर्णीतइत्यत्रोत्तरवाक्यंगमकमित्याह॥

306

विमोक्षशब्दस्य सम्यक्ज्ञानविषयत्वं सूचयति॥ येनेति॥ सम्यक्ज्ञानप्राप्तौ गुरुप्रसादस्य प्राधान्यं दर्शयति॥ त्वत्प्रसादादिति॥ ननु विमोक्षपदार्थो निर्णीतोऽन्यथा सहस्रदानस्याकस्मिकत्वप्रसंगादत आह॥ विमोक्षेति॥ २५॥ उत्तरकंडिकामवतारयितुं वृत्तं कीर्तयति॥ यत्प्रस्तुतमिति॥ आत्मनैवेत्यादिना यदात्मनः स्वयंज्योतिष्ट्वं ब्राह्मणादौ प्रस्तुतं तदत्रायमित्यादिना प्रत्यक्षतः स्वप्ने प्रतिपादितमिति संबंधः॥ वृत्तमर्थांतरमनूद्य चोद्यमुत्थापयति॥ यत्तूक्तमिति॥ मृत्युं नाति

येन संसाराद्विमुच्येयं त्वत्प्रसादाद्विमोक्षपदार्थैकदेशनिर्णयहेतोः सहस्रदानं॥ २५॥ १४॥ यत्प्रस्तुतमात्मनैवायं ज्योतिषास्त इति तत्प्रत्यक्षतः प्रतिपादितमत्रायं पुरुषः स्वयंज्योतिर्भवतीति स्वप्ने यत्तूक्तं स्वप्नो भूत्वेमं लोकमतिक्रामति मृत्यो रूपाणीति तत्रैतदाशंक्यते मृत्यो रूपाण्येवातिक्रामति न मृत्युं प्रत्यक्षं ह्येतत् स्वप्ने कार्यकरणव्यावृत्तस्यापि मोदत्रासादिदर्शनं तस्मान्नूनं नैवायं मृत्युमतिक्रामति कर्मणो हि मृत्योः कार्यं मोद

स वा एष एतस्मिन्त्संप्रसादे॥

त्रासादि दृश्यते यदि च मृत्युना बद्ध एवायं स्वभावतस्ततो विमोक्षो नोपपद्यते न हि स्वभावात्कश्चिद्विमुच्यते ऽथ स्वभावो न भवति मृत्युः ततस्तस्मान्मोक्ष उपपद्यते यथासौ मृत्युरात्मीयो धर्मो न भवति तथा प्रदर्शनायात ऊर्ध्वं विमोक्षायैव ब्रूहीत्येवं जनकेन पर्यनुयुक्तो याज्ञवल्क्यस्तद्दिदर्शयिषया प्रववृते स वै

क्रामतीत्यत्र हेतुमाह॥ प्रत्यक्षं हीति॥ इच्छाद्वेषादिरादिशब्दार्थः॥ तथापि कुतो मृत्युं नातिक्रामति तत्राह॥ तस्मादिति॥ कार्यस्य कारणादन्यत्र प्रवृत्त्ययोगादिति यावत्॥ उक्तमुपपादयति॥ कर्मणो हीति॥ अतः स्वप्नगतो मृत्युं कर्माख्यं नातिक्रामतीति शेषः॥ मा तर्हि मृत्योरतिक्रमो भूत्को दोषस्तत्राह॥ यदि चेति॥ स्वभावादपि मृत्योर्विमुक्तिमाशंक्याह॥ न हीति॥ उक्तं हि॥ न हि स्वभावो भावनां व्यावर्तेतौष्ण्यवद्रवेरिति॥ कथं तर्हि मोक्षोपपत्तिरित्याशंक्याह॥ अथेति॥

तद्धि दर्शयिषयेस्वप्नतरुब्देनमृत्योरतिक्रमणंगृह्यतेवैशब्दस्यप्रसिद्धार्थत्वमुपेत्यसशब्दार्थमाह॥प्रकृतइति॥एषशब्दमनूद्यव्याकरोति॥एषइति॥सम्य
क्प्रसादेस्थित्वामृत्युमतिक्रामतीतिशेषः॥सुषुप्तस्यसंप्रसादत्वंसाधयति॥जागरितइत्यादिना॥तत्रवाक्यशेषमनुकूलयति॥तीर्णोहीति॥अस्तुसम्यक्प्रसा
दःसुषुप्तस्थानंतथापिकिमायातमित्यतआह॥सवाइति॥पूर्वोक्तेनक्रमेणसम्यक्प्रसादेसुषुप्तेस्थित्वासम्यक्प्रसन्नःसन्मृत्युमतिक्रामतीत्यर्थः॥उक्तमर्थमुप

प्रकृतःस्वयंज्योतिःपुरुषएषःयःस्वप्नेप्रदर्शितएतस्मिन्संप्रसादेसम्यक्प्रसीदत्यस्मिन्निति संप्रसादोजागरितेदेहेंद्रियव्यापारशतसंनिपात
जंहित्वाकालुष्यंतेभ्योविप्रमुक्तःईषत्प्रसीदतिस्वप्नेइहतुसुषुप्तेसम्यक्प्रसीदतीत्यतःसुषुप्तःसंप्रसादउच्यते॥तीर्णोहितदासर्वान्छो
कान्सलिलएकोद्रष्टेतिहिवक्ष्यतिसुषुप्तस्थआत्मानंसवाएषएतस्मिन्संप्रसादेक्रमेणसंप्रसन्नःसन्सुषुप्तेस्थित्वाकथंसंप्रसन्नःस्वप्ना

रत्वाचरित्वाहृष्ट्वैवपुण्यंचपापंच ॥

त्सुषुप्तंप्रविविक्षुःस्वप्नावस्थएवरत्वारतिमनुभूयमित्रबंधुजनदर्शनादिनाचरित्वाविहृत्यानेकधाचरणफलंश्रममुपलभ्येत्यर्थःदृष्ट्वैव
नकृत्वेत्यर्थः॥पुण्यंचपुण्यफलंपापंचपापफलंनतुपुण्यपापयोःसाक्षाद्दर्शनमस्तीत्यवोचामतस्मान्नपुण्यपापाभ्यामनुबद्धोयोहिकरो
तिपुण्यपापेसताभ्यामनुबध्यतेनहिदर्शनमात्रेणतदनुबद्धःस्यात्तस्मात्स्वप्नोभूत्वामृत्युमतिक्रामत्येवनमृत्युरूपाण्येवकेवलमतोन पादयितुमा

कांक्षामाह॥कथमिति॥रत्वेत्यादिव्याकुर्वन्परिहरति॥स्वप्नादिति॥पुण्यपापयोर्यथाश्रुतार्थत्वमाशंक्याह॥नत्विति॥अवोचामोभयान्पाप्मनआनंदांश्चपश्य
तीतिशेषः॥पुण्यपापयोर्दर्शनमेवनकरणमित्यत्रफलितमाह॥तस्मादिति॥तदृष्टुरपितदनुबंधःस्यादित्याशंक्यातिप्रसंगान्मैवमित्याह॥योहीत्यादिना॥पुण्य

पापाभ्यामात्मनोऽसंसर्गेफलितमाह॥तस्मादिति॥मृ
त्योरतिक्रमणेकिंस्यादित्याशंक्याह॥अतोनेति॥

मृत्योरस्वभावत्वमुपपादयति॥मृत्युश्चेदिति॥इष्टापत्तिमाशंक्याह॥नत्विति॥अनन्वागतवाक्यादसंगवाक्याच्चेत्यर्थः॥मोक्षशास्त्रप्रामाण्यादपिमृत्योरस्वभावत्वमित्या
ह॥स्वभावश्चेदिति॥इतश्चमृत्युःस्वभावोनभवतीत्याह॥नत्विति॥अभावादितिच्छेदः॥तस्यास्वभावत्वेलब्धमर्थंकथयति॥अतइति॥मृत्युरेवत्माच
ष्टे॥पुण्यपापाभ्यामिति॥स्वप्नेमृत्योःस्वभावत्वाभावेपिजाग्रदवस्थायांकर्तृत्वमात्मनःस्वभावस्तस्थाचनियमेनतस्यमृत्योरतिक्रमोनसिध्यतीतिशंक
ते॥नन्विति॥औपाधिकत्वात्कर्तृत्वस्यस्वाभाविकत्वाभावादात्मनोमृत्योरतिक्रमःसंभवतीतिपरिहरति॥नेति॥कथमौपाधिकत्वंकर्तृत्वस्यसिद्धवद

मृत्योरात्मस्वभावत्वशंका॥मृत्युश्चेत्स्वभावोस्यस्वप्नेपिकुर्यान्नतुकरोतिस्वभावश्चेत्क्रियास्यात्‌निर्मोक्षनैवस्यान्नतुस्वभावःस्वप्नेऽभावा
दतोविमोक्षोस्योपपद्यतेमृत्योःपुण्यपापाभ्याम्‌॥ननुजागरितेऽस्यस्वभावएवनबुध्याद्युपाधिकृतंहितत्तच्चप्रतिपादितंसादृश्यात्ध्यायतीव

पुनःप्रतिन्यायंप्रतियोन्याद्रवतिस्वप्नायैव॥

लेलायतीवेतितस्मादेकांतेनैवस्वप्नेमृत्युरूपातिक्रमणान्नस्वाभाविकत्वाशंकाऽनिर्मोक्षतावाततःसंप्रसादाननुभवोत्तरकालंपुनःप्रतिन्या
यंयथान्यायंयथागतंनिआयोन्यायःअयनमायोनिर्गमनंपुनःपूर्वगमनवैपरीत्येनयदागमनंसप्रतिन्यायः च्चतेतत्राह॥तत्त्वेति॥ध्यायतीवेत्या
दौसादृश्यवाचकादिवशब्दादौपाधिकत्वंकर्तृत्वस्यप्रागेवदर्शितमित्यर्थः॥जागरितेपिकर्तृत्वस्यस्वाभाविकत्वाभावेफलितमाह॥तस्मादिति॥मृत्योःस्वा
भाविकत्वशंकाभावकृतंफलमाह॥अनिर्मोक्षतावेति॥वाशब्दोनञनुकर्षणार्थः॥पुण्यंचपापंचेत्येतदंतंवाक्यंमाख्यायपुनरित्यादिव्याचष्टे॥तत्रइति॥
स्वप्नाद्युत्थायसुषुप्तिमनुभूयोत्तरकालमितियावत्‌॥स्थानात्स्थानांतरप्राप्तावभ्यासंवक्तुंपुनःशब्दः॥प्रतिन्यायमित्यस्यावयवार्थमुक्त्वाविवक्षितमर्थमाह॥

जागरितात्स्वप्नंततःसुषुप्तंगच्छतीतिपूर्वंगमनंततोवैपरीत्येनसुषुप्तात्स्वप्नंजागरितंवागच्छतीतियदागमनंसप्रतिन्यायस्तमेवसंक्षिपति॥यथे
ति॥यथास्थानमाद्रवतीत्येतद्विवृणोति॥स्वप्नस्थानादिति॥उक्तेऽर्थेवाक्यंपातयति॥प्रतियोनीति॥किमर्थंयथास्थानमागमनंतदाह॥स्वप्नायेति॥
सयदित्यादिवाक्यस्यव्यावर्त्यामाशंकामाह॥नन्विति॥तत्रवाक्यमुत्तरत्वेनावतार्यव्याकरोति॥अतआहेति॥अनन्वागतइत्यस्यार्थंस्फुटयति॥नैवेति॥

यथागतंपुनरागच्छतीत्यर्थःप्रतियोनियथास्थानंस्वप्नस्थानंस्वप्नस्थानाद्धिसुषुप्तंप्रतिपन्नःसन्यथास्थानमेवपुनरागच्छतिप्रतियोन्या
द्रवतिस्वप्नायैवस्वप्नस्थानायैव॥ननुस्वप्नेनकरोतिपुण्यपापेतयोःफलमेवपश्यतीतिकथमवगम्यतेयथाजागरितेतथाकरोत्येवस्वप्नेऽपितु
ल्यत्वाद्दर्शनस्येत्यतआहसआत्मायत्किंचित्तत्रस्वप्नेपश्यतिपुण्यपापफलमनन्वागतोऽननुगतोऽननुबद्धस्तेनदृष्टेनभवतिनैवानुबद्धोभव

सयत्तत्रकिंचित्पश्यत्यनन्वागतस्तेनभवत्य

तियदिहिस्वप्नेकृतमेवतेनस्यात्तेनानुबध्येतस्वप्नादुत्थितोऽपिसमन्वागतःस्यान्नचलोकेस्वप्नकृतकर्मणाऽन्वागतत्वप्रसिद्धिर्नहिस्वप्नकृतेना
गसाऽऽगस्कारिणमात्मानंमन्यतेकश्चिन्नचस्वप्नदृशःश्रुत्वालोकस्तंगर्हयतिपरिहरतिवाऽतोऽनन्वागतएवतेनभवतितस्मात्स्वप्नेकुर्वन्निवो
पलभ्यतेनतुतत्रक्रियास्तिपरमार्थतः सयदित्यादिवाक्यस्याक्षरार्थमुक्त्वातात्पर्यार्थमाह॥यदिहीति॥तेनात्मनेतियावत्॥स्वप्नेकृतंकर्मपुनस्तेनेत्यु
क्तं॥अनुबंधेदोषमाह॥स्वप्नादिति॥इष्टापत्तिमाशंक्याह॥नचेति॥स्वप्नकृतेनकर्मणाजाग्रदवस्थस्यपुरुषस्यान्वागतत्वप्रसिद्धिरितियदुच्यतेतन्नव्यवहा
रभूमौसंप्रतिपन्नमित्यर्थः॥स्वप्नदृष्टेनजाग्रद्भूतस्यनसंगतिरित्यत्रस्वानुभवंदर्शयति॥नहीति॥यथोक्तेऽनुभवेलोकस्यापिसंमतिंदर्शयति॥नचेति॥तत्रफ

लितमाह॥अतइति॥कथंतर्हिस्वप्नेकृतत्वप्रतीतिस्तत्राह॥तस्मादिति॥

७०७

स्वप्नस्याभासत्वाच्च न तत्र वस्तुतोऽस्ति क्रियेत्याह ॥ उत्तेवेति ॥ तदाभासत्वे लोकप्रसिद्धिमनुकूलयति ॥ आख्यातारश्चेति ॥ स्वप्नस्याभासत्वे फलितमाह ॥ अतइति ॥ अनन्वागतवाक्यं प्रतिज्ञारूपं व्याख्याय असंगवाक्यं हेतुरूपमवतारयितुमाकांक्षामाह ॥ कथमिति ॥ मूर्तस्य मूर्तांतरेण संयोगे क्रियोपलंभादमूर्तस्य तदभावादात्मनश्चामूर्तत्वेनासंयोगात्क्रियायोगात्कर्तृत्वसिद्धिरित्युत्तरं हेतुवाक्यार्थकथनपूर्वकं कथयति ॥ कार्यकरणैरित्या

उत्तेव स्त्रीभिः सह मोदमानः इवेति हि श्लोके उक्तः ॥ आख्यातारश्च स्वप्ने सहैव शब्देनाचक्षते हस्तिनो व्यघटीकताधावंतीव भयाद्द्रष्टा इति अतो न तस्य कर्तृत्वमिति कथं पुनरस्याकर्तृत्वमिति कार्यकरणैर्मूर्तैः संश्लेषो मूर्तस्य सतः क्रियाहेतुर्दृष्टो न ह्यमूर्तः कश्चित्क्रियावान्दृश्यते अमूर्तश्चात्मा अतोऽसंगो यस्माच्चासंगोऽयं पुरुषस्तस्मादनन्वागतस्तेन स्वप्नदृष्टेन ॥ अतएव न क्रियाकर्तृत्वमस्य कथंचिदुप

संगो ह्ययं पुरुष इत्येवमेवैतद्याज्ञवल्क्य सोऽहं भगवते सहस्रं ददाम्यत ऊर्ध्वं विमोक्षायैव ब्रूहीति ॥ २६

पद्यते कार्यकरणसंश्लेषेण हि कर्तृत्वं स्यात्स च संश्लेषः संयोगोऽस्य नास्ति यतोऽसंगो ह्ययं पुरुषस्तस्मादमृत एवमेवैतद्याज्ञवल्क्य सोऽहं भगवते सहस्रं ददाम्यत ऊर्ध्वं विमोक्षायैव ब्रूहि मोक्षपदार्थैकदेशस्य कर्मप्रविवेकस्य सम्यग्दर्शितत्वादत ऊर्ध्वं विमोक्षायैव ब्रूहीति ॥

॥ २६ ॥ १५ ॥ तत्रासंगो ह्ययं पुरुष इत्यसंगतां कर्तृत्वे हेतुरुक्तः दिना ॥ आत्मनः असंगत्वेनाकर्तृत्वमुक्तं समर्थयते ॥ अतएवेति ॥ अतः शब्दार्थं विशदयति ॥ कार्येति ॥ क्रियावत्त्वाभावे जन्ममरणादिराहित्यं कौटस्थ्यं फलतीत्याह ॥ तस्मादिति ॥ कर्मप्रविवेकमुक्तमंगीकरोति ॥ एवमिति ॥ तत्त्वविविक्तात्मज्ञाने दार्ढ्यं सूचयति ॥ सोहमिति ॥ नैराकांक्ष्यं व्यावर्त्तयति ॥ अतइति ॥ कथं तर्हि सहस्रदानमित्याशंक्याह ॥ मोक्षेति ॥ कामप्रविवेकविषयं नियोगमभि

विक्त २

उत्तरकंडिकाव्यावर्त्यांशंकामाह॥ तत्रेति॥ पूर्वकंडिकासप्तम्यर्थः॥ भवत्वकर्तृत्वहेतुरसंगत्वं किं तावतेत्याशंक्याह॥ उक्तं चेति॥ पूर्वश्लोकोपन्यासद
शायामितियावत्॥ कर्मवशात्स्वप्नहेतुकर्मसामर्थ्यादित्यर्थः॥ आत्मनः स्वप्ने कामकर्मसंबंधेपि किमिति नासंगत्वं तत्राह॥ कामश्चेति॥ हेतुत्वसिद्धिंप
रिहरति॥ नत्विति॥ न चेद्धेतोरसिद्धत्वं किं तर्हि कथं तत्सिद्धिरिति पृच्छति॥ कथमिति॥ हेतुसमर्थनार्थमुत्तरग्रंथमुत्थापयति॥ असंग इति॥ प्रतियोन्या

उक्तं च पूर्वं कर्मवशात्स ईयते यत्र काममिति कामश्चासंगोऽतोऽसिद्धो हेतुरुक्तः असंगो ह्ययं पुरुष इति न त्वेतदस्ति कथं तर्हि असंग एवेति
तदुच्यते स वा एष एतस्मिन्स्वप्ने स वै एष पुरुषः संप्रसादात्प्रत्यागतः स्वप्ने रत्वा चरित्वा यथाकामं दृष्ट्वैव पुण्यं च पापं चेति सर्वं पूर्ववद्बुद्धांता
यैव जागरितस्थानाय तस्मादसंग एवायं पुरुषो यदि स्वप्ने संगवान्स्यात्कामी ततस्तत्संगजैर्दोषैर्बुद्धांताय प्रत्यागतो लिप्येत॥ १७॥ य

स वा एष एतस्मिन्स्वप्ने रत्वा चरित्वा॥

थासौ स्वप्नेऽसंगत्वात्स्वप्नसंगजैर्जागरिते प्रत्यागतो न लिप्यत एवं जागरितसंगजैरपि दोषैर्न लिप्यत एव बुद्धांते तदेतदुच्यते स वा एष ए
तस्मिन्बुद्धांते जागरिते रत्वा चरित्वेत्यादि पूर्ववत्स यत्तत्र बुद्धांते किंचित्पश्यत्यनन्वागतस्तेन भवत्यसंगो ह्ययं पुरुष इति॥ ननु दृष्ट्वैवेति कथम
वधार्यते करोति च तत्र पुण्यपापे तत्फलं च पश्यति

द्रवतीत्येतदंतं सर्वमित्युक्तं स्वप्ने कर्तृत्वाभावस्तच्छब्दार्थः॥ उक्तमसंगत्वं व्यतिरेकमुखेन विशद
यति॥ यदीति॥ संगवानित्यस्य व्याख्यानं॥ कामीति॥ तत्संगजैस्तत्र स्वप्नविषयविशेषेषु कामाख्यसंगवशादुत्पन्नैः पापैरितियावत्॥ ननु लिप्यते प्रायश्चित्त
विधानस्यापि स्वप्नसूचिताशुभाशंकानिबर्हणार्थत्वाद्बुद्धांतसारित्वाभावादितिशेषः॥ १७॥ उक्तमर्थं दृष्टांतीकृत्य जागरितेपि निर्लेपत्वमात्मनो दर्शयति॥ यथेत्या

तत्रकल्पितंकर्तृत्वमित्युत्तरमाह॥नेत्यादिना॥तदेवविवृणोति॥आत्मनैवेति॥स्वतोऽकर्तृत्वेवाक्योपक्रमंसंवादयति॥तथाचेति॥वाक्यार्थंसंगृह्णा
ति॥बुध्यादीति॥कर्तृत्वमितिशेषः॥नन्वौपाधिकंकर्तृत्वंपूर्वमुक्तमिदानींतन्निराकरणेपूर्वोत्तरविरोधःस्यादित्यत्राह॥इहत्विति॥उपाधिनिरपे
क्षकर्तृत्वाभावइतिशेषः॥तेनेत्युक्तंहेतुंस्फुटयति॥यस्मादिति॥आत्मनोलेपाभावेभगवद्वाक्यमपिप्रमाणमित्याह॥तथाचेति॥अवस्थात्रयेपिअसं

नकारकावभासकत्वेनकर्तृत्वोपपत्तेरात्मनैवायंज्योतिषास्तइत्यादिनात्मज्योतिषावभासितःकार्यकरणसंघातोव्यवहरतितेनास्यकर्तृ
त्वमुपचर्यतेनस्वतःकर्तृत्वंतथाचोक्तंध्यायतीवलेलायतीवेतिबुध्याद्युपाधिकृतमेवनस्वतःइहतुपरमार्थ। पेक्षयोपाधिनिरपेक्षउच्यतेदृष्ट्वै

दृष्ट्वैवपुण्यंचपापंचपुनःप्रतिन्यायंप्रतियोन्याद्रवतिबुद्धांतायैवसयत्तत्रकिंचित्पश्यत्यनन्वागतस्तेनभवत्यसंगोह्ययंपुरुष
इत्येवमेवैतद्याज्ञवल्क्यसोहंभगवतेसहस्रंददाम्यतऊर्ध्वंविमोक्षायैवब्रूहीति॥२७॥ वपुण्यंचपापंचनकृत्वेतितेननपूर्वापरव्या

घाताशंकायस्मान्निरुपाधिकःपरमार्थतोनकरोतिनलिप्यतेक्रियाफलेनतथाचव्यासेनभगवतोक्तमनादित्वान्निर्गुणत्वात्परमात्मायमव्य
यः॥शरीरस्थोपिकौंतेयनकरोतिनलिप्यतइति तथासहस्रदानंतुकामप्रविवेकस्यदर्शितत्वात्॥तथासवाएषएतस्मिन्स्वप्नेसवाएषए
तस्मिन्बुद्धांतइत्येताभ्यांकंडिकाभ्यांअसंगत्वैवप्रतिपादितायस्माद्बुद्धांतेकृतेनस्वप्नांतगतःसंप्रसन्नो गतत्वमनन्वागतत्वंचात्मनःसिद्धंचेद्विमोक्ष

पदार्थस्यनिर्णीतत्वाज्जनकस्यनैराकांक्ष्यमित्याशंक्याह॥तथेति॥यथामोक्षैकदेशस्यकर्मविवेकस्यदर्शितत्वात्पूर्वत्रसहस्रदानमुक्तंतथात्रापितदेकदेश
स्यकामविवेकस्यदर्शितत्वात्तद्दानंनतुकामप्रश्नस्यनिर्णीतत्वादित्यर्थः॥द्वितीयतृतीयकंडिकयोस्तात्पर्यंसंगृह्णाति॥तथेत्यादिना॥यथाप्रथमकंडिकायाःकर्म

अवस्थात्रयेप्यसंगत्वेकिंसिध्यतितदाह॥अतइति॥प्रतीकमादायस्वप्नांतशब्दार्थमाह॥प्रतियोनीति॥कथंपुनस्तस्यसुषुप्तविषयत्वमतआ
ह॥दर्शनवृत्तेरिति॥दर्शनंवासनामयंतस्यवृत्तिर्यस्मिन्निति।स्युसेत्यास्वप्नोदर्शनवृत्तिस्तस्यस्वप्नशब्देनैवसिद्धत्वादंतशब्दवैयर्थ्यात्तस्यांतो
लयोयस्मिन्निति।स्युसस्यास्वप्नांतशब्देनसुषुप्तग्रहेसत्यंतशब्देनस्वप्नस्यव्यावृत्त्युपपत्तेरत्रसुषुप्तस्थानमेवस्वप्नांतशब्दितमित्यर्थः॥तत्रैववाक्य

ऽसंबद्धोभवतिस्तैन्यादिकार्यादर्शनात्तस्मात्त्रिष्वपिस्थानेषुस्वतोऽसंगएवायमतोऽमृतःस्थानत्रयधर्मविलक्षणःप्रतियोन्याद्रवतिस्व
प्नांतायैवसंप्रसादायेत्यर्थः दर्शनवृत्तेःस्वप्नशब्देनाभिधानदर्शनादंतशब्देनचविशेषणोपपत्तेः एतस्माअंतायधावतीतिचसुषुप्तंदर्श
यिष्यतियदिपुनरेवमुच्यतेस्वप्नांतेरत्वाचरित्वाएतावुभावंतावनुसंचरतिस्वप्नांतंचबुद्धांतंचेतिदर्शनात्स्वप्नांतायैवेत्यत्रापिदर्शनवृ

सवाएषएतस्मिन्बुद्धांतेरत्वाचरित्वादृष्ट्वैवपुण्यंचपापंचपुनःप्रतिन्यायंप्रतियोन्याद्रवतिस्वप्नांतायैव॥१८॥

त्तिरेवस्वप्नउच्यतइतितथापिनकिंचिद्दुष्यत्यसंगताहिसिषाधयिषितासिध्यत्येवयस्माज्जागरितेदृष्ट्वैवपुण्यंचपापंचरत्वाचरित्वाचस्व
प्नांतमागतोनजागरितदोषेणानुगतोभवति॥१८॥१७॥एवमयंपुरुषआत्मास्वयंज्योतिःकार्यकरणसंघातविलक्षणःतत्प्रयोजका
भ्यांकामकर्मभ्यांविलक्षणोयस्मादसंगोह्ययंपुरुषोऽसंगत्वादित्ययमर्थःसवाएषएतस्मिन्संप्रसादइत्याद्याभिस्तिसृभिःकंडिकाभिःप्रति

शेषानुगुण्यमाह॥एतस्मादिति॥स्वप्नांतशब्दस्यस्वप्नेप्रयोगदर्शनादिहापितस्यैवतेनग्रहणमितिपक्षांतरमुत्थाप्यांगीकरोति॥यदीत्यादिना॥सिषा
धयिषितार्थसिद्धौहेतुमाह॥यस्मादिति॥१८॥१७॥कंडिकात्रयेणसिद्धमर्थमनुवदति॥एवमिति॥आत्मनःस्थानत्रयसंचारादसिद्धोऽसंगत्वहेतुरित्याशंक्य

वृ.र.
३५

सप्रयोजकाद्देहद्वयाद्वैलक्षण्यंतुदूरनिरस्तमित्येवशब्दार्थः॥एवंचोदितेहेतुसमर्थनार्थंमहामत्स्यवाक्यमितिसंगतिमभिप्रेत्यसंगत्यंतरमाह॥पूर्व
मपीति॥यथाप्रदर्शितोर्थःसंगत्वंकार्यकरणविनिर्मुक्तत्वंचअहार्यत्वमप्रकंप्यत्वं॥स्वच्छंदचारित्वंप्रकटयति॥संचरन्नपीति॥किंपुनर्दृष्टांतेनदार्ष्टांतिके
लभ्यतेतदाह॥दृष्टांतेति॥२९॥श्येनवाक्यमवतारयितुंवृत्तंकीर्तयति॥अत्रचेति॥पूर्वसंदर्भःसप्तम्यर्थः॥देहद्वयेनसप्रयोजकेनवस्तुतःसंबंधेफलमा

त्मनःकुतोयस्माज्जागरितात्स्वप्नंस्वप्नाच्चसंप्रसादंसंप्रसादात्पुनःस्वप्नंक्रमेणबुद्धांतंजागरितंबुद्धांतात्पुनःस्वप्नांतमित्येवमनुक्रम
संचारेणस्थानत्रयस्यव्यतिरेकःसाधितःपूर्वमप्युपन्यस्तोयमर्थःस्वप्नोभूत्वेमंलोकमतिक्रामतिमृत्योरूपाणीतितंविस्तरेणप्रतिपाद्य
केवलंदृष्टांतमात्रमवशिष्टंतद्वक्ष्यामीत्यारभतेतत्तत्रैतस्मिन्यथाप्रदर्शितेर्थेदृष्टांतोयमुपादीयतेयथालोकेमहामत्स्योमहांश्चासौमत्स्यश्च
नादेयेनस्रोतसाऽहार्यइत्यर्थःस्रोतश्चविष्टंभयतिस्वच्छंदचारीउभेकूलेनद्याःपूर्वंचापरंचानुक्रमेणसंचरतिससंचरन्नपिकूलद्वयंतन्मध्यवर्ति

तद्यथामहामत्स्यउभेकूलेअनुसंचरतिपूर्वंचापरंचैवमेवायंपुरुषएतावुभावंतावनुसंचरतिस्वप्नांतंचबुद्धांतंच ॥२९॥

नोदकस्रोतोवेगेननपरवशीक्रियतेएवमेवायंपुरुषःएतौउभौअंतौअनुसंचरतिकौतौस्वप्नांतंचबुद्धांतंच॥दृष्टांतप्रदर्शनफलंतुमृत्युरूपःका
र्यकरणसंघातःसहतत्प्रयोजकाभ्यांकामकर्मभ्यामनात्मधर्मःयंचात्मैतस्माद्विलक्षणइतिविस्तरतोव्याख्यातं॥२९॥अत्रचस्थानत्रयानुसंचा
रेणस्वयंज्योतिषआत्मनःकार्यकरणसंघातव्यतिरिक्तस्यकामकर्मभ्यांविविक्ततोक्तास्वतोनायंसंसारधर्मवानुपाधिनिमित्तमेवतस्यसंसारित्वम
विद्याध्यारोपितमित्येषसमुदायार्थउक्तस्तत्रच ह॥स्वतइति॥कथंतर्हितत्रसंसारित्वधीरित्याशंक्याह॥उपाधीति॥ अविद्येति॥वृत्तमनूद्योत्तरग्रंथमवतारयन् भूमिकामाह॥तत्रेति॥ औपाधिकस्यापिवस्तुत्वमाशंक्याह॥

अं.
रामः
३५

स्यानत्रयसंबंधित्वेनविप्रकीर्णविश्लिष्टंरूपमस्येत्यात्मातथा॥पुंजीकृत्यविवक्षितंसर्वविशेषणमादायेतियावत्॥एकत्रेतिवाक्योक्तिः॥तत्रहेतुंवदञ्जा
ग्रद्वाक्येनविवक्षितात्मोक्तिरित्याह॥यस्मादिति॥ससंगत्वादेर्दृश्यमानरूपस्यमिथ्यात्वंसूचयति॥अविद्ययेति॥स्वप्नवाक्येविवक्षितात्मसिद्धिमाशं
क्याह॥स्वप्नेति॥तर्हिसुषुप्तवाक्येतत्सिद्धिर्नेत्याह॥सुषुप्तेपुनरिति॥तत्राप्यविद्यानिर्मोकोनप्रतिभातीतिभावः॥एवंपातनिकांकृत्वाश्येनवा
क्यमादत्ते॥एकवाक्यतयेति॥पूर्ववाक्यानामितिशेषः॥कुत्रतर्हियथोक्तमात्मरूपंपुंजीकृत्यप्रदर्श्यतेतत्राह॥सुषुप्तेहीति॥तत्राभयमित्यविद्या

जाग्रत्स्वप्नसुषुप्तस्थानानांत्रयाणांसंबंधित्वेनविप्रकीर्णरूपउक्तोनपुंजीकृत्यैकत्रदर्शितः॥यस्माज्जागरितेससंगःसमृत्युःसकार्य
करणसंघातउपलक्ष्यतेऽविद्ययास्वप्नेतुकामसंयुक्तोमृत्युरूपविनिर्मुक्तउपलभ्यतेसुषुप्तेपुनर्बुद्धांतमागतोबुद्धांताच्चसुषुप्तेसंप्रस
न्नोऽसंगोभवतीत्यसंगतापिदृश्यतेएकवाक्यतयातूपसंह्रियमाणंफलंनित्यमुक्तबुद्धशुद्धस्वभावतास्यनैकत्रपुंजीकृत्यप्रदर्शितेति
तत्प्रदर्शनायकंडिकारभ्यतेसुषुप्तेह्येवंरूपतास्यवक्ष्यमाणातद्वाअस्यैतदतिछंदाअपहतपाप्माऽभयंरूपमितियस्मादेवंरूपंविलक्षणं
सुषुप्तंप्रविवक्षतितत्कथमित्याह॥दृष्टांतेनास्यार्थस्यप्रकटीभावोभवतीतितत्रदृष्टांतउपादीयते तद्यथास्मिन्नाकाशेभौतिकेश्येनोवासुप
र्णोवासुपर्णशब्देनक्षिप्रःश्येनउच्यतेयथाकाशेस्मिन्विहृत्यविपरिपत्यश्रांतोनानापरिपतनलक्षणेनकर्मणापरिखिन्नःसंहत्यपक्षौसंगमय्य
संप्रधार्यपक्षौसम्यग्लीयतेस्मिन्नितिसंलयोनीडोनीडायैवध्रियतेस्वात्मनैवधार्यते

राहित्यमुच्यते॥साचसुषुप्तेस्वरूपेणसत्यपिनाभिव्यक्ताभातीति

३१।

दृष्टव्यं॥यस्मात्सुषुप्तेयथोक्तमात्मरूपंवक्ष्यते॥तस्मादितियावत्॥एवंरूपमित्येतदेवप्रकटयति॥विलक्षणमिति॥कार्यकरणविनिर्मुक्तंकामकर्माविद्या
रहितमित्यर्थः॥स्थानद्वयंहित्वाकथंसुषुप्तंप्रवेष्टुमिच्छतीतिपृच्छति॥तत्कथमिति॥स्वप्नादेर्दुःखानुभवात्तत्त्यागेनसुषुप्तंप्राप्नोतीत्याह॥आहेति॥अथोत्त

अस्यार्थस्यसुषुप्तिप्राप्तिरूपस्येत्येतत्॥स्सएवार्थस्तत्रेतिसप्तम्यर्थः॥परमात्माकाशंव्यावर्त्तयितुंभौतिकविशेषणंमहाकायोमंदवेगःश्येनः॥सुपर्णी
स्तुवेगवानल्पविग्रहइतिभेदः॥धारणेसौकर्यंवक्तुंस्वयमेवेत्युक्तं॥स्वप्नजागरितयोरवसानमंतमज्ञातंब्रह्म॥तथानकंचनस्वप्नमिति॥स्वप्नजागरि
तयोरविशेषेणसर्वदर्शनंनिषिध्यतइतिशेषः॥स्वप्नविशेषणात्स्वप्नदर्शननिषेधेपिकुतोजाग्रद्दर्शनंनिषिध्यतेतत्राह॥जागरितेपीति॥कथमयमभि

स्वयमेवयथायंदृष्टांतएवमेवायंपुरुषएतस्माएतस्मैअंतायधावतिअंतशब्दवाच्यस्यविशेषणंयत्रयस्मिन्नंतेसुप्तोनकंचननकंचिदपि
कामंकामयतेतथानकंचनस्वप्नंपश्यतिनकंचनकाममितिस्वप्नबुद्धांतयोरविशेषेणसर्वःकामःप्रतिषिध्यतेकंचनेत्यविशेषताभिधानात्॥
तथानकंचनस्वप्नमितिजागरितेपियद्दर्शनंतदपिस्वप्नंमन्यतेश्रुतिरतआहनकंचनस्वप्नंपश्यतीतितथाचश्रुत्यंतरंतस्यत्रयआवसथास्त्रयः

तद्यथास्मिन्नाकाशेश्येनोवासुपर्णोवाविपरिपत्यश्रांतःसंहत्यपक्षौसंलयायैवध्रियतएवमेवायंपुरुषएतस्माअंतायधाव
तियत्रसुप्तोनकंचनकामंकामयतेनकंचनस्वप्नंपश्यति॥१९॥ स्वप्नाइतियथादृष्टांतेपक्षिणःपरिपतनजश्रमापनुत्तयेस्वनीडोपसर्प
णमेवंजाग्रत्स्वप्नयोःकार्यकरणसंयोगजक्रियाफलैःसंयुज्यमानस्यपक्षिणःपरिपतनजइवश्रमोभवतितच्छ्रमापनुत्तयेस्वात्मनोनीडमायत
नंसर्वसंसारधर्मविलक्षणंसर्वक्रियाकारकफलायासशून्यंस्वमात्मानंप्रविशति॥१९॥यद्यस्यायंस्वभावःसर्वसंसारधर्मशून्यतापरोपाधिनि

प्रायःश्रुतेरवगतइत्याशंक्यविशेषणसामर्थ्यादित्याह॥अतआहेति॥जागरितस्यापिस्वप्नत्वेश्रुत्यंतरंसंवादयति॥तथाचेति॥दृष्टांतदार्ष्टांतिकयोर्विवक्षित
मंशंदर्शयति॥यथेत्यादिना॥संयुज्यमानस्येत्यत्रज्ञस्येतिशेषः॥सर्वसंसारधर्मविलक्षणमितिविशेषणंव्याचष्टे॥सर्वेति॥१९॥श्येनवाक्येनात्मनःसौषुप्तंरूप

असंगत्वतः स्वतो बुध्यादिसंबंधासंभवमुपेत्याह ॥ यन्निमित्तंचेति ॥ सिद्धांताभिप्रायमनूद्य पूर्ववादी विकल्पयति ॥ तस्या इति ॥ आगंतुकत्वमस्वाभाविकत्वं आ द्येमोक्षानुपपत्तिंविवक्षित्वाह ॥ यदिचेति ॥ अस्तु तर्हि द्वितीयोत्र मोक्षोपपत्तेरित्याशंक्याह ॥ तस्याश्चेति ॥ माभूदविद्यात्मस्वभावस्तद्धर्मस्तु स्यादित्यंतराभावा दित्याह ॥ कथंचेति ॥ तत्रोत्तरत्वेनोत्तरग्रंथमुत्थापयति ॥ सर्वानर्थेति ॥ तासांपरमसूक्ष्मत्वं दृष्टांतेन दर्शयति ॥ यथेति ॥ कथमन्नरसस्य वर्णविशेषप्राप्तिरित्या

यन्निमित्तंचास्य परोपाधिकृतं संसारधर्मित्वं साचाविद्या तस्या अविद्यायाः किंस्वाभाविकत्वमाहोस्वित्कामकर्मादिवदागंतुकत्वं ॥ यदिचागंतुक त्वं ततो विमोक्ष उपपद्यते तस्याश्चागंतुकत्वे कोपपत्तिः कथंवाऽनात्मधर्मोऽविद्येति ॥ सर्वानर्थबीजभूताया अविद्यायाः सतत्वावधारणार्थं परा कं डिकारभ्यते ता वा अस्य शिरःपाण्यादिलक्षणस्य पुरुषस्यैता हिता नाम नाड्यो यथा केशः सहस्रधा भिन्नस्तावता तावत्परिमाणेनाणिम्नाणुत्वे

ता वा अस्यैता हिता नाम नाड्यो यथा केशः सहस्रधा भिन्नस्तावताणिम्ना तिष्ठंति शुक्लस्य नीलस्य पिंगलस्य हरितस्य लोहितस्य पूर्णा ॥ नतिष्ठंति ताश्च शुक्लस्य रसस्य नीलस्य पिंगलस्य हरितस्य लोहितस्य पूर्णा एतैः शुक्लादिभी रसविशेषैः पूर्णा इत्यर्थः एते च रसानां वर्णविशेषाः वातपित्तश्लेष्मणामितरेतरसंयोगवैषम्यविशेषाद्विचित्रा बहवश्च भवंति तास्वेवंविधासु नाडीषु सूक्ष्मासु बालाग्र सहस्रभेदपरिमाणासु शुक्लादिरसपूर्णासु सकलदेहव्यापिनीषु शंक्याह ॥ वातेति ॥ भुक्तस्यान्नस्य परिणामविशेषो वातबाहुल्येनीलो भवति पित्ता धिक्ये पिंगलो जायते श्लेष्मातिशये शुक्लो भवति पित्ताल्पत्वे हरितः साम्ये च धातूनां लोहित इति तेषां मिथः संयोगवैषम्यात्तत्साम्याच्च विचित्रा बहवश्चान्नर सा भवंति तद्व्याप्तानां नाडीनामपि तादृशो वर्णो जायते अरुणाः शिरा वातवहा नीलाः पित्तवहाः शिराः ॥ असृग्वहास्तु रोहिण्यो गौर्यः श्लेष्मवहाः शिरा इति सौश्रुते वैद्यके ।

एवंविधास्थित्यस्यैवविवरणं॥सूक्ष्मास्वित्यादि॥पंचभूतानिदशेंद्रियाणिप्राणोंतःकरणमितिसप्तदशकं॥जागरितेलिंगशरीरस्यस्थितिमुक्त्वास्वप्नान
स्थितिमाह॥तल्लिंगमिति॥विवक्षितांस्वप्नस्थितिमुक्त्वाश्रुत्यक्षराणियोजयति॥अथेत्यादिना॥स्वप्नेधर्मादिनिमित्तवशान्मिथ्यैवलिंगंनानाकारमवभास
तेतन्मिथ्याज्ञानंलिंगानुगतंमूलाविद्याकार्यत्वादविद्येतिस्थितेसतीति॥अथशब्दार्थमाह॥एवंसतीति॥तस्मिन्कालेस्वप्नदर्शनंविज्ञेयमितिशेषः॥इ

सप्तदशकंलिंगंवर्ततेतदाश्रिताःसर्वावासनाउच्चावचसंसारधर्मानुभवजनितास्तल्लिंगंवासनाश्रयंसूक्ष्मत्वात्स्वच्छंस्फटिकमणिकल्पंनाडी
गतरसोपाधिसंसर्गवशाद्धर्माधर्मप्रेरितोद्भूतवृत्तिविशेषंस्त्रीरथहस्त्याद्याकारविशेषैर्वासनाभिःप्रत्यवभासते ऽथैवंसतियत्रयस्मिन्काले
केचनशत्रवोन्येवातस्कराग्रामामागत्यघ्नंतीतिमृषैववासनानिमित्तःप्रत्ययोऽविद्यारब्धोजायतेतदेतदुच्यतेएनंस्वप्नदर्शंघ्नंतीवेतितथाजिनंती

अथयत्रैनंघ्नंतीवजिनंतीवहस्तीवविच्छाययतिगर्तमिवपततियदेवजाग्रद्भयंपश्यतितदत्राऽविद्ययामन्यते

ववशीकुर्वंतीवनकेचनघ्नंतिनापिवशीकुर्वंतिकेवलंत्वविद्यावासनोद्भवनिमित्तंभ्रांतिमात्रंतथाहस्तीवैनंविच्छाययतिविच्छादयति
विद्रावयतिधावयतीवेत्यर्थोगर्तमिवपततिगर्तंजीर्णकूपादिकमिवपतंतमात्मानमुपलक्षयति॥तादृशीह्यस्यमृषावासनोद्भवत्यसं
तनिकृष्टाऽधर्मोद्भासितांतःकरणवृत्त्याश्रयादुःखरूपत्वात्किंबहुनायदेवजाग्रद्भयंपश्यतिहस्त्यादिलक्षणंतदेवभयरूपमत्रास्मिन्स्वप्नेविनै

वशब्दार्थमाह॥नेत्यादिना॥उक्तोदाहरणेनसमुच्चितोदाहरणांतरमाह॥तथेति॥गतीदिपतनप्रतीतौहेतुमाह॥तादृशीहीति॥तादृशत्वंविशदयति॥
असंतेति॥यथोक्तंवासनाप्रभवत्वंकथंगर्तपतनादेरवगतमित्याशंक्याह॥दुःखेति॥यदेवेत्यादिश्रुतेरर्थमाह॥किंबहुनेति॥भयमित्यस्यभयरूपमितित्वा॥

तथाहस्त्यादिनास्तिचेत्कथंस्वप्नेभातीत्याशंक्याह॥अविद्येति॥अथयत्रदेवइवेत्यादेस्तात्पर्यमाह॥अथेति॥तत्रतस्याःफलमुच्यतेइतिशेषः॥त
त्पर्योक्त्याथशब्दार्थमुक्त्वाविद्यायाविषयस्वरूपेप्रश्नपूर्वकंयदन्यत्रेत्यादेरर्थमाह॥किंविषयेति॥इवशब्दप्रयोगात्स्वप्नएवोक्तइतिशंकांवारय
ति॥देवतेति॥विद्येत्युपात्तिरुक्ताअभिषिक्तोराज्यस्थोजाग्रदवस्थायामितिशेषः॥अहमेवेदमित्याद्यवतारयति॥एवमिति॥यथाविद्यायाम

मविद्यावासनयामृषैवोद्भूतयामन्यते॥अथपुनर्यत्राविद्यापकृष्यमाणाविद्याचोत्कृष्यमाणाकिंविषयाकिंलक्षणाचेत्युच्यतेअथपु
नर्यत्रयस्मिन्कालेदेवइवस्वयंभवति देवताविषयाविद्यायदोद्भूताजागरितकालेतदोद्भूतयावासनयादेवमिवात्मानंमन्यतेस्वप्नेपित
दुच्यतेदेवइवराजेवराज्यस्थोभिषिक्तःस्वप्नेपिराजाहमितिमन्यतेराजवासनावासितःएवमत्यंतप्रक्षीयमाणाऽविद्योद्भूताचविद्यासर्वा

ऽथयत्रदेवइवराजेवाहमेवेदꣳसर्वोस्मीतिमन्यतेसोस्यपरमोलोकः॥३१॥

त्मविषयायदास्वप्नेपितद्भावभावितोहमेवेदंसर्वोस्मीतिमन्यतेसयःसर्वात्मभावःसोस्यात्मनःपरमोलोकःपरमआत्मभावःस्वाभाविकोय
त्रसर्वात्मभावाद्वर्वाग्बालाग्रमात्रमन्यत्वेनदृश्यतेनाहमस्मीतितदवस्थाऽविद्यातयाऽविद्ययायेप्रत्युपस्थापिताअनात्मभावालोकास्तेऽपरमाः
स्थावरांतास्तान्संव्यवहारविषयांल्लोकानपेक्ष्यायंसर्वात्मभावःसमस्तोनंतरोबाह्यःसोस्यपरमोलोकः

पकृष्यमाणायांकार्यमुक्तंतद्वदित्यर्थः॥यदे
तिजागरितोक्तिः॥इदंचैतत्सर्वमहंचिन्मात्रमेवनतुमदतिरेकेणास्तितस्मादहंपूर्णोस्मीतिजानातीत्यर्थः॥सर्वात्मभावस्यपरमत्वमुपपादयति॥यत्रेत्या
दिना॥तत्रतेनाकारेणाविद्यावस्थितेत्याह॥तदवस्थेति॥तस्याःकार्यमाह॥तयेति॥समस्तत्वंपूर्णत्वमनंतरत्वमेकरसत्वं॥अबाह्यत्वंप्रत्यक्त्वं॥योयथोक्तो

वाक्यार्थमुपसंहरति॥तस्मादिति॥मोक्षोविद्याफलमित्युत्तरत्रसंबंधः॥तस्यप्रत्यक्षत्वंदृष्टांतेनस्पष्टयति॥यथेति॥विद्याफलवदविद्याफलमपिस्वप्नेप्र
त्यक्षमित्युक्तमनुवदति॥तथेति॥विद्याफलमविद्याफलंचेत्युक्तमुपसंहरति॥तेएतेइति॥उक्तंफलद्वयंविभजते॥विद्ययेति॥असर्वोभवतीत्येतत्प्रक
टयति॥अन्यतइति॥प्रविभागफलमाह॥यतइति॥विरोधफलंकथयति॥विरुद्धत्वादिति॥अविद्याकार्यंनिगमयति॥असर्वेति॥अविद्यायाश्चेत्परिच्छि
न्नफलत्वंतदातस्यभिन्नत्वादेवयथोक्तंविरोधादिदुर्वारमित्यर्थः॥विद्याफलंनिगमयति॥समस्तस्त्विति॥नन्वविद्यायाःसतत्वंनिरूपयितुमारब्धंनचत

त स्मादपकृष्यमाणायामविद्यायांविद्यायांचकाष्ठांगतायांसर्वात्मभावोमोक्षो यथास्वयंज्योतिष्ट्वंस्वप्नेप्रत्यक्षतउपलभ्यतेतद्वद्विद्याफलमु
पलभ्यतइत्यर्थस्तथाऽविद्यायामप्युत्कृष्यमाणायांतिरोधीयमानायांविद्यायामविद्यायाःफलंप्रत्यक्षतएवउपलभ्यतेऽथयत्रैनंघ्नंतीवजिनं
तीवेतितेएतेविद्याविद्याकार्येसर्वात्मभावःपरिच्छिन्नात्मभावश्च॥विद्ययाशुद्धयासर्वात्माभवत्यविद्ययाचासर्वोभवत्यन्यतःकुत
श्चित्प्रविभक्तोभवतियतःप्रविभक्तोभवतितेनविरुध्यतेविरुद्धत्वाद्धन्यतेजीयतेविच्छाद्यतेवाऽसर्वविषयत्वेचभिन्नत्वादेतद्भवति
समस्तस्तुसन्कुतोभिद्यतेयेनविरुध्येतविरोधाभावेकेनहन्यतेजीयतेविच्छाद्यतेवाऽतइदमविद्यायाःसतत्वमुक्तंभवति॥सर्वात्मा
नंसंतमसर्वात्मत्वेनग्राहयत्यात्मनोन्यद्वस्त्वंतरमविद्यमानंचप्रत्युपस्थापयतिआत्मानमसर्वमापादयतिततस्तद्विषयःकामोभव
तियतोभिद्यतेकामतःक्रियामुपादत्ते॥ततःफलंतदेतदुक्तं दृश्यापिदर्शितंतथाचकिंकृतंस्यादतआह॥अतइति॥कार्यवशादितियावत्॥इदं
शब्दार्थमेवस्फुटयति॥सर्वात्मानमिति॥ग्राहकत्वमेवव्यनक्ति॥आत्मनइति॥वस्त्वंतरोपस्थितिफलमाह॥ततइति॥कामस्यकार्यमाह॥कामतइति॥
क्रियातःफलंलभतेतद्भोगकालेचरागादिनाक्रियामादधातीत्यविच्छिन्नःसंसारस्तद्यावन्नसम्यग्ज्ञानंतावन्मिथ्याज्ञाननिदानमविद्यादुर्वारेत्याह॥ततइति॥

तत्रैववाक्यशेषमनुकूलयति॥वक्ष्यमाणंचेति॥अविद्यात्मनःस्वभावोनवेतिविचारेकिंनिर्णीतंभवतीत्याशंक्यवृत्तंकीर्तयति॥इदमिति॥अविद्यायाः
परिछिन्नफलत्वमस्तितत्तोवैपरीत्येनविद्यायाःकार्यमुक्तंसचसर्वात्मभावोदर्शितइतियोजना॥संप्रतिनिर्णीतमर्थंदर्शयति॥साचेति॥ज्ञानेसत्यवि
द्यानिवृत्तिरित्यत्रवाक्यशेषंप्रमाणयति॥तच्चेति॥अविद्यानात्मनःस्वभावोनिवर्त्यत्वाद्रज्जुसर्पवदित्याह॥तस्मादिति॥निवर्त्यत्वेप्यात्मस्वभावत्वे
काहानिरित्याशंक्याह॥नहीति॥अविद्यायाःस्वाभाविकत्वाभावेफलितमाह॥तस्मादिति॥३१॥२०॥तद्वाअस्यैतदित्युत्तरवाक्यतात्पर्यमाह॥इद

वक्ष्यमाणंचयत्रहिद्वैतमिवभवतितदितरइतरंपश्यतीत्यादीदमविद्यायाःसतत्त्वंसहकार्येणप्रदर्शितंविद्यायाश्चकार्यंसर्वात्मभावःप्र
दर्शितोऽविद्याविपर्ययेणसाचाविद्यानात्मनःस्वाभाविकोधर्मोयस्माद्विद्यायामुत्कृष्यमाणायांस्वयमपचीयमानासतीकाष्ठांगतायांविद्या
यांपरिनिष्ठितेसर्वात्मभावेसर्वात्मनानिवर्ततेरज्ज्वामिवसर्पज्ञानंरज्जुनिश्चये तच्चोक्तंयत्रत्वस्यसर्वमात्मैवाभूत्तत्केनकंपश्येदित्यादितस्मा
नात्मधर्मोऽविद्यानहिस्वाभाविकस्योच्छित्तिःकदाचिदप्युपपद्यतेसवितुरिवौष्ण्यप्रकाशयोस्तस्मात्तस्याःमोक्षउपपद्यते॥३१॥इदानींयोसौ
सर्वात्मभावोमोक्षोविद्याफलंक्रियाकारकफलशून्यंसप्रत्यक्षतोनिर्दिश्यतेयत्राविद्याकामकर्माणिनसंतितदेतत्प्रस्तुतंयत्रसुप्तोनकंचन
कामंकामयतेनकंचनस्वप्नंपश्यतीतितदेतद्वैअस्यरूपंयःसर्वात्मभावःसोस्यपरमोलोकइत्युक्तस्तदतिच्छंदाअतिच्छंदमित्यर्थः॥रूपपर
त्वाच्छंदःकामोतिगतश्छंदोयस्माद्रूपात्तदतिच्छंदंरूप

३१५

नीमिति॥विद्याविद्ययोस्तत्फलयोश्चप्रदर्शनानंतरमितियावत्॥मोक्षमेवविशिनष्टि॥य
त्रेति॥पदद्वयस्यान्वयंदर्शयन्विवक्षितमर्थमाह॥तदेतदिति॥यत्रेत्यंतशब्दितंब्रह्मोच्यते॥व्याख्यातंपदद्वयमनूद्यवैशब्दस्यप्रसिद्धार्थत्वंमन्वानोरू
पशब्देनषष्ठ्याःसंबंधंदर्शयति॥तदिति॥अतिच्छंदमितिप्रयोगेहेतुमाह॥रूपपरत्वादिति॥कथमतिच्छंदमित्यात्मरूपंविवक्ष्यतेतत्राह॥छंदइति॥

छंदः शब्दस्य गायत्र्यादिछंदोविषयस्य कथं कामविषयत्वमित्याशंक्याह ॥ अन्योसाविति ॥ गायत्र्यादिविषयत्वं तत्काछंदः शब्दस्य कामविषयत्वमतः शा
स्त्रार्थः यथात्मरूपं कामवर्जितमित्येतदत्र विवक्षितं किमिति तर्हि दैर्घ्यं प्रयुज्यते तत्राह ॥ तथापीति ॥ स्वाध्यायधर्मत्वं छांदसत्वं ॥ वृद्धव्यवहारमंतरेण काम
वाचित्वं छंदः शब्दस्य कथमित्याशंक्याह ॥ अस्तिचेति ॥ तस्य कामवचनत्वे सति सिद्धं यद्रूपमनूद्य तस्यार्थमुपसंहरति ॥ अतइति ॥ तथाकामवर्जितत्ववदित्ये

मन्योसावस्वरांतश्छंदः शब्दो गायत्र्यादिछंदोवाची अयंतु कामवचनोऽतः स्वरांत एवं तथाप्यतिछंदा इति पाठः स्वाध्यायधर्मो द्रष्टव्यो अस्तिचलो
केकामवचनप्रयुक्तः छंदः शब्दः स्वछंदः परछंद इत्यादावतो तिछंदमित्येवमुपनेयं कामवर्जितमेतद्रूपमित्यस्मिन्नर्थे तथाऽपहतपाप्मा पाप्म
शब्देन धर्माधर्मावुच्येते पाप्मभिः संसृज्यते पाप्मनो विजहातीत्युक्तत्वादपहतपाप्म धर्माधर्मवर्जितमित्येतत् ॥ किंच ॥ अभयं भयं हि

तद्वा अस्यैतदतिछंदा अपहतपाप्माऽभयꣳ रूपं ॥

नामाविद्याकार्यमविद्ययाभयं मन्यत इति ह्युक्तं तत्कार्यद्वारेण कारणप्रतिषेधोयमभयं रूपमित्यविद्यावर्जितमित्येतद्यदेतद्विद्या
फलं सर्वात्मभावस्तदेतदतिछंदापहतपाप्माभयं रूपं सर्वसंसारधर्मवर्जितमतोऽभयं रूपमेतदिदं च पूर्वमेवोपन्यस्तमतीतानंतर ब्रा
ह्मणसमाप्तावभयं वै जनक प्राप्तोसीत्यागमत इह तु तर्कतः प्रपंचितं तत् ॥ नन्वत्राधर्मवर्जितत्वमेव प्रतीयते न धर्मवर्जितत्वं पाप्मशब्दस्य अधर्ममा
त्रवचनत्वादत आह ॥ पाप्मशब्देनेति ॥ उपक्रमानुसारेण पाप्मशब्दस्योभयविषयत्वे विशेषणमनूद्य विवक्षितमर्थं कथयति ॥ अपहतेति ॥ तर्हि कार्यमेवावि
द्यायानिषिध्यतेनेत्याह ॥ तत्कार्येति ॥ तस्मादर्थे तच्छब्दः ॥ वाक्यार्थमुपसंहरति ॥ यदेतदिति ॥ कूर्चब्राह्मणांते पीदं रूपमुक्तमित्याह ॥ इदं चेति ॥ आगमवशात्तत्रा

सविशेषत्वंचेदात्मत्वानुपपत्तिरित्यादिस्तर्कः॥आगमसिद्धे किंतर्कोपन्यासेनेत्याशंक्याह॥दर्शितेति॥स्त्रीवाक्यस्यसंगतिंवक्तुंवृत्तमनुद्रवति॥अयमिति॥अनन्वागतवाक्येनात्मनश्चेतनत्वमुक्तमित्याह॥सयदिति॥आत्मनःसदाचैतन्यज्योतिष्ट्वंस्वरूपंनकेवलमुक्तादागमादेवसिद्धं किंतुपूर्वोक्तादनुमानाच्चस्थितमित्याह॥अतइति॥वृत्तमनूद्यसंबंधवक्तुकामश्चोदयति॥सयदीति॥अत्रेतिसुषुप्तिरुक्ता॥चैतन्यस्वभावस्यैवसुषुप्तेविशेषज्ञानाभा

दर्शितागमार्थप्रत्ययदार्ढ्यायायमात्मासयंचैतन्यज्योतिःस्वभावःसर्वस्वेनैवचैतन्यज्योतिषावभासयतिसयत्तत्रकिंचित्पश्यतिरमतेचरतिंजानातिचेत्युक्तमतःस्थितंचैतन्यायत्तोनित्यस्वरूपचैतन्यज्योतिष्ट्वमात्मनःसयद्यात्मात्राविनष्टःचैतन्यस्वरूपःस्वेनैवरूपेणवर्त्ततेकस्मादयमहमस्मीत्यात्मानंवाबहिर्वेमानिभूतानीतिजाग्रत्स्वप्नयोरिवनजानातीत्यत्रोच्यतेशृण्वत्राज्ञानहेतुं॥एकत्वमेवाज्ञानहेतुस्त

## तद्यथाप्रिययास्त्रियासंपरिषक्तो

त्कथमित्युच्यतेदृष्टांतेनहिप्रत्यक्षीभवतिविवक्षितोर्थइत्याहतत्तत्रयथालोकेप्रिययेष्टयास्त्रियासंपरिषक्तः———————सम्यक्परिषक्तःकामयंत्याकामुकःसन्नबाह्यमात्मनःकिंचनकिंचिदपिनवेदमत्तोन्यदस्तीतिनचांतरमयमहमस्मिसुखीदुःखीवेतिअपरिषक्तस्तुतयाप्रविभक्तोजानातिसर्वमेवबाह्यमाभ्यंतरंच वंसाधयति॥उच्यतइति॥सुषुप्तिःसप्तम्यर्थः॥अज्ञानंविशेषज्ञानाभावः॥कोसावज्ञानहेतुस्तमाह॥एकत्वमिति॥जीवस्यपरेणात्मनायदेकत्वंतत्कथंसुषुप्तेविशेषज्ञानाभावेकारणंतस्मिन्सत्यपिचैतन्यस्वभावानिवृत्तेरितिशंकते॥तत्कथमिति॥तत्रस्त्रीवाक्यमुत्तरत्वेनोत्थापयति॥उच्यतइति॥तत्रदृष्टांतभागमाचष्टे॥दृष्टांतेनेति॥एकत्वकृतोविशेषज्ञानाभावोविवक्षितोर्थः॥परिषंगप्रयुक्तसुखाभिनि

बृ.र. ४०

तर्हिपरिष्वंगवतोपिस्वभावविपरिलोपासंभवाद्विशेषविज्ञानंस्यादितिचेन्नेत्याह॥परिष्वंगेति॥स्त्रीपुंलक्षणयोर्यामिश्रत्वंपरिष्वंगस्तदुत्तरकालंसंभो
गफलप्राप्तिरेकत्वापत्तिस्तद्वशाद्विशेषाज्ञानमित्यर्थः॥दार्ष्टांतिकंव्याकरोति॥एवमेवेति॥भूतमात्राःशरीरेंद्रियलक्षणास्ताभिश्चिदात्मनस्तादात्म्याध्या
सात्तत्प्रतिबिंबोजातःस्वतोविभक्तवद्भातीत्यत्रदृष्टांतमाह॥सैंधवेति॥तस्यदेहादौप्रवेशंदृष्टांतेनदर्शयति॥जलादाविति॥उपसर्गबललब्धमर्थंकथ
यति॥एकीभूतइति॥तादात्म्यंव्यावर्तयितुंनिरंतरइत्युक्तं॥परमात्माऽभेदप्रयुक्तमनवच्छिन्नत्वमाह॥सर्वात्मेति॥एवंस्त्रीवाक्याक्षराणिव्याख्यायचोद्य

अं. ६

परिष्वंगोत्तरकालेत्वेकत्वापत्तेर्नजानातिएवमेवयथादृष्टांतोयंपुरुषःक्षेत्रज्ञोभूतमात्रासंसर्गतःसैंधवखिल्यवत्प्रविभक्तोजलादौचंद्रा
दिप्रतिबिंबवत्कार्यकरणइहप्रविष्टःसोयंपुरुषःप्राज्ञेनपरमार्थेनस्वाभाविकेनस्वेनात्मनापरेणज्योतिषासंपरिष्वक्तःसम्यक्परिष्वक्तः॥

नबाह्यंकिंचनवेदनांतरमेवमेवायंपुरुषःप्राज्ञेनात्मनासंपरिष्वक्तोनबाह्यंकिंचनवेदनांतरंतद्वाअस्यैतदाप्तकाम

एकीभूतोनिरंतरःसर्वात्मानबाह्यंकिंचनवस्त्वंतरंनाप्यांतरमात्मन्ययमहमस्मिसुखीदुःखीवेतिवेदतत्रचैतन्यज्योतिःस्वभावत्वेकस्मादिहन
जानातीतियत्प्राक्षीस्तत्रायंहेतुर्मयोक्तःएकत्वंयथास्त्रीपुंसयोःपरिष्वक्तयोस्तत्रार्थान्नानात्वंविशेषविज्ञानहेतुरित्युक्तंभवति॥नानात्वेचका
रणमात्मनोवस्त्वंतरस्यप्रत्युपस्थापिकाऽविद्येत्युक्तं॥

परिहारंप्रकटयति॥तत्रेति॥प्रत्यगात्मनीतियावत्॥इहेतिसुषुप्तिरुच्यतेयथापरि
ष्वक्तयोःस्त्रीपुंसयोरेकत्वंपुंसोविशेषविज्ञानाभावेकारणंतथापरेणात्मनासुषुप्तेजीवस्यैकत्वंविशेषविज्ञानाभावेतस्यतत्रकारणमुक्तमित्यर्थः
॥स्त्रीवाक्यश्रौतमर्थमाह॥तत्रेति॥किंपुनर्नानात्वेकारणमितितदाह॥नानात्वेचेति॥उक्तमथयोन्यामित्यादावित्यर्थः ॥

राम: ५०

मभिधायार्थिकमर्थं

किमेतावतासुषुप्ते विशेषविज्ञानाभावस्यायातंतत्राह॥ तत्रेति॥ विशेषविज्ञानेनानात्वंतत्रचाविद्याकारणमितिस्थितेसतीतियावत्॥ यदात
देतिसुषुप्तिर्विवक्षिता॥ प्रविविक्तत्वंकार्यकरणाविद्याविरहित्वं॥ सर्वेणपूर्णेनपरमात्मनासहेत्यर्थः॥ विज्ञानात्माषष्ठ्योच्यते॥ एकत्वफलमाह
॥ ततश्चेति॥ उक्तमुपजीव्याप्तकामवाक्यमवतार्यव्याचष्टे॥ यस्मादिति॥ आप्तकामत्वंसमर्थयते॥ यस्मात्समस्तमिति॥ तदेवव्यतिरेकमुखेनविशद

तत्राचाविद्यायाः यदाप्रविविक्तोभवतितदासर्वेणैकत्वमेवास्यभवतिततश्चज्ञानज्ञेयादिकारकविभागेऽसतिकुतोविशेषविज्ञानप्रा
दुर्भावःकामोवासंभवतिस्वाभाविकेस्वरूपस्थआत्मज्योतिषियस्मादेवंसर्वैकत्वमेवास्यरूपमतस्तद्वैअस्यआत्मनःस्वयंज्योतिःस्वभाव
स्यैतद्रूपमाप्तकामंयस्मात्समस्तंतस्मादाप्ताःकामाअस्मिन्रूपेतदिदमाप्तकामंयस्यह्यन्यत्वेनप्रविभक्तःकामस्तदनाप्तकामंभवति॥ यथाजा

मात्मकाममकाम२ रूप२ शोकांतरं॥ ३२॥ २१॥

गरितावस्थायांदेवदत्तादिरूपंनत्विदंतथाकुतश्चिन्नविभज्यतेऽतस्तदाप्तकामंभवतिकिमन्यस्माद्वस्त्वंतरान्नप्रविभज्यतेआहोस्विदात्मै
वतद्वस्त्वंतरमतआहनान्यदस्त्यात्मनःकथंयतःआत्मकामंआत्मैवकामायस्मिन्रूपेन्यत्रप्रविभक्ताइवान्यत्वेनकाम्यमानाःयथाजाग्रत्स्वप्नयो

स्तेस्यात्मैवान्यत्व यति॥ यस्यहीत्यादिना॥ विशेषणांतरमाकांक्षापूर्वकमादायव्याचष्टे॥ किमन्यस्मादित्यादिना॥ सुषुप्तेरन्यत्रात्मनःसकाशा
दन्यत्वेनप्रविभक्ताइवकाम्यमानाःसुषुप्तावात्मैवकामास्तस्मादात्मकाममात्मरूपमित्येतद्दृष्टांतेनाह॥ यथेति॥ अवस्थाद्वयेखल्वात्मनःसकाशादन्य
त्वेनप्रविभक्ताइवकामाःकाम्यंतइवकामाःनैवंसुषुप्त्यवस्थायामात्मनस्तेभिद्यंतेकिंतुसुषुप्तस्यात्मैवकामइत्यात्मकाममेतद्रूपमित्यर्थः॥ तस्मात्मैवस

यद्यपि सुषुप्ते ऽविद्या विद्यते तथापि न साभिव्यक्तास्तीत्यनर्थपरिहारोपपत्तिरित्यर्थः॥ कामानामात्माश्रयत्वपक्षं प्रतिक्षेप्तुं तृतीयं विशेषणं॥ शोकमध्यं शोकस्यांतरं प्रत्यग्भूतमिति यावत्॥ तर्हि शोकवत्वं प्राप्तं नेत्याह॥ सर्वथेति॥ पक्षद्वयेपि शोकशून्यमात्मरूपं॥ न हि शोको येनात्मवांस्तस्य शोकवत्वं शोकस्यात्माधीनसत्तास्फूर्तेरात्मातिरेकेणाभावादित्यर्थः॥३२॥ अत्र पितेत्यादिवाक्यमवतारयितुं वृत्तमनुद्रवति॥ प्रकृत इति॥ अविद्यादिनिर्मोकेहेतुद्वयमाह॥ असंगत्वादिति॥ यद्यपि नागंतुकत्वमविद्याया युक्तं तथाप्यभिव्यक्तासानर्थहेतुरागंतुकीति द्रष्टव्यं॥ स्त्रीवाक्यनिरस्यांशं कामनुवद

प्रत्युपस्थापकहेतोरविद्याया अभावादात्मकाममत एवाकाममेतद्रूपं काम्यविषयाभावाच्छोकांतरं शोकच्छिद्रं शोकशून्यमित्येतच्छोकमध्यमिति वा सर्वथाप्यशोकमेतद्रूपं शोकवर्जितमित्यर्थः॥३२॥२१॥ प्रकृतः स्वयंज्योतिरात्माऽविद्याकामकर्मनिर्मुक्त इत्युक्तं असंगत्वादात्मनः आगंतुकत्वाच्च तेषां तत्रैवं माशंका जायते॥ चैतन्यस्वभावत्वे सत्यप्येकीभावान्न जानाति स्त्रीपुंसयोरिव संपरिष्वक्तयोरित्युक्तं तत्रप्रासंगिकमेतदुक्तं॥ कामकर्मादिवत्स्वयंज्योतिष्ट्वमप्यस्यात्मनो न स्वभावो यस्मात्संप्रसादे नोपलभ्यत इत्येवमाशंकायां प्राप्तायां तन्निराकरणाय स्त्रीपुंसयोर्दृष्टांतोपादानेन विद्यमानस्यैव स्वयंज्योतिष्ट्वस्य सुषुप्ते ऽग्रहणमेकीभावहेतो न तु कामकर्मादिवदागंतुकमित्येतत्प्रासंगिकमभिधाय यत्प्रकृतं तदेवानुप्रवर्त्तयति अत्र चैतत्प्रकृतविद्याकामकर्मनिर्मुक्तमेवतद्रूपं यत्सुषुप्ते आत्मनो गृह्यते प्रत्यक्षत इति ति॥ तत्र

ति॥ कामादिविमोके दर्शिते सतीति यावत्॥ स्वभावस्यापायो न संभवतीत्यभिप्रेत्य हेतुमाह॥ यस्मादिति॥ शंकोत्तरत्वेन स्त्रीवाक्यमवतार्य तत्तात्पर्यं पूर्वोक्तमनुकीर्त्तयति॥ एवं स्वयमिति॥ वृत्तमनूद्योत्तरग्रंथमुत्थापयति॥ इत्येतदिति॥ स्वयंज्योतिष्ट्वस्य स्वाभाविकत्वमेतच्छब्दार्थः॥ प्रासंगिकं कामादेरागंतुकत्वोक्तिः॥ प्रसंगादागतमिति यावत्॥ प्रकृतमेव दर्शयति॥ अत्र चेति॥ अतिच्छंदादिवाक्यं सप्तम्यर्थः॥ प्रत्यक्षतः स्वरूपचैतन्यवशाद्यथोक्तात्मस्वरूपस्य सुषुप्ते गृह्यमाण

कामादिसंबंधवदात्मनस्तद्रूहितमपिरूपंकल्पितमेवेत्याशंक्याह॥तदेतदिति॥प्रकृतमर्थमुक्त्वोत्तरवाक्यस्यसप्तम्यर्थमाह॥अत्रचैतस्मिन्निति॥जन
कोप्यत्रापिताभवतीतिसंबंधः॥पिताप्यत्रापिताभवतीत्युपपादयति॥तस्येत्यादिना॥यथायस्मिन्कालेतस्मितापुत्रस्यापिताभवतितद्दर्शयितुमाह॥तथेति

तदेतद्यथाभूतमेवाभिहितंसर्वसंबंधातीतमेतद्रूपमिति॥यस्मादत्रचैतस्मिन्सुषुप्तस्थानेतिच्छंदापहतपाप्माभयमेतद्रूपंतस्मादत्रपिता
जनकःतस्यजनयितृत्वाद्यस्मितत्पुत्रंप्रतितत्कर्मनिमित्तंतेनचकर्मणायमसंबद्धोस्मिन्कालेतस्मात्पितापुत्रसंबंधनिमित्तस्यकर्मणोवि
निर्मुक्तत्वात्पिताप्यपिताभवतितथापुत्रोपिपितुरपुत्रोभवतीतिसामर्थ्याद्गम्यतेउभयोर्हिसंबंधनिमित्तंकर्मतदयमतिक्रांतोवर्ततेपहत
पाप्मेतिह्युक्तंतथामाताअमातालोकाःकर्मणाजेतव्याजिताश्चतत्कर्मसंबंधाभावाल्लोकाअलोकास्तथादेवाःकर्मांगभूतास्तत्कर्मसंबंधात्यया

अत्रपितापिताभवतिमातामातालोकाअलोकादेवाअदेवावेदाअवेदाअत्रस्तेनोस्तेनोभवति॥

देवाअदेवास्तथावेदाःसाध्यसाधनसंबंधविधायकाःमंत्रलक्षणाब्राह्मणलक्षणाश्चाभिधायकत्वेनकर्मांगभूताअधीताअध्येतव्या
श्चकर्मनिमित्तमेवसंबध्यंतेपुरुषेणतत्कर्मातिक्रमणादेतस्मिन्कालेवेदाअप्यवेदाःसंपद्यंतेनकेवलंशुभकर्मसंबंधातीतःकिंतर्हि
अशुभैरप्यत्यंतघोरैःकर्मभिरसंबद्धएवायंवर्ततइत्येतमर्थमाह॥अत्रस्तेनोब्राह्मणसुवर्णहर्ताभ्रूणघ्नासहपाठादवगम्यतेस्तेन
घोरेणकर्मणेतस्मिन्कालेविनिर्मुक्तोभवतियेनायंकर्मणामहापातकीस्तेनउच्यते॥ ॥नास्यार्थस्यप्रतिपादकःशब्दोस्तीत्याशंक्याह॥सामर्थ्यादि
ति॥तदेवसामर्थ्यंदर्शयति॥उभयोरिति॥सुषुप्तेकर्मातिक्रमेप्रमाणमाह॥अपहतेति॥पुनर्लोकदेवशब्दावनुवादार्थौवाक्यांतरमादायव्याचष्टे॥तथेत्यादि

अभिधायकत्वेनप्रमाणत्वेनमेयत्वेनचेत्यर्थः॥अत्रस्तेनोऽस्तेनोभवतीत्यादेस्तात्पर्यमाह॥नकेवलमिति॥स्तेनशब्दोऽत्रचोरमात्रेभातिकथंविशेषणमित्या शंक्याह॥भ्रूणघ्नेति॥भ्रूणहात्ववरिष्ठब्रह्महंतोच्यते॥तदेवघोरंकर्मविशिनष्टि॥येनेति॥महत्पातकमस्यास्तीत्युत्पत्त्यामहापातकीस्तेनः॥स्तेनादिवाक्ये नचंडालादिवाक्यस्यगतार्थत्वमाशंक्याह॥नेत्यादिना॥प्रत्युत्पन्नमागंतुकं॥ब्राह्मण्यां क्षत्रियात्सूतोवैश्याद्वैदेहकस्तथा॥शूद्राज्जातस्तुचंडालःसर्वध

तथाभ्रूणहाअभ्रूणहातथाचांडालोनकेवलंप्रत्युत्पन्नेनैवकर्मणाविनिर्मुक्तः किंतर्हिसहजेनाप्यत्यंतनिकृष्टजातिप्रापकेणापिविनिर्मु क्तएवायंचंडालोनामशूद्रेणब्राह्मण्यामुत्पन्नश्चंडालएवचांडालःसजातिनिमित्तेनकर्मणाऽसंबद्धत्वाद्चांडालोभवतिपौल्कसःपुल्क सएवपौल्कसःशूद्रेणैवक्षत्रियायामुत्पन्नःसोप्यपुल्कसोभवतितथाचश्रमणलक्षणैश्चकर्मभिरसंबद्धोभवतीत्युच्यतेश्रमणःपरिव्राट्य

भ्रूणहाभ्रूणहाचांडालोचांडालःपौल्कसोपौल्कसःश्रमणोश्रमणस्तापसोतापसो

कर्मनिमित्तोभवतिसतेनविनिर्मुक्तत्वाद्श्रमणस्तथातापसोवानप्रस्थोऽतापसः॥सर्वेषांवर्णाश्रमादीनामुपलक्षणार्थमुभयोर्ग्रहणं किंबहुनाऽनन्वागतंनअन्वागतमसंबद्धमित्येतत्पुण्येनशास्त्रविहितेनकर्मणातथापापेनविहिताकरणप्रतिषिद्धक्रियालक्षणेन रूपपरत्वान्नपुंसकंलिंग मेवहिस्तुतइतिस्मृतिमाश्रित्याह॥चंडालोनामेति॥जातोनिषादाच्छूद्रायांजात्याभवतिपुल्कसइतिस्मृतेःशूद्रायां ब्राह्मणाज्जातोनिषादःसचजात्याशूद्रस्तस्मात्क्षत्रियायांजातःपुल्कसोभवतीतिव्याख्यानमुपेत्याह॥शूद्रेणैवेति॥तथाचांडालवदितियावत्॥श्रम णादिवाक्यतात्पर्यमाह॥तथेति॥परिव्राट्तापसयोरेवग्रहणात्तत्कर्मायोगेपिशेषप्रस्यवर्णाश्रमांतरकर्मयोगंशंकित्वाह॥सर्वेषामिति॥आदिशब्देनवयो

सोषुप्तेपुरुषेप्रकृतेकथमनन्वागतमितिनपुंसकप्रयोगस्तत्राह॥रूपपरत्वादिति॥तत्परत्वेहेतुमनुषंगंदर्शयति॥अभयमिति॥हेतुवाक्यमा
कांक्षापूर्वकमुत्थाप्यव्याचष्टे॥किंपुनरित्यादिना॥यस्मादतिकंदादिवाक्योक्तस्वभावोयमात्मासुषुप्तकालेहृदयनिष्ठान्सर्वान्शोकानतिक्रामतितस्मा
देतदात्मरूपंपुण्यपापाभ्यामनन्वागतंयुक्तमित्यर्थः॥शोकशब्दस्यकामविषयत्वंसाधयति॥इष्टेति॥कथंतस्याःशोकत्वापत्तिरित्याशंक्याह॥इष्टंहीति॥

मभयंरूपमितिह्यनुवर्ततेकिंपुनरसंबद्धत्वेकारणमितितद्धेतुरुच्यतेतीर्णोह्यतिक्रांतोहियस्मादेवंरूपःतदातस्मिन्कालेसर्वान्शोकाञ्छो
काःकामइष्टविषयप्रार्थनाहितद्विषयवियोगेशोकत्वमापद्यतेइष्टंहिविषयमप्राप्तंवियुक्तंचोद्दिश्यचिंतयानस्तद्गुणान्संतप्यतेपुरुषोतःशो
कोरतिःकामइतिपर्यायाःयस्मात्सर्वकामातीतोह्यत्रायंभवतिनकंचनकामंकामयतेतिकंदाइतिह्युक्तंतस्मात्क्रियापतितोयंशोकशब्दःकाम

ऽनन्वागतंपुण्येनानन्वागतंपापेनतीर्णोहितदासर्वाञ्छोकान्

वचनएवभवितुमर्हतिकामश्चकर्महेतुः॥वक्ष्यतिहिसयथाकामोभवतितत्क्रतुर्भवतियत्क्रतुर्भवतितत्कर्मकुरुतेइत्यतःसर्वकामातितीर्ण
त्वाद्युक्तमुक्तंअनन्वागतंपुण्येनेत्यादिहृदयस्येतिहृदयमितिपुंडरीकाकारोमांसपिंडस्तत्स्थमंतःकरणंबुद्धिर्हृदयमुच्यतेतात्स्थ्यात्    तेषांपर्यायत्वे

३१७

पिप्रकृतेकिमायातंतदाह॥यस्मादिति॥अत्रेतिसुषुप्तिरुच्यते॥अतःसर्वकामातितीर्णत्वादित्युत्तरत्रसंबंधः॥नकेवलंशोकशब्दस्यकामविषयत्वमुपप
न्नमेवकिंतुसन्निधेरपिसिद्धमित्याह॥नकंचनेति॥शोकशब्दस्यकामविषयत्वेपितद्विषयमात्रात्कथंकर्मात्ययःस्यादित्याशंक्याह॥कामश्चेति॥तत्रवाक्यं
प्रमाणयति॥वक्ष्यतिहीति॥कामस्यकर्महेतुत्वेसिद्धेफलितमाह॥अतइति॥हृदयस्यशोकानतिक्रामतीत्यत्रहृदयशब्दार्थमाह॥हृदयमितीति॥मांसपिंडवि

यथा मंचाः क्रोशंतीति मंचक्रोशनमुच्यमानं मंचस्थास्पुरुषानुपचारादाह॥ तथा हृदयस्थत्वाद्बुद्धेरुपचाराद्बुद्धिं हृदयशब्दो दर्शयतीत्यर्थः॥ हृदयश
ब्दार्थमुक्त्वा तस्य संबंधं दर्शयति॥ हृदयस्येति॥ तानतिक्रांतो भवतीति शेषः॥ आत्माश्रयास्तेन बुद्धिमाश्रयंतीत्याशंक्याह॥ बुद्धीति॥ कथं तर्हि केचि
दात्माश्रयत्वं तेषां वदंतीत्याशंक्य भ्रांतिवशादित्याह॥ आत्मेति॥ भवतु कामादीनां हृदयाश्रितत्वं तथापि तत्संबंधद्वारा तदाश्रयत्वसंभवात्कथमात्मा सुष

मंचाक्रोशनवद्धृदयस्य बुद्धेर्ये शोकाः बुद्धिसंश्रया हि ते कामः संकल्पो विचिकित्सेत्यादि सर्वं मन एवेत्युक्तत्वाद्वृहस्पतिचकामा येस्य हृदिश्रिता इ
ति आत्मसंश्रयभ्रांत्यपनोदायेदं वचनं हृदिश्रिताहृदयस्य शोका इति च हृदयकरणसंबंधातीतश्चायमस्मिन्काले तिक्रामति मृत्यो रूपाणीति
ह्युक्तं हृदयसंबंधातीतत्वात्तत्संश्रयकामसंबंधातीतो भवतीति युक्ततरं वचनं येतु वादिनो हृदिश्रिताः कामवासनाश्च हृदयसंबंधिनमात्मानमु

हृदयस्य भवति॥ ३३॥

पसर्पंत्यपश्लिष्यंते हृदयवियोगेपि चात्मन्यवतिष्ठंते पुटतैलस्थ इव पुष्यादिवपुष्यादिगंध इत्याचक्षते॥ तेषां कामः संकल्पो हृदये ह्येव रू
पाणि हृदस्य शोका इत्यादीनां वचनानामानर्थक्यमेव॥ हृदयकरणोत्पाद्यत्वादिति चेन्न हृदिश्रिता इति विशेषणान्न हि हृदयस्य करणमात्रत्वे
हृदिश्रिता इति वचनं समंजसं हृदये ह्येव रूपाणि प्रतिष्ठितानीति

श्रेकामानतिवर्त्तते तत्राह॥ हृदयकरणेति॥ तत्संबंधातीतत्वे श्रुतिसिद्धं फलित
माह॥ हृदयेति॥ अर्तप्रपंचप्रस्थानमुत्थापयति॥ येत्विति॥ सत्येव हृदये तन्निष्ठानां कामादीनामात्मन्युपश्लेषोन तन्निवृत्ताविति आशंक्याह॥ हृदयवियोगेपीति
॥ तन्मते श्रुतिविरोधमाह॥ तेषामिति॥ करणेन हृदयेनोत्पाद्यत्वादात्मविकाराणामपि कामादीनां हृदयसंबंधसंभवान्नानर्थक्यं श्रुतीनामिति शंकते॥ हृदयेति॥

नकामादिसंबंधमात्रंहृदयस्यश्रुत्यर्थः॥किंत्वाश्रयाश्रयित्वंतच्चकरणत्वे नस्यान्नहिचक्षुरायाश्रयंरूपादिज्ञानंदृष्टमितिपरिहरति॥नहृदीति
॥चकाराहूचनंनसमंजसमितिसंबध्यते॥प्रदीपायत्तंघटज्ञानमितिव दंतःकरणायत्तमात्माश्रितंकामादीतितस्यतदाश्रयत्ववचनमौपचारिक
मित्याशंक्याह॥आत्मशुद्धेश्चेति॥इतश्चेदंयथार्थमेवेत्याह॥ध्यायतीवेति॥अन्यार्थासंभवाद्बुध्याश्रयणवचनस्येतिशेषः॥दक्षिणेनाक्ष्णापश्यतीत्युक्ते
वामेनननपश्यतीतिवत्प्रमुच्यंतेहृदिश्रिताइतिविशेषणमाश्रित्याशंकते॥कामायेइति॥प्रकारांतरेणविशेषणस्यार्थवत्वंदर्शयति॥नेत्यादिना॥अत्रेति
प्रकृतश्रुत्युक्तिः॥आश्रयांतरंबुध्यतिरिक्तमात्माख्यं॥बुध्यनाश्रिताःकामाएवनसंतियदपेक्षयाहृदयाश्रयत्वविशेषणमित्याशंक्याह॥येत्विति॥प्र

चात्मशुद्धेश्चविवक्षितत्वाद्धकृयणवचनंयथार्थमेवयुक्तंध्यायतीवलेलायतीवेतिचश्रुतेरन्यार्थासंभवात्कामायेस्यहृदिश्रिताइतिवि
शेषणादात्माश्रयाअपिसंती तिचेन्नानाश्रितापेक्षत्वान्नात्राश्रयांतरमपेक्ष्यहृदीतिविशेषणं किंतर्हियेहृद्यनाश्रिताःकामास्तानपेक्ष्यवि
शेषणंयेत्वप्ररूढाभविष्याभूताश्चप्रतिपक्षतोनिवृत्तास्तेनैवहृदिश्रिताःसंभाव्यंतेऽतोयुक्तंतानपेक्ष्यविशेषणंयेप्ररूढावर्तमानाःविष
येतेसर्वेप्रमुच्यंतइति॥तथापिविशेषणानर्थक्यमितिचेन्नतेष्वयत्नाधिक्याधेयार्थत्वादितरथाऽश्रुतमनिष्टंचकल्पितंस्यादात्माश्रयत्वंका
मानां॥नकंचन तिपक्षतोविषयदोषदर्शनादितियावत्॥कामानांवर्तमानत्वनियमाभावाद्भूतभविष्यतामपिसंभवेफलितमाह॥यइति॥हृदया
नाश्रितभूतभविष्यत्कामसंभवेपिसर्वकामनिवृत्तेर्विवक्षितत्वाद्वर्तमानविशेषणमनर्थकमितिशंकते॥तथापीति॥अतीतानागतकामाभावःसंभ
वतिस्वतःसिद्धोनतन्निवृत्तौयत्नोपेक्ष्यतेशुद्धात्मदिदृक्षुणातुमुमुक्षुणावर्तमानकाममनिरासेयत्नाधिक्यमाधेयमितिज्ञापयितुंवर्तमानग्रहणमितिप
रिहरति॥नतेष्विति॥यदिपूर्वोक्तंव्याख्यानमनादृत्यात्माश्रयत्वमेवकामानामाश्रीयतेतदाऽश्रुतंमोक्षासंभवेनानिष्टंचकल्पितंस्यादित्याह॥इतरथेति॥अश्रुत

अर्थादात्माश्रयत्वंश्रुतमेवकामानामित्येतत्दूषयति॥नेत्यादिना॥निषेधोहिप्राप्तिमपेक्षतेनवास्तवंकामानामात्मधर्मत्वंप्राप्तिस्तुभ्रांत्यापिसंभवतितस्मादात्मनोवस्तुतोनकामाद्याश्रयत्वमित्यर्थः॥इतश्चात्मनोनकामाद्याश्रयत्वमित्याह॥असंगेति॥नन्वसंगवचनमात्मनःसंगाभावंसाधयतितस्यकामित्वेनविरुध्यतेतत्राह॥संगश्चेति॥कामश्चसंगस्ततोऽसिद्धोहेतुरत्रेतिशेषः॥वाक्यांतरमाश्रित्यात्मनिकामाश्रयत्वंशंकित्वादूषयति॥आत्मेत्यादिना॥इच्छादयःक्वचिदाश्रिताःगुणत्वाद्रूपादिवदित्यनुमानात्परिशेषात्कामाद्याश्रयत्वमात्मनःसेत्स्यतीतिशंकते॥वैशेषिकादीति॥श्रुत्यवष्टंभेन

कामंकामयतइतिप्राप्तप्रतिषेधादात्माश्रयत्वंकामानांश्रुतमेवेतिचेन्नसधीःस्वप्नोभूत्वेतिपरनिमित्तत्वात्कामाश्रयत्वप्राप्तेरसंगवचनाच्चनहिकामाश्रयत्वेऽसंगवचनमुपपद्यतेसंगश्चकामइत्यवोचामात्मकामइतिश्रुतेरात्मविषयोस्यकामोभवतीतिचेन्नव्यतिरिक्तकामाभावार्थत्वात्तस्याः॥वैशेषिकादितंत्रन्यायोपपन्नमात्मनःकामाद्याश्रयत्वमितिचेन्नहृदिश्रिताइत्यादिविशेषश्रुतिविरोधादनपेक्ष्यास्तावैशेषिकादितंत्रोपपत्तयःश्रुतिविरोधेन्यायाभासत्वोपगमात्स्वयंज्योतिष्ट्वबाधनाच्चकामादीनांस्वप्नेकेवलंदृशिमात्रविषयत्वात्स्वयंज्योतिष्ट्वंसिद्धंस्थितंचबाध्येतात्मसमवायित्वेदृश्यत्वानुपपत्तेश्चक्षुर्गतविशेषणवद्द्रष्टुर्हिदृश्यमर्थांतरभूतमितिद्रष्टुःस्वयंज्योतिष्ट्वंसिद्धंतद्बाधितंस्याद्यदिकामाद्याश्रयत्वंपरिकल्प्येतसर्वशास्त्रार्थप्रतिषेधाच्च

निराचष्टे॥नेत्यादिना॥स्वयंज्योतिष्ट्वबाधनाच्चनात्माश्रयत्वंकामादीनामितिशेषः॥तदेवविवृणोति॥कामादीनामिति॥स्थितंचानुमानादितिशेषः॥यद्यत्रसमवेतंतत्तेननदृश्यतेयथाचक्षुर्गतंकार्ष्ण्यंतेनैवचक्षुषानदृश्यतेतथाचकामादीनामात्मसमवायित्वेदृश्यत्वंनस्यादृश्यत्वबलेनैवस्वयंज्योतिष्ट्वंसाधितंतथाचतद्बाधेपूर्वोक्तमनुमानमपिबाध्येतेत्यर्थः॥कथंकामादीनामात्मदृश्यत्वमाश्रित्यस्वप्नेस्वयंज्योतिष्ट्वस्योपदिष्टत्वंतत्राह॥द्रष्टुरिति॥तथापितेषामात्माश्रयत्वेकानुपपत्तिस्तत्राह॥तद्बाधितमिति॥यत्तुपरमात्मैकदेशंजीवमाश्रि

तदेवस्फुटयति॥परस्येति॥शास्त्रार्थजातंनिरवयवत्वप्रत्यगेकत्वादितस्यकथंकोपःस्यादित्याशंक्याह॥एतच्चेति॥चतुर्थेचेदुक्तंप्रपंचमतंनिरस्तंत
र्हिपुनर्निराकरणमकिंचित्करमित्याशंक्याह॥महतेति॥परेणसहप्रत्यगात्मनोयदेकत्वंतस्यशास्त्रार्थस्यसिध्यर्थमितियावत्॥अंशत्वकल्पनायामपि
शास्त्रार्थसिद्धिमाशंक्याह॥तत्कल्पनायामिति॥भर्तृप्रपंचकल्पनायाहेयत्वमुपसंहरति॥यथेत्यादिना॥२३॥यद्वैतन्नपश्यतीत्यादेःसंबंधंवक्तुंवृत्तंकी

परस्यैकदेशकल्पनायांकामाद्याश्रयत्वेचसर्वशास्त्रार्थजातंकुप्येतएतच्चविस्तरेणचतुर्थेऽवोचाममहताहिप्रयत्नेनकामाद्याश्रयकल्पनाः
प्रतिषेद्धव्याआत्मनःपरेणैकत्वशास्त्रार्थसिद्धयेतत्कल्पनायांपुनःक्रियमाणायांशास्त्रार्थएवबाधितःस्याद्यथेच्छादीनामात्मधर्मत्वंकल्पयं
तोवैशेषिकानैयायिकाश्चोपनिषच्छास्त्रार्थेननसंगच्छंतेतथेयमपिकल्पनोपनिषच्छास्त्रार्थबाधनान्नादरणीया॥२३॥स्त्रीपुंसयोरिवैकत्वाच्च

यद्वैतन्नपश्यतिपश्यन्वैतन्नपश्यति॥

पश्यतीत्युक्तंस्वयंज्योतिरितिचस्वयंज्योतिष्ट्वंनामचैतन्यात्मस्वभावतायदिह्यग्न्युष्णत्वादिवच्चैतन्यात्मस्वभावआत्मासकथमेकत्वेपिस्वभा
वंजह्यान्नजानीयादथनजहातिकथमिहसुषुप्तेनपश्यतिविप्रतिषिद्धमेतच्चैतन्यमात्मस्वभावोनजानातिचेतिनविप्रतिषिद्धमुभयमप्ये
तदुपपद्यतएवकथंयद्वैसुषुप्तेतन्नपश्यतिपश्यन्वैतत्तत्रपश्यन्नेवनपश्यति तेयति॥स्त्रीपुंसयोरिति॥चकारादुक्तंस्वयंज्योतिष्ट्वमितिसंबध्यते॥किं
मिदंस्वयंज्योतिष्ट्वमितितदाह॥स्वयंज्योतिष्ट्वंनामेति॥एवंवृत्तमनूद्योत्तरवाक्यव्यावर्त्यांशंकामाह॥यदीत्यादिना॥स्वभावत्यागमेवाभिनयति॥नजानीयादि
ति॥तत्यागाभावेसुषुप्तेविशेषज्ञानराहित्यमयुक्तमित्याह॥अथेत्यादिना॥आत्माचिद्रूपोपिसुषुप्तेविशेषंनजानातिचेत्किंदुष्यतीत्याशंक्याह॥विप्रतिषिद्ध

उभयस्वीकारेशंकितंविप्रतिषेधमाकांक्षापूर्वकंश्रुत्यानिराकरोति॥कथमित्यादिना॥यद्वैतदित्यादिवाक्यंचोदितार्थानुवादस्तत्परिहारस्तुपश्यन्नितिसा
दिवाक्यमितिविभजते॥यत्तत्रेति॥नहीत्यादिवाक्यनिरस्यामाशंकामाह॥नन्विति॥चक्षुरादिव्यापाराभावेपिसुषुप्तेदर्शनादिकिंनस्यादितिशंक्याह॥व्या
पृतेष्विति॥अस्तुतर्हितत्रापिकरणव्यापारोनेत्याह॥नचेति॥अयमितिसुषुप्तपुरुषोक्तिः॥नपश्यत्येवेतिनियमंनिषेधयति॥नेति॥तत्रहेतुंवक्तुंप्रश्न

यत्तत्रसुषुप्तेनपश्यतीतिजानीषेतन्नतथागृह्णीयाःकस्मात्पश्यन्वैभवतितत्रनन्वेवंनपश्यतीतिसुषुप्तेजानीमोयतोनचक्षुर्वामनोवाद
र्शनेकरणंव्यापृतमस्तिव्यापृतेषुहिदर्शनश्रवणादिषुपश्यतीतिव्यवहारोभवतिशृणोतीतिवा॥नचव्यापृतानिकरणानिपश्यामस्तस्मान्न
पश्यत्येवायंनहिकिंतर्हिपश्यन्नेवभवतिकथंनहियस्माद्द्रष्टुर्दृष्टिःकर्तुर्यादृष्टिस्तस्यादृष्टेर्विपरिलोपोविनाशःसनविद्यतेयथाग्नेरौष्ण्यं

नहिद्रष्टुर्दृष्टेर्विपरिलोपोविद्यतेविनाशित्वा

यावदग्निभावितथायंचात्माद्रष्टाऽविनाश्यतोऽविनाशित्वादात्मनोदृष्टिरप्यविनाशिनीयावद्द्रष्टृभाविनीहिसाननुविप्रतिषिद्धमिद
मभिधीयतेद्रष्टुःसादृष्टिर्नविपरिलुप्यतइतिचदृष्टिश्चद्रष्ट्राक्रियतेदृष्टिकर्तृत्वाद्धिद्रष्टेत्युच्यतेक्रियमाणाचद्रष्ट्रादृष्टिर्नविपरिलुप्य
तइतिचाशक्यंवक्तुंननुनविपरिलुप्यतइतिवचनादविनाशिनीसा पूर्वकंप्रतिज्ञांप्रस्तौति॥किंतर्हीति॥तत्राकांक्षापूर्वकंहेतुवाक्यमुत्थाप्य
व्याचष्टे॥कथमित्यादिना॥अविनाशित्वादित्येतद्व्याकुर्वन्दृष्टेर्विनाशाभावंस्पष्टयति॥यथेत्यादिना॥द्रष्टुर्दृष्टिर्ननश्यतीत्यत्रविरोधंचोदयति॥नन्वि
ति॥विप्रतिषेधमेवसाधयति॥दृष्टिश्चेति॥कार्यस्यापिवचनादविनाशःस्यादितिशंकते॥नन्विति॥तस्याकारकत्वान्नैवमितिपरिहरति॥नवचनस्य

यत्कृतकं तदनित्यमिति व्याप्त्यनुगृहीतानुमानविरोधाद्वचो न कार्यनित्यत्वबोधकमित्यर्थः॥ कूटस्थदृष्टिरेवात्र द्रष्टृशब्दार्थो न दृष्टिकर्त्तेति नन्न विप्रतिषे
धोस्तीति सिद्धांतयति॥ नैषदोष इति॥ आदित्यादिप्रकाशकत्ववदित्युक्तं दृष्टांतं व्याचष्टे॥ यथेति॥ दृष्टांते विप्रतिपन्नं प्रत्याह॥ नहीति॥ दर्शनोपपत्ते
रित्युक्तं दार्ष्टांतिकं विभजते॥ तथेति॥ आत्मनो नित्यदृष्टित्वे दोषमाशंकते॥ गौणमिति॥ गौणस्य मुख्यापेक्षत्वान्मुख्यस्य चान्यस्य द्रष्टृत्वस्याभावा
न्नैवमित्युत्तरमाह॥ नेत्यादिना॥ तामेवोपपत्तिमुपदर्शयति॥ यदि हीत्यादिना॥ अन्यथा कूटस्थदृष्टित्वमंतरेणेति यावत्॥ दर्शनप्रकारस्यान्यत्वं क्रि

न्नवचनस्य ज्ञापकत्वान्न हि न्यायप्राप्तो विनाशः कृतकस्य वचनशतेनापि वारयितुं शक्यते वचनस्य यथाप्राप्तार्थज्ञापकत्वान्नैष दोषः आ
दित्यादिप्रकाशकत्ववद्दर्शनोपपत्तेः॥ यथा आदित्यादयो नित्यप्रकाशस्वभावा एव संतः स्वाभाविकेन नित्येनैव प्रकाशेन प्रकाशयंति न
ह्यप्रकाशात्मानः संतः प्रकाशं कुर्वंतः प्रकाशयंतीत्युच्यंते किं तर्हि स्वभावेनैव नित्येन प्रकाशेन तथायमप्यात्माऽविपरिलुप्तस्वभावया
दृष्ट्या नित्यया द्रष्टेत्युच्यते गौणं तर्हि द्रष्टृत्वं नैवमेव मुख्यत्वोपपत्तेः॥ यदि ह्यन्यथाप्यात्मनो द्रष्टृत्वं दृष्टं तदास्य द्रष्टृत्वस्य गौणत्वं न त्वात्मनो
न्यो दर्शनप्रकारोस्ति तदेवमेव मुख्यं द्रष्टृत्वमुपपद्यते नान्यथा यथा आदित्यादीनां प्रकाशयितृत्वं नित्येनैव स्वाभाविकेनाक्रियमाणेन प्रका
शेन तदेव च प्रकाशयितृत्वं मुख्यं प्रकाशयितृत्वांतरानुपपत्तेस्तस्मान्न द्रष्टुर्दृष्टेर्विपरिलुप्यत इति न विप्रतिषेधगंधोप्यस्ति॥ नन्वनित्य
क्रियाकर्तृविषय एव तृच्प्रत्ययांतस्य शब्दस्य प्रयोगो दृष्टो यथा छेत्ता भेत्ता गंतेति तथा द्रष्टे

यात्मत्वं तस्य निष्क्रियत्वश्रुतिस्मृतिविरोधादिति शेषः
॥ द्रष्टृत्वांतरानुपपत्तौ फलितमाह॥ तदेवमेवेति॥ नित्यदृष्टित्वेनैवेत्यर्थः॥ उक्तेर्थे दृष्टांतमाह॥ यथेत्यादिना॥ तथात्मनोपि द्रष्टृत्वं नित्येनैव स्वाभाविके
न चैतन्यज्योतिषा सिध्यति तदेव च द्रष्टृत्वं मुख्यं द्रष्टृत्वांतरानुपपत्तेरिति शेषः॥ आत्मनो नित्यदृष्टिस्वभावत्वे फलितमाह॥ तस्मादिति॥ तृजंतं द्रष्टृश

अत्राप्यनित्यक्रियाकर्तृविषयस्तृजंतशब्दप्रयोग इति शेषः॥ तृजंतशब्दप्रयोगस्यानित्यक्रियाकर्तृविषयत्वं व्यभिचारयन्नुत्तरमाह॥ नेति॥ वैष म्यमाशंकते॥ भवत्विति॥ आदित्यादिषु स्वाभाविकप्रकाशेन प्रकाशयितृत्वमस्तु कादाचित्कप्रकाशेन प्रकाशयितृत्वस्य तेषु संभवान्नत्वात्मनि नित्यादृ ष्टिरस्ति तन्मानाभावात्तथा च कादाचित्कदृष्ट्यैव तस्य द्रष्टृतेत्यर्थः॥ प्रतीचश्चिद्रूपस्य स्फोतृत्वात्कर्तृत्वं विना प्रकाशयितृत्वमविशिष्टमित्युत्तरमाह॥ न हि द्रष्टु ति॥ कूटस्थदृष्टिरात्मेत्युक्ते प्रत्यक्षविरोधं शंकते॥ पश्यामीति॥ द्विविधोऽनुभवः तस्य कूटस्थदृष्टित्वमनुगृह्णाति चक्षुरादिव्यापारभावापेक्षया पश्यामि न

त्यत्रापीति चेन्न प्रकाशयितेति दृष्टत्वाद्भवतु प्रकाशकेष्वन्यथासंभवान्नत्वात्मनीति चेन्न दृष्टेर्विपरिलोपश्रुतेः॥ पश्यामि न पश्यामीत्यनुभ वदर्शनान्नेति चेन्न करणव्यापारविशेषापेक्षत्वादुक्तं च सुषुप्ते च स्वप्ने आत्मदृष्टेरविपरिलोपदर्शनात्तस्मादविपरिलुप्तस्वभावैवात्मनो दृष्टिरत

न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत्॥ ३४॥ २३॥

स्तयाऽविपरिलुप्तया दृष्ट्या स्वयंज्योतिःस्वभावया पश्यन्नेव भवति॥ सुषुप्ते कथं तर्हि न पश्यतीत्युच्यते न तु तदस्ति किं तद्द्वितीयं विषयभूतं किं विशिष्टं ततो द्रष्टुरन्यदन्यत्वेन विभक्तं यत्पश्येद्यदुपलभेत यद्धि तद्विशेषदर्शनकारणमंतःकरणं चक्षुरूपं च तदविद्ययान्यत्वेन प्रत्युपस्थापि तमासीत्तदेतस्मिन्काले एकीभूत

पश्यामीति धियोऽऽत्मसाक्षित्वादित्युत्तरमाह॥ न करणेति॥ आत्मदृष्टेर्नित्यत्वे हेत्वंतरमाह॥ उक्तेति॥ आत्मदृष्टेर्नित्य त्वमुपसंहरति॥ तस्मादिति॥ तन्नित्यत्वोक्तिफलमाह॥ अत इति॥ वाक्यांतरमाकांक्षापूर्वकमुत्थाप्य व्याचष्टे॥ कथमित्यादिना॥ द्वितीयादिपदानां पौनरुक्त्य माशंक्यार्थभेदं दर्शयति॥ यद्धीत्यादिना॥ साभासमंतःकरणं यत्पश्येदिति विशेषदर्शनकारणं प्रमातृ द्वितीयं तस्मादन्यच्चक्षुरादि प्रमाणं रूपादि च प्रमेयं

विभक्तंतत्सर्वंजाग्रत्स्वप्नयोरविद्याप्रतिपन्नंसुषुप्तिकालेकारणमात्रतांगतमभिव्यक्तंनास्तीत्यर्थः॥सुषुप्तेद्वितीयंप्रमातृरूपंनास्तीत्येतदुपपादयति
॥आत्मनइति॥प्रमातृरूपंपृथङ्नास्तीतिशेषः॥तथापिकरणव्यापारकृतंविषयदर्शनमात्मनःस्यादित्याशंक्याह॥द्रष्टुरिति॥सुषुप्तस्यापिपरिछिन्नत्व
माशंक्याह॥अयंत्विति॥तस्यपरेणैकीभावफलमाह॥तेनेति॥विषयेंद्रियाभावकृतंफलमाह॥तदभावादिति॥किमितिविषयाद्यभावाद्विशेषदर्शनं

मात्मनःपरेणपरिष्वंगात्द्रष्टुर्हिपरिछिन्नस्यविषयदर्शनायकरणमन्यत्वेनव्यवतिष्ठतेऽयंतुस्वेनसर्वात्मनासंपरिष्वक्तःस्वेनपरेणप्राज्ञेना
त्मनाप्रिययेवपुरुषःतेननपृथक्त्वेनव्यवस्थितानिकरणानिविषयाश्चतदभावाद्विशेषदर्शनंनास्तिकरणादिकृतंहितन्नात्मकृतंआत्मकृ

यद्वैतन्नजिघ्रतिजिघ्रन्वैतन्नजिघ्रतिनहिघ्रातुर्घ्रातेर्विपरिलोपोविद्यतेविनाशित्वान्नतुतद्द्वितीयमस्तिततोन्यद्विभक्तंयज्जि
घ्रेत्॥३५॥यद्वैतन्नरसयतेरसयन्वैतन्नरसयतेनहिरसयितूरसयतेर्विपरिलोपोविद्यतेविनाशित्वान्नतुतद्द्वितीयमस्तित
तोन्यद्विभक्तंयद्रसयेत्॥३६॥यद्वैतन्नवदतिवदन्वैतन्नवदतिनहिवक्तुर्वक्तेर्विपरिलोपोविद्यतेविनाशित्वान्नतुतद्द्वितीयम
स्तिततोन्यद्विभक्तंयद्वदेत्॥३७॥यद्वैतन्नशृणोतिशृण्वन्वैतन्नशृणोतिनहिश्रोतुःश्रुतेर्विपरिलोपोविद्यतेविनाशित्वान्नतुत
द्वितीयमस्तिततोन्यद्विभक्तंयच्छृणुयात्॥३८॥ तमिवप्रत्यवभासते॥तस्मात्कृतेयंभातिरात्मनोदृष्टिःपरिलुप्यतइति॥३४॥२३॥॥

निषिध्यतेसत्वमेवतस्यात्मसत्ताधीनंकिंनस्यादित्याशंक्याह॥करणादीति॥नन्ववस्थाद्वयेविशेषदर्शनमात्मकृतंप्रतिभातितस्यप्रधानत्वादतआह॥
आत्मकृतमिति॥नत्वित्यादेस्तात्पर्यमुपसंहरति॥तस्मादिति॥प्रमातृकरणविषयकृतत्वाद्विशेषदृष्टेस्तेषांचसुषुप्तावभावात्तत्कार्याया विशेषदृष्टेरपितत्र

यद्वैतन्नपश्यतीत्यादावुक्तन्यायमुत्तरवाक्येष्वतिदिशति॥समानमन्यदिति॥मनोबुध्योःसाधारणकरणत्वात्पृथग्व्यापाराभावेकथंपृथङ्निर्देशः स्यादित्याशंक्याह॥मननेति॥वाक्यानिव्याख्यायस्वसिद्धांतस्फुटीकरणार्थंविचारयति॥किंपुनरिति॥धर्मभेदोधर्माणांसतांमिथोधर्मिणश्चभेदोस्तीतियावत्॥धर्मस्येत्यग्न्यादिपदार्थस्येत्यर्थः॥परोपाधिनिमित्तंचक्षुराद्युपाधिकृतमित्येतत्॥धर्मान्यत्वंधर्मिणोमिथोन्यत्वंचेत्यर्थः॥भर्त

समानमन्यद्यद्वैतन्नजिघ्रतियद्वैतन्नरसयतेयद्वैतन्नवदतियद्वैतन्नशृणोतियद्वैतन्नमनुतेयद्वैतन्नस्पृशतियद्वैतन्नविजानातीति मननविज्ञानयोरदृष्टादिसहकारित्वेपिसतिचक्षुरादिनिरपेक्षोभूतभविष्यद्वर्त्तमानविषयव्यापारोविद्यतइतिपृथग्ग्रहणं॥किंपुनर्द

यद्वैतन्नमनुतेमन्वानोवैतन्नमनुतेनहिमंतुर्मतेर्विपरिलोपोविद्यतेविनाशित्वान्नतुतद्द्वितीयमस्तिततोन्यद्विभक्तंयन्मन्वीत ॥३९॥यद्वैतन्नस्पृशतिस्पृशन्वैतन्नस्पृशतिनहिस्प्रष्टुःस्पृष्टेर्विपरिलोपोविद्यतेविनाशित्वान्नतुतद्द्वितीयमस्तिततोन्यद्विभक्तं यत्स्पृशेत्॥४०॥यद्वैतन्नविजानातिविजानन्वैतन्नविजानातिनहिविज्ञातुर्विज्ञातेर्विपरिलोपोविद्यतेविनाशित्वान्नतुतद्द्वितीयमस्तिततोन्यद्विभक्तंयद्विजानीयात्॥४१॥ ष्ण्यादीनामग्नेरौष्ण्यप्रकाशनज्वलनादिवद्धर्मभेदआहोस्विदभिन्नस्यैवधर्मस्यपरोपाधिनिमित्तंधर्मान्यत्वमित्यत्रकेचिद्व्याचक्षतेआत्मवस्तुनःस्वतएवैकत्वंनानात्वंचयथागोर्गोद्रव्यतयैकत्वंसास्नादीनांधर्माणांपरस्परतोभेदोयथास्थूलेष्वेवमेकत्वंनानात्वंचतथानिरवयवेष्वमूर्त्तवस्तुष्वेकत्वंनानात्वंचानुमेयं॥ प्रपंचमतेनपूर्वपक्षंगृह्णाति॥अत्रेति॥ गवादीनांसावयवत्वाद्रूपभेदसंभवादेकेनरूपेणाभिन्नत्वंरूपांतरेणभिन्नत्वमित्युभयथात्वेपिनिरवयवेष्वात्मादिषुकथमनेकरसत्वसिद्धिरित्या

एकरूपत्वेवस्तुनोदृष्टांतादृष्टेर्नानारूपत्वेगवादिदृष्टांतदर्शनात्तदेवानुमेयं॥विमतंभिन्नाभिन्नंवस्तुत्वाद्गवादिवदित्यर्थः॥यद्यपिगगनादिष्वभि
न्नाभिन्नत्वमनुमीयतेतथापिकथमात्मनितदनुमानमित्याशंक्यवस्तुत्वस्यनानारूपत्वेनाव्यभिचारादात्मन्यपियथोक्तमनुमानंनिरंकुशप्रसरमि
त्याह॥सर्वत्रेति॥यथोक्तानुमानानुग्रहाययहैतदित्यादेर्भिन्नाभिन्नत्वेवस्तुनितात्पर्यमितिभावः॥भर्तृप्रपंचोक्तंवाक्यतात्पर्यंनिराकरोति॥नेत्यादिना॥
चैतन्याविनाशेवाक्यतात्पर्येचेत्कथंतर्हिदृष्ट्यादिभेदवचनमित्याशंक्याह॥यदस्येति॥तद्धिसुषुप्त्यवस्थायामुपाधेरंतःकरणस्यचक्षुरादिभेदाधीनपरि

सर्वत्राव्यभिचारदर्शनादात्मनोपितद्वदेवदृष्ट्यादीनांपरस्परंनानात्वमात्मनाचैकरूपत्वमितिनान्यपरत्वान्नहिदृष्ट्यादिधर्मभेदप्रदर्श
नपरमिदंवाक्यंयद्वैतदित्यादिकिंतर्हियदिचैतन्यात्मज्योतिःकथंनजानातिसुषुप्तेनूनमतोनचैतन्यात्मज्योतिरित्येवमाशंकाप्राप्तौतन्निरा
करणायैतदारब्धंयद्वैतदित्यादियदस्यजाग्रत्स्वप्नयोश्चक्षुराद्यनेकोपाधिद्वारंचैतन्यात्मज्योतिःस्वाभाव्यमुपलक्षितंदृष्ट्याद्यभिधेयव्यवहा
रापन्नंसुषुप्तउपाधिभेदव्यापारनिवृत्तावनुद्भास्यमानत्वादनुपलक्ष्यमाणस्वभावमपिउपाधिभेदेनभिन्नमिवयथाप्राप्तानुवादेनैवभिद्यमा
नत्वमुच्यतेतत्रदृष्ट्यादिधर्मभेदकल्पनाविवक्षितार्थोऽनभिज्ञतयासैंधवघनवत्प्रज्ञानैकरसघनश्रुतिविरोधाच्चविज्ञानमानंदंसत्यंज्ञानंप्रज्ञा
नंब्रह्मेत्यादिश्रुतिभ्यश्चशब्दप्रवृत्तेश्च॥ ग्रामव्यापारनिवृत्तौसत्यामुपाधिभेदस्यानुद्भास्यमानत्वात्तेनभिन्नमिवानुपलक्ष्यमाणस्वभावंयद्यपितथापि
चक्षुर्द्वारेणजायमानायांबुद्धिवृत्तौव्यक्तंचैतन्यंदृष्टिर्घ्राणद्वारेणजातायांतस्यांव्यक्तंघ्रातिरित्युपाधिभेदात्प्राप्तभेदानुवादेनचैतन्यस्याविनाशित्वेवा
क्यतात्पर्यमित्यर्थः॥उक्तेवाक्यतात्पर्येस्थितेफलितमाह॥नत्रेति॥इतश्चदृष्ट्यादिभेदकल्पनानश्लिष्टेत्याह॥सैंधवेति॥तदेवस्पष्टयति॥विज्ञानमिति
॥नदृष्ट्यादिभेदकल्पनेतिशेषः॥यथाघटाकाशोमहाकाशइत्येकशब्दविषयत्वादुपाधिभेदेप्याकाशस्यैकत्वमिष्टंतथैकशब्दप्रवृत्तेरेकत्वंचितोपिसाक्षात्

तामेवविवृणोति॥लौकिकीचेति॥यत्तुसिद्धांतेदृष्टांतोनास्तीतितत्राह॥दृष्टांतेति॥किमेकरूपत्वेवस्तुनोदृष्टांतोनास्तिकिंवामिथ्यात्वेतन्नानारूपस्येति
वक्तव्यंनाद्योनानारूपवस्तुवादिभिरप्येकैकरूपस्यानवस्थापरिहारार्थमनानारूपत्वांगीकारादस्माकंदृष्टांतसिद्धेर्वस्तुत्वहेतोश्चतत्रैवानैकांतिकत्वात्त
स्मादेकरूपमेववस्तुस्वीकर्तव्यमितिभावः॥द्वितीयंदूषयति॥यथाहीति॥तन्निमित्तमेवेत्यत्रतच्छब्देनस्वच्छस्वाभाव्यंपरामृश्यतेस्फटिकेहरितादि
धर्माणांस्वाभाविकत्वंकिंनस्यादित्याशंक्याह॥नचेति॥तस्यहिस्वच्छस्वाभाव्यंतद्दर्शनंहरिताद्युपाधिभेदसंबंधव्यतिरेकेणेतियावत्॥एकस्यनानारू

लौकिकीचशब्दप्रवृत्तिश्चक्षुषारूपंविजानातिश्रोत्रेणशब्दंविजानातिरसनेनान्नस्यरसंविजानातीतिचसर्वत्रैवचदृष्ट्यादिशब्दाभि
धेयानांविज्ञानशब्दवाच्यतामेवदर्शयतिशब्दप्रवृत्तिश्चप्रमाणंदृष्टांतोपपत्तेश्चयथाहिलोकेस्वच्छस्वाभाव्ययुक्तःस्फटिकस्तन्निमित्त
मेवकेवलंहरितनीललोहिताद्युपाधिभेदसंयोगात्तदाकारत्वंभजतेनचस्वच्छस्वाभाव्यव्यतिरेकेणहरितनीललोहितादिलक्षणाधर्मभे
दाःस्फटिकस्यकल्पयितुंशक्यंतेतथाचक्षुराद्युपाधिभेदसंयोगात्प्रज्ञानघनस्वभावस्यैवात्मज्योतिषोदृष्ट्यादिशक्तिभेदउपलक्ष्यतेप्र
ज्ञानघनस्यस्वच्छस्वाभाव्यात्स्फटिकस्वच्छस्वाभाव्यवत्स्वयंज्योतिष्ट्वाच्च॥यथाचादित्यज्योतिरवभास्यभेदैःसंयुज्यमानंहरितनीलपीतलो ४९
हितभेदैरविभाग्यंतदाकारावभासंभवतितथाचकृत्स्नंजगदवभासयच्चक्षुरादीनिचतदाकारंभवतितथाचोक्तमात्मनैवायंज्योतिषास्तइत्या

पत्वंमिथ्येत्यत्रदृष्टांतमुक्त्वादार्ष्टांतिकमाह॥तथेति॥आत्मामिथ्यानानानिर्भासउपहितत्वात्स्फटिकवदित्यर्थः॥किंच॥आत्मामिथ्यानानात्वाधारःस्व
कल्पितत्वात्संप्रतिपन्नवदित्याह॥प्रज्ञानेति॥किंच॥आत्माकल्पितनानात्वाधारोज्योतिष्ट्वादादित्यादिज्योतिर्वदित्याह॥स्वयमिति॥आदित्यादावकल्पितोपिभे
दोस्तीत्याशंक्यविवक्षितंसाम्यमाह॥यथाचेत्यादिना॥अविभाग्यंवस्तुतोविभागायोग्यमितियावत्॥चक्षुरादीनिचावभासयदितिसंबंधः॥आत्मनःसर्वावभा

यत्तुनिरवयवेष्वपिनानारूपत्वमनुमेयमितितत्राह॥नचेति॥आकाशादीनांदृष्टांतत्वमाशंक्यनिराचष्टे॥यदपीत्यादिना॥कथमाकाशस्यानेकधर्मव
त्वमौपाधिकमित्याशंक्यतस्यसर्वगतत्वंतावदौपाधिकमितिसाधयति॥आकाशस्येति॥कथंतर्हिसर्वगतत्वव्यवहारस्तत्राह॥सर्वोपाधीति॥नन्वाका
शस्यसर्वत्रगमनमपेक्ष्यसर्वगतत्वंकिमितिनव्यवह्रियतेतत्राह॥नत्विति॥आकाशेगमनायोगंवक्तुंतत्स्वरूपमाह॥गमनंहीति॥ननुकुतश्चिद्विभागे
संयोगेचकेनचिद्देशेनतत्कारणीभूताक्रियापिश्येनादाविवाकाशेभविष्यतिनेत्याह॥साचेति॥सावयवेहिश्येनादौक्रियादृश्यतेआकाशंत्वविशेषंनि

नचनिरवयवेष्वनेकात्मताशक्यतेकल्पयितुंदृष्टांताभावाद्यदप्याकाशस्यसर्वगतत्वादिधर्मभेदःपरिकल्प्यतेपरमाण्वादीनांचगंधरसा
द्यनेकगुणवत्त्वंतदपिनिरूप्यमाणंपरोपाधिनिमित्तमेवभवत्याकाशस्यतावत्सर्वगतत्वंनामनस्वतोधर्मोस्तिसर्वोपाधिसंश्रयाद्धिसर्व
त्रस्वेनरूपेणसत्त्वमपेक्ष्यसर्वगतत्वव्यवहारोनत्वाकाशःक्वचिद्गतोवाऽगतोवास्वतोगमनंहिनामदेशांतरस्थस्यदेशांतरेणसंयोगका
रणंसाचक्रियानैवाविशेषेसंभवतिएवंधर्मभेदानैवसंत्याकाशेतथापरमाण्वादावपि॥परमाणुर्नामपृथिव्यागंधघनायाःपरमःसूक्ष्मो
वयवोगंधात्मकएवनतस्यपुनर्गंधवत्त्वंनामगुणःशक्यतेकल्पयितुंअथतस्यैवरसादिमत्त्वंस्यादितिचेन्नतत्राप्यबादिसंसर्गनिमित्तत्वात्

रवयवंकुतस्तत्रक्रियेत्यर्थः॥तथापिधर्मांतराण्याकाशेभविष्यंतीत्याशंक्यतेषामपिक्रियापूर्वकाणामुक्तन्यायकवलीकृतत्वमाह॥एवमिति॥भेदाभे
दाभ्यांदुर्वचत्वाच्चतत्रधर्मधर्मिभावोनसंभवतीतिभावः॥आकाशेदर्शितंन्यायमन्यत्रापिसंचारयति॥तथेति॥पार्थिवत्वंपरमाणोरेकंरूपंगंधव
त्वंचापरमित्यनेकरूपत्वमित्याशंक्याह॥परमाणुर्नामेति॥नहिपार्थिवत्वातिरेकिगंधवत्त्वंप्रामाणिकमितिभावःवैशेषिकपरिभाषामाश्रित्यशं
कयति॥अथेति॥पार्थिवेपरमाणौरसादिमत्त्वमनौपाधिकंनभवतिजलादिसंसर्गकृतत्वात्तथाचनिरुपाधिकभेदेनेदमुदाहरणमितिपरिहरति॥

उक्तन्यायस्यदृगादावपिसमत्वंमत्वोपसंहरति॥तस्मादिति॥संतिपरस्मिन्नात्मनिदृगादिशक्तिभेदास्तेषांमध्येदृक्शक्तिश्चक्षुरात्मनारूपात्म
नाचदृश्यगेवपरिणमतेघ्रातिशक्तिश्चघ्राणात्मनागंधात्मनाचेत्यनेनक्रमेणपरस्मिन्परिणामकल्पनाभर्तृप्रपंचैर्याकृतासापिपरस्यैकरूपत्वोप
पादनेननिरस्तेत्याह॥एतेनेति॥४१॥३०॥औपाधिकोदृष्ट्यादिभेदोनवास्तवोस्तीत्युपपाद्यवृत्तमनुद्रवति॥जाग्रदिति॥यत्रेत्युत्तरवाक्यव्यावर्त्या

तस्मात्तन्निरवयवस्यानेकधर्मवत्वेदृष्टांतोस्तिएतेनदृगादिशक्तिभेदानांपृथक्चक्षुरूपादिभेदेनपरिणामभेदकल्पनापरमात्मनिप्र
त्युक्ता॥४१॥३०॥जाग्रत्स्वप्नयोरिवयद्विजानीयात्तत्द्वितीयंप्रविभक्तमन्यत्वेननास्तीत्युक्तमतःसुषुप्तेनविजानातिविशेषं॥ननुयद्य
स्यायमेवस्वभावःकिंनिमित्तमस्यविशेषविज्ञानंस्वभावपरित्यागेनाथविशेषविज्ञानमेवास्यस्वभावःकस्माद्विशेषंनजानातीत्युच्य

यत्रवाअन्यदिवस्यात्तत्रान्योन्यत्पश्येदन्योन्यज्जिघ्रेदन्योन्यद्रसयेदन्योन्यद्वदेदन्योन्यच्छृणुयादन्योन्यन्मन्वीतान्योन्यत्
स्पृशेदन्योन्यद्विजानीयात्॥४२॥ तेशृणुयत्रयस्मिन्जागरितेस्वप्नेवान्यदिवात्मनोवस्त्वंतरमिवाविद्ययाप्रत्युपस्थापितंभवति
तत्रतस्मादविद्याप्रत्युपस्थापितादन्योन्यमिवात्मानंमन्यमानोऽसत्यात्मनःप्रविभक्तेवस्त्वंतरेऽसतिचात्मनिततःप्रविभक्तेऽन्योन्यत्पश्येदु
पलभेततच्चदर्शितंस्वप्नेप्रत्यक्षतोघ्नंतीवजिनंतीवेतितथान्योन्यंपश्येज्जिघ्रेद्रसयेद्वदेच्छृणुयान्मन्वी तस्पृशेद्विजानीयादिति॥४२॥३१॥

माशंकांदर्शयति॥नन्विति॥किमस्यविशेषविज्ञानराहित्यंस्वरूपंकिंवाविशेषविज्ञानवत्त्वमाद्येजाग्रत्स्वप्नयोरनुपपत्तिर्द्वितीयेसुषुप्तेरसिद्धिरितिभा
वः॥प्रतीचश्चिन्मात्रज्योतिषोविशेषविज्ञानराहित्यमेवस्वरूपंतथापिस्वाविद्याकल्पितविशेषविज्ञानवत्त्वमाश्रित्यावस्थाद्वयंसिध्यतीत्युत्तरवाक्यम्

पूर्वोक्तवस्तूपसंहारार्थं सलिलवाक्यमुत्थापयति॥ यत्रेत्यादिना॥ तेनाविद्यायाः शांतत्वेनेतियावत्॥ वस्तुनोऽभावात्तत्रेतिशेषः॥ सुषुप्ते विशेषविज्ञानाभावप्रयुक्तं फलमाह॥ अतइति॥ पूर्वमेवास्यार्थस्योक्तत्वं द्योतयितुं हिशब्दः॥ संपरिष्वंगफलं समस्तत्वं अपरिछिन्नत्वं तत्फलं संप्रसन्नत्वं॥ असंप्रसादोहि परिछेदाभिमानकृतः॥ संप्रसन्नत्वेहेत्वंतरमाह॥ आप्तकामइति॥ तदेवसंप्रसन्नत्वं दृष्टांतेन स्पष्टयति॥ सलिलवदिति॥ उक्तेर्थेवाक्याक्षराणि

यत्रपुनः साऽविद्यासुषुप्तेवस्त्वंतरप्रत्युपस्थापिका शांता तेनान्यत्वेनाविद्याप्रविभक्तस्यवस्तुनोऽभावात्तत्केनकं पश्येज्जिघ्रेद्विजानीयाद्वाऽतः स्वेनैवहि प्राज्ञेनात्मनास्वयंज्योतिःस्वभावेनसंपरिष्वक्तउपसंहृतकरणः समस्तः संप्रसन्नआप्तकामआत्मकामः सलिलवत्स्वच्छीभूतः सलिलइवसलिलएको द्वितीयस्याभावाद्विद्यया हि द्वितीयः प्रविभज्यते साचशांतात्रातएकोद्रष्टादृष्टेरविपरिलुप्तत्वादात्मज्योतिःस्वभावायाः अ

सलिलएकोद्रष्टाद्वैतोभवत्येषब्रह्मलोकः सम्राडितिहैनमनुशशासयाज्ञवल्क्य॥

द्वैतोद्रष्टव्यस्य द्वितीयस्याभावादेतदमृतमभयमेषब्रह्मलोकोब्रह्मैवलोकोब्रह्मलोकः॥ परएवायमस्मिन्काले व्यावृत्तकार्यकरणोपाधिभेदः स्वेआत्मज्योतिषिशांतसर्वसंबंधोवर्त्ततेहेसम्राडितिहएवंहैनंजनकमनुशशासअनुशिष्टवान्याज्ञवल्क्यइतिश्रुतिवचनमेतत्कथंवानुशशास॥ एषास्यविज्ञानमयस्यपरमागतिर्यास्त्वन्यादेहग्रहणलक्षणाब्रह्मादिस्तंबपर्यंताअविद्याकल्पिताः तागतयोऽतो योजयति॥ सलिलइवेति॥ द्वितीयस्याभावंसुषुप्तेव्यक्तीकरोति॥ अविद्ययेति॥ अद्रष्टाद्रष्टेतिवाक्छेदः॥ एकोऽद्वैतइत्यभ्यासस्तात्पर्यलिंगं॥ तस्यपरमपुरुषार्थत्वं दर्शयन्कूटस्थत्वमाह॥ एतदिति॥ किमितिषष्ठीसमाससमुपेक्ष्यकर्मधारयोगृह्यतेतत्राह॥ परएवेति॥ अस्मिन्कालेसुषुप्त्यवस्थायामित्येतत्॥ परमत्वंस

बृ॰र॰ ५०

प्रस्तुतंसमस्तात्मभावंविशेषविज्ञानराहित्येनविशिनष्टि॥यत्रेति॥सर्वात्मभावाख्यस्यलोकस्यपरमत्वमुपपादयति॥येन्यइति॥मीयतेपरिच्छिद्यतेसा
ध्यतइतियावत्॥सोस्यप्रस्तसर्वात्मभावस्यपरमानंदत्वंविशदयति॥यानीति॥आत्मनोनवच्छिन्नानंदत्वेदोग्धश्रुतिंसंवादयति॥योवैभूमेति॥ननुवैष
यिकमेकंसुखमात्मरूपंचापरमितिसुखभेदांगीकारादपसिद्धांतःस्यादित्याशंक्यमुख्यामुख्यभेदेनतदुपपत्तेर्मैवमित्याह॥यत्रेत्यादिना॥किंच॥वस्तु

ऽपरमाअविद्याविषयत्वादियंतुदेवत्वादिगतीनांकर्मविद्यासाध्यानांपरमोत्तमायःसमस्तात्मभावोयत्रनान्यत्पश्यतिनान्यच्छृणोतिनान्यद्वि
जानातीत्येषैवचपरमासंपत्सर्वासांसंपदांविभूतीनामियंपरमास्वाभाविकत्वादस्याःकृतकाह्यन्याःसंपदस्तथैषोस्यपरमोलोकोयेन्येक
र्मफलाश्रयालोकास्तेऽस्मादपरमाअयंतुनकेनचनकर्मणामीयतेस्वाभाविकत्वादेषोस्यपरमोलोकस्तथैषास्यपरमआनंदोयान्यन्यानि

एषास्यपरमागतिरेषास्यपरमासंपदेषोस्यपरमोलोकएषोस्यपरमआनंदएतस्यैवानंदस्यान्यानिभूतानिमात्रामुपजीवंति॥४३॥

विषयेंद्रियसंबंधजनितानिआनंदजातानितान्यपेक्ष्यैषोस्यपरमआनंदोनित्यत्वाद्योवैभूमातत्सुखमितिश्रुत्यंतराद्यत्रान्यत्पश्यतिअन्य
द्विजानातितदल्पंमर्त्यमसुखंसुखमिदंतुतद्विपरीतमतएषोस्यपरमआनंदएतस्यैवानंदस्यमात्राकलामविद्याप्रत्युपस्थापितांविषयें
द्रियसंबंधकालेविभाव्यमान्यानिभूतान्युपजीवंतिकानितानएवानंतरादविद्ययाप्रविभज्यमानस्वरूपाण्यन्यत्वेनतानिब्रह्मणःपरिक
ल्प्यमानान्यन्यानिसंत्युपजीवंतिभूतानिविषयेंद्रियसंपर्कद्वारेणविभाव्यमानां॥४३॥ तोनास्त्येवात्मसुखातिरिक्तंवैषयिकंसुखमित्या
ह॥एतस्येति॥ब्रह्मातिरिक्तचेतनाभावेकान्युपजीवकानिस्युरित्याशंक्यपरिहरति॥कानीत्यादिना॥विभाव्यमानामानंदस्यमात्रामितिपूर्वेणसंबं

अ॰ ६

॥१३२॥ श्रीः॥

रामः ५०

सयोमनुष्याणामित्यादिवाक्यतात्पर्यमाह॥यस्येति॥यथासैंधवावयवैःसैंधवाचलंलोकोबोधयतितथातस्यानंदस्यमात्रानामावयवास्तत्स्वदर्श
नद्वारेणावयविनंपरमानंदमधिगमयितुमिच्छन्ननंतरोग्रंथःप्रवृत्तइत्यर्थः॥तात्पर्यमुक्त्वाक्षराणिव्याचष्टे॥सयःकश्चिदित्यादिना॥राद्धत्वमविक
लत्वंचेत्समृद्धत्वेनपुनरुक्तिरित्याशंक्याह॥समग्रेति॥तदेवसमृद्धत्वमपीत्याशंक्याव्याकरोति॥उपभोगेति॥अंतर्बहिःसंपत्तिभेदादपुनरुक्तिरि

यस्यपरमानंदस्यमात्राअवयवाःब्रह्मादिभिर्मनुष्यपर्यंतैरुपजीव्यंतेतदानंदमात्रावयवद्वारेणमात्रिणंपरमानंदमधिजिगमयिषन्ना
हसैंधवलवणशकलैरिवलवणशैलंसयःकश्चिन्मनुष्याणांमध्येराद्धःसंसिद्धोऽविकलःसमग्रावयवइत्यर्थःसमृद्धःउपभोगोपकरण
संपन्नोभवति॥किंचान्येषांसमानजातीयानामधिपतिःस्वतंत्रःपतिर्नमांडलिकःसर्वैःसमस्तैर्मानुष्यकैरितिदिव्यभोगोपकरणनिवृत्त्य

सयोमनुष्याणाꣳराद्धःसमृद्धोभवत्यन्येषामधिपतिःसर्वैर्मानुष्यकैर्भोगैःसंपन्नतमः॥

र्थंमनुष्याणामेवयानिभोगोपकरणानितैःसंपन्नानामप्यतिशयेनसंपन्नःसंपन्नतमःसमनुष्याणांपरमआनंदस्तत्रानंदानंदिनोरभेद
निर्देशान्नार्थांतरभूतत्वमित्येतत्॥परमानंदस्यैवेयंविषयविषय्याकारेणमात्राप्रसृतेतिह्युक्तंयत्रवाअन्यदिवस्यादित्यादिवाक्येनतस्माद्यु
क्तोऽयंसपरमआनंदइत्यभेदनिर्देशोयुधिष्ठिरादि तिभावः॥नकेवलमुक्तमेवतस्यविशेषणंकिंतुविशेषणांतरंचास्तीत्याह॥किंचेतिविशेषण
तात्पर्यमाह॥द्विश्वेति॥तदनिवर्तनेऽलस्यवक्ष्यमाणगंधर्वादिषुतद्भावःस्यादितिभावः॥अतिशयेनसंपन्नइतिशेषः॥अभेदनिर्देशस्याभिप्रायमाह॥तत्रे
ति॥प्रकृतंवाक्यंसप्तम्यर्थः॥आत्मनःसकाशादानंदस्येतिशेषः॥औपचारिकत्वमभेदनिर्देशस्यभविष्यतीत्याशंक्याह॥परमानंदस्येति॥तस्यैवविषयित्वंविषय

त्वमितिस्थितेफलितमाह॥तस्मादिति॥यथोक्तोमनुष्यो
नदृष्टिपथमवतरतीत्याशंक्याह॥युधिष्ठिरादीति॥

अथयेशतंमनुष्याणामित्यादेस्तात्पर्यमाह॥इष्टमिति॥शतगुणेनोत्तरोत्तरत्रानंदस्योत्कर्षप्रदर्शनक्रमेणपरमानंदमुन्नीयतमधिगमयत्युत्तरेणग्रंथेनेति
संबंधः॥परमानंदमेवविशिनष्टि॥यत्रेति॥भेदःसंख्याव्यवहारः॥उक्तमेवप्रपंचयति॥यत्रेत्यादिना॥परमानंदेविवृद्धिकाष्ठायांहेतुमाह॥अन्येति॥यद्य
पियस्येत्यादिनोक्तमेतत्तथापीहास्यव्याख्यानावसरेतदेवविवृतमित्यविरोधः॥ततशानंदप्रदर्शनानंतर्यंतत्रतत्राथशब्दार्थः॥तत्तद्वाक्योपक्रमोवा॥

तुल्योराजात्रोदाहरणंदृष्टंमनुष्यानंदमादिंकृत्वाशतगुणोत्तरोत्तरक्रमेणोन्नीयपरमानंदंयत्रभेदोनिवर्ततेतमधिगमयतियत्रायमानंदःश
तगुणोत्तरोत्तरक्रमेणवर्धमानोयत्रवृद्धिकाष्ठामनुभवतियत्रगणितभेदोनिवर्ततेऽन्यदर्शनश्रवणमननाभावात्तंपरमानंदंविवक्षन्नाह
अथयेमनुष्याणामेवंप्रकाराःशतमानंदभेदाःसएकःपितृणांतेषांविशेषणंजितलोकानामितिश्राद्धादिकर्मभिःपितॄंस्तोषयित्वातेनकर्म

समनुष्याणांपरमआनंदोथयेशतंमनुष्याणामानंदाःसएकःपितृणांजितलोकानामानंदोथयेशतंपितृणांजितलोकाना
मानंदाः॥

णाजितोलोकोयेषांतेजितलोकाःपितरस्तेषांपितृणांजितलोकानांमनुष्यानंदशतगुणीकृतपरिमाणएकआनंदोभव
ति॥सोपिशतगुणीकृतोगंधर्वलोकएकआनंदोभवतिसचशतगुणीकृतःकर्मदेवानामेकआनंदोग्निहोत्रादिश्रौतकर्मणायेदेवत्वंप्र
प्नुवंतितेकर्मदेवास्तथैवाजानदेवानामेकआनंदःआजानतएवोत्पत्तितएवयेदेवास्तेआजानदेवायश्चश्रोत्रियोऽधीतवेदःअवृजिनोवृ
जिनंपापंतद्रहितोयथोक्तकारीत्यर्थः॥ एवंप्रकारत्वंसमृद्धत्वादिपितृणामानंदइतिसंबंधः॥श्राद्धादिकर्मभिरित्यादिशब्देनपिंडपितृयज्ञादिग्र
ह्यते॥केतेकर्मदेवानामतत्राह॥अग्निहोत्रादीति॥यथागंधर्वानंदशतगुणीकृतःकर्मदेवानामेकआनंदस्तथाकर्मदेवानामानंदःशतगुणीकृतःसन्ना

कुत्रवीततृष्णत्वंतत्राह॥आजानदेवेभ्यइति॥श्रोत्रियादिवाक्यस्यप्रकृतासंगतिमाशंक्याह॥तस्यचेति॥एवंभूतस्यविशेषणत्रयविशिष्टस्येतिया
वत्॥प्रजापतिलोकशब्दस्यब्रह्मलोकशब्दादर्थभेदमाह॥विराडिति॥यथाविराडात्मन्याजानदेवानंदः शतगुणीकृतःसन्नेकआनंदोभवतितथा

अकामहतोवीततृष्णः आजानदेवेभ्योः र्वाग्यावंतोविषयास्तेषुतस्यचैवंभूतस्याजानदेवैः समानआनंदइत्येतदवगम्यतेचशब्दात्॥
तच्छतगुणीकृतपरिमाणः प्रजापतिलोकएकआनंदोविराट्शरीरेतथातद्विज्ञानवाञ्छ्रोत्रियोधीतवेदश्चावृजिनइत्यादिपूर्ववत्तच्छ

सएकोगंधर्वलोकआनंदोथयेशतंगंधर्वलोकआनंदाःसएकः कर्मदेवानामानंदोयेकर्मणादेवत्वमभिसंपद्यंतेथयेश
तंकर्मदेवानामानंदाःसएकआजानदेवानामानंदोयश्चश्रोत्रियोवृजिनोकामहतोथयेशतमाजानदेवानामानंदाःसएकः
प्रजापतिलोकआनंदोयश्चश्रोत्रियोवृजिनोकामहतोथयेशतंप्रजापतिलोकआनंदाःसएकोब्रह्मलोकआनंदोयश्चश्रो
त्रियोवृजिनोकामहतो तद्गुणीकृतपरिमाणएकआनंदोब्रह्मलोकेहिरण्यगर्भात्मनियश्चेत्यादिपूर्ववदेवातःपरंगणितनि
वृत्तिरेषपरमआनंदइत्युक्तःयस्यचपरमानंदस्यब्रह्मलोकाद्यानंदमात्राउदधेरिवविप्रुषः॥एवंशतगुणोत्तरोत्तरवृध्युपेताआनंदायत्रै
कतांयांतियश्चश्रोत्रियप्रत्यक्षोथैषएवसंप्रसादलक्षणःपरमआनंदः॥ विराडात्मोपासितावश्रोत्रियत्वादिविशेषणोविराजातुल्यानंदः स्यादि
त्याह॥तथेति॥तच्छतगुणीकृतइतितच्छब्दोविराडानंदविषयः॥श्रोत्रियत्वादिविशेषणवानपिहिरण्यगर्भोपासकस्तेनतुल्यानंदोभवतीत्याह॥यश्चेति
॥हिरण्यगर्भानंदादुपरिष्टादपिब्रह्मानंदेगणितभेदेप्राकरणिकेप्राप्तेप्रत्याह॥अतःपरमिति॥एषोस्यपरमआनंदइत्युपक्रम्यकिमित्यानंदांतरमुपदर्शि

तैत्तिरीयवल्लीभाष्य॥

तथापिसैषब्रूंसर्वात्मत्वमुपेक्षितमितिचेन्नेत्याह॥यस्यचेति॥प्रकृतस्यब्रह्मानंदस्यापरिच्छिन्नत्वमाह॥तत्रहीति॥अनवच्छिन्नत्वफलमाह॥भूमत्वादिति॥ब्रह्मानंदादितरेपरिच्छिन्नाममर्त्याश्चेत्याह॥इतरइति॥अथयत्रान्यत्पश्यतीत्यादिश्रुतेरितिभावः॥श्रोत्रियादिपदानिव्याख्यायतात्पर्यंदर्शयति॥अत्रचेति॥मध्येविशेषणेषुत्रिष्वितियावत्॥तुल्येसर्वपर्यायेष्वितिशेषः॥विशेषणांतरेविशेषमाह॥अकामहतत्वेति॥यथोक्तंविभागमुपपादयितुंसिद्धमर्थमाह॥अत्रैतानीति॥यश्चेत्यादिवाक्यंसप्तम्यर्थः॥तस्यतस्यानंदस्येतिदेवप्रजापत्यादिनिर्देशः॥अर्थादभिहितत्वंदर्शयतमाह॥यथेति॥येकर्मणादेवत्वमित्यादिश्रुतिसामर्थ्याद्देवानंदाप्तौयथाकर्माणिसाधनान्युक्तानितथायश्चेत्यादिश्रुतिसामर्थ्यादेवतान्यपिश्रोत्रियत्वादी

तत्रहिनान्यत्पश्यतिनान्यच्छृणोत्यतोभूमाभूमत्वादमृतःइतरेतद्विपरीताः॥अत्रचश्रोत्रियत्वावृजिनत्वेतुल्येऽकामहतत्वकृतोविशेषआनंदशतगुणवृद्धिहेतुरत्रैतानिसाधनानिश्रोत्रियत्वावृजिनत्वाकामहतत्वानितस्यतस्यानंदस्यप्राप्तावर्थादभिहितानियथाकर्माण्यग्निहोत्रादीनिदेवानांदेवत्वप्राप्तौतत्रचश्रोत्रियत्वावृजिनत्वलक्षणेकर्मणीअधरभूमिष्वपिसमानेइतिनोत्तरानंदप्राप्तिसाधनेअभ्युपेयेतेअकामहतत्वंतुवैराग्यतारतम्योपपत्तेरुत्तरोत्तरभूम्यानंदप्राप्तिसाधनमित्यवगम्यते॥

नितत्तदानंदप्राप्तौसाधनानिविवक्षितानीत्यर्थः॥ननुत्रयाणामविशेषश्रुतौकथंश्रोत्रियत्वावृजिनत्वयोःसर्वत्रतुल्यत्वंनहितेपूर्वभूमिषुश्रुतेतथाचाकामहतत्ववदानंदोत्कर्षेतयोरपिहेतुतेतितत्राह॥तत्रचेति॥निर्धारणार्थासप्तमी॥नहिश्रोत्रियत्वादिभून्यःसार्वभौमादिसुखमनुभवितुमुत्सहतेतथाचसर्वत्रश्रोत्रियत्वादेस्तुल्यत्वान्नतदानंदातिरेकप्राप्तावसाधारणंसाधनमित्यर्थः॥यदुक्तमानंदशतगुणवृद्धिहेतुरकामहतत्वकृतोविशेषइतितदुपपादयति॥अकामहतत्वंत्विति॥पूर्वपूर्वभूमिषुवैराग्यमुत्तरोत्तरभूम्यानंदप्राप्तिसाधनंवैराग्यस्यतरतमभावेनपरमकाष्ठोपपत्तेर्निरतिशयस्यतस्यपरमानंदप्राप्तिसाधनत्वसंभवादित्यर्थः॥यश्चेत्यादिवाक्यस्येयंतात्पर्यमुक्त्वाप्रकृतेपरमानं

सएषइति ॥ निरतिशयमकामहतत्वंपरमानंदप्राप्तिहेतुरित्यत्रप्रमाणमाह ॥ तथाचेति ॥ प्रकृतंप्रत्यग्भूतंपरमानंदमेषइतिपरामृशति ॥ श्रुतिर्मेधावी
त्याद्या ॥ व्याचष्टे ॥ नेत्यादिना ॥ तथापिकिंतद्भयकारणंतदाह ॥ पद्यदिति ॥ मेधाविलात्सज्ञातिशयशालित्वादितियावत् तदेवभयकारणंप्रकटयति ॥ स

सएषपरमआनंदोवित्तस्त्रोत्रियप्रत्यक्षोधिगतस्तथाचवेदव्यासः ॥ यच्चकामसुखंलोकेयच्चदिव्यंमहत्सुखं ॥ तृष्णाक्षयसुखस्यैतेनार्हतःषो
डशींकलामिति ॥ एषब्रह्मलोकोहेसम्राडितिहोवाचयाज्ञवल्क्यःसोहमेवमनुशिष्टोभगवतेतुभ्यंसहस्रंददामिगवामतऊर्ध्वंविमोक्षायैव
ब्रूहीतिव्याख्यातमेतत् ॥ अत्रहिविमोक्षायेत्यस्मिन्वाक्येयाज्ञवल्क्योविभयांचकारभीतवान्याज्ञवल्क्यस्तस्यभयकारणमाहश्रुतिःनयाज्ञवल्क्यो

शेषएवपरमआनंदएषब्रह्मलोकःसम्राडितिहोवाचयाज्ञवल्क्यःसोहंभगवतेसहस्रंददाम्यतऊर्द्ध्वंविमोक्षायैवब्रूहीत्यत्रह
याज्ञवल्क्योविभयांचकारमेधावीराजासर्वेभ्योमांतेभ्यउदरौत्सीदिति ॥ ४४ ॥

वक्तृत्वसामर्थ्याभावाद्भीतवानज्ञानाद्वाकिंतर्हिमेधावी
राजासर्वेभ्योमामामंतेभ्यःप्रश्ननिर्णयावसानेभ्यःउत्अरौत्सीत्आवृणोत्अवरोधंकृतवानित्यर्थः ॥ यद्यन्मयानिर्णीतंप्रश्नरूपंविमोक्षार्थेन
तदेकदेशत्वेनैवकामप्रश्नस्यगृहीत्वापुनःपुनर्मांपर्यनुयुंक्तएवमेधावित्वादित्येतद्भयकारणंसर्वंमदीयंविज्ञानंकामप्रश्नव्याजेनोपादित्सती
ति ॥ ४४ ॥ ३३ ॥ अत्रविज्ञानमयःस्वयंज्योतिरात्मासम्प्रदर्शितःस्वप्नांतबुद्धांतसंचारेणकार्यकरणव्यतिरिक्तताकामकर्मप्रविवेकश्चासंगतयाम
हामत्स्यदृष्टांतेनप्रदर्शितःपुनश्चा वैमिति ॥ ४४ ॥ ३३ ॥ एवाएषएतस्मिन्नित्यादिउत्तरग्रंथसंबंधंवक्तुंवृत्तंकीर्तयति ॥ अत्रेति ॥ अत्रायंपुरुषःस्वयंज्यो
तिर्भवतीतिवाक्यंसप्तम्यर्थः ॥ वृत्तमर्थांतरमनुद्रवति ॥ स्वप्नांतेति ॥ कार्यकरणव्यतिरिक्तत्वंप्रदर्शितमितिसंबंधःउक्तमर्थांतरमाह ॥ कामेति ॥ अथयत्रैनंघ्न

328

किंतत्कार्यप्रदर्शनसामर्थ्यान्निर्धारितमविद्यायाःसतत्त्वंतदाह॥अतऊर्ध्वमिति॥अनात्मधर्मत्वमात्मनिचैतन्यवत्स्वाभाविकत्वं॥अविद्याकार्ये
वहृद्याकार्येचस्वप्नेसर्वात्मभावलक्षणंप्रत्यक्षतएवदर्शितमित्याह॥तथेति॥सुषुप्तेपिस्वप्नवदेतद्दर्शितमित्याह॥तत्रचेति॥साक्षात्स्वरूप
चैतन्यवशादित्येतत्॥अन्यथोत्थितस्यसुखपरामर्शोनस्यादितिभावः॥उक्तंविद्याकार्यंनिगमयति॥एषइति॥तमेवविद्याविषयंविशदयति॥
सएषइति॥वृत्तानुवादमुपसंहरति॥इत्येतदिति॥एवमंतेनग्रंथेनब्रह्मलोकांतवाक्येनेतियावत्॥सोहमित्यादेस्तात्पर्यमनुवदति॥तच्चेति॥यतो

विद्याकार्यंस्वप्नएवघ्नंतीवेत्यादिनाप्रदर्शितंअर्थादविद्यायाःसतत्त्वंनिर्धारितं अतऊर्ध्वमाध्यारोपणरूपत्वमनात्मधर्मत्वंच॥तथाविद्याया
श्चकार्यंप्रदर्शितंसर्वात्मभावःस्वप्नएवप्रत्यक्षतःसर्वोस्मीतिमन्यतेसोस्यपरमोलोकइतितत्रचसर्वात्मभावःस्वभावोस्याविद्याकामकर्मादि
सर्वसंसारधर्मसंबंधातीतंरूपमस्यसाक्षात्सुषुप्तेगृह्यतइत्येतद्धितापितंस्वयंज्योतिरात्माएषपरमआनंदःएषविद्यायाविषयःसएषप
रमःसंप्रसादःसुखस्यचपराकाष्ठेत्येतदेवमंतेनग्रंथेनव्याख्यातंतच्चैतत्सर्वंविमोक्षपदार्थस्यदृष्टांतभूतंबंधनस्यचतेनचएतेमोक्षबंधनेसहे
तुकेसप्रपंचेनिर्दिष्टेविद्याविद्याकार्येतत्सर्वंदृष्टांतभूतमेवेतितद्दार्ष्टांतिकस्थानीयेमोक्षबंधनेसहेतुकेकामप्रश्नार्थभूतेत्वयावक्तव्येइतिपु
नःपर्यनुयुंक्तेजनकोतऊर्ध्वंविमोक्षायैवब्रूहीति॥तत्रमहामत्स्यवत्स्वप्नबुद्धांतावसंगःसंचरत्येकआत्मास्वयंज्योतिरित्युक्तंयथाचा

राजेत्यंमन्यतेःतस्तस्यसहस्रदानेयुक्ताप्रवृत्तिरित्यर्थः॥अतऊर्ध्वमित्यादेरभिप्रायमनुद्रवति॥तेचेति॥यद्यपियथोक्तलक्षणेमोक्षबंधनेप्रागेवोप
दिष्टेतथापिपूर्वोक्तंसर्वंदृष्टांतभूतमेवतयोरितियतोराजाभ्मान्यतिअतोमोक्षबंधनेदार्ष्टांतिकभूतेवक्तव्येयाज्ञवल्क्येनेतिमन्यमानस्तंप्रेरयतीत्य
र्थः॥बंधमोक्षयोर्वक्तव्यत्वेनप्राप्तयोरपिप्रथमंबंधोवर्ण्यतइतिवक्तुंदृष्टांतंस्मारयति॥तत्रेति॥दृष्टांतमनूद्यदार्ष्टांतिकस्यबंधस्यसूत्रितत्वंदर्शयति॥य

आत्मनः स्वतोः विद्याकर्तृत्वाभावेहेत्वंतरमाह॥ अनेकेति॥ विषयविषय्याकारोंतःकरणस्यतत्रचिदाभासोदयश्चात्मनोव्यापारस्तथाचानेकव्या
पारसंनिपातेसतिअहंसंसारीत्यविद्यात्मकोभ्रमोजायतेतस्मान्नतस्यात्मकार्यतेत्यर्थः॥ कल्पांतरंप्रत्याह॥ विषयत्वेति॥ अविद्यादेरात्मदृश्यत्वा
न्नतदाश्रयत्वंनहितद्गतस्यतद्ग्राह्यत्वमंशतःस्वग्रहापत्तेरित्यर्थः॥ तदेवस्फोरयति॥ यस्यचेति॥ अनुभवमनुसृत्यशंकते॥ अहंनेत्यादिना॥ साक्षिसा
स्वभावेनभेदाभ्युपगमान्नात्मनोः विद्याश्रयत्वमित्युत्तरमाह॥ नतस्यापीति॥ तदेवस्पष्टयति॥ नहीति॥ अविद्यादेर्विवेकेनगृहीतर्यपितद्विषयेभ्रांतत्वे

दनेकव्यापारसन्निपातजनितत्वाच्चाविद्याभ्रमस्यविषयत्वोपपत्तेश्चयस्यचाविद्याभ्रमोघटादिवद्धिविक्तोगृह्यतेसनाविद्याभ्रमवान
हंनजानेमुग्धोस्मीतिप्रत्ययदर्शनादविद्याभ्रमवत्वमेवेतिचेन्नतस्यापिविवेकग्रहणान्नहियोयस्यविवेकेनगृहीतासतस्मिन्भ्रांतइत्युच्य
ते॥ तस्यचविवेकग्रहणंतस्मिन्नेवभ्रमइतिविप्रतिषिद्धंनजानेमुग्धोस्मीतिदृश्यतइतिचब्रवीषितद्दर्शिनश्चाज्ञानंमुग्धरूपतादृश्यतइ
तिचदर्शनस्यविषयोभवतिकर्मतामापद्यतइति॥ तत्कथंकर्मभूतंसत्कर्तृस्वरूपदृशिविशेषणमज्ञानमुग्धतेस्यातामथदृशिविशेषण
त्वंतयोःकथंकर्मस्यातांदृशिनाव्याप्येते कर्महिकर्तृक्रिययाव्याप्यमानंभवत्यन्यच्चव्याप्यअन्यद्व्यापकंनतेनैवतद्व्याप्यतेवदकथमेवं
सत्यज्ञानमुग्धतेदृशिविशेषणेस्यातां

काहानिरित्याशंक्याह॥ तस्यचेति॥ अज्ञानंमुग्धत्वंचात्मनोनविशेषणमितिविधांतरेणादर्शयितुं
चोद्यवाक्यमनुवदति॥ नजानइति॥ तत्व्याचष्टे॥ तद्दर्शिनश्चेति॥ अज्ञानादिस्तकब्दार्थः॥ दृश्यमानत्वमेवविशदयति॥ कर्मतामिति॥ इतिब्रवीषी
तिसंबंधः॥ एवंपरकीयवाक्यंव्याख्यायफलितमाह॥ तत्कथमिति॥ तत्रचोद्यवाक्यार्थेदर्शितरीत्यास्थितेसतिकर्तृविशेषणंनाज्ञानमुग्धतेस्यातांत
योःप्रत्येकंकर्मभूतत्वादित्यर्थः॥ विपक्षेदोषमाह॥ अथेति॥ कथंकर्मस्यातामित्येतदेवव्याचष्टे॥ दृशिनेति॥ तत्रापिकथंशब्दःसंबध्यतेतदेवस्फुटयति॥

अज्ञानमुपलब्धधर्मोनभवत्युपलभ्यमानत्वाद्देहगतकार्श्यादिवदित्याह॥नचेति॥अज्ञानवत्कार्यमपिनात्मधर्मःस्यादित्यतिदिशति॥तथेति॥अज्ञा
नोस्यसेच्छादेरात्मधर्मत्वनिराकरणेप्रतीतिविरोधःस्यादितिशंकते॥सुखेति॥तेषांग्राह्यत्वमंगीकृत्यपरिहरति॥तथापीति॥आत्मनिनिष्ठत्वेसुखा
दीनांचैतन्यवदात्मग्राह्यत्वायोगात्तद्ग्राह्याणांतेषांनतद्धर्मतेतिभावः॥प्रकारांतरेणनिराकर्तुंनिराकृतमेवचोद्यमनुद्रवति॥नज्ञानइति॥किंप्रमा
तुरज्ञानाद्याश्रयत्वमनुभवादभिदधासितत्साक्षिणोवातत्राद्यंप्रत्याह॥भवत्विति॥कल्पांतरंनिराकरोति॥यस्त्विति॥नहियोयन्नसाक्षीसतन्नाज्ञोमू

नचाज्ञानविवेकदर्शीअज्ञानमात्मनःकर्मभूतमुपलभमानःउपलब्धधर्मत्वेनगृह्णातिशरीरकार्श्यरूपादिवत्तथासुखदुःखेच्छाप्रय
त्नादीन्सर्वोलोकोगृह्णातीतिचेत्तथापिगृहीतुर्लोकस्यविविक्तैर्वाभ्युपगतास्यान्नजानेहंत्वदुक्तंमुग्धएवेतिचेद्भवत्वेवम
ज्ञोमुग्धोयस्त्वेवंदर्शीतंज्ञंअमुग्धंप्रतिजानीमहेवयंतथाव्यासेनोक्तंइच्छादिकृत्स्नंक्षेत्रंक्षेत्रीप्रकाशयतीति॥समंसर्वेषुभूते
षुतिष्ठंतंपरमेश्वरं॥विनश्यत्स्वविनश्यंतमित्यादिशतशउक्तंतस्मान्नात्मनःस्वतोबंधमुक्तज्ञानाज्ञानकृतोविशेषोस्तिसर्वदा
समैकरसस्वाभाव्याभ्युपगमाद्येत्वतोन्यथात्मवस्तुपरिकल्प्यबंधमोक्षादिशास्त्रंचार्थवादमापादयंतितउत्सहंतेखेपिशाकुनंप
दंद्रष्टुंखंवामुष्टिनाकृष्टुंचर्मवद्वेष्टयितुं ढौवेतितथाचसर्वसाक्षीनाज्ञानादिमान्भवतीत्यर्थः॥आत्मनोमोहादिराहित्येभगवद्वाक्यंप्रमा
णयति॥तथेति॥तस्यसर्वस्यविशेषशून्यत्वेवाक्यांतरमुदाहरति॥सममिति॥आदिपदेनसमंपश्यन्हिसर्वत्रज्योतिषामपितज्ज्योतिरित्यादि
गृह्यते॥आत्मनोनिर्विशेषत्वेप्रामाणिकेस्वमतमुपसंहरति॥तस्मान्नेति॥पक्षांतरमनुभाषते॥येत्विति॥अतोनिर्विशेषस्वाभाव्यादितियावत्॥
अज्ञानाद्बंधोज्ञानान्मुक्तिरितिशास्त्रमर्थवादः॥आदिशब्देनरुद्रोदनाद्यर्थवादद्दृष्टांतंसूचयति॥सोपहासंदूषयति॥उत्सहंतइति॥नहिविशेष

कथंतर्हिभवद्भिरात्मतत्त्वमभ्युपगम्यतेतत्राह॥वयंत्विति॥प्रमाणविरुद्धार्थप्रदर्शनंतच्छब्देनपरामृश्यते॥सत्वादीनामिवसाम्यंदूषयति॥स
र्वदेति॥भेदाभेदमपवदति॥एकरसमिति॥तत्रहेतुमाह॥अद्वैतमिति॥द्वैताभावोपलक्षितत्वादित्यर्थः॥ऐकरस्यैकौटस्थ्येहेत्वंतरमाह॥अ
विक्रियमिति॥तदुपपादयति॥अजमित्यादिना॥अमरंमरणायोग्यं॥तत्रसर्वत्राविद्यासंबंधराहित्यंहेतुमाह॥अभयमिति॥ननुब्रह्मैवंविधं
नत्वात्मतत्त्वमित्याशंक्याह॥ब्रह्मैवेति॥यथोक्तंप्रत्यग्भूतंब्रह्मेत्यत्रप्रमाणमाह॥इत्येषइति॥तत्रैवविद्वदनुभवंप्रमाणयति॥इत्येवमिति॥प

वयंतुतत्कर्तुमशक्ताःसर्वदासममेकरसमद्वैतमविक्रियमजमजरममरममृतमभयमात्मतत्त्वंब्रह्मैवास्मीत्येषसर्ववेदांतनिश्चितो
र्थइत्येवंप्रतिपद्यामहेतस्माद्ब्रह्माप्येतीत्युपचारमात्रमेतद्विपरीतग्रहवद्देहसंततेर्विच्छेदमात्रंविज्ञानफलमपेक्ष्य॥पूर्व॥स्वप्नबुद्धां
तगमनदृष्टांतस्यदार्ष्टांतिकःसंसारोवर्णितःसंसारहेतुश्चविद्याकर्मपूर्वप्रज्ञावर्णितःयैश्चोपाधिभूतैःकार्यकरणलक्षणैर्भूतैःपरिवे
ष्टितःसंसारित्वमनुभवतितानिचोक्तानितेषांसाक्षात्प्रयोजकौधर्माधर्माइतिपूर्वपक्षंकृत्वाकाममयएवेत्यवधारितंयथाचब्राह्मणेना
यमर्थोवधारितएवंमंत्रेणापिबंधबंधकारणंचोक्त्वोपसंहृतंप्रकरणमितितुकाममयमानइतिअथाकामयमानइत्यारभ्यसुषुप्तदृ
ष्टांतस्यदार्ष्टांतिकभूतःसर्वात्मभावोमोक्षउक्तोमोक्षकारणंचात्मकामतयायदाप्तकामत्वमुक्तंतच्चसामर्थ्यान्नात्मज्ञानमंतरेणात्म
कामतयाप्तकामत्वमितिसामर्थ्याद्ब्रह्मविद्यैवमोक्षकारणमित्युक्तमतोयद्यपिकामो

रपक्षनिरासेनप्रकृतंवाक्यार्थमुपसंहरति॥तस्मादि
ति॥उपचारेनिमित्तमाह॥विपरीतेति॥आत्मानत्वतःसंसारीतिविपरीतग्रहवतीयादेहसंततिस्तस्याःविच्छेदमात्रंज्ञानफलमपेक्ष्योपचारमात्र
मित्यर्थः॥ब्राह्मणोक्तेर्थेमंत्रमवतारयितुंब्राह्मणार्थमनुवदति॥स्वप्नेत्यादिना॥अयमर्थःसंसारस्तद्धेतुश्चमंत्रस्तदेवसक्तःसहकर्मणेत्यादिः॥आ

त्मज्ञानस्यतर्हिमोक्षकारणत्वमुपेक्षितमित्याशंक्या
ह॥तत्रेति॥

अतोब्रह्मज्ञानंमोक्षकारणमित्युक्तत्वादितियावत्॥मूलंबंधस्येतिशेषः॥अत्रेतिमोक्षप्रकरणोक्तिः॥बंधप्रकरणंदृष्टांतयितुमपिशब्दः॥उक्तेर्थेतदेष
इत्यक्षराणिव्याचष्टे॥तस्मिन्नेति॥यस्मिन्कालेविद्यापरिपाकावस्थायामित्यर्थः॥सुषुप्तिव्यावृत्त्यर्थंसर्वविशेषणमितिमत्वाह॥समस्ताइति॥कामशब्दस्या
र्थांतरविषयत्वंव्यावर्तयति॥तस्येति॥क्रियापदंसोपसर्गंव्याचष्टे॥आत्मकामस्येति॥तानेवविशिनष्टि॥येप्रसिद्धाइति॥कामानामाश्रयत्वंनिराकरोति॥

मूलमित्युक्तंतथापिमोक्षकारणविपर्ययेणबंधकारणमविद्येत्येतद्युक्तमेवभवति॥अत्रापिमोक्षोमोक्षसाधनंचब्राह्मणेनोक्तंतस्यैवदृढीक
रणायमंत्रउदाह्रियतेश्लोकशब्दवाच्यस्त स्मिन्नेवार्थएषश्लोकोमंत्रोभवति यदायस्मिन्कालेसर्वेसमस्ताःकामास्तृष्णाप्रभेदाःप्रमुच्यंतेआ
त्मकामस्यब्रह्मविदःसमूलतोविशीर्यंतेयेप्रसिद्धाःलोकेइहामुत्रार्थाःपुत्रवित्तलोकैषणालक्षणाअस्यप्रसिद्धस्यपुरुषस्यहृदिबुद्धौश्रिता

तदेषश्लोकोभवतियदासर्वेप्रमुच्यंतेकामायेस्यहृदिश्रिताः॥अथमर्त्योमृतोभवत्यत्रब्रह्मसमश्नुतइति॥

आश्रिताःअथतदामर्त्योमरणधर्मासन्कामवियोगात्समूलतोऽमृतोभवति॥अर्थादनात्मविषयाःकामाअविद्यालक्षणामृत्यवइत्येतदुक्तं
भवतिअतोमृत्युवियोगेविद्वान्जीवन्नेवामृतोभवत्यत्रास्मिन्नेवशरीरेवर्तमानोब्रह्मसमश्नुतेब्रह्मभावंमोक्षंप्रतिपद्यतइत्यर्थः॥अतोमोक्षो
नदेशांतरगमनाद्यपेक्षतेतस्माद्विदुषोनोत्क्रामंतिप्राणाःयथावस्थिताएवस्वकारणेपुरुषेसमवनीयंतेनाममात्रंह्यवशिष्यतइत्युक्तं हृदीति॥

समूलतःकामवियोगादितिसंबंधः॥कामवियोगादमृतोभवतीतिनिर्देशसामर्थ्यसिद्धमर्थमाह॥अर्थादिति॥तेषांमृत्युत्वेकिंस्यात्तदाह॥अतइति॥अत्रेत्या
दिनाविवक्षितमर्थमाह॥अतोमोक्षेति॥आदिपदमुत्क्रांत्यादिसंग्रहार्थं॥मुक्तेस्तदपेक्षाभावेफलितमाह॥तस्मादिति॥तर्हिमरणासिद्धिरित्याह॥यथेति॥उ

एतच्च पंचमेप्रतिपादितमित्याह॥नाममात्रमिति॥तद्यथेत्यादिवाक्यनिरस्यांशंकामाह॥कथंपुनरिति॥विदुषाविद्ययात्ममात्रत्वेनप्राणादिवाधितेषु पिदेहेचेदसौवर्ततेततोस्यपूर्ववद्देहित्वाद्विद्यावैयर्थ्यमित्यर्थः॥दृष्टांतेनपरिहरति॥अत्रेत्यादिना॥देहेवर्तमानस्यापिविदुषस्तत्राभिमान राहित्यंतत्रैस्तुच्यते॥यस्यांत्वचिसर्पोनितरांलीयतेसाहिनिर्ल्वयनीसर्पत्वग्गुच्यतेसर्पनिर्मोकदृष्टांतस्यदार्ष्टांतिकमाह॥एवमेवेति॥सर्पदृष्टं

कथंपुनःसमवनीतेषुप्राणेषुदेहेचस्वकारणेप्रलीनेविद्वान्मुक्तोत्रैवसर्वात्मासन्वर्त्तमानःपुनःपूर्ववद्देहित्वंसंसारित्वलक्षणंन प्रतिपद्यतइत्यत्रोच्यतेतत्तत्रायंदृष्टांतोयथालोकेऽहिःसर्पस्तस्यनिर्ल्वयनीनिर्मोकःसाहिनिर्ल्वयनीवल्मीकेसर्पाश्रयेवल्मीका दावित्यर्थःप्रत्यस्ताप्रक्षिप्ताऽनात्मभावेनसर्पेणपरित्यक्ताशयीतवर्त्तेत॥एवमेवयथायंदृष्टांतःइदंशरीरंसर्पस्थानीयेनमुक्तेनाना

तद्यथाहिनिर्ल्वयनीवल्मीकेमृताप्रत्यस्ताशयीतैवमेवेदंशरीरंशेते

त्मभावेनपरित्यक्तंमृतमिवशेतेअथेतरःसर्पस्थानीयोमुक्तःसर्वात्मभूतःसर्पवत्तत्रैववर्त्तमानोप्यशरीरएवनपूर्ववत्पुनःसशरी रोभवति॥कामकर्मप्रयुक्तशरीरात्मभावेनहिपूर्वंसशरीरोमर्त्यश्चतद्वियोगादथेदानीमशरीरोतएवचामृतःप्राणःप्राणितीतिप्रा णःप्राणस्यप्राणमितिहिवक्ष्यमाणेश्लोकेप्राण तस्यदार्ष्टांतिकंदर्शयति॥अथेति॥अज्ञानेनसहदेहस्यनष्टत्वमशरीरत्वादौहेतुरथश ब्दार्थः॥अथशब्दावद्योतितदेहत्ववष्टंभेनाशरीरत्वंविशदयति॥कामेति॥पूर्वमित्यविद्यावस्थोक्तिः॥इदानीमितिविद्यावस्थोच्यते॥श्रुत्यंतरसा रेणरूढंचमुख्यंप्राणंव्यावर्त्तयति॥प्राणस्येति॥श्लोकेपरएवआत्मायथाप्राणशब्दस्तथात्रापीत्यर्थः॥यथाचश्रुत्यंतरेप्राणशब्दःपरएवात्मातथा

परविषयमिदंप्रकरणमथाकामयमानइतिमोक्षस्यप्रक्रांतत्वात्दथायमित्यादिवाक्यंचतद्विषयमन्यथाब्रह्मादिशब्दानुपपत्तेस्तस्मादुभयसाम
र्थ्यादत्रपरएवात्माप्राणशब्दितइत्याह॥प्रकरणेति॥विशेष्यंदर्शयित्वाविशेषणंदर्शयति॥ब्रह्मैवेति॥ब्रह्मशब्दस्यकमलासनादिविषयत्वंवार
यति॥किंपुनरिति॥तेजःशब्दस्यकार्यज्योतिर्विषयत्वमाशंक्याह॥विज्ञानेति॥तत्रप्रमाणमाह॥येनेति॥प्रज्ञाप्रकृष्टाज्ञप्तिःस्वरूपंचैतन्यंनेत्रमि

बंधनंहिसोम्यमनइतिचश्रुत्यंतरेप्रकरणवाक्यसामर्थ्याच्चपरएवात्मात्रप्राणशब्दवाच्यःब्रह्मैवपरमात्मैवकिंपुनस्तत्तेजएवविज्ञान
ज्योतिर्येनात्मज्योतिषाजगदवभास्यमानंप्रज्ञानेत्रंविज्ञानज्योतिष्मत्सदविभ्रंशहसैतेयःकामप्रश्नोविमोक्षार्थोयाज्ञवल्क्येनवरोदत्तो
जनकायसहेतुकोबंधमोक्षार्थलक्षणोदृष्टांतदार्ष्टांतिकभूतःसएषनिर्णीतःसविस्तरोजनकयाज्ञवल्क्याख्यायिकारूपधारिण्याश्रु

१ थायमशरीरोमृतःप्राणोब्रह्मैवतेजएव ॥

त्यासंसारविमोक्षोपायउक्तःप्राणिभ्यः॥इदानींश्रुतिःस्वयमेवाहविद्यानिष्क्रयार्थंजनकेनैवमुक्तमितिकथंसोहमेवंविमोक्षितस्त्वयाभग
वतेतुभ्यंविद्यानिष्क्रयार्थंसहस्रंददामीतिहस्वंकिलउवाचोक्तवान्जनकोवैदेहः॥अत्रकस्माद्धिमोक्षपदार्थेनिर्णीतेविदेहोराज्यमात्मा
नमेवचननिवेदयत्येकदेशोक्ताविवसहस्रमेवददातितत्रकोभिप्रायइत्यत्र वनेत्रंप्रकाशकमस्येतितथोक्तं॥सोहमित्यादेस्तात्पर्यंवक्तुं
रत्नंकीर्तयति॥यःकामप्रश्नइति॥निर्णयप्रकारंसंक्षिपति॥संसारेति॥सोहमित्यादिवाक्यांतरमुत्थापयति॥इदानीमिति॥आकांक्षापूर्वकंवाक्य
मादायविभजते॥कथमिति॥सहस्रदानमाक्षिपति॥अत्रेति॥सर्वस्वदानप्राप्तावपिसहस्रदानेहेतुमेकदेशीयंदर्शयति॥अत्रकेचिदित्यादि

कद्दातर्हिगुरवेसर्वस्वंराजानिवेदयिष्यतितत्राह॥श्रुत्वेति॥ननुपुनःशुश्रूषुरपिराजाकिमितिसंप्रश्नस्यैवसर्वस्वंगुरवेनप्रयच्छतिप्रभूताहिदक्षि
णागुरुंप्रीणयंतीस्वीयांशुश्रूषांफलयतितत्राह॥यद्विवेति॥अनाप्तोसौहंदयेन्यन्निधायवाचान्यन्नभिध्यादनात्मकंव्याजोत्तरंयुक्तं॥श्रुतौतत्पौरुषेय्या
मपास्ताशेषदोषशंकायांनव्याजोक्तिर्युक्तातदीयस्वारसिकप्रामाण्यभंगप्रसंगादितिदूषयति॥सर्वमपीति॥एकदेशीयपरिहारासंभवेहेत्वंतरमाह॥
अर्थेति॥तदुपपत्तिमेवोपपादयति॥विमोक्षेति॥तस्यापिपूर्वमसकृदुक्तेस्तदीयशुश्रूषाधीनंसहस्रदानमनुचितमित्याशंक्याश्रमादेर्ज्ञानसाधनत्वे

केचिद्दूर्णयंतिअध्यात्मविद्यारसिकोजनकःश्रुतमप्यर्थंपुनर्मैत्रेःशुश्रूषस्यतोनसर्वमेवनिवेदयतिश्रुत्वाभिप्रेतंयाज्ञवल्क्यात्पुनरंतेनिवे
दयिष्यामीतिहिमन्यतेयदिवान्नैवसर्वंनिवेदयामिनिवृत्ताभिलाषोयंश्रवणादितिमत्वाश्लोकान्नवक्ष्यतीतिचभयात्सहस्रदानंशुश्रूषा
लिंगज्ञापनायेतिसर्वमप्येतदसत्पुरुषस्येवप्रमाणभूतायाःश्रुतेर्व्याजानुपपत्तेः॥अर्थशेषोपपत्तेश्चविमोक्षपदार्थेउक्तेध्यात्मज्ञानसाधन

सोहंभगवतेसहस्रंददामीतिहोवाचजनकोवैदेहः॥५६॥७॥

आत्मज्ञानशेषभूतःसर्वैषणापरित्यागःसंन्यासाख्योवक्तव्योर्थशेषोविद्यतेतस्मात्श्लोकमात्रशुश्रूषाकल्पनाऽनृजी॥अगतिकाहिग
तिःपुनरुक्तार्थकल्पनासाचायुक्तासत्यांगतौनचतत्स्तुतिमात्रमित्यवोचामनन्वेवंसत्यतऊर्ध्वंविमोक्षायैवेतिवक्तव्यंनैषदोषः॥प्रागनुक्तेसे
नसहभूयोपिसंन्यासस्यवक्तव्यत्वयोगात्तदपेक्षयायुक्तंसहस्रदानमित्याह॥अगतिकाहीति॥ननुसंन्यासादिविद्यास्तुत्यर्थमुच्यतेमहाभागाहीयंयत्तर
र्थीदुष्करमपिकरोत्यतोनार्थशेषसिद्धिस्तत्राह॥नचेति॥नतावत्संन्यासोविद्यास्तुतिर्विदित्वाव्युत्थायेतिसमानकर्तृत्वनिर्देशादितिपंचमेस्थितं॥

१ = पुरोडाशसंस्कारः प्रतिपत्तिकर्म

नापिशमादिर्विद्यास्तुतिस्तत्रापि विधेर्वक्ष्यमाणत्वादित्यर्थः अर्थशेषशुश्रूषया सहस्रदानमित्यत्र जनकस्याकौशलं चोदयति॥ नन्विति॥ राज्ञः शं कितमकौशलं दूषयति॥ नैषइति॥ तत्र हेतुमाह॥ आत्मज्ञानवदिति॥ यथात्मज्ञानं मोक्षे प्रयोजकं न तथा संन्यासो न चास्मिन्पक्षे तस्याकर्तव्यत्वं प्रतिपत्तिकर्मवदनुष्ठानसंभवादिति राज्ञा यतो मन्यते ततः संन्यासस्य न ज्ञानतुल्यत्वमतो नात ऊर्ध्वं विमोक्षायैव ब्रूहीति पृच्छतीत्यर्थः॥ संन्यासस्य प्रतिपत्तिकर्मवत्कर्तव्यत्वे प्रमाणमाह॥ संन्यासेनेति॥ ननु विविदिषासंन्यासमंगीकुर्वता न तस्य प्रतिपत्तिकर्मवदनुष्ठेयत्वमिष्यते तत्राह॥ सा

आत्मज्ञानवदप्रयोजकः संन्यासः पक्षे प्रतिपत्तिकर्मवदिति हि मन्यते संन्यासेन तनुं त्यजेदिति स्मृतेः साधनत्वपक्षेपि नात ऊर्ध्वं विमोक्षायैवेति प्रश्नमर्हति मोक्षसाधनभूतात्मज्ञानपरिपाकार्थत्वात्॥ ७॥ आत्मकामस्य ब्रह्मविदो मोक्ष इत्येतस्मिन्नर्थे मंत्रब्राह्मणोक्ता वि

तदेते श्लोका भवन्ति। अणुः पन्था विततः पुराणो माꣳ स्पृष्टोऽनुवित्तो मयैव॥

स्तरप्रतिपादका एते श्लोका भवंति॥ अणुः सूक्ष्मः पंथाः दुर्विज्ञेयत्वाद्वितततो विस्तीर्णो विस्पष्टतरणहेतुत्वाद्वा वितर इति पाठांतरात् मोक्षसाधनो ज्ञानमार्गः पुराणश्चिरंतनो नित्यः श्रुतिप्रकाशितत्वान्न तार्किकबुद्धिप्रभवकुदृष्टिमार्गवदर्वाक्कालिकः मꣳ स्पृष्टो मां स्पृष्टो मया लब्ध इत्यर्थो

धनत्वेति॥ त्यजेतैव हि तत्त्वेयं त्यक्तुः प्रत्यक्परं पदमित्युक्तत्वादित्यर्थः॥ ७॥ राज्ञोऽकौशलं परिहृत्य मंत्रानवतारयति॥ आत्मकामस्येति॥ यदेत्याद्यतीतश्लोकेनागामिश्लोकानामर्थापौनरुक्त्यं सूचयति॥ विस्तरेति॥ ज्ञानमार्गस्य सूक्ष्मत्वे हेतुमाह॥ दुर्विज्ञेयत्वादिति॥ विस्तीर्णत्वं पूर्णवस्तुविषयत्वादवधेयं॥ माध्यंदिनश्रुतिमाश्रित्याह॥ विस्पष्टेति॥ प्रयत्नसाध्यत्वं तस्य पंचम्या विवक्ष्यते॥ कथं पुनरधुनातनो वैदि

विशेषणप्रकाशितमर्थमुक्त्वा तस्यव्यवच्छेद्यमाह॥ नतार्किकेति॥ मंत्रदृशालब्धत्वेपिकुतोज्ञानमार्गस्यतत्संस्पर्शित्वमित्याशंक्याह॥ योहीति॥ अनुवेदनलाभयोर्विशेषाभावात्सोनरुक्त्यमाशंक्याह॥ अनुवेदनमिति॥ पूर्वशब्देनपाठक्रमानुसारेणलाभोगृह्यते॥ एवकारमाश्रित्यशंक ते॥ किमसाविति॥ तथाचतद्योयोदेवानामित्यादिअविशेषश्रुतिर्विरुध्येतेतिशेषः॥ अवधारणश्रुतेरन्यपरत्वेनान्ययोगव्यवच्छेदकाभावम

योहियेनलभ्यतेसतंस्पृशतीवसंबध्यतेतेनायंब्रह्मविद्यालक्षणोमोक्षमार्गोमयालब्धत्वान्मांस्पृष्टइत्युच्यतेनकेवलंमयालब्धः किंत्वनुवित्तोमयैवानुवेदनंनामविद्यायाःपरिपाकापेक्षयाफलावसानतानिष्ठाप्राप्तिःभुजेरिवतृप्त्यवसानतापूर्वंतुज्ञानप्राप्ति संबंधमात्रमेवेतिविशेषः॥ किमसावेवमंत्रदृगेकोब्रह्मविद्याफलंप्राप्तोनान्यःप्राप्तवान्येनानुवित्तोमयैवेत्यवधारयतिनेषदो

तेनधीराअपियंतिब्रह्मविदःस्वर्गंलोकमितऊर्ध्वंविमुक्ताः॥ ५॥ ८॥

षोऽस्याःफलमात्मसाक्षिकमनुवित्तमितिब्रह्मविद्यायाःस्तुतिपरत्वात्॥ एवंहिकृतार्थाभिमानकरणमात्मप्रत्ययसाक्षिकमात्मज्ञा नंकिमतःपरमन्यत्स्यादितिब्रह्मविद्यांस्तौतिनतुपुनरन्योब्रह्मवित्तत्फलंनप्राप्नोतीतितद्योयोदेवानामितिसर्वार्थश्रुतेस्तदेवाह तेनब्रह्मविद्यामार्गेणधीराःप्रज्ञावंतोन्येपिब्रह्मविदइत्यर्थो भिप्रेत्यपरिहरति॥ नैषदोषइतिस्तुतिपरत्वमेवप्रकटयति॥ एवंहीति॥ कृ तार्थोस्मीत्यात्मन्यभिमानकरणंस्वानुभवसिद्धमात्मज्ञानंनास्मादन्यदुत्कृष्टंकिंचिदित्येवंविद्यामवधारणश्रुतिःप्रस्तौतीत्यर्थः॥ यथाश्रुतार्थ त्वेकोदोषःस्यादितिचेत्तत्राह॥ नत्विति॥ इत्यवधारणश्रुत्याविवक्षितमितिशेषः॥ तत्रहेतुः॥ तद्योयइति॥ सर्वार्थश्रुतेर्ब्रह्मविद्यासर्वार्थासर्वसाधार

३७१

बृ·र·
७४

ब्रह्मविद्यायाः सर्वार्थत्वे वाक्यशेषं प्रमाणत्वेनावतार्य व्याचष्टे ॥ तदेवेति ॥ ननु मोक्षे स्वर्गशब्दो न युज्यते तस्यार्थान्तरे रूढत्वादत आह ॥ स्वर्गेति ॥ यथा ज्योतिष्टोमप्रकरणे श्रुतो ज्योतिःशब्दो ज्योतिष्टोमविषयस्तथा मोक्षप्रकरणे श्रुतः स्वर्गशब्दो मोक्षमधिकरोति रूढ्यङ्गीकारे ब्रह्मविद्याया निकृष्टप्रसंगादिति भावः ॥ जीवन्त एव मुक्ताः सन्तः शरीरपातादूर्ध्वं मोक्षमपियन्तीति संबन्धः ॥ ४ । ८ ॥ तस्मिन्नित्यादि पूर्वपक्षमुत्थापयति ॥ तस्मिन्निति ॥ विप्रतिपत्तेरेव प्रश्नपूर्वकं विशदयति ॥ कथमित्यादिना ॥ पिंगलं वह्निज्वालातुल्यं ॥ लोहितं जपाकुसुमसन्निभं ॥ सप्रपंचं शब्दस्पर्शरूपरसादिमद्ब्रह्म तदुपा

ः पियन्त्यपिगच्छन्तीति ब्रह्मविद्याफलं मोक्षं स्वर्गं लोकं स्वर्गलोकशब्दस्त्रिविष्टपवाच्यपि सन्निह प्रकरणान्मोक्षाभिधायकः इतोऽस्माच्छरीरपातादूर्ध्वं जीवन्त एव विमुक्ताः सन्तः ॥ ४ । ८ ॥ तस्मिन्मोक्षसाधनमार्गे विप्रतिपत्तिर्मुमुक्षूणां कथं तस्मिञ्छुक्लं शुद्धं विमलमाहुः केचिन्मु

तस्मिञ्छुक्लमुत नीलमाहुः पिंगलᳪं हरितं लोहितं च ॥

मुक्षवो नीलमन्ये पिंगलमन्ये हरितं लोहितं यथादर्शनं नाड्यस्त्वेताः सुषुम्नाद्याः श्लेष्मादिरससंपूर्णाः शुक्लस्य नीलस्य पिंगलस्येत्याद्युक्तत्वादादित्यं च मोक्षमार्गमेवंविधं मन्यन्ते एष शुक्ल एष नील इत्यादि सूत्रान्तरादर्शनमार्गस्य च शुक्लादिवर्णसंभवा सनमनुरस्यतस्माप्तिमार्गे यिन्न

दो मुमुक्षूणामित्याह ॥ यथादर्शनमिति ॥ तथापि कथं ब्रह्मप्राप्तिमार्गे शुक्लादिरूपसिद्धिः ॥ नहि ज्ञानस्य रूपादिमत्त्वमित्याशंक्याह ॥ नाड्यस्त्विति ॥ नाडीनामपि कथं यथोक्तरूपवत्त्वमित्याशंक्याह ॥ श्लेष्मादीति ॥ तथापि कथं शुक्लादिरूपवत्त्वमित्याशंक्य नाडीखंडोक्तं स्मारयति ॥ शुक्लस्येति ॥ नाडीपरिग्रहे नियामकाभावमाशंक्य पक्षान्तरमाह ॥ आदित्यं चेति ॥ एवंविधं शुक्लादिनानावर्णमित्यर्थः ॥ तस्य तथात्वे प्रमाणमाह ॥ एष इति ॥ प्रकृते ज्ञानमार्गे किंभि

तर्हि नाडी।स्रोता दिव्यपक्षो वाकृतरो विवक्षितस्तत्राह॥सर्वथापीति॥शुक्लमार्गस्य ज्ञानमार्गादन्यत्वमाशिपति॥नन्विति॥शुक्लशब्दस्य नाद्वैतमार्गविषयत्वं नीलादिशब्दसमभिव्याहारविरोधादिति परिहरति॥ननीलेति॥सैद्धांतिकमंत्रभागं व्याख्यातुं पूर्वपक्षं दूषयति॥यान्शुक्लादीनिति॥न केवलं देहदेशान्निःसरणसंबंधादेव नाडीभेदानां संसारविषयत्वं किंतु ब्रह्मलोकादिसंबंधादपीत्याह॥ब्रह्मादीति॥आदित्योपि देवयानमध्य

त्सर्वथापि तु प्रकृताद्ब्रह्मविद्यामार्गादन्य एते शुक्लादयो न तु शुक्लः शुद्धोऽद्वैतमार्गो न नीलपीतादिशब्दैः वर्णवाचकैः सहानुद्रवणाद्या न्शुक्लादीन्योगिनो मोक्षपथानाहुर्न ते मोक्षमार्गाः संसारविषया एव हि ते चक्षुष्टो वा मूर्ध्नो वान्येभ्यो वा शरीर

एष पंथा ब्रह्मणा हानुवित्तस्तेनैति ब्रह्मवित्पुण्यकृत्तेजसश्च॥९॥

देशेभ्य इति शरीरदेशान्निःसरणसंबंधाद्ब्रह्मादिलोकप्रापका हि ते॥तस्मादयमेव मोक्षमार्गोय आत्मकामत्वेनाप्तकामतया सर्वकर्मक्षये गमनाद्युपपत्तौ प्रदीपनिर्वाणवच्चक्षुरादीनां कार्यकरणानामत्रैव समवनय इत्येष ज्ञानमार्गः पंथा ब्रह्मणा परमात्मस्वरूपेणैव ब्राह्मणेन त्यक्तसर्वैषणेनानुवित्त पातो ब्रह्मलोकप्रापकः संसारहेतुरेवेति मन्वानो मोक्षमार्गमुपसंहरति॥तस्मादिति॥आप्तकामतया ज्ञानमार्ग इति संबंधः॥स्वंभूमिकां कृत्वेषइत्यस्यार्थमाह॥सर्वकर्मेति॥यथा तैलादिविलये प्रदीपस्य ज्वलनानुपपत्तौ तेजोमात्रे निर्वाणमित्थं तेन तथा स्थूलस्य सूक्ष्मस्य च सर्वस्यैव कामस्याज्ञानात्क्षये सति गत्यनुपपत्तावत्रैव प्रत्यगात्मनि कार्यकरणानामेकीभावेनावसानमित्येवमेष शब्दार्थः पंथा इत्येतद्व्याचष्टे॥ज्ञानमार्ग इति॥इत्थंभावे तृतीयामाश्रित्याह॥परमात्मेति॥अनुवेदनकर्तुर्ब्राह्मणस्य संन्यासित्वं दर्शयति॥त्यक्तेति॥विप्रतिप

किंनाकमोक्षमार्गोपि[illegible]
सकृतिनामपतितेति॥

अन्योपिमंत्रदृशः सकाशादितिशेषः॥ इहेतिजीवदवस्थोक्तिः॥ समुच्चयकारिणोत्रब्रह्मप्राप्तिर्विवक्षितेतिकेचित्तान्प्रत्याह॥ नपुनरिति॥ विरो
धात्ज्ञानकर्मणोरितिशेषः॥ किंच॥ क्रमसमुच्चयः समसमुच्चयोवेतिविकल्प्याद्यमंगीकृत्यद्वितीयंदूषयति॥ अपुण्येति॥ ज्ञानस्यकर्मासमुच्च
येपिविवेकज्ञानेनसमुच्चयोस्तीत्याशंक्याह॥ त्यजेति॥ ब्रह्मविदोपिस्तुत्यादिदृष्टेस्तेनसमुच्चयोज्ञानस्येत्याशंक्याह॥ निराशिषमिति॥ काम्या
ननुष्ठानमनारंभः॥ अक्षीणत्वंनिषिद्धानाचरणं॥ क्षीणकर्मत्वंनित्यादिकर्मराहित्यं॥ असमुच्चयेवाक्यांतरमाह॥ नेत्यादिना॥ एकतानिरपेक्षता

स्तेनब्रह्मविद्यामार्गेणब्रह्मविदन्योप्येतिकीदृशोब्रह्मवित्तेनैतीत्युच्यतेपूर्वंपुण्यकृद्भूत्वापुनस्त्यक्तपुत्राद्येषणः परमात्मतेजस्या
त्मानंसंयोज्यतस्मिन्नभिनिर्वृत्तस्तैजसश्चात्मभूतइहैवेत्यर्थः॥ ईदृशोब्रह्मवित्तेनमार्गेणैतिनपुनः पुण्यादिसमुच्चयकारिणोग्रह
णंविरोधादित्यवोचाम॥ अपुण्यपुण्योपरमेयंपुनर्भवनिर्भयाः शांताः संन्यासिनोयांतितस्मैमोक्षात्मनेनमइतिचस्मृतेः॥ त्यजधर्मम
धर्मंचउभेसत्यानृतेत्यज॥ उभेसत्यानृतेत्यक्त्वायेनत्यजसितंत्यजेत्यादिपुण्यापुण्यत्यागोपदेशात्॥ निराशिषमनारंभंनिर्नमस्कारमस्तु
तिं॥ अक्षीणंक्षीणकर्माणंतंदेवाब्राह्मणंविदुः॥ नैतादृशंब्राह्मणस्यास्तिवित्तंयथैकतासमतासत्यताच॥ शीलंस्थितिर्दंडनिधानमार्जवं
ततस्ततश्चोपरमः क्रियाभ्यइत्यादिस्मृतिभ्यः॥ उपदेश्यतिचेहापि॥ एषनित्योमहिमाब्राह्मणस्यनवर्धतेकर्मणानोकनीयानितिकर्मप्रयो
जनाभावेहेतुमुक्त्वा

सर्वोदासीनतेतियावत्॥ समतामित्रोदासीनशत्रुबुद्धिव्यतिरेकेणसर्वत्रस्वस्मिन्निवदृष्टिः॥ दंडनिधानंअहिंसा
परत्वं॥ अर्थस्यमूलंनिकृतिः क्षमाच॥ कामस्यवित्तंचवपुर्वयश्च॥ धर्मस्ययागादिर्यादमश्च॥ मोक्षस्यसर्वोपरमः क्रियाभ्यइत्यादिचतुर्विधेपुरुषार्थेसाध
नभेदोपदेशिवाक्यमादिशब्दार्थः॥ इत्यादिस्मृतिभ्यश्चनपुण्यादिसमुच्चयकारिणोग्रहणमितिसंबंधः॥ तथापिप्रकृतेमंत्रेसमुच्चयोभातीत्याशंक्याह॥ उपदे

वाक्यशेषादिपर्यालोचनासिद्धमर्थमुपसंहरति॥ तस्मादिति॥ पूर्वं पुण्यकृद्भूत्वा पुनस्त्यक्तपुत्राद्येषणो ब्रह्मवित्तेनैतीति क्रमो न युज्यते॥ श्रुतत्वादित्या
शंक्याह॥ अथवेति स्तुतिमेवोपपादयति॥ पुण्यकृतीति॥ तेजांसि करणान्युपसंहृत्य स्थितस्तेजसो दहराद्युपासीनो योगी तस्मिन्न णिमाद्यैश्वर्यान्महा

तस्माद्ब्राह्मणः शांतो दांत इत्यादिना सर्वक्रियोपरमं दर्शयति तस्माद्यथाव्याख्यातमेव पुण्यकृत्त्वमथवा यो ब्रह्मवित्तेनेति स पुण्यकृत्तैजस
श्चेति ब्रह्मवित्स्तुतिरेषा पुण्यकृति तैजसे च योगिनि महाभाग्यं प्रसिद्धं लोके ताभ्यामतो ब्रह्मवित्स्तूयते प्रख्यातमहाभाग्यत्वाल्लोके॥ ९॥ अं
धमदर्शनात्मकं तमः संसारनियामकं प्रविशंति प्रतिपद्यंते के ये ऽविद्यां विद्यातोऽन्यां साध्यसाधनलक्षणामुपासते कर्मानुवर्तंत इत्यर्थः त
तस्तस्मादपि भूय इव बहुतरमिव तमः प्रविशंति के ये उ विद्यायामविद्यावस्तुप्रतिपादिकायां कर्मार्थायां त्रय्यामेव विद्यायां रता अभिरता

अंधं तमः प्रविशंति येऽविद्यामुपासते॥ ततो भूय इव ते तमो य उ विद्यायां रताः॥ ५९॥ अनंदा नाम ते लोका अंधेन तमसा
वृताः॥ तांस्ते प्रेत्याभिगच्छंत्यविद्वांसोऽबुधो जनाः॥ ६०॥ विधिप्रतिषेधपर एव वेदो नान्योऽस्तीत्युपनिषदर्थानपेक्षिण इत्यर्थः॥ १०॥
यदि तेऽदर्शनलक्षणं तमः प्रविशंति को दोष इत्युच्यते॥ अनंदाः अनानंदाः असुखा नाम ते लोकास्तेनांधेनादर्शनलक्षणेन तमसावृताः व्या
प्तास्तस्य अज्ञानतमसो गोचरास्तांस्ते प्रेत्य मृत्वा अभिगच्छंति अभियांति के ये ऽविद्वांसः किं सामान्येनाविद्वत्तामात्रेण नेत्युच्यते अबुधः नुभावत्वप्र
सिद्धिः॥ ताभ्यां पुण्यकृत्तैजसाभ्यामित्यर्थः॥ अतः शब्दपरामृष्टं स्पष्टयति॥ प्रख्यातेति॥ पुण्यकृत्तैजसयोरिति शेषः॥ ५९॥ ९॥ प्रस्तुतज्ञानमार्गस्तुत्यर्थं मा
र्गांतरं निंदति॥ अंधमित्यादिना॥ उ विद्यायामिति प्रतीकमादाय व्याकरोति॥ अविद्येति॥ कथं पुनस्त्रय्यामभिरतानामधःपतनमित्याशंक्याह॥ विधीति॥ १०॥

अबुध इत्यस्य निष्पत्तिं सूचयन्निवक्षितमर्थमाह॥बुधेरिति॥११॥उक्तात्मज्ञानस्तुत्यर्थमेव तन्निष्ठस्य कार्यक्लेशाभावं संदर्शयति॥आत्मानमित्यादिना॥ विज्ञानात्मनो वैलक्षण्यार्थं विशिनष्टि॥सर्वेति॥ताटस्थ्यं व्यावर्तयति॥हृत्स्थमिति॥बुद्धिसंबंधप्राप्तं संसारित्वं वारयति॥अशनायादीति॥प्र मपूर्वकं ज्ञानप्रकारं प्रकटयति॥कथमित्यादिना॥सर्वभूतसंबंधप्रयुक्तं दोषं वारयितुं विशिनष्टि॥नित्येति॥इति विजानीयादिति संबंधः॥प्र

बुधेरवगमार्थस्य धातोः क्विप्प्रत्ययांतस्य रूपमात्मावगमवर्जिता इत्यर्थः॥जनाः प्राकृता एव जननधर्मिणो वेत्येतत्॥६०॥११॥आत्मा नं स्वं परं सर्वप्राणिमनीषितज्ञं हृत्स्थमशनायादिधर्मातीतं चेद्यदि विजानीयात्सहस्रेषु कश्चिच्चेदित्यात्मविद्याया दुर्लभत्वं दर्शयति कथमयं परआत्मा सर्वप्राणिप्रत्ययसाक्षी यो नेति नेत्याद्युक्तो यस्मान्नान्योऽस्ति द्रष्टा श्रोता मंता विज्ञाता समः सर्वभूतस्थो नित्यशुद्धबुद्ध

आत्मानं चेद्विजानीयादयमस्मीति पूरुषः किमिच्छन्कस्य कामाय शरीरमनुसंज्वरेत्॥६१॥

मुक्तस्वभावोऽस्मि भवामीति पूरुषः पुरुषः स किमिच्छंस्तत्स्वरूपव्यतिरिक्तमन्यद्वस्तु फलभूतं किमिच्छन्कस्य वान्यस्यात्मनो व्यतिरिक्तस्य कामाय प्रयोजनाय न हि तस्यात्मन एष्टव्यं फलं न चाप्यात्मनोऽन्योऽस्ति यस्य कामायेच्छति सर्वस्यात्मभूतत्वादतः किमिच्छन्कस्य वा कामाय श रीरमनुसंज्वरेदनुतप्येत शरीरोपाधिकृतदुःखमनु दुःखी स्याच्छरीरतापमनुतप्येत अनात्मदर्शिनो हि तद्व्यतिरिक्तवस्त्वंतरेप्सोर्ममेदं स्यात्पुत्र स्येदं भार्याया इदमित्येवमीहमानः पुनःपुनर्जननमरणप्रबंधारूढः शरीररोगमनुरुज्यते॥ योजनाय शरीरमनुसंज्वरेदिति संबंधः॥किमिच्छ न्नित्याक्षेपं समर्थयते॥नहीति॥कस्य वा कामायेत्याक्षेपमुपपादयति॥नचेति॥आक्षेपद्वयं निगमयति॥अत इति॥तदेव स्पष्टयति॥शरीरेति॥विदुषस्ताप

वस्त्वंतरे श्रोत्राद्यसंभव इति शेषः॥ सचेत्येतदध्याहृत्य ममेदमित्यादि योज्यमित्येतदाह किमिछन्नित्याद्या श्रुतिरिति शेषः॥ ६१॥ १२॥ नकेवलमात्म
विद्यारसिकस्य कायक्लेशराहित्यं किंतु कृतकृत्यता चास्तीत्याह॥ किंचेति॥ संदेहे पृथिव्यादिभिर्भूतैरुपचिते शरीरे संदेहत्वं साधयति॥ अनेकेति॥
विषमत्वं विशदयति॥ अनेकशतेति॥ ननाममात्रमित्यत्र पुरस्तान्नञस्तस्मादिति पठितव्यं॥ यस्मादित्युपक्रमाद्धि

सर्वात्मदर्शिनस्तु तदसंभव इत्येतदाह॥ १२॥ किंच॥ यस्य ब्राह्मणस्यानुवित्तोनुलब्धः प्रतिबुद्धः साक्षात्कृतः कथमहमस्मि परंब्रह्मेत्ये
वं प्रत्यगात्मत्वेनावगतः आत्मास्मिन्संदेह्ये संदेहे अनेकानर्थसंकरोपचये गहने विषमे॥ अनेकशतसहस्रविवेकविज्ञानप्रतिपक्षे
विषमे प्रविष्टः स यस्य ब्राह्मणस्यानुवित्तः प्रतिबोधेनेत्यर्थः॥ स विश्वकृद्धि स्वस्य कर्ता कथं विश्वकृत्त्वं तस्य किं विश्वकृदिति नामेत्याशंक्या

यस्यानुवित्तः प्रतिबुद्ध आत्मास्मिन्संदेह्ये गहने प्रविष्टः॥ स विश्वकृत्स हि सर्वस्य कर्ता तस्य लोकः स उ लोक एव॥ ६२॥

ह॥ स हि यस्मात्सर्वस्य कर्ता न नाममात्रं न केवलं विश्वकृत्स परप्रयुक्तः सन्किं तर्हि तस्य लोकः सर्वः किमन्यो लोकोन्योसावित्युच्यते स उ लो
क एव लोकशब्देनात्मोच्यते तस्य सर्वस्यात्मेत्यर्थः॥ य एष ब्राह्मणेन प्रत्यगात्मा प्रतिबुद्धस्तयानुवित्त आत्मानर्थसंकटे गहने प्रविष्टः स
न संसारी किंतु परमेश्वर एव यस्माद्विश्वस्य कर्ता सर्वस्यात्मा तस्य च सर्व आत्मा एक एव परः कोऽद्वितीयः पर एवास्मीति मंतव्य इति श्लोका
र्थः॥ ६२॥ १३॥ विश्वकृत्त्वमिति शेषः परशब्दो विद्याविषयः विश्वकृत्कृतकृत्य इत्येतत्॥ लोकलोकिविभागेन भेदं शंकित्वा दूषयति॥ किमि
त्यादिना॥ य एषेत्यादिमंत्रस्य तात्पर्यार्थं संगृह्णाति॥ य एष इति॥ अस्त्वेवं किं तावतेत्याशंक्याह॥ एक एवेति॥ यो हि परः सर्वप्रकारभेदराहित्यात्सू

३= अनुसंधातव्यः

९५२

ब्रह्मविदो विद्ययाकृतकृत्यत्वेश्रुतिसंप्रतिपत्तिरेवकेवलंनभवति किंतु स्वानुभवसंप्रतिपत्तिरस्तीत्याह॥ किंचेति॥ अथेत्यस्यकथंचिदेवेतिव्या
ख्यानं॥ तदित्यस्यब्रह्मतत्त्वमित्युक्तमर्थंस्फुटयति॥ तदेतदिति॥ ब्रह्मज्ञानेकृतार्थत्वंश्रुत्यनुभवाभ्यामुक्त्वातदभावेदोषमाह॥ यदेतदिति॥ तर्हिम
हतीविनष्टिरितिसंबंधः॥ बहुत्वंनविवक्षितं॥ ज्ञानाभावोत्रविवक्षितइत्यभिप्रेत्यवेदिरित्यस्यार्थमाह॥ वेदनमित्यादिना॥ नचेद्ब्रह्मविदितवंतोव

किंच इहैवानेकानर्थसंकुलेसंतोभवंतोऽज्ञानदीर्घनिद्रारहिताःसंतःकथंचिदिवब्रह्मतत्त्वमात्मत्वेनाथविद्मःविजानीमःतदेतद्ब्रह्मप्रकृ
तमहोवयंकृतार्था इत्यभिप्रायोयदेतद्ब्रह्मविजानीमस्तन्नचेद्विदितवंतोवयंवेदनंवेदोवेदोस्यास्तीतिवेदीवेद्येववेदिर्नवेदिरवेदिर्नचेद्वेदि
स्ततोहमवेदिःस्यांयद्यवेदिःस्यांकोदोषःस्यान्महतीअनंतपरिमाणाजन्ममरणादिलक्षणाविनष्टिःविनशनमहोवयमस्मान्महतोविनशना

इहैवसंतोथविद्मस्तद्वयंनचेदवेदिर्महतीविनष्टिः॥ येतद्विदुरमृतास्तेभवंत्यथेतरेदुःखमेवापयंति ॥६३॥

न्निर्मुक्तायत्तदद्वयंविदितवंतइत्यर्थः॥ यथाचवयंब्रह्मविदित्वास्माद्विनशनाद्विमुक्ताएवंयेतद्विदुरमृतास्तेभवंतियेपुनर्नैवंब्रह्मविदुस्त
इतरेब्रह्मविद्भ्योऽन्येऽब्रह्मविदइत्यर्थःदुःखमेवजन्ममरणादिलक्षणमेवापियंतिप्रतिपद्यंतेनकदाचिदप्यविदुषांततोविनिवृत्तिरित्यर्थःदु
खमेवहितेआत्मत्वेनोपगच्छंति॥६३॥१४॥ यदापुनरेतमात्मानंकथंचित्परमकारुणिकंकंचिदाचार्यंप्राप्यततोलब्धप्रसादः यंततोहमवेदिः

स्यामितियोजना॥ विद्याभावेदोषमुक्त्वाविद्वदनुभवसिद्धमर्थंनिगमयति॥ अहोवयमिति॥ इहैवेत्यादिनापूर्वार्धेनोक्तमेवार्थमुत्तरार्धेनप्रपंचयति॥ यथाचे
त्यादिना॥ दुःखाद्विदुषांविनिर्मोकाभावेहेतुमाह॥ दुःखमेवेति॥६३॥१४॥ किंच॥ विदुषोविहिताकरणादिप्रयुक्तंभयंनास्तीतिविद्यांस्तोतुमेवमंत्रांतरमाह

उक्तमर्थं व्यतिरेकमुखेन विशदयति॥ सर्वो हीति॥ जुगुप्सायाः निंदात्वेन प्रसिद्धत्वात् कथमवयवार्थमादाय व्याख्यायते रूढिर्योगमपहरतीति न्याया
दित्याशंक्याह॥ यदेति॥ तदेवोपपादयति॥ सर्वमिति॥ १४॥ अथेश्वरस्यापि कालान्यत्वे सति वस्तुत्वाद् घटवत्कालावच्छिन्नत्वात्कालत्रयं प्रतियुक्तमी
श्वरत्वमत आह॥ किंचेति॥ यस्मादीशानादर्वाक्संवत्सरो वर्ततेतमुपासते देवा इति संबंधः॥ ननु कथं संवत्सरोऽर्वागित्युच्यते कालस्य कालांतराभावेन पू

सन्ननुपश्यात्पश्यति साक्षात्करोति स्वमात्मानं देवं द्योतनवंतं दातारं वा सर्वप्राणिकर्मफलानां यथाकर्मानुरूपमंजसा साक्षादीशानं
स्वामिनं भूतभव्यस्य कालत्रयस्यैतन्नततस्तस्मादीशानाद्देवादात्मानं विशेषेण जुगुप्सते गोपायितुमिच्छति सर्वो हि लोक ईश्वराद्गुप्ति
मिच्छति भेददर्शी अयं त्वेकत्वदर्शी न बिभेति कुतश्चनातो न तदा विजुगुप्सते यदेशानं देवमंजसात्मत्वेन पश्यति न तदा निंदते वा किंचित्सर्वं

यदैतमनुपश्यत्यात्मानं देवमंजसा॥ ईशानं भूतभव्यस्य न ततो विजुगुप्सते॥ १४॥ यस्मादर्वाक्संवत्सरोऽहोभिः परिवर्तते॥ त
द्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतं॥ १५॥ १६॥ मात्मानं हि पश्यति स एवं पश्यन्कमसौ निंद्यात्॥ १५॥ किंच॥ यस्मादीशानादर्वा
ग्यस्मादन्यविषय एवेत्यर्थः संवत्सरः कालात्मा सर्वस्य जनिमतः परिच्छेत्ता॥ यमपरिच्छिंदन्नर्वागेव वर्ततेऽहोभिः स्वावयवैरहो
रात्रैरित्यर्थस्तज्ज्योतिषां ज्योतिरादित्यादिज्योतिषामप्यवभासकत्वादायुरित्युपासते देवाः अमृतं ज्योतिरतोऽन्यन्म्रियते न हि ज्योतिः
॥ सर्वस्य ह्येतज्ज्योतिरायुरायुर्गुणेन यस्माद्देवास्तज्ज्योतिरुपासते तस्मादायुष्मंतस्ते तस्मादायुःकामेनायुर्गुणेनोपास्यममृतं ब्रह्मेत्यर्थः

र्वकालसंबंधाभावादत आह॥ यस्मादिति॥ अन्वयस्तु पूर्ववत्॥ आत्मज्योतिषो गुणमायुष्ट्वलक्षणं स्पष्टयन्नुपासकस्य फलमाह॥ सर्वस्येति॥ यथोक्तोपास

३५३

ज्योतिषांज्योतिरमृतमित्युक्तंतस्यामृतत्वंसर्वाधिष्ठानत्वेनसाधयतिकिंचेति॥ एवकारार्थमाह॥ नचेति॥ यद्यात्मानंब्रह्मजानासितर्हिकिंतेनतद्विद्याफल
मितिप्रश्नपूर्वकमाह॥ किंतर्हीति॥ कथंतर्हितेमर्त्यत्वप्रतीतिस्तत्राह॥ अज्ञानमात्रेणेति॥ १७॥ प्रकृताःपंचजनाःपंचज्योतिषासहप्राणादयोवासुरि

किंच॥ यस्मिन्यत्रब्रह्मणिपंचजनागंधर्वादयःपंचैवसंख्यातागंधर्वाःपितरोदेवाअसुरारक्षांसिनिषादपंचमावावर्णाआकाशश्चाव्याकृता
ख्योयस्मिन्सूत्रमोतंप्रोतंचयस्मिन्प्रतिष्ठितएतस्मिन्नुखल्वक्षरेगार्ग्याकाशइत्युक्तंतमेवात्मानममृतंब्रह्ममन्येहंनचाहमात्मानंततोन्यत्वे
नजानेकिंतर्ह्यमृतोहंब्रह्मविद्वान्सन्नज्ञानमात्रेणतुमर्त्योहमासंतदपगमाद्विद्वानहममृतएव॥ १७॥ किंच॥ तेनहिचैतन्यात्मज्योतिषा

यस्मिन्पंचपंचजनाआकाशश्चप्रतिष्ठितः॥ तमेवमन्यआत्मानंविद्वान्ब्रह्मामृतोमृतं॥ ६६॥ प्राणस्यप्राणमुतचक्षुषश्चक्षु
रुतश्रोत्रस्यश्रोत्रंमनसोयेमनोविदुः॥ तेनिचिक्युर्ब्रह्मपुराणमग्र्यं॥ ६७॥

वभास्यमानःप्राणआत्मभूतेनप्राणितितेनप्राणस्या
पिप्राणःसःतंप्राणस्यप्राणंतथाचक्षुषोपिचक्षुरुतश्रोत्रस्यापिश्रोत्रंब्रह्मशक्त्यधिष्ठितानांहिचक्षुरादीनांदर्शनादिसामर्थ्यंस्वतःकाष्ठलोष्ठ
समानिहितानिचैतन्यात्मज्योतिःशून्यानिमनसोपिमनइतियेविदुश्चक्षुरादिव्यापारानुमितास्तित्वंप्रत्यगात्मानंनविषयभूतंयेविदुस्तेकिं
निचिक्युर्निश्चयेनज्ञातवंतोब्रह्मपुराणंचिरंतनमग्र्यमग्रेभवंतद्यदात्मविदोविदुरितिह्याथर्वणे॥ ६७॥ १८॥

स्वभिप्रेत्याह॥ किंचेति॥ क
थंचक्षुरादिषुचक्षुरादित्वंब्रह्मणःसिध्यतितत्राह॥ ब्रह्मशक्तीति॥ विमतानिकेनचिदधिष्ठितानिप्रवर्त्तंतेकरणत्वाद्वास्यादिवदितिचक्षुरादि
व्यापारेणानुमितास्तित्वंप्रत्यगात्मानंयेविदुरितियोजना॥ विदिक्रियाविषयत्वंव्यावर्तयति॥ नेति॥ प्रत्यगात्मविदांकथंब्रह्मवित्वमित्याशंक्याह॥

ज्ञानं प्रभवालोकावादाश्वाज्ञानसंभवाः॥ विदितात्मसतत्वस्य नेह नानास्ति किंचनेत्यादिकास्मृतिः ॥ ५

मनसो ब्रह्मदर्शनसाधनत्वे कथं ब्रह्मणो वाङ्मनसातीतत्वश्रुतिरित्याशंक्याह॥ परमार्थेति॥ केवलं मनो ब्रह्माविषयीकुर्वदपि श्रवणादिसंस्कृतं तदाकारं जायते तेन द्रष्टव्यं तदुच्यते तत एव वृत्तिव्याप्यं ब्रह्मेत्युपगच्छंतीति भावः॥ अनुशब्दार्थमाह॥ आचार्येति॥ द्रष्टृद्रष्टव्यादिभावेन भेदमाशंक्याह॥ तत्रवेति॥ एवकारार्थमाह॥ नचेति॥ कथमात्मनि वस्तुतो भेदरहितेपि भेदो भातीत्याशंक्याह॥ असतीति॥ नेहेत्यादेः संपिंडितमर्थं कथयति॥ अवि

तद्ब्रह्मदर्शने साधनमुच्यते मनसैव परमार्थज्ञानसंस्कृतेनाचार्योपदेशपूर्वकं चानुद्रष्टव्यं तत्र च दर्शनविषये ब्रह्मणि न चेह नानास्ति किंच
न किंचिदपि॥ असति नानात्वे नानात्वमध्यारोपयत्यविद्यया स मृत्योर्मरणान्मरणमाप्नोति को सौ य इह नानेव पश्यति॥ अविद्याध्यारोपणव्य

मनसैवानुद्रष्टव्यं नेह नानास्ति किंचन॥ मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति॥ १९॥ एकधैवानुद्रष्टव्यमेतदप्रमयं ध्रुवं॥

तिरेकेण नास्ति परमार्थतो द्वितीयमित्यर्थः॥ १९॥ यस्मादेवं तस्मादेकधैवैकेनैव प्रकारेण विज्ञानघनैकरसप्रकारेणाकाशवन्निरंतरेणानुद्रष्टव्यं यस्मादेतद्ब्रह्माप्रमयमप्रमेयं सर्वैकत्वादन्येन ह्यन्यत्प्रमीयते इदं त्वेकमेवातोऽप्रमेयं ध्रुवं नित्यं कूटस्थमविचालीत्यर्थः॥ ननु विरुद्धमिदमुच्यते अप्रमेयं ज्ञायत इति च ज्ञायत इति प्रमाणेन मीयत इत्यर्थः अप्रमेयमिति च तत्प्रतिषेधः॥ नैष दोषः अन्यवस्तुवदनागमप्रमाण
प्रमेयत्वप्रतिषेधार्थत्वा

द्येति॥ १९॥ द्वैताभावे कथमनुद्रष्टव्यमित्याशंक्याह॥ यस्मादिति॥ तमेवैकं प्रकारं प्रकटयति॥ विज्ञानेति॥ परिच्छिन्नत्वं व्यवच्छिनत्ति॥ आकाशवदिति॥ एकरसत्वं हेतूकृत्याप्रमेयत्वं प्रतिजानीते॥ यस्मादिति॥ एतद्ब्रह्म यस्मादेकरसं तस्मादप्रमेयमिति योजना॥ हेत्वर्थं स्फुटयति॥ सर्वैकत्वादिति॥ तथापि कथमप्रमेयत्वं तदाह॥ अन्येनेति॥ मिथो विरोधमाशंकते॥ नन्विति॥ विरोधमेव स्फोरयति॥ ज्ञायत इतीति॥

संगृहीतंसमाधानंविशदयति॥यथेत्यादिना॥तस्यमानांतरैर्विषयीकर्त्तुमशक्यत्वेहेतुमाह॥सर्वस्येति॥इतिसर्वद्वैतोपशांतिश्रुतेरितिशेषः॥आगमोपितर्हिकथमात्मानंआवेदयेदित्याशंक्याह॥प्रमात्रिति॥आत्मनःस्वर्गादिवद्विषयत्वेनागमप्रतिपाद्यत्वाभावेहेतुमाह॥प्रतिपादयित्रिति॥तथापिकिमितिविषयत्वेनाप्रतिपाद्यत्वंतत्राह॥प्रतिपादयितुरितितदितिप्रतिपाद्यत्वमुक्तं॥कथंतर्हितस्मिन्नागमिकंज्ञानंतत्राह॥ज्ञानंचेति॥पर



द्यथान्यानिवस्तून्यागमनिरपेक्षैः प्रमाणैर्विषयीक्रियंतेनतथैतदात्मतत्वंप्रमाणांतरेणविषयीकर्त्तुंशक्यतेसर्वस्यात्मत्वेकेनकंपश्येद्विजानीयादितिप्रमातृप्रमाणादिव्यापारप्रतिषेधेनैवागमोपिविज्ञापयतिनत्वभिधानाभिधेयलक्षणवाक्यधर्मांगीकरणेन॥तस्मान्नागमेनापिस्वर्गमेर्वादिवत्तत्प्रतिपाद्यतेप्रतिपादयित्रात्मभूतंहितत्प्रतिपादयितुःप्रतिपादनस्यप्रतिपाद्यविषयत्वाद्धेदेहि

विरजःपरआकाशादजआत्मामहान्ध्रुवः॥

सतितद्भवतिज्ञानंचतस्मिन्परात्मभावनिवृत्तिरेवनतस्मिन्साक्षादात्मभावःकर्तव्योविद्यमानत्वादात्मभावस्य॥नित्योह्यात्मभावःसर्वस्यातद्विषयइवप्रत्यवभासतेतस्मादतद्विषयाभासनिवृत्तिव्यतिरेकेणनतस्मिन्नात्मभावोविधीयते स्मिन्देहादावात्मभावस्यारोपितस्यनिवृत्तिरेववाक्येनक्रियतेतथाचात्मनिपरिशिष्टेस्वाभाविकमेवस्फुरणंप्रतिबंधविगमात्प्रकटीभवतीतिभावः॥ननुब्रह्मण्यात्मभावःश्रुत्याकर्तव्योविवक्ष्यतेनतुदेहादावात्मत्वव्यावृत्तिरतआह॥नतस्मिन्निति॥ब्रह्मणश्चेदात्मभावःसदामन्यतेकथमन्यथाप्रथेत्याशंक्याह॥नित्योहीति॥सर्वस्यपूर्णस्यब्रह्मणइत्येतत्॥अतद्विषयोब्रह्मव्यतिरिक्तविषयइत्यर्थः॥ब्रह्मण्यात्मभावस्यसदाविद्यमानत्वेफलितमाह॥तस्मादिति॥अत

२=वैस्तु:संनिहितंकुंभंयथासूर्योविभासयेत्‌चित्तवृत्त्यायथाव्याप्तंचिदात्मैवप्रकाशयेत्‌स्वप्रकाशंचिदात्मानंवृत्तिरात्मांतरंविनाभासयेद्भास्करमिवचक्षुःसूर्यांतरंविनावृत्तिव्याप्तिमपेक्ष्यैववे
अन्यस्मिन्नात्मभावनिवृत्तिरेवागमेनक्रियतेचेत्तर्हिकथमात्मातेनगम्यतेइत्युच्यतेतत्राह॥अन्येति॥यद्यागमिकवृत्तिव्याप्यत्वेनात्मनोमेयत्वमिष्यतेकथं
तर्हितस्यामेयत्ववाचोयुक्तिरित्याशंक्याह॥स्वतश्चेति॥वृत्तिव्याप्यत्वेनमेयत्वंस्फुरणाव्याप्यत्वेनचामेयत्वमित्युपसंहरति॥इत्युभयमिति॥यदुक्तंध्रुवत्वंत
दुपस्कारपूर्वकमुपपादयति॥विरजइत्यादिना॥कथंजन्मनिषेधादितरेविकारानिषिध्यंतेतत्राह॥सर्वेषामिति॥यथोक्तेवस्तुनिदर्शनंनिगमयति॥तमीदृ

अन्यात्मभावनिवृत्तावात्मभावःस्वात्मनिस्वाभाविकोयःसकेवलोभवतीत्यात्माज्ञायतइत्युच्यतेस्वतश्चाप्रमेयःप्रमाणांतरेणनविषयीक्रि
यतइत्युभयमप्यविरुद्धमेवविरजोरजोनामधर्माधर्मादिमलंतद्रहितइत्येतत्‌॥परःपरोव्यतिरिक्तःसूक्ष्मोव्यापीवाआकाशादप्यव्याकृता
ख्यादजोनजायतेजन्मप्रतिषेधादुत्तरेपिभावविकाराःप्रतिषिद्धाःसर्वेषांजन्मादित्वादात्मामहान्परिमाणतोमहत्तरःसर्वस्मात्‌ध्रुवोऽविनाशी

तमेवधीरोविज्ञायप्रज्ञांकुर्वीतब्राह्मणः नानुध्यायाद्बहून्छब्दान्वाचोविग्लापनꣳहितदिति॥६१॥

॥तमीदृशमात्मानमेवधीरोधीमान्विज्ञायोपदेशतःशास्त्रतश्चप्रज्ञांशास्त्राचार्योपदिष्टविषयांजिज्ञासापरिसमाप्तिकरींकुर्वीतब्राह्मणःएवं
प्रज्ञाकरणसाधनानिसन्यासशमदमोपरमतितिक्षासमाधानानिकुर्यादित्यर्थः॥नानुध्यायान्नानुचिंतयेद्बहून्प्रभूतान्छब्दांस्तत्रबहुत्वप्रति
षेधात्केवलात्मैकत्वप्रतिपादकाःस्वल्पाःशब्दाअनुज्ञायंते॥ॐमित्येवंध्यायथआत्मानमन्यावाचोविमुंचथेतिचाथर्वणे॥वाचोविग्लापनंविशे
षेणग्लानिकरंश्रमकरंहियस्मात्तद्बहुशब्दाभिध्यानमिति॥२०॥ शमिति॥नित्यशुद्धत्वादिलक्षणमितियावत्‌॥उक्तरीत्याप्रज्ञाकरणेकानिसाधनानि
इतिचेत्तानिदर्शयति॥एवमिति॥काम्यनिषिद्धत्यागःसंन्यासउपरमोनित्यनैमित्तिकत्यागइतिभेदः॥बहूनितिविशेषणवशादायातमर्थंदर्शयति॥तत्रेति॥विं
द्यत्वंप्राङ्गरात्मनःचिदंतराऽनपेक्षत्वाद्वेद्यत्वंतथागमाः=२ मुद्धार्थमभ्यमानीयपंनवीथ्यान्नत्यमारभेत्‌॥नखड्गंविजयार्थीचेत्महरेत्स्थूणखादरे=३

नानुध्यायादित्यत्रहेतुमाह॥वाचइति॥तस्माद्बहून्छब्दान्नानुचिंतयेदिति पूर्वेणसंबंधः॥इतिशब्दःश्लोकव्याख्यानसमाप्त्यर्थः॥२०॥६१॥कंडिकांतरमव
तारयितुंवृत्तंकीर्तयति॥सहेतुकाविति॥उत्तरकंडिकातात्पर्यमाह॥एवमिति॥विरजःपरइत्यादिनोक्तक्रमेणावस्थितेब्रह्मणीतियावत्॥तदिदु
पयुक्तोक्तिः॥तदर्थाब्रह्मात्मनिसर्वस्यवेदस्यविनियोगप्रदर्शनार्थेतियावत्॥ननुविविदिषावाक्येनब्रह्मात्मनिसर्वस्यवेदस्यविनियोगोवक्ष्यतेत
याचतस्मात्तत्वाक्तनवाक्यंकिमर्थमित्याशंक्याह॥तत्रेति॥यथास्मिन्नध्यायेसफलमात्मज्ञानमुक्तंतथैवतदनूद्येतियोजना॥कथंयथोक्तेज्ञानेसर्वोवे

सहेतुकौबंधमोक्षावभिहितौमंत्रब्राह्मणाभ्यांश्लोकैश्चपुनर्मोक्षस्वरूपंविस्तरेणप्रतिपादितमेवमेतस्मिन्नात्मविषयेसर्वोवेदोयथोप
युक्तोभवतितत्तथावक्तव्यमितितदर्थेयंकंडिकाआरभ्यते॥तच्चयथास्मिन्प्रपाठकेभिहितंसप्रयोजनमनूद्यात्रैवोपयोगःकृत्स्नस्यवेद

सवाएषमहानजआत्मायोयंविज्ञानमयःप्राणेषु॥

स्यकाम्यराशिवर्जितस्येत्येवमर्थउक्तार्थानुवादःसवाएषइत्यादिःसइत्युक्तपरामर्शार्थःकोसावुक्तःपरामृश्यतेतंप्रतिनिर्दिशतियएषवि
ज्ञानमयइत्यतीतानंतरवाक्योक्तसंप्रत्ययोमाभूदितियएषःकृतम दोविनियोक्तुंशक्यतेस्वर्गकामादिवाक्यस्यस्वर्गादावेवपर्यवसानादित्याशं
क्यसंयोगपृथक्त्वन्यायमनादृत्यविशिनष्टि॥काम्यराशीति॥उक्तस्यसफलस्यात्मज्ञानस्यानुवादइतियावत्॥उक्तानांभूयस्त्वेविशेषंज्ञातुंपृच्छति॥कोसावि
ति॥विशेषणानर्थक्यमाशंक्यपरिहरति॥अतीतेति॥तद्धिविरजःपरइत्यादिनोक्तोयोमहत्त्वादिविशेषणःपरमात्मातत्रसशब्दात्प्रतीतिर्माभूदितिकृत्वा
तेनज्योतिर्ब्राह्मणस्थंजीवंपरामृश्यतमेववैशब्देनस्मारयित्वातस्यसन्निहितेनपरेणात्मनैक्यमेषशब्देननिर्दिशतीत्यर्थः॥विशेषणवाक्यस्थमेषशब्दंप्र

कथंजीवोविज्ञानमयःकथंवाप्राणेष्वितिसप्तमीप्रयुज्यतेतत्राह॥उक्तेति॥तदनुवादस्यसशब्दार्थसंदेहापोहंफलमाह॥संशयेति॥उक्तवाक्योल्लिंगन
मित्युक्तंविवृणोति॥उक्तंहीति॥योयंविज्ञानमयःप्राणेषुप्रागुक्तः॥सएषमहानजआत्मेतिजीवानुवादेनपरमात्मभावोविहितइतिवाक्यार्थमाह

एषइत्युच्यतेविज्ञानमयःप्राणेष्वित्युक्तवाक्योल्लिंगनंसंशयनिरस्यर्थं॥उक्तंहिपूर्वंजनकप्रश्नारंभेकतमआत्मेतियोयंविज्ञानमयःप्राणे
ष्वित्यादिएतदुक्तंभवतियोयंविज्ञानमयःप्राणेष्वित्यादिनावाक्येनप्रतिपादितःस्वयंज्योतिरात्मासएषकामकर्माविद्यानामनात्मधर्म
त्वप्रतिपादनद्वारेणमोक्षितःपरमात्मभावमापादितःपरएवायंनान्यइतिएषसाक्षान्महानजआत्मेत्युक्तोयोयंविज्ञानमयःप्राणेष्विति
यथाव्याख्यातार्थएवयएषोंतर्हृदयेहृदयपुंडरीकमध्येयएषआकाशोबुद्धिविज्ञानसंश्रयस्तस्मिन्नाकाशेबुद्धिविज्ञानसहितेशेते

यएषोंतर्हृदयआकाशस्तस्मिञ्छेते॥

तिष्ठतिअथवासंप्रसादकालेतद्धृदयेयएषआकाशःपरएवआत्मानिरुपाधिकोविज्ञानमयस्यस्वस्वभावस्तस्मिन्स्वस्वभावेपरमात्म
न्याकाशाख्येशेतेचतुर्थएतद्व्याख्यातंक्वैषतदाभूदित्यस्यप्रतिवचनत्वेनसचसर्वस्यब्रह्मेंद्रादेर्वशीसर्वोह्यस्यवशेवर्ततेउक्तं

॥एतदिति॥परमात्मभावापादानप्रकारमनुवदति॥साक्षादिति॥विशेषणवाक्यस्यव्याख्येयत्वप्राप्तावुक्तवाक्योल्लिंगनमित्यत्रोक्तंस्मारयति॥योय
मिति॥वाक्यांतरमवतार्यव्याचष्टे॥यएषइति॥कथंपुनराकाशशब्दस्यपरमात्मविषयत्वमुपेत्यद्वितीयंव्याख्यानंतस्यार्थांतरेरूढत्वादित्याशंक्याह॥चतुर्थ
इति॥इत्थमुक्तंज्ञानमनूद्यतत्फलमनुवदति॥सचेत्यादिना॥कथंपुनर्निरुपाधिकस्येश्वरस्यवशित्वंकथंचतदभावेतदात्मनोविदुषस्तदुपपद्यतेतत्राह॥उक्तं

विशेषणत्रयस्यहेतुहेतुमद्रूपत्वमेवविशदयति॥यस्मादित्यादिना॥तत्रप्रसिद्धिंप्रमाणयति॥योहीति॥नकेवलमुक्तमेवविद्याफलंकिंत्वन्यच्चास्तीत्याह॥
किंचेति॥एवंभूतत्वंज्ञातपरमात्माभिन्नत्वं॥परिशुद्धत्वमर्थमनुवदति॥हृदीति॥ब्रह्मीभूतस्यविदुषःस्वातंत्र्यादिवद्धर्माधर्मास्पर्शित्वमपिफलमित्यर्थः॥अधि



तस्यवाअक्षरस्यप्रशासनेइतिनकेवलंवशीसर्वस्येशानईशिताचब्रह्मेंद्रप्रभृतीनामीशितृत्वंचकदाचिज्जातिकृतंयथाराजकुमारस्यबल
वत्तरानपिभृत्यान्प्रतितद्वन्माभूदित्याहसर्वस्याधिपतिरधिष्ठायपालयितास्वतंत्रइत्यर्थःनराजपुत्रवदमात्यादिभृत्यतंत्रःत्रयमप्येतद्वशि
त्वादिहेतुहेतुमद्रूपंयस्मात्सर्वस्याधिपतिस्ततोसौसर्वस्येशानोयोहियमधिष्ठायपालयतिसतंप्रतीष्टएवेतिप्रसिद्धंयस्माच्चसर्वस्येशानस्त
स्मात्सर्वस्यवशीतिकिंचअन्यत्सएवंभूतोहृद्यंतर्ज्योतिःपुरुषोविज्ञानमयःनसाधुनाशास्त्रविहितेनकर्मणाभूयान्भवतिनवर्धतेपूर्वावस्था

सर्वस्यवशीसर्वस्येशानःसर्वस्याधिपतिःसनसाधुनाकर्मणाभूयान्नोएवासाधुनाकनीयानेषसर्वेश्वरएषभूताधिपतिरेषभू
तपालएषसेतुर्विधरणएषांलोकानामसंभेदाय॥

तःकेनचिद्धर्मेणनोएवशास्त्रप्रतिषिद्धेनासाधुनाकर्मणाकनीयानल्पतरोभव
तिपूर्वावस्थातोनहीयतइत्यर्थःसर्वोह्यधिष्ठानपालनादिकुर्वन्परानुग्रहपीडाकृतेनधर्माधर्माख्येनयुज्यतेऽस्यैवतुकथंतदभावइत्युच्यते
यस्मादेषसर्वेश्वरःसन्कर्मणोपीशितुंभवत्येवशीलमस्यतस्मान्नकर्मणासंबध्यतेकिंच॥एषभूताधिपतिःब्रह्मादिस्तंबपर्यंतानांभूतानाम
धिपतिरित्युक्तार्थंपदमेषभूतानांतेषामेवपालयितारक्षिता

ष्ठानादिकर्तृत्वाद्विदुषोपिलौकिकवद्धर्मादिसंबंधित्वंस्यादितिशंकते॥सर्वो
हीति॥परतंत्रत्वमुपाधिरितिपरिहरति॥उच्यतइति॥सर्वाधिपत्यराहित्यंचोपाधिरित्याह॥किंचेति॥सर्वपालकत्वराहित्यंचोपाधिरित्याह॥एष

सर्वानाधारत्वंचोपाधिरित्याह॥एषइति॥कथंविधारयितृत्वमित्याशंक्याह॥तदाहेति॥तदेवसाधयति॥परमेश्वरेणेति॥सर्वस्यवशीत्यादिनोक्तमुपसंहरति॥एवंविदिति॥सफलज्ञानमनूद्यविविदिषावाक्यमवतारयति॥किंज्योतिरिति॥एवंफलायांसर्वस्यवशीत्यादिनोक्तफलोपेतायामितियावत्॥तादर्थ्येनपरंपरयाज्ञानोत्पत्तिशेषत्वेनेत्यर्थः॥विनियोजकंवाक्यमाकांक्षापूर्वकमादायव्याचष्टे॥तत्कथमित्यादिना॥एवंभूतंश्लोके

एषसेतुःकिंविशिष्टइत्याहविधरणोवर्णाश्रमादिव्यवस्थायाःविधारयितातदाहएषांभूरादीनांब्रह्मलोकांतानांलोकानामसंभेदाय
संभिन्नमर्यादायै॥परमेश्वरेणसेतुवद्विधार्यमाणालोकाःसंभिन्नमर्यादाःस्युरतोलोकानामसंभेदायसेतुभूतोयंपरमेश्वरोयःस्व
यंज्योतिरात्मैवंवित्सर्वस्यवशीत्यादिब्रह्मविद्यायाःफलमेवंनिर्दिष्टं॥किंज्योतिरयंपुरुषइत्येवमादिषष्ठप्रपाठकविहितायामेतस्यां

तमेतंवेदानुवचनेनब्राह्मणाविविदिषंति॥

ब्रह्मविद्यायामेवंफलायांकाम्यैकदेशवर्जितंकृत्स्नंकर्मकांडंतादर्थ्येनविनियुज्यतेतत्कथमित्युच्यतेतमेतमेवंभूतमौपनिषदंपु
रुषंवेदानुवचनेनमंत्रब्राह्मणाध्ययनेननित्यस्वाध्यायलक्षणेनविविदिषंतिवेदितुमिच्छंतिकेब्राह्मणाब्राह्मणग्रहणमुपलक्षणार्थम
विशिष्टोह्यधिकारस्त्रयाणांवर्णानामथवाकर्मकांडेनमंत्रब्राह्मणेनवेदानुवचनेनविविदिषंतिकथंविविदिषंतीत्युच्यतेयज्ञेनेत्यादिये
पुनर्मंत्रब्राह्मणलक्षणेनवेदानुवचनेनप्रकाश्यमानंविविदिषंतीतिव्याचक्षतेतेषामारण्यकमात्रमेववेदानुवचनंस्या क्रियाविशेषणमित्यर्थः॥ब्राह्मण
शब्दस्यक्षत्रियाद्युपलक्षणत्वेहेतुमाह॥अविशिष्टोहीति॥संभावितंपक्षांतरमाह॥अथवेति॥तेनविविदिषाप्रकारंप्रश्नपूर्वकंविवृणोति॥कथमि

९५७

तत्रहेतुमाह॥नहीति॥भवतूपनिषन्मात्रग्रहणमित्याशंक्यवेदोवानूच्यतेगुरूच्चारणानंतरंपठ्यतइतिव्युत्पत्त्यावेदानुवचनशब्देनसर्ववेदग्र
होसंभवतितदेकदेशत्यागोनयुक्तइत्याह॥वेदेति॥दोषसाम्यमाशंकते॥नन्विति॥सिद्धांतेप्युपनिषद्वर्जयित्वावेदानुवचनशब्देनकर्मकांडग्र
हीतमितिकृत्वातस्यवेदैकदेशविशेषविषयत्वंस्यात्ततश्चपक्षोभयोःसमोदोषः परिहारोपिवासमः॥नैकःपर्यनुयोक्तव्यस्तादृगर्थविचारणेयश्चो
भयोरित्यादिन्यायविरोधइत्यर्थः॥नित्यस्वाध्यायोवेदानुवचनमितिपक्षमादायपरिहरति॥नेत्यादिना॥वेदैकदेशपरिग्रहपरित्यागात्मकविरो

न्नहिकर्मकांडेनपरआत्माप्रकाश्यतेतंत्वौपनिषदमितिविशेषश्रुतेः॥वेदानुवचनेनेतिचाविशेषितत्वात्समस्तग्राहीदंवचनंन
चतदेकदेशोत्सर्गोयुक्तः ननुत्वत्पक्षेप्युपनिषत्त्यक्तेत्येकदेशत्वंस्यात्॥नाध्ययनाख्यानेऽविरोधात्त्वत्पक्षेनैषदोषोभवतियदावेदा
नुवचनशब्देननित्यस्वाध्यायोविधीयतेतदोपनिषदपिगृहीतैवेतिवेदानुवचनशब्दार्थैकदेशोनपरित्यक्तोभवति॥यज्ञादिसहपा
ठाच्चयज्ञादीनिकर्माण्येवानुक्रमिष्यन्वेदानुवचनशब्दंप्रयुंक्तेतस्मात्कर्मैववेदानुवचनशब्देनोच्यतइतिगम्यतेकर्महिनित्यस्वाध्या
यःकथंपुनर्नित्यस्वाध्यायादिभिःकर्मभिरात्मानंविविदिषंतिनैवहितान्यात्मानंप्रकाशयंतियथोपनिषदःनैषदोषःकर्मणांविशुद्धि
हेतुत्वात्कर्मभिःसंस्कृताहिविशुद्धात्मानःशक्नुवंत्यात्मानमुपनिषत्प्रकाशितमप्रतिबंधेनवेदितुं॥

धाभावंसाधयति॥यदेति॥तर्हि
व्याख्यानांतरमुपेक्षितमित्याशंक्यतदपिवाक्यशेषवशादपेक्षितमेवेत्याह॥यज्ञादीति॥संग्रहवाक्यंविवृणोति॥यज्ञादीनिकर्माणीति॥त
र्हिप्रथमव्याख्यानेकथंवाक्यशेषोपपत्तिरित्याशंक्याह॥कर्महीति॥वेदानुवचनादीनामात्मविविदिषासाधनत्वमाक्षिपति॥कथमिति॥उप
निषद्भिरिवात्मातैरपिज्ञाप्यतामित्याशंक्याह॥नैवेति॥कर्मणामप्रमाणत्वेपिपरंपरयाज्ञानहेतुत्वाद्विविदिषाश्रुतिरविरुद्धेतिसमाधत्ते॥नैषदोषइ

तत्रश्रुत्यंतरंप्रमाणयति॥तथाहीति॥ततोनित्याद्यनुष्ठानाद्विशुद्धधीरात्मानंसदाचिंतयन्नुपनिषद्भिस्तंपश्यतीत्यर्थः॥आदिशब्देनकषायपक्तिरित्या
दिस्मृतिसंग्रहः॥नित्यकर्मणांसंस्कारार्थत्वेप्रमाणंपृच्छति॥कथमिति॥यद्यपिश्रुतिस्मृतिभ्यांकर्मभिःसंस्कृतस्योपनिषद्भिरात्माज्ञातुंशक्यतेतथापितेषां
संस्कारार्थत्वेकिंप्रमाणमितिप्रश्नेश्रुतिस्मृतीप्रमाणयति॥सहवाइत्यादिना॥किंपुनःस्मृतिशास्त्रंतदाह॥अष्टाचत्वारिंशदिति॥अष्टावनायासाद्योगुणा

तथाह्याथर्वणेविशुद्धसत्त्वस्ततस्तुतंपश्यतिनिष्कलंध्यायमानइतिस्मृतिश्चज्ञानमुत्पद्यतेपुंसांक्षयात्पापस्यकर्मणइत्यादिःकथंपुनर्नित्यानि
कर्माणिसंस्कारार्थानीत्यवगम्यतेसहवाआत्मयाजीयोवेदइदंमेऽनेनांगंसंस्क्रियतइदंमेऽनेनांगमुपाधीयतइत्यादिश्रुतेःसर्वेषुचस्मृतिशास्त्रेषु
कर्माणिसंस्कारार्थान्येवाचक्षतेअष्टाचत्वारिंशत्संस्कारादित्यादिषुगीतासुचयज्ञोदानंतपश्चैवपावनानिमनीषिणांसर्वेप्येतेयज्ञविदोयज्ञक्ष

यज्ञेनदानेनतपसानाशकेने

पितकल्मषाइतियज्ञेनेतिद्रव्ययज्ञाज्ञानयज्ञाश्चसंस्कारार्थाःसंस्कृतस्यचविशुद्धसत्त्वस्यज्ञानोत्पत्तिरप्रतिबंधेनभविष्यत्यतोयज्ञेनविवि
दिषंतिदानेनदानमपिपापक्षयहेतुत्वाद्धर्मवृद्धिहेतुत्वाच्चतपसातपइत्यविशेषेणकृच्छ्रचांद्रायणादिप्राप्तौविशेषणमनाशकेनेतिकामान
शनमनाशकंनतुभोजननिवृत्तिर्भोजननिवृत्तौम्रियतएवनात्मवेदनं ॥ श्चत्वारिंशद्गर्भाधानाद्यःसंस्कारादितिविभागः॥बह्वृचवचनोपात्तंस्मृत्यंतरमा
ह॥गीतासुचेतिपदांतरमादायव्याचष्टे॥यज्ञेनेतीति॥तेषांसंस्कारार्थत्वेपिकथंज्ञानसाधनत्वमित्याशंक्याह॥संस्कृतस्येति॥दानेनविविदिषंतीतिपूर्वेण
संबंधः॥कथंपुनःस्वतंत्रंदानंविविदिषाकारणमतआह॥दानमपीति॥विविदिषाहेतुरितिशेषः॥तपसेत्यत्रापिपूर्ववदन्वयः॥कामानशनंरागद्वेषरहितैरिंद्रि

यैर्विषयसेवनंयदृच्छालाभसंतुष्टत्वमितियावत्॥यथा
श्रुतार्थत्वेकाहानिरित्याशंक्याह॥नत्विति॥

भवत्पातानां वेदानुवचनादीनामिष्यमाणे ज्ञाने विनियोगस्तथापि कथं सर्वं नित्यं कर्म तत्र विनियुक्तमित्याशंक्याह॥ वेदानुवचनेति॥ उपलक्षणमाह॥ एवमिति॥ प्रनाड्या कर्मणो मुक्तिहेतुत्वे कांडद्वयस्यैकवाक्यत्वमपि सिध्यतीत्याह॥ एवं कर्मेति॥ वाक्यांतरमवतार्य व्याकरोति॥ एवमिति॥ तस्यैवार्थमाह॥ यथोक्तेनेति॥ यज्ञाद्यनुष्ठानाद्धि शुद्धिद्वारा विविदिषोत्पत्तौ गुरुपादोपसर्पणं श्रवणादि चेत्यनेन क्रमेणेत्यर्थः॥ यथाप्रकाशितं मोक्ष

वेदानुवचनयज्ञदानतपःशब्देन सर्वमेव नित्यं कर्मोपलक्ष्यते॥ एवं काम्यवर्जितं नित्यं कर्मजातं सर्वमात्मज्ञानोत्पत्तिद्वारेण मोक्षसाधनत्वं प्रतिपद्यत एवं कर्मकांडेनास्यैकवाक्यतावगतिः एवं यथोक्तेन न्यायेनैतमेवात्मानं विदित्वा यथाप्रकाशितं मुनिर्भवति मननान्मुनिर्योगी भवतीत्यर्थः एतमेव विदित्वा मुनिर्भवति नान्यं नन्वन्यवेदनेपि मुनित्वं स्यात्कथमवधार्यत एतमेवेति॥ बाढं॥ अन्यवेदनेपि मुनि

तमेव विदित्वा मुनिर्भव

र्भवेत्किंत्वन्यवेदनेन मुनिरेव स्यात्किं तर्हि कर्म्यपि भवेत्स एतं त्वौपनिषदं पुरुषं विदित्वा मुनिरेव स्यान्न तु कर्मी अतोऽसाधारणं मुनित्वं विवक्षितमस्येत्यवधारयत्येतमेवेति॥ एतस्मिन्हि विदिते केन कं पश्येदित्येवं क्रियाऽसंभवान्मननमेव स्यात्॥ किंच॥ एतमेवात्मानं स्वं लोकमिच्छंतः प्रार्थयंतः प्रव्राजिनः प्रव्रजनशीलाः॥ प्रव्रजंति प्रकर्षेण व्रजंति सर्वाणि कर्माणि संन्यसंतीत्यर्थः॥ प्रकरणे मंत्रब्राह्मणाभ्यामुक्तलक्षणमित्यर्थः॥ योगिशब्दो जीवन्मुक्तविषयः॥ एवकारं व्याकरोति॥ एतमेवेति॥ अवधारणमाक्षिप्य समाधत्ते॥ नन्वित्यादिना॥ एवकारस्तर्हि त्यज्यतामित्याशंक्याह॥ किंत्विति॥ आत्मवेदनेपि कर्मित्वं स्यादिति चेन्नेत्याह॥ एतं त्विति॥ कथमात्मविदोपि मुनित्वमसाधारणं तदाह॥ एतस्मिन्निति॥ इतश्चा

आत्मलोकमिच्छंतो मुमुक्षूणामपि कर्मत्यागश्रवणादात्मविदां न कर्मेतेति किं वक्तव्यमित्यर्थः॥ताच्छील्यं वैराग्यातिशयशालित्वं॥अवधारणसाम
र्थ्यसिद्धमर्थमाह॥एतमेवेति॥पारिव्राज्ये लोकत्रयार्थिनामनधिकारे दृष्टांतमाह॥नहीति॥लोकत्रयार्थिनश्चेत्पारिव्राज्येनाधिक्रियंते कुत्र तर्हि तेषा
मधिकारस्तत्राह॥तस्मादिति॥स्वर्गकामस्य स्वर्गसाधने यागेऽधिकारवल्लोकत्रयार्थिनामपि तत्साधने पुत्रादावधिकार इत्यर्थः॥पुत्रादीनां बाह्यलोक

एतमेव लोकमिच्छंत इत्यवधारणाच्च बाह्यलोकत्रये प्सूनां पारिव्राज्येऽधिकार इति गम्यते नहि गंगाद्वारं प्रति पित्सुः काशिदेशनिवासी
पूर्वाभिमुखः प्रैति तस्माद्बाह्यलोकत्रयार्थिनां पुत्रकर्मापरब्रह्मविद्यासाधनं पुत्रेणैवायंलोको जय्यो नान्येन कर्मणेत्यादिश्रुतेरतस्तद
र्थिभिः पुत्रादिसाधनं प्रत्याख्याय न पारिव्राज्यं प्रतिपत्तुं युक्तमतत्साधनत्वात्पारिव्राज्यस्य तस्मादेतमेव लोकमिच्छंतः प्रव्रजंतीति युक्तम

## स्येतमेव प्रव्राजिनो लोकमिच्छंतः प्रव्रजं

वधारणमात्मलोकप्राप्तिर्ह्यविद्यानिवृत्तौ स्वात्मन्यवस्थानमेव॥तस्मादात्मानं चेल्लोकमिच्छति यस्तस्य सर्वक्रियोपरम एवात्मलोकसाध
नं मुख्यमंतरंगं

साधने प्रमाणमाह॥पुत्रेणेति॥पुत्रादीनां लोकत्रयसाधनत्वे सिद्धे फलितमाह॥अतइति॥अतत्साधनत्वं लोकत्रयं प्रत्यनुपाय
त्वं॥अवधारणार्थमुपसंहरति॥तस्मादिति॥लोकत्रयार्थिनां पारिव्राज्येऽनधिकारादितियावत्॥आत्मलोकस्य स्वरूपत्वेन सदाप्तत्वात्कथं तत्रेच्छेत्याशं
क्याह॥आत्मेति॥तस्यात्मत्वेन नित्यप्राप्तत्वेऽप्यविद्ययाव्यवहितत्वात्तत्प्राप्त्यसंभवतीति भावः॥भवत्वात्मलोकप्रेप्सा तथापि किं तत्प्राप्तिसाधनं तदाह॥तस्मा
दिति॥अविद्यावशात्तदीप्सासंभवादित्यर्थः॥तदिच्छायादौ लिंभ्यं द्योतयितुं चेच्छब्दः॥मुख्यत्वं शुद्धस्य प्रतिपन्नत्वं॥प्रजादिकसाधनेभ्यो वेदानुवचन॥

पारिव्राज्यमेवात्मलोकस्यांतरंगसाधनमिति दृष्टांतमाह ॥ यथेति ॥ तथा पारिव्राज्यमेवात्मलोकस्य साधनमिति शेषः ॥ पारिव्राज्यमेवेति नियमे हेतु
माह ॥ पुत्रादीति ॥ तस्यान्यत्र विनियुक्तत्वादिति शेषः यद्यपि केवलं पुत्रादिकं नात्मलोकप्रापकं तथापि पारिव्राज्यसमुच्चितं तथा स्यादित्याशंक्याह ॥ अ
संभवेनेति ॥ नहि परिव्राजकस्य पुत्रादि तद्धेतो वा पारिव्राज्यं संभवति ॥ उक्तं च समुच्चयं निराकुर्वद्भिः सपरिकरस्य ज्ञानस्य कर्मादिना विरुद्धत्वं तेन कुतः स
मुच्चितं पुत्राद्यात्मलोकप्रापकमित्यर्थः साधनांतरे संभवे फलितमुपसंहरति ॥ तस्मादात्मानमिति ॥ प्रव्रजंतीति वर्तमानापदेशान्नात्र विधिरस्तीत्याशंक्या

यथा पुत्रादिरेव बाह्यलोकत्रयस्य पुत्रादिकर्मणा आत्मलोकं प्रत्यसाधनत्वादसंभवेन च विरुद्धमेवोचाम तस्मादात्मानं लोकमिच्छंतः प्रव्रजंत्ये
व सर्वक्रियाभ्यो निवर्तेरन्नेवेत्यर्थः ॥ यथा च बाह्यलोकत्रयार्थिनः प्रतिनियतानि पुत्रादीनि साधनानि विहितानि एवमात्मलोकार्थिनः सर्वै
षणानिवृत्तिः पारिव्राज्यं ब्रह्मविदो विधीयत एव कुतः पुनस्त आत्मलोकार्थिनः प्रव्रजंत्येवेत्युच्यते तत्रार्थवादवाक्यरूपेण हेतुं दर्शयति ॥ ए
तद्ध स्म वै तत्तदेतस्मिन्पारिव्राज्ये कारणमुच्यते ह स्म वै किल पूर्वे अतिक्रांतकालीनाः विद्वांसः आत्मज्ञाः प्रजां कर्म अपरब्रह्मविद्यां च प्रजोपलक्षि
तं हि त्रयमेतद्बाह्यलोकत्रयसाधनं निर्दिश्यते प्रजामिति प्रजां किं न कामयंते पुत्रादिलोकत्रयसाधनं नानुतिष्ठंतीत्यर्थः ननु अपरब्रह्मदर्श
नमनुतिष्ठंत्येव

ग्निहोत्रं जुहोतीतिवद्विधिमाश्रित्याह ॥ यथाचेति ॥ पारिव्राज्यविधिमुक्त्वा तदपेक्षितमर्थवादमाकांक्षापूर्वकमुत्थापयति ॥ कुतः
पुनरिति ॥ उत्थापितस्यार्थवादस्य तात्पर्यमाह ॥ तत्रेति ॥ आत्मलोकार्थिनां पारिव्राज्यनियमः सप्रस्यर्थः ॥ अर्थवादस्थान्यक्षराणि व्याचष्टे ॥ तदेतदि
ति ॥ क्रियापदेन स्मेति संबध्यते ॥ निपातद्वयस्यार्थमाह ॥ किलेति ॥ प्रजां न कामयंत इत्युत्तरत्र संबंधः ॥ प्रजामात्रे श्रुते कथं कर्मादि गृह्यते तत्राह ॥ प्रजे
ति ॥ अकांक्षापूर्वकमन्वयमन्वाचष्टे ॥ प्रजां किमिति ॥ अकामयमानत्वस्य पर्यवसानं दर्शयति ॥ पुत्रादीति ॥ पूर्वे विद्वांसः साधनत्रयं नानुतिष्ठंतीत्युक्तमास्थि

=४अपरब्रह्मध्यानार्थं हि व्युत्थानं
४= ध्यानं चैवात्मनो भूयपरमार्थार्थशब्दितं भेदकारी परेभ्यस्तत्परमार्थेन भेदवान्॥ एकं समस्तं यदिहास्ति किंचित्तदुच्यते नास्ति परं ततोन्यत् सोहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेद
एषणाभ्यो व्युत्तिष्ठतां किं तदनुष्ठानेनेत्याशंक्याह॥ तद्धेत्याद्याहेति॥ आत्मविदामपरविद्यानुष्ठानं दूषयति॥ नापवादादिति॥ अथात्र सर्वस्यानात्म
नो दर्शनमेवापोह्यते न त्वपरस्य ब्रह्मणो दर्शनमत आह॥ अपरब्रह्मणो पीति॥ तदपवादे श्रुत्यंतरमाह॥ यत्रेति॥ यस्मिन्भूम्नि स्थितस्सुरादिभि
रन्यं न पश्यति न शृणोतीत्यादिना च दर्शनादिव्यवहारस्य वारितत्वादात्मविदा न युक्तमपरब्रह्मदर्शनमित्यर्थः॥ तत्रैव हेत्वंतरमाह॥ पूर्वेति॥ प्रति

त्वेह त्वास्य सर्वमात्मैवाभूत्तत्केन कं पश्येत् तद्वा एतत्परादात्मनोन्यन्नात्मनो ब्रह्मवेद सर्वं तं परादादित्यपरब्रह्मदर्शनमप्यपवदत्येव अपरब्रह्मणो
पि सर्वमध्यात्मं चाप्यन्तनान्यत्पश्यतीति च पूर्वापरबाह्यांतरदर्शनप्रतिषेधाच्च पूर्वमनपरमनंतरमबाह्यमिति तत्केन कं पश्येत् हि जा

१=अपरब्रह्मदर्शनस्य व्युत्थानकारणत्वाभावात् एतद्ध स्म वै तत्पूर्वे विद्वांसः प्रजां न कामयंते ॥

नीयादिति च तेषां चात्मदर्शनव्यतिरेकेणान्यद्व्युत्थानेकारणमपेक्ष्यते॥ कः पुनस्तेषामभिप्राय इत्युच्यते किं प्रयोजनं फलं साध्यं करि
ष्यामः प्रजया साधनेन प्रजा हि बाह्यलोकसाधनं निर्ज्ञाता बोधप्रकारमभिनयति॥ अपूर्वमिति॥ इतश्चात्मविदा नापरब्रह्मदर्शनमित्याह॥
तत्केनेति॥ अपरब्रह्मदर्शनासंभवे किं तेषामेषणाभ्यो व्युत्थाने कारणमित्याशंक्याह॥ तस्मादिति॥ साधनत्रयमननुतिष्ठतामभिप्रायं प्रश्नपूर्वकमा
ह॥ कः पुनरित्यादिना॥ कैवल्यमेव तत्साध्यं फलमित्याशंक्याह॥ प्रजा हीति॥ निर्ज्ञातासौ पमित्यादिश्रुताविति शेषः॥ १सोयं मनुष्यलोकः पुत्रेणैव जय्य इत्यादि
२= चतुर्थमायुषो भागं त्यक्त्वा संगान्परिव्रजेत् आश्रमादाश्रमं गत्वा हुतहोमो जितेंद्रियः ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् ऋणानि ह्यनपाकृत्य मोक्षमिच्छन्व्रजत्यधः अ
धीत्य विधिवद्वेदान्पुत्रांश्चोत्पाद्य धर्मतः इष्ट्वा च शक्तितो यज्ञैर्मनो मोक्षे निवेशयेत् अनधीत्य द्विजो वेदाननुत्पाद्य तथात्मजान् अनिष्ट्वा चैव यज्ञैस्तु मोक्षमिच्छन्व्रजत्यध इत्यादि मनुव
चनं वैराग्याभावे बोध्यमन्यथा श्रुतिविरोधः २=

960.

सएवंतर्हिप्रजयासाध्यतामितिचेन्नेत्याह॥सचेति॥आत्मव्यतिरिक्तोनास्तीत्युक्तमुपपादयति॥सर्वंहीति॥आत्मव्यतिरिक्तस्यैवलोकस्यप्रजादिसा ध्यत्वमिष्यतांइतिचेन्नेत्याह॥आत्माचेति॥आत्मयाजिनःसंस्कारार्थकर्मसंगीकारादात्मनोस्तिसंस्कार्यत्वमित्याशंक्याह॥यद्यपीति॥अथांगांगित्वंचमु ख्यात्मदर्शनविषयमेवकिंनेष्यतेतत्राह॥नहीति॥आत्मविदांप्रजादिसाध्याभावमुपसंहरति॥तस्मान्नेति॥केषांतर्हिप्रजादिभिःसाध्यंफलंतदाह॥अ

सचबाह्योलोकोनास्त्यस्माकमात्मव्यतिरिक्तःसर्वंह्यस्माकमात्मभूतमेवसर्वस्यचवयमात्मभूताःआत्माचनःआत्मत्वादेवनकेनचि त्साधनेनोत्पाद्यःआप्योविकार्यःसंस्कार्योवायद्यप्यात्मयाजिनःसंस्कारार्थंकर्मेतितदपिकार्यकरणात्मदर्शनविषयमेवइदंमेनेनांगंसं स्क्रियतइत्यंगांगित्वादिश्रवणान्नहिविज्ञानघनैकरसनैरंतर्यदर्शिनोंगांगिसंस्कारोपधानदर्शनंसंभवतितस्मान्नकिंचित्प्रजादिसा

किंप्रजयाकरिष्यामोयेषांनोयमात्मा

धनैःकरिष्यामःअविदुषांहितत्प्रजादिसाधनैःकर्त्तव्यंफलंनहिमृगतृष्णिकायामुदकपानायतदुदकदर्शीप्रवृत्तइतितत्रोषरमात्रमुदका भावंपश्यतोपिप्रवृत्तिर्युक्ताएवमस्माकमपिपरमार्थात्मलोकदर्शिनांप्रजादिसाधनसाध्येमृगतृष्णिकादिसमेऽविद्वद्दर्शनविषये नप्रवृ त्तिर्युक्तेत्यभिप्रायस्तदेतदुच्यतेयेषामस्माकंपरमार्थदर्शिनामयमात्माऽशनायादिविनिर्मुक्तःसाध्वसाधुभ्यामविकार्योयंलोकःफलमभिप्रेतं नचास्यात्मनःसाध्यसाधनादिसर्वसंसारधर्मविनिर्मुक्तस्यसाधनंकिंचिदेषितव्यं विदुषांहीति॥केषांचित्पुत्रादिषुप्रवृत्तिश्चेत्तेनैवन्यायेनविदुषा मपितेषुप्रवृत्तिःस्यादित्याशंक्याह॥नहीति॥तत्रप्रवृत्तिरितिसंबंधःअविद्वद्दर्शनविषयइतिच्छेदः॥उक्तेर्थेवाक्यमवतार्यव्याचष्टे॥तदेतदिति॥आत्माचेत्तदभि

कुतर्हि साधनमेष्टव्यमित्याशंक्याह ॥ साध्यस्येति ॥ विपक्षे दोषमाह ॥ असाध्यस्येति ॥ येषामित्यादि वाक्यार्थमुपसंहरति ॥ तस्मादिति ॥ ब्राह्मणानां ब्रह्मवि
दां प्रजादिभिः साध्याभावादिति यावत् ॥ वाक्यांतरं प्रश्नद्वारेणावतार्य पांचमिकं व्याख्यानं तस्य स्मारयति ॥ तएवमित्यादिना ॥ यदर्थो यमर्थवादस्तं विधिं
निगमयति ॥ तस्मादिति ॥ महानुभावो यमात्मलोको यत्तदर्थिनो दुष्करमपि पारिव्राज्यं कुर्वंतीति स्तुतिरत्र विवक्षिता न विधिरित्याशंक्याह ॥ नहीति ॥ त

साध्यस्य हि साधनान्वेषणा क्रियते असाध्यस्य साधनान्वेषणायां हि जलबुध्यास्थल इव तरणं कृतं स्यात्खेवा शाकुनपदान्वेषणं तस्मादेतदा
त्मानं विदित्वा प्रव्रजेयुरेव ब्राह्मणाः न कर्मारभेरन्नित्यर्थः ॥ यस्मात्पूर्वे ब्राह्मणा एवं विद्वांसः प्रजामकामयमानास्तएवं साध्यसाधनसंव्यव
हारं निंदंतोः विद्वद्विषयमिति कृत्वा किं कृतवंत इत्युच्यते तेह स्म किल पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं

यं लोक इति तेह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरंति ॥

चरंतीत्यादि व्याख्यातं तस्मादात्मानं लोकमिच्छंतः प्रव्रजंति प्रव्रजेयुरित्येष विधिरर्थवादेन संगच्छते न हि सार्थवादस्यास्य लोकस्तुत्य
भिमुखत्वमुपपद्यते प्रव्रजंतीत्यस्यार्थवादरूपो ह्येतद्धस्मेत्यादिरुत्तरो ग्रंथः ॥ अर्थवादश्चेन्नार्थवादांतरमपेक्षतापेक्षते चेत्तद्धस्मेत्याद्य
र्थवादं प्रव्रजंतीत्येतद्यस्मात्पूर्वे विद्वांसः प्रजादिकर्मभ्यो निवृत्ताः प्रव्रजितवंत एव तस्मादधुनातना अपि प्रव्रजंति प्रव्रजेयुरित्येवं संबध्यमा
नं न लोकस्तुत्यभिमुखं भवितुमर्हतीति ॥ देव प्रपंचयति ॥ प्रव्रजंतीत्यस्येति ॥ तथापि प्रव्रजंतीति वाक्यस्यार्थवादत्वं किं न स्यादित्याशंक्याह ॥ अर्थवाद
श्चेति ॥ अपेक्षाप्रकारमेव प्रकटयंस्तस्य स्तुत्यभिमुखत्वाभावाद्विधित्वमेवेत्याह ॥ यस्मादिति ॥ किंच ॥ विदित्वा व्युत्थाय भिक्षाचर्यं चरंतीत्यत्र विज्ञानेन समानकर्तृ

ऽतोऽनुष्ठानमपि विधिमर्हतीत्युक्तं तथा चात्रापि अनुष्ठानापरपर्यायं पारिव्राज्यं विधेयमित्याह ॥ विज्ञानेति ॥ इतश्च पारिव्राज्यवाक्यमर्थवादो न भवतीत्याह ॥ वेदेति ॥ तदेव साधयति ॥ यथेत्यादिना ॥ पारिव्राज्यस्य विधेयत्वे हेत्वन्तरमाह ॥ फलेति ॥ पुत्रादिफलापेक्षया पारिव्राज्यफलं विभागेनोपदिश्यते तथा च फलवत्त्वात्पुत्रादिवत्पारिव्राज्यस्य विधेयत्वसिद्धिरित्यर्थः ॥ तदेव विवृणोति ॥ एतमेवेति ॥ प्रकृतमात्मानं स्वलोकमापाततो विदित्वा तमेव साक्षात्कर्तुमिच्छवः ॥ प्रव्रजन्तीति वचनात्पुत्रादिसाध्यान्मनुष्यादिलोकादात्माख्यं लोकं पारिव्राज्यस्य फलान्तरत्वेन यतः श्रुतिर्विभज्याभिदधाति अतस्तस्य

विज्ञानसमानकर्तृकत्वोपदेशादित्यादिना वाचामवेदानुवचनादिसहपाठाच्च यथात्मदर्शनसाधनत्वेन विहितानां वेदानुवचनादीनां यथार्थत्वमेवं नार्थवादत्वं तथा तैरेव सह पठितस्य पारिव्राज्यस्यात्मलोकप्राप्तिसाधनत्वेनार्थवादत्वमयुक्तं फलविभागोपदेशा

याह्येव पुत्रैषणा सा वित्तैषणा या वित्तैषणा सा लोकैषणोभे ह्येते एषणे एव भवतः ॥

च एतमेवात्मानं लोकं विदित्वेत्यन्यस्माद्बाह्याल्लोकादात्मानं फलान्तरत्वेन प्रविभजति यथा पुत्रेणैवायं लोको जय्यो नान्येन कर्मणा कर्मणा पितृलोक इति न च प्रव्रजन्तीत्येतस्माद्भवल्लोकस्तुतिपरं ॥ प्रधानवच्चार्थवादापेक्षं विधेयत्वमप्रत्यूहमित्यर्थः ॥ फलविभागोपदेशे दृष्टान्तमाह ॥ यथेति ॥ तथा पारिव्राज्येऽपि यथोक्तफलविभागोक्तेर्विधीयते तदा दार्ष्टान्तिकमिति शब्दार्थः ॥ पारिव्राज्यस्य स्तुतिपरत्वाभावे हेत्वन्तरमाह ॥ न चेति ॥ यथा वायुर्वै क्षेपिष्ठेत्यादिरर्थवादः प्राप्तार्थो देवतादिस्तुत्यर्थः स्थितो न तथेदं स्तुतिपरं तद्द्योतिशब्दाभावादित्यर्थः ॥ किंच ॥ प्रधानस्य दर्शपूर्णमासादेरर्थवादापेक्षावत्पारिव्राज्यमपि तदपेक्षमुपलभ्यते तेन तस्य दर्शादिवद्विधेयत्वं दुर्वारमित्याह ॥ प्रधानवच्चेति ॥ किंच ॥

पारिव्राज्यंसकृदेवश्रुतंचेदविवक्षितमन्यस्तुतिपरंस्यान्नचेदंसकृदेवश्रूयतेप्रव्रजंतीत्युपक्रम्यप्रजांनकामयंतेत्युत्थायाथभिक्षाचर्यंचरंतीत्यभ्यासात्
तोपिनस्तुतिमात्रमेतदित्याह॥सकृदिति॥नचेत्यत्रापिसंबध्यते॥कथंतर्हिपारिव्राज्यस्यस्तुतिपरत्वप्रतीतिस्तत्राह॥तस्मादिति॥अस्तुतर्हिविधेयमपि
पारिव्राज्यंस्तावकमपीतिचेन्नेत्याह॥नचेति॥विपक्षेदोषमाहविध्यनुपलंभादित्यर्थः॥अन्यत्रविध्यनुपलंभंसमर्थयते॥यदीत्यादिना॥अन्यत्रप्रक्रिया
यामितियावत्॥कर्माधिकारेतत्यागविधेर्विरुद्धत्वादितिभावः॥भवतिहपारिव्राज्यविधिस्तथापिसर्वेकर्मानधिकृतविषयःस्यादित्याशंक्याह॥यदपी

सकृत्कृतंस्यात्तस्माद्वांतिरेवैषालोकस्तुतिपरमितिनचानुष्ठेयेनपारिव्राज्येनस्तुतिरुपपद्यतेयदिपारिव्राज्यमनुष्ठेयमपिसदन्यस्तुत्य
र्थंस्याद्दर्शपूर्णमासादीनामप्यनुष्ठेयानांस्तुत्यर्थतास्यान्नचान्यत्रकर्तव्यतैतस्माद्विषयान्निर्ज्ञातायतइहस्तुत्यर्थंभवेद्यदिपुनःक्वचिद्विधिःप
रिकल्प्येतपारिव्राज्यस्यसइहैवमुख्योनान्यत्रसंभवतियदप्यनधिकृतविषयेपारिव्राज्यंकल्प्यतेतत्रवृक्षाद्यारोहणाद्यपिपारिव्राज्यव
त्कल्प्येतकर्तव्यत्वेनानिर्ज्ञातत्वाविशेषात्॥तस्मात्स्तुतिगंधोप्यत्रनशक्यःकल्पयितुंयद्ययमात्मालोकइष्यतेकिमर्थंतत्प्राप्तिसाधनत्वेन
कर्माण्येवनारभेरन्किंपारिव्राज्येनेतिअत्रोच्यतेअस्यात्मलोकस्यकर्मभिरसंबंधात्यमात्मानमिच्छंतःप्रव्रजेयुःसआत्मासाधनत्वेनफलत्वेन
चोत्पाद्यत्वादिप्रकाराणामन्यतमत्वेनापिकर्मभिर्नसंबध्यते

ति॥तत्रकर्मानधिकृतेपुंसीत्येतत्॥तत्रहेतुमाह॥कर्तव्यत्वेनेतिकर्मानधिकृतेनकर्त
व्यतयाज्ञातत्वंवृक्षारोहणादाविवपारिव्राज्येपिनास्तितथाचानधिकृतविषयेपारिव्राज्यंकल्प्यतेचेत्तस्मिन्विषयेवृक्षारोहणाद्यपिकल्प्येताविशेषा
दित्यर्थः॥पारिव्राज्यस्याधिकृतविषयत्वेविधेयत्वेचसिद्धंफलितमाह॥तस्मादिति॥सार्थवादंपारिव्राज्यंव्याख्यायसएषइत्यादिव्याकर्तुंशंकय
362 ति॥यदीति॥परिहरति॥अत्रेति॥तदर्थिनोनारंभतेकर्माणीतिशेषः॥कर्मभिरसंबंधमात्मलोकस्यसाधयति॥यमात्मानमिति ॥

तस्यकर्मासंबंधेनिष्प्रपंचत्वंफलतीत्याह॥तस्मादिति॥आत्मनोनिष्प्रपंचत्वेपिकथंतद्दर्शिनांपारिव्राज्यसिद्धिरित्याशंक्याह॥यस्मादिति॥निर्विशेषस्व त्वतन्नवाक्येदर्शितस्वरूपोयमात्मेत्येतदागमोपपत्तिभ्यांयथापूर्वन्नस्यापितंतथात्रापिब्राह्मणद्वयेविशेषतोयस्मान्निर्धारितंतस्मादस्मिन्नात्मनिआ पातत्तोज्ञातेकर्मानुष्ठानप्रयत्नासिद्धिरितियोजना॥उक्तात्मविषयविवेकविज्ञानवतोनकर्मानुष्ठानमित्यत्रदृष्टांतमाह॥नहीति॥ब्रह्मज्ञानफलेसर्वकर्मफ

तस्मात्सएषनेतिनेत्यात्माऽगृह्योनहिगृह्यतेइत्यादिलक्षणोयस्मादेवंलक्षणआत्माकर्मफलसाधनासंबंधीसर्वसंसारधर्मविलक्षणो
ऽशनायाद्यतीतोऽस्थूलादिधर्मवानजोऽजरोऽमरोऽमृतोऽभयःसैंधवघनवद्विज्ञानैकरसस्वभावःस्वयंज्योतिरेकएवाद्वयोपूर्वोऽन
परोऽनंतरोबाह्यइत्येतदागमतस्तर्कतश्चस्थापितंविशेषतश्चेहजनकयाज्ञवल्क्यसंवादेस्मिन्तस्मादेवंलक्षणेआत्मनिविदिते

सएषनेतिनेत्यात्माऽगृह्योनहिगृह्यतेशीर्योनहिशीर्यतेसंगोनहिसज्जतेसितोनव्यथतेनरिष्यते

आत्मत्वेननैवकर्मारंभउपपद्यतेनहिचक्षुष्मान्पथिप्रवृत्तोहनिकूपेकंटकेवापतति॥कृत्स्नस्यकर्मफलस्यचविद्याफलेंतर्भावान्नचा
यत्नप्राप्येवस्तुनिविद्वान्यत्नमातिष्ठति॥अक्केचेन्मधुविंदेतकिमर्थंपर्वतंव्रजेत्इष्टस्यार्थस्यसंप्राप्तौकोविद्वान्यत्नमाचरेत्॥सर्वंकर्मा
खिलंपार्थज्ञानेपरिसमाप्यतेइतिगीतास्विहापिचैतस्यैवपरमानंदस्यब्रह्मविदःप्राप्यस्यान्यानिभूतानिमात्रामुपजीवंतीत्युक्तं लांतर्भावा

त्वतद्दर्शिनोमुमुक्षोर्नकर्तव्यंकर्मेत्याह॥कृत्स्नस्येति॥तथापिविचित्रफलानिकर्माणीतिविवेकीकुतूहलवशादनुष्ठास्यतीत्याशंक्याह॥नचेति॥तत्र
लौकिकंन्यायंदर्शयति॥अक्केतिपुरोदेशेमधुलभेतचेदितियावत्॥ज्ञानफलेकर्मफलांतर्भावेमानमाह॥सर्वमिति॥अखिलंसमग्रांगोपेतमित्यर्थः॥तत्रे

निषेधवाक्यतात्पर्यमुपसंहरति॥अतइति॥एतमित्यादिवाक्यं योजयति॥यस्मादिति॥उहेतिनिपाताभ्यां सूचितोर्थो यस्मादित्यनुभाषितः॥इतिश
ब्दस्यापेक्षितं पूरयति॥इतियुक्तमिति॥आकांक्षापूर्वकमुत्तरवाक्यमवतार्य व्याकरोति॥केतइत्यादिना॥यथोक्तात्मविदस्तापहर्षासंस्पर्शेहेतुमा

अतोब्रह्मविदं नकर्मारंभोयस्मात्सर्वैषणाविनिवृत्तः सएषनेतिनेत्यात्मानमात्मत्वेनोपगम्य तद्रूपेणैववर्तते तस्मादेतमेवंविदं ने
तिनेत्यात्मभूतं उहएवएतेवक्ष्यमाणेनतरतोनप्राप्नुतइतियुक्तमेवेतिवाक्यशेषः केतेइत्युच्यते अतोअस्मान्निमित्ताच्छरीरधारणा
दिहेतोः पापमपुण्यंकर्माकरवं कृतवानस्मि कष्टं खलुममसंवृत्तमनेनपापेनकर्मणाहंनरकंप्रतिपत्स्यइति॥योयंपश्चात्तापः कर्म

तमुहैवैतेनतरतइत्यतः पापमकरवमि त्यतः कल्याणमकरवमित्युभेउहैवैषएतेतरतिनैनंकृताकृतेतपतः॥७०॥

कृतवतः परितापः सएनं नेतिनेत्यात्मभूतं नतरति तथातः कल्याणं फलविषयकामान्निमित्ताद्यज्ञदानादिलक्षणं शोभनं कर्मकृ
तवानस्मि अतोहमस्य फलं सुखमुपभोक्ष्ये देहांतरइत्येषोपिहर्षस्तं नतरति उभेउहएषब्रह्मविदेतेकर्मणीतरति पुण्यपापलक्षणे
एवंब्रह्मविदः संन्यासिनउभेअपिकर्मणीक्षीयेते पूर्वजन्मनिकृतेयेतेचइहजन्मनिकृतेयेतेच अपूर्वेचनारभेते किंच॥नैनंकृताकृ
तेकृतंनित्यानुष्ठानं अकृतंतस्यैवाक्रिया तेअपिकृताकृते स्मेनंनतपतोः नात्मज्ञंहिकृतंफलदानेनाकृतं प्रत्यवायोत्पादनेनतपतो

हा॥उभेइति॥पुण्यपापेतरतीत्युक्ते पृथगवस्थानं तयोः शंक्येत तन्निरस्यति॥एवमिति॥निषेधवाक्योक्तक्रमेणेतियावत्॥इतश्चात्मविदोध
र्मादिसंबंधोनास्तीत्याह॥किंचेति॥सदेवानंतरवाक्यव्याख्यानेनस्फोरयति॥नैनमिति॥तयोस्तर्हि कुत्र तापकत्वं तदाह॥अनात्मज्ञंहीति॥

पुरुषत्वाद्ब्रह्मविदुष्यपि तयोर्लापकत्वं स्यादित्याशंक्याह ॥ अयं त्विति ॥ अत्र भगवद्वाक्यं प्रमाणयति ॥ यथेति ॥ यद्यपि पूर्वोत्तरयोर्धर्माधर्मयोरनार्ब्धयोरात्मविद्यावशाद्विनाशाश्लेषौ तथापि प्रारब्धयोरस्ति तयोर्लापकत्वमित्याशंक्याह ॥ शरीरेति ॥ प्रकृतं विद्याफलमुपसंहरति ॥ अत इति ॥ कर्मकार्यसंबंधादिति यावत् ॥ २१ ॥ ७० ॥ उक्ते विद्याफले मंत्रं संवादयति ॥ तदेतदिति ॥ एष नित्यो महिमेत्यत्र नित्यत्वमुपपादयति ॥ अन्ये त्विति ॥ तद्धि लक्षणत्वमक

ऽयं तु ब्रह्मविदात्मविद्याग्निना सर्वाणि कर्माणि भस्मीकरोति यथैधांसि समिद्धोऽग्निरित्यादिस्मृतेः शरीरारंभकयोस्तूपभोगेनैव क्षयः ॥ अतो ब्रह्मविद् कर्मसंबंधी ॥ ७० ॥ २१ ॥ तदेतदृस्तु ब्राह्मणेनोक्तमृचा मंत्रेणाभ्युक्तं प्रकाशितमेष नेति नेत्यादिलक्षणो नित्यो महिमा अन्यस्तु महिमानः कर्मकृता इत्यनित्या अयं तु तद्विलक्षणो नेति नेत्यादिलक्षणो महिमा स्वाभाविकत्वान्नित्यो ब्रह्मविदो ब्राह्मणस्य त्यक्तसर्वैषणस्य कुतोऽस्य

तदेतदृचाभ्युक्तमेष नित्यो महिमा ब्राह्मणस्य न वर्द्धते कर्मणा नो कनीयान्तस्यैव स्यात्पदवित्तं विदित्वा न लिप्यते कर्मणा पापके

नेति ॥ नित्यत्वमिति हेतुमाह न कर्मणा वर्धते शुभलक्षणेन कृतेन वृद्धिलक्षणां विक्रियां प्राप्नोति तथाऽशुभेन कर्मणा नो कनीयान्नाप्यपक्षयलक्षणां विक्रियां प्राप्नोति उपचयापचयहेतुभूता एव हि सर्वा विक्रिया इत्येताभ्यां प्रतिषिध्यंते अतोऽविक्रियत्वान्नित्य एष महिमा तस्मात्तस्यैव महिम्नः स्यात्भवेत्पदवित्पदस्य वेत्ता पद्यते गम्यते ज्ञायत इति महिम्नः स्वरूपमेव पदं तस्य वेदिता किं तत्पदवेदनेन स्यादित्युच्यते तं विदित्वा महिमानं न लिप्यते न संबध्यते कर्मणा पापकेन धर्माधर्मलक्षणेन ॥ र्मकृतत्वं अकर्मकृतो महिमा स्वाभाविकत्वान्नित्य इत्यत्राकर्मकृतत्वेन स्वाभाविकत्वमसिद्धमित्याशंक्याह ॥ कुतोऽस्येति ॥ वृद्धिरपक्षयश्चेति विक्रियाद्वयाभावेऽपि विक्रियांतराणि भविष्यंतीत्याशंक्याह ॥ उपचयेति ॥ एताभ्यां निषेधाभ्यामि

तस्यनित्यत्वेपिकिंतदाह॥तस्मादिति॥अधर्मलक्षणेनेतिवक्तव्येकिमिदंधर्माधर्मलक्षणेनेत्युक्तमतआह॥उभयमपीति॥संसारहेतुत्वाविशेषादित्यर्थः॥तस्मादित्यादिवाक्यंव्याचष्टे॥यस्मादिति॥एवंविदात्माकर्मतत्फलसंबंधशून्यइत्यापाततोजानन्नित्यर्थः॥विशेषणाभ्यामुत्सर्गतोविहितस्योभयविधकरणव्यापारोपरमस्ययावज्जीवादिश्रुतिविहितकर्मापवादस्तस्माद्विरक्तस्यापिननित्यादित्यागः॥उत्सर्गस्यापवादेनबाधःकस्यनसंमतइत्यादिन्या

उभयमपिपापकमेवविदुषोयस्मादेवमकर्मसंबंध्येषब्राह्मणस्यमहिमानेतिनेत्यादिलक्षणःतस्मादेवंवित्क्वांतोबाह्येंद्रियव्यापारतउपशांतःतथादांतोंतःकरणतृष्णातोनिवृत्तःउपरतःसर्वैषणाविनिर्मुक्तःसंन्यासीतितितिक्षुःद्वंद्वसहिष्णुःसमाहितःइंद्रियांतःकरणचलनरूपाद्व्यावृत्त्यैकाग्र्यरूपेणसमाहितोभूत्वातदेतदुक्तंपुरस्ताद्बाल्यंचपांडित्यंचनिर्विद्येतिआत्मन्येवस्वेकार्यकरणसंघातआत्मानंप्र

तस्मादेवंवित्क्वांतोदांतउपरतस्तितिक्षुःसमाहितोभूत्वात्मन्येवात्मानंपश्यतिनैनंपाप्मातरतिसर्वंपाप्मानंतरति॥

सर्वंपश्यतितत्रकिंतावन्मात्रंपरिच्छिन्नंनेत्युच्यतेसर्वंसमस्तमात्मानमेवपश्यतिनान्यदात्मव्यतिरिक्तंबालाग्रमात्रमप्यस्तीत्येवंमननान्मुनिर्भवतिजाग्रत्स्वप्नसुषुप्ताख्यंस्थानत्रयंहित्वाएवंपश्यंतंब्राह्मणंनैनंपाप्मापुण्यपापलक्षणस्तरतिनप्राप्नोतिअयंतुब्रह्मवित्सर्वंपाप्मानंतरत्यात्मभावेनैवव्याप्नोत्यतिक्रामति॥ यादित्याशंक्याह॥उपरतइति॥जीवनविच्छेदव्यतिरिक्तशीतादिसहिष्णुत्वंतितिक्षुत्वं॥यत्रकर्तुःस्वातंत्र्यंतेषांकर्मणांनिवृत्तिःशमादिपदैरुक्ता॥यत्रसम्यग्धीविरोधिनिनिद्रालस्यादौपुंसोनस्वातंत्र्यंतन्निवृत्तिःसमाधानंसमाहितोभूत्वापश्यतीतिसंबंधः॥पश्यतीतिवर्त्तमानापदेशात्कथंविशेषणेषुसंक्रामितोविधिरित्याशंक्याह॥तदेतदिति॥यथोक्तैःसाधनैरुदितायांविद्यायां

३६४

तस्यपुण्यपापासंस्पर्शेहेतुमाह॥अयंत्विति॥इतश्चविदुषोनकर्मसंबंधोस्तीत्याह॥नचैनमिति॥किमितिपाप्माब्रह्मविदंनतपतीत्याशंक्याह॥सर्वमिति॥कथंब्राह्मणोभवतीत्यपूर्ववदुच्यतेप्रागपिब्राह्मण्यस्यसत्वादित्याशंक्याह॥अयंत्विति॥मुख्यत्वमबाधितत्वं॥सफलांविद्यांमंत्रब्राह्मणाभ्या

नचैनंपाप्माकृताकृतलक्षणस्तपतीष्टफलप्रत्यवायोत्पादनाभ्यांसर्वंपाप्मानमयंतपतिब्रह्मवित्सर्वात्मदर्शनवन्हिनाभस्मीकरोतिस एषएवंविद्विपापोविगतधर्माधर्मोविरजोविगतरजःरजःकामोविगतकामोअविचिकित्सश्छिन्नसंशयोहमस्मिसर्वात्मापरंब्रह्मेतिनिश्चितमतिःब्राह्मणोभवति॥अयंत्वेवंभूतःएतस्यामवस्थायांमुख्योब्राह्मणःप्रागेतस्माद्ब्रह्मस्वरूपावस्थानाद्गौणमस्यब्राह्मण्यमेष

नैनंपाप्मातपतिसर्वंपाप्मानंतपतिविपापोविरजोविचिकित्सोब्राह्मणोभवत्येषब्रह्मलोकःसम्राडितिहोवाचयाज्ञवल्क्यःसोहंभगवतेविदेहान्ददामिमांचापिसहदास्यायेति॥२१॥

ब्रह्मलोकोब्रह्मैवलोकोब्रह्मलोकोमुख्योनिरुपचरितःसर्वात्मभावलक्षणःहेसम्राट्एनंब्रह्मलोकंपरिप्रापितोस्यभयंनेतिनेत्यादिलक्षणमितिहोवाचयाज्ञवल्क्यएवंब्रह्मभूतोजनकोयाज्ञवल्क्येनब्रह्मभावमापादितःप्रत्याहसोहंत्वयाब्रह्मभावमापादितःसन्भगवतेतुभ्यंविदेहान्देशान्ममराज्यंददामिमांचसहविदेहैर्दास्यायदासकर्मणेददामीतिचशब्दात्संबध्यते॥परिसमापिताब्रह्मविद्यासहसंन्यासेनसांगासेतिहासेतिकर्तव्यताकापरिसमाप्तःपरम

मुपदिश्योपसंहरति॥एषइति॥तत्रकर्मधारयसमासंसूचयति॥ब्रह्मैवेति॥तथाविधसमासपरिग्रहेप्रकरणमनुग्राहकमभिप्रेत्याह॥मुख्यइति॥तथापिकिंममसिद्धमितितद्राह॥एनमिति॥आत्मीयंविद्यालाभंद्योतयितुंराज्ञोवचनमित्याह॥एवमिति॥सतिवक्तव्यशेषेकथमित्थंराज्ञोवचनमित्याशं

तथापिपरमपुरुषार्थस्यवक्तव्यत्वमाशंक्याह॥परिसमाप्तइति॥कर्तव्यांतरंवक्तव्यमस्तीत्याशंक्याह॥एतावदिति॥तथापियत्रनिष्ठाकर्तव्यातद्वा
च्यमित्याशंक्याह॥एषेति॥तथापिपरमानिष्ठाऽन्यास्तीतिचेन्नेत्याह॥एषेति॥निश्चितंश्रेयोन्यदस्तीत्याशंक्याह॥एतदिति॥तथापिकृतकृत्यतयाम
त्यब्राह्मण्यसिध्यर्थंवक्तव्यांतरमस्तीत्याशंक्याह॥एतत्प्राप्येति॥किमस्यांप्रतिज्ञापरंपरायांनियामकमित्याशंक्याह॥एतदिति॥निरुपाधिकब्रह्मज्ञा

एतावत्स्वरूपेणकर्तव्यमेषानिष्ठाएषापरागतिरेतन्निःश्रेयसमेतत्प्राप्यकृतकृत्योब्राह्मणोभवत्येतत्सर्ववेदानुशासनमिति॥२१॥योयं
जनकयाज्ञवल्क्याख्यायिकायांव्याख्यातःआत्मासवैएषमहानजआत्माअन्नादःसर्वभूतस्थःसर्वान्नानामत्तावसुदानःवसुधनंसर्वप्राणि
कर्मफलंतस्यदातापाणिनांयथाकर्मफलेनयोजयितेत्यर्थःतमेतमजमन्नादंवसुदानमात्मानमन्नादवसुदानगुणाभ्यांयुक्तंयोवेदससर्व

सवाएषमहानजआत्मान्नादोवसुदानोविंदतेवसुयएवंवेद॥२२॥

भूतेष्वात्मभूतोअन्नमत्तिलभतेविंदतेवसुसर्वकर्मफलजातंलभतेसर्वात्मत्वादेवयएवंयथोक्तंवेदअथवादृष्टफलार्थिभिरप्येवंगुणउ
पास्यस्तेनान्नादोवसोश्चलब्धाद्दृष्टेनैवफलेनान्नात्त्वेनगोश्वादिनाचास्ययोगोभवतीत्यर्थः॥२२॥२३॥ नात्मैवस्यमित्यागमयितुमिति
शब्दः॥२२॥संप्रतिसोपाधिकब्रह्मध्यानादभ्युदयंदर्शयति॥योयमित्यादिना॥ईश्वरश्चेत्प्राणिभ्यःकर्मफलंददातितर्हितस्यवैषम्यनैर्घृण्येस्याता
मित्याशंक्याह॥प्राणिनामिति॥उपास्यस्वरूपंदर्शयित्वातदुपासनंसफलंदर्शयति॥तमेतमिति॥सर्वात्मत्वफलमुपासनमुक्त्वापक्षांतरमाह॥अथ
वेति॥दृष्टंफलमन्नात्त्वंधनलाभश्च॥उक्तगुणकमीश्वरंध्यायतःफलमाह॥तेनेति॥तदेवफलंस्पष्टयति॥दृष्टेनेति॥अन्नात्त्वंदीप्ताग्नित्वं॥२३॥

निरुपाधिकब्रह्मज्ञानान्मुक्तिरुक्ता सोपाधिकब्रह्मध्यानाच्चाभ्युदय उक्तस्तथा च किमुत्तरकंडिकयेत्याशंक्याह ॥ इदानीमिति ॥ अजत्वाच्चाविनाशी
तिवक्तुं चशब्दः ॥ कथं जन्मजराभावयोरमरत्वाविनाशित्वसाधकत्वं तदाह ॥ यो हीति ॥ अयं त्वजत्वाच्चाविनाशी ॥ अजरत्वाच्चामरोऽमरत्वाच्चाविनाशीति
योजना ॥ मरणायोग्यत्वमुपजीव्य मरणकार्यत्वाभावं दर्शयति ॥ अत एवेति ॥ जन्मापक्षयविनाशानामेव भावविकाराणामिह मुखतो निषेधाद्वृध्या

इदानीं समस्तस्यैवारण्यकस्य यो(ऽ)र्थ उक्तः स समुच्चित्यास्यां कंडिकायां निर्दिश्यत एतावान्समस्तारण्यकार्थ इति स वा एष महानज आत्मा
अजरो न जीर्यत इति न विपरिणमत इत्यर्थः ॥ अमरो यस्माच्चाजरस्तस्मादमरो न म्रियत इत्यमरो यो हि जायते जीर्यते च स विनश्यति म्रियते च
अयं त्वजत्वादजरत्वाच्चाविनाशी यतो(ऽ)त एवामृतो यस्मात् जनिप्रभृतिभिस्त्रिभिर्भावविकारैर्वर्जितस्तस्मादितरैरपि भावविकारैस्त्रिभिस्त

स वा एष महानज आत्माजरोऽमरोऽमृतोऽभयो ब्रह्म

त्कृतैश्च कामकर्ममोहादिभिर्मृत्युरूपैर्वर्जित इत्येतदभयो(ऽ)त एव यस्माच्चैवं पूर्वोक्तविशेषणस्तस्माद्भयवर्जितो(ऽ)भयं च नामाविद्याकार्यं
तत्कार्यप्रतिषेधेन भावविकारप्रतिषेधेन चाविद्यायाः प्रतिषेधः सिद्धो वेदितव्यः अभयश्चात्मैवंगुणविशिष्टः किमसौ ब्रह्म परिवृढं नि
रतिशयं महदित्यर्थः ॥ अभयं वै ब्रह्म

दीनि विकारान्तराण्यात्मनि भविष्यन्तीति विशेषणनिषेधस्य शेषाभ्यनुज्ञापरत्वादित्याशंक्याह ॥ यस्मादिति ॥ इ
तरे सत्त्वविवृद्धिपरिणामाः ॥ अत एवाभय इत्युक्तं विवृणोति ॥ यस्माच्चेति ॥ किं तद्भयं तदाह ॥ भयं चेति ॥ अविद्यानिषेधि विशेषणाभावादात्मानं सास
द्रास्यतीत्याशंक्याह ॥ तत्कार्येति ॥ विशेषणान्तरं प्रश्नपूर्वकमस्याप्यव्याकरोति ॥ अभय इति ॥ कथं पुनरभयगुणविशिष्टस्यात्मनो ब्रह्मत्वं तदाह ॥ अभय

वैशब्दार्थमाह॥प्रसिद्धमिति॥लोकशब्दः शास्त्रस्याप्युपलक्षणं॥वेद्यस्वरूपमुक्त्वा विद्याफलं कथयति॥यएवमिति॥कंडिकार्थमुपसंहरति॥एषइ
ति॥सृष्ट्यादेरर्पितदर्थत्वात्किमित्यसावि हनोपसंह्रियतेतत्राह॥एतस्येति॥सृष्ट्यादेरारोपितत्वेगमकमाह॥तदपोहेनेति॥तच्छब्दः सृष्ट्यादिप्रपंचवि
षयः॥तदपोहेनेतियदुक्तंतदेवस्फुटयति॥नेतीति॥अध्यारोपापवादन्यायेनतत्त्वस्यावेदितत्वादारोपितंभवत्येवसृष्ट्यादिद्वैतमित्यर्थः॥अध्यारोपाप

प्रसिद्धमेतल्लोकेऽभयंब्रह्मेतितस्माद्युक्तमेवंगुणविशिष्टःआत्माब्रह्मेतियएवंयथोक्तमात्मानमभयंब्रह्मवेदसोभयंहिवैब्रह्मभवतिएष
सर्वस्याउपनिषदःसंक्षिप्तोर्थउक्तएतस्यैवार्थस्यसम्यक्प्रबोधायोत्पत्तिस्थितिप्रलयादिकल्पनाक्रियाकारकफलाध्यारोपणाचात्मनि
कृतातदपोहेनचनेतिनेतीत्यध्यारोपितविशेषापनयद्वारेणपुनस्तत्त्वमावेदितंयथाएकप्रभृत्यापरार्धसंख्यास्वरूपपरिज्ञानायरेखा

अभयंवैब्रह्माभयंहिवैब्रह्मभवतियएवंवेद॥७३॥ चतुर्थंब्राह्मणं॥

ध्यारोपणंकृत्वाएकेयंरेखादशेयंशतेयंसहस्रेयमितिग्राहयतिअवगमयतिसंख्यारूपंकेवलंनतुसंख्यारेखात्मत्वमेव॥यथाचाका
रादीन्यक्षराणिविजिग्राहयिषुःपत्रमषिरेखादिसंयोगोपायमास्थायवर्णानांसतत्त्वमावेदयतिनपत्रमष्याद्यात्मतामक्षराणांग्राहयतित
थाचेहाप्यसत्याद्यनेकोपायमास्थायैकंब्रह्मतत्त्वमावेदितं वादन्यायस्यपंकप्रक्षालनन्यायविरुद्धत्वात्तत्त्वं विवक्षितंचेत्तदेवोच्यतांकृतंस
ष्ट्यादिद्वैतारोपेणेत्याशंक्याह॥यथेति॥उदाहरणांतरमाह॥यथाचेति॥दृष्टांतद्वयमनूद्यदार्ष्टांतिकमाचष्टे॥तथाचेति॥इहेतिमोक्षशास्त्रोक्तिः॥
ई=एकंदशशतंविद्यात्सहस्रशतंतथा॥सहस्रमयुतंतस्मान्नियुतंप्रयुतंततः॥अर्बुदंन्यर्बुदंचैववृंदंचैवततःपरं॥खर्वंचैवनिखर्वंचशंखःपद्मस्तथैवच॥समुद्रोमध्यमंतश्च
परार्द्धंपरमेवच॥एवमष्टादशैतानिपदानिगणनाविधौ=ई

966

तथाकल्पितप्रपंचसंबंधप्रयुक्तंसविशेषत्वंब्रह्मणःस्यादित्याशंक्याह॥पुनरिति॥तस्मिन्नात्मनिकल्पितःसृष्ट्यादिरूपायस्तेनजनितोविशेषस्तस्मिन्कारणत्वादिस्तस्यनिरासार्थमितियावत्॥तर्हिहेतुताभावविशिष्टंतत्त्वमितिचेन्नेत्याह॥तदुपसंहृतमिति॥परिशुद्धंभावबुद्भावेनापिनसंस्पृष्टमित्यर्थः॥केवलमित्यद्वितीयोक्तिः॥सृष्ट्यादिवचनस्यगतिमुक्त्वाप्रकृतमुपसंहरति॥सफलमिति॥इतिशब्दःसंग्रहसमाप्त्यर्थोब्राह्मणसमाप्त्यर्थोवा॥॥७३॥इतिषष्ठेप्रपाठकेशारीरकब्राह्मणंचतुर्थं॥४॥समाप्तेशारीरकब्राह्मणेवंशब्राह्मणंआरभ्यतत्पूर्वकृतंगतार्थेनमैत्रेयीब्राह्मणेनेत्याशंक्यमधुकांड॥

पुनस्तत्कल्पितोपायजनितविशेषपरिशोधनार्थंनेतिनेतीतितत्त्वोपसंहारःकृतःतदुपसंहृतंपुनःपरिशुद्धंकेवलमेवसफलंज्ञानमंतेस्यांकंडिकायामिति॥७३॥बृहदारण्यकेषष्ठाध्यायस्यशारीरकंचतुर्थंब्राह्मणं॥४॥आगमप्रधानेनमधुकांडेनब्रह्मतत्त्वंनिर्द्धारितंपुनस्तस्यैवोपपत्तिप्रधानेनयाज्ञवल्कीयेनकांडेनपक्षप्रतिपक्षपरिग्रहंकृत्वाविगृह्यवादेनविचारितं॥शिष्याचार्यसंबंधेनचषष्ठेप्रश्नप्रतिवचनन्यायेनसविस्तरंविचार्योपसंहृतमथेदानींनिगमनस्थानीयंमैत्रेयीब्राह्मणमारभ्यते॥अयंचन्यायोवाक्यकोविदैःपरिगृहीतोहेत्वपदेशात्प्रतिज्ञायाः॥पुनर्वचनंनिगमनमितिअथवाआगमप्रधानेनमधुकांडेनयदमृतत्वसाधनंससंन्यासमात्मज्ञानमभिहितंतदेवतर्केणाप्यमृतत्वसाधनंससंन्यासमात्मज्ञानमधिगम्यतेतर्कप्रधानंहियाज्ञवल्कीयंकांडंतस्माच्छास्त्रतर्काभ्यांनिश्चितमेतद्यदेतदात्मज्ञानंससंन्यासममृतत्वसा

र्थमनुद्रवति॥आगमेति॥पांचमिकमर्थमनुभाषते॥पुनरिति॥तस्यैवब्रह्मणस्तत्वमितिशेषः॥विगृह्यवादोजयपराजयप्रधानोजल्पन्यायः॥षष्ठेप्रतिष्ठापितमनुवदति॥शिष्येति॥प्रश्नप्रतिवचनन्यायस्तत्वनिर्णयप्रधानोवादः॥उपसंहृतंतदेवतत्वमितिशेषः॥संप्रत्युत्तरब्राह्मणस्यागतार्थत्वमाह॥अथेति॥आगमोपपत्तिभ्यांनिश्चितेतत्वेनिगमनमकिंचित्करमित्याशंक्याह॥अयंचेति॥प्रकारांतरेणसंगतिमाह॥अथवेति॥कथमिहतर्केणाधिगतिस्त

इति फलतीति शेषः॥ शास्त्रादिना यथोक्तस्य ज्ञानस्य निश्चितत्वेऽपि किं सिध्यतीत्यत आह॥ तस्मात्श्रद्धावद्भिरिति॥ एतच्छब्दो यथोक्तज्ञानपरामर्शार्थः॥ इति सिध्यतीति शेषः॥ तत्र हेतुमाह॥ आगमेति॥ अव्यभिचारानुमानयुक्तिगम्यस्यार्थस्य तथैव सत्वादिति यावत्॥ इतिशब्दो ब्राह्मणसंगतिसमाप्त्यर्थः॥ तास्वर्थेमाख्यातेस्यस्य व्याख्यानप्रसक्तावाह॥ अक्षराणां त्विति॥ तर्हि ब्राह्मणेऽस्मिन्वक्तव्याभावात्परिसमाप्तिरेवास्या

तस्माच्छास्त्रश्रद्धावद्भिरमृतत्वप्रतिपित्सुभिरेतत्प्रतिपत्तव्यमिति आगमोपपत्तिभ्यां हि निश्चितोऽर्थः श्रद्धेयो भवत्यव्यभिचारादिति॥ अक्षराणां तु चतुर्थे यथाव्याख्यातोऽर्थस्तथा प्रतिपत्तव्योऽत्रापि यान्यक्षराण्यव्याख्यातानि तानि व्याख्यास्यामः॥ अथेति हेतूपदेशानंतर्यप्रदर्शनार्थो हेतुप्रधानानि हि वाक्यानि अतीतानि तदनंतरमागमप्रधानेन प्रतिज्ञातोऽर्थो निगम्यते मैत्रेयीब्राह्मणेन हशब्दो वृत्तावद्यो

अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुर्मैत्रेयी च कात्यायनी च तयोर्ह मैत्रेयी ब्रह्मवादिनी बभूव स्त्रीप्रज्ञैव तर्हि कात्यायन्यथ ह याज्ञवल्क्योऽन्यद्वृत्तमुपाकरिष्यन्॥ ७४॥ मैत्रेयीति होवाच याज्ञवल्क्यः प्रव्रजिष्यन्वा अरेऽहमस्मात्स्थानादस्मि हंत तेऽनया कात्यायन्यांतं करवाणीति॥ ७५॥

तत्कः॥ याज्ञवल्क्यस्यर्षेः किल द्वे भार्ये पत्न्यौ बभूवतुरास्तां मैत्रेयी च नामतः एका परा कात्यायनी नाम तयोर्भार्ययोर्मैत्रेयी ह किल ब्रह्मवादिनी ब्रह्मवदनशीला बभूव आसीत्स्त्रीप्रज्ञा स्त्रियां योचिता सा स्त्रीप्रज्ञा सैव यस्याः प्रज्ञा गृहप्रयोजनान्वेषणा सा स्त्रीप्रज्ञा एव तर्हि तस्मिन्काले आसीत्कात्यायनी अथ है वं सति शंक्याह॥ यानीति॥ ननु वाक्यानि पूर्वत्र व्याख्यातानि न हेतुरुपदिष्टस्तत्कथं तदुपदेशानंतर्ये संन्यासस्यामृतत्वहेतोरात्मज्ञानस्याथशब्देन द्योत्यते तत्राह॥ हेतुप्रधानानीति॥ तदेव स्फुटं व्यनक्ति॥

३५७

आर्याद्वयेदर्शितरीत्या स्थिते सत्यच वैराग्यातिरेके सतीति यावत्॥२॥ तस्याः ब्रह्मवादित्वं तदामन्त्रणद्वारेण तां प्रत्येवं संवादे हेतूकर्तव्यं॥ तस्याः ब्रह्म

ह किल याज्ञवल्क्यः पूर्वस्माद्गार्हस्थ्यलक्षणाद्वृत्तादन्यत्पारिव्राज्यलक्षणं वृत्तमुपाकरिष्यन्नुपाचिकीर्षुः सन्हे मैत्रेयीति ज्येष्ठां भार्यामामं
त्रयामास आमन्त्र्य चोवाच ह प्रव्रजिष्यन्पारिव्राज्यं करिष्यन्वै अरे मैत्रेयि अस्मात्स्थानाद्गार्हस्थ्यादहमस्मि भवामि मैत्रेय्यनुजानीहि मां
हं ते कुर्सि यदि तेः न यांकात्यायन्यां तं करवाणीत्यादि व्याख्यातं॥ २॥ सेवमुक्तोवाच मैत्रेयी सर्वे यं पृथिवी वित्तेन पूर्णा स्यान्नु किं स्यां कि

साहोवाच मैत्रेयी यन्नु म इयं भगोः सर्वा पृथिवी वित्तेन पूर्णा स्यात्स्यान्वहं तेनामृता होइ नेति नेति होवाच याज्ञवल्क्यो य
थैवोपकरणवतां जीवितं तथैव ते जीवितं स्यादमृतत्वस्य तु नाशास्ति वित्तेनेति॥ १६॥ साहोवाच मैत्रेयी येनाहं नामृ
ता स्यां किमहं तेन कुर्यां यदेव भगवान्वेत्थ तदेव मे विब्रूहीति॥ १७॥ स होवाच याज्ञवल्क्यः प्रिया वै खलु नो भवती सती प्रिय
मवृधद्धन्त तर्हि भवत्येतद्व्याख्यास्यामि ते व्याचक्षाणस्य तु मे निदिध्यासस्वेति॥ १८॥ स होवाच न वा अरे पत्युः कामाय पतिः
प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति न वा अरे जायायै कामाय जाया प्रिया भवत्यात्मनस्तु कामाय जाया प्रिया भवति
न वा अरे पुत्राणां कामाय पुत्राः

महं वित्तसाध्येन कर्मणामृता आहो न स्यामिति नेति होवाच याज्ञवल्क्य इत्यादि समानमन्यत्॥ ४॥ स होवाच
प्रिये वपूर्वं खलु नो अस्मभ्यं भवती भवन्ती सती प्रियमवृधद्वर्द्धितवती निर्धारितवत्यस्य तस्तुष्टोऽहं हन्त ते कुर्सि चेदमृतत्वसाधनं ज्ञातुं हे भवति ते तुभ्यं तद
वादित्वं द्योतयितुमिच्छसि यदीत्युक्तं मैत्रेयी त्वमृतत्वमात्रार्थिता मात्मनो दर्शयति॥ सेवमिति॥ गुरुप्रसादाधीना विद्याप्राप्तिरिति द्योतनार्थमाह॥ स होवाचेति

व्याख्यानप्रकारमेवाह॥आत्मनीति॥दृष्टेसर्वमिदंविदितंभवतीत्युत्तरत्रसंबंधः॥केनोपायेनात्मनिदृष्टेसर्वंदृष्टंभवतीत्युपायंपृच्छति॥कथमिति॥आ

आत्मनिखल्वरेमैत्रेयिदृष्टेकथंदृष्टआत्मनीत्युच्यते॥पूर्वमाचार्यागमाभ्यांश्रुतेपुनस्तर्केणोपपत्त्यामतेविचारितेश्रवणंत्वागममात्रेणमते

प्रियाभवंत्यात्मनस्तुकामायपुत्राःप्रियाभवंतिनवाअरेवित्तस्यकामायवित्तंप्रियंभवत्यात्मनस्तुकामायवित्तंप्रियंभवतिनवाअ
रेपशूनांकामायपशवःप्रियाभवंत्यात्मनस्तुकामायपशवःप्रियाभवंतिनवाअरेब्रह्मणःकामायब्रह्मप्रियंभवत्यात्मनस्तुकामा
यब्रह्मप्रियंभवतिनवाअरेक्षत्रस्यकामायक्षत्रंप्रियंभवत्यात्मनस्तुकामायक्षत्रंप्रियंभवतिनवाअरेलोकानांकामायलोकाःप्रि
याभवंत्यात्मनस्तुकामायलोकाःप्रियाभवंतिनवाअरेदेवानांकामायदेवाःप्रियाभवंत्यात्मनस्तुकामायदेवाःप्रियाभवंतिनवाअरे
वेदानांकामायवेदाःप्रियाभवंत्यात्मनस्तुकामायवेदाःप्रियाभवंतिनवाअरेभूतानांकामायभूतानिप्रियाणिभवंत्यात्मनस्तुकामा
यभूतानिप्रियाणिभवंतिनवाअरेसर्वस्यकामायसर्वंप्रियंभवत्यात्मनस्तुकामायसर्वंप्रियंभवत्यात्मावारेद्रष्टव्यःश्रोतव्योमंतव्यो
निदिध्यासितव्योमैत्रेय्यात्मनिखल्वरेदृष्टेश्रुतेमतेविज्ञातइदंसर्वंविदितं॥७९॥ब्रह्मतंपरादाद्योन्यत्रात्मनोब्रह्मवेदक्षत्रंतंप
रादाद्योन्यत्रात्मनः

उपपत्त्याप्रश्नाद्विज्ञातेएवमेतन्नान्यथेतिनिर्धारितेकिंभवतीत्युच्यतेइदंसर्वंविदितंभवतीदंसर्वमितियदात्म
नोन्यदात्मव्यतिरेकेणाभावात्॥७९॥

स्वदर्शनोपायंश्रवणादिकंदर्शयन्नुत्तरमाह॥उच्यतेइति॥उक्तोपायफलंप्रश्नपूर्वकमाह॥किमित्यादिना
॥इदंसर्वमित्यनूद्यतस्यार्थमाह॥यदात्मनोन्यदिति॥तदात्मनिदृष्टेदृष्टंस्यादितिशेषः कथमन्यस्मिन्दृष्टेन्यस्यदृष्टंभवतितत्राह॥आत्मव्यतिरेकेणेति

३६९

सयथार्द्रैधाग्नेरित्यादावि॰ष्टंहुतमित्याद्यधिकं दृष्टंतस्यार्थमाह॥चतुर्थइति॥सामर्थ्यादर्थशून्यस्यशब्दस्यानुपपत्तेरित्यर्थः॥ ॥ ॥ ॥॥

चतुर्थेशब्दनिश्वासेनैवलोकाद्यर्थनिश्वासःसामर्थ्यादुक्तोभवतीतिपृथङ्गोक्तः ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

क्षत्रंवेदलोकास्तंपरादुर्योन्यत्रात्मनोलोकान्वेददेवास्तंपरादुर्योन्यत्रात्मनोदेवान्वेदवेदास्तंपरादुर्योन्यत्रात्मनोवेदान्वेद भूतानितंपरादुर्योन्यत्रात्मनोभूतानिवेदसर्वंतंपरादाद्योन्यत्रात्मनःसर्वंवेदेदंब्रह्मेदंक्षत्रमिमेलोकाइमेदेवाइमेवेदाइमा निभूतानीद॰ सर्वंयदयमात्मा॥८०॥सयथादुन्दुभेर्हन्यमानस्यनबाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणायदुन्दुभेस्तुग्रहणेनदुन्दुभ्याघातस्य वाशब्दोगृहीतः॥८१॥सयथाशंखस्यध्मायमानस्यनबाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणायशंखस्यतुग्रहणेनशंखध्मस्यवाशब्दोगृही तः॥८२॥सयथावीणायैवाद्यमानायैनबाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणायवीणायैतुग्रहणेनवीणावादस्यवाशब्दोगृहीतः॥८३॥स यथार्द्रैधाग्नेरभ्याहितस्यपृथग्धूमाविनिश्चरन्त्येवंवाअरेऽस्यमहतोभूतस्यनिश्वसितमेवैतद्यदृग्वेदोयजुर्वेदःसामवेदोऽथर्वाङ्गिर सइतिहासःपुराणंविद्याउपनिषदःश्लोकाःसूत्राण्यनुव्याख्यानानिव्याख्यानानीष्ट॰ हुतमाशितंपायितमयंचलोकःपरश्चलो कःसर्वाणिचभूतान्यस्यैवैतानिसर्वाणिनिश्वसितानि॥८४॥सयथासर्वासामपा॰ समुद्रएकायनमेव॰ सर्वेषा॰ स्पर्शानांत्वगे कायनमेव॰ सर्वेषा॰ रसानांजिह्वैकायनमेव॰ सर्वेषांगंधानांनासिकेएकायनमेव॰ सर्वेषांरूपाणांचक्षुरेकायनमेव॰ सर्वे षा॰ शब्दाना॰ श्रोत्रमेकायनमेव॰ सर्वेषा॰ संकल्पानांमनएकायनमेव॰ सर्वासांविद्याना॰ हृदयमेकायनमेव॰ सर्वेषांक र्मणा॰ हस्तावेकायनमेव॰ सर्वेषामानंदानामुपस्थएकायनमेव॰ सर्वेषांविसर्गाणांपायुरेकायनमेव॰ सर्वेषामध्वनांपादावेकाय

=इष्टंइष्टनिमित्तंधर्मजातं॥हुतंहोमनिमित्तंधर्मजातं॥अशितमन्नदाननिमित्तं॥पायितंपेयदाननिमित्तं॥५=

नन्वत्रापिसामर्थ्याविशेषात्पृथगुक्तिरयुक्तेत्याशंक्याह॥इहत्विति॥ ८५॥सयथासैंधवघनइत्यादिवाक्यतात्पर्यमाह॥सर्वकार्येति॥एतेभ्योभूतेभ्य

इहतुसर्वशास्त्रार्थोपसंहारइतिकृत्वार्थप्राप्तोप्यर्थः स्पष्टीकर्तव्यइतिपृथगुच्यते॥ ८५॥सर्वकार्यप्रलयेविद्यानिमित्तेसैंधवघनवदनंत
रोऽबाह्यःकृत्स्नःप्रज्ञानघनएकआत्मावतिष्ठतेनेतरत्तु॥पूर्वंतुभूतमात्रासंसर्गविशेषाल्लब्धविशेषविज्ञानस्तस्मिन्प्रविलापितेविद्य
याविशेषविज्ञानेतन्निमित्तेचभूतसंसर्गेनप्रेत्यसंज्ञास्तीत्येवंयाज्ञवल्क्येनोक्तासाहोवाच॥अत्रैवमाभगवानेतस्मिन्नेववस्तुनिप्रज्ञा
नघनएव॥नप्रेत्यसंज्ञास्तीतिमोहांतंमोहमध्यमापीपिपदापीपदद्वगमितवानसिसंमोहितवानसीत्यर्थः॥अतोनवैअहमिममात्मा

सयथासैंधवघनोनंतरोबाह्यःकृत्स्नोरसघनएवैवंवाअरेयमात्मानंतरोबाह्यःकृत्स्नःप्रज्ञानघनएवैतेभ्योभूतेभ्यःसमु
त्थायतान्येवानुविनश्यतिनप्रेत्यसंज्ञास्तीत्यरेब्रवीमीतिहोवाचयाज्ञवल्क्यः॥ ८६॥साहोवाचमैत्रेय्यत्रैवमाभगवान्मोहां
तमापीपिपन्नवाअहमिमंविजानामीतिसहोवाचनवाअरेहंमोहंब्रवीम्यविनाशीवाअरेयमात्मानुच्छित्तिधर्मा॥ ८७॥

नमुक्तलक्षणंविजानामिविवेकतइतिसहोवाचनाहंमोहंब्रवीम्यविनाशीवाअरेअयमात्मायतःविनष्टुंशीलमस्येतिविनाशीनविनाशी
अविनाशीविनाशशब्देनविक्रियाअविनाशीत्यविक्रियआत्मेत्यर्थः॥अरेमैत्रेय्ययमात्माप्रकृतोऽनुच्छित्तिधर्मा उच्छित्तिरुच्छेदः उच्छेदोंतो
विनाशः उच्छित्तिर्धर्मोऽस्येतिउच्छित्तिधर्मानउच्छित्तिधर्माअनुच्छित्तिधर्मानापिविक्रियालक्षणोऽन्योप्युच्छेदलक्षणोविनाशोऽस्यविद्यतइत्यर्थः॥

इत्यादेरर्थमाह॥पूर्वंत्विति॥ज्ञानोदयात्प्रागवस्थायामित्यर्थः॥लब्धविशेषविज्ञानः सन्व्यवहरतीतिशेषः॥प्रविलापितेतस्येत्यध्याहारः॥ ८६॥पूर्वोक्त

प्रत्यध्यायमन्यथाप्रतिपादनादात्मनः सविशेषत्वमाशंक्य स एष इत्यादेस्तात्पर्यमाह॥ चतुर्थेपीति॥ केन प्रकारेण तस्य तुल्यत्वमित्याशंक्याह॥ परं ब्रह्मेति॥ अध्यायभेदस्तर्हि कथमित्याशंक्याह॥ उपायेति॥ उपायभेदवदुपेयभेदोपि स्यादित्याशंक्याह॥ उपेयस्त्विति॥ चातुर्थिकादर्थात्पांचमिकस्यार्थस्य भेदं व्यावर्त्तयति॥ स एवेति॥ प्राणपणोपन्यासेन मूर्द्धा ते विपतिष्यतीति मूर्धपातोपन्यासात्प्राणः पणत्वेन गृहीत इति गम्यते तेन शाकल्यब्राह्मणेन निर्विशेषः प्रत्यगात्मा निर्धारित इत्यर्थः॥ विज्ञानमानंदं ब्रह्मेत्यादावुक्तं स्मारयति॥ पुनरिति॥ पंचमसमाप्तौ पुनर्विज्ञानमित्यादिना स एव निर्धारि

चतुर्थेपि प्रपाठके षेक आत्मा तुल्यो निर्धारितः परं ब्रह्म॥ उपायविशेषस्तु तस्याधिगमेऽन्यश्चान्यश्चोपेयस्तु स एवात्मा यश्चतुर्थे अथात आदेशो नेति नेतीति निर्दिष्टः स एव पंचमे प्राणपणोपन्यासेन शाकल्ययाज्ञवल्क्यसंवादेन निर्धारितः पुनः पंचमसमाप्तौ पुनर्जनक याज्ञवल्क्यसंवादे पुनरिहोपनिषत्समाप्तौ चतुर्णामपि प्रपाठकानामेतदात्मनिष्ठता नान्योंतरालेकश्चिदपि विवक्षितोर्थ इत्येतस्मद र्शनायांते उपसंहारः स एष नेति नेत्यादिर्यस्मात्प्रकारशतेनापि निरूप्यमाणे तत्त्वे नेति नेत्यात्मैव निष्ठा नान्योपलभ्यते तर्केण वा आगमेन वा तस्मादेतदेवामृतत्वसाधनं यदेतन्नेति नेत्यात्मपरिज्ञानं सर्वसंन्यासश्चेत्येतमर्थमुपसंजिहीर्षन्नाह एतावदेता वन्मात्रं यदेतन्नेति नेत्यद्वैतात्मदर्शनमिदं च अन्यसहकारिकारणनिरपेक्षमेवारे मैत्रेय्यमृतत्वसाधनं ॥ ॥ ॥ ॥

त इति योजना॥ कूर्चब्राह्मणादावपि स एवोक्त इत्याह॥ पुनर्जनकेति॥ अस्मिन्नपि ब्राह्मणे स एवोक्त इत्याह॥ पुनरिहेति॥ किमिति पूर्वत्र तत्र तत्रोक्तस्य निर्विशेषस्यात्मनोवसाने वचनमित्याशंक्याह॥ चतुर्णामपीति॥ पौर्वापर्यपर्यालोचनायामुपनिषदर्थो निर्विशेषमात्मतत्त्वमित्युपपाद्य वाक्यांतरमवतार्य व्याकरोति॥ यस्मादित्यादिना॥ इति होक्त्वेत्यादिवाक्यमाकांक्षापूर्वकमादाय व्याचष्टे ॥ ॥ ॥

यत्स्थवत्यसीत्यादिना॥ ब्राह्मणार्थमुपसंहरति॥ परिसमाप्तेति॥ तथाप्युपदेशांतरं कर्तव्यमस्तीत्याशंक्याह॥ एतावानिति॥ किमत्र प्रमाणमिति तत्राह॥ एतदिति॥ तथापि परमा निष्ठा संन्यासिनो वक्तव्येति चेन्नेत्याह॥ एषेति॥ आत्मज्ञाने ससंन्यासे सत्यपि पुरुषार्थांतरं कर्तव्यमस्तीत्याशं

यत्स्थवत्यसि यदेव भगवान्वेत्थ तदेव मे विब्रूह्यमृतत्वसाधनमिति तदेतावदेवेति ज्ञेयं त्वया इति ह एवं किलामृतत्वसाधन मात्मज्ञानं प्रियायै भार्यायै उक्त्वा याज्ञवल्क्यः किं कृतवान्यत्पूर्वं प्रतिज्ञातं प्रव्रजिष्यन्नस्मीति तच्चकार विजहार प्रव्रजितवानि

यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति तदितर इतरं जिघ्रति तदितर इतरं रसयते तदितर इतरमभिवदति तदितर इतरं शृणोति तदितर इतरं मनुते तदितर इतरं स्पृशति तदितर इतरं विजानाति यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्तत्केन कं जिघ्रेत्तत्केन कं रसयेत्तत्केन कमभिवदेत्तत्केन कं शृणुयात्तत्केन कं मन्वीत तत्केन कं स्पृशेत्तत्केन कं विजानीयाद्येनेदं सर्वं विजानाति तं केन विजानीयात्स एष नेति नेत्यात्माऽगृह्यो न हि गृह्यतेऽशीर्यो न हि शीर्यतेऽसंगो न हि सज्यतेऽसितो न व्यथते न रिष्यति विज्ञातारमरे केन विजानीयादित्युक्तानुशासनासि मैत्रेय्येतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यो विजहार॥ १५॥ पंचमं ब्राह्मणं समाप्तं॥

स्यर्थः॥ परिसमाप्ता ब्रह्मविद्या संन्यासपर्यवसाना एतावानुपदेश एतद्वेदानु शासनमेषा परमा निष्ठा एष पुरुषार्थः कर्तव्यतांत इति॥ १५॥ १५॥ इदानीं विचारयते शास्त्रार्थ क्याह॥ एष इति॥ इति शब्दो ब्राह्मणसमाप्त्य र्थः॥ १५॥ ससंन्यासमात्मज्ञानममृतत्वसाधनमित्युपपाद्य संन्यासमधिकृत्य विचारमवतारयति॥ इदानीमिति॥ तत्र तत्र प्रागेव विचारितत्वात्किंपु

विरक्तस्य संन्यासो ज्ञानस्यांतरंगं साधनं ज्ञानं तु केवलममृतत्वस्येति शास्त्रार्थविवेकरूपा प्रतिपत्तिरपि प्रागेव सिद्धेति किं तदर्थेन विचारारंभे
णेत्याशंक्याह ॥ यतइति ॥ अतो विचारः कर्त्तव्यो नान्यथा शास्त्रार्थविवेकः स्यादित्युपसंहारार्थो हि शब्दः ॥ वाक्यानामाकुलत्वमेव दर्शयति ॥ या
वदिति ॥ अग्निहोत्रमित्यादीनीत्यादिशब्दादेकाश्रम्यं त्वाचार्याः प्रत्यक्षविधानाद्गार्हस्थ्यस्येत्यादिस्मृतिवाक्यं गृह्यते ॥ कथमेतावता वाक्यानि व्या
कुलानीत्याशंक्याह ॥ अन्यानि चेति ॥ विदित्वा व्युत्थायभिक्षाचर्यं चरंतीति वाक्यं पाठक्रमेण विद्वत्संन्यासपरं अर्थक्रमेण तु विविदिषासंन्या

विवेकप्रतिपत्तये यत आकुलानि हि वाक्यानि दृश्यंते यावज्जीवमग्निहोत्रं जुहुयाद्यावज्जीवं दर्शपूर्णमासाभ्यां यजेत ॥ कुर्वन्नेवेह
कर्माणि जिजीविषेच्छतं समाः एतद्वै जरामर्यं सत्रं यदग्निहोत्रमित्यादीन्यैकाश्रम्यज्ञापकानि अन्यानि च आश्रमांतरप्रतिपादकानि वा
क्यानि विदित्वा व्युत्थाय प्रव्रजंति आत्मानमेव लोकमिच्छंतः प्रव्रजंति ॥ ब्रह्मचर्यं समाप्य गृही भवेद्गृहाद्वनी भूत्वा प्रव्रजेत् ॥ यदि वेतरथा ब्र
ह्मचर्यादेव प्रव्रजेद्गृहाद्वनाद्वेति द्वावेव पंथानावनुनिष्क्रांततरौ भवतः ॥ क्रियापथश्चैव पुरस्तात्संन्यासश्च तयोः संन्यास एवातिरेचयतीति
न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुरित्यादीनि तथास्मृतयश्च ब्रह्मचर्यवान् प्रव्रजति अविशीर्णब्रह्मचर्यो यमिच्छेत्तमावसे

सपरं ॥ आत्मानमेव लोकमिच्छंतः प्रव्रजंतीति तु विविदिषासंन्यासपरमिति विभागः क्रमसंन्यासपरां श्रुतिमुदाहरति ॥ ब्रह्मचर्यमिति ॥ अक्रमसंन्यास
विषयं वाक्यं पठति ॥ यदि वेति ॥ कर्मसंन्यासयोः संन्यासस्याधिक्यप्रदर्शनपरां श्रुतिं दर्शयति ॥ द्वावेवेति ॥ अनुनिष्क्रांततरौ शास्त्रे क्रमेणाभ्युदयनिःश्रेय
सोपायत्वेन प्रथमं पुनरुक्तावित्यर्थः ॥ ज्ञानद्वारा संन्यासस्य मोक्षोपायत्वे श्रुत्यंतरमाह ॥ न कर्मणेति ॥ तानि वा एतान्यवराणि तपांसि न्यास एवात्यरेचयदि
त्यादिवाक्यमादिशब्दार्थः ॥ यथा श्रुतयस्तथा स्मृतयोपि व्याकुला दृश्यंत इत्याह ॥ तथेति ॥ तत्राक्रमसंन्यासे स्मृतिमादावुदाहरति ॥ ब्रह्मचर्यवानिति ॥ प

आश्रमविकल्पविषयांस्मृतिंपठति॥तस्येति॥ब्रह्मचारीपक्ष्यर्थः॥क्रमसंन्यासेप्रमाणमाह॥तथेति॥तत्रैववाक्यांतरंपठति॥प्राजापत्यामिति॥स
र्ववेदसंसर्वस्वंदक्षिणायस्यांतांनिर्वर्त्येत्यर्थः॥आदिपदेनमुंडानिस्तंतवश्चेत्यादिवाक्यंगृह्यतेइत्याद्यास्मृतयश्चेतिपूर्वेणसंबंधः॥व्याकुलानिवाक्या
निदर्शितान्युपसंहरति॥एवमिति॥इतश्चकर्तव्योविचारोतआह॥आचारश्चेति॥श्रुतिस्मृतिविदामाचारःसविरुद्धोलक्ष्यते॥केचिद्ब्रह्मचर्यादेवप्र
व्रजंति॥अपरेतसरिसमाप्यगार्हस्थ्यमेवाचरंतिअन्येतुचतुरोप्याश्रमान्क्रमेणाश्रयंते॥तथाचविनाविचारंनिर्णयासिद्धिरित्यर्थः॥इतश्चास्ति

तस्याश्रमविकल्पमेकेब्रुवतेतथा॥वेदानधीत्यब्रह्मचर्येणपुत्रपौत्रानिच्छेत्पावनार्थंपितॄणां॥अग्नीनाधायविधिवच्चेष्ट्वायज्ञैर्वनंप्र
विश्याथमुनिर्बुभूषेत्॥प्राजापत्यांनिरूप्येष्टिंसर्ववेदसदक्षिणां॥आत्मन्यग्नीन्समारोप्यब्राह्मणःप्रव्रजेद्गृहादित्याद्याः॥एवंश्रुत्या
नविकल्पक्रमयथेष्टाश्रमप्रतिपत्तिपादकानिहिश्रुतिस्मृतिवाक्यानिशतशउपलभ्यंतेइतरेतरविरुद्धानि॥आचारश्चतद्दृष्टांवि
प्रतिपत्तिश्चशास्त्रार्थप्रतिपत्तॄणांबहुविदामपिअतोनशक्यतेशास्त्रार्थोमंदबुद्धिभिर्विवेकेनप्रतिपत्तुंपरिनिश्चितशास्त्रन्यायबु
द्धिभिरेवह्येषांवाक्यानांविषयविभागःशक्यतेऽवधारयितुंतस्मादेषांविषयविभागज्ञापनाययथाबुद्धिसामर्थ्यंविचारयिष्यामःयाव
ज्जीवश्रुत्यादिवाक्यानामन्यार्थासंभवात्क्रियावसानएववेदार्थः विचारस्यकार्यंतेस्याह॥विप्रतिपत्तिश्चेति॥यद्यपिबहुविदःशास्त्रार्थप्र
तिपत्तारोजैमिनिप्रभृतयस्तथापितेषांविप्रतिपत्तिरुपलभ्यते॥केचिदूर्ध्वरेतसआश्रमाःसंतीत्याहुर्नसंतीत्यपरेतत्कुतोविचाराहतेनिश्चय
सिद्धिरित्यर्थः॥अथकेषांचिदंतरेणापिविचारंशास्त्रार्थोविवेकेनप्रतिभास्यतितत्राह॥अतइति॥श्रुतिस्मृत्याचारविप्रतिपत्तेरितियावत्॥केस्तर्हि
शास्त्रार्थोविवेकेनज्ञातुंशक्यतेतत्राह॥परिनिष्ठितेति॥नानाश्रुतिदर्शनादिवशादुपपादितंविचारारंभमुपसंहरति॥तस्मादिति॥विचारकर्तव्यतामु

वृ॰ र॰ ९६

श्रुत्यादिशब्देन कुर्वन्नित्यादिमंत्रवादो गृह्यते॥ ऐकाश्रम्ये हेत्वंतरमाह॥ तमिति॥ एतद्वै जरामर्यं सत्रं यदग्निहोत्रमिति श्रुतेश्च पारिव्राज्यासि द्धिरित्याह॥ जरेति॥ तत्रैव हेत्वंतरमाह॥ लिंगाच्चेति॥ पारिव्राज्यपक्षेपि तदुपपत्तिमाशंक्याह॥ नहीति॥ इतश्च नास्ति पारिव्राज्यमित्याह॥ स्मृतिश्चेति॥ तस्यास्तात्पर्यमाह॥ समंत्रकं हीति॥ नान्यस्य कस्यचिदित्यत्र सूचितमर्थं कथयति॥ स्मृत्यधिकारेति॥ गृहस्थस्य पारिव्राज्याभावे हेत्वंत

तं यत्र पात्रैर्दहंतीत्यंतकर्मश्रवणाज्जरामर्यश्रवणाच्च लिंगाच्च भस्मांतं शरीरमिति नहि पारिव्राज्यपक्षे भस्मांतता शरीरस्य स्यात्स्मृति श्च निषेकादिश्मशानांतो मंत्रैर्यस्योदितो विधिः तस्य शास्त्रेधिकारोस्मिन्ज्ञेयो नान्यस्य कस्यचिदिति॥ समंत्रकं हि यत्कर्म वेदेनेह विधी यते तस्य श्मशानांततां दर्शयति स्मृत्यधिकाराभावप्रदर्शनाच्चात्यंतमेव श्रुत्यधिकाराभावोऽकर्मिणो गम्यते अग्न्युद्वासनापवादाच्च वी रहा वा एष देवानां योग्निमुद्वासयत इति॥ ननु व्युत्थानादिविधानाद्वैकल्पिकक्रियावसानत्वं वेदार्थस्य नान्यार्थत्वाद्व्युत्थानादिश्रुती नां यावज्जीवमग्निहोत्रं जुहोति यावज्जीवं दर्शपूर्णमासाभ्यां यजेतेत्येवमादीनां श्रुतीनां जीवनमात्रनिमित्तत्वाद्युदानशक्यतन्या र्थता कल्पयितुं तदा व्युत्थानादिवाक्यानां कर्मानधिकृतविषयत्वसंभवात्कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समा इति च मंत्रवर्णाज्जर या वा ह्येवास्मान्मुच्यते मृत्युना वेति च जरामृत्युभ्यामन्यत्र कर्मवियोगाच्छिद्रासंभवात् कर्मिणां श्मशानांतत्व रमाह॥ अग्नीतिपूर्वपक्ष

माक्षिपति॥ नन्विति॥ उभयविधिदर्शने षोडशीग्रहणाग्रहणवदधिकारिभेदेन विकल्पो युक्तो न तु क्रियावसान एव वेदार्थ इति पक्षपाते निबंध नमस्तीत्यर्थः॥ तुल्यविधिद्वयदर्शने हि विकल्पो भवत्यत्र तु सावकाशानवकाशत्वेनातुल्यत्वान्नैवमित्याह॥ नान्यार्थत्वादिति॥ तदेव स्फुटयति॥ यावज्जीवमित्यादिना॥ कर्मानधिकृतविषयत्वान्नवैकल्पिकमिति संबंधः क्रियावसानत्वं वेदार्थस्येति शेषः॥ तत्रैव हेत्वंतरमाह॥ कुर्वन्नित्यादि

अ॰ ६

राम: ९६

नवैकल्पिकमित्यत्र पूर्ववदन्वयः॥ अनुष्ठानादिवाक्यानां कथमनधिकृतविषयत्वमत आह॥ काणेति॥ अनधिकृतविषयत्वं तेषामशक्यं वक्तुं ब्रह्मचर्यं समाप्येत्यादावधिकृतविषयेऽक्रमदर्शनादिति शंकते॥ पारिव्राज्येति॥ गत्यंतरं दर्शयन्नुत्तरमाह॥ न विश्वजिदिति॥ यावज्जीवमग्निहोत्रं जुहोतीत्युत्सर्गः॥ तस्यापवादो विश्वजित्सर्वमेधौ तदनुष्ठाने सर्वस्वदानादेव साधनसंपद्विरहात्पारिव्राज्यस्यावश्यंभावित्वात्तस्तद्विषयं क्रमविधानमित्यर्थः॥ तदेव स्फुटयति॥ यावज्जीवेति॥ कथं क्रमविधेरेवंविषयत्वं कल्पकाभावादित्याशंक्याह॥ विरोधानुपपत्तेरिति॥ गृहस्थस्यापि विरक्तस्य

नवैकल्पिकं काणकुब्जादयोपि कर्मण्यनधिकृता अनुग्राह्या एव श्रुत्येति व्युत्थानाद्याश्रमांतरविधानं नानुपपन्नं पारिव्राज्यक्रमविधानस्यानवकाशत्वमिति चेन्न॥ विश्वजित्सर्वमेधयोर्यावज्जीवविध्यपवादत्वात् यावज्जीवाग्निहोत्रादिविधेर्विश्वजित्सर्वमेधयोरेवापवादत्वात्र चक्रमप्रतिपत्तिसंभवात् ब्रह्मचर्यं समाप्य गृही भवेद्गृहाद्वनी भूत्वा प्रव्रजेदिति विरोधानुपपत्तेर्नह्येवंविषयत्वे पारिव्राज्यक्रमविधानवाक्यस्य कश्चिद्विरोधः क्रमप्रतिपत्तेरन्यविषयपरिकल्पनायां तु यावज्जीवविधानश्रुतिः स्वविषयात्संकोचिता स्यात्क्रमप्रतिपत्तेस्तु विश्वजित्सर्वमेधविषयत्वान्न कश्चिद्बाधः नात्मज्ञानस्यामृतत्वहेतुत्वाभ्युपगमाद्यत्तावदात्मेत्येवोपासीतेत्यारभ्य स एष नेति नेत्येतदंतेन ग्रंथेन यदुपसंहृतमात्मज्ञानं तदमृतत्वसाधनमित्यभ्युपगतं भवता॥ पारिव्राज्यमिति किमिति क्रमविषयो नेष्यते तत्राह॥ अन्यविषयेति॥ क्रमविधेरपित्वपक्षे संकोचः स्यादित्याशंक्याह॥ क्रमप्रतिपत्तेस्त्विति॥ सति ज्ञाने कर्मत्यागो निषिध्यते सत्यां वा विविदिषायामिति विकल्प्याद्यं दूषयति सिद्धांती॥ नात्मज्ञानस्येति॥ विद्वत्संन्यासस्यावश्यंभावित्वान्न कर्मावसान एव वेदार्थ इति॥ संगृहीतं वस्तु विवृणोति॥ यत्तावदिति॥ विद्यासूत्रादारभ्य नेति नेति निषेधवाक्यांतेन ग्रंथेन यदात्मज्ञानमुपसंहृतं तत्तावन्मुक्तिसाधनमिति भवतापि यस्मा

३७२

बृ.र.
९७

अंन्यज्ञानंपरस्यांगं=१

दुपगतं परांगं चात्मविज्ञानादन्यत्रैसवधारणादितिन्यायात्तस्माज्ज्ञानेसतिकर्मानुष्ठानंनिरवकाशमित्यर्थः॥अथात्मज्ञानंकर्मसहितममृतत्वसाधन
मिष्यतेनकेवलंतथाचज्ञानोत्तरकालमपिनकर्मत्यागसिद्धिरितिशंकते॥तत्रेति॥आत्मज्ञानस्यामृतत्वसाधनत्वेसत्यपीतियावत्॥कर्मनिरपेक्षत्वंचे
त्तदात्मज्ञानस्यभवान्तस्सहतेकिमितितर्हिज्ञानमेवोपगतमितिसिद्धांतीपृच्छति॥तत्रेति॥तस्यकर्मानपेक्षत्वानंगीकारेसतीत्यर्थः॥तत्रपूर्ववादीशा
स्त्रीयत्वादात्मज्ञानममृतत्वसाधनमभ्युपगतमितिशंकते॥शृण्विति॥ज्ञापयतिवेदइतिशेषः॥शास्त्रानुसारेणात्मज्ञानांगीकारेकर्मनिरपेक्षमेवात्मज्ञा

तत्रैतावदमृतत्वसाधनमन्यनिरपेक्षमित्येतन्नमृष्यतेतत्रभवंतंपृच्छामिकिमर्थमात्मज्ञानंमर्षयतिभवानितिशृणुतत्रकारणंयथास्वर्गका
मस्यस्वर्गप्राप्त्युपायमजानतोग्निहोत्रादिस्वर्गप्राप्तिसाधनंज्ञापयतितथेहाप्यमृतत्वप्रतिपित्सोरमृतत्वप्राप्त्युपायमजानतोयदेवभगवा
न्वेत्थतदेवमेविब्रूहीत्येवमाकांक्षितममृतत्वसाधनमेतावदरेइत्येवमादौवेदेनज्ञाप्यतेइत्येवंतर्हियथाज्ञापितंअग्निहोत्रादिस्वर्गसाधनम
भ्युपगम्यतेतथेहाप्यात्मज्ञानंयथाज्ञाप्यतेतत्तथाभूतमेवामृतत्वसाधनमात्मज्ञानमभ्युपगंतुंयुक्तंतुल्यप्रामाण्यादुभयत्रयद्येवंकिंस्यात्॥
सर्वकर्महेतूपमर्दकत्वादात्मज्ञानस्यविद्योद्भवेकर्मनिवृत्तिःस्याद्दाराग्निसंबद्धानांतावदग्निहोत्रादिकर्मणांभेदबुद्धिविषयसंप्रदानका
रकसाध्यत्वमन्यबुद्धिपरिच्छेद्याह्यग्निदेवतासंप्रदानकारकभूतामंतरेणनहितत्कर्मनिर्वर्त्यतेयथाहि नमोस्साधनंसेत्स्यतीतिपरिहरति॥एवं
तर्हीति॥उभयत्रज्ञानेकर्मणिचेत्यर्थः॥यद्वा॥ज्ञानस्यामृतत्वसाधनत्वेतस्यकर्मनिरपेक्षत्वेचेत्यर्थः॥तुल्यप्रामाण्यात्प्रामाण्यस्यतुल्यत्वाद्वेदस्येतिशेषः॥यथा
शास्त्रंज्ञानाभ्युपगमेपिकथंतत्केवलंकैवल्यकारणमितिपृच्छति॥यद्येवमिति॥शास्त्रानुसारेणज्ञानमभ्युपगच्छंतंप्रत्याह॥सर्वकर्मेति॥आत्मज्ञानस्यतदुप
मर्दकत्वंदर्शयितुंकर्महेतुंतावद्दर्शयति॥दाराग्नीति॥अग्निहोत्रादीनांसंप्रदानकारकसाध्यत्वंअतिरेकद्वारासाधयति॥अन्येति॥तथापिकथमात्मज्ञानस्य

अ.
६

रामः
९७

विद्यायाः श्रुतिजन्यत्वेन बलवत्त्वं दर्शयति॥ अन्योसावित्यादिना॥ ननु श्रुचौ देशे दिवसादौ काले शास्त्राचार्यादिवशादुत्पन्नं ज्ञानं पुमर्थसाधनं शुचौ देशे
प्रतिष्ठाप्येत्यादिस्मृतेस्तथा च कथं तस्य भेदबुध्युपमर्दकत्वमत आह॥ न चेति॥ यत्रैकाग्रता तत्राविशेषादितिन्यायाज्ज्ञानसाधनस्य समाधेरपि न देशाद्यपे
क्षा दूरतस्तु कूटस्थवस्तुतंत्रज्ञानस्येति भावः॥ विमतं देशाद्यपेक्षं शास्त्रार्थत्वाद्धर्मवदित्याशंक्य पुरुषतंत्रत्वमुपाधिरित्याह॥ क्रियावस्त्विति॥ सा
धनव्याप्तिं दूषयति॥ ज्ञानं त्विति॥ विमतं न देशाद्यपेक्षं प्रमाणत्वादुष्णाग्निज्ञानवदिति प्रत्यनुमानमित्याह॥ यथेति॥ आत्मज्ञानस्य सर्वकर्महेतूपमर्दक

संप्रदानकारकबुध्या संप्रदानकारकं कर्मसाधनत्वेनोपदिश्यते सेह विद्यया निवर्त्यते॥ अन्योसावन्योहमस्मीति न स वेद यदेवासं परादुर्योन्य
त्रात्मनो देवान्वेद मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति॥ एकधैवानुद्रष्टव्यं सर्वमात्मानं पश्यतीत्यादिश्रुतिभ्यः न च देशकालनिमित्ता
द्यपेक्षत्वमवस्थितात्मवस्तुविषयत्वादात्मज्ञानस्य क्रियायास्तु पुरुषतंत्रत्वात्स्याद्देशकालनिमित्तापेक्षत्वं ज्ञानं तु वस्तुतंत्रत्वान्न देशकालनि
मित्ताद्यपेक्षते यथाग्निरुष्ण आकाशोऽमूर्त इति तथात्मविज्ञानमपि नन्वेवं सति प्रमाणभूतस्य कर्मविधेर्निरोधः स्यान्न च तुल्यप्रमाणयोरित
रेतरनिरोधो युक्तः न स्वाभाविकभेदबुद्धिमात्रनिरोधकत्वात्॥ न हि विध्यंतरनिरोधकमात्मज्ञानं स्वाभाविकभेदबुद्धिमात्रं निरुणद्धि तथापि
हेत्वपहारात्कर्मानुपपत्तेर्विधिनिरोध एव स्यादिति चेन्न कामप्रतिषेधात्काम्यप्रवृत्तिनिरोधवद्दोषा त्वेदोषमाशंकते॥ नन्विति॥ इष्टापत्तिमाशं

क्याह॥ न चेति॥ कर्मकांडेन कांडांतरस्यापि विरोधसंभवादित्यर्थः॥ साक्षादात्मज्ञानं कर्मविधिनिरोध्यर्थाद्वेति विकल्प्याद्यं दूषयति॥ नेत्यादिना॥ तदेव
स्फोरयति॥ न हि विध्यंतरेति॥ द्वितीयं शंकते॥ तथापीति॥ यथा न कामी स्यादिति निषेधात्कस्यचित्कामप्रवृत्तिर्न भवतीत्येतावता न सर्वा न्प्रतिका
म्यविधिर्निरुध्यते तथा कस्यचिदात्मज्ञानात्कर्मविधिनिरोधेपि न सर्वान्प्रतिअसौ निरुद्धो भविष्यतीति परिहरति॥ न कामेति॥ ॥ ॥

७१३
कुट २

दृष्टांतमेवस्पष्टयति॥यथेत्यादिना॥प्रतिषेधशास्त्रार्थानभिज्ञंप्रतितदुपपत्तेरितिभावः॥अभिप्रायमविद्वानाशंकते॥कामप्रतिषेधविधिनेति॥अनर्थकत्वज्ञानंकामस्येतिशेषः॥प्रवृत्त्यनुपपत्तेःकाम्येष्वकर्मस्वितिद्रष्टव्यं॥निरुद्धःस्यात्काम्यविधिरित्यध्याहर्तव्यं॥गूढाभिसंधिःसिद्धांतीब्रूते॥भवतीति॥पुनरभिप्रायमप्रतिपद्यमानश्चोदयति॥यथेति॥एवमितिज्ञानेनकर्मविधिनिरोधेसतीतियावत्॥तत्प्रामाण्यानुपपत्तिरितिशेषः॥तदेवचोद्यंविशदयति॥अननुष्ठेयत्वइति॥तेषामनुष्ठेयानामग्निहोत्रादीनांकर्मणांयेविधयस्तेषामितियावत्॥सिद्धांतीस्वाभिसंधिमुद्घाटयन्नुत्तरमाह॥ने

यथास्वर्गकामोयजेतेतिस्वर्गसाधनेयागेप्रवृत्तस्यकामप्रतिषेधविधेःकामेविहतेकाम्ययागानुष्ठानप्रवृत्तिर्निरुध्यतेनचैतावताकाम्यविधिर्निरुद्धोभवतिकामप्रतिषेधविधिनाकाम्यविधेरनर्थकत्वज्ञानात्प्रवृत्त्यनुपपत्तेर्निरुद्धएवस्यादितिचेद्भवत्वेवंकर्मविधिनिरोधोयथाकामप्रतिषेधेकाम्यविधेरेवंप्रामाण्यानुपपत्तिरितिचेदननुष्ठेयत्वेनुष्ठात्रभावात्तदनुष्ठानविध्यानर्थक्यादप्रामाण्यमेवकर्मविधीनामितिचेन्नप्रागात्मज्ञानात्प्रवृत्त्युपपत्तेःस्वाभाविकस्यक्रियाकारकफलभेदविज्ञानस्यप्रागात्मज्ञानात्कर्महेतुत्वमुपपद्यतएवयथाकामविषयदोषविज्ञानोत्पत्तेःप्राक्काम्यकर्मप्रवृत्तिहेतुत्वंस्यादेवस्वर्गादीच्छायाःस्वाभाविक्यास्तद्वत्॥तथासत्यनर्थार्थेवेदइतिचेन्नार्थानर्थयोरभिप्रायतंत्रत्वान्मोक्षमेकंवर्जयित्वान्यस्याविद्याविषयत्वात्पुरुषाभिप्रायतंत्रोह्यर्थानर्थौमरणादिकाम्येष्टिदर्श

स्यादिना॥उपपत्तिमेवोपदर्शयति॥स्वाभाविकस्येति॥तदेवदृष्टांतेनस्पष्टयति॥यथेति॥अज्ञानावस्थायामेवकर्मविधिप्रवृत्तिरित्यत्रानिष्टमाशंकते॥तथासतीति॥कर्मविधेरपिपुरुषाभिप्रायवशात्पुरुषार्थोपयोगित्वसिद्धेर्नानिष्टापत्तिरित्युत्तरमाह॥नार्थेति॥अर्थस्यपुरुषाभिप्रायतंत्रत्वेमोक्षस्यापिवास्तवंपुरुषार्थत्वंनस्यादित्याशंक्याह॥मोक्षमिति॥अर्थानर्थयोरभिप्रायतंत्रत्वंसाधयति॥पुरुषेति॥मरणंमहाप्रस्थानमित्यादिकाम्यंकृत्वाजीवदवस्था

कर्मविधीनामात्मज्ञानात्प्राचीनत्वं प्रतिपादितमुपसंहरति॥तस्मादिति॥तथापि प्रकृते किमायातं तत्राह॥तस्मान्नेति॥तत्र प्रमाणमाह॥इत्यतइति
॥अतः शब्दार्थं स्फुटयति॥कर्मेति॥ज्ञानस्य कर्मविरोधित्वेन तन्निरपेक्षत्वे च सिद्धे फलितमाह॥अतइति॥आत्मज्ञानस्यामृतत्वहेतुत्वाभ्युपगमादित्यादेरु
क्तन्यायादात्मसाक्षात्कारस्य केवलस्य कैवल्यकारणत्वसिद्धेः सति तस्मिन्जीवन्मुक्तस्य कर्मानुष्ठानानवकाशात्तदुद्देशेन प्रवृत्तस्याधीतवेदस्य विदितपदप
दार्थस्यापरोक्षज्ञानवतस्तन्मात्रेण प्रमाणापेक्षामंतरेण सिद्धं सर्वकर्मत्यागलक्षणं पारिव्राज्यमेष एव विद्वत्संन्यासः॥नत्वपरोक्षज्ञानवतः प्रारब्धफल

तस्माद्यावदात्मज्ञानविधेराभिमुख्यं तावदेव कर्मविधयस्तस्मान्नात्मज्ञानसहभावित्वं कर्मणामित्यतो युक्तमवधारणं सिद्धमात्मज्ञानमात्रमे
वामृतत्वसाधनमेतावद्रे खल्वमृतत्वमितिकर्मनिरपेक्षताज्ज्ञानस्य अतो विदुषस्तावत्पारिव्राज्यं सिद्धं संप्रदानादिकर्मकारकजात्यादि
भून्याविक्रियब्रह्मात्मदृढप्रतिपत्तिमात्रेण वचनमंतरेणाप्युक्तन्यायतः॥तथा चव्याख्यातमेतत्येषां नोयमात्मायं लोक इति हेतुवचनेनपू
र्वे विद्वांसः प्रजामकामयमाना व्युत्तिष्ठंतीति पारिव्राज्यं विदुषामात्मलोकावबोधादेव तथा च विविदिषोरपि सिद्धं पारिव्राज्यमेतमेवात्मानं

प्राप्तिमंतरेणानुष्ठेयं किंचिदस्तीति भावः॥विध्यविषयत्वाज्ज्ञातसाक्षात्कारस्य कथं पारिव्राज्यं तत्राह॥वचनमिति॥विधिं विनापि फलभूतं पारिव्राज्य
मित्यर्थः॥उक्तन्यायः शांतादिवाक्यसूचितः॥सत्यां जिज्ञासायां कर्मत्यागो न शक्यो वेनिषेद्धुमिति वदन्विविदिषासंन्यासं साधयति॥तथा चेत्यादिना॥
विदुषामात्मसाक्षात्कारार्थिनां तत्परोक्षनिश्चयवतामिति यावत्॥आत्मलोकस्यावबोधोपि व्युत्थानहेतुः परोक्षनिश्चय एव सतीतरस्मिन्फलावस्थस्य
व्युत्थानाद्यनुष्ठानायोगात्तदंतरेण तस्याप्यभावाच्च॥उक्तं हि॥शमादिवदुपरतेरपि तत्त्वसाक्षात्कारे नियतं साधनत्वं तत्राह॥तथा चेति॥एतत्पारिव्राज्यमि
ति संबंधः॥विविदिषुर्नामाधीतवेदो विचारप्रयोजकापातिकज्ञानवान्मुमुक्षुर्मोक्षसाधनं तत्त्वसाक्षात्कारमपेक्षमाणस्तस्मिन्परोक्षनिश्चयेनापि भून्यो वि

इतश्च विविदिषासंन्यासोस्तीत्याह॥ कर्मणां चेति॥ तथा चाविद्याविरुद्धां विद्यामिच्छन्नशेषाणि कर्माणि शरीरधारणमात्रकारणेतराणि त्यजेदिति शेषः
॥ विविदिषासंन्यासे हेतुत्वं तत्र संसाधयति॥ अविद्याविषये चेति॥ चतुर्विधफलानि कर्माण्यविद्याविषये परं संभवंति न तु साध्ये वस्तुनीत्यतो वस्तुजिज्ञा
सायां त्याज्यानि तानीत्यर्थः॥ कथं तर्हि कर्मणामुत्तमफलान्वयस्तत्राह॥ आत्मेति॥ बुद्धिशुद्धिद्वारा ज्ञाने हेतुत्वात्कर्मणामस्ति प्रणाड्या परमपुरु
षार्थान्वय इत्यर्थः॥ संन्यासः कर्मयोगश्च निःश्रेयसकरावुभाविति स्मृतेर्विविदिषूणां मुमुक्षूणां कथं पारिव्राज्यस्यैव कर्तव्यत्वमित्याशंक्याह॥ अथेति॥
यथा विद्वत्संन्यासस्तथा विवि- दिषासंन्यासेपि यथोक्तरीत्या संभावितेसतीति यावत्॥ आत्मज्ञानोत्पादनं प्रत्याश्रमधर्माणां बलाबलविचारणायां

लोकमिच्छंतः प्रव्रजंतीति वचनात्कर्मणां चाविद्वद्विषयत्वमवोचाम अविद्याविषये चोत्पत्त्याप्तिविकारसंस्कारार्थानि कर्माणीत्यत आत्मसं
स्कारद्वारेणात्मज्ञानसाधनत्वमपि कर्मणामवोचाम यज्ञादिभिर्विविदिषंतीति॥ अथैवं सत्यविद्वद्विषयाणामाश्रमकर्मणां बलाबलविचा
रणायामात्मज्ञानोत्पादनं प्रति यमप्रधानानाममानित्वादीनां मानसानां च ध्यानज्ञानवैराग्यादीनां संनिपत्योपकारकत्वं हिंसारागद्वेषादिबा
हुल्याद्बहुक्लिष्टकर्मविमिश्रितादितरे इत्यतः पारिव्राज्यं मुमुक्षूणां प्रशंसंति॥ त्याग एव हि सर्वेषामुक्तानामपि कर्मणां॥ वैराग्यं पुनरेतस्य
मोक्षस्य परमो विधिः॥ तरंगत्वबहिरंगत्वचिंतातस्तांस्त्यामित्यर्थः॥ अहिंसासत्यास्तेयब्रह्मचर्यादयो यमाः॥ वैराग्यादीनामित्यादिशब्देन शमाद
यो गृह्यंते॥ इतरे नियमप्रधाना आश्रमधर्मा बहुनाक्लिष्टेन पापेन कर्मणा संकीर्णा हिंसादिप्राचुर्याद्यमान्यतस्त्यकुर्वाणो नियमान्केवलान्भजन्नि
ति स्मृतेस्तस्मात्पूर्वेषामंतरंगत्वमुत्तरेषां बहिरंगत्वमित्याशयेनाह॥ हिंसेति॥ कर्मयोगापेक्षया तत्त्यागस्याधिकारिविशेषं प्रति प्रशस्तत्वमुपसं
हरति॥ इत्यत इति॥ तत्प्रशंसाप्रकारमेवाभिनयति त्याग एवेति॥ उक्तानामाश्रमैरनुष्ठेयत्वेनेति शेषः॥ तत्त्यागे हेतुमाह॥ वैराग्यमिति॥ मोक्षस्य

विवेकात्

उत्तमप्रमर्थार्थिनः संन्यासद्वाराश्रवणादिकर्त्तव्यमित्यत्रवाक्यांतरमुदाहरति॥ किंतेधनेनेति॥ अथपित्रादिभिर्गतंपंथानमन्वेषयामिनात्मानमित्याशंक्याह॥ पितामहाइति॥ विविदिषासंन्यासेसांख्यादिसंमतिमाह॥ एवमिति॥ यथाहुःसांख्याः ज्ञानेनचापवर्गोविपर्ययादिष्यतेबंधइतिविवेकख्यातिपर्यंतमज्ञानान्वितस्त्रैविधस्यमितिचाविपर्ययाद्धिसुद्धंकेवलमुत्पद्यतेज्ञानमितिच योगशास्त्रविदश्चाहुः॥ अभ्यासवैराग्याभ्यांतन्निरोधइति॥ तत्रवैराग्येणविषयस्रोतःपरिखिलीक्रियतेविवेकदर्शनाभ्यासेनकल्याणस्रोतउद्घाट्यतइतिच॥ दृष्टानुश्रविकविषयवितृष्णस्यवशीकारसंज्ञावैराग्यमितिच॥ इतश्चसंन्यासोज्ञानंप्रतिप्रत्यासन्नइत्याह॥ कामेति॥ संन्यासिनःकामप्रवृत्त्यभावेपिकथंसंन्यास

किंतेधनेनकिमुबंधुभिस्तेकिंतेदारैर्ब्राह्मणयोमरिष्यसि॥ आत्मानमन्विच्छगुहांप्रविष्टंपितामहास्तेक्वगताःपिताच॥ एवंसांख्ययोगशास्त्रेषुचसंन्यासोज्ञानंप्रतिप्रत्यासन्नउच्यते॥ कामप्रवृत्त्यभावाच्चकामप्रवृत्तेर्हिज्ञानप्रतिकूलतासर्वशास्त्रेषुप्रसिद्धातस्माद्विरक्तस्यमुमुक्षोर्विनापिज्ञानेनब्रह्मचर्यादेवप्रव्रजेदित्यादिउपपन्नंननुसावकाशत्वादनधिकृतविषयमेतदित्युक्तंयावज्जीवश्रुत्युपरोधान्नैषदोषोनितरांसावकाशत्वाद्यावज्जीवश्रुतीनामविद्वत्कामिकर्तव्यतांह्यवोचामसर्वकर्मणांनत्वनिरपेक्षमेवजीवननिमित्तमेवकर्तव्यंक

स्यज्ञानंप्रतिप्रत्यासन्नत्वमित्याशंक्याह॥ कामप्रवृत्तेरिति॥ इतिनुकामयमानः॥ कामएषक्रोधएषरजोगुणसमुद्भवः॥ महाशनोमहापाप्माविध्येनमिहवैरिणमित्यादीनिशास्त्राणि विविदिषासंन्यासमुपसंहरति॥ तस्मादिति॥ यथोक्तस्याधिकारिणोदर्शितयाविधयाज्ञानेनविनापिसंन्यासस्यप्राप्तत्वाद्ब्रह्मचर्यादेवेत्यादिविधिवाक्यमुपपन्नमितियोजना॥ अथपारिव्राज्यविधानमनधिकृतविषयमुचितंतथासतिसावकाशत्वादनधिकृतविषयं॥ यावज्जीवश्रुतिविरोधात्तस्यानिरवकाशत्वात्सावकाशनिरवकाशयोश्चनिरवकाशस्यैवबलवत्वादित्युक्तंशंकते॥ नन्विति॥ यावज्जीवश्रुतेर्निरवकाशत्वंदूषयति॥

जीवनमात्रंनिमित्तीकृत्यचोदितंकर्मकथंकामिनाकर्तव्यंतत्राह॥नत्विति॥प्रत्यवायपरिहारादेरिष्टत्वादित्यर्थः॥अनुष्ठातृस्वरूपनिरूपणायामपिन
जीवनमात्रंनिमित्तीकृत्यकर्तव्यमित्याह॥प्रायेणेति॥तथापिनित्येषुकर्मसुनकामनिमित्ताप्रवृत्तिस्तत्रकाम्यमानफलाभावादित्याशंक्याह॥कामश्चे
ति॥प्रत्यवायपरिहारादेरपिकामितत्वंयुक्तमितिभावः॥तथापिनित्येकर्मणिकाम्यमानंफलंविध्युद्देशेकिंचिन्नश्रुतमित्याशंक्याह॥अनेकेति॥कर्म
भिरनेकैःसाधनैर्यदुरितनिबर्हणादिसाध्यंतदेवास्याश्रुतमपिविध्युद्देशेसाध्यंभवति यद्यद्धिकुरुतेजंतुस्तत्तत्कामस्यचेष्टितमितिस्मृतेस्तद्व्यतिरेकेण
प्रवृत्त्यनुपपत्तेस्ततोनित्येपिकामितंफलमस्तीत्यर्थः॥ननुवैदिकानांकर्मणांनियतफलत्वात्कामोपिनियतफलोयुक्तस्तथाचनित्येषुतदभावान्नकामितं

प्रायेणहिपुरुषाःकामबहुलाःकामश्चानेकविषयोनेककर्मसाधनसाध्यश्चानेकफलसाधनानिचवैदिकानिकर्माणिदाराग्निसंबंधपु
रुषकर्तव्यानिपुनःपुनश्चानुष्ठीयमानानिबहुफलानिकृष्यादिवद्वर्षशतसमाप्यानिचगार्हस्थ्येवारण्येवातत्तदपेक्षयायावज्जीवश्रुत
यःकुर्वन्नेवेहकर्माणीतिचमंत्रवर्णः॥तस्मिंश्चपक्षेविश्वजित्सर्वमेधयोःकर्मपरित्यागोयस्मिंश्चपक्षेयावज्जीवानुष्ठानंतदाश्रमान्तरत्वंभ
स्यांततान्यशरीरस्येतरवर्णापेक्षयावायावज्जीवश्रुतिः फलंसेत्स्यतितत्राह॥अनेकफलेति॥अथतानिपुरुषमात्रकर्तव्यानीतिकुतोविवक्षित
संन्याससिद्धिस्तत्राह॥दारेति॥नन्वविरक्तेनापिगृहिणासकृदेवतान्यनुष्ठेयानितावताविधेश्चरितार्थत्वात्तथाचकथंफलबाहुल्यमित्याशंक्याह॥
पुनःपुनश्चेति॥यावज्जीवोपबंधादावृत्तिसिद्धिरितिभावः तर्हियावज्जीवश्रुतिवशाद्शेषाश्रमानुष्ठेयान्यनवरतमग्निहोत्रादीनिकुतोयथोक्त
संन्यासोपपत्तिरित्याशंक्याह॥वर्षशतेति॥अविरक्तगृहिविषयत्वंश्रुतिमंत्रयोरुपसंहरति॥अतइति॥यत्तुयावज्जीवश्रुतेरपवादोविश्वजित्स
र्वमेधयोरितितदपिकामिगृहिविषयत्वान्नब्रह्मचर्यादेवप्रव्रजेदितिविध्यपवादकमित्याह॥तस्मिंश्चेति॥परोक्तंलिंगमपितद्विषयत्वान्नसर्वस्यवेद

यावज्जीवश्रुतेर्गसंतरमाह॥इतरेति॥कथंसाक्षत्रियवैश्यविषयत्वेनप्रवृत्तात्रैवर्णिकानामपिपारिव्राज्यपरिग्रहादित्याशंक्याह॥नहीति॥यावज्जीवश्रुतिव
दैकाश्रम्यप्रतिपादकस्मृतीनामपिक्षत्रियादिविषयत्वमाह॥तथेति॥श्रुतिस्मृतीनांकर्मतत्संन्यासार्थानांभिन्नविषयत्वेफलितमुपसंहरति॥तस्मादिति॥

नहिक्षत्रियवैश्ययोः पारिव्राज्यप्रतिपत्तिरस्तितथामंत्रेयस्योदितोविधिरैकाश्रम्यंत्वाचार्याइत्येवमादीनांक्षत्रियवैश्यापेक्षत्वंतस्मात्सुरु
षसामर्थ्यज्ञानवैराग्यकामाद्यपेक्षयात्वुत्थानविकल्पक्रमपारिव्राज्यप्रतिपत्तिप्रकाराः नविरुध्यंतेनधिकृतानांचपृथग्विधानात्पारिव्रा

अथवंशः पौतिमाष्योगौपवनाद्गौपवनः पौतिमाष्यात्पौतिमाष्योगौपवनाद्गौपवनः कौशिकात्कौशिकः कौंडिन्यात्कौंडिन्यः शां
डिल्याच्छांडिल्यः कौशिकाच्चगौतमाच्चगौतमः॥१॥आग्निवेश्यादाग्निवेश्योगार्ग्याद्गार्ग्योगार्ग्याद्गार्ग्योगौतमाद्गौतमः सैतवा
त्सैतवः पाराशर्यायणात्पाराशर्यायणोगार्ग्यायणाद्गार्ग्यायणउद्दालकायनादुद्दालकायनोजाबालायनाज्जाबालायनोमाध्यंदिनाय
नान्माध्यंदिनायनः सौकरायणात्सौकरायणः काषायणात्काषायणः सायकायनात्सायकायनः कौशिकायनेः कौशिकायनिः॥१०॥

ज्यस्यस्नातकोवास्नातकोवोत्सन्नाग्निरनग्निकोवेत्यादिनातस्मात्सिद्धान्याश्रमांतराण्यधिकृतानामेव॥८८॥इतिश्रीबृहदारण्यकेषष्ठेप्रपाठ
केपंचमंब्राह्मणंभाष्यं॥अथानंतरंयाज्ञवल्कीयस्यकांडस्यवंशआरभ्यतेयथामधुकांडस्यवंशोव्याख्यानंतुपूर्ववत्ब्रह्मस्वयंभुइतिहब्रह्मणेनमः॥

यत्तुकाणकुत्सांधाद्योपिकर्मण्यनधिकृताअनुग्राह्याएवश्रुत्येतितत्राह॥अनधिकृतानांचेति॥सत्यामेवभार्यायांत्यक्ताग्निरुत्सन्नाग्निस्तस्यामसत्यांपरित्यक्ता
ग्निरनग्निकइतिभेदः॥आश्रमांतरविषयश्रुतिस्मृतीनामनधिकृतविषयत्वाभावेसिद्धमर्थंनिगमयति॥तस्मादिति॥ इतिकाण्वेबृहदारण्यकेमैत्रेयीब्राह्मणंपं

सांगोपांगस्यसफलस्यात्मविज्ञानस्यप्रवचनानंतर्यमथशब्दार्थमाह॥अनंतरमिति॥यथाप्रथमांतः शिष्योगुरुस्तुपंचम्यंतइतिचतुर्थीतेव्याख्यातंत
थात्रापीत्याह॥व्याख्यानंत्विति॥इत्थमागमोपपत्तिभ्यांससंन्यासेतिकर्त्तव्यताकमात्मज्ञानममृतत्वसाधनंसिद्धमित्युपसंहर्त्तुमितिशब्दः॥परिसमाप्तौमंग

ॐमिति॥हरिः ॐ तत्सदितिश्रीमत्परमहंसपारिव्राजकाचार्यश्रीमद्गोविंदभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवत्पूज्यपादकृतेश्रीबृहदारण्य

घृतकौशिकाद्घृतकौशिकःपाराशर्यायणात्पाराशर्यायणःपाराशर्यात्पाराशर्योजातूकर्ण्याज्जातूकर्ण्यआसुरायणाच्चयास्का
च्चासुरायणस्त्रैवणेस्त्रैवणिरौपजंधनेरौपजंधनिरासुरेरासुरिर्भारद्वाजाद्भारद्वाजआत्रेयादात्रेयोमांटेर्मांटिर्गौतमाद्गौतमोगौतमा
द्गौतमोवात्स्याद्वात्स्यःशांडिल्याच्छांडिल्यःकैशोर्यात्काप्यात्कैशोर्यःकाप्यःकुमारहारितात्कुमारहारितोगालवाद्गालवोविदर्भीकौंडि
न्याद्विदर्भीकौंडिन्योवत्सनपातोबाभ्रवाद्वत्सनपाद्बाभ्रवः॥२१॥पथःसौभरात्पंथाःसौभरोयास्यादांगिरसादयास्यआंगिरसआभूतेस्त्वा
ष्ट्रादाभूतिस्त्वाष्ट्रोविश्वरूपात्त्वाष्ट्राद्विश्वरूपस्त्वाष्ट्रोश्विभ्यामश्विनौदधीचआथर्वणाद्दध्यङ्ङाथर्वणोथर्वणोदैवादथर्वादैवोमृत्योःप्राध्वंसनान्मृत्युःप्राध्वंसनःप्रध्वंसनात्प्रध्वंसनएकर्षेरेकर्षिर्विप्रचित्तेर्विप्रचित्तिर्व्यष्टेर्व्यष्टिःसनारोःसनारुःसनातनात्सनातनःसनगात्सनगःपरमेष्ठिनःपरमेष्ठीब्रह्मणोब्रह्मस्वयंभुब्रह्मणेनमः॥२२॥ ॥इतिश्रीबृहदारण्यकेचतुर्थोध्यायः॥४॥मूल३००भाष्य२१००टीका

केभाष्येषष्ठोध्यायःसमाप्तः॥

लमाचरति॥ब्रह्मेति॥ॐतत्सत्॥ ॥इतिश्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानंदभगवत्पूज्यपादशिष्यश्रीम
द्भगवदानंदज्ञानविरचितायांश्रीमद्बृहदारण्यकभाष्यटीकायांषष्ठेप्रपाठकेपंचमंषष्ठंचब्राह्मणंसमाप्तम्।अयंषष्ठोध्यायः॥ ६ ॥ ॥ ॥ ॥

# अथसटीकबृहदारण्योपनिषद्भाष्यस्यसप्तमोध्यायःप्रारभ्यते

श्रीगणेशायनमः॥हरिः ॐ॥पूर्वस्मिन्नध्याये ब्रह्मात्मज्ञानं सफलं सांगोपांगं वादन्यायेनोक्तमिदानीं कांडांतरमवतारयति॥पूर्णमिति॥पूर्वाध्यायेष्वेवसर्वस्यवक्तव्यस्यसमाप्तत्वादखिलकांडारंभणेत्याशंक्य पूर्वत्रानुक्तं परिशिष्टं वस्तुखिलशब्दवाच्यमस्तीत्याह॥अध्यायचतुष्टयेनेति॥सर्वांतरइत्युक्तइतिशेषः॥अमृतत्वसाधनं निर्धारितमितिपूर्वेणसंबंधः॥शब्दार्थादीत्यादिशब्देन मानमेयादिग्रहः॥दयांशिक्षेदि

ॐ पूर्णमदइत्यादि खिलकांडमारभ्यते॥अध्यायचतुष्टयेनयदेवसाक्षादपरोक्षात् ब्रह्मआत्मासर्वांतरोनिरुपाधिकोऽशनायाद्यतीतोनेतिनेतीतिव्यपदेश्यो निर्धारितोयद्विज्ञानंकेवलंअमृतत्वसाधनमधुनातस्यैवात्मनःसोपाधिकस्यशब्दार्थादिव्यवहारविषयापन्नस्यपुरस्तादनुक्तान्युपासनानिकर्मभिरविरुद्धानिप्रकृष्टाभ्युदयसाधनानिक्रममुक्तिभांजिचतानिवक्तव्यानीतिपरःसं

हरिः ॐ॥पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते॥ पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते॥

दर्भः सर्वोपासनशेषत्वेन ओंकारोदमंदानंदयामित्येतानिचविधित्सितानि पूर्णमदः पूर्णनकुतश्चिद्व्यावृत्तंव्यापीत्येतन्निष्ठाचकर्त्तरिद्रष्टव्या अदइतिपरोक्षाभिधायिसर्वनामतत्परंब्रह्मेत्यर्थः तत्संपूर्णमाकाशवद्व्यापिनिरंतरंनिरुपाधिकंचतदेवेदंसोपाधिकंनामरूपस्थंव्यवहारापन्नंपूर्णस्वेनरूपेणपरमात्मनाव्याप्त्येवनोपाधिपरिछिन्नेनविशेषात्मना स्युक्तानीतिशेषः॥ओंकारादियत्रसाधनत्वेनविधित्सितंतत्सर्वोक्तमैक्यज्ञानमनुवदति॥पूर्णमित्यादिना॥अवयवार्थमुक्त्वासमुदायार्थमाह॥तत्संपूर्णमिति॥अदः पूर्णमित्यनेनलक्ष्यंतत्पदार्थंदर्शयति॥तदेवेति॥कथंसोपाधिकस्यपूर्णत्वमित्याशंक्याह॥स्वेनेति॥व्यावर्त्यमाह॥नोपाधीति॥नत्वयमुपहितेनविशिष्टेनरूपेणपूर्णत्वं

पित्वात्तंपदार्थंदर्शं

किंतु केवलेन स्वरूपेणेत्यर्थः॥लक्ष्यौ तत्त्वंपदार्थावुक्तौ तावेव वाच्यौ कथयति॥तदिदमिति॥कथं कार्यात्मनो द्रिच्यमानस्य पूर्णत्वमित्याशं
क्याह॥यद्यपीति॥लक्ष्यपदार्थैक्यज्ञानफलमुपन्यस्यति॥पूर्णस्येति॥उपक्रमोपसंहारयोरैकरूप्यमैक्यश्रुतितात्पर्यलिंगं संगिरते॥यद्
रूमिति॥कथं पूर्णकंडिकाया ब्रह्मकंडिकया सह एकार्थत्वेनैकवाक्यत्वमित्याशंक्य तद्व्युत्पादयति॥तत्रेत्यादिना॥उपक्रमोपसंहार

तदिदं विशेषापन्नं कार्यात्मकं ब्रह्म पूर्णात्कारणात्मनः उदच्यते उद्रिच्यते उद्गच्छतीत्येतत् यद्यपि कार्यात्मनोदच्यते तथापि यत्स्वरू
पं पूर्णत्वं परमात्मभावं तन्न जहाति पूर्णमेवोद्रिच्यते पूर्णस्य कार्यात्मनो ब्रह्मणः पूर्णं पूर्णत्वमादाय गृहीत्वा परमात्मस्वरूपैकरसत्व
मापाद्य विद्यया अविद्याकृतं भूतमात्रोपाधिसंसर्गजमन्यत्वावभासं तिरस्कृत्य पूर्णमेवानंतरमबाह्यं प्रज्ञानघनैकरसस्वभावं केव
लं ब्रह्मावशिष्यते यदुक्तं ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेत्तस्मात्तत्सर्वमभवदित्येषोस्य मंत्रस्यार्थस्तत्र ब्रह्मेत्यस्यार्थः पूर्णमद
इति इदं पूर्णमिति ब्रह्म वा इदमग्र आसीदित्यस्यार्थः तथा च श्रुत्यंतरं यदेवेह तदमुत्र यदमुत्र तदन्विहेति अतोदः शब्दवाच्यं पूर्णं ब्रह्म त
देवेदं पूर्णं कार्यस्थं नामरूपोपाधिसंयुक्तमविद्ययोद्रिक्तं तस्मादेव परमार्थस्वरूपादन्यदिव प्रत्यवभासमानं तदात्मानमेव परं पूर्णं ब्र
ह्म विदित्वाहमदः पूर्णं ब्रह्मास्मीत्येवं पूर्णमादाय तिरस्कृत्यापूर्णस्वरूपतामविद्याकृतां नामरूपोपाधिसंपर्कजामेतया ब्रह्मविद्यया
पूर्णमेव केवलमवशिष्यते तथा चोक्तं तस्मात्तत्सर्वमभवदिति यः सर्वोपनिषदर्थः ब्रह्म स एषोनेन मंत्रेणानूद्यते

सिद्धे ब्रह्मात्मैक्ये कठश्रु
तिं संवादयति॥तथाचेति॥ब्रह्मात्मनोरैक्यमुक्तमुपजीव्य वाक्यार्थमाह॥अतइति॥पूर्णं यद्ब्रह्मेति यच्छब्दो द्रष्टव्यः॥उक्तमेव व्यनक्ति॥तस्मादेवे
ति॥संसारावस्थां दर्शयित्वा मोक्षावस्थां दर्शयति॥तदात्मानमिति॥उक्ते विद्याफले वाक्योपक्रममनुकूलयति॥तथाचोक्तमिति॥न केवलं ब्रह्मकंडि

बृ॰भ॰ २

अनुवादफलमाह॥ उत्तरेति॥ तदेवस्फुटयति॥ ब्रह्मविद्येति॥ तस्माद्युक्तोब्रह्मणोनुवादइतिशेषः॥ कथंतर्हिसर्वोपासनशेषत्वेनविधित्सितत्वमोंकारादीनामुक्तमतआह॥ खिलेति॥ अद्वितीयंब्रह्मेत्युत्सर्गप्रवृत्तंशास्त्रंप्रलयावस्थब्रह्मविषयंसृष्टिशास्त्रंतुविशेषप्रवृत्तंतस्यापवादस्ततोद्वैताद्वैतरूपंब्रह्मसर्वोपनिषदर्थः॥ तदेवब्रह्मानेनमंत्रेणसंक्षिप्यतइतिभर्तृप्रपंचपक्षमुत्थापयति॥ अत्रेत्यादिना॥ कार्यकारणयोरुत्पत्तिकालेपूर्ण

उत्तरसंबंधार्थंब्रह्मविद्यासाधनत्वेनहिवक्ष्यमाणानिसाधनान्योंकारदमदानदयाख्यानिविधित्सितानिखिलप्रकरणसंबंधात्सर्वोपासनांगभूतानिचात्रैकेवर्णयंतिपूर्णात्कारणात्पूर्णंकार्यमुद्रिच्यतेउद्रिक्तंकार्यंवर्त्तमानकालेपिपूर्णमेवपरमार्थवस्तुभूतंद्वैतरूपेणपुनःप्रलयकालेपूर्णस्यकार्यस्यपूर्णतामादायात्मनिधित्वापूर्णमेवावशिष्यतेकारणरूपमेवमुत्पत्तिस्थितिप्रलयेषुत्रिष्वपिकालेषुकार्यकारणयोःपूर्णतैवसाचैकैवपूर्णताकार्यकारणयोर्भेदेनव्यपदिश्यतेएवंचद्वैताद्वैतात्मकमेकंब्रह्मयथाकिलसमुद्रोजलतरंगफेनबुद्बुदाद्यात्मकएवंयथाचजलंसत्यंतदुद्भवाश्चतरंगफेनबुद्बुदादयःसमुद्रात्मभूताएवआविर्भावतिरोभावधर्मिणःपरमार्थसत्याएवंसर्वमिदंद्वैतंपरमार्थसत्यमेवजलतरंगादिस्थानीयंसमुद्रजलस्थानीयंतुपरंब्रह्मएवंचकिलद्वैतस्यसत्यत्वेकर्मकांडस्यप्रामाण्यं

त्वमुक्त्वास्थितिकालेपितदाह॥ उद्रिक्तमिति॥ प्रलयकालेपितयोःपूर्णत्वंदर्शयति॥ पुनरिति॥ कालभेदेनकार्यकारणयोरुक्तांपूर्णतांनिगमयति॥ एवमिति॥ कार्यकारणेद्वेपूर्णेचेत्तर्हिकथमद्वैतसिद्धिरित्याशंक्याह॥ साचेति॥ कथंतर्हिद्वयोरेकंपूर्णत्वंतदाह॥ कार्यकारणयोरिति॥ एकापूर्णताव्यपदिश्यतेचद्वयोरितिस्थितेलब्धमर्थमाह॥ एवंचेति॥ एकंद्व्यात्मकमितिविप्रतिषेधमाशंक्यदृष्टांतेननिराचष्टे॥ यथाकिलेति॥ एवमेकंब्रह्मानेकात्मकमितिशेषः॥ ब्रह्मणोद्वैताद्वैतात्मकत्वेपिसत्यमद्वैतमसत्यमितरदित्याशंक्याह॥ यथाचेत्यादिना॥ द्वैतस्यपरमार्थसत्य

अ॰ ७

रामः २

विपक्षे दोषमाह॥ यदा पुनरिति॥ अस्तु कर्मकांडाप्रामाण्यं नेत्याह॥ तथा चेति॥ विरोधो ध्ययनविधेरिति शेषः॥ तमेव विरोधं साधयति॥ वेदेति॥ कथं तर्हि विरोधसमाधिस्तत्राह॥ तर्हि रोधेति॥ प्राप्तं भतं प्रपंचप्रस्थानं प्रत्याचष्टे॥ तदसदिति॥ विशिष्टमद्वितीयं ब्रह्म तद्विषयोत्सर्गापवादयो र्विकल्पसमुच्चययोश्चासंभवं वक्तुं प्रतिज्ञाभागं विभजते॥ नहीति॥ तत्र प्रश्नपूर्वकं हेतुं विवृणोति॥ कस्मादित्यादिना॥ यथेत्यादिग्रंथस्य न च तथे

यदा पुनर्द्वैतं द्वैतमिवाविद्याकृतं मृगतृष्णिकावदनृतमद्वैतमेव परमार्थतस्तदा किल कर्मकांडं विषयाभावादप्रमाणं भवति तथा च विरोध एवं स्याद्द्वैतैकदेशभूतोपनिषत्प्रमाणं परमार्थाद्वैतवस्तुप्रतिपादकत्वादप्रमाणं कर्मकांडमसद्द्वैतविषयत्वात्तद्विरोध परिजिहीर्षया श्रुत्यैतदुक्तं कार्यकारणयोः सत्यत्वसमुद्रवत्पूर्णमदइत्यादिनेति॥ तदसद्धि विशिष्टविषयापवादविकल्पयोरसंभवा न्नहीयं सुविवक्षिता कल्पना कस्माद्यथा क्रियाविषये उत्सर्गप्राप्तस्यैकदेशेपवादः क्रियते यथा हिंस्यात्सर्वा भूतान्यन्यत्र तीर्थेभ्य इति हिंसा सर्वभूतविषयोत्सर्गेण निवारिता तीर्थे विशिष्टविषये ज्योतिष्टोमादावनुज्ञायते न च तथा वस्तुविषये इह ह्यद्वैतं ब्रह्मोत्सर्गेणाप्र तिपाद्य पुनस्तदेकदेशेपवदितुं शक्यते ब्रह्मणोऽद्वैतत्वादेवैकदेशानुपपत्तेस्तथा विकल्पानुपपत्तेश्च यथातिरात्रे षोडशिनं गृह्णाति नातिरात्रे षोडशिनं गृह्णातीति ग्रहणाग्रहणयोः पुरुषाधीनत्वाद्विकल्पो भवति न त्विह तथा वस्तुविषये द्वैतं वा स्यादद्वैतं वेति विकल्पः संभवत्यपुरुषतंत्रत्वादात्मवस्तुनो

त्यादिना संबंधः॥ क्रियायामुत्सर्गापवादसंभावनामुदाहरति॥ यथेत्यादिना॥ तथान्यत्रापि क्रियायामुत्सर्गापवादौ दृष्टव्याविति शेषः॥ वैधर्म्यदृष्टांतस्य दार्ष्टांतिकमाह॥ न चेति॥ विषयभेदे सत्युत्सर्गापवादौ दृष्टौ न तावदद्वितीये ब्रह्मणि संभवतो न हि ब्रह्माद्वयमेव जायते लीयते चेति संभावनास्पदमिति भावः॥ उत्सर्गापवादानुपपत्तिवद्ब्रह्मणि विकल्पानुपपत्तेश्च तदेकरसमेषितव्यमित्याह॥ तथेति॥ विक

७६०

संप्रतिसमुच्चयासंभवमभिदधाति॥ विरोधाच्चेति॥ उत्सर्गापवादविकल्पसमुच्चयानामसंभवान्नयुक्ता ब्रह्मणो नानारसत्वकल्पनेति फलित माह॥ तस्मादिति॥ परकीयकल्पनानुपपत्तौ हेत्वंतरं प्रतिज्ञाय श्रुतिविरोधं प्रकटीकृत्य न्यायविरोधं प्रकटयति॥ तथेति॥ ब्रह्मणोऽनेकरसत्वे स्यादिति शेषः। नित्यत्वानुपपत्तेरात्मनो नित्यत्वांगीकारविरोधः स्यादित्यध्याहारः॥ ननु तस्य नित्यत्वं नांगीक्रियते मानाभावादिति प्रासंगिकीं

विरोधाच्च द्वैताद्वैतयोरेकस्य तत्स्थान्न समुविवक्षितेयं कल्पना श्रुतिन्यायविरोधाच्च सैंधवघनवत्प्रज्ञानैकरसघनं निरंतरं पूर्वापरबाह्याभ्यंतरभेदवर्जितं सबाह्याभ्यंतरमजं नेति नेत्यस्थूलमनण्वजमजरमभयममृतमित्येवमाद्याः श्रुतयो निश्चितार्थाः संशयविपर्यासशंकारहिताः सर्वाः समुद्रे प्रक्षिप्ताः स्युः अकिंचित्करत्वात्तथा न्यायविरोधोपि सावयवस्यानेकात्मकस्य क्रियावतो नित्यत्वानुपपत्तेर्नित्यत्वं चात्मनः स्मृत्यादिदर्शनादनुमीयते तद्विरोधश्च प्राप्नोति अनित्यत्वे तु भवत्कल्पनानर्थक्यं स्फुटमेव चास्मिन्पक्षे कर्मकांडानर्थक्यमप्रकृताभ्यागमकृतविप्रणाशप्रसंगात् ननु ब्रह्मणो द्वैताद्वैतात्मकत्वे समुद्रादिदृष्टांता विद्यंते कथमुच्यते भवतैकस्य द्वैताद्वैतत्वं विरुद्धमिति नान्यविषयत्वात् नित्यनिरवयववस्तुविषयं हि विरुद्धत्वमवोचाम द्वैताद्वैतस्य न कार्यविषये सावयवे

मार्शकां प्रत्याह॥ नित्यत्वं चेति॥ स्मृत्यादिदर्शनादित्यादिशब्देन स एव तु कर्मानुस्मृतिशब्दविधिभ्य इत्यधिकरणोक्ता हेतवो गृह्यंते अनुमीयते कल्प्यते स्वीक्रीयत इति यावत्॥ तद्विरोधश्च स्मृत्यादिदर्शनकृतात्मनित्यत्वानुमानविरोधश्चेत्यर्थः॥ आत्मनोऽनित्यत्वे दोषांतरमाह॥ भवदिति॥ कर्मकांडस्य स्वार्थत्वं परेण कल्प्यते तदानर्थक्यमात्मनोऽनित्यत्वे स्फुटमापतेदित्युक्तमेव स्फुटयति॥ स्फुटमेवेति॥ ब्रह्मणो नानारसत्वे विरोधमुक्तमसहमानः स्वोक्तं स्मारयति॥ नन्विति॥ समुद्रादीनां कार्यत्वसावयवत्वाभ्यामनेकात्मकत्वमविरुद्धं ब्रह्मणस्तु नित्यत्वान्निरवयवत्वाच्च नाने

ब्रह्मणो नानारसत्वकल्पनानुपपत्तिमुपसंहरति॥ तस्मादिति॥ अजो नित्यः शाश्वतोयं पुराण इत्याद्याः स्मृतयः॥ ननु प्रत्यक्षाद्यविरोधेनोपनि
षदां विषयसिध्यर्थमेषा कल्पना क्रियते तथा च कथं सानुपपन्नेत्याशंक्याह॥ अस्या इति॥ विरुद्धार्थत्वे कल्पितेपि तत्प्रामाण्यानुपपत्तेरविशेषा
दिति भावः॥ किंच॥ ब्रह्मणो नानारसत्वं लौकिकं वैदिकं वा॥ नाद्यः॥ तस्यालौकिकत्वात्॥ तत्र नानारसत्वे लोकस्य तटस्थत्वात्॥ न द्वितीयः॥ तन्ना
नारसत्वस्य ध्येयत्वेन ज्ञेयत्वेन वा शास्त्रेणानुपदेशादित्याह॥ अध्येयत्वाच्चेति॥ तदेव स्फुटयति॥ नहीति॥ इतश्च नानारसत्वं ब्रह्मणो न यथा शास्त्रप्र

तस्माच्छ्रुतिस्मृतिन्यायविरोधादनुपपन्नेयं कल्पना॥ अस्याः कल्पनायाः वरमुपनिषत्परित्याग एव अध्येयत्वाच्च न शास्त्रार्थेयं
कल्पना न हि जननमरणाद्यनर्थशतसहस्रभेदसमाकुलं समुद्रवनादिवत्सावयवमनेकरसं ब्रह्म ध्येयत्वेन विज्ञेयत्वेन वा श्रुत्यो
पदिश्यते प्रज्ञानघनतां चोपदिशति एकधैवानुद्रष्टव्यमिति चानेकधा दर्शनापवादाच्च मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यती
ति यच्च श्रुत्या निंदितं तन्न कर्तव्यं यच्च न क्रियते न स शास्त्रार्थो ब्रह्मणोनेकरसत्वमनेकधात्वं च द्वैतरूपं निंदितत्वान्न द्रष्टव्यमतो
न शास्त्रार्थः यत्त्वेकरसत्वं ब्रह्मणस्तद्द्रष्टव्यत्वात्प्रशस्तं प्रशस्तत्वाच्च शास्त्रार्थो भवितुमर्हति॥ यत्तूक्तं वेदैकदेशस्याप्रामाण्यं कर्मवि
षये द्वैताभावादद्वैते च प्रामाण्यमिति तन्न यथा प्राप्तोपदेशार्थवत्त्वा काश्यमित्याह॥ प्रज्ञानेति॥ चकारादुपदिशतीत्याकृष्यते॥ अनेकधा दर्श
नापवादाच्च नानारसं ब्रह्म शास्त्रार्थो न भवतीति शेषः॥ भेददर्शनस्य निंदितत्वेल लब्धमर्थमाह॥ यच्चेति॥ अकर्तव्यत्वे प्राप्तमर्थं कथयति॥ यच्च नेति॥ सा
मान्यन्यायं प्रकृते योजयति॥ ब्रह्मण इति॥ कस्तर्हि शास्त्रार्थस्तत्राह॥ यत्त्विति॥ ब्रह्मैकरस्ये प्रागुक्तं दोषमनुभाषते॥ यत्तूक्तमिति॥ कर्मकांडस्य कर्मविष
येन प्रामाण्यमसद्द्वैतविषयत्वाद्ब्रह्मकांडस्य तु अद्वैते प्रामाण्यं परमार्थाद्वैतवस्तुप्रतिपादकत्वात्तथा च विरोधोऽध्ययनविधेरित्यनुवादार्थः॥ कर्मकांडप्रा

36

प्रसिद्धं भेदमादाय तत्रैव विधिनिषेधोपदेशस्य प्रवृत्तिनिवृत्तिद्वाराऽर्थवत्त्वान्न कर्मकांडानर्थक्यमित्यर्थः ॥ ननु शास्त्रमेवादौ भेदं बोधयित्वा पश्चाद
भ्युदयसाधनं कर्मोपदिशति ॥ तथा च नास्ति भेदस्यान्यतः प्राप्तिरत आह ॥ नहीति ॥ यथा हि शास्त्रं जातमात्रं पुरुषं प्रत्यद्वैतं वस्तु ज्ञापयित्वा पश्चाद्ब्र
ह्मविद्यामुपदिशतीति नेष्यते तथा च प्रथममेव पुरुषं प्रति द्वैतं बोधयित्वा कर्म पुनर्बोधयतीत्यपि नाभ्युपेयं प्रथमतो भेदवेदनावस्थायामस्य शास्त्रा
नधिकारित्वादित्यर्थः ॥ द्वैतस्योपदेशार्हत्वमंगीकृत्योक्तं तदेव नास्तीत्याह ॥ नचेति ॥ ननु द्वैतसत्यबुध्यभावेऽप्युक्ताशनायप्रसंगात्प्रवृत्त्यनुपप

न हि द्वैतमद्वैतं वा वस्तु जातमात्रमेव पुरुषं ज्ञापयित्वा पश्चात्कर्म वा ब्रह्मविद्यां वोपदिशति शास्त्रं न चोपदेशार्हं द्वैतं जातमात्रप्राणि
बुद्धिगम्यत्वान्न च द्वैतस्यानृतत्वबुद्धिः प्रथममेव कस्यचित्स्याद्येनाद्वैतस्य सत्यत्वमुपदिश्य पश्चादात्मनः प्रामाण्यं प्रतिपादयेच्छास्त्रं ना
पि पाषंडिभिरपि प्रस्थापिताः शास्त्रस्य प्रामाण्यं न गृह्णीयुः ॥ तस्माद्यथाप्राप्तमेव द्वैतमविद्याकृतं स्वाभाविकमुपादाय स्वाभाविक्यैवावि
द्यया युक्ताय रागद्वेषादिदोषवते यथाभिमतपुरुषार्थसाधनं कर्मोपदिशत्यग्रे पश्चात्सिद्धक्रियाकारकफलस्वरूपदोषदर्शनवते
तद्विपरीतौदासीन्यस्वरूपावस्थानफलार्थिने तदुपायभूतात्मैकत्वदर्शनात्मिकां ब्रह्मविद्यामुपदिशति ॥

नेः स्वप्रामाण्यसिध्यर्थमेवाद्वैतस
त्यत्वं श्रुतिर्बोधयिष्यतीत्याह ॥ न च द्वैतस्येति ॥ द्वैतानृतत्ववादिषु कर्मजडानामद्वैतप्रतीतेर्न प्रथमतो द्वैतानृतत्वबुद्धिर्न चाद्वैतसत्यत्वमित्यर्थः ॥ त
त्सिद्धिश्च गृहीतानामपि द्वैतसत्यत्वाभिनिवेशादित्यर्थः ॥ किंच ॥ नाद्वैतवैतथ्यं शास्त्रप्रामाण्यविघातकं ॥ यतो बौद्धादिभिः श्रेयसे प्रस्थापिताः स्वशिष्याः
द्वैतमिथ्यात्वावगमेऽपि स्वर्गकामश्चैत्यं वंदेतेत्यादिशास्त्रप्रामाण्यं गृह्णंति यथा तथाग्निहोत्रादिशास्त्रस्यापि प्रामाण्यं भविष्यति साधनत्वशक्त्यनपहारा
दित्याह ॥ नापीति ॥ कांडद्वयस्य प्रामाण्योपपत्तिमुपसंहरति ॥ तस्मादित्यादिना ॥ प्रसिद्धो योयं क्रियादिरूपे द्वैते दोषः सातिशयत्वादिस्तद्दर्शनं विवेकस्तद्वते

स्मृतिः४ श्रुतिः५ सिद्धत्वेन२

तस्माद्द्वैताद्विपरीतमद्वैतमौदासीन्योपलक्षितंस्वरूपंतस्मिन्नवस्थानंकैवल्यंतदर्थिनेमुमुक्षवेसाधनचतुष्टयसंपन्नायेत्यर्थः॥किंच॥तत्त्वज्ञानादू
र्ध्वंपूर्वंवाकांडयोर्विरोधःशंक्यतेनाद्यइत्याह॥अथेति॥अवस्थाभेदादेकस्मिन्नपिपुरुषेकांडद्वयस्यप्रामाण्यमविरुद्धमित्येवंस्थितेसत्युपनिषद्भ्य
स्तत्त्वज्ञानोत्पत्त्यनंतरंनांतरीयकत्वेनप्राप्तेकैवल्येपुरुषस्यनैराकांक्ष्यंजायते॥नचनिराकांक्षंपुरुषंप्रतिशास्त्रस्यशास्त्रत्वमस्ति॥प्रवृत्तिर्वानिवृत्ति
र्वानित्येनकृतकेनवा॥पुंसांयेनोपदिश्येततच्छास्त्रमभिधीयत इतिन्यायात्कृतकृत्यंप्रतिप्रवर्त्तकत्वादिविरहिणःशास्त्रस्यायोगादतोज्ञानादूर्ध्वं
धर्म्यभावाद्विरोधासिद्धिरित्यर्थः॥एकस्मिन्पुरुषेदर्शितन्यायंसर्वत्रातिदिशति॥तथेति॥ज्ञानादूर्ध्वंविरोधाभावमुपसंहरति॥इतिनेति॥कल्पात

अथैवंसतितदौदासीन्यस्वरूपावस्थानेफलेप्राप्तेशास्त्रस्यप्रामाण्यंप्रत्यर्थित्वंनिवर्त्ततेतदभावाच्छास्त्रस्यापिशास्त्रत्वंतंप्रतिनिव
र्ततएवतथाप्रतिपुरुषंपरिसमाप्तंशास्त्रमितिनशास्त्रविरोधगंधोप्यस्तिअद्वैतज्ञानावसानत्वाच्छास्त्रशिष्यशासनादिद्वैतभेद
स्यान्यतमावस्थानेहिविरोधःस्यादवस्थितस्येतरेतरापेक्षत्वात्शास्त्रशिष्यशासनानांनान्यतमोप्यवतिष्ठतेसर्वसमाप्तौतुकस्यविरो
धआशंक्येताद्वैतेकेवलेशिवेसिद्धेनाप्यविरोधिताऽतएव॥

रंप्रत्याह॥अद्वैतेति॥तत्त्वज्ञानात्पूर्वंभेदस्यावस्थितत्वात्तमाविद्यमादायाधिकारि
भेदादवस्थाभेदाद्वाकांडयोरविरोधसिद्धिरित्यर्थः उक्तमेवोपपादयति॥अन्यतमेति॥शिष्यादीनामन्यतमस्यैवावस्थानंचेदवस्थितस्येतरस्मिन्नपे
क्षत्वान्नसोप्यवतिष्ठतेनचज्ञानात्प्रागन्यतमस्यैवावस्थानंसर्वेषामेवतेषांयथाप्रतिभासमवस्थानादतोनपूर्वंविरोधाशंकेत्यर्थः॥ऊर्ध्वंविरोधशंका
भावमधिकविवक्षयाऽनुवदति॥सर्वेति॥कथंकैवल्यंविरोधाभावस्यसत्वादित्याशंक्याह॥नापीति॥अद्वैतत्वादेवाभावस्यापितत्रनिमज्जनादित्याह॥
अतएवेति॥अद्वितीयमेवब्रह्मनद्वैताद्वैतात्मकमित्युपपादितमिदानींब्रह्मणोद्वैताद्वैतात्मकत्वाभ्युपगमेपिविरोधोनशक्यतेपरिहर्त्तुमित्याह॥

अथापीतितुल्यत्वात्तदभ्युपगमोरथ्येतिशेषः॥ उक्तमेवोपपादयति॥ यदापीति॥ द्वैताद्वैतात्मकं ब्रह्मेति पक्षे कथं विरोधो न समाधीयते द्वैतमद्वैतं चा
धिकृत्य कांडद्वयप्रामाण्यसंभवादित्याक्षिपति॥ कथमिति॥ किं ब्रह्मविषयस्य शास्त्रोपदेशः किं वाऽब्रह्मविषयः॥ प्रथमे द्वैताद्वैतरूपस्यैकस्यैव
ब्रह्मणोऽभ्युपगमात्तस्य च नित्यमुक्तत्वान्नोपदेशः संभवतीत्याह॥ एकं हीति॥ तस्योपदेशाभावे हेत्वंतरमाह॥ नचेति॥ उपदेष्टा हि ब्रह्मणोऽन्योऽन
न्यो वा॥ नाद्यः॥ अभ्युपगमविरोधात्॥ न द्वितीयः भेदमंतरेणोपदेश्योपदेशकभावासंभवादिति भावः कल्पांतरमुत्थापयति॥ अथेति॥ प्रतिज्ञावि

अथाप्यभ्युपगम्य ब्रूमः द्वैताद्वैतात्मकत्वेपि शास्त्रविरोधस्य तुल्यत्वाद्यदापि समुद्रादिवद्द्वैताद्वैतात्मकमेकं ब्रह्माभ्युपगच्छामो नान्य
द्वस्त्वंतरं तदापि भवदुक्तात्कांडविरोधान्न मुच्यामहे कथमेकं हि परं ब्रह्म द्वैताद्वैतात्मकं तच्छोकमोहाद्यतीतत्वादुपदेशं नाकांक्षति
न चोपदेष्टान्यो ब्रह्मणो द्वैताद्वैतरूपस्य ब्रह्मण एकस्यैवाभ्युपगमात्॥ अथ द्वैतविषयस्यानेकत्वादन्यान्योपदेशो न ब्रह्मविषय उप
देश इति चेत्तदा द्वैताद्वैतात्मकमेव ब्रह्म नान्यदस्तीति विरुध्यते यस्मिन्द्वैतविषयेऽन्योन्योपदेशः सोन्यो द्वैतं चान्यदेवेति समुद्रदृष्टां
तो विरुद्धः न च समुद्रोदकैकत्ववद्वित्तानेकत्वे ब्रह्मणोऽन्यत्रोपदेशग्रहणादिकल्पना संभवति॥ नहि हस्तादि द्वैताद्वैतात्मके देवदत्ते
वाक्पाण्योर्देवदत्तैकदेशभूतयोर्वाग्गुपदेष्ट्री कर्णौ केवल उपदेशस्य ग्रहीतादेवदत्तस्तु नोपदेष्टा नाप्युपदेशस्य गृहीतेति कल्पयितुं शक्यते

रोधेन निराकरोति॥ तदेति॥ किंच॥ सर्वस्य ब्रह्मरूपत्वे यः समुद्रदृष्टांतः स न स्यात्परस्परोपदेशस्याब्रह्मविषयत्वादित्याह॥ यस्मिन्निति॥ अथ य
था फेनादिविकाराणां भिन्नत्वेपि समुद्रोदकात्मत्वं तथा जीवादीनां भिन्नत्वेपि ब्रह्मस्वभावविज्ञानेक्याद्ब्रह्म सर्वमिति न विरुध्यते तत्राह॥ नचेति॥ स
र्वस्य ब्रह्मत्वमंगीकृतं चेद्ब्रह्मविषय एवोपदेशः स्याद्वैदस्याऽविचारितरमणीयत्वादित्यर्थः॥ ननु नानारूपं वस्तु समुदायो ब्रह्म तत्र प्रदेशभेदादुपदेश्योप

तत्रहेतुमाह॥समुद्रेति॥यथासमुद्रस्योदकात्मनाफेनादिष्वेकत्वंतथादेवदत्तक्षेत्रज्ञस्यवागाद्यवयवेष्वेकत्वेनविज्ञानवत्वान्नव्यवस्थासंभवस्तथा
ब्रह्मण्यपिद्रष्टव्यमित्यर्थः॥मतांतरनिराकरणमुपसंहरति॥तस्मादिति॥आत्मैकरस्यप्रतिपादिकाश्रुतिःन्यायश्चसावयवस्यानेकात्मकस्येत्या
दावुक्तः॥अभिप्रेतार्थासिद्धिर्भवत्कल्पनानर्थक्यंचेत्यादिनादर्शिता॥एवंकल्पनायामेकानेकात्मकंब्रह्मेत्यभ्युपगताविस्यर्थः॥परकीयव्याख्यानासं
भवेफलितमाह॥तस्मादिति॥ध्यानशेषत्वेनोपनिषदर्थंब्रह्मानूद्यतद्विधानार्थंतस्मिन्विनियुक्तंमंत्रमुत्थापयति॥ओंखमिति॥इष्टत्वेत्यादिवत्त
स्यकर्मांतरेविनियुक्तत्वमाशंक्याह॥अयंचेति॥विनियोजकाभावादितिभावः॥तर्हिध्यानेपिनायंविनियुक्तोविनियोजकाभावाविशेषादित्याशं

समुद्रैकोदकात्मत्ववदेकविज्ञानवत्वाद्देवदत्तस्यतस्माच्छ्रुतिन्यायविरोधश्चाभिप्रेतार्थासिद्धिश्चैवंकल्पनायांस्यात्तस्माद्यथाव्याख्यातए
वास्माभिःपूर्णमदइत्यस्यमंत्रस्यार्थः॥ॐखंब्रह्मेतिमंत्रोयंचान्यत्राविनियुक्तइहब्राह्मणेनध्यानकर्मणिविनियुज्यतेअत्रचब्रह्मेतिविशे
ष्याभिधानंखमितिविशेषणंविशेषणविशेष्ययोश्चसामानाधिकरण्येननिर्देशोनीलोत्पलवत्खंब्रह्मेतिब्रह्मशब्दोबृहद्वस्तुमात्रास्य
दोःविशेषितोःतोविशेष्यतेखंब्रह्मेतियत्तत्खंब्रह्मतदोंशब्दवाच्यमोंशब्दस्वरूपमेववाउभयथापिसामानाधिकरण्यमविरुद्धमिह
चब्रह्मोपासनसाधनत्वार्थमोंशब्दःप्रयुक्तः

क्याह॥इहेति॥खंपुराणमित्यादिब्राह्मणंतस्यचविनियोजकंध्यानसमवेतार्थप्रकाशनसामर्थ्यात्
यद्यपिमंत्रनिष्ठंसामर्थ्यंविनियोजकंतथापिमंत्रब्राह्मणयोरेकार्थत्वाद्ब्राह्मणस्यसामर्थ्यद्वाराविनियोजकत्वमविरुद्धमितिभावः॥अत्रेतिमंत्रोक्तिः॥वि
शेषणविशेष्यत्वेयथोक्तंसामानाधिकरण्यंहेतूकरोति॥विशेषणेति॥ब्रह्मेत्युक्तेसत्याकांक्षाभावात्किंविशेषणेनेत्याशंक्याह॥ब्रह्मशब्दइति॥निरुपा
धिकस्यसोपाधिकस्यवाब्रह्मणोविशेषणत्वेपिकथंतस्मिन्नोंशब्दप्रवृत्तिरित्याशंक्याह॥यत्तदिति॥किमितियथोक्तेब्रह्मण्योंशब्दोमंत्रेप्रयुज्यतेतत्रा

बृ. र. ६ | अ. ७

ॐ शब्दो ब्रह्मोपासने साधनमित्यत्र मानमाह॥ तथा चेति॥ सापेक्ष्यं श्रेष्ठत्वं वारयति॥ परमिति॥ आदिशब्देन प्रणवो धनुरित्यादयो गृह्यंते॥ ओं ब्रह्मेति सामानाधिकरण्योपदेशस्य ब्रह्मोपासने साधनत्वमोंकारस्येत्यस्मादर्थांतरासंभवाच्च तस्य तत्साधनत्वमेष्टव्यमित्याह॥ अन्यार्थेति॥ एतदेव प्रपंचयति॥ यथेत्यादिना॥ अन्यत्रेति तैत्तिरीयश्रुतिग्रहणं॥ अपवर्गः स्वाध्यायावसानं॥ अर्थांतरावगतेरभावे फलितमाह॥ तस्मादिति॥ ननु शब्दांतरेष्वपि ब्रह्म

तथा च श्रुत्यंतरादेतदालंबनं श्रेष्ठमेतदालंबनं परमोमित्यात्मानं युंजीत ओमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीतेति ओमित्येवं ध्यायथ आत्मानमित्यादेरन्यार्थासंभवाच्चोपदेशस्य॥ यथान्यत्रोमिति शंसत्योमित्युद्गायतीत्येवमादौ॥ स्वाध्यायारंभापवर्गयोश्चोंकारप्रयोगो विनियोगादवगम्यते न च तथात्रार्थांतरमिहावगम्यते तस्माद्ध्यानसाधनत्वेनैवेहोंकारशब्दस्योपदेशः यद्यपि ब्रह्मात्मादि

ॐ खं ब्रह्म खं पुराणं वायुरं खमिति ह स्माह कौरव्यायणीपुत्रो॥

शब्दाः ब्रह्मणो वाचकास्तथापि श्रुतिप्रामाण्यात् ब्रह्मणो नेदिष्ठमभिधानमोंकारो तत एव ब्रह्मप्रतिपत्ताविदं परं साधनं तच्च द्विप्रकारेण प्रतीकत्वेनाभिधानत्वेन च प्रतीकत्वेन यथा विष्ण्वादिप्रतिमाऽभेदेनैवोंकारो ब्रह्मेति प्रतिपत्तव्यस्तथा ह्योंकारालंबनस्य ब्रह्म प्रसी दति॥ एतदालंबनं श्रेष्ठमेतदालंबनं परं॥ एतदालंबनं ज्ञात्वा ब्रह्मलोके महीयत इति श्रुतेः वाचकेषु सत्सु किमित्योंशब्द एव ध्यानसाधनत्वेनोपदिश्यते तत्राह॥ यद्यपीति॥ नेदिष्ठं निकटतमं प्रियतममित्यर्थः॥ प्रियतमत्वप्रयुक्तं फलमाह॥ अतएवेति॥ साधनत्वेऽवांतरविशेषं दर्शयति॥ तच्चेति॥ प्रतीकत्वेन कथं साधनत्वमिति पृच्छति॥ प्रतीकत्वेनेति कथमित्यध्याहारः॥ परिहरति॥ यथेति॥ ओंकारो ब्रह्मेति प्रतिपत्तौ किं स्यात्त

राम: ६ | टी॰ ब्रह्मा॰ ॥

मंत्रमेवं व्याख्याय ब्राह्मणमवतार्य व्याचष्टे॥ तत्रेत्यादिना॥ मंत्रः सप्तम्यर्थः॥ ननु यथोक्तं तत्त्वं खे नैव स्वरूपेण प्रतिपत्तुं शक्यते किं प्रतीकोपदेशेनेत्याशंक्याह॥ यत्तदिति॥ भावविशेषो बुद्धेर्विषयपारवश्यं परिहृत्य प्रत्यग्ब्रह्मज्ञानाभिमुख्यं॥ ओंकारे ब्रह्मावेशनमुदाहरणेन दर्शयति॥ यथेति॥ कस्मात्तरमाह॥ वायुरमित्यादिना॥ किमिति सूत्राधिकरणमव्याकृतमाकाशमत्र गृह्यते तत्राह॥ वायुरेहीति॥ तदेवभूताकाशात्मनाविपरिणतमिति भावः॥ त

तत्रखमिति भौतिके खे प्रतीतिर्माभूदिति आह खं पुराणं चिरंतनं परमात्माकाशमित्यर्थः यत्तत्परमात्माकाशं पुराणं खं तच्चक्षुराद्यविषयत्वान्निरालंबनमशक्यं ग्रहीतुमिति श्रद्धाभक्तिभ्यां भावविशेषेण चोंकारे आवेशयति यथा विष्ण्वंगांकितायां शिलादिप्रतिमायां विष्णुलोक एवं वायुरं खं वायुरस्मिन्विद्यत इति वायुरं खं खमात्रं खमित्युच्यते न पुराणं खमित्येवमाह स्म कौरव्यायणीपुत्रो

वेदोयं ब्राह्मणा विदुर्वेदैनेन यद्वेदितव्यं॥ १॥ प्रथमं ब्राह्मणं॥ १॥

वायुरे हि खे मुख्यः खशब्दव्यवहारस्तस्मान्मुख्ये संप्रत्ययो युक्त इति मन्यते तत्र यदि पुराणं खं ब्रह्म निरुपाधिस्वरूपं यदि वा वायुरं खं सोपाधिकं ब्रह्म सर्वथापि ओंकारः प्रतीकत्वेनैव प्रतिमावत्साधनत्वं प्रतिपद्यते एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोंकार इति श्रुत्यंतरात्केवलं खशब्दार्थे विप्रतिपत्तिर्वेदोयमोंकारो वेद विजानात्यनेन यद्वेदितव्यं तस्माद्वेद ओंकारो वाचकोऽभिधानं तेनाभिधानेन यद्वेदितव्यं ब्रह्म प्रकाश्यमानमभिधीयमानं हि पक्षद्वये संप्लवमानेकः सिद्धांतः स्यादित्याशंक्याधिकारिभेदमाश्रित्याह॥ तत्रेति॥ श्रुत्यंतरस्यान्यथासिद्धिसंभवादोंकारस्य प्रतीकत्वेपि विप्रतिपत्तिमाशंक्याह॥ केवलमिति॥ इतरत्र विप्रतिपत्तिद्योतकाभावादिति भावः॥ प्रतीकपक्षमुपपाद्याभिधानप

तदेव प्रपंचयति॥ तेनेति॥ वेदेस्मिन्नादौ तकुब्धो द्रष्टव्यः॥ ब्राह्मणा विदुरिति विशेषनिर्देशस्य तात्पर्यमाह॥ तस्मादिति॥ प्रतीकपक्षे वेदोयमित्यादि ग्रंथो निर्वहतीत्याह॥ अथवेति॥ विध्यभावे कथमर्थवादः संभवतीत्याशंक्य परिहरति॥ कथमित्यादिना॥ वेदत्वेन स्तुतिमोंकारस्य संग्रह विवरणाभ्यां दर्शयति॥ सर्वो हीति॥ ओंकारे सर्वस्य नामजातस्यांतर्भावे प्रमाणमाह॥ तद्यथेति॥ तत्रैव हेत्वंतरमवतारयन्व्याकरोति॥ इतश्चेति॥ वेदितव्यं परम

वेद साधको विजानात्युपलभते तस्माद्वेदोयमिति ब्राह्मणा विदुस्तस्माद्ब्राह्मणानामभिधानत्वेन साधनत्वमभिप्रेतमोंकारस्य अथवा वेदोयमिति अर्थवादः कथमोंकारो ब्रह्मणः प्रतीकत्वेन विहितः ओंखंब्रह्मेति सामानाधिकरण्यात्तस्य स्तुतिरिदानीं वेदत्वेन सर्वो ह्ययं वेदः॥ ओंकार एवैतत्स्वभव एतदात्मकः सर्वं ऋग्यजुःसामादिभेदभिन्न एष ओंकारस्तद्यथा शंकुना सर्वाणि पर्णानीत्यादिश्रुत्यंतरात्॥ इतश्चायं वेद ओंकारो यद्वेदितव्यं तत्सर्वं वेदितव्यमोंकारेणैव वेदेनेनातोयमोंकारो वेद इतरस्यापि वेदस्य वेदत्वमत एव तस्माद्विशिष्टोयमोंकारः साधनत्वेन प्रतिपत्तव्य इति अथवा वेदः सः कोसौ यं ब्राह्मणा विदुरोंकारं ब्राह्मणानां ह्यसौ प्रणवोद्गीथादिविकल्पैर्विज्ञेयस्तस्मिन्प्रयुज्यमाने साधनत्वेन सर्वो वेदः प्रयुक्तो भवतीति॥ १॥ सप्तमस्य प्रथमं ब्राह्मणं॥ १॥ अधुना दमादिसाधनत्रयविधानार्थोयमारंभः त्रयास्त्रिसंख्याकाः प्राजापत्याः प्रजापतेरपत्यानि प्राजापत्यास्ते किं प्रजापतौ परं चब्रह्म द्वे ब्रह्मणी वेदितव्ये इति

श्रुत्यंतरात्तद्वेदनसाधनत्वेपि कथमोंकारस्य वेदत्वमित्याशंक्याह॥ इतरस्यापीति॥ अत एव वेदितव्यवेदनहेतुत्वादेवेत्यर्थः॥ प्रतीकपक्षे वाक्ययोजनां निगमयति॥ तस्मादिति॥ अभिधानपक्षे प्रतीकपक्षे चैकं वाक्यमेकैकत्र योजयित्वा पक्षद्वयेपि साधारण्येन योजयति॥ अथवेति॥ तस्य पूर्वोक्तरीत्या वेदत्वे लाभं दर्शयति॥ तस्मिन्निति॥ ओंकारस्य ब्रह्मोपास्तिसाधनत्वमित्यंससिद्धमित्युपसंहर्तुमितिशब्दः॥ १॥ सप्तमस्य प्रथमं ब्राह्मणं॥ १॥ ब्राह्मणांतर

तद्विधानं सर्वोपास्तिशेषत्वेनेति द्रष्टव्यं॥ आख्यायिकाप्रवृत्तिरारंभः पितरि ब्रह्मचर्यमूषुरिति संबंधः॥ प्रजापतिसमीपे ब्रह्मचर्यवासमात्रेण किमित्य सौ देवादिभ्यो हितं ब्रूयादित्याशंक्याह॥ शिष्यत्वेति॥ शिष्यभावेन वृत्तेः संबंधिनो ये धर्मास्तेषां मध्ये ब्रह्मचर्यस्य सत्यादियोज्यं॥ तेषामिति निर्धारणे षष्ठी॥ऊ

पितरि ब्रह्मचर्ये शिष्यत्ववृत्ते ब्रह्मचर्यस्य प्राधान्याद्विध्याः संतो ब्रह्मचर्यमूषुरुषितवंत इत्यर्थः के ते विशेषतो देवा मनुष्या असुराश्च ते चो षित्वा ब्रह्मचर्यं किमकुर्वन्नित्युच्यते तेषां देवा ऊचुः पितरं प्रजापतिं किमिति ब्रवीतु कथयतु नोस्मभ्यं यदनुशासनं भवानिति ते भ्य एवमर्थिभ्यो ह एतदक्षरं वर्णमात्रमुवाच द इत्युक्त्वा च तान्प्रपच्छ पिता किं व्यज्ञासिष्टा इति॥ मयोपदेशार्थमभिहितस्याक्षरस्यार्थं

त्रयाः प्राजापत्याः प्रजापतौ पितरि ब्रह्मचर्यमूषुर्देवा मनुष्या असुरा उषित्वा ब्रह्मचर्यं देवा ऊचुर्ब्रवीतु नो भवानिति तेभ्यो हैतदक्षरमुवाच द इति व्यज्ञासिष्टा३ इति॥ व्यज्ञासिष्मेति होचुर्दाम्यतेति न आत्थेत्योमिति होवाच व्यज्ञासिष्टेति॥ १॥ अथ है नं मनुष्या ऊचुर्ब्रवीतु नो भवानिति तेभ्यो हैतदेवाक्षरमुवाच द इति व्यज्ञासिष्टा३ इति व्यज्ञासिष्मेति होचुर्दत्तेति न आत्थेत्योमि ति होवाच व्यज्ञासिष्टेति॥ २॥ विज्ञातवंतः आहोस्विन्नेति देवा ऊचुर्व्यज्ञासिष्मेति विज्ञातवंतो वयं पद्येवमुच्यतां किं मयोक्तमिति दे वा ऊचुर्दाम्यत अदांता यूयं स्वभावतः अतो दांता भवतेति नोस्मानात्थ कथयसि इतर आहोमिति सम्यग्व्यज्ञासिष्टेति समानमन्यत्स्व भावतो लुब्धा यूयमतो यथाशक्त्या संविभजत दत्तेति नोस्मानात्थ हापोहशक्तानामेव शिष्यत्वमिति द्योतनार्थे हशब्दः॥ विचारार्था प्लुतिरिति अंगीकृत्य प्रश्नमेव व्याकरोति॥ मयेति॥ ओमित्यनुज्ञामेव विभजते॥ सम्यगिति॥ समानत्वेनोत्तरस्य सर्वस्यैवार्थवादस्याव्याख्येयत्वे प्राप्ते दत्तेत्यत्र तात्स

बृ॰र॰ ८

दानमेव लोभत्यागरूपमुपदिष्टमिति कुतो निश्चितं॥ अन्यदेव विहितं किंचिद्दादिष्टं किं न स्यादित्याशंक्याह॥ किमन्यदिति॥ यथा देवा मनुष्याश्च स्वाभिप्रायानुसारेण दकारश्रवणे सत्यर्थं जगृहुस्तथेति यावत्॥ दयध्वमित्यत्र तात्पर्यमीरयति॥ क्रूरा इति॥ हिंसादीत्यादिशब्देन परस्वापहारादिग्रह्यते॥ प्रजापतेरनुशासनं प्रागासीदित्यत्र लिंगमाह॥ तदेतदिति॥ अनुशासनस्यानुवृत्तिमेव व्याकरोति॥ यः पूर्वमिति॥ दद्विति विसंधिकरं

किमन्यद्ब्रूयान्नो हितमिति मनुष्याः॥ तथा असुरा दयध्वमिति क्रूरा यूयं हिंसादिपरा अतो दयध्वं प्राणिषु दयां कुरुतेति तदेतत्प्रजापतेरनुशासनमद्याप्यनुवर्तत एव यः पूर्वं प्रजापतिर्देवादीननुशशास सोऽद्याप्यनुशास्त्येव दैव्या स्तनयित्नुलक्षणया वाचा कथं

अथ हैनमसुरा ऊचुर्ब्रवीतु नो भवानिति तेभ्यो हैतदेवाक्षरमुवाच द इति व्यज्ञासिष्टा३ इति व्यज्ञासिष्मेति होचुर्दयध्वमिति न आत्थेत्योमिति होवाच व्यज्ञासिष्टेति तदेतदेवैषा दैवी वागनुवदति स्तनयित्नुर्द द द इति॥ मेघाङ्गूयते दैवी वाक्कासौ स्तनयित्नुर्द द द इति दाम्यत दत्त दयध्वमित्येषां वाक्यानामुपलक्षणाय त्रिर्दकार उच्चार्यते अनुकृतिः न तु स्तनयित्नुशब्दस्त्रिरेव संख्यानियमस्य लोके प्रसिद्धत्वात्॥ यस्मादद्यापि प्रजापतिर्दाम्यत दत्त दयध्वमित्यनुशास्त्येव तत्तस्मात्कारणादेतन्त्रयं किं तत्त्रयमित्युच्यते दमं दानं दयामिति शिक्षेदुपाददद्यात्प्रजापतेरनुशासनमस्माभिः कर्तव्यमित्येवं मतिं कुर्यात्तथा च स्मृतिः॥ णं सर्वत्र वर्णीतरश्च मा पोह्यर्थे॥ यथा दकारत्रयमत्र विवक्षितं तथा स्तनयित्नुशब्देपि त्रित्वं विवक्षितं चेत्प्रसिद्धिविरोधः स्यादित्याशंक्याह॥ अनुकृतिरिति॥ दशब्दानुकरणमात्रमत्र विवक्षितं न तु स्तनयित्नुशब्देपि त्रित्वं प्रमाणाभावादित्यर्थः॥ प्रकृतस्यार्थवादस्य विधिपर्यवसायित्वं फलितमाह॥ यस्मादिति॥ उपादानप्रक

अ॰ ७

बृहदारण्यकोपनिषद्व्याख्या॥ ॥

ब्रा॰ २ मः ८

श्रुतिसिद्धविध्यनुसारेणभगवद्वाक्यप्रवृत्तिंदर्शयति॥तथाचेति॥तदेतत्त्रयंशिक्षेदित्येषविधिश्चेत्तत्त्रयाःप्राजापत्याइत्यादिनाग्रंथेनेत्याशंक्य
यस्मादित्यादिनासूचितमाह॥अस्येति॥सर्वैरेवत्रयमनुष्ठेयंचेत्तर्हिदेवादीननुपदिश्यदकारत्रयोच्चारणमनुपपन्नमितिशंकते॥तत्रेति॥दमादित्र
यस्यसर्वैरनुष्ठेयत्वेसतीतियावत्॥किंच॥पृथक्पृथगनुशासनार्थिनोदेवादयस्तेभ्योदकारत्रयमात्रोच्चारणेनापेक्षितमनुशासनंसिध्यतीत्याह
॥पृथगिति॥किमर्थमित्यादिनापूर्वेणसंबंधः॥दकारमात्रमुच्चारयतोपिप्रजापतेर्विभागेनानुशासनमभिसंहितमित्याशंक्याह॥तेवेति॥त्रयंस

त्रिविधंनरकस्येदंद्वारंनाशनमात्मनः॥कामःक्रोधस्तथालोभस्तस्मादेतत्त्रयंत्यजेदित्यस्यहिविधेःशेषःपूर्वस्तत्रापिदेवादीनुद्दि
श्यकिमर्थंदकारत्रयमुच्चारितवान्प्रजापतिः॥पृथगनुशासनार्थिभ्यस्तेवाकथंविवेकेनप्रतिपन्नाः॥प्रजापतेर्मनोगतंसमानेनैव

दाम्यतदत्तदयध्वमितितदेतत्त्रयंशिक्षेद्दमंदानंदयामिति॥४॥द्वितीयंब्राह्मणं॥

दकारवर्णमात्रेणेतिपराभिप्रायज्ञाविकल्पयंतिअत्रैकआहुरदांतत्वाऽदानत्वाऽदयालुत्वैरपराधित्वमात्मनोमन्यमानाःशंकि
ताएवप्रजापतावूचुः॥किंनोवक्ष्यतीतितेषांचदकारश्रवणमात्रादेवात्मशंकावशेनतदर्थप्रतिपत्तिरभूल्लोकेपिहिप्रसिद्धंपुत्राः
शिष्याश्चानुशास्याःसतोदोषान्निवर्तयितव्याइति वैरनुष्ठेयमितिपरस्यसिद्धांतिनोभिप्रायस्तदभिज्ञाःसंतोयथोक्तरीत्याविकल्पयंतीति
योजना॥पराभिप्रायज्ञाइत्युपहासोवा॥परस्यप्रजापतेर्मनुष्यादीनांचाभिप्रायज्ञाइतिनञुल्लेखोवापाठः॥एकोयंपरिहारमस्यापश्यति॥अत्रेति॥अ
स्तुतेषामेवमाशंकातथापिदकारमात्रात्कीदृशीप्रतिपत्तिरित्याशंक्याह॥तेषांचेति॥तदर्थोदकारार्थोदमादिस्तस्यप्रतिपत्तिस्तत्तद्द्वारेणादांतत्वादि

किमितिप्रजापतिर्दोषज्ञापनद्वारेणततोदेवादीननुशास्यान्दोषान्निवर्तयिष्यतितत्राह॥लोकेपीति॥दकारोच्चारणस्यप्रयोजनेसिद्धेफलित
माह॥अतइति॥यत्तूक्तंनेवाक्यमित्यादितत्राह॥दमादीति॥प्रतिपत्तुंचयुक्तंदमादीतिशेषः इतिशब्दः स्वयूथ्यमतसमाप्त्यर्थः॥परोक्तंपरिहा
रमंगीकृत्याख्यायिकातात्पर्यंसिद्धांतीब्रूते॥फलंत्विति॥निर्ज्ञातदोषादेवादयोयथादकारमात्रेणततोनिवर्त्यंतइतिशेषः॥इतिशब्दोदार्ष्टांतिक
प्रदर्शनार्थः॥विशिष्टान्प्रत्यनुशासनस्यप्रवृत्तत्वादस्माकंतदभावादनुपादेयंदमादीतिशंकते॥नन्विति॥किंच॥देवादिभिरपिप्रातिस्विकानुशा

अतोयुक्तंप्रजापतेर्दकारमात्रोच्चारणंदमादित्रयेचदकारान्वयादात्मनोदोषानुरूपेणदेवादीनांविवेकेनप्रतिपत्तुंचेतिफलंत्वेतदा
त्मदोषज्ञानेसतिदोषान्निवर्तयितुंशक्यतेऽल्पेनाप्युपदेशेन॥यथादेवादयोदकारमात्रेणेतिनन्वेतत्त्रयाणांदेवादीनामनुशा
सनंदेवादिभिरप्येकैकमेवोपादेयमद्यत्वेपिनतुत्रयंमनुष्यैःशिक्षितव्यमित्यत्रोच्यतेपूर्वैर्देवादिभिर्विशिष्टैरनुष्ठितमेतत्त्रयंतस्मा
न्मनुष्यैरेवचशिक्षितव्यमितितत्रदयालुत्वस्यानुष्ठेयत्वंस्यात्कथमसुरैरप्रशस्तैरनुष्ठितत्वादितिचेन्नतुल्यत्वात्त्रयाणामतोन्योत्रा
भिप्रायःप्रजापतेःपुत्रादेवादयःपुत्रेभ्यश्चहितमेवपित्रोपदेष्टव्यंप्रजापतिश्चहितज्ञोनान्यथोपदिशति

सनवशादेकैकमेवदमाद्यनुष्ठे
यंनतत्त्रयमित्याह॥देवादिभिरिति॥यथापूर्वस्मिन्कालेदेवादिभिरेकैकमेवोपादेयमित्युक्तंतथावर्तमानेपिकालेमनुष्यैरेकैकमेवकर्तव्यंपूर्वाचा
रानुसारान्नतुत्रयंशिक्षितव्यंतथाचकस्यायंविधिरित्याह॥अद्यत्वेपीति॥आचारप्रामाण्यमाश्रित्यपरिहरति॥अत्रेति॥इत्येकैकमेवनोपादेयमिति
शेषः॥दयालुत्वस्यानुष्ठेयत्वमाक्षिपति॥तत्रेति॥मध्येदमादीनामितियावत्॥असुरैरनुष्ठितत्वेपिदयालुत्वमनुष्ठेयंहितसाधनत्वाद्दानादिवदितिप
रिहरति॥नेत्यादिना॥देवादिषुप्रजापतेरविशेषात्तेभ्यस्तदुपदिष्टमद्यत्वेपिसर्वमनुष्ठेयमित्यर्थः॥हितस्यैवोपदेष्टव्यत्वेपितदज्ञानात्प्रजापतिरन्यथोपदि

हितज्ञस्यपितुरहितोपदेशित्वाभावस्तस्मादित्युक्तः॥ विशिष्टैरनुष्ठितस्यास्मदादिभिरनुष्ठेयत्वेफलितमाह॥ अतइति॥ प्राजापत्यादेवादयोविग्र
हवंतःसंतीत्यर्थवादस्ययथाश्रुतेर्थेप्रामाण्यमभ्युपगम्यदकारत्रयस्यतात्पर्यंसिद्धमितिवक्तुमितिशब्दःसंप्रतिकर्ममीमांसकमतमनुसृत्याह॥
अथवेति॥ कथंमनुष्येष्वेवदेवासुरत्वंतत्राह॥ मनुष्याणामिति॥ अन्येगुणाज्ञानादयः॥ किंपुनर्मनुष्येषुदेवादिशब्दप्रवृत्तौनिमित्तंतदाह॥ अ
दांतत्वादिति॥ देवादिशब्दप्रवृत्तौनिमित्तांतरमाह॥ इतरांश्चेति॥ मनुष्येष्वेवदेवादिशब्दप्रवृत्तौफलितमाह॥ अतइति॥ इतिशब्दोविध्युपप

तस्मात्सुत्रानुशासनंप्रजापतेःपरमेतद्धितमतोमनुष्यैरेवैतत्त्रयंशिक्षितव्यमितिअथवानदेवाअसुरावाऽन्येकेचनविद्यंते
मनुष्येभ्योमनुष्याणामेवादांतायेऽन्यैरुत्तमैर्गुणैःसंपन्नास्तेदेवालोभप्रधानामनुष्यास्तथाहिंसापराःक्रूराअसुरास्तएवमनु
ष्याअदांतत्वादिदोषत्रयमपेक्ष्यदेवादिशब्दभाजोभवंतिइतरांश्चगुणान्सत्वरजस्तमांस्यपेक्ष्यातोमनुष्यैरेवशिक्षितव्यमेत
त्त्रयमिति॥ तदपेक्षयैवप्रजापतिनोपदिष्टत्वात्तथाहिमनुष्याअदांतालुब्धाःक्रूराश्चदृश्यंतेतथाचस्मृतिः॥ कामःक्रोधस्तथालो
भस्तस्मादेतत्त्रयंत्यजेदिति॥ दमादिसाधनत्रयंसर्वोपासनशेषंविहितंदांतोऽलुब्धोदयालुःसन्सर्वोपासनेष्वधिक्रियतइति॥
॥४॥ इतिसप्तमेद्वितीयंब्राह्मणं॥२॥ तत्रनिरुपाधिकस्यब्रह्मणोदर्शनमतिक्रांतमथाधुनासोपाधिकस्यतत्रैवाभ्युदयफलानिवक्त
व्यानीत्येवमर्थोयमारंभः

त्तिप्रदर्शनार्थः॥ मनुष्यैरेवत्रयंशिक्षितव्यमित्यत्रहेतुमाह॥ तदपेक्षयेति॥ मनुष्याणामेवदेवादिभावेप्रमाणमाह॥ तथा
हीति॥ त्रयंशिक्षितव्यमित्यत्रस्मृतिमुदाहरति॥ तथाचेति॥ सार्थवादेनविधिनासिद्धमर्थमनुवदति॥ दमादीति॥ कथंतस्यसर्वोपासनशेषत्वंतदाह॥ दां
तइति॥ अलुब्धइतिच्छेदः॥ इतिशब्दोब्राह्मणसमाप्त्यर्थः॥४॥ इतिसप्तमेद्वितीयंब्राह्मणं॥ संप्रत्युत्तरसंदर्भस्यतात्पर्यंवक्तुंभूमिकांकरोति॥ तत्रेति॥ कांड

पापस्यादिरस्यहृदयस्यस्फलान्युपासनानीतिशेषः॥अनंतरब्राह्मणमारायतस्यसंगतिमाह॥एषइत्यादिना॥उक्तस्यहृदयशब्दार्थस्यपांचभिकत्वंद
र्शयन्प्रजापतित्वंसाधयति॥यस्मिन्निति॥कथंहृदयस्यसर्वत्वंतदाह॥उक्तमिति॥सर्वत्वसंकीर्तनफलमाह॥एतत्सर्वमिति॥तत्रहृदयस्योपास्यत्वे

एषप्रजापतिर्यद्धृदयंप्रजापतिरनुशास्तोसनंतरमेवाभिहितंकःपुनरसावनुशास्ताप्रजापतिरित्युच्यतेएषप्रजापतिःकोसौयद्धृदयमि
तिहृदयस्थाबुद्धिरुच्यतेयस्मिन्शाकल्यब्राह्मणांतेनामरूपकर्मणामुपसंहारउक्तोदिग्विभागद्वारेणतदेतत्सर्वभूतप्रतिष्ठंसर्वभूता
त्मभूतंहृदयंप्रजापतिःप्रजानांस्रष्टाएतद्ब्रह्मबृहत्वात्सर्वात्मत्वाच्चब्रह्मएतत्सर्वमुक्तंपंचमाध्यायेहृदयस्यहृदयस्थस्यसर्वत्वंचेतत्सर्वंय

एषप्रजापतिर्यद्धृदयमेतद्ब्रह्मैतत्सर्वंतदेतत्र्यक्षरंहृदयमितिहृइत्येकमक्षरमभिहरन्त्यस्मैस्वाश्चान्येचयएवंवेद
दइत्येकमक्षरंददत्यस्मैस्वाश्चान्येचयएवंवेदयमित्येकमक्षरमेतिस्वर्गंलोकंयएवंवेद॥तृतीयंब्राह्मणं॥ ३ ॥ ॥

स्यात्तस्मादुपास्यंहृदयंब्रह्मतत्रहृदयनामाक्षरविषयमेवतावदुपासनमुच्यतेतदेतद्धृदयमितिनामत्र्यक्षरंत्रीण्यक्षराण्यस्येतित्र्य
क्षरंकानिपुनस्तानित्रीण्यक्षराण्युच्यंतेहृइत्येकमक्षरं॥अभिहरंतिहृतेराहरतिकर्मणोहृइत्येतद्रूपमितियोवेदयस्माद्धृदयायब्र
ह्मणेस्वाश्चेंद्रियाण्यन्येचविषयाःशब्दादयःस्वंस्वंकार्यमभिहरंतिहृदयंचभोक्त्रर्थमभिहरत्यतोहृदयनाम्नोहृइत्येतदक्षरमितियोवे
दास्मैविदुषेऽभिहरंतिस्वाश्चज्ञातयोऽन्येचासंबद्धाबलिमितिवाक्यशेषः॥विज्ञानानुरूप्येणैतत्फलं॥ सिद्धेसतीत्येतत्॥फलोक्तिमुत्थाप्य
व्याकरोति॥अभिहरंतीति॥योवेदास्मैविदुषेऽभिहरंतीतिसंबंधः॥वेदनमेवविशदयति॥यस्मादित्यादिना॥स्वकार्यरूपदर्शनाद्धृदयस्यतत्कार्यं

औचित्यमुक्तेफलेकथयति॥ विज्ञानेति॥ अत्रापीतिदकारोपासनेपिफलमुच्यतइतिशेषः॥ नामेवफलोक्तिंव्यनक्ति॥ हृदयायेति॥ अस्मै विदुषेस्वाश्चान्येचददतिबलिमितिशेषः॥ नामाक्षरोपासनानित्रीणिहृदयस्वरूपोपासनमेकमितिचत्वार्युपासनान्यत्रविवक्षितानीत्या

तथादइत्येतदप्येकमक्षरंएतदपिदानार्थस्यददातेर्दइत्येतद्रूपंहृदयनामाक्षरत्वेननिबद्धमत्रापिहृदयायब्रह्मणेस्वाश्चकरणान्य न्येचविषयाःस्वंस्वंवीर्यंददतिहृदयंचभोक्त्रेददातिस्ववीर्यमतोदकारइत्येवंयोवेदास्मैददतिस्वाश्चान्येच॥ तथायमित्येतदप्येकम क्षरंइणोगत्यर्थस्ययमित्येतद्रूपमस्मिन्नाम्निनिबद्धमितियोवेदस्वर्गंलोकमेतिएवंनामाक्षरादपीदृशंविशिष्टंफलंप्राप्नोतिकिमुव क्तव्यंहृदयस्वरूपोपासनादितिहृदयस्तुतयेनामाक्षरोपन्यासः॥५॥ सप्तमस्यतृतीयंब्राह्मणं॥३॥ तस्यैवहृदयाख्यस्यब्रह्मणःसत्य

तद्वैतदेतदेवतदाससत्यमेवसयोहैतन्महद्यक्षंप्रथमजंवेदसत्यंब्रह्मेतिजयतीमाल्लोकान्जितइन्न्वसावसद्यएव मेतन्महद्यक्षंप्रथमजंवेदसत्यंब्रह्मेतिसत्यंह्येवब्रह्म॥६॥ चतुर्थंब्राह्मणं॥४॥ मित्युपासनंविधित्सन्नाहतत्तदितिहृदयंब्रह्म

पराम्रष्टंवैइतिस्मरणार्थंतद्यद्धृदयंब्रह्मस्मर्यतेइत्येकस्तच्छब्दस्तदेतदुच्यतेप्रकारांतरेणेतिद्वितीयस्तच्छब्दः॥ किंपुनस्तत्प्रकारांतरमे तदेवतदित्येतच्छब्देनसंबध्यतेतृतीयस्तच्छब्दःएतदितिवक्ष्यमाणंबुद्धौसंनिधीकृत्याहआसबभूवकिंपुनरेतदेवासयदुक्तंहृदयंब्रह्मेतित दितितृतीयस्तच्छब्दोविनियुक्तःकिंतदितिविशेषतोनिर्दिशतिसत्यमेवसच्चत्यच्चमूर्तंचामूर्तंचसत्यंब्रह्मपंचभूतात्मकमित्येतत्शंकाह॥ एव मिति॥७॥ सप्तमेतृतीयंब्राह्मणं॥३॥ ब्राह्मणांतरमुत्थाप्याक्षराणिव्याचष्टे॥ तस्यैवेत्यादिना॥ सत्यशब्दार्थंसत्यज्ञानादिवाक्योपात्तंव्यावर्त्तयति॥ सद्वेति॥ स

वेदनमनूद्य फलोक्तिमवतारयति॥ स यइति॥ प्रथमजत्वं कथयति॥ सर्वस्मादिति॥ स यः कश्चिद्वेदेति संबंधः॥ केसुतिकसिद्धं फलांतरमा
ह॥ किंचेति॥ वशीकृतस्य शत्रोः स्वरूपेण सत्त्वं वारयति॥ असच्चेति॥ सयो हैतमित्यादिनायएवमित्यादेरेकार्थत्वात्पुनरुक्तिरित्याशंक्याह॥ कस्ये
तदिति॥ कथमस्य विज्ञानस्येदं फलमित्याशंक्याह॥ अतइति॥ पंचमीपरामृष्टं स्पष्टयति॥ सत्यंहीति॥ चतुर्थं ब्राह्मणं॥४॥ इदमाब्राह्मणंगृह्यते॥ त

स यः कश्चित्सत्यात्मानमेतम्महन्महत्त्वाद्यक्षं पूज्यं प्रथमजं प्रथमं जातं सर्वस्मात्संसारिणः एतदेवाग्रेजातं ब्रह्मातः प्रथमजं वेद विजा
नाति सत्यं ब्रह्मेति तस्येदं फलमुच्यते यथा सत्येन ब्रह्मणा इमे लोका आत्मसात्कृता जिता एवं स सत्यात्मानं ब्रह्म महद्यक्षं प्रथमजं वेद स
जयतीमाल्लोकान्॥ किंच॥ जितो वशीकृतः इन्नु इत्थं यथा ब्रह्मणा असौ शत्रुरिति वाक्यशेषः असच्च असद्भवेदसौ शत्रुर्जितो भवेदित्य

आप एवेदमग्र आसुस्ता आपः सत्यमसृजंत सत्यं ब्रह्म ब्रह्म प्रजापतिं प्रजापतिर्देवाꣳस्ते देवाः सत्यमेवोपासते तदेतत्त्र्यक्ष
रꣳ सत्यमिति॥ र्थः कस्यैतत्फलमिति पुनर्निगमयति य एवमेतम्महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मेति अतो विद्यानुरूपं फलं युक्तं सत्यं
ह्येव यस्माद्ब्रह्म॥ ६॥ सप्तमस्य चतुर्थं ब्राह्मणं॥४॥ सत्यस्य ब्रह्मणः स्तुत्यर्थमिदमाह महद्यक्षं प्रथमजमित्युक्तं तत्कथं प्रथमजत्वमित्युच्यते आ
प एवेदमग्र आसुरापइति कर्मसमवायिन्योऽग्निहोत्राद्याहुतयः अग्निहोत्राद्याहुतेर्द्रवात्मकत्वादप्त्वं ता ह्यापोऽग्निहोत्रादिकर्मापवर्गोत्तरका
लंकेनचिददृष्टेन सूक्ष्मेणात्मनाकर्मसमवायित्वमपरित्यजंत्य स्यावांतरसंगतिमाह॥ महदिति॥ आहुतीनामेव कर्मसमवायित्वं न त्वपामि
त्याशंक्याह॥ अग्निहोत्रादीति॥ यद्यप्यापः सोमाद्याहूयमानाः कर्मसमवायिन्यस्तथाप्युत्तरकाले कथं तासां तथात्वं कर्मणोऽस्थायित्वादित्याशंक्या

कर्मसमवायित्वमपरित्यजंत्यस्तत्संबंधित्वेनापःप्रथमंप्रवृत्तास्तन्नाशोत्तरकालंसूक्ष्मेणादृष्टेनात्मनातींद्रियेणात्मनातिष्ठंतीतियोजना॥आप
इतिविशेषणंभूतांतरव्यासेधार्थमितिभ्रांतिंवारयति॥इतरेति॥कथंतर्हितासामेवश्रुतावुपादानंतदाह॥कर्मेति॥इतितासामेवात्रग्रहण
मितिशेषः॥विवक्षितपदार्थंनिगमयति॥सर्वाण्येवेति॥पदार्थमुक्तमनूद्यवाक्यार्थमाह॥ताइति॥यास्त्वायथोक्ताआपस्ताएवेतियत्शब्दात्

इतरभूतसहिताएवनकेवलाःकर्मसमवायित्वात्तुप्राधान्यमपामितिसर्वाण्येवभूतानिप्रागुत्पत्तेरव्याकृतावस्थानिकृत्तसहि
तानिनिर्दिश्यंतआपइतिताआपोबीजभूताजगतोऽव्याकृतात्मनावस्थितास्ताएवेदंसर्वंनामरूपविकृतंजगदग्रआसुर्नान्यत्किंचि
द्विकारजातमासीत्ताःपुनरापःसत्यमसृजंततस्मात्सत्यंब्रह्मप्रथमजंतदेतद्धिरण्यगर्भस्यसूत्रात्मनोजन्मयदव्याकृतस्यजगतो

सदित्येकमक्षरंतीत्येकमक्षरंयमित्येकमक्षरंप्रथमोत्तमेअक्षरेसत्यंमध्यतोनृतंतदेतदनृतमुभयतःसत्येनपरिगृही
तꣳसत्यभूयमेवभवतिनैनंविद्वाꣳसमनृतꣳहिनस्ति॥१॥ व्याकरणंतत्सत्यंब्रह्मकृतोमहत्वात्कथंमहत्वमित्याहयस्मात्स
र्वस्यस्रष्टृकथंयत्सत्यंब्रह्मतत्प्रजापतिंप्रजानांपतिंविराजंसूर्यादिकरणमसृजतेत्यनुषंगःप्रजापतिर्देवान्सविराट्प्रजापतिर्देवा
नसृजतयस्मात्सर्वमेवंक्रमेणसत्याद्ब्रह्मणोजातंतस्मान्महत्सत्यंब्रह्मकथंपुनर्यस्मिन्नुच्यतेततएवंसृष्टादेवाःपितरमपिविराजमती
त्यैतद्देवसत्यंब्रह्मोपासतेऽतएतत्प्रथमजंमहद्यक्षंतस्मात्सर्वात्मनोपास्यंततबंधेनयोजना॥सत्यंज्ञानमनंतंब्रह्मेतिश्रुतंसत्यंकथंभूतांतर
सहिताभ्योऽद्भ्योजायतेतन्नाह॥तदेतदिति॥तस्यब्रह्मत्वंप्रश्नपूर्वकंविशदयति॥तत्सत्यमिति॥सत्यस्यब्रह्मणोमहत्वंप्रश्नद्वारासाधयति॥कथमि

विशेषणत्रयेसिद्धेफलितमाह॥ तस्मादिति॥ तस्यापीत्यपिशब्दोहृदयब्रह्मदृष्टंतार्थः॥ बुद्धिपूर्वकमनृतंविदुषोपिबाधकमित्यभिप्रेत्यविशिन

तस्यापिसत्यस्यब्रह्मणोनामसत्यमितितदेतत्त्र्यक्षरं॥ कानितानिअक्षराणीत्याहसइत्येकमक्षरंतीत्येकमक्षरंतीतिइकारानुबंधोनिर्देशा र्थः॥ यमित्येकमक्षरंतत्रतेषांप्रथमोत्तमेअक्षरेसकारयकारौसत्यंमृत्युरूपाभावान्मध्यतोमध्येनृतमनृतंहिमृत्युर्मृत्युनृतयोस्तका रसामान्यात्तदेतदनृतंमृत्युरूपमुभयतःसत्येनसकारयकारलक्षणेनपरिगृहीतंव्याप्तमंतर्भावितंसत्यरूपाभ्यामतोऽकिंचित्करंत त्सत्यभूयमेवसत्यबाहुल्यमेवभवतिएवंसत्यबाहुल्यस्यसर्वस्यमृत्योरनृतस्याकिंचित्करत्वंचयोविद्वांस्तमेवंविद्वांसमनृतंकदाचित्त्रमा

तद्यत्तत्सत्यमसौसआदित्योयएषएतस्मिन्मंडलेपुरुषोयश्चायंदक्षिणेक्षन्पुरुषस्तावेतावन्योन्यस्मिन्प्रतिष्ठितौ

दोक्तंनहिनस्ति॥ १॥ अस्याधुनासत्यस्यब्रह्मणःसंस्थानविशेषउपासनमुच्यतेतत्किंतद्यत्तत्सत्यंब्रह्मप्रथमजंकिमसौसः॥ कोसावा दित्यः॥ कःपुनरसावादित्योयएषएतस्मिन्नादित्यमंडलेपुरुषोभिमानीसोसौसत्यंब्रह्मयश्चायमध्यात्मंयोयंदक्षिणेसन्नक्षिणिपु रुषश्चशब्दात्सचसत्यंब्रह्मेतिसंबंधस्तावेतावादित्याक्षिस्थौपुरुषावेकस्यसत्यस्यब्रह्मणःसंस्थानविशेषौयस्मात्तस्मादन्योन्यस्मिन्नि तरेतरस्मिन्नादित्यश्चक्षुषिचाक्षुषश्चादित्येप्रतिष्ठितावध्यात्माधिदैवतयोरन्योन्योपकार्योपकारकत्वात्कथंप्रतिष्ठिताविरुच्यतेरश्मि भिःप्रकाशेनानुग्रहंकुर्वन्नेषआदित्योस्मिन्नाक्षुषेअध्यात्मेप्रतिष्ठितः॥ ष्टि॥ प्रमादोक्तमिति॥ ब्राह्मणांतरमवतार्यव्याकरोति॥ अस्येत्यादि ना॥ तत्राधिदैविकंस्थानविशेषमुपन्यस्यति॥ तदित्यादिना॥ संप्रत्याध्यात्मिकंस्थानविशेषंदर्शयति॥ यश्चेति॥ प्रदेशभेदवर्तिनोःस्थानभेदेनभेदं

अन्योन्यमुपकार्योपकारकत्वेनान्योन्यस्मिन्प्रतिष्ठितत्वं प्रश्नपूर्वकं प्रकटयति॥ कथमित्यादिना॥ प्राणैश्चक्षुरादिभिरिंद्रियैरिति यावत्॥ अनुगृह्णन्नादित्यमंडलात्मानं प्रकाशयन्नित्यर्थः॥ प्रासंगिकमुपासनाप्रसंगागतमित्यर्थः॥ तस्य दर्शनस्य किं फलमित्याशंक्याह॥ कथमिति॥ पुरुषद्वयस्या

अयं चाक्षुषः प्राणैरादित्यमनुगृह्णन्नमुष्मिन्नादित्येधिदैवे प्रतिष्ठितः॥ सोस्मिन्शरीरे विज्ञानमयो यो भोक्ता यदास्मिन्काले उत्क्रमिष्यन्भवति तदासौ आदित्यपुरुषो रश्मीनुपसंहृत्य केवलेनोदासीन्येन रूपेणाव्यवतिष्ठते तदायं विज्ञानमयः पश्यति शुद्धमेव केवलं विरश्मिमेतन्मंडलं चंद्रमंडलमिव तदेतदरिष्टदर्शनं प्रासंगिकं प्रदर्श्यते कथं नाम पुरुषः करणीये यत्नवान्स्यादिति न एनं चाक्षुषं

रश्मिभिरेषोस्मिन्प्रतिष्ठितः प्राणैरयममुष्मिन्स यदोत्क्रमिष्यन्भवति शुद्धमेवैतन्मंडलं पश्यति नैनमेते रश्मयः प्रत्यायंति॥ ८॥ य एष एतस्मिन्मंडले पुरुषस्तस्य भूरिति शिर एकं शिर एकमेतदक्षरं भुव इति बाहू द्वौ बाहू द्वे एते अक्षरे स्वरिति॥ पुरुषशरीरकृत्यानुग्रहाय एते रश्मयः स्वामिकर्तव्यवशात्पूर्वमागच्छंतोपि पुनः तत्कर्मक्षयमनुरुध्यमाना इव नोपयंति न प्रत्यागच्छंत्येन मतो वगम्यते परस्परोपकार्योपकारकभावात्तस्यैवैकस्यात्मनोंशावेताविति तत्र योसौ कोयः एष एतस्मिन्मंडले पुरुषः सत्यनामा तस्य व्याहृतयो वयवाः॥ कथं भूरिति येयं व्याहृतिः सा तस्य शिरः प्राथम्यात्तत्र सामान्यं स्वयमेवाह श्रुतिरेकमेकसंख्यायुक्तं शिरस्तथैतदक्षरमेकं भूरिति भुव इति बाहू द्वित्वसामान्याद्द्वौ बाहू द्वे एते अक्षरे तथा स्वरिति न्योन्यमुपकार्योपकारकत्वमुक्तं निगमयति॥ नेत्यादिना॥ पुनःशब्देन मतेरुत्तरकालो गृह्यते॥ रश्मीनामचेतनत्वादिवशब्दः पुनर्नकारोच्चारणमन्वयप्रदर्शनार्थं तत्र स्या

तन्नेति प्रथमव्याह तौशिरो दृष्यारोप्येवि वक्षितेतस्योपनिषदित्यादिव्याचष्टे॥ तस्येत्यादिना॥ यथालोकेगवादिः स्वेनाभिधानेनाभिधीयमानः
संमुखीभवतितद्वदित्याह॥ लोकवदिति॥ नामोपास्तिफलमाह॥ अहरितिचेति॥८॥ यथामंडलपुरुषस्यव्याह सवयवस्यसोपनिषत्कस्य

प्रतिष्ठाद्वे प्रतिष्ठे द्वे एते अक्षरे प्रतिष्ठे पादौ प्रतितिष्ठत्याभ्यामितितस्यास्यव्याह त्यवयवस्यसत्यस्यब्रह्मणः उपनिषद्रहस्यमभिधा
नंयेनाभिधानेनाभिधीयमानंतद्ब्रह्माभिमुखीभवतिलोकवत्कासावित्याह अहरित्यहरितिचैतद्रूपं हंतेर्जहातेश्चेतियोवेदस

प्रतिष्ठाद्वेप्रतिष्ठेद्वेएतेअक्षरेतस्योपनिषदहरितिहंतिपाप्मानंजहातिचयएवंवेद॥९॥ योयंदक्षिणेक्षन्पुरुषस्तस्य
भूरितिशिरएकंशिरएकमेतदक्षरंभुवइतिबाहूद्वौबाहूद्वेएतेअक्षरेस्वरितिप्रतिष्ठाद्वेप्रतिष्ठेद्वेएतेअक्षरेतस्योपनि
षदहमितिहंतिपाप्मानंजहातिचयएवंवेद॥१०॥ सप्तमस्यपंचमंब्राह्मणं॥५॥ मनोमयोयंपुरुषोभाःसत्यस्तस्मि
न्नंतर्हृदयेयथाव्रीहिर्वायवोवा हंतिजहातिचपाप्मानंयएवंवेद॥९॥ एवंयोयंदक्षिणेक्षन्पुरुषस्तस्यभूरितिशिरइत्यादिसर्वं
समानंतस्योपनिषदहमितिप्रत्यगात्मभूतत्वात्पूर्ववद्धंतेर्जहातेश्चेति॥१०॥ सप्तमस्यपंचमंब्राह्मणं॥५॥ उपाधीनामनेकत्वादनेक
विशेषणत्वाच्चतस्यैवप्रकृतस्यब्रह्मणोमनउपाधिविशिष्टस्योपासनंविधित्सन्नाहमनोमयोमनःप्रायो धिदैवतमुपासनमुक्तं॥ त
थाध्यात्मंचाक्षुषपुरुषस्योक्तविशेषणस्योपासनमुच्यतेइत्याह॥ एवमिति॥ चाक्षुषस्यकथमहमित्युपनिषदिष्यतेतत्राह॥ प्रत्यगिति॥ हंते
र्जहातेश्चाहमित्येतद्रूपमितियोवेदसहंतिपाप्मानंजहातिचेतिपूर्ववत्फलवाक्यंयोज्यमित्याह॥ पूर्ववदिति॥४॥ सप्तमस्यपंचमंब्राह्मणं॥५॥

अनेकविशेषणत्वाच्च प्रत्येकं तेषामिति शेषः॥ तस्मात्परत्वे हेतुमाह॥ मनसीति॥ प्रकारांतरेण तस्मात्परत्वमाह॥ मनसा चेति॥ तस्य भास्वररूपत्वं साधयति॥ मनस इति॥ तस्य ध्यानार्थं स्थानं दर्शयति॥ तस्मिन्निति॥ औपाधिकमिदं परिमाणं स्वाभाविकं त्वानंत्यमित्यभिप्रेत्याह॥ स

मनस्युपलभ्यमानत्वान्मनसा चोपलभ्यत इति मनोमयोऽयं पुरुषो भाः सत्यः भा एव सत्यं सद्भावः स्वरूपं यस्य सोऽयं भाः सत्यो भास्वर इत्येतन्मनसः सर्वार्थावभासकत्वान्मनोमयत्वाच्चास्य भास्वरत्वं तस्मिन्नंतर्हृदये हृदयांतस्तस्मिन्नित्येतद्यथा व्रीहिर्वा यवो वा परिमाणतस्तवंपरिमाणस्तस्मिन्नंतर्हृदये योगिभिर्दृश्यत इत्यर्थः॥ स एष सर्वस्येशानः सर्वस्य स्वभेदजातस्येशानः स्वामी स्वामित्वेपि सति कश्चिदमात्यादितंत्रोऽयं तु न तथा किं तर्हि अधिपतिरधिष्ठाय पालयिता सर्वमिदं प्रशास्ति यदिदं किंच यत्किंचित्सर्वं जगत्त

स एष सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिदं किंच॥ ११॥ षष्ठं ब्राह्मणं॥ ६॥ विद्युद्ब्रह्मेत्याहुर्विदानाद्विद्युद्विद्यत्येनं पाप्मनो य एवं वेद विद्युद्ब्रह्मेति विद्युद्ध्येव ब्रह्म॥ १२॥ सप्तमं ब्राह्मणं॥ ७॥

त्सर्वं प्रशास्ति एवं मनोमयस्योपासनात्तथारूपापत्तिरेव फलं तं यथा यथोपासते तदेव भवतीति ब्राह्मणं॥ ११॥ सप्तमस्य षष्ठं ब्राह्मणं॥ ६॥ तथैवोपासनांतरं सत्यस्य ब्रह्मणो विशिष्टफलमारभ्यते॥ विद्युद्ब्रह्मेत्याहुर्विद्युतो ब्रह्मणो निर्वचनमुच्यते विदानादवखंडनात्तमसो मेघांधकारं विदार्य ह्यवभासतेऽतो विद्युदेवंगुणं विद्युद्ब्रह्मेति यो वेदासौ विद्यत्यवखंडयति विनाशयति पाप्मन

स एष इति॥ यदुक्तं सर्वस्येशान इति तन्निगमयति॥ सर्वमिति॥ यथान्यत्र तथात्र फलाश्रुतेरफलमिदमुपासनमकार्यमिति चेन्नेत्याह॥ एवमिति॥ ११॥ ॥सप्तमे षष्ठं ब्राह्मणं॥ ६॥ ब्राह्मणांतरमुद्ध्यामविभजते॥ तथैवेत्या

उक्तमेवफलंप्रकटयति ॥ एनमिति॥१२॥सप्तमेसप्तमंब्राह्मणं॥७॥ब्राह्मणांतरमवतारयति॥पुनरिति॥तांधेनुमुपासीतेतिसंबंधः॥वाचोधे
न्वाश्चसादृश्यंविशदयति॥यथेत्यादिना॥स्तनचतुष्टयंभोक्तृत्रयंचप्रश्नपूर्वकंप्रकटयति॥केपुनरित्यादिना॥कथंदेवाःयथोक्तौस्तनावुपजीवंति

एनमात्मानंप्रतिप्रतिकूलभूताःपाप्मानोयेतान्सर्वान्पाप्मनःवखंडयतीत्यर्थः यएवंवेदविशुद्धह्येतितस्यानुरूपंफलंविशुद्धिय
स्माद्ब्रह्म॥१२॥इतिसप्तमस्यसप्तमंब्राह्मणं॥७॥पुनरुपासनांतरंतस्यैवब्रह्मणःवाग्वैब्रह्मेतिवागितिशब्दःत्रयीतांवाचंधेनुंधेनु
रिवधेनुःयथाधेनुश्चतुर्भिःस्तनैःस्तन्यंपयःक्षरतिवत्सायएवंवाग्धेनुर्वक्ष्यमाणैःस्तनैःपयद्वान्नंक्षरतिदेवादिभ्यःकेपुनस्तेस्त

वाचंधेनुमुपासीततस्याश्चत्वारःस्तनाःस्वाहाकारोवषट्कारोहंतकारःस्वधाकारस्तस्यैद्वौस्तनौदेवाउपजीवंतिस्वाहा
कारंचवषट्कारंचहंतकारंमनुष्याःस्वधाकारंपितरस्तस्याःप्राणऋषभोमनोवत्सः॥१३॥अष्टमंब्राह्मणं॥८॥

नाःकेवातेये
भ्यःक्षरतितस्याएतस्यावाचोधेन्वाद्वौस्तनौदेवाउपजीवंतिवत्सस्थानीयाःकौतौस्वाहाकारंवषट्कारंचाभ्यांहिहविर्दीयतेदेवेभ्यःहंत
कारंमनुष्याःहंतइतिमनुष्येभ्योऽन्नंप्रयच्छंतिस्वधाकारंपितरःस्वधाकारेणपितृभ्यःस्वधाप्रयच्छंतितस्याःधेन्वावाचःप्राणऋषभः
प्राणेनहिवाक्प्रसूयतेमनोवत्सोमनसाहिप्रस्नाव्यतेमनसाह्यालोचितेविषयेवाक्प्रवर्ततेतस्मान्मनोवत्सस्थानीयमेवंवाग्धेनूपा
सकस्ताद्भाव्यमेवप्रतिपद्यते॥सप्तमेअष्टमंब्राह्मणं॥८॥

तत्राह॥आभ्यांहीति॥हंतयद्यपेक्षितमित्यर्थः॥स्वधामन्नं॥प्रस्नाव्यतेप्रस्नुतासक्षरणो
द्यताक्रियते॥मनसाहीत्यादिनोक्तंविवृणोतिमनसेति॥फलाश्रवणादेतदुपासनमकिंचित्करमित्याशंक्याह॥एवमिति॥ताद्भाव्यंयथोक्तवागुपाधिक

ब्राह्मणांतरमनूद्यतस्यतात्पर्यमाह॥अयमिति॥अन्नपानस्यपक्तातत्सद्भावेमानमाह॥तस्येति॥क्रियायाःश्रवणस्यैतदितिविशेषणंतद्यथाभ

अयमग्निर्वैश्वानरःपूर्ववदुपासनांतरमयमग्निर्वैश्वानरःकोयमग्निरित्याह योयमंतःपुरुषेकिंशरीरारंभकोनेत्युच्यतेयेनाग्निनावै
श्वानराख्येनेदमन्नंपच्यते॥किंतदन्नंयदिदमद्यतेभुज्यतेन्नंप्रजाभिर्जाठरोग्निरित्यर्थः॥तस्यसाक्षादुपलक्षणार्थमिदमाहतस्या
ग्नेरन्नंपचतोजाठरस्यैषघोषोभवतिकोसौयंघोषमेतदितिक्रियाविशेषणंकर्णावपिधायांगुलीभ्यामपिधानंकृत्वाशृणोतितंप्रजा
पतिमुपासीतवैश्वानरमग्निमत्रापिताद्गुण्यफलंतत्रप्रासंगिकमिदमरिष्टलक्षणमुच्यतेसोत्रशारीरोभोक्तायदोत्क्रमिष्यन्भवतिनैनंघो

अयमग्निर्वैश्वानरोयोयमंतःपुरुषेयेनेदमन्नंपच्यतेयदिदमद्यतेतस्यैषघोषोभवतियमेतत्कर्णावपिधायशृणो
तिसयदोत्क्रमिष्यन्भवतिनैनंघोषंशृणोति॥१४॥नवमंब्राह्मणं॥९॥

षंशृणोति॥१॥सप्तमस्यनवमंब्राह्मणं॥सर्वेषाम
स्मिन्प्रकरणेउपासनानांगतिरियंफलंचोच्यतेयदावैपुरुषोविद्वानस्माल्लोकात्प्रैतिशरीरंपरित्यजतिसतदावायुमागच्छत्यंतरि
क्षेतिर्यग्भूतोवायुःस्तिमितोऽभेद्यस्तिष्ठतिसवायुस्तत्रस्वात्मनितस्मैसंप्राप्तायविजिहीतेस्वात्मावयवान्विगमयतिछिद्रीकरोत्या
त्मानमित्यर्थः॥किंपरिमाणंछिद्रमित्युच्यतेयथारथचक्रस्यखंछिद्रंप्रसिद्धपरिमाणंतेनछिद्रेणसविद्वानूर्ध्वआक्रमतेऊर्ध्वःसग
च्छति॥सआदित्यमागच्छति

वतितथेत्यर्थः॥कौऽस्येयाग्न्युपाधिकस्यपरस्योपासनेप्रस्तुतेसतीत्याह॥तत्रेति॥१५॥सप्तमेनवमंब्रा
ह्मणं॥९॥ब्राह्मणांतरस्यतात्पर्यमाह॥सर्वेषामिति॥फलंत्वश्रुतफलानामितिशेषः॥किमितिविद्वान्वायुमागच्छतितमुपेक्ष्यैवब्रह्मलोकंकुतो

मृदंगादि २

आदित्यंप्रत्यागमनेहेतुमाह॥आदित्यइति॥उक्तेर्थेवाक्यंपातयति॥तस्मादिति॥बहून्कल्पानित्यवांतरकल्पोक्तिः॥सप्तमस्यदशमंब्राह्मणं॥१०॥

आदित्योब्रह्मलोकंजिगमिषोर्मार्गनिरोधंकृत्वास्थितःसोप्येवंविदेउपासकायद्वारंप्रयच्छतितस्मैसतत्रविजिहितेयथालंबरस्यखं
वादित्रविशेषस्यछिद्रंपरिमाणंतेनसऊर्ध्वआक्रमतेसचंद्रमसमागच्छतिसोपितस्मैसतत्रविजिहीतेयथादुंदुभेःखंप्रसिद्धंतेनऊ
र्ध्वआक्रमतेसलोकंप्रजापतिमागच्छतिकिंविशिष्टमशोकंमानसेनदुःखेनविवर्जितमित्येतत्हिमंहिमवर्जितंशारीरदुःखवर्जित

यदावैपुरुषोस्माल्लोकात्प्रैतिसवायुमागच्छतितस्मैसतत्रविजिहीतेयथारथचक्रस्यखंतेनसऊर्ध्वआक्रमतेसआ
दित्यमागच्छतितस्मैसतत्रविजिहीतेयथालंबरस्यखंतेनसऊर्ध्वआक्रमतेसचंद्रमसमागच्छतितस्मैसतत्रविजि
हीतेयथादुंदुभेःखंतेनसऊर्ध्वआक्रमतेसलोकमागच्छत्यशोकमहिमंतस्मिन्वसतिशाश्वतीःसमाः॥१५॥द
शमंब्राह्मणं॥१०॥एतद्वैपरमंतपोयद्व्याहितस्तप्यतेपरमꣳहैवलोकंजयतियएवंवेदएतद्वैपरमंतपोयंप्रेतमरण्यꣳ

मित्यर्थः॥तंप्राप्यतस्मिन्वसतिशाश्वतीर्नित्याःसमाःसंवत्सरानित्यर्थः॥ब्रह्मणोबहून्कल्पान्वसतीत्येतत्॥सप्तमस्यदशमंब्रा
ह्मणं॥१०॥एतद्वैपरमंतपःकिंतद्यद्व्याहितोज्वरादिपरिगृहीतःसन्यत्तप्यतेतदेतत्परमंतपइत्येवंचिंतयेत्दुःखसामान्यात्त
स्यैवंचिंतयतोविदुषःकर्मक्षयहेतुस्तदेवतपोभवत्यनिंदतोऽविषीदतःसएवचतेनविज्ञानतपसादग्धकिल्बिषः

ब्रह्मोपासनप्रसंगेनफलवद्ब्रह्मोपासनमुपन्यस्यते॥एतदिति॥यद्व्याहितइतिप्रतीकमादायव्याचष्टे॥ज्वरादीति॥कर्मक्षयहेतुरित्यत्र

परमंहैवलोकमित्यन्नतपसोनुकूलंफलंलोकशब्दार्थः॥अस्तुग्रामादरण्यगमनंतथापिकथंतपस्त्वमित्याशंक्याह॥ग्रामादिति॥१६॥सप्तमस्यै

परमंहैवलोकंजयतियएवंवेदतथामुमूर्षुरादावेवकल्पयतिकिमेतद्धैपरमंतपोयंप्रेतंमांग्रामादरण्यंहरंतिऋत्विजोंत्यकर्मणे
तद्ग्रामादरण्यगमनसामान्यात्परमंममतत्तपोभविष्यतिग्रामादरण्यगमनंपरमंतपइतिहिप्रसिद्धंपरमंहैवलोकंजयतियए
वंवेदतथैतद्धैपरमंतपोयंप्रेतमग्नावभ्यादधतिअग्निप्रवेशसामान्यात्परमंहैवलोकंजयतियएवंवेद॥१६॥सप्तमस्यैकादशं
ब्राह्मणं॥११॥अन्नंब्रह्मेतितथैतदुपासनांतरंविधित्सन्नाह॥अन्नंब्रह्मान्नमद्यतेयत्तद्ब्रह्मेतिएकेआचार्याआहुस्तन्नतथागृहीत

हरंतिपरमंहैवलोकंजयतियएवंवेदैतद्धैपरमंतपोयंप्रेतमग्नावभ्यादधतिपरमंहैवलोकंजयतियएवंवेद॥१६॥एकादशंब्रा
ह्मणं॥११॥अन्नंब्रह्मेत्येकआहुस्तन्नतथापूयतिवाअन्नमृतेप्राणात्प्राणोब्रह्मेत्येकआहुस्तन्नतथाशुष्यतिवैप्राणऋते
न्नादेतेहत्वेवदेवतेएकधाभूयंभूत्वापरमतांगच्छत

व्यंअन्नंब्रह्मेत्यन्येचाहुःप्राणोब्रह्मेत्येतच्चतथानगृहीतव्यंकिमर्थंपुनर
न्नंब्रह्मेतिनग्राह्यंयस्मात्पूयतिक्लिद्यतेपूतिभावमापद्यतेऋतेप्राणात्तत्कथंब्रह्मभवितुमर्हतिब्रह्महिनामतद्यदविनाशिअस्तुतर्हि
प्राणोब्रह्मनैवंयस्माच्छुष्यतिवैप्राणःशोषमुपैतिऋतेन्नादत्ताहिप्राणोऽतोन्नेनाद्येनविनानशक्नोत्यात्मानंधारयितुंतस्माच्छुष्यतिवै
प्राणऋतेन्ना

कादशंब्राह्मणं॥११॥ब्राह्मणांतरंगृहीत्वातात्पर्यमाह॥अन्नमिति॥यथापूर्वस्मिन्ब्राह्मणेफलवद्ब्रह्मोपासनमुक्तंतद्वदि
त्याह॥तथेति॥एतदितिब्रह्मविषयोक्तिःउपास्यंब्रह्मनिर्धारयितुंविचारयति॥अन्नमित्यादिना॥अन्नस्यविनाशित्वेपिब्रह्मत्वंकिंनस्यादतआ

३१७

अनुज्ञां करोति १

पाणिप्रक्षालनं वचनसामर्थ्यात्प्राप्तं शुद्ध्यर्थं स्मार्तमाचमनमनुजानाति॥ अप आचम्येति॥ एक पुंडरीक शब्दोऽखंडश्रेष्ठवाची॥ ३६॥ तमेतं नापुत्राय वा

आचम्य जघनेनाग्निं पश्चादग्नेः प्राक्शिराः संविशति प्रातः संध्यामुपास्यादित्यमुपतिष्ठते दिशामेकपुंडरीकमित्यनेन मंत्रेण यथेतं यथागतमेत्यागत्य जघनेनाग्निं समासीनो वंशं जपति॥ ३६॥ तं हैतमुद्दालक इत्यादि सत्यकामो जाबालोंतेवासिभ्य उक्त्वोवाचापि य एनं शुष्के स्थाणौ निषिंचेज्जायेरन्नेवास्मिञ्छाखाः प्ररोहेयुः पलाशानीत्येवमंतमेनं मंथमुद्दालकात्प्रभृत्येकैकाचार्यक्रमागतं सत्यकाम आचा

सर्वं भूयासं भूर्भुवः स्वः स्वाहेत्यंततः आचम्य पाणी प्रक्षाल्य जघनेनाग्निं प्राक्शिराः संविशति प्रातरादित्यमुपतिष्ठते दिशामेकपुंडरीकमस्यहं मनुष्याणामेकपुंडरीकं भूयासमिति यथेतमेत्य जघनेनाग्निमासीनो वंशं जपति॥ ३६॥ तं हैतमुद्दालक आरुणिर्वाजसनेयाय याज्ञवल्क्यायांतेवासिन उक्त्वोवाचापि य एनं शुष्के स्थाणौ निषिंचेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति॥ ३७॥ एतमु हैव वाजसनेयो याज्ञवल्क्यो मधुकाय पैंग्यायांतेवासिन उक्त्वोवाचापि य एनं शुष्के स्थाणौ निषिंचेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति॥ ३८॥

यों बहुभ्योंतेवासिभ्य उक्त्वोवाच किमन्यदुवाचेत्यच्यते अपि य एनं शुष्के स्थाणौ गतप्राणे पि एनं मंथं भक्षणाय संस्कृतं निषिंचेत्प्रक्षिपेज्जायेरन्नुत्पद्येरन्नेवास्मिन्स्थाणौ शाखा अवयवाः स्यप्ररोहेयुश्च पलाशानि पर्णानि यथा जीवतः स्थाणोः किमुतानेन कर्मणा कामः सिध्येदिति ध्रुवफलमिदं कर्मेति कर्मस्तुत्यर्थमेतद्विद्याधिगमे षट् तीर्थानि तेषामिह सप्राणदर्शनस्य मंथविज्ञानस्याधिगमे हेतुरेव तीर्थे अनुज्ञायेते पुत्रश्चांतेवासी च॥ ३७॥ ३८॥ त्र्यमाह॥ विद्येति॥ शिष्यः श्रोत्रियो मेधावी धनदा

ताप्रियः उक्तो विद्यया विद्यादातेति षट्तीर्थानि संप्रदानानि॥ ३७॥ ३८॥

४२४

छा.उ. २५

चतुरौदुंबरो भवतीत्याख्यातं दश ग्राम्याणि धान्यानि भवंति ग्राम्याणां तु धान्यानां दश नियमेन ग्राह्याणीत्यवोचाम तान्येतानीति निर्दिश्यंते व्री
हियवास्तिलामाषा अणुप्रियंगवः अणवश्चाणुशब्दवाच्याः क्वचिद्देशे प्रियंगवः प्रसिद्धाः कंगुशब्देन खल्वा निष्पावा वल्लशब्दवाच्या लोके ख

अ.८

एतमु हैव मधुकः पैंग्यश्चूलाय भागवित्तये ऽन्तेवासिन उक्त्वोवाचापि य एनं शुष्के स्थाणौ निषिंचेज्जायेरंछाखाः प्ररोहेयुः पलाशानी
ति ॥ ३९ ॥ एतमु हैव चूलो भागवित्तिर्जानकय आयस्थूणायांतेवासिन उक्त्वोवाचापि य एनं शुष्के स्थाणौ निषिंचेज्जायेरंछाखाः प्र
रोहेयुः पलाशानीति ॥ ४० ॥ एतमु हैव जानकिरायस्थूणः सत्यकामाय जाबालायांतेवासिन उक्त्वोवाचापि य एनं शुष्के स्थाणौ नि
षिंचेज्जायेरंछाखाः प्ररोहेयुः पलाशानीति ॥ ४१ ॥ एतमु हैव सत्यकामो जाबालोंऽतेवासिभ्य उक्त्वोवाचापि य एनं शुष्के स्थाणौ नि

एषां वै भूतानां पृथिवी रसः पृथिव्या आपोऽपामोषधय ओषधीनां पुष्पाणि पुष्पाणां फलानि फलानां पुरुषः पुरुषस्य रेतः
॥ ४४ ॥ षिंचेज्जायेरंछाखाः प्ररोहेयुः पलाशानीति तमेतं नापुत्राय वानंतेवासिने वा ब्रूयात् ॥ ४२ ॥ चतुरौदुंबरो भवत्यौदुंबरः स्रु
वऔदुंबरश्चमस औदुंबर इध्म औदुंबर्या उपमंथन्यो दश ग्राम्याणि धान्यानि भवंति व्रीहियवास्तिलमाषा अणुप्रियंगवो गोधूमाश्च
मसूराश्च खल्वाश्च खलुकुलाश्च तान्पिष्टान्दधनि मधुनि घृत उपसिंचत्याज्यस्य जुहोति ॥ ४३ ॥ तृतीयं ब्राह्मणं ॥ ३ ॥ या दृग्जन्मा यथोत्पा
दितो यैर्वा गुणैर्विशिष्टः पुत्र आत्मनः पितुश्च लोक्यो भवतीति

त्तुकुलाः कुलस्थाः एतद्व्यतिरेकेण यथाशक्ति सर्वौषधयो ग्राह्याः फलानि चे
त्यवोचाम अयाज्ञिकानि वर्जयित्वा ॥ ४३ ॥ अष्टमस्य तृतीयं ब्राह्मणभाष्यं ॥ ३ ॥ प्राणोपासकस्य वित्तार्थिनो मंथाख्यं कर्मोक्त्वा ब्राह्मणांतरमुत्थापयति ॥ या

ए.म. २५

उक्तगुणः स कथं स्यादित्यपेक्षायामिति शेषः॥ तच्छब्दो यथोक्तपुत्रविषयः यदस्मिन्ब्राह्मणे पुत्रमंथाख्यं कर्म वक्ष्यते तद्भवति सर्वाधिकारविषय
मित्याशंक्याह॥ प्राणेति॥ पुत्रमंथस्य कालनियमाभावमाशंक्याह॥ यदेति॥ किमत्र गमकमित्याशंक्य रेतः श्रुतिरित्याह॥ इत्येतदिति॥ पृथिव्याः स

तत्संपादनाय ब्राह्मणमारभ्यते प्राणदर्शिनः श्रीमंथं कर्म कृतवतः पुत्रमंथेऽधिकारो यदा पुत्रमंथं चिकीर्षति तदा श्रीमंथं कृत्वा ऋतुका
लं पत्न्याः प्रतीक्षत इत्येतद्वृत्तस ओषध्यादिरसत्वमस्य तुल्यावगम्यते एषां वै एषां चराचराणां भूतानां पृथिवी रसः सारभूता सर्वभूतानां
मध्वितिह्युक्तं पृथिव्या आपो रसोऽप्सु हि पृथिव्योता च प्रोता चापामोषधयो रसः कार्यत्वाद्रसत्वमोषध्यादीनामोषधीनां पुष्पाणि पुष्पाणां फ

स ह प्रजापतिरीक्षांचक्रे हंतास्मै प्रतिष्ठां कल्पयानीति स स्त्रियꣳ ससृजे ताꣳ सृष्ट्वाध उपास्त तस्मात्स्त्रियमध उपासीत स एतं
प्रांचं ग्रावाणमात्मन एव समुदपारयत्तेनैनामभ्यसृजत्॥ ४५॥ लानि फलानां पुरुषः पुरुषस्य रेतः सर्वेभ्योंऽगेभ्यस्तेजः संभृतमि
तिश्रुत्यंतराच्चैतदेवं सर्वभूतानां सारतममेतद्रेतोऽतः कान्वस्य योग्या प्रतिष्ठेति॥ ४४॥ स ह स्रष्टा प्रजापतिरीक्षांचक्रे ईक्षां कृत्वा स्त्रियं
ससृजे तां च सृष्ट्वाध उपास्त मैथुनाख्यं कर्माध उपासनं नाम कृतवांस्तस्मात्स्त्रियमध उपासीत श्रेष्ठानुश्रयणा हि प्रजाः अत्र वं भूतसारत्वे

मधुब्राह्मणं प्रमाणयति॥ सर्वभूतानामिति तत्र गार्गिब्राह्मणं प्रमाणमित्याह॥ अप्सु हीति॥ अपां पृथिव्याश्च रसत्वं कारणत्वादुक्तं॥ ओषध्यादीनां
कथमित्याशंक्याह॥ कार्यत्वादिति॥ रेतो सृजतेति प्रस्तुत्य रेतस्तत्र तेजः शब्दप्रयोगात्तस्य पुरुषे सारत्वमेतरेयके विवक्षितमित्याह॥ सर्वेभ्य इ
ति॥ श्रेष्ठमनुश्रयंते ऽनुसरंतीति श्रेष्ठानुश्रयणाः पश्चकर्मणि स्वारस्येन प्राणिमात्रस्य प्रवृत्तेर्व्यर्थो विधिरित्याशंक्याह॥ अत्रेति॥ ॥ ॥ ॥

४=उपस्थेंद्रियं　　　　　प्रकृष्टगतिपृष्ठं=३

अवाच्यं कर्म सङ्ग्रस्यर्थः॥४५॥मुष्कौ वृषणौ यो निपार्श्वयोः कठिनौ मांसखंडौ तत्राधिषवणशब्दितसोमफलकदृष्टिः॥ यद्वानडुहं चर्म सोमकंडनार्थं तद्दृष्टिरहस्यदेशस्थे चर्मणि कर्तव्येत्याह॥ताविति॥उपास्तिप्रकारमुक्त्वा फलोक्तेस्तास्यर्थमाह॥वाजपेयेति॥स्तूयते मैथुनाख्यं कर्मेति शेषः॥स्तु

वाजपेयसामान्यकॢप्तिमाह स एतं प्रांचं मात्मनो ग्रावाणं सोमाभिषवोपलस्थानीयं काठिन्यसामान्यात्प्रजननेंद्रियमुद्पारयदुत्सूरितवा न्ती ॥ जननं प्रतितेन एनां स्त्रियमभ्यसृजत अभिसंसर्गं कृतवान्॥४५॥तस्या वेदिरित्यादि सर्वसामान्यं प्रसिद्धं समिद्धोग्निर्मध्यतः स्त्री व्यंजनस्यतौ मुष्कावधिषवणफलके इति व्यवहितेन संबध्यते वाजपेययाजिनो यावांल्लोकः प्रसिद्धस्तावान्विदुषो मैथुनकर्मणः लोकः

तस्या वेदिरुपस्थो लोमानि बर्हिश्चर्माधिषवणे समिद्धो मध्यतस्तौ मुष्कौ स यावान्ह वै वाजपेयेन यजमानस्य लोको भवति तावानस्य लोको भवति य एवं विद्वानधोपहासं चरत्यासां स्त्रीणां सुकृतं वृंक्तेऽथ य इदमविद्वानधोपहासं चरत्यास्य स्त्रियः सुकृतं वृंजते॥४६॥एतद्ध स्म वै तद्विद्वानुद्दालक आरुणिराहैतद्ध स्म वै तद्विद्वान्नाको मौद्गल्य आहैतद्ध स्म वै तद्विद्वान्कुमारहारित आह॥

फलमिति स्तूयते॥ तस्माद्वीभत्सानकार्यं इति य एवं विद्वानधोपहासं चरत्यासां स्त्रीणां सुकृतं वृंक्ते आवर्जयति अथ पुनर्यो वाजपेयसंपत्तिं न जानात्यविद्वान्नेतमेरसुतमलं चाधोपहासं चरति आ अस्य स्त्रियः सुकृतमावृंजते अविदुषः॥४६॥ एतद्ध स्म वै तद्विद्वानुद्दालक आरुणिराहाधोपहासाख्यं मैथुनकर्म वाजपेयसंपन्नं विद्वानित्यर्थः॥ तिफलमाह॥तस्मादिति॥इति शब्दः स्तुतिफलदर्शनार्थः॥

उपास्तेरधिकं फलमाह॥य एवमिति॥अविदुषो दुर्व्यापारनिरतस्य प्रत्यवायं दर्शयति॥अथेति॥४६॥अविदुषामतिगर्हितमिदं कर्मेत्यत्राचार्यपरंप

अविदुषामवाच्येकर्मणिप्रवृत्तानांदोषित्वमुपसंहर्त्तुमितिशब्दः॥ विदुषोलाभमविदुषश्चदोषंदर्शयित्वाक्रियाकालात्प्रागेवरेतस्खलनेप्रायश्चि
त्तंदर्शयति॥ श्रीमंथमिति॥ यःप्रतीक्षेतेतस्यरेतोयदिस्कंदतीतियोजना॥ मेममाद्याप्राप्तकालेयद्रेतःपृथिवींप्रत्यस्कांत्सीद्रागातिरेकेणस्कन्नमा

तथानाकोमौद्गल्यःकुमारहारितश्चकिंतआहुरित्युच्यते॥ वहवोमर्यामरणधर्मिणोमनुष्याब्राह्मणाअयनंयेषांतेब्राह्मणायनाःब्रह्मबं
धवोजातिमात्रोपजीविनइत्येतन्निरिंद्रियाविश्लिष्टेंद्रियाविसुकृतोविगतसुकृतकर्मणोऽविद्वांसोमैथुनकर्मासक्ताइत्यर्थस्तेकि
मस्माल्लोकात्प्रयंतिपरलोकात्सरिभशइतिमैथुनकर्मणोऽत्यंतपापहेतुत्वंदर्शयतियइदमविद्वांसोऽधोपहासंचरंतीतिश्रीमंथंकृत्वा

वहवोमर्याब्राह्मणायनानिरिंद्रियाविसुकृतोस्माल्लोकात्प्रयंतियइदमविद्वांऽसोधोपहासंचरंतीतिबहुवाइदंसुप्तस्यवा
जाग्रतोवारेतःस्कंदति॥४७॥ तदभिमृशेदनुवामंत्रयेतयन्मेद्यरेतःपृथिवीमस्कांत्सीद्यदोषधीरप्यसरद्यदपः॥ इदम
हंतद्रेतआददेपुनर्मामैत्विंद्रियंपुनस्तेजःपुनर्भगः॥ पुनरग्निर्धिष्ण्यायथास्थानंकल्पंतामित्यनामिकांगुष्ठाभ्यामादा
यांतरेणस्तनौवाभ्रुवौवानिमृज्यात्॥४८॥ पत्न्यामृतुकालंब्रह्मचर्येणप्रतीक्षतोयदीदंरेतःस्कंदतिबहुवाअल्पंवासुप्तस्यजाग्र
तोवारागप्राबल्यात्तदभिमृशेदनुमंत्रयेतवाऽनुजपेदित्यर्थः॥ यदाभिमृशतितदानामिकांगुष्ठाभ्यांतद्रेतआदत्तेआददइत्येवमंतेनमं
त्रेणपुनर्मामित्येतेननिमृज्याद्दंतरेणमध्येभ्रुवौभ्रुवोर्वास्तनौस्तनयोर्वा॥४८॥ सीदोषधीःप्रतिअप्यसरद्गमतयच्चापःस्वयोनिंप्रतिगतम
भूत्तदिदंरेतःसंप्रत्याददेहमित्यादानमंत्रार्थः॥ केनाभिप्रायेणतदादानंतदाह॥ पुनरिति॥ यस्मान्मेरेतोरूपेणबहिर्निर्गतमिंद्रियंमांप्रत्येतुसमागच्छतु

निर्गमनात्तदात्मना बहिर्निर्गतं सन्मां प्रत्यागच्छतु अग्निर्धिष्ण्यं स्थानं येषां ते एवास्तद्वैतो यथास्थानं कल्पयन्त्विति मार्जनमन्त्रार्थः ॥४८॥ अयोनौ रेतस्ख
लने प्रायश्चित्तमुक्तं ॥ रेतो योनावुदके रेतःसिचश्छायादर्शने प्रायश्चित्तं दर्शयति ॥ अथेत्यादिना ॥ निमित्तान्तरे प्रायश्चित्तान्तरप्रदर्शनप्रक्रमार्थोऽथशब्दः

अथ यदि कदाचिदुदके आत्मानमात्मच्छायां पश्येत्तदात्माभिमन्त्रयेतानेन मन्त्रेण मयि तेज इति श्रीर्ह वै एषा पत्नी स्त्रीणां मध्ये यद्यस्मान्मलोद्वा
सा उद्धृतमलवद्वासास्तस्मात्तां मलोद्वाससं यशस्विनीं श्रीमतीमभिक्रम्याभिगम्योपमन्त्रयेदिदमद्यावाभ्यां कार्यं यत्पुत्रोत्पादनमिति त्रिरा
त्रान्त आप्लुतां ॥४९॥ सा चेदस्मै न दद्यान्मैथुनं कर्तुं काममेनामवक्रीणीयाद्वाभरणादिना ज्ञापयेत्तथापि सा नैव दद्यात्काममेनां यष्ट्या वा पा

अथ यद्युदक आत्मानं परिपश्येत्तदभिमन्त्रयेत मयि तेज इन्द्रियं यशो द्रविणं सुकृतमिति श्रीर्ह वा एषा स्त्रीणां यन्मलोद्वासा
स्तस्मान्मलोद्वाससं यशस्विनीमभिक्रम्योपमन्त्रयेत ॥४९॥ सा चेदस्मै न दद्यात्काममेनामवक्रीणीयात्सा चेदस्मै नैव दद्यात्का
ममेनां यष्ट्या वा पाणिना वोपहत्यातिक्रामेदिन्द्रियेण ते यशसा यश आदद इत्ययशा एव भवति ॥५०॥ सा चेदस्मै दद्यादिन्द्रियेण
ते यशसा यश आदधामीति यशस्विनावेव भवतः ॥५१॥

णिना वोपहत्यातिक्रामेन्मैथुनाय शप्स्यामि त्वां दुर्भगां करिष्यामीति प्रख्या
प्यतामनेन मन्त्रेणोपगच्छेदिन्द्रियेण ते यशसा यश आदद इति सा तदभिशापाद्वन्ध्या दुर्भगेति ख्याताऽयशा एव भवति ॥५०॥ सा चेदस्मै द
द्याद्गुणाख्यवस्त्वाद्युक्तं तदानेन मन्त्रेणोपगच्छेदिन्द्रियेण ते यशसा यश आदधामीति तदा यशस्विनावेवोभावपि भवतः ॥५१॥ ॥ मयि तेजः प्रभृति
देवाः कल्पयन्त्विति मन्त्रयोजना ॥ प्रकृतेन रेतःसिचा यस्यां प्रयोजनं पित्त्यस्तां स्त्रियं स्तौति ॥ श्रीरित्यादिना ॥ कथं सा यशस्विनी न हि तस्याः ख्यातिरस्ति तत्राह ॥ य

ज्ञापयेदात्मीयं प्रेमातिरेकमिति शेषः ॥ बलादेव वशीकृतां भार्यां पशुकर्मार्थं कथमुपगच्छेदित्याकांक्षायामाह ॥ शस्यामीति ॥ ५.१ ॥ भर्तुर्भार्यावशीकरण प्रकारमुक्त्वा पुरुषद्वेषिण्यास्तस्यास्तद्विषये प्रीतिसंपादनक्रियां दर्शयति ॥ सयामित्यादिना ॥ हे रेतस्त्वं मदीयात्सर्वस्मादंगात्संभवसि विशेषतश्च हृदयादन्नरसद्वारेण जायसे स त्वमंगानां कषायो रसः सन्विषलिप्तशरविद्धां मृगीमिवामूं मदीयां स्त्रियं मे मादय मद्वशां कुर्वित्यर्थः ॥ ५.२ ॥ तस्याः स्ववि

स यां स्वभार्यामिच्छेदियं मां कामयेतेति तस्यामर्थं प्रजनने इन्द्रियं निष्ठाय निक्षिप्य मुखेन मुखं संधायोपस्थमस्या अभिमृश्य जपेदिदं मन्त्रमंगादंगादिति ॥ ५.२ ॥ अथ यामिच्छेन्न गर्भं दधीत न धारयेत गर्भिणी मा भूदिति तस्यामर्थमिति पूर्ववदभिप्राण्याभिप्राणनं

स यामिच्छेत्कामयेत मेति तस्यामर्थं निष्ठाय मुखेन मुखꣳ संधायोपस्थमस्या अभिमृश्य जपेदंगादंगात्संभवसि हृदयादधि जायसे स त्वमंगकषायोऽसि दिग्धविद्धामिव मादयेमाममूं मयीति ॥ ५.२ ॥ अथ यामिच्छेन्न गर्भं दधीतेति तस्यामर्थं निष्ठाय मुखेन मुखꣳ संधायाभिप्राण्यापान्यादिन्द्रियेण ते रेतसा रेत आदद इत्यरेता एव भवति ॥ ५.३ ॥ अथ यामिच्छेद्दधीतेति तस्यामर्थं निष्ठाय मुखेन मुखꣳ संधायापान्याभिप्राण्यादिन्द्रियेण ते रेतसा रेत आदधामीति गर्भिण्येव भवति ॥ ५.४ ॥ प्रथमं कृत्वा पश्चादपान्यादिन्द्रियेण ते रेतसा रेत आदद इत्यनेन मन्त्रेणारेता एव भवति न गर्भिणी भवतीत्यर्थः ॥ ५.३ ॥ अथ यामिच्छेद्दधीत गर्भमिति तस्यामर्थमित्यादि पूर्ववत्पूर्वविपर्ययेणापान्याभिप्राण्यादिन्द्रियेण ते रेतसा रेत आदधामीति गर्भिण्येव भवति ॥ ५.४ ॥ वये प्रीतिमापाद्यावाच्यकर्मानुष्ठानदशायामभिप्राय विशेषानुसारेणानुष्ठानविशेषं दर्शयति ॥ अथेत्यादिना ॥ तत्र तत्राथशब्दस्तत्तदुपक्रमार्थो नेतव्यः ॥ पशुकर्मकाले प्रथमं स्वकीयपुंस्त्वद्वारा तदीयस्त्री

मन्त्रैरेवाभिप्रायान्तरानुसारिणंविधिमाह॥अथयामिस्यादिना॥स्वकीयपंचमेंद्रियेणतदीयपंचमेंद्रियाद्रेतःस्वीकृत्यतस्मुन्नोस्त्वितिसमर्थंकृत मितिमत्वास्वकीयरेतसासहतस्मिन्निक्षिपेत्तदिदमपाननंप्राणनंचतस्यूर्ध्वंकंरेतःसेचनं॥५४॥संप्रतिप्रासंगिकमाभिचारिकंकर्मकथयति॥ अथपुनरिति॥द्वेषवतानुष्ठितमिदंकर्मफलवदितिवक्तुंद्विष्यादित्यधिकारिविशेषणं॥आमविशेषणंपात्रस्यप्रकृतकर्मयोग्यत्वख्यापना

अथपुनर्यस्यजायायैजारःउपपतिःस्यात्तंचेत्द्विष्यादभिचरिष्याम्येनमितिमन्येततस्येदंकर्मामपात्रेग्निमुपसमाधायसर्वंप्रति लोमंकुर्यात्तस्मिन्नग्नावेताःशरभृष्टीःशरेषीकाःप्रतिलोमाःसर्पिषाक्ताःघृताभ्यक्ताजुहुयान्ममसमिद्धेहौषीरित्याद्याआहुतीर्

अथयस्यजायायैजारःस्यात्तंचेद्द्विष्यादामपात्रेग्निमुपसमाधायप्रतिलोमंशरबर्हिस्तीर्त्वातस्मिन्नेताःशरभृष्टीःप्रति लोमाःसर्पिषाक्ताजुहुयान्ममसमिद्धेहौषीःप्राणापानौतआददेसावितिममसमिद्धेहौषीःपुत्रपशूंस्तआददेसावि तिममसमिद्धेहौषीरिष्टासुकृतेतआददेसावितिममसमिद्धेहौषीराशापराकाशौतआददेसावितिसवाएषनिरिंद्रियो विसुकृदस्माल्लोकात्प्रैतियमेवंविद्ब्राह्मणःशपतितस्मादेवंविच्छ्रोत्रियस्यदारेणनोपहासमिच्छेदुतह्येवंवित्परोभवति॥५५॥

तेसर्वासामसावितिनामग्रहणंप्रत्येकंसएषएवंविद्यंब्राह्मणःशपतिसविसुकृतोविगतपुण्यकर्माप्रैतितस्मादेवंविच्छ्रोत्रियस्यदारे णनोपहासमिच्छेन्नर्माथिनकुर्यात्किमुताधोपहासंहियस्मा यं॥अग्निमित्येकवचनादुपसमाधानवचनाच्चावसथ्याग्निरत्रविवक्षितः॥सर्वंप रिस्तरणादितस्यप्रतिलोमत्वेक्रमेणःप्रतिलोमत्वंहेतूकर्तव्यं॥ममसमिद्धेयोषाग्नौयौवनादिनासमिद्धेरेतोहुतवानसिततोपराधिनस्तवप्राणापानावा

तदस्ते चासौ वियात्मनः शत्रोर्वीनामग्रह्णीयात्॥ इष्टं श्रौतं कर्म सुकृतं स्मार्तं आशा प्रार्थना॥ वाचा यत्प्रतिज्ञातं कर्मणा नोपपादितं तत्स्य प्रतीक्षा परकाशः॥ य
थोक्तहोमद्वाराशापदानस्य फलं दर्शयति॥ स एष इति॥ एवंविदं मंथकर्मद्वारा प्राणविद्यावलं तस्मादेवंविदित्यत्रैवंविदं परदारगमने यथोक्तदोष

देवंविदपि तावत्परो भवति शत्रुर्भवतीत्यर्थः॥ ५५॥ अथ यस्य जायामार्तवं विंदेत्तु भावः प्राप्नुयादित्येवमादिर्ग्रंथः श्रीर्ह वा एषा स्त्रीणामि
त्यतः पूर्वं द्रष्टव्यः॥ सामर्थ्यात्त्र्यहं कंसेन पिबेदहतवासाश्चास्यान्नैनां स्नातामस्नातां च वृषलो वृषली वा नोपहन्यान्नोपस्पृशेत् त्रिरात्रांते त्रिरा

अथ यस्य जायामार्तवं विंदेत्त्र्यहं कंसेन पिबेदहतवासा नैनां वृषलो न वृषल्युपहन्यात्त्रिरात्रांत आप्लुत्य व्रीहीनवघातयेत्॥ ५६॥
स य इच्छेत्पुत्रो मे शुक्लो जायेत वेदमनुब्रुवीत सर्वमायुरियादिति क्षीरौदनं पाचयित्वा सर्पिष्मंतमश्नीयातामीश्वरौ जनयितवै
॥५७॥ अथ य इच्छेत्पुत्रो मे कपिलः पिंगलो जायेत द्वौ वेदावनुब्रुवीत सर्वमायुरियादिति दध्योदनं पाचयित्वा सर्पिष्मंतमश्नी
यातामीश्वरौ जनयितवै॥ ५८॥

त्रिरात्रसमाप्तावाप्लुत्य स्नाताऽहतवासाः स्यादिति व्यवहितेन संबंधः स्नातामाप्लुतां व्रीहीनवघातयेद्व्री
हीनवघातायतामेव नियुंज्यात्॥ ५६॥ स य इच्छेत्पुत्रो मे शुक्लो वर्णतो जायेत वेदमेकमनुब्रुवीत सर्वमायुरियादहर्षशतं क्षीरौदनं पाचयित्वा
सर्पिष्मंतमश्नीयातामीश्वरौ समर्थौ जनयितवे जनयितुं॥ ५७॥ दध्योदनं दध्ना चरुं पाचयित्वा द्विवेदं चेदिच्छति पुत्रं॥ तदेवमशननियमः॥ ५८



ज्ञातत्वं तच्छब्दोपात्तं हेत्वंतरमाह॥ एवंविदपीति॥ आभिचारिकं कर्म प्रसंगागतमुक्त्वा पूर्वोक्तमृतुकालं ज्ञापयति॥ अथेति॥ श्रीर्ह वा एषा स्त्रीणामि
त्यपेक्ष्या पूर्वत्वं॥ पाठक्रमादर्थक्रमस्य बलवत्त्वे हेतुमाह॥ सामर्थ्यादिति॥ अर्थवशादिति यावत्॥ ५६॥ किं पुनरवघातनिष्पन्नैस्तंडुलैरनुष्ठेयं त

बलदेवसादृश्यंवाशुक्लत्वंवाशुक्लत्वंस्वाभाविकमोदनंपाचयतिचेत्किमर्थमुदकग्रहणंतद्व्यतिरेकेणोदनपाकासंभवादित्याशंक्याह॥ उदकग्रहणमिति॥क्षीरादेरितिशेषः॥वेदविमयमेवपांडित्यंकिंनस्यादतआह॥वेदइति॥समितिर्विद्वत्सभातांगच्छतीतिविद्वानेवोच्यता

केवलमेवस्वाभाविकमोदनमुदकग्रहणमन्यप्रसंगनिवृत्यर्थं॥५९॥दुहितुःपांडित्यंगृहकृत्यविषयमेववेदेऽनधिकारात्तिलो दनंकृसरं॥६०॥विविधंगीतोविजिगीतः प्रख्यातइत्यर्थः समितिंगमःसभांगच्छतीतिप्रगल्भइत्यर्थः॥पांडित्यस्यपृथग्ग्रहणा

अथयइच्छेत्पुत्रोमेश्यामोलोहिताक्षोजायेतत्रीन्वेदाननुब्रुवीतसर्वमायुरियादित्युदौदनंपाचयित्वासर्पिष्मंतमश्नीयाता मीश्वरौजनयितवै॥५९॥अथयइच्छेद्दुहितामे ——— पंडिताजायेतसर्वमायुरियादितितिलौदनंपाचयित्वासर्पिष्मं तमश्नीयातामीश्वरौजनयितवै॥६०॥अथयइच्छेत्पुत्रोमेपंडितोविजिगीतःसमितिंगमःशुश्रूषितांवाचंभाषिताजाये तसर्वान्वेदाननुब्रुवीतसर्वमायुरियादितिमांसौदनंपाचयित्वासर्पिष्मंतमश्नीयातामीश्वरौजनयितवाऔक्ष्णेनवार्ष भेणवा॥६१॥

तुशुश्रूषितांश्रोतुमिष्टांरमणीयांवाचंभाषितासंस्कृतायाअर्थवत्यावाचोभाषितेत्यर्थः॥मांसमिश्रमोदनं मांसौदनंतन्मांसनियमार्थमाहऔक्ष्णेनवामांसेनउक्षासेचनसमर्थःपुंगवस्तदीयंमांसमृषभस्ततोप्यधिकवयास्तदीयंमां समार्षभं॥६१॥अथाभिप्रातरेवकाले मितिचेन्नेत्याह॥पांडित्यस्येति॥सर्वशब्दोवेदचतुष्टयविषयः॥औक्ष्णेनेत्यादितृतीयासहा र्थेदेशविशेषापेक्षयाकालविशेषापेक्षयावामांसनियमः॥६१॥अथशब्दस्तुपूर्ववाक्येषुयथारुचिविकल्पार्थः॥कदापुनरिदमोदनपाका

कोसौ स्थालीपाकविधिः कथं वा तत्र होमस्तत्राह॥ गार्ह्य इति॥ गृह्ये प्रसिद्धो गार्ह्यः॥ अन्नेति पुत्रमंथकर्मोक्तिः॥ अतो मद्भार्यातः सकाशाद्धो विश्वाव
सो गंधर्व त्वमुत्तिष्ठान्यां च जायां प्रफर्व्यं तरुणीं पत्या सह संक्रीडमानामिच्छाहं पुनः स्वामिमां जायां समुपैमीति मंत्रार्थः॥ अभिपत्तिरालिंगनं॥ कदाक्षीरौ

दनादिभोजनं तदाह॥ क्षीरेति॥ भुक्त्वाभिपद्यत इति संबंधः॥ अहं पतिरमः प्राणोसि सा त्वं वा

ग सिक कथं तव प्राणत्वं वाक्त्वमित्याशंक्याह वाचः प्राणाधीनत्ववत्त्वमदधीनत्वादित्यभिप्रेत्य सा त्वमित्यादि पुनर्वचनं॥ ऋगाधारं हि साम गीयते॥ अस्ति च मदाधा
रत्वं तव तथा च मम सामत्वमृक्त्वं च तव द्यौरहं पितृत्वात् पृथिवी त्वं मातृत्वाच्च योर्मातापितृत्वसिद्धेरित्यर्थः॥ तावावां संरभावहै संरंभमुद्यमं करवावहै रहित्वमाग

श्वघात निर्वृत्तां स्तंडुलानादाय स्थालीपाकार्थं तां स्थालीपाकविधिनाज्यं चेष्टित्वाज्यसंस्कारं कृत्वा चरुं श्रपयित्वा स्थालीपाकस्याहुतीर्जुहोति
उपघातं उपहत्योपहत्य अग्नये स्वाहेत्याद्याः गार्ह्यः सर्वो विधिर्द्रष्टव्योत्र मंत्रतो हुत्वोद्धृत्य चरुशेषं प्राश्नाति स्वयं प्राश्येतरस्याः पत्न्यै प्रय

अथाभिप्रातरेव स्थालीपाकावृताज्यं चेष्टित्वा स्थालीपाकस्योपघातं जुहोत्यग्नये स्वाहानुमतये स्वाहा देवाय सवित्रे सत्यप्रसवा
य स्वाहेति हुत्वोद्धृत्य प्राश्नाति प्राश्येतरस्याः प्रयच्छति प्रक्षाल्य पाणी उदपात्रं पूरयित्वा तेनैनां त्रिरभ्युक्षत्युत्तिष्ठातो विश्वावसो
न्यामिच्छ प्रफर्व्यं॥ संजायां पत्या सहेति॥ ६२॥ अथैनामभिपद्यते मोहमस्मि सा त्वं सा त्वमस्यमो अहं सामाहमस्म्यृक् त्वं द्यौरहं
पृथिवी त्वं तावेहि संरभावहै सह रेतो दधावहै पुंसे पुत्राय वित्तय इति॥ ६२॥ कृत्वा शुद्धिं प्रक्षाल्य पाणी आचम्योदपात्रं पूरयित्वा
तेनोदकेनैनां त्रिरभ्युक्ष्य स्वस्त्यनेन मंत्रेण उत्तिष्ठात इति सकृन्मंत्रोच्चारणमथैनामभिमंत्र्य क्षीरौदनादियथापत्यकामं भुक्त्वेति क्रमो द्रष्टव्यः सं
वेशनकाले मोहमस्मीत्यादिमंत्रेणाभिपद्यते॥ ६३॥

१.१. ३०

ऊर्वोः संबोधनं द्यावापृथिवी इति॥ विजिहाथां विश्लिष्टे भवेथां यावामित्यर्थः॥ विष्णुर्व्यापनशीलो भगवान्भवत्या योनिं कल्पयतु पुत्रोत्पत्ति समर्थां करोतु त्वष्टा सविता तव रूपाणि पिंशतु विभागेन दर्शनयोग्यानि करोतु॥ प्रजापतिर्विराड्रूपमदात्मना स्थितः त्वयि रेतः समासिंचतु प्रक्षिपतु॥ धाता पुनः सूत्रात्मा त्वदीयं गर्भं त्वदात्मना स्थितः धारयतु पुष्णातु॥ सिनीवालीदर्शाहर्देवतात्वदात्मनावर्ततेसा च पृथुष्टुका विस्तीर्णस्तुतिर्भा सिनीवालि पृथुष्टु

अथास्या ऊरू विहापयति विजिहाथां द्यावापृथिवी इत्यनेन तस्या मर्थे मित्यादि पूर्ववन्त्रिरेनां शिरः प्रभृत्यनुलोमामनुमार्ष्टि विष्णुर्योनिमि

अथास्या ऊरू विहापयति विजिहाथां द्यावापृथिवी इति तस्यामर्थे निष्ठाय मुखेन मुखꣳ संधाय त्रिरेनामनुलोमामनु मार्ष्टि विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिꣳशतु॥ आसिंचतु प्रजापतिर्धाता गर्भं दधातु ते गर्भं धेहि सिनीवालि गर्भं धेहि पृथुष्टुके गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजौ॥ ६॥ हिरण्मयी अरणी याभ्यां निर्मंथतामश्विनौ तं ते गर्भꣳ हवामहे दशमे मासि सूतये॥ यथाग्निगर्भा पृथिवी यथा द्यौरिंद्रेण गर्भिणी॥ वायुर्दिशां यथा गर्भ एवं गर्भं दधामि तेसाविति॥ ६५॥ सोष्यंतीमद्भिरभ्युक्षति॥ त्यादिप्रतिमंत्रं अंते नाम गृह्णाति असाविति तस्याः॥ ६४॥ सोष्यंतीमद्भिरभ्युक्षति॥ प्रसवकाले सुखप्रसवनार्थमनेन मंत्रेण यथा वातः पुष्करिणीं समिंगयति सर्वतः॥ के गर्भ मिमं धेहि धारय॥ अश्विनौ देवौ सूर्याचंद्रमसौ स्वकीय रश्मिमालिनौ तव गर्भमदात्मना स्थितौ समाधत्तां ज्योतिर्मय्यावरणी प्रागासतुर्याभ्यां गर्भमश्विनौ निर्मथितवंतौ तं तथाभूतं गर्भं ते जठरे दधावहे॥ दशमे मासि प्रसवार्थमाधीयमानं गर्भं दृष्टांतेन दर्शयति॥ यथेति॥ द्यौः इंद्रेण सूर्येणेति यावत्॥ असाविति पत्युर्वा निर्देशस्तस्या नाम गृह्णातीति पूर्वेण संबंधः॥ स

अ. राम: ३०

एवाते एवमेवतेतवस्वरूपोपघातमकुर्वन्नेजतुगर्भश्चलतुजरायुणागर्भवेष्टनेनमांसखंडेनसहावैतुनिर्गच्छतु॥इंद्रस्यप्राणस्यायंव्रजोमार्गःसर्ग
कालेगर्भाधानकालेवाकृतः॥सार्गलइत्यस्यव्याख्यासपरिश्रयइतिपरिवेष्टनेनजरायुणासहितइत्यर्थः॥तंमार्गंप्राप्यत्वमिंद्रगर्भेणसहनिर्जहिनि
र्गच्छ॥गर्भनिःसरणानंतरंयामांसपेशीनिर्गच्छतिसावरातांनिर्गमयेत्यर्थः॥ ६६॥घृतमिश्रंदधिपृषदाज्यमित्युच्यते॥उपघातमित्यभीक्ष्ण्येपौनःपुन्यं

एवातेगर्भएजत्विति॥ ६६॥अथजातकर्मजातेग्निमुपसमाधायांकेआधायपुत्रंकंसेपृषदाज्यंसन्नीयसंयोज्यदधिघृतेपृषदाज्यस्योपघातं

यथावायुःपुष्करिणीꣳसमिंजयतिसर्वतः॥एवातेगर्भएजतुसहावैतुजरायुणा॥इंद्रस्यायंव्रजःकृतःसार्गलःसपरिश्रयःतमिंद्र
निर्जहिगर्भेणसावराꣳसहेति॥ ६६॥जातेग्निमुपसमाधायांकआधायकꣳसेपृषदाज्यꣳसन्नीयपृषदाज्यस्योपघातंजुहोत्यस्मि
न्सहस्रंपुष्यासमेधमानःस्वेगृहे।अस्योपसद्यांमाछैत्सीत्प्रजयाचपशुभिश्चस्वाहा॥मयिप्राणाꣳस्त्वयिमनसाजुहोमिस्वाहा॥यत्क
र्मणात्यरीरिचंयद्वान्यूनमिहाकरं।अग्निष्टत्स्विष्टकृद्विद्वान्स्विष्टꣳसुहुतंकरोतुनःस्वाहेति॥ ६७॥अथास्यदक्षिणंकर्णमभिनिधा
यवाग्वागितित्रिरथदधिमधुघृतꣳ जुहोति॥अस्मिन्सहस्रंइत्याद्यावापस्थाने॥ ६७॥अथास्यदक्षिणंकर्णमभिनिधायसंमुखंवाग्वा

विवक्षितंपृषदाज्यस्याल्पमादायपुनःपुनर्जुहोतीत्यर्थः॥अस्मिन्स्वेगृहेपुत्ररूपेणवर्धमानोमनुष्याणांसहस्रंपुष्यासमनेकमनुष्यपोषकोभूयासमस्यमस्य
स्योपसद्यांसंततौप्रजयापशुभिश्चसहश्रीर्माविच्छिन्नाभूयादित्याह॥अस्मिन्निति॥मयिपितरियेप्राणाःसंतितान्पुत्रेत्वयिमनसासमर्पयामीत्याह॥मयीति॥
अत्यरीरिचमितिअतिरिक्तंकृतवानस्मिइहकर्मणयकरमकरवंतत्सर्वंविद्वानग्निःस्विष्टंकरोतीतिस्विष्टकृद्भूत्वास्विष्टमनधिकंसुहुतमन्यूनंचास्माकंकरोत्वित्य

४११

त्रयीलक्षणावाक्तमपिप्रविशत्विति जपतोभिप्रायः॥ एतैर्मंत्रैर्भूस्त्वेदधामीत्यादिभिरिति शेषः॥ वेदनाम्नाव्यवहारोलोकेनास्तीत्याशंक्याह॥ तदस्येति॥ य
त्तद्वेद इति नाम तस्य गुह्यं भवति वेदनं वेदोनुभवः सर्वस्य निजं स्वरूप मित्यर्थः॥ हे सरस्वति यस्तेस्तनः शशयः शयःफलं तेन सह वर्तमानो यश्च सर्वं प्राणि
नां स्थितिहेतुत्वन्नभावेनजातोयश्चरत्नधा अन्नस्य पयसोवा धाता यश्च वसुकर्मफलं ताद्दिंदतीतिवसुविद्यश्च सुष्ठु ददातीति सुदत्रो येनचस्तनेनविश्वावि

अथदधिमधुघृतं सन्नीयानंतर्हितेनाव्यवहितेनजातरूपेण हिरण्येनप्राशयति भूस्त्वयिदधामीत्येतैर्मंत्रैः प्रत्येकं॥ अथास्यनामधेयं करो
तिवेदोसीति॥ तदस्य तद्गुह्यं नाम भवति वेद इति॥ अथैनं मात्रे प्रदाय स्तनं प्रयच्छति यस्तेस्तन इत्यादिमंत्रेण॥ ७०॥ अथास्यमातर

संनीयानंतर्हितेनजातरूपेणप्राशयति॥ भूस्त्वेदधामिभुवस्त्वेदधामिस्वस्त्वेदधामिभूर्भुवःस्वःसर्वंत्वयिदधामीति॥ ६८॥
अथास्यनामकरोतिवेदोसीतितदस्यतद्गुह्यमेवनामभवति॥ ६९॥ अथैनंमात्रेप्रदायस्तनंप्रयच्छतियस्तेस्तनःशशयो
योमयोभूर्योरत्नधावसुविद्यःसुदत्रः॥ येनविश्वापुष्यसिवार्याणिसरस्वतितमिहधातवेकरिति॥ ७०॥ अभिमंत्रयतेइलासि

त्यनेनतंवाएतमाहुरित्यनेनविधिनाजातःपुत्रःपितरंपितामहंवाअतिशेतेइतिश्रियायशसाब्रह्मवर्चसेनपरमांनिष्ठांप्रापदित्येवं
स्तुत्योभवतीत्यर्थः॥ श्वानिवार्याणिवरणीयानिदेवादीनिभूतानित्वंपुष्यसितंस्तनंमदीयपुत्रस्यधातवेपानायमदीयभार्यास्तनेप्रविष्टंकुर्वित्यर्थः
॥ ७०॥ इलासिमैत्रावरुणीत्यस्यार्थः मित्रावरुणाभ्यांसंभूतोमैत्रावरुणोवसिष्ठस्तस्यभार्यामैत्रावरुणीसाचारुंधतीतद्वत्त्वंतिष्ठसीतिभार्यांसंबोधयति॥ मैत्रावरु
णीति॥ वीरेपुरुषेमयिनिमित्तभूतेभवतीवीरंपुत्रमजीजनत्॥ सात्वंवीरवतीजीवबहुपुत्राभवयाभवतीवीरवतःपुत्रसंपन्नानस्मानकरत्कृतवतीतिमंत्रा

अहोमहानेषविस्मयोयत्पितरंपितामहंचसर्वमेववंशमतीससर्वस्मादधिकःत्वंजातोसीत्यर्थः॥नकेवलंपुत्रस्यैवेयंस्तुतिरपितुयथोक्तपुत्रसंपन्नस्यपितुरपीत्याह॥यस्येति॥२८॥ इतिश्रीबृहदारण्यकेअष्टमाध्यायेचतुर्थंब्राह्मणं॥४॥ संनिध्याखिलकांडस्यवंशोयमितिशंकांनिवर्तयन्वंशब्राह्मणतात्पर्यमाह॥अथेति॥विद्याभेदात्तोतस्यकांडद्वयस्यप्रत्येकंवंशभाक्त्वेपिनास्यपृथग्भागित्वंखिलत्वेनतच्छेषत्वात्तथाचसमाप्तौपठितोवंशःसम

यस्यचैवंविदोब्राह्मणस्यपुत्रोजायतेसचैवंस्तुत्योभवतीत्यध्याहार्यं॥७१॥ इतिश्रीमद्बृहदारण्यकेअष्टमाध्यायेचतुर्थंब्राह्मणंसमाप्तं॥४

अथाऽस्यमातरमभिमंत्रयतइलासिमैत्रावरुणीवीरेवीरमजीजनत्सात्वंवीरवतीभवयास्मान्वीरवतोकरदितितंवाएतमाहुरतिपितावताभूरतिपितामहोवताभूःपरमांवतकाष्ठांप्रापच्छ्रियायशसाब्रह्मवर्चसेनयएवंविदोब्राह्मणस्यपुत्रोजायतइति॥७१॥इतिचतुर्थंब्राह्मणं॥४॥अथवंशःपौतिमाषीपुत्रःकात्यायनीपुत्रात्कात्यायनीपुत्रोगौतमीपुत्राद्गौतमीपुत्रोभारद्वाजीपुत्राद्भारद्वाजीपुत्रःपाराशरीपुत्रात्पाराशरीपुत्रऔपस्वस्तीपुत्रादौपस्वस्तीपुत्रःपाराशरीपुत्रात्पाराशरीपुत्रःकात्यायनीपुत्रात्कात्यायनीपुत्रःकौशिकीपुत्रात्कौशिकीपुत्रआलंबीपुत्राच्चवैयाघ्रपदीपुत्राच्चवैयाघ्रपदीपुत्रःकाण्वीपुत्राच्चकापीपुत्राच्चकापीपुत्रः॥७२॥ अथेदानींसमस्तप्रवचनवंशःस्त्रीप्राधान्याद्गुणवान्पुत्रोभवतीतिप्रस्तुतं॥अतःस्त्रीविशेषणेनैवपुत्रविशेषणादाचार्यपरंपराकीर्त्यतेतानीमानिशुक्लानीत्यस्मामिश्राणिब्राह्मणेन स्तस्यैवप्रवचनस्यभविष्यतीत्यर्थः॥पूर्वोवंशोपुरुषविशेषितस्तृतीयस्तुस्त्रीविशेषितःतत्रकिंकारणमित्याशंक्याह॥स्त्रीप्राधान्यादिति॥तदेवस्फुटयति॥गुणवानिति॥कोसतेब्राह्मणेनेतिसंबंधः॥शुक्लानियजूंषीय

अयातयामान्यदुष्टान्यगतार्थानीत्यर्थः॥ पाठक्रमेणमन्वादिप्रजापतिपर्यंतोवंशोव्याख्यातःसंप्रत्यर्थक्रममाश्रित्याह॥ प्रजापतिमिति॥ अधोमुखत्वंपा ठक्रमापेक्षयोच्यते॥ तन्नापिप्रजापतिमारभ्यसांजीवीपुत्रपर्यंतंवाजसनेयिशाखासुसर्वास्वेकोवंशइत्याह॥ समानइति॥ प्रवचनाख्यस्यवंशात्मनोब्रह्मणः

अयातयामानीमानियजूंषिवाजसनेयेनयाज्ञवल्क्येनाख्यायंते॥ समानमासांजीवीपुत्रात्॥ ॥ (?)

अयातयामानीमानियजूंषिताानिशुक्लानीत्येतत्॥ प्रजापतिमारभ्ययावत्सौतिमाषीपुत्रस्तावदधोमुखोनियताचार्यपर्वक्रमोवंशः॥ ब्रह्मणः

आत्रेयीपुत्रादात्रेयीपुत्रोगौतमीपुत्राद्गौतमीपुत्रोभारद्वाजीपुत्राद्भारद्वाजीपुत्रःपाराशरीपुत्रात्पाराशरीपुत्रोवात्सीपुत्राद्वात्सीपु त्रःपाराशरीपुत्रात्पाराशरीपुत्रोवार्कारुणीपुत्राद्वार्कारुणीपुत्रोवार्कारुणीपुत्राद्वार्कारुणीपुत्रआर्तभागीपुत्रादार्तभागीपुत्रःशौं गीपुत्राच्छौंगीपुत्रःसांकृतीपुत्रात्सांकृतीपुत्रआलंबायनीपुत्रादालंबायनीपुत्रआलंबीपुत्रादालंबीपुत्रोजायंतीपुत्राज्जायंतीपु त्रोमांडूकायनीपुत्रान्मांडूकायनीपुत्रोमांडूकीपुत्रान्मांडूकीपुत्रःशांडिलीपुत्राच्छांडिलीपुत्रोराथीतरीपुत्राद्राथीतरीपुत्रोभालुकीपु त्राद्भालुकीपुत्रःक्रौंचिकीपुत्राभ्यांक्रौंचिकीपुत्रौवैदभृतीपुत्राद्वैदभृतीपुत्रःकार्शकेयीपुत्रात्कार्शकेयीपुत्रःप्राचीनयोगीपुत्रात्प्राची नयोगीपुत्रःसांजीवीपुत्रात्सांजीवीपुत्रःप्राश्नीपुत्रात्प्राश्नीपुत्रआसुरायणादासुरायणआसुरेरासुरिः॥ ७३॥

प्रवचनाख्यस्यतत्त्वेतद्ब्र ह्मप्रजापतिप्रबंधपरंपरयागतस्यास्यानेकधाविप्रसृतस्यनाद्यनंतस्वयंभुब्रह्मनित्यंतस्मैब्रह्मणेनमः॥ संबंधात्प्रजापतिर्विद्यालब्धवानित्याह॥ ब्रह्मणइति॥ तस्याधिकारिभेदादवांतरभेदंदर्शयति॥ तच्चेति॥ प्रजापतिप्रमुखप्रबंधःप्रपंचःसेवपरंपरातयेतियावत्॥ तस्यपरमात्मरूपंस्वयंभूत्वम भिदधाति॥ अनादीति॥ तस्यापौरुषेयत्वेनासंभावितदोषतयाप्रामाण्यमभिप्रेत्यविशिनष्टि॥ नित्यमिति॥ आदिमध्यांतेष्वकृतमंगलाग्रंथाःप्रचारिणोभवं

बृ॰ षं॰ ४

नमोजन्मादिसंबंधविघ्नविध्वंसहेतवे॥हरयेपरमानंदपरिज्ञानवपुर्भृते॥१॥नमस्तेयंतसंदोहसरसीरुहभानवे॥गुरवेपरपक्षौघध्वांतध्वंसप

नमस्तदनुवर्तिभ्योगुरुभ्यः॥१५॥ॐ॥हरिःॐतत्सदितिश्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्गोविंदभगवत्पूज्यपादशिष्यश्रीमच्छं

याज्ञवल्क्याद्याज्ञवल्क्यउद्दालकादुद्दालकोरुणादरुणउपवेशेरुपवेशिः कुश्रेः कुश्रिर्वाजश्रवसोवाजश्रवाजिह्वावतो
बाध्योगाज्जिह्वावान्बाध्योगोसितादृषर्षगणादसितोवार्षगणोहरितात्कश्यपाद्धरितःकश्यपःशिल्पात्कश्यपाच्छि
ल्पःकश्यपःकश्यपान्नैध्रुवेःकश्यपोनैध्रुविर्वाचोवागंभिण्याअंभिण्यादित्यादादित्यानीमानिशुक्लानियजूꣳषिवाजसनेये
नयाज्ञवल्क्येनाख्यायंते॥३४॥समानमासांजीवीपुत्रात्सांजीवीपुत्रोमांडूकायनेर्मांडूकायनिर्मांडव्यान्मांडव्यःकौत्सात्कौत्सो
माहित्थेर्माहित्थिर्वामकक्षायणाद्वामकक्षायणःशांडिल्याच्छांडिल्योवात्स्याद्वात्स्यःकुश्रेःकुश्रिर्यज्ञवचसोराजस्तंबायनाद्यज्ञ
वचाराजस्तंबायनस्तुरात्कावषेयात्तुरःकावषेयःप्रजापतेःप्रजापतिर्ब्रह्मणोब्रह्मस्वयंभुब्रह्मणेनमः॥३४॥ ॥पंचमंब्राह्म
णं॥५॥इतिश्रीमद्बृहदारण्यकेषष्ठोध्यायः॥६॥ मूल२०० ॥ भाष्य५०० ॥ टीका५०० ॥

करभगवत्पूज्यपादकृतौश्रीबृहदारण्यकवृत्तौअष्टमाध्यायेपंचमंब्राह्मणंअष्टमोध्यायःसमाप्तः ॥८॥ ॥ ॥ ॥ ॥ ॥

टीयसे॥२॥ ॥ हरिःॐतत्सदितिश्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानंदपूज्यपादशिष्यश्रीमद्भगवदानंदज्ञानकृतायांश्रीमद्बृहदार
ण्यभाष्यटीकायांअष्टमोध्यायःसमाप्तः ॥समाप्तश्चायंग्रंथः ॥ ॥ वाराणसीप्रसादस्यनियोगेनप्रयत्नतः॥काशीसंस्कृतमुद्रायामंकितोयंशिलाक्षरैः॥१॥श्रीका
शीजीमेमहल्लेहौदकटोरा श्रीयुतबाबूवाराणसीप्रसादजीकेमकानमे काशीसंस्कृतमुद्रायंत्रमेछपी जिनकोलेनाहोय उनकों उक्तस्थानमे श्रीबाबूवाराणसीप्रसादजीकेपास या कचौरी
गलीमे भाई प्रतापसिंहजीके दुकानपरमिलेगी संवत्१९४१ श्रावणशुक्ल १०ता॰१ माहे अगस्त ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥